7 15 नरकं त्रिंशतं प्राप्य श्वविष्ठामुपजीवति ॥ १४
18 16 श्वचर्यामतिमानं च सखिदारेषु विप्लवम् ।
तुलयाधारयद्धर्मो ह्यतिमानोऽतिरिच्यते ॥ १५
श्वानं वै पापिनं पश्य विवर्णं हरिणं कृशम् ।
अतिमानेन भूतानामिमां गतिमुपागतम् ॥ १६
अहं वै विपुले जातः कुले धनसमन्विते ।
अन्यस्मिञ्जन्मनि विभो ज्ञानविज्ञानपारगः ॥ १७
अभवं तत्र जानानो ह्येतान्दोषान्मदात्तदा ।
संरब्ध एव भूतानां पृष्ठमांसान्यभक्षयम् ॥ १८
सोऽहं तेन च वृत्तेन भोजनेन च तेन वै ।
इमामवस्थां संप्राप्तः पश्य कालस्य पर्ययम् ॥ १९
आदीप्तमिव चैलान्तं भ्रमरैरिव चार्दितम् ।
धावमानं सुसंरब्धं पश्य मां रजसान्वितम् ॥ २०
स्वाध्यायैस्तु महत्पापं तरन्ति गृहमेधिनः ।
दानैः पृथग्विधैश्चापि यथा प्राहुर्मनीषिणः ॥ २१
तथा पापकृतं विप्रमाश्रमस्थं महीपते ।
सर्वसङ्गविनिर्मुक्तं छन्दांस्युत्तारयन्त्युत ॥ २२
अहं तु पापयोन्यां वै प्रसूतः क्षत्रियर्षभ ।
निश्चयं नाधिगच्छामि कथं मुच्येयमित्युत ॥ २३
जातिस्मरत्वं तु मम केनचित्पूर्वकर्मणा ।

15 T1 om. 15. — a) V1 B2–5 Dn D1. 2. 4–10 M [अ]भि- (for [अ]ति-). — b) T2 G4 स स्व-; T3 स्वसिन्; G1. 3 स्वेषु; G2 सर्व-; M4 स्वं च (for सखि-). V1 B2–4 Dn D2 -दारे च (for -दारेषु). B2. 3 विप्लवन् (for °वम्). D10 स स्वदारे च विप्लवं; M1–3 स्वदारेषु च वि°. — c) D2 T3 G M1. 2. 5 धारयन्; D4 धारयेद् (for [अ]धारयद्). V1 B Dn D5. 10 तुलया धारयन्धर्मं (V1 °न्सर्व)म्. — d) V1 B Dn D5. 10 अभिमानी; D1. 4. 6–9 त्वभिमानो; G4 अति° (for ह्यति°).

16 a) Dn3 om. (hapl.) from पापिनं up to अहं वै (in 17a). D4. 6. 7. 9 पामिलं (for पापिनं). D1. 2 श्वानं चै (D2 वै)वाविलं पश्य; T1 स्वं मामविकलं पश्य; T2. 3 G M ग्लानं मां विकलं पश्य. — b) D1. 7 M4 विवर्ण- (for °र्णं). — c) V1 B Dn1. n2 D2. 4. 5. 10 M4 अभि- (for अति-). T G M4 मां पश्य (for भूतानाम्). — d) T G M4 पापां (for इमां). D1. 2 उपागतः.

17 Dn3 om. अहं वै (in 17a) (cf v. l. 16). — a) Bom. ed. तात (for जातः). — b) V1 Dn3 धर्म-; T2 नय- (for धन-). — c) D10 पौराणेस्मिञ् (hypermetric); S पौराणे (for अन्यस्मिञ्). — d) T1 -पारगं (for °गः). D4. 6–9 ज्ञानविज्ञानवान्नरः.

18 a) B5 अभयं; D1. 6. 7. 9 अभवत् (for अभवं). D8 तन्न (for तत्र). Dn2 जातानां (for जानानो). D10 G M अभयं जानमानोहं; T1. 3 अभजं भाज्य (T3 जात)-मानोहं; T2 अंगजां जानमानोहं (sic). — b) D2 एतान् (for ह्ये°). Dn1 सदा (for तदा). B1 D1 corrupt; D4. 6–9 एषां दोषप (D4 °षं प)दं तथा; D10 T1. 2 G M4 दोषानेतानहं सदा; T3 दोषानेतांस्तु सर्वदा; M1–3 एतान्दोषानहं सदा. — d) V1 B Dn D5. 10 -मांसम्; T1 G2 -मांसादि (for -मांसानि). T3 भक्षयन् (for [अ]भक्षयम्). — After 18, D10 S ins.:

469* सोऽहं वै विदितः सर्वैर्दूरगो मलिनो वने ।
साधूनां परिभावेष्वुर्विप्राणां गर्वितो धनैः ।
[(L. 1) M1–3 निंदितः (for वि°).]

19 S om. (hapl.) 19ab. — b) B3 तु (for च).

20 a) D1. 2. 4. 6–9 चैलांते; T1 M तैलाक्तं; T3 M2 (inf. lin.) तैलांते (for चैलान्तं). D10 corrupt; T2 G आदीपितमिवालातं. — b) D2 त्वमरैर् (for भ्र°). D4 [अ]र्दितः (for °तम्). D1 त्वमरैरिव चार्चितं. — D7 om. (hapl.) 20cd. — c) T3 G4 याचमानं (for धाव°). — d) D1 मा (for मां). D1. 2 [आ]वृतं; D4. 6. 8. 9 [अ]र्दितं (for [अ]न्वितम्). T1. 3 पश्य मां तेन दुःखितं.

21 a) S महात्मानस् (for महत्पापं). — b) B3 Dn1. n2 D5. 10 हरंति (for त°). — c) D4. 6–9 S [पु]व (for [अ]पि). — d) T2. 3 G विप्रजात्या (T2 G3 °त्यां) (for यथा प्राहुर्). T1 विप्रजात्या महर्षयः.

22 T1 om. 22. — a) M चापकृतं (for पाप°). D8 मित्रम्; G2 (also as in text) कर्म (for विप्रम्). — d) D8 च; S (T1 om.) तं (for [उ]त).

23 a) V1 B Dn D5. 10 G4 हि; D4 च; D6–9 सु- (for तु). — b) D5. 10 भरतर्षभ (for क्षत्रिय°). — c) B1 D6 M4 [अ]भि-; T2 [अ]व- (for [अ]धि-).

शुभेन येन मोक्षं वै प्राप्तुमिच्छाम्यहं नृप ॥ २४
त्वमिमं मे प्रपन्नाय संशयं ब्रूहि पृच्छते ।
चण्डालत्वात्कथमहं मुच्येयमिति सत्तम ॥ २५

राजन्य उवाच ।

चण्डाल प्रतिजानीहि येन मोक्षमवाप्स्यसि ।
ब्राह्मणार्थे त्यजन्प्राणान्गतिमिष्टामवाप्स्यसि ॥ २६
दत्त्वा शरीरं क्रव्याद्भ्यो रणाग्नौ द्विजहेतुकम् ।
हुत्वा प्राणान्प्रमोक्षस्ते नान्यथा मोक्षमर्हसि ॥ २७

भीष्म उवाच ।

इत्युक्तः स तदा राजन्ब्रह्मस्वार्थे परंतप ।
हुत्वा रणमुखे प्राणान्गतिमिष्टामवाप ह ॥ २८
तस्माद्रक्ष्यं त्वया पुत्र ब्रह्मस्वं भरतर्षभ ।
यदीच्छसि महाबाहो शाश्वतीं गतिमुत्तमाम् ॥ २९

इति श्रीमहाभारते अनुशासनपर्वणि चतुरधिकशततमोऽध्यायः ॥ १०४ ॥

C. 13. 484
B. 13. 10
K. 13. 1
M. 13. 91

— $^{d}$) S आपदः ( for इत्युत ).

24 $^{a}$) $D_{n1, n2}$ $D_{5}$ च मम; $D_{4, 6, 7, 9, 10}$ मम तु ( by transp. ); $T_{1, 3}$ G M हि मम; $T_{2}$ जातं मे. — $^{b}$) $T_{3}$ M केन वा ( for केनचित् ). $D_{1, 2}$ तात ( for पूर्व- ). $T_{1}$ केनाचासं हि कर्मणा; $T_{2}$ G केन पूर्वेण क°. — $^{d}$) $G_{2}$ विभो ( for नृप ).

25 $^{a}$) $V_{1}$ B Dn $D_{5, 10}$ त्व( $D_{5, 10}$ त्वा )मिमं सं-; $D_{4, 6-9}$ तदिदं मे; $G_{4}$ त्वं ममेह ( for त्वमिमं मे ). $T_{1}$ त्वमेवेह प्रपन्नस्य; $T_{2, 3}$ $G_{1-3}$ M त्वं ममेह प्रपन्नस्य. — $^{b}$) $D_{1, 2}$ शंस ( for ब्रूहि ). $T_{2, 3}$ G M पृच्छतः ( for °ते ). $T_{1}$ शरणं परिपृच्छतः. — $^{c}$) Some MSS. चांडालत्वात्.

26 $D_{2, 6, 9}$ S राजा ( for राजन्य ). — $^{a}$) Some MSS. चांडाल. $D_{1, 6, 7, 9}$ -जानेते; $D_{2, 4}$ -जानीते; $D_{8}$ -जानेहं ( for -जानीहि ). $T_{1}$ चंडालवृत्तमापन्नो; $T_{2}$ G M °लवृत्तात्तप्तस्त्वं; $T_{3}$ °लवृत्त्या तप्तस्त्वं. — $D_{1, 2}$ S ( except $G_{4}$ ) om. ( hapl. ) $26^{cd}$. $D_{4}$ om. ( hapl. ) $26^{c}$–$27^{d}$.

27 $D_{4}$ om. 27 ( cf. v. l. 26 ). — $^{b}$) $B_{1}$ $G_{1, 3}$ रणाग्ने ( for °ग्नौ ). $D_{1}$ $T_{2, 3}$ G M -हेतुके; $D_{2, 6-9}$ -हेतवे; $T_{1}$ -हैतुकं ( for -हे° ). — $^{c}$) S हित्वा ( for हुत्वा ). $B_{5}$ प्रमोक्षार्थे; $T_{2}$ $G_{1, 2, 4}$ °क्षाय ( for °क्षस्ते ). — $^{d}$) $D_{1, 2, 7, 8}$ आप्स्यसि; $D_{6, 9}$ अवाप्स्यसि ( hypermetric ) ( for अर्हसि ).

28 $D_{1, 4, 6-9}$ S om. the ref. — $^{a}$) $V_{1}$ B Dn $D_{10}$ तेन ( for राजन् ). $D_{5}$ इत्युक्त्वा स तदानेन. — $^{b}$) $D_{1, 2}$ ब्राह्मणार्थे ( for ब्रह्मस्वार्थे ). — $^{c}$) $T_{1, 3}$ G हित्वा ( for हुत्वा ). — $^{d}$) $G_{4}$ इष्टां गतिम् ( by transp. ). $D_{5}$ अवाप सः; $T_{3}$ °सवान् ( for °प ह ).

29 $^{a}$) $D_{1, 2}$ विप्र; $T_{2, 3}$ G M [अ]पीह ( for पुत्र ). $T_{1}$ तस्माद्रक्ष्यास्त्वया विप्रा. — $^{b}$) $T_{1}$ ब्रह्मस्वाद् ( for °स्वं ). — $^{c}$) $V_{1}$ $B_{3}$ $D_{n2}$ $D_{5}$ $T_{2}$ $G_{1, 3, 4}$ यद् ( for यदि ). $T_{3}$ महाभाग ( for °बाहो ). — $^{d}$) $V_{1}$ B Dn $D_{5, 10}$ आत्मनः ( for उत्तमाम् ). $G_{4}$ शाश्वतीमुत्तमां गतिं.

Colophon. — *Parvan name :* $B_{1, 2}$ $D_{n3}$ $D_{1}$ शांति. — *Sub-parvan :* $V_{1}$ $B_{2, 3}$ Dn $D_{1, 2, 4-6, 8-10}$ दानधर्म. — *Adhy. name :* $V_{1}$ B Dn $D_{1, 2, 6-9}$ राजन्यचं( $V_{1}$ $B_{1}$ $D_{8}$ °चां )डालसंवादः; $D_{5, 10}$ राजचं( $D_{5}$ °चां )डालसंवादः; $T_{2}$ ब्रह्मस्वहरणप्रकरणे क्षत्रबंधुचंडालसंवादे ब्रह्मस्वहरणदोषकथनं; $G_{1, 3}$ क्षत्रबंधुचंडालसंवादे ब्रह्मस्वहरणकथनं. — *Adhy. no.* ( figures, words or both ): $B_{5}$ 91; $D_{n1}$ 99; $D_{10}$ 109; $T_{1}$ $M_{4}$ 152; $T_{2, 3}$ $G_{2, 4}$ 159; $G_{1, 3}$ $M_{1}$ 153; $M_{2, 3}$ 154. — *Śloka no. :* $D_{n1}$ 30; $D_{n2}$ 29; $D_{4}$ 27.

15 , 18 नरकं त्रिंशतं प्राप्य श्वविष्ठामुपजीवति ॥ १४
18 श्वचर्यामतिमानं च सखिदारेषु विप्लवम् ।
तुलयाधारयद्धर्मो ह्यतिमानोऽतिरिच्यते ॥ १५
श्वानं वै पापिनं पश्य विवर्णं हरिणं कृशम् ।
अतिमानेन भूतानामिमां गतिमुपागतम् ॥ १६
अहं वै विपुले जातः कुले धनसमन्विते ।
अन्यस्मिञ्जन्मनि विभो ज्ञानविज्ञानपारगः ॥ १७
अभवं तत्र जानानो ह्येतान्दोषान्मदात्तदा ।
संरब्ध एव भूतानां पृष्ठमांसान्यभक्षयम् ॥ १८
सोऽहं तेन च वृत्तेन भोजनेन च तेन वै ।
इमामवस्थां संप्राप्तः पश्य कालस्य पर्ययम् ॥ १९
आदीप्तमिव चैलान्तं भ्रमरैरिव चार्दितम् ।
धावमानं सुसंरब्धं पश्य मां रजसान्वितम् ॥ २०
स्वाध्यायैस्तु महत्पापं तरन्ति गृहमेधिनः ।
दानैः पृथग्विधैश्चापि यथा प्राहुर्मनीषिणः ॥ २१
तथा पापकृतं विप्रमाश्रमस्थं महीपते ।
सर्वसङ्गविनिर्मुक्तं छन्दांस्युत्तारयन्त्युत ॥ २२
अहं तु पापयोन्यां वै प्रसूतः क्षत्रियर्षभ ।
निश्चयं नाधिगच्छामि कथं मुच्येयमित्युत ॥ २३
जातिस्मरत्वं तु मम केनचित्पूर्वकर्मणा ।

---

15 T1 om. 15. — a) V1 B3–5 Dn D1, 2, 4–10 M [अ]भि- (for [अ]ति-). — b) T2 G4 स स्व-; T3 स्वस्मिन्; G1, 3 स्वेषु; G2 सर्व-; M4 स्वं च (for सखि-). V1 B2–4 Dn D2 -दारे च (for -दारेषु). B2, 3 विप्लवन् (for °वम्). D10 स स्वदारे च विप्लवं; M1–3 स्वदारेषु च वि°. — c) D2 T3 G M1, 2, 4 धारयन्; D4 धारयेद् (for [अ]धारयद्). V1 B Dn D5, 10 तुलया धारयन्धर्मं(V1 °न्सर्वं)म्. — d) V1 B Dn D5, 10 अभिमानी; D1, 4, 6–9 त्वभिमानो; G4 अति° (for ह्यति°).

16 a) Dn3 om. (hapl.) from पापिनं up to अहं वै (in 17a). D4, 6, 7, 9 पामिलं (for पापिनं). D1, 2 श्वानं चै(D2 वै)वाविलं पश्य; T1 त्वं मामविकलं पश्य; T2, 3 G M ग्लानं मां विकलं पश्य. — b) D1, 7 M4 विवर्ण- (for °र्णं). — c) V1 B Dn1, n2 D2, 4, 5, 10 M4 अभि- (for अति-). T G M4 मां पश्य (for भूतानाम्). — d) T G M4 पापां (for इमां). D1, 2 उपागतः.

17 Dn3 om. अहं वै (in 17a) (cf v. l. 16). — a) Bom. ed. तात (for जातः). — b) V1 Dn3 धर्म-; T2 नय- (for धन-). — c) D10 पौराणेस्मिन् (hypermetric); S पौराणे (for अन्यस्मिन्). — d) T1 -पारगं (for °गः). D4, 6–9 ज्ञानविज्ञानवान्नरः.

18 a) B5 अभयं; D1, 6, 7, 9 अभवत् (for अभवं). D8 तन्न (for तत्र). Dn2 जातानां (for जानानो). D10 G M अभयं जानमानोहं; T1, 3 अभजं भाज्य(T3 जात)मानोहं; T2 अंगजां जानमानोहं (sic). — b) D2 एतान् (for ह्ये°). Dn1 सदा (for तदा). B1 D1 corrupt; D4, 6–9 एषां दोषप(D4 °षं प)दं तथा; D10 T1, 2 G M4 दोषानेतानहं सदा; T3 दोषानेतांस्तु सर्वदा; M1–3 एतान्दोषानहं सदा. — d) V1 B Dn D5, 10 -मांसम्; T1 G2 -मांसादि (for -मांसानि). T3 भक्षयन् (for [अ]भक्षयम्). — After 18, D10 S ins.:

469* सोऽहं वै विदितः सर्वैर्दूरगो मलिनो वने ।
साधूनां परिभावेष्सुर्विप्राणां गर्वितो धनैः ।
[(L. 1) M1–3 निंदितः (for वि°).]

19 S om. (hapl.) 19ab. — b) B3 तु (for च).

20 a) D1, 2, 4, 6–9 चैलांते; T1 M तैलाक्तं; T3 M2 (*inf. lin.*) तैलांते (for चैलान्तं). D10 corrupt; T2 G आदीपितमिवालातं. — b) D2 त्वमरैर् (for भ्र°). D4 [अ]र्दितः (for °तम्). D1 त्वमरैरिव चार्चितं. — D7 om. (hapl.) 20cd. — c) T3 G4 याचमानं (for धाव°). — d) D1 मा (for मां). D1, 2 [आ]वृतं; D4, 6, 8, 9 [अ]र्दितं (for [अ]न्वितम्). T1, 3 पश्य मां तेन दुःखितं.

21 a) S महात्मानस् (for महत्पापं). — b) B3 Dn1, n2 D5, 10 हरंति (for त°). — c) D4, 6–9 S [ए]व (for [अ]पि). — d) T2, 3 G विप्रजात्या (T2 G3 °त्यां) (for यथा प्राहुर्). T1 विप्रजात्या महर्षयः.

22 T1 om. 22. — a) M चापकृत्तं (for पाप°). D8 मित्रम्; G2 (also as in text) कर्म (for विप्रम्). — d) D8 च; S (T1 om.) तं (for [उ]त).

23 a) V1 B Dn D5, 10 G4 हि; D4 च; D6–9 सु- (for तु). — b) D5, 10 भरतर्षभ (for क्षत्रिय°). — c) B1 D9 M4 [अ]भि-; T2 [अ]व- (for [अ]धि-).

शुभेन येन मोक्षं वै प्राप्तुमिच्छाम्यहं नृप ॥ २४
त्वमिमं मे प्रपन्नाय संशयं ब्रूहि पृच्छते ।
चण्डालत्वात्कथमहं मुच्येयमिति सत्तम ॥ २५

राजन्य उवाच ।

चण्डाल प्रतिजानीहि येन मोक्षमवाप्स्यसि ।
ब्राह्मणार्थे त्यजन्प्राणान्गतिमिष्टामवाप्स्यसि ॥ २६
दत्त्वा शरीरं क्रव्याद्भ्यो रणाग्नौ द्विजहेतुकम् ।
हुत्वा प्राणान्प्रमोक्षस्ते नान्यथा मोक्षमर्हसि ॥ २७

भीष्म उवाच ।

इत्युक्तः स तदा राजन्ब्रह्मस्वार्थे परंतप ।
हुत्वा रणमुखे प्राणान्गतिमिष्टामवाप ह ॥ २८
तस्माद्रक्ष्यं त्वया पुत्र ब्रह्मस्वं भरतर्षभ ।
यदीच्छसि महाबाहो शाश्वतीं गतिमुत्तमाम् ॥ २९

# १०५

युधिष्ठिर उवाच ।
एको लोकः सुकृतिनां सर्वे त्वाहो पितामह ।
उत तत्रापि नानात्वं तन्मे ब्रूहि पितामह ॥ १
भीष्म उवाच ।
कर्मभिः पार्थ नानात्वं लोकानां यान्ति मानवाः ।
पुण्यान्पुण्यकृतो यान्ति पापान्पापकृतो जनाः ॥ २
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
गौतमस्य मुनेस्तात संवादं वासवस्य च ॥ ३
ब्राह्मणो गौतमः कश्चिन्मृदुर्दान्तो जितेन्द्रियः ।
महावने हस्तिशिशुं परिद्यूनममातृकम् ॥ ४
तं दृष्ट्वा जीवयामास सानुक्रोशो धृतव्रतः ।
स तु दीर्घेण कालेन बभूवातिबलो महान् ॥ ५
तं प्रभिन्नं महानागं प्रस्नुतं सर्वतो मदम् ।
धृतराष्ट्रस्य रूपेण शक्रो जग्राह हस्तिनम् ॥ ६
ह्रियमाणं तु तं दृष्ट्वा गौतमः संशितव्रतः ।
अभ्यभाषत राजानं धृतराष्ट्रं महातपाः ॥ ७
मा मे हार्षीर्हस्तिनं पुत्रमेनं
दुःखात्पुष्टं धृतराष्ट्राकृतज्ञ ।
मित्रं सतां सप्तपदं वदन्ति
मित्रद्रोहो नैव राजन्स्पृशेत्त्वाम् ॥ ८
इध्मोदकप्रदातारं शून्यपालकमाश्रमे ।
विनीतमाचार्यकुले सुयुक्तं गुरुकर्मणि ॥ ९
शिष्टं दान्तं कृतज्ञं च प्रियं च सततं मम ।
न मे विक्रोशतो राजन्हर्तुमर्हसि कुञ्जरम् ॥ १०

## 105

☞ This adhy. is missing in D3 ( cf. v. l. 13. 82. 37 ).

1 a) V1 B3. 5 Dn2 एकलोकाः; B1. 2 Dn1. n3 एके लोकाः; B4 एते लोकाः; D1. 2 एककालः; D5 एवं लोकाः ( for एको लोकः ). V1 B Dn D1. 2. 5 सुकृतिनः ( for °तिनां ). — b) B1. 3 D1. 2 सर्वे वाहो; D4. 6–9 अहो सर्वे; D10 T2 G2. 4 स्वर्गे लोके; T1 स्वर्गो वाहो; T3 M स्वर्गे नाहो; G1. 3 स्वर्गलोके ( for सर्वे त्वाहो ). — c) B1. 5 Dn3 D1. 2 तत्र ( for उत ). D6. 8. 9 वा चापि; D7 चापि च ( for तत्रापि ). V1 B Dn D4. 5 भिन्नास्ते ( for नानात्वं ). — d) D10 S सर्वं ( for तन्मे ). T2 ( also as in text ) कुरूद्वह ( for पितामह ).

2 c) D5 T3 पुण्यात् ( for पुण्यान् ). — d) Bom. ed. नराः ( for जनाः ).

3 D2 om. 3cd. — d) B5 ह ( for च ). S संवादं वै ( T3 वा ) शतक्रतोः.

4 a) S गौतमो ब्राह्मणः कश्चिन्. — b) D7 यतेंद्रियः ( for जि° ).

5 a) D4. 6–9 दृष्ट्वा सं- ( for तं दृष्ट्वा ). — b) G1–3 सानुक्रोशाद् ( for °शो ). B3 T1. 3 जितेंद्रियः; D8 T3 ( also ) दृढव्रतः ( for धृत° ). — c) T1. 2 M सोथ; T3 G1. 3. 4 सोति-; G2 सोयं ( for स तु ).

6 D1 om. 6a. — a) D4 महाभागं ( for °नागं ). D2 तं पतितं महाभागं; T2 G तं प्रपन्नं महादीर्घं ( T2 °द्विपं ). — b) D1 T2 G प्रसूतं; T1 प्रभूतं; T3 प्रापितं ( for प्रस्नुतं ). V1 B Dn D5. 10 प्रस्नुतं पर्वतोपमं; M4 °तं सर्वतोदकं. — c) D5 G1. 2 धृतराष्ट्रस्वरूपेण.

8 Before 8, S ( except T2 ) ins. गौतमः. — a) S ( except G2 ) मा ( for मे ). D1. 2 पुत्रमेतं; D5 °मेव; D6. 7. 9 °भुतं ( for °मेनं ). — b) D4 दुःखे प्रुष्टं; D6. 7. 9 दुःखात्पुष्टं ( for °त्पुष्टं ). — c) V1 B2. 4. 5 Dn D5. 7–10 T2 G मैत्रं ( for मित्रं ). Dn1. n2 D1. 2. 7. 8 M1. 3 साप्तपदं ( for स° ). — d) D1 corrupt. Dn1. n3 D2 मैव; D4. 6. 7. 9 नोत; S नेह ( for नैव ). T1 शपेत् ( for स्पृशेत् ).

9 b) T1 शून्ये ( for शून्य- ). V1 B Dn D2. 5. 8. 10 शून्यपालं ममाश्रमे. — d) B1. 5 D3 संयुक्तं; D1. 2. 6. 7 सुनीतं; D4 सुनीते ( for सुयुक्तं ).

10 T1 om. 10ab. — a) B3 शिष्टं शांतं; T3 शिष्टज्ञं च ( for शिष्टं दान्तं ). D4 कृतप्रज्ञं ( for °ज्ञं च ). — c) T1. 2 G1. 2. 4 त्वं; T3 M तं; G3 क ( for न ). — d)

धृतराष्ट्र उवाच ।

गवां सहस्रं भवते ददामि
दासीशतं निष्कशतानि पञ्च ।
अन्यच्च वित्तं विविधं महर्षे
किं ब्राह्मणस्येह गजेन कृत्यम् ॥ ११

गौतम उवाच ।

त्वामेव गावोऽभि भवन्तु राज-
न्दास्यः सनिष्का विविधं च रत्नम् ।
अन्यच्च वित्तं विविधं नरेन्द्र
किं ब्राह्मणस्येह धनेन कृत्यम् ॥ १२

धृतराष्ट्र उवाच ।

ब्राह्मणानां हस्तिभिर्नास्ति कृत्यं
राजन्यानां नागकुलानि विप्र ।
स्वं वाहनं नयतो नास्त्यधर्मो
नागश्रेष्ठाद्गौतमास्मान्निवर्त ॥ १३

गौतम उवाच ।

यत्र प्रेतो नन्दति पुण्यकर्मा
यत्र प्रेतः शोचति पापकर्मा ।
वैवस्वतस्य सदने महात्मन-
स्तत्र त्वाहं हस्तिनं यातयिष्ये ॥ १४

धृतराष्ट्र उवाच ।

ये निष्क्रिया नास्तिकाः श्रद्दधानाः
पापात्मान इन्द्रियार्थे निविष्टाः ।
यमस्य ते यातनां प्राप्नुवन्ति
परं गन्ता धृतराष्ट्रो न तत्र ॥ १५

गौतम उवाच ।

वैवस्वती संयमनी जनानां　C.
यत्रानृतं नोच्यते यत्र सत्यम् ।　B. K. M.

---

$D_{2.6.9}$ $G_1$ हंतुम् ( for हर्तुम् ). $T_{1.3}$ $G_{2-4}$ M नार्हसि ( for अ° ). $T_2$ हंतुं नार्हसि कुंजरं.

11 $^a$) $T_{2.3}$ $G_{2.3}$ M भवतो ( for °ते ). $V_1$ B Dn $D_5$ ददानि ( for °मि ). $G_4$ गवां शतसहस्रं भवतो ददामि. —$^b$) $D_{4.6.7.9}$ चैव ( for पञ्च ). S शतानि निष्कस्य ददामि पंच. —$^c$) $T_3$ भवतो ददामि; $G_{1.2}$ विधिवन्महर्षे ( for विविधं महर्षे ). —$^d$) $D_1$ om.; S ( except $G_3$ ) न ( for किं ).

12 $T_1$ om. ( hapl. ) 12. —$^a$) $D_2$ तव ( for त्वाम् ). $V_1$ B Dn $D_{5.8.10}$ हि ( for ऽभि ). S ( $T_1$ om. ) त्वामेव गावो विविधा भजंतु. —$^b$) $D_8$ $T_2$ $G_{1.3.4}$ च ( for स- ). $G_{1.3}$ तु ( for च ). $D_{1.2}$ वित्तं ( for रत्नम् ). $T_3$ $G_2$ दास्यस्तु ( $G_2$ °श्च ) नाना विविधं तु रत्नं. —$^c$) $Dn_3$ om.; $D_{1.2}$ रत्नं; $T_3$ दत्तं ( for वित्तं ). $D_{4.6.7.9}$ पुत्रेण मे संगमो ह्यस्तु तेन; $T_2$ अन्यं च रत्नं विविधं महर्षे. —$^d$) $D_1$ corrupt. $T_2$ G न ( for किं ). $Dn_1$ जनेन; $D_{5.10}$ गजेन ( for धनेन ). The portion from नेन कृत्यम् up to the end of this parvan is written by a different hand in $V_1$.

13 $T_1$ राजा ( for धृतराष्ट्र ). —$^a$) S हस्तिना ( for °भिर् ). —$^b$) $B_1$ राज-; $D_{4.6.7.9}$ गज-; S हस्ति- ( for नाग- ). —$^c$) S स्व- ( for स्वं ). —$^d$) $V_1$ B Dn $D_{4.5.8.10}$ नागश्रेष्ठं; $T_3$ °श्रेष्ठो ( for °श्रेष्ठाद् ). — After 13, $Dn_1$ reads $15^{cd}$.

14 $Dn_1$ धृतराष्ट्र ( for गौतम ). —$^a$) $D_2$ प्रीतो ( for प्रेतो ). —$^b$) $D_1$ partly damaged. $V_1$ B Dn $D_{5.8.10}$ शोचते ( for °ति ). —$^c$) $D_{1.4.6.7.9}$ भवने ( for सदने ). $V_1$ $B_{2.5}$ Dn $D_{2.5.8}$ $G_3$ महात्मंस् ( for °त्मनस् ). —$^d$) $B_{1.4}$ $Dn_3$ $D_{4.5.7.10}$ $T_2$ G याचयिष्ये ( for यात° ).

15 $G_2$ om. ( hapl. ) 15–20. —$^a$) S ( $G_2$ om. ) नास्तिका निष्क्रियाः ( by transp. ). —$^b$) $D_{4.6.7.9}$ त्विंद्रियार्थे ( for इन्द्रि° ). S ( $G_2$ om. ) पापात्मानश्चेंद्रियार्थे निस्( $T_1$ °र्थेविपु )ष्टाः. — $Dn_1$ reads $15^{cd}$ after 13. —$^c$) $G_{1.3}$ यातनाः. $T_3$ प्राप्नुवंते. — $Dn_2$ om. $15^d$. —$^d$) $G_4$ पारं ( for परं ). $D_3$ यत्र ( for तत्र ).

16 $G_2$ om. 16 ( cf. v. l. 15 ). $T_3$ om. ( hapl. ) 16–17. —$^a$) $Dn_2$ संयमिनी ( for °मनी ). $V_1$ om. जनानां. $D_{6-9}$ $T_2$ M वैवस्वतीं संयम( $D_{8.9}$ °मि )नीं जनानां; $T_1$ $G_{1.3.4}$ वैवस्वतीं ( $T_1$ °तं ) संयमनीं ( $T_1$ °नं ) च नाम. —$^b$) $T_1$ प्राप्तं ( for [अ]नृतं ). S ( $T_3$ $G_2$ om. ) प्रोच्यते ( for नो° ). $Dn_2$ तत्र ( for the second यत्र ). —$^c$) $T_1$ बलिनो ( for °नं ). $B_1$ याचयंति ( for यात° ). $D_{5-7.9.10}$ यत्राबला बलिनां घातयंति;

यत्राबला बलिनं यातयन्ति
तत्र त्वाहं हस्तिनं यातयिष्ये ॥ १६

धृतराष्ट्र उवाच ।

ज्येष्ठां स्वसारं पितरं मातरं च
गुरुं यथा मानयन्तश्चरन्ति ।
तथाविधानामेष लोको महर्षे
परं गन्ता धृतराष्ट्रो न तत्र ॥ १७

गौतम उवाच ।

मन्दाकिनी वैश्रवणस्य राज्ञो
महाभोगा भोगिजनप्रवेश्या ।
गन्धर्वयक्षैरप्सरोभिश्च जुष्टा
तत्र त्वाहं हस्तिनं यातयिष्ये ॥ १८

धृतराष्ट्र उवाच ।

अतिथिव्रताः सुव्रता ये जना वै
प्रतिश्रयं ददति ब्राह्मणेभ्यः ।
शिष्टाशिनः संविभज्याश्रितांश्च
मन्दाकिनीं तेऽपि विभूषयन्ति ॥ १९

गौतम उवाच ।

मेरोरग्रे यद्वनं भाति रम्यं
सुपुष्पितं किंनरगीतजुष्टम् ।
सुदर्शना यत्र जम्बूर्विशाला
तत्र त्वाहं हस्तिनं यातयिष्ये ॥ २०

धृतराष्ट्र उवाच ।

ये ब्राह्मणा मृदवः सत्यशीला
बहुश्रुताः सर्वभूताभिरामाः ।
येऽधीयन्ते सेतिहासं पुराणं
मध्वाहुत्या जुह्वति च द्विजेभ्यः ॥ २१

तथाविधानामेष लोको महर्षे
परं गन्ता धृतराष्ट्रो न तत्र ।
यद्विद्यते विदितं स्थानमस्ति

---

T3 G1.3.4 M °लान्बलिनो घा( M या )तयंति. —[d]) B1 Dn3 D4.5.7.10 T2 G1.4 याचयिष्ये ( for यात° ).

17 G2 om. 17 (cf. v. l. 15). T3 om. 17 (cf. v. l. 16). G1 M4 om. the ref. —[a]) G4 ज्येष्ठ- (for ज्येष्ठां). V1 om. पितरं. D4.6.7.9 गुरुं ( for मातरं ). —[b]) T1 श्वश्रूर्; T2 G1.3.4 गुरून्; M शत्रून् ( for गुरुं ). V1 B Dn D5.8.10 यथा शत्रुं मदमत्ताश्चरंति; D1.2 गुरुं च ये महयंतश्च°; D4.6.7.9 शक्त्या ( D4 °त्रुं ) यथानर्हयाभ्यर्चयंति. —[d]) Dn2 पदं (for परं). D4 यत्र ( for तत्र ).

18 G2 om. 18 (cf. v. l. 15). T1 om. ( hapl. ) 18–19. T3 om. the ref. —[b]) V1 B Dn D5–10 महाभागा ( for °भोगा ). S ( T1 G2 om. ) महाभो( G4 °भा )गा भोगिनश्च प्रवेश्याः. —[c]) T2 M4 जुष्टास. —[d]) G3 partly damaged. B1 D4–7.9.10 G1.4 याचयिष्ये; T2 वाच° (for यात°).

19 G2 om. 19 (cf. v. l. 15). T1 om. 19 ( cf. v. l. 18 ). —[a]) B3 साधुव्रता; D1 om. ( hapl. ) ( for सुव्रता ). —[b]) B1 D4.6.7.9 प्रतिग्रहं ( for °श्रयं ). D7 ददते ( for °ति ). S ( T1 G2 om. ) प्रतिश्रयं ये ( T3 वै ) ददति द्विजेभ्यः. —[c]) D4 [आ]श्रमांश्च S (T1 G2 om.) [आ]श्रि( T2 °श्रु )तेभ्यो ( for [आ]श्रितांश्च ) —[d]) D1.2 [ऽ]भिवि-; D4 सुवि-; D6.7.9 शुवि G1.3.4 [ऽ]पि हि; M1–3 हि वि- ( for ऽपि वि- ).

20 G2 om. 20 ( cf. v. l. 15 ). —[a]) D4.6.7.9 मेरौ रम्ये; D3 मेरो रम्यं ( for मेरोरग्रे ). B3 भावि ( for भाति ). S ( G2 om. ) मेरौ नगे ( T3 वने ) यद्वनं चातिरम्यं. —[b]) G1 partly damaged. B2.5 Dn1.n2 D1.7.8.10 किंनरी- ( for किंनर- ). B3 -जुष्टगीतं; D3 -देवजुष्टं; D4.6.8.9 G4 -गीति° ( for -गीत° ). —[d]) B1 D4–7.9.10 T2 G4 याचयिष्ये ( for यात° ).

21 [a]) T3 अमृताः ( for मृदवः ). —[b]) B3 सत्यशीलाभि- ( for सर्वभूताभि- ). B1 -साराः ( for -रामाः ). — T1 om. 21[cd]. —[c]) B2.5 Dn1 D1.2 M1.2.4 [ऽ]धीयते ( for °यन्ते ). D7 च ( for स ). —[d]) D1 om. त्या जुह्व. V1 B Dn D5.8.10 वै ( for च ). D4.6.7.9 द्विजेंद्राः ( for द्विजेभ्यः ).

22 B5 T1 om. ( hapl. ) 22[a]–31[b]. —[b]) D5.6 गतो ( for गन्ता ). D4.6.8.9 यत्र ( for तत्र ). — After 22[ab], T2 reads 32[ab] ( with the ref. ), repeating it in its proper place. —[c]) D2 यद्यंते ते; D4.6.7.9 अप्यन्यत्ते

तद्ब्रूहि त्वं त्वरितो ह्येष यामि ॥ २२
गौतम उवाच ।
सुपुष्पितं किंनरराजजुष्टं
प्रियं वनं नन्दनं नारदस्य ।
गन्धर्वाणामप्सरसां च सद्म
तत्र त्वाहं हस्तिनं यातयिष्ये ॥ २३
धृतराष्ट्र उवाच ।
ये नृत्तगीतकुशला जनाः सदा
ह्ययाचमानाः सहिताश्चरन्ति ।
तथाविधानामेष लोको महर्षे
परं गन्ता धृतराष्ट्रो न तत्र ॥ २४
गौतम उवाच ।
यत्रोत्तराः कुरवो भान्ति रम्या
देवैः सार्धं मोदमाना नरेन्द्र ।
यत्राग्नियौनाश्च वसन्ति विप्रा
ह्ययोनयः पर्वतयोनयश्च ॥ २५
यत्र शक्रो वर्षति सर्वकामा-
न्यत्र स्त्रियः कामचाराश्चरन्ति ।
यत्र चेर्ष्या नास्ति नारीनराणां
तत्र त्वाहं हस्तिनं यातयिष्ये ॥ २६
धृतराष्ट्र उवाच ।
ये सर्वभूतेषु निवृत्तकामा
अमांसादा न्यस्तदण्डाश्चरन्ति ।
न हिंसन्ति स्थावरं जङ्गमं च
भूतानां ये सर्वभूतात्मभूताः ॥ २७
निराशिषो निर्ममा वीतरागा
लाभालाभे तुल्यनिन्दाप्रशंसाः ।
तथाविधानामेष लोको महर्षे C. 13 B. 13 K. 13 M. 13

(for यद्विद्यते). $D_{10}$ आस्ते (for अस्ति). $T_{3}$ G M यद् ($G_{1,3}$ °द्य)न्यत्ते विविधं स्थानमस्ति. —[d]) $G_{2,4}$ चरितो (for त्व°). $D_{4}$ $M_{1-3}$ याति (for यामि).

23 $B_{5}$ $T_{1}$ om. 23 (cf. v. l. 22). $T_{2}$ $G_{3}$ om. the ref. —[b]) $D_{8}$ $T_{3}$ G -वदं; $T_{2}$ पदं (for वनं). $D_{1}$ om. (hapl.?) नन्दनं. $D_{3,6,7,9}$ प्रियं सदा य($D_{6,9}$ त)-द्वनं नारदस्य. —[c]) $V_{1}$ अप्सरसार्थं; $G_{2}$ °राणां च (for °रसां च). Dn $D_{1,5,8,10}$ शाश्वत् (for सद्म). —[d]) $D_{6}$ om. from हस्तिनं up to न (in 27[c]). $B_{1}$ $D_{4,5,7,9,10}$ $T_{2}$ G याचयिष्ये (for यात°).

24 $B_{5}$ $T_{1}$ om. 24 (cf. v. l. 22). $D_{6}$ om. 24 (cf. v. l. 23). $D_{7,9}$ om. (hapl.) 24–26. —[a]) $V_{1}$ $B_{2-4}$ Dn $D_{3,10}$ नृत्यगीते; $B_{1}$ नृत्यगीत-; $D_{5}$ नृत्तगीते (for °गीत-). $D_{1}$ M सदा जना (by transp.); $T_{2}$ $G_{1}$ जनास्तदा. —[b]) $D_{1,2}$ महयंतश् (for सहिताश्). S ($T_{1}$ om.) देवात्मनां (M देवद्विजानां) प्रियकामाश्चरंति.

25 $B_{5}$ $T_{1}$ om. 25 (cf. v. l. 22). $D_{6}$ om. 25 (cf. v. l. 23). $D_{7,9}$ om. 25 (cf. v. l. 24). $D_{4}$ om. (hapl.) 25-26. $G_{1,3}$ om. the ref. —[a]) $B_{1}$ यत्रोद्भवाः (for °त्तराः). S ($T_{1}$ om.) यांति (for भान्ति). —[c]) $B_{4}$ तत्र (for यत्र). $B_{1}$ [अ]ग्निसोमाश्च; $T_{2}$ G [अ]ग्नयो ये ($G_{1,3}$ वै) नि-; $T_{3}$ [आ]ग्नेयो यत्र; $M_{1,3}$ [अ]ग्नियोनयो नि-; $M_{2}$ Cv [अ]ग्नियोना नि- (for °यौनाश्च). $D_{10}$ यत्राग्नयो ये निवसंति लोका; $M_{4}$ यत्राग्नयोनभयश्च वसंति विप्रा. ❀ Cv : अग्निरेव योनिः कारणं येषां ते अग्नियौनाः । ❀ —[d]) $V_{1}$ $B_{2-4}$ $Dn_{1}$ अव्योनयः; $B_{1}$ M ह्यव्यो°; $Dn_{2}$, $n_{3}$ $D_{5,8,10}$ अयो°; $D_{1}$ corrupt (for ह्ययो°).

26 $B_{5}$ $T_{1}$ om. 26 (cf. v. l. 22). $D_{6}$ om. 26 (cf. v. l. 23). $D_{7,9}$ om. 26 (cf. v. l. 24). $D_{4}$ om. 26 (cf. v. l. 25). —[a]) $T_{2,3}$ $G_{4}$ M यतः (for यत्र). —[b]) $T_{2}$ G $M_{4}$ स्थिताः; $T_{3}$ [ई]श्वराः (for स्त्रियः). $B_{2,3}$ $Dn_{3}$ $D_{3,10}$ $M_{1,3}$ कामचराश्. $V_{1}$ B Dn $D_{6,8,10}$ भवंति (for चरन्ति). —[c]) $D_{1}$ om. च. $B_{2}$ (marg.) नारीषु पुंसां (for नारीनराणां). —[d]) $B_{1}$ $D_{5,10}$ $T_{2}$ $G_{1,2,4}$ याचयिष्ये (for यात°).

27 . $B_{5}$ $T_{1}$ om. 27 (cf. v. l. 22). $D_{6}$ om. up to न (in 27[c]) (cf. v. l. 23). $D_{2}$ om. (hapl.) 27–28. $D_{4}$ om. the ref. —[b]) $D_{5,10}$ G M ह्यमांसादा (for अमां°). $T_{2}$ ह्यमांसादा दंडधराश्चरंति. — $D_{1}$ om. 27[c]–28[d]. —[c]) $V_{1}$ om. न हिंसन्ति. $G_{1,2,4}$ $M_{1,2,4}$ स्थावर- (for °रं). $D_{6,7,9}$ जंगमं वा; S ($T_{1}$ om.) °मानि (for °मं च). —[d]) $B_{1}$ भूतानि ये; $D_{4,6,7,9}$ ये भूतानां (by transp.).

परं गन्ता धृतराष्ट्रो न तत्र ॥ २८

गौतम उवाच ।

ततः परं भान्ति लोकाः सनातनाः
सुपुण्यगन्धा निर्मला वीतशोकाः ।
सोमस्य राज्ञः सदने महात्मन-
स्तत्र त्वाहं हस्तिनं यातयिष्ये ॥ २९

धृतराष्ट्र उवाच ।

ये दानशीला न प्रतिगृह्णते सदा
न चाप्यर्थानाददते परेभ्यः ।
येषामदेयमर्हते नास्ति किंचि-
त्सर्वातिथ्याः सुप्रसादा जनाश्च ॥ ३०
ये क्षन्तारो नाभिजल्पन्ति चान्या-
ञ्शक्ता भूत्वा सततं पुण्यशीलाः ।
तथाविधानामेष लोको महर्षे
परं गन्ता धृतराष्ट्रो न तत्र ॥ ३१

गौतम उवाच ।

ततः परं भान्ति लोकाः सनातना
विरजसो वितमस्का विशोकाः ।
आदित्यस्य सुमहान्तः सुवृत्ता-
स्तत्र त्वाहं हस्तिनं यातयिष्ये ॥ ३२

धृतराष्ट्र उवाच ।

स्वाध्यायशीला गुरुशुश्रूषणे रता-
स्तपस्विनः सुव्रताः सत्यसंधाः ।
आचार्याणामप्रतिकूलभाषिणो

---

28 B5 T1 om. 28 ( cf. v. l. 22 ). D1.2 om. 28 ( cf. v. l. 27 ). — a) G1.3 निर्मदा ( for निर्ममा ). — b) Dn3 लाभेलाभे. D5.10 लाभालाभे ये समाः सत्यसंधाः. — d) D3 यत्र ( for तत्र ).

29 B5 T1 om. 29 ( cf. v. l 22 ). D1 reads $29^{ab}$ and D2 repeats the same after 31. G2 om. ( hapl. ) 29–31. — a) V1 Dn3 ततोपरे; B1–4 Dn1, n2 D1.2 ( both times ).8.10 ततः परे; D5 परं ततो ( by transp. ). D4.6.7.9 संति ( for भान्ति ). — b) G4 सुवर्ण- ( for सुपुण्य- ). V1 B2–4 D5.10 विरजा वि-; Dn1, n2 D8 विरजा वीत-; D1.2 ( both times ) विमला वि-; D4 निर्जला वीत- ( for निर्मला वीत- ). B1 Dn3 पुण्यगंधा विरजसो विशोकाः. — d) B1 D4–7.9.10 T2 G1.4 याचयिष्ये ( for यात° ).

30 B5 T1 om. 30 ( cf. v. l. 22 ). G2 om. 30 ( cf. v. l. 29 ). D5 om. ( hapl. ) 30–35. — a) V1 B दानशीलान्; D10 °शीला ( for °शीला न ). D8 प्रतिगृह्णंति. D4.6.7.9 ये दानशीलाः प्रतिगृह्णते च; S ( T1 G2 om. ) °लाः प्रतिगृह्णंति नित्यं. — b) V1 B1–4 Dn D8.10 चाददते ( for आद° ). S ( T1 G2 om. ) न चाप्यर्थानाहरंते परेषां. — c) D10 G4 देयम् ( for [अ]दे° ). D4.6.7.9 महर्षे ( for अर्हते ). — d) D4 हृताश्च; D6.7.9 कृतज्ञाः ( for जनाश्च ). D10 सर्वातिथ्याः सुप्रदाः सज्जनाश्च; T2 °थ्याः सुप्रजाना जनास्तदा; T3 G1.3.4 M °थ्याः सुप्रजना जनाः सदा ( M1–3 सदा ये ).

31 B5 T1 om. $31^{ab}$ ( cf. v. l. 22 ). G2 om. 31 ( cf. v. l. 29 ). D5 om. 31 ( cf. v. l. 30 ). — a) D1.2.8 M क्षांतारो; D10 दातारो ( for क्षन्तारो ). T3 G1.3.4 M [अ]ति- ( for [अ]भि- ). T3 -कुप्यंति ( for -जल्पन्ति ). B1 वाच्याञ्; D4 चान्याः; D10 चान्यच् ( for चान्याञ् ). T2 येषां दारा नातिजल्पंति चान्याञ्. — b) V1 B1 ( marg. ).2–4 Dn सत्रीभूताः; B1 शांतीभूताः; D1.2 शांता भूत्वा; D4.6.7.9 शक्ता भक्ताः; D8 सतां भूत्वा ( for शक्ता भूत्वा ). — D6.9 om. from विधाना ( in $31^{c}$ ) up to तत्र ( in $31^{d}$ ). — After 31, D1 reads and D2 repeats $29^{ab}$.

32 D5 om. 32 ( cf. v. l. 30 ). B3 om. 32. G1 om. ( hapl. ) 32–34. D1.2 om. $32^{ab}$. T2 reads $32^{ab}$ ( with the ref. ) for the first time after $22^{ab}$. — a) V1 B1.2.4.5 Dn D8.10 [ऽ]परे. D4.6.7.9 सुपुण्या; T1 सुराणां ( for सनातना ). — b) Dn2 D4.6.7.9.10 T1.3 विराजस्का ( for विरजसो ) G2 विशेषाः ( for विशोकाः ). — c) D1.2 हि यत्र ( for सुवृत्तास् ). V1 B1.2.4.5 Dn3 आदित्यस्य सदने महांतस्; Dn1, n2 D8.10 आदित्यदेवस्य पदं ( Dn2 D8 °दे ) महात्मनस्; T1 सनातनाः शश्वदुज्ज्वाल्यमानास्; T2 रवेः सुराणामर्हतो हि राजंस्; T3 G2–4 M आदित्यस्य सुराणामर्ह( G3 °र्हं )तो हि राजंस्. — d) B1 D4.6.10 T2 G2.4 याचयिष्ये.

33 D5 om. 33 ( cf. v. l. 30 ). G1 om. 33 ( cf. v. l. 32 ). D1 om. ( hapl. ) 33–35. — a) S ( G1 om. ) -शुश्रूषकाश्च ( for °षणे रतास् ). — b) S ( G1 om.)

नित्योत्थिता गुरुकर्मस्वचोद्याः ॥ ३३
तथाविधानामेष लोको महर्षे
विशुद्धानां भावितवाङ्मतीनाम् ।
सत्ये स्थितानां वेदविदां महात्मनां
परं गन्ता धृतराष्ट्रो न तत्र ॥ ३४

गौतम उवाच ।

ततः परे भान्ति लोकाः सनातनाः
सुपुण्यगन्धा विरजा विशोकाः ।
वरुणस्य राज्ञः सदने महात्मन-
स्तत्र त्वाहं हस्तिनं यातयिष्ये ॥ ३५

धृतराष्ट्र उवाच ।

चातुर्मास्यैर्ये यजन्ते जनाः सदा
तथेष्टीनां दशशतं प्राप्नुवन्ति ।
ये चाग्निहोत्रं जुह्वति श्रद्दधाना
यथान्यायं त्रीणि वर्षाणि विप्राः ॥ ३६
स्वदारिणां धर्मधुरे महात्मनां
यथोचिते वर्त्मनि सुस्थितानाम् ।
धर्मात्मनामुद्वहतां गतिं तां
परं गन्ता धृतराष्ट्रो न तत्र ॥ ३७

गौतम उवाच ।

इन्द्रस्य लोका विरजा विशोका
दुरन्वयाः काङ्क्षिता मानवानाम् ।
तस्याहं ते भवने भूरितेजसो
राजन्निमं हस्तिनं यातयिष्ये ॥ ३८ C. 13. 4880 B. 13. 102. K. 13. 159.. M. 13. 92. 3(

---

तपस्विनः सत्यसंधा नरा ये. — $^{c}$) G2 अनुकूल- ( for अप्रतिकूल- ). D4. 6. 7. 9 -भाषिणो ये ( for -कूलभाषिणो ). — $^{d}$) S ( G1 om. ) नित्यं स्थिता ( for नित्योत्थिता ). D4. 6. 7. 9 -कार्येष्वनोद्याः ( for -कर्मस्वचोद्याः ).

34 D5 om. 34 ( cf. v. l. 30 ). G1 om. 34 ( cf. v. l. 32 ). D1 om. 34 ( cf. v. l. 33 ). T1 om. $34^{bc}$. — $^{b}$) V1 B Dn D8. 10 विशुद्धानां भावितो ( B1 °वते; B3 °वितं ) वाग्यतानां. — D6. 7. 9 om. $34^{cd}$. — $^{c}$) T3 सत्य- ( for सत्ये ). D2. 4 धर्मात्मनामुद्वहतां म( D4 न )तिं स्वां.

35 D5 om. 35 ( cf. v. l. 30 ). D1 om. 35 ( cf. v. l. 33 ). — $^{a}$) V1 B Dn D2. 8. 10 T1. 3 M [s]परे; T2 G परं ( for परे ). T1 M संति ( for भान्ति ). D6. 9 सनातनाश्च ( for लोकाः सनातनाः ). D1. 2 ततः परं भांति सनातनास्ते ( D2 °ना ये ). — $^{b}$) B1 विरजसो वि-; T1 M ह्यरजसो वीत-; T2 G1. 3. 4 ह्यरजो वीत-; T3 रजसो वीत-; G2 विरजा वीत- ( for विरजा वि- ). D4. 6. 7. 9 सुपुण्यलोका विरजस्का विशोकाः. — B3 om. from महात्मनस ( in $35^{c}$ ) up to यात ( in $35^{d}$ ). — $^{d}$) D1 च ( for त्वा ). B1 D4. 7. 10 T2 G1. 2. 4 याचयिष्ये ( for यात° ).

36 $^{a}$) D1. 5 G3 चातुर्मास्ये; T3 चातुर्मास्यं. D4 यजंति ( for °ते ). B1 सदा जनास् ( by transp. ); D2 जनाः स; D4. 6. 7. 9 जना वै; T1 नरास्तु. — $^{b}$) D1 damaged. D2. 8 तथेष्टानां; D5 तथाक्रतूनां ( for तथेष्टीनां ). M1-3 द्विज- ( for दश- ). D4. 6. 7. 9 -शतान्याप्नुवंति ( for -शतं प्राप्नुवन्ति ). T3 तथेष्टानां दशशतं यातयंति. — $^{c}$) D1. 2 [अ]ग्नीनां ( for [अ]ग्निहोत्रं ). — T1 om. $36^{d}$–$37^{c}$. — $^{d}$) V1 B Dn1. n3 D8. 10 यथाम्नायं ( for °न्यायं ).

37 T1 om. $37^{abc}$ ( cf. v. l. 36 ). — $^{a}$) V1 B2. 4. 5 Dn2 Cn सुधारिणां ( for स्वदा° ). Dn1 D8 Cn धर्मसुरे; Cnp °धुरे ( as in text ). D1. 2 स्वदारिणां धर्मधुरं विनीयतां; D4. 6. 7. 9 सदाराणां धर्मधुरं विनीयतां; D10 S ( T1 om. ) स्वदारगाणां धर्मकृतां महात्मनां. ❀ Cn : धर्म- एव सुरः क्षुरः, तत्र सुष्ठु आत्मानं संधारयन्ति ते सुधारिणः, तेषाम् । ❀ — $^{b}$) V1 B Dn D6. 8. 10 यथोदिते ( for °चिते ). B1 संस्थितानां; B2 damaged ( for सुस्थि° ). — $^{c}$) D2. 4. 6. 7. 9 स्वां; D8. 10 गतां; S ( T1 om. ) सदा ( for तां ).

38 $^{a}$) B6 om.; M4 शोको ( for लोका ). B1 विरजसो विशोका; D1. 2 ह्यमला अ( D2 वि )शोका; D4. 6. 7. 9 ह्य( D4 अ )जरा ह्यशोका; T1. 3 M अमरा वीतशोका; T2 G अमरावतीशा ( for विरजा विशोका ). — $^{b}$) D6. 9 S दुरत्यया: ( for °न्वयाः ). — $^{c}$) T1. 3 G1. 3. 4 M तत्र; T2 अत्र ( for तस्य ). D6. 7 भुवने; T1 भविता; T2. 3 G1. 3. 4 M भवतो ( for °ने ). D4. 6. 7. 9 भूरिधाम्नो ( for भूरितेजसो ). — T3 om. $38^{d}$–$40^{a}$. — $^{d}$) D8 इमं त्वाहं ( for राजन्निमं ). B1 D4. 7. 10 T2 G याचयिष्ये; B4. 5 घात° ( for यात° ). — After

शतवर्षजीवी यश्च शूरो मनुष्यो
वेदाध्यायी यश्च यज्वाप्रमत्तः ।
एते सर्वे शक्रलोकं व्रजन्ति
परं गन्ता धृतराष्ट्रो न तत्र ॥ ३९

गौतम उवाच ।

प्राजापत्याः सन्ति लोका महान्तो
नाकस्य पृष्ठे पुष्कला वीतशोकाः ।
मनीषिताः सर्वलोकोद्भवानां
तत्र त्वाहं हस्तिनं यातयिष्ये ॥ ४०

धृतराष्ट्र उवाच ।

ये राजानो राजसूयाभिषिक्ता
धर्मात्मानो रक्षितारः प्रजानाम् ।
ये चाश्वमेधावभृथाप्लुताङ्गा-
स्तेषां लोका धृतराष्ट्रो न तत्र ॥ ४१

गौतम उवाच ।

ततः परं भान्ति लोकाः सनातनाः
सुपुण्यगन्धा विरजा वीतशोकाः ।
तस्मिन्नहं दुर्लभे त्वाप्रधृष्ये
गवां लोके हस्तिनं यातयिष्ये ॥ ४२

धृतराष्ट्र उवाच ।

यो गोसहस्री शतदः समां समां
यो गोशती दश दद्याच्च शक्त्या ।
तथा दशभ्यो यश्च दद्यादिहैकां
पञ्चभ्यो वा दानशीलस्तथैकाम् ॥ ४३
ये जीर्यन्ते ब्रह्मचर्येण विप्रा
ब्राह्मीं वाचं परिरक्षन्ति चैव ।
मनस्विनस्तीर्थयात्रापरायणा-
स्ते तत्र मोदन्ति गवां विमाने ॥ ४४

---

38, $D_5$ reads 41–42.

39 $T_3$ om. 39 ( cf. v. l. 38 ). — $^a$) $T_1$ -जीवी तु ( for -जीवी ). $D_4$ शतवर्षों; $T_2$ G यत्र शूरो ( for यश्च शूरो ). — $^b$) $G_{1,3,4}$ यत्र ( for यश्च ). — $^c$) $B_2$ damaged; $D_{1,2}$ ते वै ( for एते ). $D_7$ स्वर्ग- ( for शक्र- ). $D_6$ व्रजंते; $T_{1,2}$ G M भजंति ( for व्र° ). — $^d$) $D_4$ यत्र ( for तत्र ).

40 $T_3$ om. 40$^a$ ( cf. v. l. 38 ). — $^a$) M प्रजापतेः ( for प्राजापत्याः ). $D_{4,6,7,9}$ सत्य- ( for सन्ति ). $D_8$ महात्मनो ( for महान्तो ). — $^c$) $D_{10}$ S मनीषिणां सर्वलोकाभयानां. — $^d$) $B_1$ $D_{5,7,10}$ $T_3$ $G_{1,2,4}$ याचयिष्ये ( for यात° ).

41 $D_5$ reads 41–42 after 38. — $^a$) T G $M_4$ राजसूयेभिषिक्ता ( for राजसूया° ). — $B_2$ partly damaged for 41$^{bc}$. — $^b$) $B_1$ महात्मानो ( for धर्मा° ). — $D_2$ om. 41$^c$–42$^d$. — $^c$) $V_1$ $B_{3-5}$ $Dn_{1,n2}$ $D_{4,8,10}$ ये चाश्वमेधावभृथे प्लुतांगास् ( $D_8$ °थाप्लुतानां ). — $^d$) $T_3$ $G_4$ M लोको ( for लोका ). $D_4$ यत्र ( for तत्र ).

42 For the sequence in $D_5$, cf. v. l. 41. $D_2$ om. 42 ( cf. v. l. 41 ). $G_4$ $M_4$ om. the ref. — $^a$) $B_3$ $D_{6,9}$ परे भांति; S परे संति ( for परं भान्ति ). $D_{4,7}$ महांतः ( for सनातनाः ). — $^b$) $B_1$ विरजसो ( for विरजा ). $B_{2-5}$ $D_1$ विशोकाः; $T_2$ $G_{2,4}$ वीतमोहाः ( for °शोकाः ). $D_{4,6,7,9}$ सुपुण्यगंधा विरजस्का विशोकाः; $T_{1,3}$ M °गंधा विरजःशोकमोहाः; $G_{1,3}$ °गंधा विरजो वीतमोहाः. — $^c$) $Dn_1$ $D_4$ चाप्यधृष्ये; $Dn_2$ $D_8$ त्वाप्य°; $D_{5,10}$ $T_2$ $G_{1,3,4}$ M त्वप्र°; $D_{6,7,9}$ $T_1$ चाप्र°; $G_2$ *प्य° ( for त्वाप्र° ). $B_3$ तस्मिन्नहं सुदुर्लभे त्वां प्रधृष्ये. — $^d$) $B_1$ $D_{4-7,9,10}$ $T_2$ G याचयिष्ये ( for यात° ).

43 $^a$) $G_2$ शतशो ( for °दः ). $D_{1,2}$ शतं समा; $D_{5,10}$ S महात्मा; $D_3$ समः स्याद् ( for समां समां ). $D_{4,6,7,9}$ यो गोसहस्री स शतं च दद्याद्. — $^b$) $V_1$ B Dn $D_{1,2,5,8,19}$ गवां शती ( for यो गोशती ). $B_1$ तु भक्त्या; $D_{3,6,7,9}$ स्वशक्त्या ( for च शक्त्या ). — $^c$) $B_2$ partly damaged. $D_{6,9}$ दशान्ये ( for दशभ्यो ). $D_2$ यच्च; $D_{4,6,7,9}$ [ऽ]प्यथ ( for यश्च ). $B_5$ $D_{10}$ दशैकां; $D_1$ इवैकां ( for इहैकां ). — $^d$) $T_1$ तेषां लोका धृतराष्ट्रो न तत्र ( = 41$^d$ ).

44 $^a$) $D_{4,7,9}$ जीर्यंति ( for जीर्यन्ते ). $D_7$ प्राज्ञा; $M_{1,3}$ विप्र ( for विप्रा ). — $^b$) $B_1$ -नंदंति ( for -रक्षन्ति ). — $^c$) $D_{1,6}$ om.; $D_{2,4,7,9}$ $T_1$ -पराश्च; $T_{2,3}$ G -परा ये ( for -परायणास् ). — $^d$) $D_{1,6}$ om. ते तत्र. $V_1$ B Dn $D_{5,8,10}$ गवां निवासे; $D_{4,6,7,9}$ गवां हि लोके; $T_{2,3}$ G M ततो विमानैः ( for गवां विमाने )

प्रभासं मानसं पुण्यं पुष्कराणि महत्सरः ।
पुण्यं च नैमिषं तीर्थं बाहुदां करतोयिनीम् ॥ ४५
गयां गयशिरश्चैव विपाशां स्थूलवालुकाम् ।
तूष्णींगङ्गां दशगङ्गां महाह्रदमथापि च ॥ ४६
गौतमीं कौशिकीं पाकां महात्मानो धृतव्रताः ।
सरस्वतीदृषद्वत्यौ यमुनां ये प्रयान्ति च ॥ ४७
तत्र ते दिव्यसंस्थाना दिव्यमाल्यधराः शिवाः ।
प्रयान्ति पुण्यगन्धाढ्या धृतराष्ट्रो न तत्र वै ॥ ४८

गौतम उवाच ।

यत्र शीतभयं नास्ति न चोष्णभयमण्वपि ।
न क्षुत्पिपासे न ग्लानिर्न दुःखं न सुखं तथा ॥ ४९
न द्वेष्यो न प्रियः कश्चिन्न बन्धुर्न रिपुस्तथा ।
न जरामरणे वापि न पुण्यं न च पातकम् ॥ ५०
तस्मिन्विरजसि स्फीते प्रज्ञासत्त्वव्यवस्थिते ।
स्वयंभुभवने पुण्ये हस्तिनं मे यतिष्यति ॥ ५१

धृतराष्ट्र उवाच ।

निर्मुक्ताः सर्वसङ्गेभ्यो कृतात्मानो यतव्रताः ।
अध्यात्मयोगसंस्थाने युक्ताः स्वर्गगतिं गताः ॥ ५२
ते ब्रह्मभवनं पुण्यं प्राप्नुवन्तीह सात्त्विकाः ।
न तत्र धृतराष्ट्रस्ते शक्यो द्रष्टुं महामुने ॥ ५३ C. 13. 4895 B. 13. 102. 33 K. 13. 139. 53 M. 13. 92. 33

---

T1 तत्र त्वाहं हस्तिनं यातयिष्ये ( =40[d] ).

45 Before 45, T1 ins. धृतराष्ट्रः. — a) V1 B1. 3–5 Dn D5. 8. 10 तीर्थं; D3 om. (for पुण्यं). B2 प्रभासं पुष्करं तीर्थं. — b) B2 मानसं च (for पुष्कराणि). D1. 2. 4. 6. 7. 9 G4 महासरः (for महत्सरः). — c) D1. 2. 4. 6. 7. 9 पुण्योदं (for पुण्यं च). V1 B3. 3. 5 नेमिषं; D5. 10 G2 नेमिशं; T2. 3 G1. 3. 4 M नैमिशं (for °षं). — d) D6. 9 करतोयनीं; D8 °यनीं (for °यिनीम्). B3 करोति बहुदायिनीं; T1 बाहुदां नर्मदां तथा.

46 a) B2 partly damaged. V1 B3–5 Dn1 गंगां गय-; B1 Dn3 गंगागय-; B2 D10 गंगां गया-; Dn2 D5. 8 गंगागया-; D9 गयागय-; T1. 2 गवां हय-; T3 हयां हय-; G M गयां हय- (for गयां गय-). D4 गयां गया-शिरश्चैवं. — b) D2. 4. 6. 7. 9 विपाप्मां; G4 तथैव (for विपाशां). D1 विपाप्मां स्थलवालुकं; T G1–3 M तथैव स्थलवालुकां. — c) V1 B2–4 पंचनदं; T2 G M शनैगंगां (for दशगङ्गां). B5 Dn कृष्णां गंगां पंचनदं; D4. 6. 7. 9 कृष्णगंगां श्वेतगंगां; D5. 8. 10 कृष्णगंगां पंचनदं; T1 सरस्वतीं च गंगां च; T3 कृष्णां गंगां वृद्धगंगां. — d) D5–10 वा (for च).

47 a) V1 B1. 2. 4. 5 Dn D5. 10 T1. 3 G2 M4 गोमतीं; B3 गोतमीं (for गौ°). M4 पावकां (for कौशिकीं). Dn1 D5. 8. 10 पंपां; Dn2 पंथां; D1. 2 वाचां; D4. 6. 9 T3 G2 M1. 3 पापां; D7 तापीं; T1 नंदां; T2 G रम्यां; M4 om. (for पाकां). — T1 om. 47[bc]. — b) G1. 3 दृढमनाः (for धृत°). — c) T3 सरस्वतीं. D5. 10 सरस्वत्यै दृषद्वत्यै ( D10 °त्यां ). — d) V1 B2–4 D2. 5. 10 [ऽ]नु-; B1 च; B5 Dn D1 तु (for प्र-).

48 a) T2 G2. 4 ततस्ते; M ते तत्र (by transp.). — b) G4 -माला- (for -माल्य-). G1. 3 -पराः (for -धराः). — c) D1 दिव्य- (for पुण्य-).

49 b) T2 G एव च (for अण्वपि). — c) S क्षुत्पिपासे न च ग्लानिर्.

50 T1 om. (hapl.) 50[ab]. — a) G3 चेष्टो (for द्वेष्यो). — c) D4. 6–9 -मरणं (for °णे). V1 B4. 5 Dn D5. 10 चाथ; B1 D1. 7. 8 चापि (for वापि). S न जरामरणं त( T1 य )त्र. — d) B5 om. from न पुण्यं up to योगसं (in 52[c]). D8 जरा (for पुण्यं). V1 B1–4 पापकं (for पातकम्).

51 B5 om. 51 (cf. v. l. 50). T1 om. 51[ab]. — a) T3 स्थिते (for स्फीते). — b) D9 प्रजा-; S (T1 om.) प्राज्ञ- (for प्रज्ञा-). D5. 10 G3 -सत्य- (for -सत्त्व-). — c) Dn3 D7. 10 स्वयंभू-. B3 Dn2 D8 -भुवने; D1. 2. 4. 8 -सदने (for -भवने). — d) V1 B1–4 Dn D10 प्रदास्यसि (for यतिष्यति). D4 हास्तिनमर्पयिष्यति; D5 °नं ये प्रदास्यंति; D6–9 °नं मेर्पयिष्यति; T1 यातयिष्ये च हास्तिनं; T2. 3 G M हास्तिनं याच( M °त )यिष्यति.

52 B5 om. up to योगसं (in 52[c]) (cf. v. l. 50). T3 om. 52–54 (retaining the ref). — a) V1 B1–4 Dn D5. 10 -संगैर्यै (for -सङ्गेभ्यो). S (T3 om.) विमुक्ताः सर्वसंगेषु. — b) D1. 2. 4. 6–9 महात्मानो; D5 धृता°; M यता° (for कृता°). B2 जितेंद्रियाः; D7 जितव्रताः (for यत°). — c) V1 B Dn D5. 8. 10 -संस्थानैर्; D4. 6. 7. 9 -संस्थान-; T1 G2. 4 M -संस्था ये; T2 G1. 3 -युक्ता ये (for -संस्थाने). — d) T1 G युक्ताः सर्व-; T2 युक्तं सर्व-;

गौतम उवाच ।

रथन्तरं यत्र बृहच्च गीयते
यत्र वेदी पुण्डरीकैः स्तृणोति ।
यत्रोपयाति हरिभिः सोमपीथी
तत्र त्वाहं हस्तिनं यातयिष्ये ॥ ५४

बुध्यामि त्वां वृत्रहणं शतक्रतुं
व्यतिक्रमन्तं भुवनानि विश्वा ।
कच्चिन्न वाचा वृजिनं कदाचि-
दकार्षं ते मनसोऽभिषङ्गात् ॥ ५५

शक्र उवाच ।

यस्मादिमं लोकपथं प्रजाना-
मन्वागमं पदवादे गजस्य ।
तस्माद्भवान्प्रणतं मानुशास्तु
ब्रवीषि यत्तत्करवाणि सर्वम् ॥ ५६

गौतम उवाच ।

श्वेतं करेणुं मम पुत्रनागं
यं मेऽहार्षीर्दशवर्षाणि बालम् ।
यो मे वने वसतोऽभूद्द्वितीय-
स्तमेव मे देहि सुरेन्द्र नागम् ॥ ५७

शक्र उवाच ।

अयं सुतस्ते द्विजमुख्य नाग-
श्चाघ्रायते त्वामभिवीक्षमाणः ।

---

M मुक्ताः सर्व- ( for युक्ताः स्वर्ग- ).

53 $T_3$ om. 53 ( cf. v. l. 52 ). —[a]) $B_2$ $Dn_{2, n3}$ $D_{6-9}$ -भुवनं ( for -भ° ). —[b]) $Dn_2$ इ; $T_2$ $G_{1, 3, 4}$ हि ( for [इ]ह ). —[c]) $D_{6-9}$ ताञ् ( for ते ). —[d]) G प्रष्टुं ( for द्रष्टुं ).

54 $T_3$ om. 54 ( cf. v. l. 52 ). $D_8$ om. 54 (retaining the ref.). $T_2$ om. the ref. $D_7$ reads 54 on marg. ( *sec. m.* ). —[a]) $B_5$ $Dn_3$ $D_{4, 5, 10}$ $T_{1, 2}$ $G_2$ यच्च ( for यत्र ). —[b]) $B_{2, 3}$ वेदीः; $D_1$ वेदीं ( for वेदी ). $B_3$ $Dn_3$ $D_{2, 4, 5, 10}$ स्तृणाति; $D_{6, 9}$ स्तृतानि ( for स्तृणोति ). $D_7$. corrupt; S ( $T_3$ om. ) य( $G_2$ त )त्र वेदिः पुण्यजनैर्वृता च. —[c]) $M_2$ तत्र ( for यत्र ). $D_4$ -यांति च हरिभिः; $D_{6, 7, 9}$ -याति च हरिः; $M_{1-3}$ -यासि हरिभिः ( for -याति हरिभिः ). $V_1$ $B_{2-4}$ $D_5$ सोमवीथीं; $B_1$ $D_{10}$ °वीथिं ( for °पीथी ). —[d]) $B_1$ $D_{4, 5, 7, 10}$ $T_2$ $G_{1, 4}$ याचयिष्ये ( for यात° ).

55 Before 55, $G_{1, 3, 4}$ ins. गौतमः; $G_2$ ins. धृतराष्ट्रः. —[a]) $D_{1, 2, 8}$ पृच्छामि ( for बुध्यामि ). $V_1$ $D_{1, 4}$ S त्वा; $B_5$ मां ( for त्वां ). $B_5$ मित्रहणं ( for वृ° ). $T_1$ M त्वृषिष्टुतं; $T_2$ त्वभिष्टुतं; $T_3$ G ऋषिष्टुतं ( for शतक्रतुं ). $D_{4, 6, 7, 9}$ पृच्छामि त्वां वृत्रहणं शतक्रतोर् ( $D_4$ °ष्टुतो ). —[b]) $B_1$ -क्रामंतं; $B_5$ om.; $T_1$ -क्रमं मे; $T_2$ -क्रमं त्वां ( for -क्रमन्तं ). $D_{4, 6, 7, 9}$ विश्वे; $D_{5, 10}$ विश्वं ( for विश्वा ). —[c]) $D_{6, 7, 9}$ क्वचिन् ( for कच्चिन् ). $D_2$ कथंचिद् ( for कदा° ). $T_1$ कच्चिन्न वाचा रचितं हि किंचिद्. —[d]) $D_{1, 2}$ $T_3$ अका( $D_2$ °चा )र्षं ते; $D_4$ न चाप्यर्थं; $D_8$ न चाप्यकार्यं; $T_2$ $G_{2, 4}$ अकार्षीस्ते ( for अकार्षं ते ). $B_1$ [ऽ]भिषंगी; $T_1$ °षंगान् ( for °षङ्गात् ). $D_{6, 7, 9}$ न चाप्यकार्यं ते मनसोभिषंगः.

56 $V_1$ B Dn $D_{6, 9}$ शतक्रतुर्; $D_1$ गौतम; $D_{5, 10}$ om. ( for शक्र ). —[a]) $V_1$ $B_2$ ( marg. ).$_{3-5}$ Dn $D_{5, 10}$ $T_2$ मघवाहं; $D_{4, 6-9}$ यस्मादमुं; $T_1$ °दिदं ( for °दिमं ). $D_{1, 2}$ प्रधानम् ( for प्रजानाम् ). —[b]) $D_{1, 2}$ अन्वागमः; $D_{4, 6-9}$ °गतः; $T_{2, 3}$ $G_{2, 4}$ $M_{2, 3}$ मत्वागमं ( for अन्वा° ). $B_2$ ( marg. as in text ).$_{3, 4}$ परिवादे; $Dn_1$ परिवादे; $G_1$ damaged ( for पदवादे ). $D_{10}$ $M_1$ मत्वागमं परिपादे गजस्य; $T_1$ मत्वागमं हरणे ते ग°; $M_2$ ( *inf. lin.* ) मत्वागमं वारिपदे ग°. —[c]) $B_1$ मन्वगास्तु ( sic ); $B_5$ मामुपास्त ( for मानुशास्तु ). —[d]) $D_{1, 2}$ ब्रवीमि; $T_1$ M °हि; $T_3$ °तु ( for °षि ). $D_1$ यत्तः; $D_2$ तत्तत् ( for य° ). S करवाणीह ( for तत्करवाणि ).

57 [a]) Dn S पुत्रं तु ( $Dn_1$ $G_{1-3}$ हि ) नागं; $D_4$ पुत्रप्रभूतं; $D_{6-9}$ पुत्रभूतं ( for °नागं ). —[b]) $D_{1, 2}$ यमधाषं; $D_{4, 6-9}$ यमपालयं ( for यं मेऽहार्षीर् ). S प्रियं तु ( $T_1$ च ) मे प( $M_{1-3}$ पा )ष्टिवर्षं तु ( $T_2$ च ) बालं. —[c]) $D_6$ om. वने.

58 B Dn $D_{5, 8}$ शतक्रतुर्; $D_{1, 2, 4, 6, 7, 9}$ इंद्र ( for शक्र ). —[b]) $V_1$ आगच्छति; $D_{1, 2}$ ह्वेपायते; $D_{4, 6-9}$ यस्त्रायते ( for चाघ्रा° ). $D_{4, 6, 9}$ $T_{2, 3}$ $M_4$ -वीक्ष्यमाणः ( for -वीक्ष° ). B Dn $D_{5, 10}$ आगच्छति ( $B_{1, 3}$ °ते ) त्वामभिवीक्ष्यमाणः; $T_1$ त्वाघ्राति च त्वामभिरक्ष°. —[c]) $B_2$ हि ते; $B_3$ हि मे; $D_{5, 7, 9}$ $T_3$ च मे ( for च ते ). $D_{6, 8, 9}$ -जिघ्रतः ( for °ते ). $T_1$ ददामि तेहं ऋषिमुख्य

पादौ च ते नासिकयोपजिघ्रते
श्रेयो मम ध्याहि नमश्च तेऽस्तु ॥ ५८

गौतम उवाच ।

शिवं सदैवेह सुरेन्द्र तुभ्यं
ध्यायामि पूजां च सदा प्रयुञ्जे ।
ममापि त्वं शक्र शिवं ददस्व
त्वया दत्तं प्रतिगृह्णामि नागम् ॥ ५९

शक्र उवाच ।

येषां वेदा निहिता वै गुहायां
मनीषिणां सत्त्ववतां महात्मनाम् ।
तेषां त्वयैकेन महात्मनास्मि
बुद्धस्तस्मात्प्रीतिमांस्तेऽहमद्य ॥ ६०

हन्तैहि ब्राह्मण क्षिप्रं सह पुत्रेण हस्तिना ।
प्राप्नुहि त्वं शुभाँल्लोकानह्नाय च चिराय च ॥ ६१

भीष्म उवाच ।

स गौतमं पुरस्कृत्य सह पुत्रेण हस्तिना ।
दिवमाचक्रमे वज्री सद्भिः सह दुरासदम् ॥ ६२

इति श्रीमहाभारते अनुशासनपर्वणि पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

C. 13. 4904
B. 13. 102.
K. 13. 159.
M. 13. 92.

सर्वं. —[d]) $M_{1-3}$ हि मे (for मम).

59 $G_3$ om. the ref. —[a]) $B_1$ शिवं सुरेंद्रेह सदैव तुभ्यं. —[b]) $B_2$ damaged; $D_2$ ध्यायाम; $M_{1-3}$ ध्यास्यामि (for ध्यायामि). $D_3$ तु युंजे; $T_1$ प्रयच्छ (for प्रयुञ्जे). —[c]) $T_{1,3}$ M गजं (for शिवं). $D_{1,2,4,6,7,9}$ वदस्व (for ददस्व). —[d]) $G_3$ त्वयापि (for त्वया). $G_1$ om. दत्तं., $D_{1,4,6-9}$ प्रतिगृह्णे च; $D_2$ °गृह्णीम; $T_2$ °गृह्णाति (for °गृह्णामि).

60 B Dn $D_5$ शतक्रतुर्; $T_3$ om. (for शक्र). —[a]) $T_3$ om.; $M_1$ एषां (for येषां). $D_{5,10}$ वै निहिता (by transp.); $G_2$ विहिता वै. —[b]) $G_3$ महर्षीणां (for मनीषिणां). $V_1$ B Dn $D_{2,4,5,7,8,10}$ सत्यवतां (for सत्त्व°). —[c]) $B_1$ $M_{1,2}$ (*inf. lin.* as in text), $_3$ [अ]स्ति; $T_1$ [आ]सीद् (for [अ]स्मि). —[d]) $B_5$ वृद्धस्; $D_2$. $T_{1,2}$ $G_2$ बुद्धिस् (for बुद्धस्). $T_1$ सो (for ते).

61 [a]) $D_4$ [ए]ते हि त्वं; $D_6$ [ए]वैहि (both hypermetric) (for [ए]हि). —[c]) $B_2$ damaged. $V_1$ $B_{1,3,4}$ त्वं प्राप्नुहि (by transp.); $Dn_{1,n2}$ $D_{5,10}$ त्वं हि प्राप्नुः; $Dn_3$ तं प्राप्नुहि. $B_5$ त्वं प्राप्नुहि पुण्यलोकाँल्. —[d]) $Dn_2$ महार्थं (for अह्नाय). $D_{1,4,6,7,9}$ शिवाय; $D_2$ शुभाय (for चिराय). $B_5$ अंत्याय च शिवाय च.

62 $V_1$ B $Dn_{2,n3}$ $D_{5,10}$ om. the ref. —[a]) $D_{8,9}$ गौतमं हि (hypermetric) (for गौतमं). —[b]) $T_2$ हस्ति (for सह). —After 62, $Dn_{1,n2}$ and Bom. ed. Calcutta ed. Kumbh. ed. ins.:

470* य इदं शृणुयान्नित्यं यः पठेद्वा जितेन्द्रियः ।
स याति ब्रह्मणो लोकं ब्राह्मणो गौतमो यथा ।

[(L. 1) Bom. ed. Kumbh. ed. इदं यः (by transp.); Calcutta ed. इमं यः.]

Colophon. —*Parvan name:* $B_{1,2,4,5}$ $D_1$ शांति. —*Sub-parvan:* $V_1$ $B_{1-3}$ $Dn_{1,n2}$ $D_{1,2,5-10}$ दानधर्म. —*Adhy. name:* $V_1$ B Dn $D_5$ हस्तिकूटः; $D_{1,2,10}$ इंद्रगौतमसंवादे हस्तिकूटं; $D_4$ गौतमसंवादः; $D_{6-9}$ $M_{1-3}$ इंद्रगौतमसंवादः; $T_2$ $G_{1,3}$ शक्रधृतराष्ट्रगौतमसंवादे स्वर्गादिबहुलोककथनं. —*Adhy. no.* (figures, words or both): $V_1$ 102; $B_5$ 92; $Dn_1$ 100; $D_{10}$ 110; $T_1$ $M_4$ 153; $T_{2,3}$ $G_{2,4}$ 160; $G_{1,3}$ $M_1$ 154; $M_{2,3}$ 155. —*Śloka no.:* $Dn_{1,n2}$ 63; $D_4$ 58.

# १०६

युधिष्ठिर उवाच ।

दानं बहुविधाकारं शान्तिः सत्यमहिंसता ।
स्वदारतुष्टिश्चोक्ता ते फलं दानस्य चैव यत् ॥ १
पितामहस्य विदितं किमन्यत्र तपोबलात् ।
तपसो यत्परं तेऽद्य तन्मे व्याख्यातुमर्हसि ॥ २

भीष्म उवाच ।

तपः प्रचक्षते यावत्तावल्लोका युधिष्ठिर ।
मतं मम तु कौन्तेय तपो नानशनात्परम् ॥ ३
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
भगीरथस्य संवादं ब्रह्मणश्च महात्मनः ॥ ४
अतीत्य सुरलोकं च गवां लोकं च भारत ।
ऋषिलोकं च सोऽगच्छद्भगीरथ इति श्रुतिः ॥ ५
तं दृष्ट्वा स वचः प्राह ब्रह्मा राजन्भगीरथम् ।
कथं भगीरथागास्त्वमिमं देशं दुरासदम् ॥ ६
न हि देवा न गन्धर्वा न मनुष्या भगीरथ ।
आयान्त्यतप्ततपसः कथं वै त्वमिहागतः ॥ ७

भगीरथ उवाच ।

निःशङ्कमन्नमददं ब्राह्मणेभ्यः
शतं सहस्राणि सदैव दानम् ।
ब्राह्मं व्रतं नित्यमास्थाय विद्धि
न त्वेवाहं तस्य फलादिहागाम् ॥ ८
दशैकरात्रान्दश पञ्चरात्रा-

## 106

☞ This adhy. is missing in D3 (cf. v. l. 13. 82. 37).

1 After the ref., G2 ins. गणपतये नमः. — $^{b}$) D4. 6–9 शमः (for शान्तिः). V1 B Dn आहिंसितं (B3. 4 °ता); D5. 10 °सनं; D6–9 °सया (for °सता). — $^{c}$) B2 partly damaged. D5 मे (for ते). — $^{d}$) T1. 3 G2 चापि; T2 G1. 3. 4 वापि (for चैव). D1 ह; D2 हि; D4. 6. 9 तत् (for यत्).

2 $^{a}$) D5. 10 पितामहास्ति विदितं; T2. 3 °हास्याद्विदितं; G2. 4 °हास्मद्विदितं. — $^{b}$) D1–9 अन्यत्तु (for °त्र). V1 B Dn D10 किमन्यत्तपसो बलात्. — $^{c}$) B5 तेभ्यस; D5–7. 9. 10 नान्यत; T1 तत्र; T2. 3 G M त्वद्य (for तेऽद्य). — $^{d}$) B3. 5 Dn1. n2 D1. 4 नो (for मे).

3 $^{a}$) D4 6–9 प्रतीक्षते (for प्रच°). S तपसः (G4 °सा ; प्रश्न G2 प्रीत °यो यावत्. — $^{b}$) V1 B2–5 Dn2 D5 लोको; B1 Dn1. n3 D10 लोके (for लोका). — $^{c}$) V1 B Dn D5 10 ममात्र; T2. 3 G4 एतत्तु (for मम तु).

4 $^{d}$) B1 damaged. D1–6. 8. 9 ब्राह्मणस्य (for ब्रह्मणश्च).

5 $^{a}$) S [अ]मर- (for सुर-). — $^{b}$) V1 गव्यं (for गवां). — $^{c}$) D7 तु (for च). B1 यो; D6. 9 om. (for सो). — $^{d}$) V1 B2–5 Dn श्रुतं; D2 T2 G4 श्रुतः; T3 स्मृतिः (for श्रुतिः).

6 $^{a}$) D4. 6–9 स्म; T1. 3 G M तु; T2 च (for स). V1 B Dn D5. 10 तं तु दृष्ट्वा वचः (Dn3 ततः) प्राह. — Dn3 om. (hapl.) from रथम् (in 6$^{b}$) up to भगी (in 6$^{c}$). — $^{c}$) T1 om. कथं. B3 कथं भगीरथस्त्वेषाम् (sic). — $^{d}$) D4 G1 इदं (for इमं). V1 B Dn D1. 2. 5. 10 लोकं; T1 (also as in text) कस्माद् (for देशं). D1. 4. 6–9 दुरागमं (for °सदम्).

7 $^{c}$) T3 तप्त- (for [अ]तप्त-). — $^{d}$) G1 उपागतः (for इहा°).

8 $^{a}$) B2 partly damaged. V1 B1. 3. 4 Dn2. n3 D5 निष्काणाम्; B5 Dn1 निष्काणां वै (for निःशङ्कमन्नम्). Dn1 ह्यददं; D3 S अददां (for °दं). — $^{b}$) D5. 10 प्रातः (for शतं). Dn3 तथैव धेनूः; D1. 2 दशैव चाहं; D4. 6–9 तथैव दानं; T G M4 सदैवतानां (for सदैव दानम्). — $^{c}$) B3 D6–9 ब्राह्म-; D5. 10 ब्राह्मयं; T1 महद्; T2. 3 G M1–3 ब्रह्मन्; M4 ब्रह्म- (for ब्राह्मं). T2 नु तं (for व्रतं). V1 B Dn D1. 5. 10 विद्वन्; D4. 6–9 देव (for विद्धि). — $^{d}$) B1 दत्त्वैवाहं; T2 दैवादहं (for न त्वेवाहं). T G2–4 M [आ]गतः (for [अ]गाम्).

9 D10 reads 9$^{ab}$ twice. D5. 10 (second time)

नेकादशैकादशकान्क्रतूंश्च ।
ज्योतिष्टोमानां च शतं यदिष्टं
फलेन तेनापि च नागतोऽहम् ॥ ९
यच्चावसं जाह्नवीतीरनित्यः
शतं समास्तप्यमानस्तपोऽहम् ।
अदां च तत्राश्वतरीसहस्रं
नारीपुरं न च तेनाहमागाम् ॥ १०
दशायुतानि चाश्वानामयुतानि च विंशतिम् ।
पुष्करेषु द्विजातिभ्यः प्रादां गाश्च सहस्रशः ॥ ११
सुवर्णचन्द्रोडुपधारिणीनां
कन्योत्तमानामददं स्रग्विणीनाम् ।
षष्टिं सहस्राणि विभूषितानां
जाम्बूनदैराभरणैर्न तेन ॥ १२
दशार्बुदान्यददं गोसवेज्या-
स्वेकैकशो दश गा लोकनाथ ।
समानवत्साः पयसा समन्विताः
सुवर्णकांस्योपदुहा न तेन ॥ १३
अप्तोर्यामेषु नियतमेकैकस्मिन्दशाददम् ।
गृष्टीनां क्षीरदात्रीणां रोहिणीनां न तेन च ॥ १४
दोग्ध्रीणां वै गवां चैव प्रयुतानि दशैव ह ।
प्रादां दशगुणं ब्रह्मन्न च तेनाहमागतः ॥ १५
वाजिनां बाह्लिजातानामयुतान्यददं दश । C. 13. 4921 B. 13. 103. 16 K. 13. 110. 19 M. 13. 93. 16

corrupt for $9^{ab}$. — a) B1 D10 (first time) T2 G2-4 -रात्रं; B6 -वारान्; D6.9 -रात्रीं (for the first -रात्रान्). D1.2 पक्ष- (for पञ्च-). B1 रात्रम्; D6.9 -रात्रीम् (for the second -रात्रान्). — b) D1.2 क्रपींश्च; D10 T G M2.4 तथैव (for क्रतूंश्च). D4 इष्टं तथैकादशकं चचार; D6.7.9 इष्टिं तथैकादशकां चचार; D8 इष्टांस्तथैकादशकांश्चकार; M1.3 एकादशैकादशिकांस्तथैव. — c) D1.4.6.7.9 फलं (for शतं). B1 प्रदिष्टं; S यदिष्टवान् (for यदिष्टं). — d) B5 कालेन (for फलेन). D4.6-9 तेषामपि (for तेनापि च). S (except T2) न च (by transp.).

10 a) D4.6.7.9 यथा (for यच्च). B1 D10 T2 G4 -तीरनित्यं; T1 -तीर एव (for -तीरनित्यः). — b) G2 ततो (for तपो). — c) G2 om. अदां च. — d) D10 गाः कन्या वै; T1.2 G2.4 गावः कन्या; T3 गाः कन्यका; G1.3 M4 गाः कन्या वा; M1-3 गां कन्यां वा (for नारीपुरं). S [आ]गतोहं (for [अ]हमागाम्).

11 a) B2 partly damaged. B5 om.; D8.9 तु (for च). — b) V1 B Dn D5.8.10 गोयुता(V1 °गा)नि (for अ°). V1 om. च. T2.3 G विंशतिः. — c) D4.6-9 पुष्करे तु (for °रेषु). — d) V1 om.; B Dn D5.10 शत-; M2 (*sup. lin.*) गां च (for गाश्च).

12 T1 om. 12. — a) Dn D8-10 स- (for सु-). V1 B Dn D5.10 -चंद्रोत्तम-; D4.6-9 -पंचालक- (for -चन्द्रोडुप-). ❀ Cn: चन्द्रो भूषणविशेषः। ❀ — b) S (except G4; T1 om.) अददां. V1 B Dn D5 सहस्रं (for स्रग्विणीनाम्). — c) D8 षड्विंश- (for षष्टिं). T2.3 G M1-3 च भूषितानां; M4 च वेश्मकानां (for विभूषितानां).

13 a) B2.3 दशार्बुदानाम् (for °दानि). S अददां (for °दं). V1 गोसवेज्यान्; Dn3 गाः सवत्सान्; T1 गोसवे च; M °वेश्यश्च (for °वेज्यासु). — b) T2.3 G गा दश (by transp.). D4 [ए]कैकशो लोकनाथं सवत्साः.

14 D4.6.7.9 om. (hapl.?) 14. — a) V1 B Dn D5.8.10 G3 आप्तोर्यामेषु (for अप्तो°). S सततम् (for नियं°). D1.2 आप्तुर्यामेन नियते (D2 °तम्). — b) D1.2 दशायुतं; S °ददां (for °ददम्). — c) T2.3 G -दोग्ध्रीणां (for -दात्रीणां). — d) V1 S शतानि; B3-5 Dn D5.8.10 शतेन (for न तेन).

15 T1 om $15^{ab}$. — a) D1.2 दोग्ध्रीणां च; S (T1 om.) सुदोग्ध्रीणां (for दोग्ध्रीणां वै). V1 B Dn D2.4-6.9.10 चापि; D7 वापि (for चैव). — b) D1 G1.3 तथा (for दश). D1 T3 G M च; D5.6.9.10 हि; D8 T2 तु (for ह). — c) V1 शतगुणं (for दश°). — d) D2 न तेनाहमिहागतः.

16 D4.7.10 om. (hapl.) 16. T1 reads 16 twice. — a) V1 D2 वह्नि-; T1 (both times) कुल- (for बाह्लि-). D8 वाजिनां बहुजातीनाम्. — b) T1 (both times).2 G [अ]ददां (for °दं). T3 अयुतानामदां दश; M °न्यर्बुदानि च. — c) D5.6.8.9 किंकिणी-; T1 (both times) रूपिणां; T2.3 G2.4 पीतानां (for कर्णानां). M1-3 -चालानां; M4 -मान्यानां (for -मालानां).

40 39 35 घातको वधबन्धाभ्यामित्येष त्रिविधो वधः ॥ ३८
अखादन्ननुमोदंश्च भावदोषेण मानवः ।
योऽनुमन्येत हन्तव्यं सोऽपि दोषेण लिप्यते ॥ ३९
अधृष्यः सर्वभूतानामायुष्मान्नीरुजः सुखी ।
भवत्यभक्षयन्मांसं दयावान्प्राणिनामिह ॥ ४०
हिरण्यदानैर्गोदानैर्भूमिदानैश्च सर्वशः ।
मांसस्याभक्षणे धर्मो विशिष्टः स्यादिति श्रुतिः ॥ ४१
अप्रोक्षितं वृथामांसं विधिहीनं न भक्षयेत् ।
भक्षयन्निरयं याति नरो नास्त्यत्र संशयः ॥ ४२
प्रोक्षिताभ्युक्षितं मांसं तथा ब्राह्मणकाम्यया ।
अल्पदोषमिह ज्ञेयं विपरीते तु लिप्यते ॥ ४३
खादकस्य कृते जन्तुं यो हन्यात्पुरुषाधमः ।
महादोषकरस्तत्र खादको न तु घातकः ॥ ४४
इज्यायज्ञश्रुतिकृतैर्यो मार्गैरबुधो जनः ।
हन्याज्जन्तुं मांसगृद्धी स वै नरकभाङ्नरः ॥ ४५
भक्षयित्वा तु यो मांसं पश्चादपि निवर्तते ।
तस्यापि सुमहान्धर्मो यः पापाद्विनिवर्तते ॥ ४६
आहर्ता चानुमन्ता च विशस्ता क्रयविक्रयी ।

---

प्राणिहंतार एव च.

38 $D_{10}$ S ( except $M_4$ ) read 38 after 32, $D_{10}$ repeating it here. — $^a$) $V_1$ $B_{2-5}$ Dn $D_8$ क्रयिको; $D_{4,6,7,9}$ क्रयको; $D_{6,10}$ ( first time ) क्षयको; $T_1$ क्रयतो; $G_{3,4}$ क्रोधको; $M_4$ कालको; Madras ed. सांतको ( for क्रायको ). — $^b$) $T_{2,3}$ G चापि ( for चोप- ). $B_5$ ( orig. ) -घातकः ( for -भोगतः ). $T_1$ खादकस्योपभोगतः. — $^c$) $T_1$ $G_1$ खादको; $G_3$ सूदको; Madras ed. सूचको ( for घातको ). $T_3$ -वंधार्थम् ( for °भ्याम् ). $T_2$ $G_4$ सूदको वधबंधाद्याव्. — $^d$) $D_{5,7,10}$ ( first time ) [ए]वं; $T_1$ $M_4$ [ए]व ( for [ए]ष ). $D_2$ वि- ( for त्रि- ). $G_2$ मतः ( for वधः ).

39 $T_1$ om. $39^{ab}$. — $^a$) $D_8$ खादंश्चापि ( for अखादन् ). $T_2$ यो दूषयति मांसानि; $T_3$ G अखादनानुमोदी च; $M_{1-3}$ °दी नानुमोदी च; $M_4$ °दोननुमोदी च. — $^b$) $D_{5,8,10}$ भवेद् ( for भाव- ). S ( $T_1$ om. ) नैव दुष्येत ( $G_2$ °ष्यति ) मानवः. — $^c$) $V_1$ B $Dn_{1,n3}$ -मन्यति ( for -मन्येत ). $D_{4-10}$ $T_1$ योनुमन्यति हंतारं; $T_{2,3}$ G M °मन्यति हन्यं( $M_{1,2}$ [ both *sup. lin.* ] हिंसं )तं.

40 $T_1$ om. 40. — $^a$) $D_{1,2}$ अवध्यः; $D_{5,10}$ अधृष्टः ( for अधृष्यः ). — $^b$) $Dn_{1,n2}$ $D_{2,5,8,10}$ $T_2$ G निरुजः; $T_3$ अरुजः; M विरुजः ( for नी° ). $Dn_{1,n2}$ सुधीः; $Dn_3$ सदा; $G_2$ सुखं ( for सुखी ). — $^c$) $T_3$ $G_{2,4}$ भवेत्तु; $G_{1,3}$ भवेद् ( for भवति ). — $D_2$ om. ( hapl. ) $40^d$–$41^d$.

41 $D_2$ om. 41 ( cf. v. l. 40 ). — $^b$) $D_{5,7,10}$ भारत ( for सर्वशः ). — $^d$) $V_1$ B Dn $M_4$ इति नः ( for स्यादिति ). $B_{4,5}$ $T_{2,3}$ $G_1$ श्रुतं ( for श्रुतिः ). $T_1$ विशिष्यादिति नः श्रुतिः.

42 $V_1$ $B_{2-5}$ Dn $D_{1,4,6-9}$ $M_4$ repeat, $D_2$ reads, $42^{ab}$ after 51. — $^a$) $M_4$ ( first time ) यथा ( for वृथा- ). — $D_2$ om. $42^c$–$43^a$. — $^c$) $D_{4,6-10}$ नरकं ( for निरयं ).

43 $D_2$ om. $43^a$ ( cf. v. l. 42 ). $43^{ab}$ = Manu. 5. $27^{ab}$. — $^b$) $T_2$ $G_4$ -कांक्षया ( for -काम्यया ). — $^c$) $B_1$ इदं; $D_{5,7,10}$ च तज्; $T_{2,3}$ G M इति ( for इह ). $T_1$ अल्पो दोष इति ज्ञेयो. — $^d$) $D_{5,10}$ विपरीतं ( for °ते ). $B_3$ न ( for तु ). $T_{2,3}$ G विद्यते; $M_4$ दृश्यते ( for लिप्यते ). $T_1$ अन्यथा तु न लिप्यते; $M_{1-3}$ निर्दोषं वैदिकं स्मृतं.

44 $^a$) $G_4$ खादनस्य ( for °कस्य ). $V_1$ B ( except $B_1$ ) Dn $D_{4,5,10}$ जंतून् ( for जन्तुं ). — $^b$) $T_3$ दद्यात् ( for हन्यात् ). $D_{1,2}$ यो हन्यात्पुरुषोधमः. — $^c$) $V_1$ B Dn -दोषतरस्; $M_{1-3}$ -दोषाकरस् ( for -दोषकरस् ). — $^d$) $D_{1,4,6-9}$ $G_{1-3}$ घातको ( for खादको ). $V_1$ B Dn $G_4$ घातको न तु खादकः; $T_1$ घातको नरकाय सः.

45 $T_1$ om. 45. — $^a$) $D_{6-10}$ इष्ट्वा ( for इज्या- ). $D_{1,2}$ -श्रुतिकृते; $T_2$ $G_{1,3,4}$ °वृते; $T_3$ °धूते; $G_2$ $M_4$ °मृते ( for °कृतैर् ). — $^b$) $D_4$ मांसैर् ( for मार्गैर् ). $V_1$ B Dn $M_{1-3}$ [ऽ]धमः ( for जनः ). $T_{2,3}$ G $M_4$ यो मार्गैरबुधोपमः. — $^c$) $D_{6-10}$ $M_{1-3}$ हन्याज्जं( $D_{10}$ °त्वा जं )तून् ( for °जन्तुं ). $B_{1,2}$ -गृध्नः ( for -गृद्धी ). $V_1$ $B_{3-5}$ Dn $D_5$ $M_4$ हन्याज्जं( $D_5$ °त्वा जं )तून्मांसगृध्नुः ( $M_4$ °गंधी ); $T_{2,3}$ G हन्यान्मांसस्य गृध्नी यः. — $^d$) $D_{6,7,9}$ -वान्नरः; $T_3$ $G_{1,3,4}$ -भाजनं; $T_3$ $G_2$ -भाजिनः ( for -भाङ्नरः ). $D_8$ स वै नरकमाप्तवान्.

46 $^a$) $V_1$ $B_{1,2,4,5}$ Dn $T_{2,3}$ $G_{1-3}$ [अ]पि; $M_4$ पुरा ( for तु यो ). — $^b$) $T_1$ प्रति- ( for अपि ). — $^c$) $V_1$ तथा ( for तस्य ). — $^d$) $M_{1-3}$ यत्पश्चाद् ( for यः

संस्कर्ता चोपभोक्ता च घातकाः सर्व एव ते ॥ ४७
इदमन्यत्तु वक्ष्यामि प्रमाणं विधिनिर्मितम् ।
पुराणमृषिभिर्जुष्टं वेदेषु परिनिश्चितम् ॥ ४८
प्रवृत्तिलक्षणे धर्मे फलार्थिभिरभिद्रुते ।
यथोक्तं राजशार्दूल न तु तन्मोक्षकाङ्क्षिणाम् ॥ ४९
हविर्यत्संस्कृतं मन्त्रैः प्रोक्षिताभ्युक्षितं शुचि ।
वेदोक्तेन प्रमाणेन पितॄणां प्रक्रियासु च ।
अतोऽन्यथा वृथामांसमभक्ष्यं मनुरब्रवीत् ॥ ५०
अस्वर्ग्यमयशस्यं च रक्षोवद्भरतर्षभ ।
विधिना हि नराः पूर्वं मांसं राजन्नभक्षयन् ॥ ५१
य इच्छेत्पुरुषोऽत्यन्तमात्मानं निरुपद्रवम् ।
स वर्जयेत मांसानि प्राणिनामिह सर्वशः ॥ ५२
श्रूयते हि पुराकल्पे नृणां व्रीहिमयः पशुः ।
येनायजन्त यज्वानः पुण्यलोकपरायणाः ॥ ५३
ऋषिभिः संशयं पृष्टो वसुश्चेदिपतिः पुरा ।
अभक्ष्यमिति मांसं स प्राह भक्ष्यमिति प्रभो ॥ ५४
आकाशान्मेदिनीं प्राप्तस्ततः स पृथिवीपतिः ।
एतदेव पुनश्चोक्त्वा विवेश धरणीतलम् ॥ ५५
प्रजानां हितकामेन त्वगस्त्येन महात्मना ।
आरण्याः सर्वदैवत्याः प्रोक्षितास्तपसा मृगाः ॥ ५६　C. 13. B. 13. K. 13. M. 13.

---

पापाद् ). $T_1$ लोकाश्चापि सनातनाः.

47 Cf. Manu. 5. 51. — $^{b}$) $D_{6,8,9}$ विश्वस्ता ( for विशस्ता ). — $^{c}$) $B_1$ चोपहर्ता ; $T_1$ यस्य भोक्ता ( for चोपभोक्ता ). — $^{d}$) $V_1$ B Dn खादकाः ( for घातकाः ).

48 $^{a}$) $T_1$ अन्यं ( for अन्यत् ). $B_2$ च ; $D_{4,6,7-10}$ प्र- ( for तु ). — $^{b}$) $D_{5,6,8}$ -निश्चितं ; $D_7$ -निश्चयं ; $T_1$ -पूर्वकं ( for -निर्मितम् ). $B_3$ प्रमाणं विधिमुत्तमं ; $D_4$ °णं विद्धि निश्चितः. — $D_2$ om. $48^{c}$–$51^{b}$. $T_1$ om. $48^{c}$–$49^{b}$. — $^{c}$) $T_3$ $G_2$ प्रमाणम् ( for पुरा° ). — $^{d}$) $B_{1,2}$ Dn $D_{5-10}$ -निष्ठितं ; $B_3$ -विष्ठितं ( for -निश्चितम् ). $V_1$ वेदेषु विधिनिर्मितं.

49 $D_2$ om. 49 ; $T_1$ om. $49^{ab}$ ( for both, cf. v. l. 48 ). — $^{a}$) $V_1$ B Dn $D_{6,10}$ प्रवृत्तिलक्षणो धर्मः. — $^{b}$) $D_{4,6,8}$ $G_{3,4}$ $M_4$ प्रजार्थिभिर् ( for फला° ). $V_1$ B Dn $D_{5,10}$ प्रजार्थिभिरुदाहृतः. — $B_1$ om. $49^{c}$–$51^{d}$. — $^{d}$) $G_4$ च ( for तु ). $D_{5-10}$ -कांक्षिभिः ; S ( $T_2$ damaged ) -कारणं ( for -काङ्क्षिणाम् ).

50 $D_2$ om. 50 ( cf. v. l. 48 ). $B_1$ om. 50 ( cf. v. l. 49 ). — $^{a}$) $D_4$ संस्कृतैर् ( for °तं ). $T_{2,3}$ G हविर्भ्यैः संस्कृ( $T_2$ °स्तु )तैर्मन्त्रैः. — $^{b}$) $T_{2,3}$ $G_4$ प्रोक्षिताभ्युक्षितः शुचिः. — $D_1$ om. $50^{cd}$. — $^{d}$) $T_1$ प्रश्रयाय ( for प्रक्रियासु ). — $^{e}$) S ( except $M_4$ ) प्रवृत्तिधर्मि( $T_1$ °कर्म )णा भक्ष्यं. — $^{f}$) S ( except $M_4$ ) नान्यथा ( for अभक्ष्यं ).

51 $D_2$ om. $51^{ab}$ ( cf. v. l. 48 ). $B_1$ om. 51 ( cf. v. l. 49 ). $T_1$ om. $51^{ab}$. — $^{a}$) $G_{1,3}$ अस्वर्गम्. $D_{4,6,8-10}$ तु ( for च ). — $D_{10}$ T G read $51^{cd}$ after 52. — $^{c}$) $D_{4,6-9}$ च नराः ; T G $M_4$ [अ]पि नराः ( for हि नराः ). $V_1$ $B_{2-5}$ Dn $D_{5,10}$ विधिहीनं नरः पूर्वं. — $^{d}$) N ( except $D_{1,2}$ ; $B_1$ om. ; $D_3$ missing ) T G न भक्षयेत् ( for अभक्षयन् ). — For $51^{cd}$, $M_{1-3}$ subst. :

585* विधिनाप्यवैदिकेनेति दान्तानामिह निश्चयः ।
[ Prior half hypermetric. ]

— After 51, $V_1$ $B_{2-5}$ Dn $D_{1,4,6-9}$ $M_4$ repeat, and $D_2$ reads, $42^{ab}$.

52 $^{a}$) $T_1$ यदि ( for य ). $B_1$ $D_{4,5}$ $T_1$ नित्यम् ( for ऽत्यन्तम् ). — $D_4$ reads $52^{c}$–$53^{c}$ twice. — $^{c}$) $D_{1,2,4}$ ( both times ),$_{6-8}$ वि- ( for स ). $D_5$ विवर्जयेत्स मांसानि ; $G_{1,3,4}$ वर्जनीयानि मां°. — After 52, $D_{10}$ T G read $51^{cd}$.

53 Cf. 12. 323. 806* lines 4–5. For the repetition in $D_4$, cf. v. l. 52. — $^{a}$) $G_4$ काले ( for -कल्पे ). — $^{c}$) $M_4$ एते ( for येन ). $D_{10}$ $T_2$ G $M_3$ विद्वांसः ; $M_4$ यज्वानं ( for °नः ). $D_4$ ( both times ),$_{5-9}$ येनायजंश्च जुह्वानाः ; $T_1$ यजंति येन विद्वांसः. — $^{d}$) $D_{1,2}$ पुण्यकर्म- ; $D_{4-10}$ पशुकर्म- ( for पुण्यलोक- ).

54 $^{c}$) Some MSS. अभक्षम् ( for °क्ष्यम् ). $V_1$ $B_{2,3,5}$ Dn $M_4$ अथ ; $M_{1-3}$ अपि ( for इति ). $D_{6-10}$ मांसं तु ; $T_{2,3}$ G मांसस्य ( for मांसं स ). $B_4$ अभक्ष्यमथ वा मांसं ; $T_1$ मांसं भक्ष्यमभक्ष्यं वा. — $^{d}$) Some MSS. भक्षम् ( for भक्ष्यम् ).

55 $^{a}$) $V_1$ B Dn अवनीं ( for मेदिनीं ). $B_5$ $D_9$ प्राप्य ( for प्राप्तस् ). — $^{b}$) $D_5$ तन् ( for स ). $D_{4-10}$ मेदिनी- ( for पृथिवी- ). — $^{c}$) $D_{4-8}$ एवम् ; S यत्तद् ( for एतद् ). — $^{d}$) $D_{1,2}$ -तले ; $T_3$ -तलात् ( for -तलम् ).

53
5. 60 क्रिया ह्येवं न हीयन्ते पितृदैवतसंश्रिताः ।
7. 58
4. 59 प्रीयन्ते पितरश्चैव न्यायतो मांसतर्पिताः ॥ ५७
इदं तु शृणु राजेन्द्र कीर्त्यमानं मयानघ ।
अभक्षणे सर्वसुखं मांसस्य मनुजाधिप ॥ ५८
यस्तु वर्षशतं पूर्णं तपस्तप्येत्सुदारुणम् ।
यश्चैकं वर्जयेन्मांसं सममेतन्मतं मम ॥ ५९
कौमुदे तु विशेषेण शुक्लपक्षे नराधिप ।
वर्जयेत्सर्वमांसानि धर्मो ह्यत्र विधीयते ॥ ६०
चतुरो वार्षिकान्मासान्यो मांसं परिवर्जयेत् ।
चत्वारि भद्राण्याप्नोति कीर्तिमायुर्यशो बलम् ॥ ६१
अथ वा मासमप्येकं सर्वमांसान्यभक्षयन् ।
अतीत्य सर्वदुःखानि सुखी जीवेन्निरामयः ॥ ६२
ये वर्जयन्ति मांसानि मासशः पक्षशोऽपि वा ।
तेषां हिंसानिवृत्तानां ब्रह्मलोको विधीयते ॥ ६३
मांसं तु कौमुदं पक्षं वर्जितं पार्थ राजभिः ।
सर्वभूतात्मभूतैस्तैर्विज्ञातार्थपरावरैः ॥ ६४
नाभागेनाम्बरीषेण गयेन च महात्मना ।
आयुषा चानरण्येन दिलीपरघुपूरुभिः ॥ ६५

56 =(var.) 13.117.17. —$^{b}$) D6–10 om. तु. —$^{c}$) D9 आरण्यान् (for °ण्याः). Dn2 D1. 9 T2. 3 M -देवत्याः (for -दै°). —$^{d}$) D4–10 ते महा-; T G1–3 M तापसैर् (for तपसा). G4 प्रोक्षितास्तापसैर्वृताः. — After 56, T1 ins.:

586* कृतो हि मनसो यज्ञस्तेन देवाश्च तर्पिताः ।

57 D4 om. 57. —$^{a}$) Dn2 G4 क्रियास्त्वेव; T2. 3 G1–3 क्रिया ह्येव (for क्रिया ह्येवं). D2 न लीयंते; D5–10 विधीयंते (for न ही°). —$^{b}$) Some MSS. -देवत- (for -दै°). D5–10 -संयुताः; T1 M -संश्रयाः (for -संश्रिताः). — M4 om. 57$^{c}$–73$^{b}$. T1 om. 57$^{cd}$. —$^{c}$) M2 पूर्यंते (for प्री°).

58 M4 om. 58 (cf. v. l. 57). —$^{a}$) T2. 3 G तच् (for तु). M3 om. शृणु. — T G om. 58$^{bc}$. —$^{c}$) D2 अभक्षणं; D4–10 °क्षणात् (for °क्षणे). M1–3 -गुणं (for -सुखं). —$^{d}$) T G मांसस्याभक्षणे गुणः.

59 M4 om. 59 (cf. v. l. 57). D6 reads from पूर्णं (in 59$^{a}$) up न्मतं (in 59$^{d}$) twice. —$^{b}$) B3 damaged. M1–3 सुदुश्चरं (for °दारुणम्). —$^{c}$) V1 B Dn D10 T2. 3 G [ए]व (for [ए]कं). —$^{d}$) D1. 2 समं वा स्यान्न वा समं. — After 59, Dn2 reads 62$^{cd}$, repeating it in its proper place.

60 M4 om. 60 (cf. v. l. 57). —$^{a}$) Dn2 D1. 3 कौमुदी; D1. 2 °दं; D7. 9 °दीं; T1 M1–3 °द्यां; T2. 3 G °द्यास् (for °दे). B1 [ऽ]ति (for तु). — T3 om. (hapl.) 60$^{b}$–65$^{a}$. —$^{b}$) D1. 2 -पक्षं (for -पक्षे). —$^{c}$) B1. 5 Dn1. n2 D4–10 मधु- (for सर्व-). — D6 reads 60$^{d}$–63$^{a}$ twice.

61 For the repetition in D6, cf. v. l. 60. M4 om. 61 (cf. v. l. 57). T3 om. 61 (cf. v. l. 60). T2 G om. (hapl.) 61–63. —$^{d}$) B1 M1–3 बलं श्रियं (for यशो बलम्).

62 For the repetition in D6, cf. v. l. 60. M4 om. 62 (cf. v. l. 57). T3 om. 62 (cf. v. l. 60). T2 G om. 62 (cf. v. l. 61). —$^{a}$) V1 B Dn D10 एकं वै (D10 तु); D4. 6 (both times). 8. 9 M1 इत्येकं (for अप्येकं). — Dn2 reads 62$^{cd}$ for the first time after 59. —$^{d}$) B1. 2. 5 Dn1. n2 (both times) D2. 4. 5. 6 (both times). 7–9 सुखं; D10 सुखे (for सुखी). T1 M1–3 सुखी भूयान्न संशयः.

63 For the repetition in D6, cf. v. l. 60. M4 om. 63 (cf. v. l. 57). T3 om. 63 (cf. v. l. 60). T2 G om. 63 (cf. v. l. 61). —$^{a}$) V1 B Dn2 वर्जयंति हि मांसानि; T1 वर्जयेत्सर्वमांसानि. —$^{b}$) D4–10 मासं पक्षमथापि वा; T1 मासतः पक्षतोपि वा. —$^{c}$) D5 एषां (for तेषां). T1 M1–3 मांस- (for हिंसा-). —$^{d}$) D4. 6. 7. 9 ब्रह्मलोके महीयते.

64 M4 om. 64 (cf. v. l. 57). T3 om. 64 (cf. v. l. 60). T1 om. 64. —$^{a}$) D2 om. तु. T2 कुमुदं. —$^{b}$) D1. 2 T2 G सर्व-; D5–9 M1–3 तात (for पार्थ). —$^{c}$) D4. 6–9 -भूतार्थ- (for °त्म-). B1. 5 Dn1. n2 -भूत-स्थैर्; D4 -भूतैस्तु (for -भूतैस्तैर्). —$^{d}$) V1 B2–4 Dn विदितार्थ-; B1 विदितात्म- (for विज्ञातार्थ-). D4 -परैः परैः (for -परावरैः). D9 विज्ञातोर्थपरोपरैः.

65 M4 om. 65 (cf. v. l. 57). T3 om. 65$^{a}$ (cf. v. l. 60). —$^{a}$) D7 सगरेण (for नाभागेन). —$^{b}$) B2 सु- (for च). —$^{c}$) V1 Dn1 आयुनाथ; B Dn2. n3 M1. 2 °पाथ; D4. 6–9 °ना च (for °पा च). D5 आयुना वा नरेंद्रेण. —$^{d}$) T2. 3 G2–4 -सूनुभिः (for -पूरुभिः).

66 M4 om. 66 (cf. v. l. 57). —$^{a}$) M2. 3 कार्त-

कार्तवीर्यानिरुद्धाभ्यां नहुषेण ययातिना ।
नृगेण विष्वगश्वेन तथैव शशविन्दुना ।
युवनाश्वेन च तथा शिविनौशीनरेण च ॥ ६६
श्येनचित्रेण राजेन्द्र सोमकेन वृकेण च ।
रैवतेन रन्तिदेवेन वसुना सृञ्जयेन च ॥ ६७
दुःषन्तेन करूषेण रामालर्कनलैस्तथा ।
विरूपाश्वेन निमिना जनकेन च धीमता ॥ ६८
सिलेन पृथुना चैव वीरसेनेन चैव ह ।
इक्ष्वाकुणा शंभुना च श्वेतेन सगरेण च ॥ ६९
एतैश्चान्यैश्च राजेन्द्र पुरा मांसं न भक्षितम् ।
शारदं कौमुदं मासं ततस्ते स्वर्गमाप्नुवन् ॥ ७०
ब्रह्मलोके च तिष्ठन्ति ज्वलमानाः श्रियान्विताः ।
उपास्यमाना गन्धर्वैः स्त्रीसहस्रसमन्विताः ॥ ७१
तदेतदुत्तमं धर्ममहिंसालक्षणं शुभम् । C. 13. 5 S. 13. 11 K. 13. 1 M. 13. 1

वीर्यानुरुद्धाभ्यां. — $^{c}$) D2 नृगेण विश्वसेनेन. — $^{d}$) D2. 5 T G4 शशि- (for शश-). — $^{e}$) D1. 2. 6 T1 यौवनाश्वेन च तथा. — After 66, N (D8 missing) ins. :

587* मुचुकुन्देन मान्धात्रा हरिश्चन्द्रेण चाभिभो ।
सत्यं वदत मासत्यं सत्यं धर्मः सनातनः ।
हरिश्चन्द्रश्चरति वै दिवि सत्येन चन्द्रवत् ।

[(L. 1) D2 मुचकुंदेन. V1 B Dn D10 वा विभो; D5 वै विभो (for चाभिभो). — D4-7. 9. 10 om. lines 2-3.]

67 M4 om. 67 (cf. v. l. 57). T1 om. $67^{ab}$. D8 repeats 67-68 after 69. — $^{a}$) D6. 8 (second time). 9 श्येनपित्र्येण राजेंद्र; S (T1 M4 om.) श्वेतच्छत्रेण रा°. — $^{b}$) D10 वृषेण; S (T1 M4 om.) [अ]एकेन (for वृकेण). — $^{c}$) Hypermetric. B4 रैभ्येण; B5 रौत्येन; Dn1. n2 D6 रैवते; D8 (both times) दैवेन; D10 T2. 3 G M1-3 मनुना; T1 वसुना (for रैवतेन). B1. 3 [अ]ति-; D1. 2 [अ]भि- (for रन्ति-). — T1 om. (hapl.) $67^{d}$-$68^{c}$. D7 om. $67^{d}$-$68^{b}$. — $^{d}$) B2 संजयेन (for सृञ्जयेन). — After 67, Dn2 D8 (first occurrence) M1 ins. :

588* एतैश्चान्यैश्च राजेन्द्र कृपेण भरतेन च ।

68 For the repetition in D8, cf. v. l. 67. M4 om. 68 (cf. v. l. 57). D1 om. $68^{ab}$; T1 om. $68^{abc}$ (for both, cf. v. l. 67). — $^{a}$) V1 B3. 6 दुष्मंतेन; B1 दुष्वंतेन; B2. 4 दुःष्यंतेन; Dn D6 G2 दुष्यंतेन (for दुःषन्तेन). S (T1 M4 om.) करूशेन (for °षेण). D8 (first time) दुष्यंतेन करूष्येण. — $^{b}$) B1 रामामर्क-; B4 Dn2 °नर्क-; B6 °नर्त- (for °लर्क-). D1 -बलैस् (for -नलैस्). D2 रामेणापि नलेन च; S (T1 M4 om.) रामाळर्कनळैस्तथा (G3 °रैस्तथा; M1-3 °ळैः सदा). — For $68^{ab}$, D4-6. 8 (second occurrence). 9. 10 subst. :

589* दुःषन्तेन च राजेन्द्र कुशेन च लवेन च ।
विरूपाक्षेण कुरूषेण मृगालर्कनरैस्तथा ।

[(L. 1) Some MSS. दुष्यंतेन. D10 वलेन (for लवेन). — (L. 2) Prior half hypermetric. D4 कुरूक्षेण; D8 कुरूणा (for कुरूषेण). D5. 10 विरूपाक्षकरूषा(D10 °शा)भ्यां (for the prior half).]

— While D2 ins. 590* after $68^{ab}$. D2 om. $68^{c}$-$69^{d}$. — $^{c}$) D4-7. 9. 10 विश्वरूपेण निमिना; S (T1 M4 om.) चित्रकाश्वे(G3 °शे)न नि°. — $^{d}$) T1 महात्मना (for च धीमता).

69 M4 om. 69 (cf. v. l. 57). D2 om. 69 (cf. v. l. 68). — $^{a}$) V1 Dn1 शिनेन; B1. 3. 5 शीलेन; B2 Dn3 D6. 7 शिलेन; B4 D8 ऐलेन; Dn2 शिवेन; D4 शिलपेन; D7. 9. 10 शलेन; T1 नळेन (for सिलेन). — $^{b}$) D1 om. (hapl.) वीरसेनेन चैव. D6. 10 T1 हि (for ह). — $^{c}$) D4-7. 9. 10 शंकुना च; D8 शंतनुना; M1-3 शंभुना वै (for °ना च). T2. 3 G3. 4 इक्ष्वाकुणा यु(T2 G4 य)वाश्वेन; G1 °कुयवनाश्वेन; G2 °णा वनाश्वेन. — After 69, D8 repeats 67-68. V1 B Dn D1. 4-7. 9. 10 ins. after 69 : D2 after $68^{ab}$ : D8 after the repetition of 68 :

590* अजेन धुन्धुना चैव तथैव च सुबाहुना ।
हर्यश्वेन च राजेन्द्र क्षुपेण भरतेन च ।

[(L. 1) D1 शुंशुना; D2 चेचुना (for धुन्धुना). D4-7. 9. 10 अजेन धुंधुमारेण (for the prior half). — (L. 2) V1 D4-7. 9. 10 भरतेन च धीमता (for the post. half).]

70 M4 om. 70 (cf. v. l. 57). V1 om. $70^{a}$. — $^{b}$) T1 विवर्जितं (for न भक्षितम्). — T1 om. $70^{cd}$. — $^{c}$) M1. 3 सादरं (for शारदं). D5. 10 कुमुदं (for कौ°). — $^{d}$) D2 आप्नुयात्; D5. 10 T2. 3 G °युः (for °वन्).

71 M4 om. 71 (cf. v. l. 57). — $^{a}$) D2 तु; M1-3 [ऽ]व- (for च). D4-10 गच्छंति (for तिष्ठन्ति). — $^{b}$) D1. 2. 4 M2. 3 वृताः (for [अ]न्विताः). — $^{d}$) D5. 10 T1 स्त्रीसहस्रैः (for °स्र-). G1 damaged; G3. 4 -समावृताः (for -समन्विताः). T2. 3 G2 M1-3 स्त्रीसहस्रैः समावृताः.

672 15.78 ये चरन्ति महात्मानो नाकपृष्ठे वसन्ति ते ॥ ७२
177.76 104.71 मधु मांसं च ये नित्यं वर्जयन्तीह धार्मिकाः ।
जन्मप्रभृति मद्यं च सर्वे ते मुनयः स्मृताः ।
विशिष्टतां ज्ञातिषु च लभन्ते नात्र संशयः ॥ ७३
आपन्नश्चापदो मुच्येद्बद्धो मुच्येत बन्धनात् ।
मुच्येत्तथातुरो रोगाद्दुःखान्मुच्येत दुःखितः ॥ ७४
तिर्यग्योनिं न गच्छेत रूपवांश्च भवेन्नरः ।
बुद्धिमान्वै कुरुश्रेष्ठ प्राप्नुयाच्च महद्यशः ॥ ७५
एतत्ते कथितं राजन्मांसस्य परिवर्जने ।
प्रवृत्तौ च निवृत्तौ च विधानमृषिनिर्मितम् ॥ ७६

इति श्रीमहाभारते अनुशासनपर्वणि षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

---

72 $M_4$ om. 72 ( cf. v. l. 57 ). — $^{a}$) $Dn_2$ तथैतद् ; T G तदेनम् ; $M_3$ तदेतम् ( for °तद् ). — $^{b}$) $B_3$ $Dn_{1.n2}$ अहिंसाधर्मलक्षणं.

73 $M_4$ om. $73^{ab}$ ( cf. v. l. 57 ). — $^{a}$) $D_{4-10}$ मांसं हि ; $T_1$ मांसानि ( for मांसं च ). $G_2$ om. from नित्यं up to प्रभृति ( in $73^{c}$ ). — $^{b}$) $Dn_2$ $D_4$ ह ( for [इ]ह ). — $T_1$ om. $73^{cd}$. — $^{c}$) S ( $T_1$ om. ) ये नित्यं ( for मद्यं च ). — $^{d}$) S ( $T_1$ om. ) मद्यैश्चैव वि( $T_3$ M °श्च परि )वर्जिताः. — After 73, N ( $D_3$ missing ) ins. :

591* इमं धर्ममसांसादं यश्चरेच्छ्रावयेत वा ।
अपि चेत्सुदुराचारो न जातु निरयं व्रजेत् ।
पठेद्वा य इदं राजञ्शृणुयाद्वाप्यभीक्ष्णशः ।
अमांसभक्षणविधिं पवित्रमृषिपूजितम् ।
विमुक्तः सर्वपापेभ्यः सर्वकामैर्महीयते ।　[ 5 ]

[ ( L. 1 ) $D_{6.8.9}$ इदं ( for इमं ). $V_1$ B Dn श्रावयीत ( for °येत ). — ( L. 2 ) $D_4$ नरकं ( for निरयं ). — ( L. 3 ) $B_2$ $D_{2.10}$ इमं ( for इदं ). $D_{4-9}$ यः पठेद्वा इमं राजन् ( for the prior half ). — ( L. 4 ) $D_{1.2}$ -विधौ ( for -विधिं ). $Dn_2$ -पूजनं ; $D_{4-10}$ -सेवितं ( for -पूजितम् ). $D_{1.2}$ पवित्रमृषिभिः स्तुतं ( for the post. half ). — ( L. 5 ) $D_{6.9}$ प्रमुच्यते ; $D_8$ न युज्यते ( for महीयते ). $D_{6.7.10}$ सर्वपापैः ( $D_7$ °रोगैः ) प्रमुच्यते ( for the post. half ).]

— $^{c}$) S विशिष्टज्ञा( $M_{1-3}$ ष्टां ज्ञा )तिप्राधान्यं ( $M_4$ °संभान्यं ). — $^{f}$) N ( $D_3$ missing ) $T_1$ $G_2$ $M_4$ लभते ( for लभन्ते ). — After 73, T G ins. :

592* अहिंस्रो दानशीलश्च मधुमांसविवर्जितः ।
[ $T_1$ अहिंसा- ( for °स्रो ). ]

74 $T_1$ om. $74^{cd}$. — $^{c}$) $D_{1.5-7.9.10}$ मुच्येत च ; $D_{4.8}$ मुच्यते च ; $G_{1.3}$ मुच्येत्तदा ( for °त्तथा ). $G_2$ दुःखाद् ( for रोगाद् ). $D_2$ मुच्येत रोगाद्रोगी च. — $^{d}$) $D_2$ दुःखी ( for दुःखान् ).

75 $^{a}$) $V_1$ B $Dn_{2.n3}$ गच्छेच्च ( for °त ). — $^{c}$) $D_{1.4.7}$ कुलं श्रेष्ठं ; $D_2$ कुले श्रेष्ठः ; $D_{5.6.8.10}$ कुलश्रेष्ठ ; $T_3$ $G_{1.2.4}$ M कुलश्रैष्ठ्य( $T_3$ $M_4$ °श्रेष्ठ )म् ( for कुरुश्रेष्ठ ). $T_1$ ऋद्धिमांश्च कुलश्रैष्ठ्यम् ; $T_2$ सिद्धिमान्वै कुलश्रैष्ठ्यम्. — $^{d}$) S आप्नुयाच्च ( for प्रा° ).

76 $^{a}$) S एतत्ते सर्वमाख्यातं. — $^{b}$) $D_{1.2.4-10}$ $T_1$ -वर्जनं ( for °ने ). — $^{c}$) $B_5$ अप्रवृत्तौ ( for प्रवृत्तौ च ). — $^{d}$) $B_6$ विधि- ( for ऋषि- ). $D_{1.2}$ -संस्तुतं ( for -निर्मितम् ).

Colophon. — *Parvan name* : $B_{1.2.4}$ $D_1$ शांति. — *Sub-parvan* : $V_1$ $B_{1.3-5}$ $Dn_{1.n2}$ $D_{1.2.8-10}$ $M_{1-3}$ दानधर्म ; $D_6$ दानखंड. — *Adhy. name* : $V_1$ B Dn मांसभक्षणं ; $D_{1.2}$ अमांसभक्षणविधिः ; $D_{4-6.9}$ मांसदोषः ; $D_{7.8.10}$ मांसभक्षणदोषः ; $T_{2.3}$ $G_{2.4}$ मांसभक्षणनिषेधः ; $M_4$ मांसविवर्जनं. — *Adhy. no.* ( figures, words or both ) : $V_1$ 115 ; $B_6$ 105 ; $Dn_1$ 113 ; $D_{10}$ 122 ; $T_1$ $M_4$ 169 ; $T_{2.3}$ $G_{2.4}$ 176 ; $G_3$ $M_1$ 170 ; $M_{2.3}$ 171. — *Śloka no.* : $Dn_{1.n2}$ 85 ; $D_4$ 82.

# ११७

युधिष्ठिर उवाच ।
इमे वै मानवा लोके भृशं मांसस्य गृद्धिनः ।
विसृज्य भक्षान्विविधान्यथा रक्षोगणास्तथा ॥ १
नापूपान्विविधाकाराञ्शाकानि विविधानि च ।
षाडवान्रसयोगांश्च तथेच्छन्ति यथामिषम् ॥ २
तत्र मे बुद्धिरत्रैव विसर्गे परिमुह्यते ।
न मन्ये रसतः किंचिन्मांसतोऽस्तीह किंचन ॥ ३
तदिच्छामि गुणाञ्श्रोतुं मांसस्याभक्षणेऽपि वा ।
भक्षणे चैव ये दोषास्तांश्चैव पुरुषर्षभ ॥ ४
सर्वं तत्त्वेन धर्मज्ञ यथावदिह धर्मतः ।
किं वा भक्ष्यमभक्ष्यं वा सर्वमेतद्वदस्व मे ॥ ५
भीष्म उवाच ।
एवमेतन्महाबाहो यथा वदसि भारत ।
न मांसात्परमत्रान्यद्रसतो विद्यते भुवि ॥ ६
क्षतक्षीणाभितप्तानां ग्राम्यधर्मरताश्च ये ।
अध्वना कर्शितानां च न मांसाद्विद्यते परम् ॥ ७  C. 13. ! B. 13. ! K. 13. ! M. 13. !

## 117

☞ This adhy. is missing in $D_3$ ( cf. v. l. 13. 82. 37 ).

1 $D_{6,9}$ $G_3$ om. the ref. — $^{a}$) S मानुषा ( for मानवा ). — $^{b}$) $T_3$ G M मांसेषु ( for मांसस्य ). $V_1$ B Dn नृशंसा मांसगृद्धि( $B_{2,5}$ °गर्द्धि )नः ; $T_{1,2}$ भृशं मांसेन गर्धिनः. — $^{c}$) Some MSS. भक्ष्यान्. $V_1$ B Dn विसृज्य विविधान्भक्ष्या( $B_{2-4}$ °क्षा )न्. — $T_1$ om. $1^{d}$. — $^{d}$) $V_1$ B Dn इव ( for तथा ).

2 $T_1$ transp. $2^{a}$ and $2^{b}$. — $^{a}$) All MSS. ( except $D_{1,2}$ ; $D_3$ missing ) om. न. — $B_3$ om. $2^{cd}$. $T_1$ om. $2^{c}$. — $^{c}$) $V_1$ षांडवान् ; $Dn_{1,n2}$ खांड° ( for षाड° ). $V_1$ $B_{1,2,4,5}$ Dn न ( for च ). $D_{4-7,9,10}$ षा( $D_7$ षां- ; $D_{10}$ खां )डवासवयोगांश्च ; S ( $T_1$ om. ) पाद्यान्रससंयुक्ता( M °योगा )न्. — $^{d}$) $D_{4,6,8,9}$ S न च ; $D_7$ न वा ( for तथा ).

3 $T_1$ om. 3. $T_{2,3}$ G $M_4$ om. $3^{ab}$. $M_{1-3}$ transp. $3^{ab}$ and $3^{cd}$. — $^{b}$) $V_1$ $B_{4,5}$ $Dn_{1,n3}$ ( marg. ) विषये ; $Dn_2$ विषमे ( for विसर्गे ). $D_{1,2}$ -मुह्यति ( for -मुह्यते ). $B_{1-3}$ $Dn_3$ $D_{5,8}$ [ by corr. ], 10 विषये ( $Dn_3$ °मे ) परिमुह्यति ( $B_1$ °युज्यते ) ; $D_{4,6-9}$ विवर्णः ( $D_8$ °सर्पः ; $D_9$ [ before corr. ] °वर्णे ) परिमुह्यति ; $M_{1-3}$ विवेश परिगृह्यते ( sic ). — $^{c}$) $D_4$ चात्र ; $D_{6-9}$ चैव ( for किंचित् ). $D_{5,10}$ न मन्ये रसवांश्चैव. — $^{d}$) $T_3$ मांसान्न ( for मांसतो ). $V_1$ B Dn [इ]ति ( for [इ]ह ). $D_{4-9}$ कश्चन ( for किंचन ). $D_{10}$ मांसतोस्तीति कश्चन.

4 $^{b}$) $V_1$ B Dn $D_{5,10}$ प्रभो ; $D_{4,6-9}$ [ऽ]पि च ( for ऽपि वा ). — $^{d}$) $D_{4-10}$ M तांश्चैव भरतर्षभ ; T G तत्पापस्य च मोक्षणं.

5 $T_1$ om. $5^{ab}$. — $^{a}$) $Dn_3$ $D_{6,7}$ सर्वं- ( for सर्वं ). $T_3$ G $M_{1,4}$ सर्वंसत्त्वेन धर्मज्ञ. — $^{b}$) $D_{4,6-9}$ पृच्छतः ; $D_{5,10}$ सर्वतः ( for धर्मतः ). — $^{c}$) $Dn_1$ च ( for the first वा ). $Dn_2$ $D_{4,6-9}$ किं वा ( $Dn_2$ च ) भक्ष्यमभक्ष्यं वा. — $^{d}$) $D_2$ सत्यम् ( for सर्वम् ). $D_{4-8}$ एव ( for एतद् ). — After 5, N ( $D_3$ missing ) ins. :

593* यथैतद्यादृशं चैतद्गुणा ये चास्य वर्जने ।
दोषा भक्षयतो ये च तन्मे ब्रूहि पितामह ।

[ ( L. 1 ) $B_1$ $D_5$ तथा ( for यथा ). $Dn_2$ यादृशे. $V_1$ B Dn [ए]व ( for [ए]तद् ). — ( L. 2 ) $V_1$ वापि ; B Dn येपि ; $D_4$ येन ( for ये च ). ]

6 $^{a}$) S सर्वम् ( for एवम् ). — $^{b}$) $G_1$ partly damaged. $T_2$ यदा ( for यथा ). $D_{4-10}$ पार्थिव ( for भारत ). — $T_1$ om. $6^{c}$–$16^{d}$. — $^{c}$) $B_1$ $Dn_3$ $D_{4-10}$ S ( $T_1$ om. ) अस्तीह ( for अत्रान्यद् ). $V_1$ $B_{2-5}$ $Dn_{1,n2}$ न मांसात्परमं किंचिद्. — $^{d}$) $D_{4-10}$ रसतो भु( $D_{4,5}$ °वान्भु- ; $D_{10}$ °स्वे भु )वि किंचन.

7 $T_1$ om. 7 ( cf. v. l. 6 ). — $^{a}$) $D_{4-7,9,10}$ क्लम- ; $D_8$ क्लांत- ( for क्षत- ). — $^{b}$) $D_{1,2}$ $T_{2,3}$ G ग्राम- ( for ग्राम्य- ). $V_1$ $B_{1,2}$ ( marg. ), 3–5 Dn $D_{5,8}$ -रतात्मनां ( for °श्च ये ). — $^{c}$) $D_{4-9}$ व्याधिना ; $D_{10}$ $T_{2,3}$ अध्वान- ( for अध्वना ). Some MSS. कर्षितानां. $D_{7,8}$ तु ( for च ).

688 116. 9 78. 9 105. 7 सद्यो वर्धयति प्राणान्पुष्टिमग्र्यां ददाति च ।
न भक्षोऽभ्यधिकः कश्चिन्मांसादस्ति परंतप ॥ ८
विवर्जने तु बहवो गुणाः कौरवनन्दन ।
ये भवन्ति मनुष्याणां तान्मे निगदतः शृणु ॥ ९
स्वमांसं परमांसैर्यो विवर्धयितुमिच्छति ।
नास्ति क्षुद्रतरस्तस्मान्न नृशंसतरो नरः ॥ १०
न हि प्राणात्प्रियतरं लोके किंचन विद्यते ।
तस्माद्दयां नरः कुर्याद्यथात्मनि तथा परे ॥ ११
शुक्राच्च तात संभूतिर्मांसस्येह न संशयः ।
भक्षणे तु महान्दोषो वधेन सह कल्पते ॥ १२
अहिंसालक्षणो धर्म इति वेदविदो विदुः ।
यदहिंस्रं भवेत्कर्म तत्कुर्यादात्मवान्नरः ॥ १३
पितृदैवतयज्ञेषु प्रोक्षितं हविरुच्यते ।
विधिना वेददृष्टेन तद्भुक्त्वेह न दुष्यति ॥ १४
यज्ञार्थे पशवः सृष्टा इत्यपि श्रूयते श्रुतिः ।
अतोऽन्यथा प्रवृत्तानां राक्षसो विधिरुच्यते ॥ १५

---

8 $T_1$ om. 8 ( cf. v. l. 6 ). — $^{b}$ ) $B_5$ अग्रां ( for अग्र्यां ). $B_2$ प्रयच्छति ; $B_{3-5}$ $Dn_{1,n3}$ $D_{1,4-9}$ $M_{1-3}$ दधाति च ( for ददाति च ). — After $8^{ab}$, $T_{2,3}$ G M ins. :

594* नाशो भक्षणदोषस्य दानमेव सतां मतम् ।
क्षुधितानां द्विजानां च सर्वेषां चैव जीवनम् ।
दत्त्वा भवति पूतात्मा श्रद्धया लोभवर्जितः ।
शिक्षयन्ति न याचन्ते दर्शयन्तः स्वमूर्तिभिः ।
अवस्थेयमदानस्य मा भूदेवं भवानिति । [5]
दानाद्यैः सुशुचिर्मांसं पुनर्नैव स भक्षयेत् ।

[ ( L. 1 ) Kumbh. ed. -दोषः स्याद् ( for -दोषस्य ). $T_2$ सदा ( for सतां ). — ( L. 2 ) $M_4$ एव ( for चैव ). $T_{2,3}$ $G_2$ सर्वेषां चापि जीवितं ( for the post. half ). — ( L. 4 ) $T_{2,3}$ $G_2$ दर्शयंति ( for °यन्तः ). — ( L. 6 ) $T_{2,3}$ $G_2$ दानाद्यः ( for °द्यैः ). $T_2$ स ( for सु- ). $T_{2,3}$ $G_2$ च ( for स ). ]

— $^{c}$ ) $Dn_1$ भक्तो ; some MSS. भक्ष्यो ( for भक्षो ). $G_{3,4}$ ह्यधिकः ( for ऽभ्य° ). $D_{4-10}$ न भक्ष्येष्वधिकं किंचिन्.

9 $T_1$ om. 9 ( cf. v. l. 6 ). — $^{a}$ ) $V_1$ $B_{1-4}$ Dn विवर्जिते ; $G_{1,3}$ विसर्जने ( for विव° ). $D_{1,2}$ वर्जने बहवो लोके. — $^{c}$ ) $G_{1-3}$ भक्ष्यास्तु ( for भवन्ति ). — $^{d}$ ) $V_1$ $B_{1-4}$ $Dn_2$ $D_{2,4,5,8,10}$ $T_{2,3}$ $G_{2,4}$ तन् ( for तान् ).

10 $T_1$ om. 10 ( cf. v. l. 6 ). $10^{ab}$ = ( var. ) 13. 116. $14^{ab}$; $34^{ab}$; Manu. ( var. ) 5. $52^{ab}$. — $^{ab}$ ) $B_5$ स ; $T_2$ स्वं ( for स्व- ). N ( except $D_1$; $D_3$ missing ) -मांसेन यो ( for -मांसैर्यो वि- ). — $^{c}$ ) $D_5$ क्षुद्रकरस् ( for °तरस् ). — $^{d}$ ) $V_1$ $B_{2,4,5}$ $Dn_2$ सु- ; $B_1$ $Dn_{1,n3}$ $D_9$ स ( for न ). $D_{1-3,10}$ ततः ; S ( $T_1$ om. ) नृप ( for नरः ).

11 $T_1$ om. 11 ( cf. v. l. 6 ). — $^{a}$ ) $D_{1,2,4,5,7,9,10}$ प्राणैः ( for प्राणात् ). $D_8$ न हि प्राणैः प्रियतरो. — $^{b}$ ) $B_1$ किंचिन्न ( for किंचन ).

12 $T_1$ om. 12 ( cf. v. l. 6 ). — $^{a}$ ) $G_{1-3}$ M शुक्लाच् ( for शुक्राच् ). $D_6$ शुक्लाच्च मांससंपातिर् ; $T_{2,3}$ $G_4$ शुक्लाच्च तात संभूतं. — $G_2$ om. $12^{cd}$. — $^{c}$ ) $D_{4,5,7-10}$ भक्षणे च ; $T_{2,3}$ $G_{1,3,4}$ खादनेन ; M खादने हि ( for भक्षणे तु ). — $^{d}$ ) $M_{1-3}$ मलेन ( for वधेन ). $D_5$ कल्प्यते. $V_1$ B Dn निवृत्त्या पुण्यमुच्यते ; $D_{1,2}$ वधतुल्यः प्रकल्प्यते ; $T_{2,3}$ $G_{1,3,4}$ म( $G_4$ का )लेन स हि कल्पते ; $M_4$ मलेन स हि तुल्यते.

13 $T_1$ om. 13 ( cf. v. l. 6 ). $D_5$ om. ( hapl. ) 13–15. $D_{10}$ om. ( hapl. ) $13^{a}$–$14^{b}$; $V_1$ B Dn read the same after 21. — $^{b}$ ) $V_1$ B Dn $D_{4,6-9}$ $G_2$ M धर्म- ( for वेद- ). — $^{c}$ ) $D_{6-9}$ S ( except $M_3$; $T_1$ om. ) यदि हिंस्रं ( for यदहिंस्रं ). $V_1$ $B_{2,4,5}$ Dn यद्‌हिंसात्मकं कर्म. — $^{d}$ ) $D_{4,6,7,9}$ $G_2$ न ( for तत् ). $T_{2,3}$ $G_{1,3,4}$ M. आत्मविन् ( for °वान् ).

14 *For the sequence in $V_1$ B Dn, cf. v. l. 13.* $T_1$ om. 14 ( cf. v. l. 6 ). $D_5$ om. 14 ; $D_{10}$ om. $14^{ab}$ ( for both, cf. v. l. 13 ). — $^{a}$ ) $D_{4,6,8,9}$ -यज्ञे च ; $D_7$ -यज्ञेन ( for -यज्ञेषु ). — $^{b}$ ) $B_5$ प्रोक्षितो ; $Dn_2$ °ते ( for °तं ). $D_{1,2}$ प्रोक्षितं न निरुच्यते. — $T_3$ om. ( hapl. ) $14^{c}$–$15^{d}$. — $^{c}$ ) $D_4$ $T_2$ $G_{2,4}$ दैव- ; $D_3$ चेह ( for वेद- ). — $^{d}$ ) $G_1$ partly damaged. $G_1$ कृत्वा ( for भुक्त्वा ). $T_2$ $G_{2-4}$ M तद्भुक्त्वा नेह दूष्यते ( $G_2$ °ति ).

15 $T_1$ om. 15 ( cf. v. l. 6 ). $D_5$ om. 15 ( cf. v. l. 13 ). $T_3$ om. 15 ( *cf. v. l. 14* ). — $^{a}$ ) $D_{1,2,4,6-10}$ यज्ञार्थं ( for °र्थे ). — $^{b}$ ) $D_{1,7-10}$ [ए]वं ( for [अ]पि ).

क्षत्रियाणां तु यो दृष्टो विधिस्तमपि मे शृणु ।
वीर्येणोपार्जितं मांसं यथा खादन्न दुष्यति ॥ १६
आरण्याः सर्वदैवत्याः प्रोक्षिताः सर्वशो मृगाः ।
अगस्त्येन पुरा राजन्मृगया येन पूज्यते ॥ १७
नात्मानमपरित्यज्य मृगया नाम विद्यते ।
समतामुपसंगम्य रूपं हन्यान्न वा नृप ॥ १८
अतो राजर्षयः सर्वे मृगयां यान्ति भारत ।
लिप्यन्ते न हि दोषेण न चैतत्पातकं विदुः ॥ १९
न हि तत्परमं किंचिदिह लोके परत्र च ।
यत्सर्वेष्विह लोकेषु दया कौरवनन्दन ॥ २०
न भयं विद्यते जातु नरस्येह दयावतः ।
दयावतामिमे लोकाः परे चापि तपस्विनाम् ॥ २१
अभयं सर्वभूतेभ्यो यो ददाति दयापरः ।
अभयं तस्य भूतानि ददतीत्यनुशुश्रुमः ॥ २२
क्षतं च स्खलितं चैव पतितं क्लिष्टमाहतम् ।
सर्वभूतानि रक्षन्ति समेषु विषमेषु च ॥ २३
नैनं व्यालमृगा घ्नन्ति न पिशाचा न राक्षसाः ।
मुच्यन्ते भयकालेषु मोक्षयन्ति च ये परान् ॥ २४
प्राणदानात्परं दानं न भूतं न भविष्यति ।
न ह्यात्मनः प्रियतरः कश्चिदस्तीति निश्चितम् ॥ २५ C. 13. B. 13. K. 13. M. 13.

16 $T_1$ om. 16 (cf. v. l. 6). — $^a$) $D_{4-10}$ धर्मो (for दृष्टो). — $^b$) $D_{4,5,7,10}$ विधिं (for विधिस्). — $^c$) $T_{2,3}$ G स्ववीर्योपार्जितं मांसं. — $^d$) $V_1$ B Dn यथा भुंजन्; $D_{4-8,10}$ तथा भुंजन् (for यथा खादन्). $D_9$ तथा भुक्ते न दुष्यति; S ($T_1$ om.) यथा ($T_2$ यदा; M तेन) भुंजन्न दू($G_{1,2}$ दु)ष्यते.

17 For 17, cf. 13. 116. 56. $T_1$ transp. $17^{ab}$ and $17^{cd}$. — $^a$) $T_3$ $M_{1,3,4}$ -देवत्याः (for -दै°). — $^b$) $D_{4-10}$ सर्वतो (for °शो). $V_1$ B Dn सर्वशः प्रोक्षिता मृगाः. — $D_{10}$ om. (hapl.) $17^d$–$18^a$. — $^d$) $D_8$ $T_{2,3}$ G $M_2$ (*inf. lin.*).$_3$ [अ]नेन (for येन). $T_1$ मृगया न तु पूजिता. — After 17, S ins.:

595* रक्षणार्थाय भूतानां हिंस्रान्हन्यान्मृगान्पुनः ।

[$T_1$ हिंस्रा हन्युर् (for हिंस्रान्हन्यान्). $G_{2,3}$ द्विजः; M अपि (for पुनः).]

18 $D_{10}$ om. $18^a$ (cf. v. l. 17). $T_1$ om. 18. — $^d$) $M_{1,2,3}$ (also as in text) मृगं (for न वा). $V_1$ B $Dn_3$ $D_1$ भूतं हन्याति ($D_1$ °न्येत) हंति वा ($B_{2,3}$ च); $Dn_1$. $n_2$ $D_{5,10}$ भू($D_{5,10}$ पू)तं निघ्नंति मानवाः; $D_2$ भूतं हन्येत वा न वा; $D_{4,6-9}$ रूपं हंति विहं($D_4$ न हं-; $D_7$ च हं)ति च.

19 $^a$) $D_{4,6-9}$ ततो; $T_3$ अधो (for अतो). — $^b$) $D_6$ सर्वशः (for भारत). $T_1$ न यांति मृगयां नृप. — $T_1$ om. $19^{cd}$. — $^c$) $V_1$ B Dn $D_{4,6,8,9}$ $T_2$ $G_{2,4}$ M न हि लिप्यंति दोषेण ($V_1$ B Dn पापेन); $D_{5,10}$ लिप्यते न हि पापेन; $T_3$ न लिप्यंति च दोषेण; $G_{1,3}$ न च लिप्यंति दो°. — $^d$) $B_3$ $Dn_3$ वा (for च). $V_1$ $B_4$ पापकं (for पातकं). S ($T_1$ om.) भुवि (for विदुः).

20 $^a$) $D_{4-10}$ [अ]तः (for तत्). $V_1$ B Dn $T_{2,3}$ G न ह्यतः सदृशं ($T_{2,3}$ G °शी) किंचिद्; $T_1$ न ह्यतः पातकं किं°. — $^b$) $D_4$ om. (hapl.) from लोके up to ष्विह (in $20^c$). $T_1$ त्रिषु *** विद्यते. — $^c$) $D_2$ तद् (for यत्). $V_1$ $B_{1-3,5}$ Dn $D_3$ M [इ]ह भूतेषु; $D_{6,7,9}$ [इ]ह लोके तु; $T_{2,3}$ $G_{2,4}$ [अ]पि भूतेषु (for [इ]ह लोकेषु). $B_4$ या सर्वेष्विह भूतेषु; $T_1$ कर्तव्या चेह भूतेषु; $G_{1,3}$ सर्वेष्वपि हि भूतेषु. — $^d$) $D_{1,2,4}$ यदा (for दया).

21 $^c$) $D_4$ लोके (for लोकाः). — After 21, $V_1$ B Dn read $13^a$–$14^b$.

22 $^a$) $D_{1,2}$ -भूतेषु (for -भूतेभ्यो). — $^c$) $T_1$ सर्व- (for तस्य). — $^d$) $D_{5-10}$ ददंति; $T_3$ $G_2$ ददाति (for ददति). $V_1$ B $Dn_1$ $D_2$ $M_{2,3}$ -शुश्रुम (for °मः). $T_1$ वदंतीत्यनुशुश्रुम.

23 $T_1$ om. 23. — $^a$) $D_2$ $T_2$ $G_4$ क्षुतं; $T_3$ $G_{1-3}$ क्षुधं (for क्षतं). $V_1$ तु (for च). $D_{4-10}$ [अ]पि (for [ए]व). — $^b$) $B_2$ क्षिप्तम्; G क्लिन्नम्; Bom. ed. कृष्टम् (for क्लिष्टम्). $B_1$ आगतं; $D_3$ आहितं (for आहतम्). $T_{2,3}$ पतितं क्लिन्नमाहि($T_3$ °ग)तं.

24 $^a$) $B_3$ नैवं; $T_2$ $G_4$ नैतं; M नैनान् (for नैनं). Some MSS. व्याड- and व्याळ- (for व्याल-). $D_{4-7,9}$ नेमान्व्याळ($D_{6,7}$ °ल)मृगा हंति; $D_{3,10}$ नैनं ($D_{10}$ °तं) व्याळमृगा हंति. — $^c$) $V_1$ $B_{1,2,4,5}$ Dn मुच्यते; $D_{4,6-9}$ S मुंचंति (for मुच्यन्ते). $T_1$ -काले तु (for -कालेषु). — $^d$) $B_1$ तु (for च). $V_1$ $B_{2,4,5}$ Dn मोक्षयेद्यो भये प($V_1$ न)रान्.

सद्यो वर्धयति प्राणान्पुष्टिमग्र्यां ददाति च ।
न भक्षोऽभ्यधिकः कश्चिन्मांसादस्ति परंतप ॥ ८
विवर्जने तु बहवो गुणाः कौरवनन्दन ।
ये भवन्ति मनुष्याणां तान्मे निगदतः शृणु ॥ ९
स्वमांसं परमांसैर्यो विवर्धयितुमिच्छति ।
नास्ति क्षुद्रतरस्तस्मान्न नृशंसतरो नरः ॥ १०
न हि प्राणात्प्रियतरं लोके किंचन विद्यते ।
तस्माद्दयां नरः कुर्याद्यथात्मनि तथा परे ॥ ११
शुक्राच्च तात संभूतिर्मांसस्येह न संशयः ।
भक्षणे तु महान्दोषो वधेन सह कल्पते ॥ १२
अहिंसालक्षणो धर्म इति वेदविदो विदुः ।
यदहिंस्रं भवेत्कर्म तत्कुर्यादात्मवान्नरः ॥ १३
पितृदैवतयज्ञेषु प्रोक्षितं हविरुच्यते ।
विधिना वेददृष्टेन तद्भुक्त्वेह न दुष्यति ॥ १४
यज्ञार्थे पशवः सृष्टा इत्यपि श्रूयते श्रुतिः ।
अतोऽन्यथा प्रवृत्तानां राक्षसो विधिरुच्यते ॥ १५

8 T1 om. 8 ( cf. v. l. 6 ). — $^{b}$ ) B5 अग्रां ( for अग्र्यां ). B2 प्रयच्छति ; B3–5 Dn1. n3 D1. 4–9 M1–3 दधाति च ( for ददाति च ). — After $8^{ab}$, T2. 3 G M ins. :

594* नाशो भक्षणदोषस्य दानमेव सतां मतम् ।
क्षुधितानां द्विजानां च सर्वेषां चैव जीवनम् ।
दत्त्वा भवति पूतात्मा श्रद्धया लोभवर्जितः ।
शिक्षयन्ति न याचन्ते दर्शयन्तः स्वमूर्तिभिः ।
अवस्थेयमदानस्य मा भूदेवं भवानिति । [5]
दानाद्यैः सुशुचिर्मांसं पुनर्नैव स भक्षयेत् ।

[ ( L. 1 ) Kumbh. ed. -दोषः स्याद् ( for -दोषस्य ). T2 सदा ( for सतां ). — ( L. 2 ) M4 एव ( for चैव ). T2. 3 G2 सर्वेषां चापि जीवितं ( for the post. half ). — ( L. 4 ) T2. 3 G2 दर्शयंति ( for °यन्तः ). — ( L. 6 ) T2. 3 G2 दानाद्यः ( for °द्यैः ). T2 स ( for सु- ). T2. 3 G2 च ( for स ). ]

— $^{c}$ ) Dn1 भक्तो ; some MSS. भक्ष्यो ( for भक्षो ). G3. 4 ह्यधिकः ( for ऽभ्य° ). D1–10 न भक्ष्येष्वधिकं किंचिन्.

9 T1 om. 9 ( cf. v. l. 6 ). — $^{a}$ ) V1 B1–4 Dn विवर्जिते ; G1. 3 विसर्जने ( for विव° ). D1. 2 वर्जने बहवो लोके. — $^{c}$ ) G1–3 भक्ष्यास्तु ( for भवन्ति ). — $^{d}$ ) V1 B1–4 Dn2 D2. 4. 5. 8. 10 T2. 3 G2. 4 तन् ( for तान् ).

10 T1 om. 10 ( cf. v. l. 6 ). $10^{ab}$ = ( var. ) 13. 116. $14^{ab}$; $34^{ab}$; Manu. ( var. ) 5. $52^{ab}$. — $^{ab}$ ) B6 स ; T2 स्वं ( for स्व- ). N ( except D1 ; D3 missing ) -मांसेन यो ( for -मांसैर्यो वि- ). — $^{c}$ ) D5 क्षुद्रकरस् ( for °तरस् ). — $^{d}$ ) V1 B2. 4. 5 Dn2 सु- ; B1 Dn1. n3 D9 स ( for न ). D1–3. 10 ततः ; S ( T1 om. ) नृप ( for नरः ).

11 T1 om. 11 ( cf. v. l. 6 ). — $^{a}$ ) D1. 2. 4. 5. 7. 9. 10 प्राणैः ( for प्राणात् ). D3 न हि प्राणैः प्रियतरो. — $^{b}$ ) B1 किंचिन्न ( for किंचन ).

12 T1 om. 12 ( cf. v. l. 6 ). — $^{a}$ ) G1–3 M शुक्लाच्च ( for शुक्राच् ). D6 शुक्लाच्च मांससंपातिर् ; T2. 3 G4 शुक्लाच्च तात संभूतं. — G2 om. $12^{cd}$. — $^{c}$ ) D4. 5. 7–10 भक्षणे च ; T2. 3 G1. 3. 4 खादनेन ; M खादने हि ( for भक्षणे तु ). — $^{d}$ ) M1–3 मलेन ( for वधेन ). D5 कल्प्यते. V1 B Dn निवृत्त्या पुण्यमुच्यते ; D1. 2 वधतुल्यः प्रकल्प्यते ; T2. 3 G1. 3. 4 म( G4 का )लेन स हि कल्पते ; M4 मलेन स हि तुल्यते.

13 T1 om. 13 ( cf. v. l. 6 ). D5 om. ( hapl. ) 13–15. D10 om. ( hapl. ) $13^{a}$–$14^{b}$; V1 B Dn read the same after 21. — $^{b}$ ) V1 B Dn D4. 6–9 G2 M धर्म- ( for वेद- ). — $^{c}$ ) D6–9 S ( except M3 ; T1 om. ) यदि हिंस्रं ( for यदहिंस्रं ). V1 B2. 4. 5 Dn यद्धिंसात्मकं कर्म. — $^{d}$ ) D4. 6. 7. 9 G2 न ( for तद् ). T2. 3 G1. 3. 4 M. आत्मविन् ( for °वान् ).

14 For the sequence in V1 B Dn, cf. v. l. 13. T1 om. 14 ( cf. v. l. 6 ). D5 om. 14 ; D10 om. $14^{ab}$ ( for both, cf. v. l. 13 ). — $^{a}$ ) D4. 6. 8. 9 -यज्ञे च ; D7 -यज्ञेन ( for -यज्ञेषु ). — $^{b}$ ) B5 प्रोक्षितो ; Dn2 °ते ( for °तं ). D1. 2 प्रोक्षितं न निरुध्यते. — T3 om. ( hapl. ) $14^{c}$–$15^{d}$. — $^{c}$ ) D4 T2 G2. 4 दैव- ; D8 चेह ( for वेद- ). — $^{d}$ ) G1 partly damaged. G1 कृत्वा ( for भुक्त्वा ). T2 G2–4 M तद्भुक्त्वा नेह दूष्यते ( G2 °ति ).

15 T1 om. 15 ( cf. v. l. 6 ). D5 om. 15 ( cf. v. l. 13 ). T3 om. 15 ( cf. v. l. 14 ). — $^{a}$ ) D1. 2. 4. 6–10 यज्ञार्थं ( for °र्थे ). — $^{b}$ ) D4. 7–10 [ए]वं ( for [अ]पि ).

क्षत्रियाणां तु यो दृष्टो विधिस्तमपि मे शृणु ।
वीर्येणोपार्जितं मांसं यथा खादन्न दुष्यति ॥ १६
आरण्याः सर्वदैवत्याः प्रोक्षिताः सर्वशो मृगाः ।
अगस्त्येन पुरा राजन्मृगया येन पूज्यते ॥ १७
नात्मानमपरित्यज्य मृगया नाम विद्यते ।
समतामुपसंगम्य रूपं हन्यान्न वा नृप ॥ १८
अतो राजर्षयः सर्वे मृगयां यान्ति भारत ।
लिप्यन्ते न हि दोषेण न चैतत्पातकं विदुः ॥ १९
न हि तत्परमं किंचिदिह लोके परत्र च ।
यत्सर्वेष्विह लोकेषु दया कौरवनन्दन ॥ २०
न भयं विद्यते जातु नरस्येह दयावतः ।
दयावतामिमे लोकाः परे चापि तपस्विनाम् ॥ २१
अभयं सर्वभूतेभ्यो यो ददाति दयापरः ।
अभयं तस्य भूतानि ददतीत्यनुशुश्रुमः ॥ २२
क्षतं च स्खलितं चैव पतितं क्लिष्टमाहतम् ।
सर्वभूतानि रक्षन्ति समेषु विषमेषु च ॥ २३
नैनं व्यालमृगा घ्नन्ति न पिशाचा न राक्षसाः ।
मुच्यन्ते भयकालेषु मोक्षयन्ति च ये परान् ॥ २४
प्राणदानात्परं दानं न भूतं न भविष्यति ।
न ह्यात्मनः प्रियतरः कश्चिदस्तीति निश्चितम् ॥ २५ C. 13. 5 B. 13. K. 13. M. 13.

---

16 T1 om. 16 (cf. v. l. 6). — a) D4-10 धर्मो (for दृष्टो). — b) D4. 6. 7. 10 विधिं (for विधिस्). — c) T2. 3 G स्ववीर्योपार्जितं मांसं. — d) V1 B Dn यथा भुंजन्; D4-8. 10 तथा भुंजन् (for यथा खादन्). D9 तथा भुक्ते न दुष्यति; S (T1 om.) यथा (T2 यदा; M तेन) भुंजन्न दू( G1. 2 दु )ष्यते.

17 For 17, cf. 13. 116. 56. T1 transp. 17ab and 17cd. — a) T3 M1. 3. 4 -देवत्याः (for -दै°). — b) D4-10 सर्वतो (for °शो). V1 B Dn सर्वशः प्रोक्षिता मृगाः. — D10 om. (hapl.) 17d-18a. — d) D8 T2. 3 G M2 (*inf. lin.*). 3 [अ]नेन (for येन). T1 मृगया न तु पूजिता. — After 17, S ins.:

595* रक्षणार्थाय भूतानां हिंस्रान्हन्यान्मृगान्पुनः ।
[T1 हिंस्रा हन्युर् (for हिंस्रान्हन्यान्). G2. 3 द्विजः; M अपि (for पुनः).]

18 D10 om. 18a (cf. v. l. 17). T1 om. 18. — d) M1. 2. 3 (also as in text) मृगं (for न वा). V1 B Dn3 D1 भूतं हन्याति (D1 °न्येत) हंति वा (B2. 3 च); Dn1. n2 D5. 10 भू( D5. 10 पू )तं निघ्नंति मानवाः; D2 भूतं हन्येत वा न वा; D4. 6-9 रूपं हंति विहं( D4 न हं-; D7 च हं )ति च.

19 a) D4. 6-9 ततो; T3 अघो (for अतो). — b) D5 सर्वशः (for भारत). T1 न यांति मृगयां नृप. — T1 om. 19cd. — c) V1 B Dn D4. 6. 8. 9 T2 G2. 4 M न हि लिप्यंति दोषेण (V1 B Dn पापेन); D5. 10 लिप्यते न हि पापेन; T3 न लिप्यंति च दोषेण; G1. 3 न च लिप्यंति दो°. — d) B3 Dn3 वा (for च). V1 B4 पापकं (for पातकं). S (T1 om.) भुवि (for विदुः).

20 a) D1-10 [अ]तः (for तत्). V1 B Dn T2. 3 G न ह्यतः सदृशं (T2. 3 G °शी) किंचिद्; T1 न ह्यतः पातकं किं°. — b) D4 om. (hapl.) from लोके up to ष्विह (in 20c). T1 त्रिषु *** विद्यते. — c) D2 तद् (for यत्). V1 B1-3. 5 Dn D3 M [इ]ह भूतेषु; D6. 7. 9 [इ]ह लोके तु; T2. 3 G2. 4 [अ]पि भूतेषु (for [इ]ह लोकेषु). B4 या सर्वेष्विह भूतेषु; T1 कर्तव्या चेह भूतेषु; G1. 3 सर्वेष्वपि हि भूतेषु. — d) D1. 2. 4 यदा (for दया).

21 c) D4 लोके (for लोकाः). — After 21, V1 B Dn read 13a-14b.

22 a) D1. 2 -भूतेषु (for -भूतेभ्यो). — c) T1 सर्व- (for तस्य). — d) D5-10 ददंति; T3 G2 ददाति (for ददति). V1 B Dn1 D2 M2. 3 -शुश्रुम (for °मः). T1 वदंतीत्यनुशुश्रुम.

23 T1 om. 23. — a) D2 T2 G4 क्षुतं; T3 G1-3 क्षुधं (for क्षतं). V1 तु (for च). D1-10 [अ]पि (for [ए]व). — b) B2 क्षिप्तम्; G क्लिन्नम्; Bom. ed. कुष्टम् (for क्लिष्टम्). B1 आगतं; D3 आहितं (for आहतम्). T2. 3 पतितं क्लिन्नमाहि( T3 °ग )तं.

24 a) B3 नैनं; T2 G4 नैतं; M नैनान् (for नैनं). Some MSS. व्याड- and व्याल- (for व्याल-). D4-7. 9 नेमान्व्याळ( D6. 7 °ल )मृगा हंति; D3. 10 नैनं (D10 °तं) व्यालमृगा हंति. — c) V1 B1. 2. 4. 5 Dn मुच्यते; D4. 6-9 S मुंचंति (for मुच्यन्ते). T1 -काले तु (for -कालेषु). — d) B1 तु (for च). V1 B2. 4. 5 Dn मोक्षयेद्यो भये प( V1 न )रान्.

6 27 अनिष्टं सर्वभूतानां मरणं नाम भारत ।
29 29 मृत्युकाले हि भूतानां सद्यो जायति वेपथुः ॥ २६
जातिजन्मजरादुःखे नित्यं संसारसागरे ।
जन्तवः परिवर्तन्ते मरणादुद्विजन्ति च ॥ २७
गर्भवासेषु पच्यन्ते क्षाराम्लकटुकै रसैः ।
मूत्रश्लेष्मपुरीषाणां स्पर्शैश्च भृशदारुणैः ॥ २८
जाताश्चाप्यवशास्तत्र भिद्यमानाः पुनः पुनः ।
पाठ्यमानाश्च दृश्यन्ते विवशा मांसगृद्धिनः ॥ २९
कुम्भीपाके च पच्यन्ते तां तां योनिमुपागताः ।
आक्रम्य मार्यमाणाश्च भ्राम्यन्ते वै पुनः पुनः ॥ ३०
नात्मनोऽस्ति प्रियतरः पृथिव्यामनुसृत्य ह ।
तस्मात्प्राणिषु सर्वेषु दयावानात्मवान्भवेत् ॥ ३१
सर्वमांसानि यो राजन्यावज्जीवं न भक्षयेत् ।
स्वर्गे स विपुलं स्थानं प्राप्नुयान्नात्र संशयः ॥ ३२
ये भक्षयन्ति मांसानि भूतानां जीवितैषिणाम् ।
भक्ष्यन्ते तेऽपि तैर्भूतैरिति मे नास्ति संशयः ॥ ३३
मां स भक्षयते यस्माद्भक्षयिष्ये तमप्यहम् ।
एतन्मांसस्य मांसत्वमतो बुध्यस्व भारत ॥ ३४
घातको वध्यते नित्यं तथा वध्येत बन्धकः ।
आक्रोष्टाक्रुश्यते राजन्द्वेष्टा द्वेष्यत्वमाप्नुते ॥ ३५

---

25 $^{a}$) V1 B Dn प्रियतरं ( for °तरः ). — $^{d}$) S नः श्रुतं ( for निश्चितम् ). V1 B Dn किंचिदस्तीह निश्चितं.

26 $^{a}$) T2. 3 G ह्यरिष्टं (G2 °ष्टः ) ( for अनिष्टं ). — D6. 8. 9 om. ( hapl. ) 26$^{bc}$. — $^{c}$) Dn3 D4 -कालो हि ; D1. 2 -काले च ; T3 -कालाभि- ; M4 -कालेभि- ( for -काले हि ). — $^{d}$) D1. 2 जायेत ( for जायति ). G2 वै परः ( for वेपथुः ).

27 $^{a}$) S ( except G2 ) व्याधि- ( for जाति- ). N ( except D1. 2 ; D3 missing ) T G -दुःखैर् ( for -दुःखे ). — $^{c}$) T1 M -पच्यंते ; T2 -तुद्यंते ; T3 G1. 3. 4 -कृष्यंते ( for -वर्तन्ते ). G2 मज्जंतः परिकृष्यंते.

28 $^{a}$) B1. 2 -वासे च ; D4–10 T2. 3 G1. 3. 4 -वासेपि ; G2 -वासे वि- ( for -वासेषु ). T1 क्लिश्यंते ( for पच्यन्ते ). — $^{b}$) B5 Dn1. n2 T1. 2 क्षारांबु- ( for क्षाराम्ल- ). D1. 2 कट्वम्ललवणै रसैः. — $^{c}$) V1 B2. 4. 5 Dn मूत्रस्वेद- ; B1 °मेद- ; B3 पूयस्वेद- ; T3 G1. 3. 4 मूत्रैः श्लेष्म- ( for मूत्रश्लेष्म- ). — $^{d}$) V1 B Dn परुषैर् ; T1 विसर्गैर् ( for स्पर्शैश्च ).

29 $^{a}$) D1. 2 पुत्र ; T1 तस्थुर् ( for तत्र ). — $^{b}$) V1 B Dn D1. 4. 6. 8. 9 छिद्यमानाः ; D5. 7. 10 तुद्य° ( for भिद्य° ). — D1. 2. 10 T3 om. (hapl.) 29$^{c}$–30$^{d}$. — $^{c}$) B2 ( marg. as in text ) Dn1. n2 पाच्यमानाश् ; D7 पीड्य° ; S ( T3 om. ) हन्य° ( for पाट्य° ). — $^{d}$) B5 T1. 2 G1. 3 -गर्द्धिनः ( for -गृद्धिनः ).

30 D1. 2. 10 T3 om. 30 ( cf. v. l. 29 ). — $^{a}$) B3. 5 Dn3 D4–9 T1 -पाकेषु ; T2 G1. 3. 4 -पाकेन ( for -पाके च ). — $^{b}$) D4–7. 9 ततो ( for तां तां ). — $^{c}$) V1 B3 वार्यमाणाश् ; D4. 5 मार्ग° ( for मार्य° ). T1 M4 आक्रम्यमाणास्त्रस्यंति ( M4 °स्त्रास्यंते ). — $^{d}$) D4–7. 9 भ्राम्यंतेन्यैः ; T2 G M त्रास्यंत्यन्ये ( for भ्राम्यन्ते वै ). T1 त्रातार मुपयांति च.

31 $^{a}$) Dn2 प्रियतमः ( for °तरः ). — $^{b}$) D1. 2 उपसृत्य ( for अनु° ). T1 पृथिव्यामिह कश्चन. — T1 om. 31$^{c}$–33$^{d}$. — $^{c}$) D1. 2 प्राणेषु ( for प्राणिषु ).

32 T1 om. 32 ( cf. v. l. 31 ). — $^{c}$) Dn3 स्वर्गे सु- ; T2 G आश्वासं ; T3 आश्वासान् ; M आश्वास- ( for स्वर्गे स ). D5. 10 स्वर्गे स विपुले स्थाने.

33 T1 om. 33 ( cf. v. l. 31 ). D4. 10 om. (hapl.) 33. — $^{ab}$) D5. 7 transp. मांसानि and भूतानां. T2. 3 G भूतानां जीवनैषिणां ( for 33$^{b}$ ). — $^{c}$) G1 partly damaged. G3 भक्ष्यंत्येते ( for भक्ष्यन्ते ते ). D2 चापि ( for ऽपि तैर् ). V1 B Dn transp. तैः and भूतैः. — $^{d}$) Dn1 D6–9 M [अ]त्र ( for [अ]स्ति ).

34 $^{a}$) B Dn1 D1. 2. 4–8. 10 सं- ( for स ). S मां भक्षयति य( G2 °ते य- ; G4 °ति त )स्मात्स ( G2 °द्धि ; G4 °द्यो ). — $^{d}$) B1. 2. 5 Dn1. n2 D1. 2 अनु- ; T2. 3 G M ततो ( for अतो ). T1 गदितं चेह भारत.

35 $^{a}$) T G1. 3. 4 M हन्यते ( for वध्यते ). V1 G2 पातको बुध्य( G2 हन्य )ते नित्यं. — $^{b}$) T2 ततो ; M4 तदा ( for तथा ). D4–10 वध्यति ; G1. 3. 4 वध्येत ( for व° ). D1. 2 बंधिता ( for बन्धकः ). V1 B Dn तथा वध्यति भक्षिता ; T1 यथा वध्येत बंधकः ; M1–3 ततो बध्यति बंधकः. — $^{c}$) G1–3 आक्रुष्टा ; G4 आमृष्टा ( for आक्रोष्टा ). D5. 10 [आ]क्रुध्यते ; Bom. ed. क्रुध्यते ( for [आ]क्रुश्यते ). T2 आक्रुष्टः क्लिश्यते राजन्. — $^{d}$) V1 B Dn तथा ( for द्वेष्टा ). D1–9 T2. 3 G आप्नुयात् ( for °ते ). T1 द्वेष्टा द्वेषं समाप्नुते.

येन येन शरीरेण यद्यत्कर्म करोति यः ।
तेन तेन शरीरेण तत्तत्फलमुपाश्नुते ॥ ३६
अहिंसा परमो धर्मस्तथाहिंसा परो दमः ।
अहिंसा परमं दानमहिंसा परमं तपः ॥ ३७
अहिंसा परमो यज्ञस्तथाहिंसा परं बलम् ।
अहिंसा परमं मित्रमहिंसा परमं सुखम् ।
अहिंसा परमं सत्यमहिंसा परमं श्रुतम् ॥ ३८
सर्वयज्ञेषु वा दानं सर्वतीर्थेषु चाप्लुतम् ।
सर्वदानफलं वापि नैतत्तुल्यमहिंसया ॥ ३९
अहिंस्रस्य तपोऽक्षय्यमहिंस्रो यजते सदा ।
अहिंस्रः सर्वभूतानां यथा माता यथा पिता ॥ ४०
एतत्फलमहिंसाया भूयश्च कुरुपुंगव ।
न हि शक्या गुणा वक्तुमिह वर्षशतैरपि ॥ ४१

इति श्रीमहाभारते अनुशासनपर्वणि सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥

## ११८

युधिष्ठिर उवाच ।
अकामाश्च सकामाश्च हता येऽस्मिन्महाहवे ।
कां योनिं प्रतिपन्नास्ते तन्मे ब्रूहि पितामह ॥ १
दुःखं प्राणपरित्यागः पुरुषाणां महामृधे ।

C. 13.
B. 13.
K. 13.
M. 13.

36 $D_{2}$ om. (hapl.) 36. — $^{b}$) $T_{1}$ यत्तत् (for यद्यत्). $D_{5-10}$ च (for यः). — $^{d}$) $T_{2}$ अवाप्नुते (for उपाश्नुते). $T_{1}$ तत्फलं समवाप्नुते.

37 $T_{1}$ om. (hapl.) $37^{bc}$. — $^{b}$) $T_{2}$ च परमो (for [अ]हिंसा परो). $G_{4}$ अहिंसा परमो दमः. — $G_{1}$ reads $37^{cd}$ twice. $M_{1-3}$ om. (hapl.) $37^{d}$–$38^{e}$. — $^{d}$) $M_{4}$ अहिंसा परमा श्रुतिः.

38 $M_{1-3}$ om. $38^{abcde}$ (cf. v. l. 37). $D_{4-10}$ om. (hapl.) $38^{ab}$. — $^{a}$) $D_{2}$ धर्मस् (for यज्ञस्). — $^{b}$) B $Dn_{3}$ $M_{4}$ फलं; $T_{1}$ प्रियं (for बलम्). — $^{c}$) $D_{4}$ सत्यम्; T G $M_{4}$ शौचम् (for मित्रम्). — $^{d}$) $D_{4,6,7}$ श्रुतं (for सुखम्). — $D_{1,4,6,7}$ om. (hapl.) $38^{ef}$. — $^{e}$) $B_{1}$ $G_{4}$ मंत्रम्; T $G_{1-3}$ $M_{4}$ मित्रम् (for सत्यम्). — $^{f}$) S अहिंसा परमा म($T_{1}$ $G_{4}$ $M_{1-3}$ श्रु-; $T_{3}$ ग-; $M_{4}$ र)तिः.

39 $^{a}$) $V_{1}$ B(except $B_{3}$) $Dn_{3}$ वा स्नानं; $T_{1}$ दानं च (for वा दानं). — $^{b}$) $D_{1,6,7,9}$ -वेदेषु; $D_{4,5}$ -देवेषु (for -तीर्थेषु). $V_{1}$ B $Dn_{3}$ वाप्लुतं; T G $M_{1-3}$ चाप्लवः (for चाप्लुतम्). $D_{2}$ $M_{4}$ सर्वयज्ञेषु वाप्लुतं ($M_{4}$ चाप्लवः). — $^{c}$) $Dn_{2}$ $D_{5-10}$ M च (for वा). $T_{2}$ तु (for [अ]पि). — $^{d}$) $D_{2}$ तेन; S नैव (for नैतत्).

40 $^{a}$) Dn $D_{5,7,10}$ अहिंसस्य (for °स्रस्य). — $^{b}$) $Dn_{2}$ अहिंसो (for °स्रो). $V_{1}$ $B_{3}$ $M_{1,3}$ जयते; $B_{1}$ $D_{4-10}$ T G $M_{2,4}$ जायते (for यजते). — $^{c}$) $M_{1,3}$ अहिंसा (for °स्रः). — $^{d}$) $D_{5,8}$ $T_{1,3}$ तथा (for the second यथा). — After 40, $D_{5,10}$ ins.:

596* अगस्त्येन पुरा राजन्मांसभक्षं तु जाङ्गले ।

41 $^{a}$) $T_{1}$ एते (for एतत्). $G_{1}$ बलम् (for फलम्). $D_{5,10}$ $T_{2,3}$ $G_{1-3}$ अहिंसायां (for °या). — $^{b}$) $D_{1}$ -नंदन (for -पुंगव). — $^{c}$) S शक्या ये ($T_{1}$ °क्यास्ते) (for हि शक्या). — $^{d}$) $V_{1}$ B Dn $D_{2}$ अपि (for इह).

Colophon. — *Parvan name:* $B_{1,2,4}$ $Dn_{3}$ $D_{1}$ शांति. — *Sub-parvan:* $V_{1}$ $B_{1-3,5}$ $D_{1,2,5,8,10}$ $M_{1-3}$ दानधर्म. — *Adhy. name:* $V_{1}$ $B_{4,5}$ Dn $D_{1}$ मांसभक्षणं; $B_{1,2}$ $D_{2}$ अमांसभक्षणं; $B_{3}$ अहिंसा; $D_{5-10}$ मांसभक्षणे दोषः. — *Adhy. no.* (figures, words or both): $V_{1}$ $Dn_{1}$ 116; $D_{10}$ 123; $T_{1}$ $M_{4}$ 170; $T_{2,3}$ $G_{2,4}$ 177; $G_{1,3}$ $M_{1}$ 171; $M_{2,3}$ 172. — *Śloka no.:* $Dn_{1,n2}$ 43.

## 118

☞ This adhy. is missing in $D_{3}$ (cf. v. l. 13. 82. 37).

1 $^{a}$) $B_{1}$ om. (hapl.) सकामाश्च. — $^{b}$) $D_{4-10}$ T G $M_{2}$ ये हता (by transp.); $M_{4}$ ये मृता. $G_{1}$ स्युर् (for ऽस्मिन्). $V_{1}$ B Dn ये हताः स्म म($B_{6}$ सुम)-हामृधे. — $^{c}$) $V_{1}$ B $Dn_{1,n3}$ गतिं (for योनिं). $Dn_{2}$ कां गतिं प्रतिपद्यंते.

जानामि तत्त्वं धर्मज्ञ प्राणत्यागं सुदुष्करम् ॥ २
समृद्धे वासमृद्धे वा शुभे वा यदि वाशुभे ।
कारणं तत्र मे ब्रूहि सर्वज्ञो ह्यसि मे मतः ॥ ३

भीष्म उवाच ।

समृद्धे वासमृद्धे वा शुभे वा यदि वाशुभे ।
संसारेऽस्मिन्समाजाताः प्राणिनः पृथिवीपते ॥ ४
निरता येन भावेन तत्र मे शृणु कारणम् ।
सम्यक्चायमनुप्रश्नस्त्वयोक्तश्च युधिष्ठिर ॥ ५
अत्र ते वर्तयिष्यामि पुरावृत्तमिदं नृप ।
द्वैपायनस्य संवादं कीटस्य च युधिष्ठिर ॥ ६
ब्रह्मभूतश्चरन्विप्रः कृष्णद्वैपायनः पुरा ।
ददर्श कीटं धावन्तं शीघ्रं शकटवर्त्मनि ॥ ७
गतिज्ञः सर्वभूतानां रुतज्ञश्च शरीरिणाम् ।
सर्वज्ञः सर्वतो दृष्ट्वा कीटं वचनमब्रवीत् ॥ ८
कीट संत्रस्तरूपोऽसि त्वरितश्चैव लक्ष्यसे ।
क्व धावसि तदाचक्ष्व कुतस्ते भयमागतम् ॥ ९

कीट उवाच ।

शकटस्यास्य महतो घोषं श्रुत्वा भयं मम ।
आगतं वै महाबुद्धे स्वन एष हि दारुणः ।
श्रूयते न स मां हन्यादिति तस्मादपाक्रमे ॥ १०

---

2 Before 2, T3 ins. भीष्मः. — $^{a}$) D8 दुःखात् (for दुःखं). — $^{b}$) D1–10 महाहवे (for °मृधे). — $^{c}$) T1 G M1. 4 चाहं; T2. 3 चेह (for तत्त्वं). V1 B Dn जानासि त्वं महाप्राज्ञ; D1–10 °मि धर्मतत्त्वज्ञ. — $^{d}$). Some MSS. सुदुःकरं. T1 G1–3 M4 प्राणत्यागः सुदुष्करः.

3 D4. 6. 7. 9. 10 T3 om. (hapl.) 3. T1 om. 3$^{a}$–5$^{b}$. — $^{a}$) V1 B Dn D2. 8 समृद्धौ वासमृद्धौ वा; T2 समृद्धे वा शुभे वा यः. — $^{b}$) Dn2 शुभं वा; T2 समृद्धे (for शुभे वा). D5 शुभं वा यदि वाशुभं. — After 3$^{ab}$, T2 G M read 4$^{cd}$ repeating it in its proper place. — $^{d}$) D5 [s]सि हि (by transp.). Dn2 सं- (for मे).

4 T1 om. 4 (cf. v. l. 3). T3 om. the ref. — $^{a}$) V1 B Dn D2 समृद्धौ वासमृद्धौ वा. — G1 om. 4$^{b}$. T2 G M read 4$^{cd}$ for the first time after 3$^{ab}$. — $^{c}$) Dn3 वा (for ऽस्मिन्). D4–10 समायाताः; T2 G2 (both both times). 3 (second time). 4 (both times) समे जाताः; T3 परे जाताः; G1. 3 (both first time) सदा जाताः (for समाजाताः). — $^{d}$) T2 G M (all first time) प्राणिनोभिर( G2 °नो हि र )ताः कथं.

5 T1 om. 5$^{ab}$ (cf. v. l. 3). — $^{a}$) D1 नियताः; G2 विरता (for नि°). G4 योग- (for येन). — $^{b}$) D5 तत्र मे कारणं शृणु. — $^{c}$) D7. 10 वा; T2. 3 G4 तु (for च). T1 सुसं- (for अनु-). — $^{d}$) V1 B Dn D2 त्वयोक्तस्तु; D1. 6–10 T1. 3 G1. 3 M त्वद्यु( T1 °द्यु )क्तश्च; T2 G2 सद्युक्तं च; G4 तद्युक्तं च (for त्वयोक्तश्च).

6 D4. 7 om. (hapl.) 6. — $^{a}$) D6. 8–10 T2 तत्र (for अत्र). D2 T1 अत्र ते वर्ण( T1 कीर्त )यिष्यामि. — $^{b}$) D1. 2 पुराकल्पम् (for °वृत्तम्). T1 शृणु (for नृप). — $^{c}$) D1. 2. 10 वदतः; D6. 8 देवस्य (for संवादं). — $^{d}$) V1 कीटस्य तु; D5 T1 °कस्य (for °स्य च).

7 $^{b}$) D7 -द्वीपायनः (for -द्वैपा°).

8 $^{b}$) V1 B Dn भाषाज्ञश्च; T1 भूत° (for रुत°). G2 भूतज्ञश्च शरीरिणः. — $^{c}$) V1 B Dn स तदा; S त्वरितं (for सर्वतो). D1–10 सर्वज्ञः सर्वदर्शी च.

9 D1 om. 9. Before 9, some MSS. ins. व्यासः. — $^{a}$) D6–10 संतप्त-; T1 त्वं जीव-; T2 G M त्वं त्रस्त- (for संत्रस्त-). T3 कीटस्त्वं त्रस्तरूपेण. — $^{b}$) Dn2 T2 लक्ष्यते (for °से). — $^{c}$) T2. 3 G M च वा( M चावा )सस् (for धावसि). T1 क्व चावासस्तव परः.

10 $^{a}$) D6. 10 व्रजतो (for महतो). D4. 6. 7. 9 S शकटव्रजस्य महतो (hypermetric). — $^{b}$) V1 D4. 6. 7. 9 घोरं (for घोषं). S महत् (for मम). — G1. 3 om. 10$^{cd}$. — $^{c}$) D5. 10 हि; S (G1. 3 om.) मे (for वै). — $^{d}$) B5 D4 एव (for एष). — T1 om. 10$^{ef}$. — $^{e}$) V1 B2–5 Dn D10 न च मां; B1 च स मां; D4. 6–8 M न स मा; D5 स च मां; T2 G तु स मा ( T2 G2 मां); — $^{f}$) T2. 3 इतस् (for T3 हि स मा (for न स मां). इति). B1. 3 D6. 7 G M4 अपक्रमे (for अपा°). V1 B2. 4. 5 Dn इति ह्यस्मादपक्रमे.

11 $^{a}$) D4 शृण्वतां (for श्वसतां). B Dn1. n3 D8 [ए]तं; D1–7. 9. 10 [ए]तं; G2 [ए]व [ए]नं; D1. 2 T1 [ए]व; (for [ए]वं). — $^{b}$) T G M4 गोवृषाणां; M1–3 गोधुर्याणां (for गोपुत्राणां). V1 B Dn प्रतोद्यतां; D1. 6–9 प्रणोद्यतां; D5. 10 प्रधावतां (for प्रचोद्यताम्).

श्वसतां च शृणोम्येवं गोपुत्राणां प्रचोद्यताम् ।
वहतां सुमहाभारं संनिकर्षे स्वनं प्रभो ।
नृणां च संवाहयतां श्रूयते विविधः स्वनः ॥ ११
सोढुमस्मद्विधेनैष न शक्यः कीटयोनिना ।
तस्मादपक्रमाम्येष भयादस्मात्सुदारुणात् ॥ १२
दुःखं हि मृत्युर्भूतानां जीवितं च सुदुर्लभम् ।
अतो भीतः पलायामि गच्छेयं नासुखं सुखात् ॥ १३

भीष्म उवाच ।

इत्युक्तः स तु तं प्राह कुतः कीट सुखं तव ।
मरणं ते सुखं मन्ये तिर्यग्योनौ हि वर्तसे ॥ १४
शब्दं स्पर्शं रसं गन्धं भोगांश्चोच्चावचान्बहून् ।
नाभिजानासि कीट त्वं श्रेयो मरणमेव ते ॥ १५

कीट उवाच ।

सर्वत्र निरतो जीव इतीहापि सुखं मम ।
चेतयामि महाप्राज्ञ तस्मादिच्छामि जीवितुम् ॥ १६
इहापि विषयः सर्वो यथादेहं प्रवर्तितः ।
मानुषास्तिर्यगाश्चैव पृथग्भोगा विशेषतः ॥ १७
अहमासं मनुष्यो वै शूद्रो बहुधनः पुरा ।
अब्रह्मण्यो नृशंसश्च कदर्यो वृद्धिजीवनः ॥ १८
वाक्तीक्ष्णो निकृतिप्रज्ञो मोष्टा विश्वस्य सर्वशः ।

C.
B.
K.
M.

om. 11cd. — c) B5 सुवहं; D5.10 तु महा- (for सुमहा-). — d) V1 B1.4 Dn2 संनिकर्ष- (for °र्षे). D8.9 G2 स्वयं (for स्वनं). D7.10 नृप (for प्रभो). B5 संनिकर्षस्वनं विभो. — f) D1.2 स्वरः (for स्वनः). T G1.3.4 M4 श्रूयंते विविधाः स्वनाः.

12 T1 om. 12ab. — a) V1 B Dn श्रोतुम्; D4 corrupt; T2.3 G वोढुम् (for सो°). D10 S (T1 om.) अस्मद्विधैर् (for °धेन). B1 [ए]व; D1.2 [इ]ह (for [ए]ष). — b) D1.2 सम्यक् (for शक्यः). G M -योनिभिः (for °ना). — c) V1 B Dn D10 अति- (for अप-). S तस्मादहमप(M °ति)क्रामे. — d) T2.3 G तस्मात् (for अ°).

13 a) D1.2.4–10 दुःखो (for दुःखं). T G1–3 M मृत्युर्हि (by transp.). — b) D4–10 हि; T1 तु (for च). — T1 om. 13cd. — c) D5 ततो (for अतो). M4 भीत्या (for भीतः). — d) B1 [अ]पि संमुखं; T2.3 G [आ]पदं यथा; M4 [अ]सुखं यथा (for °खं सुखात्). D4–10 गच्छेयं यत्र नः (D6.10 मे) सुखं.

14 a) B1 D1 T1 ततः; D2 तदा; T2.3 G M च तं (for तु तं). — c) D1.2.4–10 सुखं ते मरणं मन्ये. — d) V1 B Dn तु (for हि).

15 b) D1.2.4–10 शुभान् (for बहून्). — c) D1.4–7.9.10 M1–3 कीटत्वे (for कीट त्वं). — d) D9 च (for ते).

16 a) D4 T2.3 G4 सर्वतो (for °त्र). D1 हि रतो; T1 च गतो (for निरतो). — b) V1 B Dn इतश्चापि; D10 S इहापि च (for इतीहापि). — c) D5.10 चिंतयामि (for चेत°). B3 D1 महाप्रज्ञ. — d) V1 D1 T1 जीवितं (for °तुम्).

17 T1 om. 17. — a) M [अ]स्ति (for [अ]पि). D1.4.5.7.9.10 इहापि विषयाः सर्वे. — b) D1.4.5.7.9 प्रवर्तिताः; D2 G4 प्रकीर्तितः (D2 °ताः) (for प्रवर्तितः). — c) B2 damaged; T G1.2.4 M मनुष्यास् (for मानुषास्). V1 Dn3 तैर्यंजाश्; B1.3.4 तिर्यग्जाश्; B2 Dn1.n2 स्थैर्यजाश् (for तिर्यगाश्). B5 मानुष्यास्तैर्यजाताश्च; D2 तिर्यग्गा मानुषाश्चैव; G3 मनुष्यगास्तिर्यगाश्चैव (hypermetric). — d) D1.4–10 पृथग्भावा; T2 °ग्भोगान्; G4 °ग्भोग- (for °ग्भोगा). D2 पृथगेवाविशेषतः.

18 a) D2 आसे (for आसं). T G M4 मनुष्येषु (for °ष्यो वै). — b) V1 B Dn प्रभो; D8 स्मृतः (for पुरा). — d) D6–9 T1.2 G1.3.4 M बुद्धि- (for वृद्धि-). B4.5 -जीविकः (for -जीवनः). D4 T3 कदर्यो बुद्धिजीविनः.

19 T1 om. 19ab. — a) D4 प्राक्श्लक्ष्णो; D5–10 वाक्श्लक्ष्णो (for वाक्तीक्ष्णो). T2.3 G M4 वाक्श्लक्ष्णो (T2 °क्शल्यो) ह्यकृतप्रज्ञो; M1–3 श्लक्ष्णवागकृत°. — b) B1 नेष्टो (sic); B2 D5.8.10 द्वेष्टा; D4.6.7.9 मोहे (for मोष्टा). Dn2 सर्वस्य (for विश्वस्य). S (T1 om.) द्वेष्टा विश्वस्य कर्मणः. — c) Bom. ed. मिथ्या- (for मिथः-). V1 B2–5 Dn2.n3 D4–7.9.10 [ऽ]पनि(B3 Dn2 D6.10 °वि)धिना; B1 Dn1 [ऽ]पि नि(Dn1 वि)धिना (for ऽपनिधनः). D8 दुष्टबुद्धिं समाश्रित्य; T G M4 मिथो गुप्तनिधि(T1 °सुधी-; G4 °रति)र्नित्यं. — d) D4

81

142 17. 20 मिथःकृतोऽपनिधनः परस्वहरणे रतः ॥ १९
19. 20 06. 20 भृत्यातिथिजनश्चापि गृहे पर्युषितो मया ।
मात्सर्यात्स्वादुकामेन नृशंसेन बुभूषता ॥ २०
देवार्थं पितृयज्ञार्थमन्नं श्रद्धाकृतं मया ।
न दत्तमर्थकामेन देयमन्नं पुनाति ह ॥ २१
गुप्तं शरणमाश्रित्य भयेषु शरणागताः ।
अकस्मान्नो भयात्त्यक्ता न च त्राताभयैषिणः ॥ २२
धनं धान्यं प्रियान्दारान्यानं वासस्तथाद्भुतम् ।
श्रियं दृष्ट्वा मनुष्याणामसूयामि निरर्थकम् ॥ २३
ईर्ष्युः परसुखं दृष्ट्वा आततायी बुभूषकः ।
त्रिवर्गहन्ता चान्येषामात्मकामानुवर्तकः ॥ २४
नृशंसगुणभूयिष्ठं पुरा कर्म कृतं मया ।
स्मृत्वा तदनुतप्येऽहं त्यक्त्वा प्रियमिवात्मजम् ॥ २५
शुभानामपि जानामि कृतानां कर्मणां फलम् ।
माता च पूजिता वृद्धा ब्राह्मणश्चार्चितो मया ॥ २६
सकृज्जातिगुणोपेतः संगत्या गृहमागतः ।
अतिथिः पूजितो ब्रह्मंस्तेन मां नाजहात्स्मृतिः ॥ २७
कर्मणा तेन चैवाहं सुखाशामिह लक्षये ।
तच्छ्रोतुमहमिच्छामि त्वत्तः श्रेयस्तपोधन ॥ २८

इति श्रीमहाभारते अनुशासनपर्वणि अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

---

om. हरणे.

20 T1 om. $20^{ab}$. —a) V1 D2 S (T1 om.) -जनाश्च; Dn3 -कृतश्च (for -जनश्च). D1, 2, 4–10 [ए]व (for [अ]पि). —b) V1 B3 Dn पर्येशितो; D4–10 यद्वंचितो; S (T1 om.) पर्या(G2 °र्यं)शिता (M °तं) (for पर्युषितो). —c) G1–3 मांसस्य (for मात्सर्यात्). —d) V1 B1, 3–5 Dn D4–6, 8–10 T G M4 बुभुक्ष(T1 °क्षि)ता; B2 damaged (for बुभूषता).

21 a) D4–10 देवता- (for देवार्थं). G1, 2 अपि (for पितृ-). G3 देवार्थमपि धर्मार्थम्. —b) D4–10 न तु श्राद्धं; T2, 3 G न च श्राद्धं (for अन्नं श्रद्धा-). V1 B1–3, 5 Dn -हृतं (for -कृतं). B4 अन्नं श्राद्धं हृतं मया; T1 न च श्रद्धा कृता मया; M1–3 अन्नं शुद्धं कृतं मम. —c) V1 B1 D6, 7, 10 अन्न-; B4 D9 अन्नं (for अर्थ-). D4 T G M4 न दत्तमन्नकामेषु (D4 °भ्यो). —d) D4–7 मया तत्र; D8 मयान्नं तु (for देयमन्नं). V1 B Dn D8 पुरा किल (for पुनाति ह). D10 S दत्तमन्नं लुनामि च.

22 b) V1 T1, 2 G2 भयेषु शरणागतः (T1 °तं; T2 G3 °तान्). —c) V1 B Dn D4–10 ते मया (for नो भयात्). —d) V1 B Dn न त्राता अभयैषिणः. — For $22^{cd}$, S subst. :

597* त्यक्त्वाकस्मान्निशायां च न दत्तमभयं मया ।
[ M त्यक्तास्माकं (for त्यक्त्वाकस्मान्). ]

23 G1, 3 om. (hapl.) 23–26. —a) Dn3 D1 धन- (for धनं). V1 D1 T2 प्रियं; B1 श्रियं (for प्रियान्). G3 M1–3 धनधान्यं प्रिया दारा. —b) T1 गृहं (for [अ]द्भुतम्). —c) D1, 4–10 श्रियो (for श्रियं).

24 G1, 3 om. 24 (cf. v. l. 23). T1 om. $24^{ab}$. —a) T2 G4 श्रियः; T3 श्रिया; G2 श्रियाः; M1–3 कृशः (for ईर्ष्युः). M4 श्रिया सुखपरं दृष्ट्वा. —b) V1 D8 अन्यस्य च; B Dn अ(B1 ह्य)न्यस्य न; D1, 2 ह्याततायी; D10 T3 M यातनाय (for आततायी). T2 G2 यातनायाबुभुक्षितः; G4 यातनाय बुभूषितः. —c) D1, 2 -हर्ता (for -हन्ता). —d) D1, 2 मातृ- (for आत्म-). D4 मूर्खाणामनिवर्तकः; D5–9 गुरूणां नानुवर्तिता; D10 मूर्खाणां चानुवर्तिता.

25 G1, 3 om. 25 (cf. v. l. 23). —a) T2, 3 G3 -भूयिष्ठः (for °ष्ठं). —b) D6, 10 मया कृतं (by transp.). — After $25^{ab}$, T1 ins. :

598* तेनैषा कृमिता प्रासा भयस्य जननी सदा ।

— T1 om. $25^{c}$–$27^{b}$. —c) D5 -तप्येत; D6–9 -तप्येयं; D10 -तप्यैतत्; T2 G2, 4 M4 -तप्ये वै (for -तप्येऽहं). D4 श्रुत्वा तदनुतप्येयं; T3 कृत्वा तदनुतप्ये वै. —d) V1 B Dn हित्वा; T2 यथा (for त्यक्त्वा). T3 प्रेयं मम (for प्रियमिव). D4 [आ]त्मजः (for °जम्).

26 G1, 3 om. 26 (cf. v. l. 23). T1 om. 26 (cf. v. l. 25). —a) V1 B Dn नाभि- (for अपि). —c) D4–10 [अ]पि (for च). —d) D2, 4–6, 8–10 ब्राह्मणाश्चार्चिता मया.

27 T1 om. $27^{ab}$ (cf. v. l. 25). G1, 3 read 27 twice. —c) G1 (both times). 3 (first time) वृद्धो (for ब्रह्मंस्). —d) G1, 3 (both first time) ब्राह्मण-

# ११९

व्यास उवाच ।

शुभेन कर्मणा यद्वै तिर्यग्योनौ न मुह्यसे ।
ममैव कीट तत्कर्म येन त्वं न प्रमुह्यसे ॥ १
अहं हि दर्शनादेव तारयामि तपोबलात् ।
तपोबलाद्धि बलवद्बलमन्यन्न विद्यते ॥ २
जानामि पापैः स्वकृतैर्गतं त्वां कीट कीटताम् ।
अवाप्स्यसि परं धर्मं धर्मस्थो यदि मन्यसे ॥ ३
कर्म भूमिकृतं देवा भुञ्जते तिर्यगाश्च ये ।
धर्मादपि मनुष्येषु कामोऽर्थश्च यथा गुणैः ॥ ४
वाग्बुद्धिपाणिपादैश्चाप्युपेतस्य विपश्चितः ।
किं हीयते मनुष्यस्य मन्दस्यापि हि जीवतः ॥ ५
जीवन्हि कुरुते पूजां विप्राग्र्यः शशिसूर्ययोः ।
ब्रुवन्नपि कथां पुण्यां तत्र कीट त्वमेष्यसि ॥ ६
गुणभूतानि भूतानि तत्र त्वमुपभोक्ष्यसे ।
तत्र तेऽहं विनेष्यामि ब्रह्मत्वं यत्र चेच्छसि ॥ ७
स तथेति प्रतिश्रुत्य कीटो वर्त्मन्यतिष्ठत । C. 13. 5759 B. 13. 118. K. 13. 180. M. 13. 105.

---

श्चर्चितो मया.

28 T1 om. 28$^{ab}$.$^{c}$ — $^{a}$) V1 B Dn पुनरेव (for तेन चैव). S (T1 om.) कर्मणामेव (M1-8 °मिह) चैवाहं. — $^{b}$) D4.6.9 इव; M1-8 उप- (for इह). V1 B Dn सुखमागामि लक्षये.

Colophon om. in S. — *Parvan name:* B1.2.4 Dn3 D1 शांति. — *Sub-parvan:* V1 B1-3.5 Dn1.n2 D1.2.5.10 दानधर्म. — *Adhy. name:* V1 B Dn D1.2.4.6-9 कीटोपाख्यानं; D5.10 कीटकोपाख्यानं. — *Adhy. no.* (figures, words or both): V1 117; B5 107; Dn1 115; D10 124. — *Śloka no.:* Dn1 29; D4 26.

## 119

☞ This adhy. is missing in D3 (cf. v. l. 13. 82. 37).

1 T1 om. 1$^{ab}$. — $^{b}$) B1 मुच्यसे; D1.4.6-10 मुह्यसि (for °से). — D2 om. 1$^{c}$-2$^{d}$. — $^{c}$) D10 T2.3 G तद् (for मम). — $^{d}$) D1 प्रमुह्यसि. D4-9 येन न त्वं प्रमुह्यसि.

2 D5 om. 2 (cf. v. l. 1). — $^{a}$) B1.2.4.5 Dn त्वां; D4-10 ते; T2 स (for हि).

3 $^{a}$) V1 B Dn2 D1.2 सुकृतैर् (for स्व°). — $^{b}$) T3 गतार्थं (for गतं त्वां). — $^{c}$) V1 B Dn पुनर् (for परं). Dn3 om. धर्मं. — $^{d}$) V1 B2-5 Dn1.n2 धर्मं तु; B1 धर्म्यं त्वं; S मानुष्ये (T1 °ष्यं; G1.3 °षे) (for धर्मस्थो). D4-10 धर्मं यदभिमन्य (D7 °गम्य) से.

4 T1 om. 4. — $^{a}$) T3 कर्म भूमौ; G1.2 कर्म भूत-; G3 धर्मभूत- (for कर्म भूमि-). M दैवं (for देवा). — $^{b}$) T3 G1 ते (for ये). D1.2 तिर्यंचश्चापि भुंजते. — $^{c}$) V1 B Dn धर्मोऽपि हि; T2.3 G धन्या अपि; M धर्मा अपि (for धर्मादपि). — $^{d}$) D4-9 कामार्थश्च (for कामोऽर्थश्च). V1 B Dn कामार्थाश्च तथा गुणाः; S (T1 om.) कामार्थाश्च यथागुणाः (G2 °णं).

5 $^{b}$) V1 B Dn D6 व्यपेतस्य; T2.3 G1-3 समुपेता; G4 समवेता (for [श्चा]प्युपेतस्य). — T1 om. (hapl.) 5$^{cd}$. — $^{c}$) V1 B Dn हास्यति; T2.3 G क्षायाति; M हायाति (for हीयते). — $^{d}$) T2.3 G [अ]र्थस्य (for [अ]पि हि). V1 जीवितं; D2 जायते (for जीवतः). D4-10 मंत्रार्थस्यापि जीवतः (sic); M मंदस्यार्तस्य जीवितं.

6 $^{a}$) D4.6-9 जीवंति; T2.3 G दैवे यः; M1-8 दैवे हि; M4 दैवेयं (for जीवन्हि). T1 कुर्वंति च सदा पूजां. — $^{b}$) D5.10 T G विप्राग्नि- (sic) (for °ग्र्यः). — T1 om. 6$^{c}$-7$^{b}$. D5 om. 6$^{d}$-8$^{a}$.

7 D5 om. 7; T1 om. 7$^{ab}$ (for both, cf. v. l. 6). — $^{a}$) Dn3 om. (hapl.) one भूतानि. D6-9 भूतानां (for °नि). — $^{c}$) D10 S क्रमात् (for तत्र). — $^{d}$) D10 S यदि (for यत्र). V1 B3-5 चैष्यसि; B1 D4.6-9 वेत्स्यसि; Dn चैष्यसि; D2 गच्छसि; T1 मन्यसे (for चेच्छसि).

8 D5 om. 8$^{a}$ (cf. v. l. 6). Before 8, D1.2 ins. वैशंपायनः. — $^{b}$) D10 T G कीटः समव (T1 °मुप) तिष्ठत; M कीटवत्सम (M4 °त्स व्य) ति°. — Dn1.n2 D4-9

.5761 तमृषिं द्रष्टुमगमत्सर्वास्वन्यासु योनिषु ॥ ८
. 118. 10 श्वाविद्गोधावराहाणां तथैव मृगपक्षिणाम् ।
. 180. 8 श्वपाकवैश्यशूद्राणां क्षत्रियाणां च योनिषु ॥ ९
. 107. 37 स कीटेत्येवमाभाष्य ऋषिणा सत्यवादिना ।
प्रतिस्मृत्याथ जग्राह पादौ मूर्ध्ना कृताञ्जलिः ॥ १०

कीट उवाच ।

इदं तदतुलं स्थानमीप्सितं दशभिर्गुणैः ।
यदहं प्राप्य कीटत्वमागतो राजपुत्रताम् ॥ ११
वहन्ति मामतिबलाः कुञ्जरा हेममालिनः ।
स्यन्दनेषु च काम्बोजा युक्ताः परमवाजिनः ॥ १२
उष्ट्राश्वतरयुक्तानि यानानि च वहन्ति माम् ।
सबान्धवः सहामात्यश्चाश्नामि पिशितौदनम् ॥ १३
गृहेषु सुनिवासेषु सुखेषु शयनेषु च ।
परार्ध्येषु महाभाग स्वपामीह सुपूजितः ॥ १४
सर्वेष्वपररात्रेषु सूतमागधवन्दिनः ।
स्तुवन्ति मां यथा देवं महेन्द्रं प्रियवादिनः ॥ १५
प्रसादात्सत्यसंधस्य भवतोऽमिततेजसः ।
यदहं कीटतां प्राप्य संप्राप्तो राजपुत्रताम् ॥ १६
नमस्तेऽस्तु महाप्राज्ञ किं करोमि प्रशाधि माम् ।
त्वत्तपोबलनिर्दिष्टमिदं ह्यधिगतं मया ॥ १७

---

ins. after $8^{ab}$ : D10 after $8^{cd}$ :

599* शकटव्रजश्च सुमहानागतश्च यदृच्छया ।
चक्राक्रमेण भिन्नश्च कीटः प्राणान्मुमोच ह ।
संभूतः क्षत्रियकुले प्रसादादमितौजसः ।

[ ( L. 1 ) Prior half hypermetric. Dn1 D4 शकटो व्रजंश्च सुमहान् ( for the prior half ). — D5. 10 read line 3 after 9 ; D8 reads it after 601*. ]
— D10 reads $8^{cd}$ twice. — $^{c}$ ) B4. 5 D4–9. 10 ( second time ) M1–3 ऋषिर् ( for ऋषिं ). T1 कीटः स देहं त्यक्त्वाथ. — $^{d}$ ) T1 जातो हि ( for सर्वासु ). — D5–9 ins. after 8 : D4 after 9 : D10 after the second occurrence of $8^{cd}$ :

600* ददर्श च महाराज संप्राप्तं राजपुत्रताम् ।

9 D6. 7. 9 om. 9. — $^{a}$ ) B4 D2 G M श्वाविड्गोधा- ; D4 श्वाविद्गोश्व- ( for श्वाविद्गोधा- ). — $^{c}$ ) V1 B Dn D8 T3 M श्वपाकशूद्रवैश्यानां. — After 9, D4 ins. 600* and D5. 10 read line 3 of 599* ; while D8 ins. after 9 :

601* एतास्वेव क्रमेणैव योनिष्वास स्वकर्मणा ।
— After the above, D8 reads line 3 of 599*.

10 D4 om. 10–11. — $^{a}$ ) V1 B Dn G2 एवम् ( for [इ]त्येवम् ). D1. 2 कथितो ; D5–10 आदिष्टो ; M आख्यातो ( for आभाष्य ). T1 तासु तासु समाख्यातो ; T2. 3 G1. 3. 4 स कीटस्त्वे ( T3 °त्वे )वमाख्यातस्- . — $^{b}$ ) D1. 2. 5. 10 मुनिना ( for ऋषिणा ). T1 ब्रह्म- ( for सत्य- ). D6–9 मुनिना सत्ययोनिना ; T3 ऋषीणां सत्यवादिनां. — $^{c}$ ) D7 प्रतिस्मृत्वा ( for °स्मृत्य ). D10 om. जग्राह. — $^{d}$ ) V1 B Dn G1. 3 मूर्ध्नि ( for मूर्ध्ना ). — After 10, T1 ins. :

602* पर्यायेण ततः प्राप्य क्षात्रं स्थानमनुत्तमम् ।

11 D4 om. 11 ( cf. v. l. 10 ). T1. 3 om. the ref. B3 repeats $11^{cd}$ after $16^{ab}$. — $^{c}$ ) D1. 2 य इदं ; D6. 8. 9 तदहं ; G3 यदाहं ( for यदहं ). — $^{d}$ ) T1 गतो वै ( for आगतो ).

12 $^{c}$ ) T1. 2 कांभोजा ( for काम्बोजा ). — $^{d}$ ) T G M4 समर- ( for परम- ).

13 T1 om. $13^{ab}$. — $^{a}$ ) D4. 5. 7–10 अश्वाश्वतरमुख्यानि. — $^{c}$ ) D1. 4 G2 सबांधवाः सहामात्याः. — $^{d}$ ) D4 स्वाश्नामि ; D5. 10 अश्नामि ; T1. 3 G1–3 M ह्य° ( for चा° ). T2 G4 ह्यश्नामि पिशिताशनं.

14 $^{a}$ ) B3. 5 स्व- ; D4–10 च ( for सु- ). V1 B1. 2. 4 -निवातेषु ( for °सेषु ). D2 गृहेषु च निवातेषु ; T1 °षु च वरार्ध्येषु. — $^{b}$ ) D1 T3 M1. 3. 4 शरणेषु ( for शयनेषु ). — $^{c}$ ) V1 B Dn D5 वरार्हेषु ; T1 स्त्रीभिः सह ( for परार्ध्येषु ). — $^{d}$ ) V1 B Dn S च ; D10 ह ( for [इ]ह ).

15 $^{c}$ ) V1 B Dn D2 देवा ; D10 देव ( for देवं ). — $^{d}$ ) D4–10 T2. 3 G4 महेंद्रमिव वंदिनः ; T1 महेंद्रं पाकशासनं.

16 $^{a}$ ) T2 प्रभावात् ( for प्रसादात् ). — After $16^{ab}$, B3 repeats $11^{cd}$. B3 om. $16^{cd}$. — $^{c}$ ) D4–10 T1 प्राप्तः ( fro प्राप्य )., — S om. ( hapl. ) $16^{d}$–$18^{c}$.

17 S om. 17 ( cf. v. l. 16 ). — $^{a}$ ) B2 नु ते ; D1. 2 [ऽ]स्तु ते ( by transp. ). — $^{d}$ ) B4 ह्यधिगतो ; D1 त्वधिगतं ; D5. 10 स्वधि° ( for ह्यधि° ). D6 मम ( for मया ).

व्यास उवाच ।

[अ]र्चितोऽहं त्वया राजन्राग्भिरद्य यदृच्छया ।
अद्य ते कीटतां प्राप्य स्मृतिर्जाताजुगुप्सिता ॥ १८
न तु नाशोऽस्ति पापस्य यत्त्वयोपचितं पुरा ।
शूद्रेणार्थप्रधानेन नृशंसेनाततायिना ॥ १९
मम ते दर्शनं प्राप्तं तच्चैव सुकृतं पुरा ।
तिर्यग्योनौ स्म जातेन मम चाप्यर्चनात्तथा ॥ २०
इतस्त्वं राजपुत्रत्वाद्ब्राह्मण्यं समवाप्स्यसि ।
गोब्राह्मणकृते प्राणान्हुत्वात्मीयान्रणाजिरे ॥ २१
राजपुत्रसुखं प्राप्य क्रतूंश्चैवाप्तदक्षिणान् ।
अथ मोदिष्यसे स्वर्गे ब्रह्मभूतोऽव्ययः सुखी ॥ २२
तिर्यग्योन्याः शूद्रतामभ्युपैति
शूद्रो वैश्यत्वं क्षत्रियत्वं च वैश्यः ।
वृत्तश्लाघी क्षत्रियो ब्राह्मणत्वं
स्वर्गं पुण्यं ब्राह्मणः साधुवृत्तः ॥ २३

C. 13. 577
B. 13. 11
K. 13. 180
M. 13. 10

इति श्रीमहाभारते अनुशासनपर्वणि एकोनविंशाधिकशततमोऽध्यायः ॥ ११९ ॥

---

18 S om. $18^{ab}$ (cf. v. l. 16). — $^{c}$) $D_{1, 2, 4, 6-9}$ अथ (for अद्य). — $^{d}$) $T_1$ क्षत्रियत्वमुपागतः; $T_{2, 3}$ G M स्मृतिं जातोजुगुप्सितां.

19 $^{a}$) $D_{4-10}$ न च; S (except $G_2$) ननु (for न तु). — $^{b}$) T M मया (for त्वया). $D_{4-10}$ [उ]पार्जितं; $G_2$ [उ]पचितः (for °चितं). $V_1$ B Dn यस्त्वयोपचितः पुरा. — $T_1$ om. (hapl.) $19^{c}$–$20^{b}$. Before $19^{cd}$, $T_{2, 3}$ G M ins. व्यासः. — $^{c}$) $D_{2, 3}$ $T_{2, 3}$ $G_{1, 3}$ -प्रदानेन (for -प्रधा°). $D_3$ शूद्रेणैवार्थलुब्धेन.

20 $T_1$ om. $20^{ab}$ (cf. v. l. 19). — $^{a}$) $T_{2, 3}$ $G_{1, 3, 4}$ [ए]तद्; $G_2$ [ए]व (for ते). $T_2$ प्राप्तस् (for प्राप्तं). — $^{b}$) $D_{6, 10}$ मया; $D_7$ त्वया (for पुरा). $V_1$ B Dn $D_4$ त( $D_4$ य च्च वै सुकृतं त्वया; $D_{6, 8, 9}$ तथैव सुकृतं त्वया. — $^{c}$) $T_{2, 3}$ $G_{1, 3}$ हि; $G_2$ त्रि-; $G_4$ [अ]भि- (for स्म). — $^{d}$) $Dn_{2, n3}$ वा (for च). $V_1$ B Dn [अ]भ्यर्चनात्; $T_2$ $G_2$ [अ]प्यर्चनं; $T_3$ $G_{1, 3, 4}$ [अ]प्यर्चितं (for °र्चनात्). $D_{4-10}$ मम चा( $D_4$ वा )प्यर्चना कृता; $T_1$ मम चाप्यर्चनं कृतं.

21 $^{a}$) $T_1$ तस्मात्त्वं राजपुत्रः सन्. — $^{b}$) $B_1$ T G $M_4$ ब्राह्मणत्वमवाप्स्यसि. — $T_1$ om. $21^{c}$–$22^{d}$. Before $21^{cd}$, $T_{2, 3}$ G M ins. भीष्मः. — $^{d}$) $T_1$ त्यक्त्वा; $T_{2, 3}$ G M हित्वा (for हुत्वा). $V_1$ B Dn [आ]त्मानं; $D_{1, 2}$ सम्यग् (for [आ]त्मीयान्). $D_{4-10}$ त्यक्त्वा राजन्रणाजिरे.

22 $T_1$ om. 22 (cf. v. l. 21). — $^{a}$) $T_{2, 3}$ $G_{1, 4}$ $M_{1-3}$ राजपुत्रः. — $^{b}$) $D_{5, 10}$ [अ]वाप्य (for [ए]वाप्त-). $V_1$ क्रतुं चैवाप्तदक्षिणं; $T_{2, 3}$ G $M_{1-3}$ ईजे ($G_2$ यज्ञे) चैवाप्तदक्षिणैः. — $^{c}$) $G_1$ partly damaged. $D_1$ अथो (for अथ). $D_{8, 9}$ मोदिष्यसि; $T_{2, 3}$ $G_{2-4}$ $M_{1-3}$ चोद्दीप्यत ($M_{1-3}$ °ते) (for मोदिष्यसे). — $^{d}$) $D_{5, 8, 10}$ ब्रह्मभूयो; $T_2$ G प्रभूतोपि (for ब्रह्मभूतो).

23 $T_1$ reads 23 after 13. 120. 13. — $^{a}$) $D_4$ तिर्यग्योनिं; $D_5$ °ग्योनौ; $D_{6-9}$ °ग्योनिः; $G_{1, 4}$ °ग्योन्यां (for °ग्योन्याः). $T_1$ अभ्युपेतः (for अभ्युपैति). — $^{b}$) $V_1$ B Dn $D_{5, 6-9}$ वैश्यं; $D_8$ वैश्यः (for वैश्यत्वं). $D_4$ वैश्यं; G शूद्रः (for वैश्यः). — $^{c}$) $D_{6, 8, 9}$ $G_4$ वृत्तश्लाघ्यः; $T_{2, 3}$ $G_{1-3}$ व्रतश्लाघी (for वृत्त°). — $^{d}$) S (except $T_1$) स्वर्गं (for स्वर्गं). $T_1$ प्राप्तो (for पुण्यं).

Colophon om. in $B_4$ $D_{1, 2}$ $T_1$. — *Parvan name*: $B_{1-3}$ $Dn_3$ शांति. — *Sub parvan*: $V_1$ $B_{1-3, 5}$ $Dn_{1, n2}$ $D_{5, 6, 8-10}$ $M_{1-3}$ दानधर्म. — *Adhy. name*: $V_1$ $B_{1, 2, 5}$ Dn $D_{6, 7, 9}$ कीटोपाख्यानं; $D_{4, 5, 8, 10}$ कीटकोपाख्यानं. — *Adhy. no.* (figures, words or both): $V_1$ 118; $B_5$ 109; $Dn_1$ 116; $D_{10}$ 125; $T_{2, 3}$ $G_{2, 4}$ 178; $G_{1, 3}$ $M_1$ 172; $M_{2, 3}$ 173; $M_4$ 171. — *Śloka no.*: $Dn_2$ 24; $D_4$ 23.

# १२०

,5777 ,119. 1 ,181. 1 ,106. 51 भीष्म उवाच ।

क्षत्रधर्ममनुप्राप्तः स्मरन्नेव स वीर्यवान् ।
त्यक्त्वा स कीटतां राजंश्चचार विपुलं तपः ॥ १
तस्य धर्मार्थविदुषो दृष्ट्वा तद्विपुलं तपः ।
आजगाम द्विजश्रेष्ठः कृष्णद्वैपायनस्तदा ॥ २

व्यास उवाच ।

क्षात्रं चैव व्रतं कीट भूतानां परिपालनम् ।
क्षात्रं चैव व्रतं ध्यायंस्ततो विप्रत्वमेष्यसि ॥ ३
पाहि सर्वाः प्रजाः सम्यक्शुभाशुभविदात्मवान् ।
शुभैः संविभजन्कामैरशुभानां च पावनैः ॥ ४
आत्मवान्भव सुप्रीतः स्वधर्मचरणे रतः ।
क्षात्रीं तनुं समुत्सृज्य ततो विप्रत्वमेष्यसि ॥ ५

भीष्म उवाच ।

सोऽथारण्यमभिप्रेत्य पुनरेव युधिष्ठिर ।
महर्षेर्वचनं श्रुत्वा प्रजा धर्मेण पाल्य च ॥ ६
अचिरेणैव कालेन कीटः पार्थिवसत्तम ।
प्रजापालनधर्मेण प्रेत्य विप्रत्वमागतः ॥ ७
ततस्तं ब्राह्मणं दृष्ट्वा पुनरेव महायशाः ।
आजगाम महाप्राज्ञः कृष्णद्वैपायनस्तदा ॥ ८

व्यास उवाच ।

भो भो विप्रर्षभ श्रीमन्मा व्यथिष्ठाः कथंचन ।
शुभकृच्छुभयोनीषु पापकृत्पापयोनिषु ।

---

## 120

☞ This adhy. is missing in D8 (cf. v. l. 13. 82. 37).

1 b) V1 B Dn च; D1. 2 तु (for स). D4–10 कीटतां (for वीर्यवान्). — c) T G M4 हि; M1–8 [अ]थ (for स). D4–10 त्यक्त्वा स वीर्यवान्राज्यं.

2 B1 om. (hapl.) $2^{ab}$. — d) D7 -द्वीपायनस् (for -द्वै°). V1 T3 G4 तथा (for तदा).

3 Dn2 om. the ref. After the ref., B4 reads $5^{ab}$, repeating it in its proper place. — a) V1 B Dn1. n3 D1 देव- (for चैव). V1 om. (hapl.) from कीट up to व्रतं (in $3^{c}$). T1 क्षात्रमेव व्रतमिदं; T2. 3 G क्ष(G1. 3 क्षा)त्रादेव व्रतात्कीट. — b) T2 G3. 4 परिपालय; G2 °लयन् (for °लनम्). — c) B क्षत्रं (for क्षात्रं). B Dn G2 M देव- (for चैव). D5–10 धार्यं (for ध्यायंस्). T1 क्षात्रं व्रतमिदं कुर्वंस्; T2 क्षात्रादेव व्रतात्त्वं हि; T3 G4 क्षात्रं देवव्रतस्येदं (G4 °स्याथ); G1. 3 क्षात्रादेव व्रतं ध्यायंस्.

4 T1 om. (hapl.) $4^{a}$–$6^{b}$. — a) D4 रक्ष; D5 राजन्; D6. 8. 9 कीट; D7. 10 क्षेताः; T2. 3 G1–3 M4 धर्मं; G4 धर्माच् (for सम्यक्). — d) V1 पारगैः; D4 पावकैः; T2. 3 G M4 भावनैः; M1–8 हापनैः (for पावनैः).

5 T1 om. 5 (cf. v. l. 4). B4 reads $5^{ab}$ for the first time after the ref. of st. 3. — b) G4 स (for स्व-). V1 Dn T2. 3 G -करणे (for -च°). B1. 3. 4 (both times). 6 D4 स्वकर्मकरणे र(B1 marg. °णाद्र)तः; B2 damaged; D1. 5–10 स्वक(D1 °ध)र्माचरणे रतः. — c) T2. 3 G M4 क्षात्रीं च तनुमुत्सृज्य. — d) M1–8 तत्र (for ततो).

6 T1 om. $6^{ab}$ (cf. v. l. 4). — a) D4 [ऽ]पि (for ऽथ). T3 G1–3 M [अ]रण्याद् (for °ण्यम्). V1 B Dn अनुप्राप्य; D4–10 अभिप्रेक्ष्य (for °प्रेत्य). T2 G4 सोथारण्यादिह प्रेत्य. — d) S पालयन् (for पाल्य च). D1. 2 धर्मेणापालयत्प्रजाः.

7 T1 om. $7^{ab}$. — b) Dn2 D1 T3 G2 M -सत्तमः (for °म).

8 a) S ततस्तु ब्राह्मणं द्रष्टुं.

9 a) V1 B Dn D4–10 ब्रह्मर्षभ (for विप्र°). S इह ब्रवीमि ते श्रेयो. — b) D8. 9 कदाचन (for कथं°). — After $9^{ab}$, T1 ins.:

603* पालनाच्च विशिष्टानां सुयुद्धमरणेन च ।
शिष्टसंसेवनाच्चैव स गतिं परमां गतः ।
ततः स परराष्ट्रेण राजानं पीडिताः प्रजाः ।
हते च तद्वने तात युद्धाय समुपागतः ।

उपपद्यति धर्मज्ञ यथाधर्मं यथागमम् ॥ ९
तस्मान्मृत्युभयात्कीट मा व्यथिष्ठाः कथंचन ।
धर्मलोपाद्भयं ते स्यात्तस्माद्धर्मं चरोत्तमम् ॥ १०

कीट उवाच ।

सुखात्सुखतरं प्राप्तो भगवंस्त्वत्कृते ह्यहम् ।
धर्ममूलां श्रियं प्राप्य पाप्मा नष्ट इहाद्य मे ॥ ११

भीष्म उवाच ।

भगवद्वचनात्कीटो ब्राह्मण्यं प्राप्य दुर्लभम् ।
अकरोत्पृथिवीं राजन्यज्ञयूपशताङ्किताम् ।
ततः सालोक्यमगमद्ब्रह्मणो ब्रह्मवित्तमः ॥ १२
अवाप च परं कीटः पार्थ ब्रह्म सनातनम् ।
स्वकर्मफलनिर्वृत्तं व्यासस्य वचनात्तदा ॥ १३
तेऽपि यस्मात्स्वभावेन हताः क्षत्रियपुंगवाः ।
संप्राप्तास्ते गतिं पुण्यां तस्मान्मा शोच पुत्रक ॥ १४

इति श्रीमहाभारते अनुशासनपर्वणि विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥

C. 13.
B. 13.
K. 13.
M. 13.

---

हत्वा तं निहतो युद्धे तस्माद्विप्रत्वमागतः ।
आजगाम ततः प्राज्ञः कृष्णद्वैपायनस्तदा ।
पाराशर्यं महाप्राज्ञमुपयान्तं दयापरम् ।
नित्यं प्रसन्नवदनं नभःस्निग्धाम्बुदप्रभम् ।
अज्ञानतिमिरादित्यं नित्यं व्यासं नमाम्यहम् ।
इत्युक्त्वा पतितं पद्भ्यां प्रीत्या प्राह महामुनिः ।
ब्राह्मणान्पूजयस्वेह जपसत्यपरायणः ।
क्रमाद्ब्रह्म प्राप्स्यसि त्वं विष्णुध्यानेन निर्मलम् ।

— $T_1$ om. $9^c$–$10^d$. $D_2$ $G_2$ om. (hapl.) $9^e$–$10^b$. $M_{1-3}$ transp. $9^c$ and $9^d$. — $^c$) $T_3$ -योनौ तु; $M_{1-3}$ -योनिपु (for -योनीषु). — $^d$) $M_{1-3}$ पापयोनिपु पापिष्ठः. — $^e$) $T_{2,3}$ $G_{1,3,4}$ -पद्यस्व (for °ति). $D_{4-10}$ धर्मज्ञो जायते जंतुर्. — $^f$) $T_{2,3}$ $G_4$ यथाश्रुतं; $G_{1,3}$ °व्रतं (for °गमम्). $V_1$ B Dn यथापापफलोपगं ($V_1$ $B_1$ °मं).

10 $T_1$ om. 10; $D_2$ $G_2$ om. $10^{ab}$ (for all, cf. v. l. 9). — $^a$) $G_{1,3}$ युद्ध- (for मृत्यु-). — $^c$) $V_1$ $B_{2-5}$ Dn $D_{6,7}$ -लोप- (for -लोपाद्). S ($T_1$ om.) धर्मलाभात्परं (M °द्भयं) न स्यात्.

11 $^b$) S [ऽ]द्य वै (for ह्यहम्). — After $11^{ab}$, $T_1$ ins.:

604* इत्युक्त्वा समनुज्ञातस्तथा चक्रे द्विजोत्तमः ।

— $T_1$ om. $11^{cd}$. — $^c$) S ($T_1$ om.) -मूलं शुभं (for -मूलां श्रियं). — $^d$) $D_2$ न स्याद् (for नष्ट). S ($T_1$ om.) पापं नष्टमिहाद्य वै ($G_2$ मे).

12 $^a$) $D_1$ corrupt. $M_4$ -जात- (for -यूप-). — $^c$) $D_{1,2}$ आगम्य (for अगमद्).

13 $^a$) B Dn $D_{4,6-10}$ पदं; $D_5$ पदात् (for परं). $T_1$ $M_4$ अथाप च पदं पार्थ ($M_4$ कीट); $T_{2,3}$ G अथ पापहरं कीटः. — $^b$) $T_1$ कीटो (for पार्थ). — $^c$) $D_{4-10}$ -निर्वृत्ति (for -निर्वृत्तं). — $^d$) $T_1$ यथा (for तदा). $T_{2,3}$ G M व्यासस्य वचनं यथा. — After 13, $D_{1,2,4-10}$ ins.:

605* श्रुत्वैतद्राजशार्दूल सत्कर्मपरमो भव ।
[$D_{4-10}$ [इ]दं (for [ए]तद्).]

While $T_1$ reads 13. 119. 23 after 13.

14 $^a$) $D_{4-10}$ येपि येन (for तेऽपि यस्मात्). $B_1$ om. from भावेन up to हरि (in 13. 125. $21^d$). $V_1$ $B_{2-5}$ Dn प्रभावेण (for स्वभावेन). S कुरुक्षेत्रे युद्धहताः ($T_1$ हताः पुण्याः). — $^b$) $T_1$ क्षेत्रे; $T_{2,3}$ G M पुण्ये (for हताः). — $^c$) $D_{4,7-9}$ सु-; $D_{5,10}$ तु (for ते). — $^d$) $T_2$ G $M_4$ तन्मा त्वं (for तस्मान्मा). $B_{4,5}$ $M_{1-3}$ शुच (for शोच). $D_{4-10}$ तस्मात्पुत्रक मा शुच; $T_1$ मा त्वं शोचस्व पुत्रक.

Colophon om. in $B_{1,4}$. — *Parvan name*: $B_{2,3}$ $Dn_3$ $D_1$ शांति. — *Sub-parvan*: $V_1$ $B_{2,3,5}$ Dn $D_{1,2,5,6,9,10}$ $M_{1-3}$ दानधर्म. — *Adhy. name*: $V_1$ $B_{2,3,5}$ Dn $D_{1,2,4-10}$ कीटोपाख्यानं; $T_2$ व्यासकीटसंवादः. — *Adhy. no.* (figures, words or both): $V_1$ 119; $B_5$ 109; $Dn_1$ 117; $D_{10}$ 126; $T_1$ 171; $T_{2,3}$ $G_{2,4}$ 179; $G_{1,3}$ $M_1$ 173; $M_{2,3}$ 174; $M_4$ 172. — *Śloka no.*: $Dn_1$ 14; $Dn_2$ 15.

# १२१

93
0. 1
2. 1
17. 1

युधिष्ठिर उवाच ।

विद्या तपश्च दानं च किमेतेषां विशिष्यते ।
पृच्छामि त्वा सतां श्रेष्ठ तन्मे ब्रूहि पितामह ॥ १

भीष्म उवाच ।

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
मैत्रेयस्य च संवादं कृष्णद्वैपायनस्य च ॥ २
कृष्णद्वैपायनो राजन्नज्ञातचरितं चरन् ।
वाराणस्यामुपातिष्ठन्मैत्रेयं स्वैरिणीकुले ॥ ३
तमुपस्थितमासीनं ज्ञात्वा स मुनिसत्तमम् ।
अर्चित्वा भोजयामास मैत्रेयोऽशनमुत्तमम् ॥ ४
तदन्नमुत्तमं भुक्त्वा गुणवत्सार्वकामिकम् ।
प्रतिष्ठमानोऽस्मयत प्रीतः कृष्णो महामनाः ॥ ५
तमुत्स्मयन्तं संप्रेक्ष्य मैत्रेयः कृष्णमब्रवीत् ।
कारणं ब्रूहि धर्मात्मन्योऽस्मयिष्ठाः कुतश्च ते ।
तपस्विनो धृतिमतः प्रमोदः समुपागतः ॥ ६
एतत्पृच्छामि ते विद्वन्नभिवाद्य प्रणम्य च ।
आत्मनश्च तपोभाग्यं महाभाग्यं तथैव च ॥ ७
पृथगाचरतस्तात पृथगात्मनि चात्मनोः ।
अल्पान्तरमहं मन्ये विशिष्टमपि वा त्वया ॥ ८

व्यास उवाच ।

अतिच्छेदातिवादाभ्यां स्मयोऽयं समुपागतः ।
असत्यं वेदवचनं कस्माद्वेदोऽनृतं वदेत् ॥ ९

## 121

☞ This adhy. is missing in $D_8$ ( cf. v. l. 13. 82. 37 ). $B_1$ om. this adhy. ( cf. v. l. 13. 120. 14 ).

1 $^{a}$ ) $V_1$ $B_{2-5}$ Dn विद्यातपोभ्यां दानाच्च. — $^{b}$ ) $D_7$ इत्येषां ( for एतेषां ). — $^{c}$ ) $V_1$ $B_{2-5}$ Dn $D_{2, 4-10}$ T G त्वां ( for त्वा ). $M_{1, 2}$ श्रेष्ठं ( for श्रेष्ठ ).

2 $^{c}$ ) $D_{1, 2}$ नारदस्य ( for मैत्रेयस्य ).

3 $^{b}$ ) $D_{6, 9}$ अज्ञातश्च; $T_1$ अज्ञान-; $G_3$ अज्ञाते ( for अज्ञात- ). $D_4$ -चरितश्च ( for °तं ).

4 $^{a}$ ) $T_{2, 3}$ $G_{2-4}$ उपच्छन्नम्; $G_1$ damaged ( for °स्थितम् ). — $^{b}$ ) $G_4$ श्रुत्वा ( for ज्ञात्वा ). $B_3$ $D_2$ S ( except $M_4$ ) -सत्तमः. — $^{d}$ ) $T_1$ मैत्रेयो राजसत्तम; $T_{2, 3}$ G M °यो मुनिसत्तमं ( $T_3$ $G_{1, 4}$ °मः ).

5 $^{a}$ ) $D_{1, 2}$ ज्ञात्वा ( for भुक्त्वा ). $T_2$ अन्नं तस्य गृहे भुक्त्वा; $T_3$ $G_4$ भुक्त्वा तदन्नममृतं. — $^{b}$ ) $V_1$ $B_5$ $T_3$ सर्व- ( for सार्व- ). — $^{c}$ ) $D_{4-10}$ प्रातिष्ठत्स्मयमानोथ; $T_1$ स्मयमानः प्रतीच्छन्वै; $G_{1-3}$ उत्तिष्ठमानोस्मयत. — $^{d}$ ) $D_{4-10}$ महातपाः ( for °मनाः ).

6 $^{c}$ ) $D_{1, 2, 4-10}$ भगवन् ( for धर्मात्मन् ). — $^{d}$ ) $V_1$ B Dn व्यस्मयिष्ठाः; $T_1$ विस्मयस्य; $T_2$ $G_{1-3}$ M उ( $M_2$ in text ), $_{3, 5}$ मे ( for ते ). $D_{4-10}$ यत्स्मयिष्ठा महामते ( $D_{5, 10}$ °मुने ); $T_3$ उत्स्मयिष्ठाः कथं च ते. — $^{e}$ ) $G_4$ धर्मवतः ( for धृतिमतः ). — $M_4$ om. (hapl.) $6^{f}$. — $^{f}$ ) T G प्रमादः ( for प्रमोदः ). $B_1$ ( marg. as sup. lin. य )त्स्मयिष्ठाः ( for योऽस्म° ).

7 $D_{10}$ om. (hapl.) $7^{a}$–$9^{b}$. — $^{a}$ ) S इच्छामि ( for पृ° ). $D_{4, 6-9}$ ब्रह्मन् ( for विद्वन् ). — $^{c}$ ) $V_1$ विद्वान्; $D_1$ om.; $D_{6-9}$ ( for -भाग्यं ). — $^{d}$ ) $B_2$ माहाभाग्यं; $D_1$ om.; $D_{6-9}$ सुखभा( $D_8$ °भो )ग्यं ( for महाभाग्यं ). $V_1$ B Dn तवेह ( for तथैव ). S सुखभाग्यं ममेह च ( $T_1$ ममैव च; $M_4$ ममैव ह ). — After 7, T G ins. :

606* तपोभाग्यान्महाभाग सुखभाग्यात्तथैव च ।

[ $T_1$ आत्मनश्च ( for महाभाग ). $G_2$ सुखभाग्यं ( for °भाग्यात् ). ]

8 $D_{10}$ om. 8 ( cf. v. l. 7 ). — $^{a}$ ) T G $M_{1-3}$ आचरितं; $M_4$ आचारतस् ( for आच° ). $G_2$ नाम ( for तात ). — $^{b}$ ) $G_1$ partly damaged. $V_1$ B Dn $D_{5, 8}$ पृथगात्मसुखात्मनोः ( $D_{5, 8}$ °नः ); $D_{4, 6, 7, 9}$ पृथगात्मसु चात्मनः; T $G_{2-4}$ M °गाचरितात्मना ( $T_1$ °तं मनः; $T_2$ $G_{3, 4}$ $M_4$ °तात्मनः; $M_3$ °तात्मनां ). — $^{d}$ ) $V_1$ B Dn चान्वयात्; $D_6$ $M_2$ Cv वान्वयात्; $T_{2, 3}$ G यत्त्वया ( for वा त्वया ).

9 $D_{10}$ om. $9^{ab}$ ( cf. v. l. 7 ). — $^{a}$ ) $D_{2, 4, 6, 8, 9}$

त्रीण्येव तु पदान्याहुः पुरुषस्योत्तमं व्रतम् ।
न द्रुह्येच्चैव दद्याच्च सत्यं चैव परं वदेत् ।
इदानीं चैव नः कृत्यं पुरस्ताच्च परं स्मृतम् ॥ १०
अल्पोऽपि तादृशो दायो भवत्युत महाफलः ।
तृषिताय च यद्दत्तं हृदयेनानसूयता ॥ ११
तृषितस्तृषिताय त्वं दत्त्वैतदशनं मम ।
अजैषीर्महतो लोकान्महायज्ञैरिवाभिभो ।
अतो दानपवित्रेण प्रीतोऽस्मि तपसैव च ॥ १२
पुण्यस्यैव हि ते गन्धः पुण्यस्यैव च दर्शनम् ।
पुण्यश्च वाति गन्धस्ते मन्ये कर्मविधानतः ॥ १३
अधिकं मार्जनात्तात तथैवाप्यनुलेपनात् ।
शुभं सर्वपवित्रेभ्यो दानमेव परं भवेत् ॥ १४
यानीमान्युत्तमानीह वेदोक्तानि प्रशंससि ।
तेषां श्रेष्ठतमं दानमिति मे नास्ति संशयः ॥ १५
दानकृद्भिः कृतः पन्था येन यान्ति मनीषिणः ।
ते हि प्राणस्य दातारस्तेषु धर्मः प्रतिष्ठितः ॥ १६

C. 13[...]
B. 1[...]
K. 13[...]
M. 13[...]

---

अति( D6 °वि )च्छेदाभिवादाभ्यां ; T1 Cnp अतिच्छंदाति°. —$^{b}$) T2.3 G1.3.4 M स्मयोयं मामुपागतः ( G1 °श्रितः ; M1-3 °गमत् ); G2 समयोयमुपागतः. ❀ Cn : अतिच्छेदोऽत्यन्तमन्तरं मशकेन समुद्रशोषणमिव। अतिवादस्तस्यैवार्थस्य कथनम् । ताभ्याम् । Cv : अतिच्छेदातिवादाभ्यामित्यत्र वेदे तत्र तत्र अतिशयितकर्मणो यो वादः सोऽतिवादः। तत्फलतया कथ्यमानः अतिशयितपापच्छेदो यः सोऽतिच्छेदः। ताभ्यां तथैव ज्ञायमानाभ्यां निमित्ताभ्यामयं विस्मयः समागतः । ❀ —T1 om. 9$^{cd}$ —$^{d}$) D1.4.6-9 तस्माद् ( for क° ). — After 9, D2.4 ins. 607*

10 D2.4 om. ( hapl ) 10. —$^{a}$) T2 [ए]वं च ; T3 [ए]व भू· ( for [ए]व तु ). —$^{b}$) D5.10 [उ]त्तम· ( for °मं ). T2.3 G प्रति ( for व्रतम् ). —$^{c}$) D8 द्रुह्याच्. T1 न द्रुह्येचैव निंद्याच्च. —$^{d}$) T1 M1-3 om. च. T2 [अ]परान् ; G परान् ( for परं ). V1 B2-5 Dn D1.5-10 ins. after 10 : D2.4 after 9 :

607* इति वेदोक्तमृषिभिः पुरस्तात्परिकल्पितम् ।

— T1 om. 10$^{e}$-11$^{b}$. —$^{e}$) B2 ( marg. ) सत्यं ( for कृत्यं ). D4-10 इदानीं वै पुरस्कृत्य. —$^{f}$) T3 G2.4 परस्ताच् ; G1.3 परस्माच् ( for पुरस्ताच् ). V1 प्रतिष्ठितं ; B2-5 D ( D3 missing ) परिश्रुतं ; M4 परं श्रुतं ( for परं स्मृतम् ). T2 M1-3 परस्ताच्च परं श्रुतं.

11 T1 om. 11$^{ab}$ ( cf. v. l. 10 ). —$^{a}$) V1 B2-5 Dn2.n3 T2.3 G1.3.4 M4 हि ( for ऽपि ). T2.3 G न्यासो ; M न्यायो ( for दायो ). —$^{b}$) D2 [अ]ति· ; D4-10 [उ]क्तो ( for [उ]त ). T2.3 G M4 महाबलः ( for °फलः ). — D2 om. 11$^{cd}$. —$^{c}$) V1 B2-5 D10 च ते ; T2.3 G2-4 तु यद् ( for च यद् ). —$^{d}$) Some MSS. [अ]नुसूयता.

12 $^{a}$) S तोषितास्त्रिदशा ( T2 °स्तृपिता ) यत्ते. —$^{b}$) D1.2 तद् ( for [ए]तद् ). B3.5 Dn3 D6.8 T2.3 G1.3.4 M1 दर्शनं ( for अशनं ). M1.3 महत् ( for मम ). T1 तत्त्वं दर्शनं मम. —$^{c}$) D1.6-9 अजैषीन्. —$^{d}$) V1 B ( B1 om. ) Dn S प्रभो ( for [अ]भिभो ). —$^{e}$) V1 B2.5 Dn G1 ततो ( for अतो ). T3 G3 दम· ( for दान· ). —$^{f}$) S हि ( for च ).

13 $^{a}$) D2.4.5.7-10 T1 [इ]व ( for [ए]व ). V1 B ( B1 om. ) Dn सत्त्वं ( for गन्धः ). T2.3 G दूरात्पुण्यवतो गंधः. —$^{b}$) D2.4-10 T1.3 [इ]व ( for [ए]व ). T1 हि ( for च ). T2.3 G दर्शनात् ( for °नम् ). —$^{c}$) D6-9 पुण्यस्य ( for °श्च ). V1 B2-5 Dn पुण्यस्यैवाभिगं· ( B4 °वातिगं· ; B5° च हि गं )धस्ते ; D4 पुण्यस्य चाति° ; D5.10 पुण्यस्येवाति°. —$^{d}$) V1 B ( B1 om. ) Dn मन्ये कर्मविधानजं ; D1.2.4-10 मन्ये धर्मविधानजं ( D1.2 °जः ).

14 T1 om. 14$^{ab}$. —$^{a}$) D4-10 अतिधर्मार्जनात्तात ; T2.3 G1.3.4 अथ कर्मार्जितस्तात ; G2 M अधिकर्मार्जितं तात. —$^{b}$) T2 G1-3 M यथा ( for तथा ). V1 B ( B1 om. ) Dn चैव ( for [ए]वापि ). D4-10 ·पालनात् ( for ·लेप° ). —V1 B2-5 Dn D1.2 ins. after 14$^{abc}$ : D7.10 after 22$^{ab}$ :

608* दानमेव परं द्विज ।
नो चेत्सर्वपवित्रेभ्यो.

[ ( L. 1 ) V1 नृप ( for द्विज ). —( L. 2 ) D1.2.10 न ( for नो ). ]

15 D4 om. 15$^{a}$-22$^{b}$. —$^{a}$) T3 तानि ( for यानि ). T3 [ह्]व ( for [इ]ह ). —$^{b}$) T1 प्रचक्षते ; T2.3 G M प्रशंसति ( for °सि ). —$^{c}$) B ( B1 om. ) Dn श्रेष्ठतरं ( for °तमं ). —$^{d}$) T1 इदं ( for इति ). Dn3 वै ; D2 om. ( for मे ). Dn1.n2 D1.3 M3 [अ]त्र ( for [अ]स्ति ).

16 D4 om. 16 ( cf. v. l. 15 ). —$^{a}$) D1 T2.3 G दानवद्भिः ; D5.10 °कर्तृ· ; T1 M4 °विद्भिः ( for °कृद्भिः ). —$^{b}$) T1 महर्षयः ( for मनीषिणः ). —$^{c}$) T1 M2.3 ये हि ; T2.3 G ये वै ( for ते हि ). D2 प्रणस्य ( for

यथा वेदाः स्वधीताश्च यथा चेन्द्रियसंयमः ।
सर्वत्यागो यथा चेह तथा दानमनुत्तमम् ॥ १७
त्वं हि तात सुखादेव सुखमेष्यसि शोभनम् ।
सुखात्सुखतरप्राप्तिमाप्नुते मतिमान्नरः ॥ १८
तन्नः प्रत्यक्षमेवेदमुपलब्धमसंशयम् ।
श्रीमन्तमाप्नुवन्त्यर्था दानं यज्ञस्तथा सुखम् ॥ १९
सुखादेव परं दुःखं दुःखादन्यत्परं सुखम् ।
दृश्यते हि महाप्राज्ञ नियतं वै स्वभावतः ॥ २०
त्रिविधानीह वृत्तानि नरस्याहुर्मनीषिणः ।
पुण्यमन्यत्पापमन्यन्न पुण्यं न च पापकम् ॥ २१
न वृत्तं मन्यतेऽन्यस्य मन्यतेऽन्यस्य पापकम् ।
तथा स्वकर्मनिर्वृत्तं न पुण्यं न च पापकम् ॥ २२
रमस्वैधस्व मोदस्व देहि चैव यजस्व च ।
न त्वामभिभविष्यन्ति वैद्या न च तपस्विनः ॥ २३

इति श्रीमहाभारते अनुशासनपर्वणि एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥

---

प्राणस्य ). —$^{d}$) $B_5$ प्रकीर्तितः; $D_{5-10}$ सनातनः ( for प्रतिष्ठितः ). $D_{1.2}$ तेषु धर्माः सनातनाः.

17 $D_4$ om. 17 ( cf. v. l. 15 ). —$^{a}$) $T_2$ यदा ( for यथा ). $T_1$ यथा वेदे ह्यधीते तु. —$^{b}$) $D_{5-10}$ -निग्रहः ( for -संयमः ).

18 $D_4$ om. 18 ( cf. v. l. 15 ). —$^{a}$). $G_4$ अहं ( for त्वं हि ). $G_{1.3}$ शुभादेव; Bom. ed. महाबुद्धे ( for सुखादेव ). —$^{b}$) $T_3$ $G_{1-3}$ शुभम् ( for सुखम् ). —$^{c}$) $D_{5.10}$ $T_1$ सुखस्य सं-; $D_{6.7.9}$ सुखं च सं-; $D_8$ $T_{2.3}$ G M सुखानुसं- ( for सुखतर- ). $G_3$ -प्राप्तम् ( for -प्राप्तिम् ). —$^{d}$) $Dn_{2.}n_3$ प्राप्नुते ( for प्ना° ). $D_{5-10}$ प्राप्नुते प्रीतिमान्नरः.

19 $D_4$ om. 19 ( cf. v. l. 15 ). —$^{b}$) $T_3$ उपलक्ष्यम्; Bom. ed. °लभ्यम् ( for °लब्धम् ). $B_5$ असंशयः. $G_{1.3.4}$ उपलक्ष्यमसंशयः. — $D_{1.2}$ $T_1$ om. $19^{cd}$. —$^{c}$) $Dn_1$ $D_{5-10}$ श्रीमंतः प्राप्नुवंत्यर्थान्; $T_2$ G श्रीमतामाप्नुवंत्यर्था. —$^{d}$) $B_3$ $Dn_1$ दानं यज्ञस्; $D_{6-9}$ $G_{1.3.4}$ $M_4$ दानं यज्ञास्; $G_2$ $M_{1-3}$ दानयज्ञास् ( for दानं यज्ञं ). $T_{2.3}$ दानयज्ञ( $T_3$ °ज्ञा )स्ततः सुखं.

20 $D_4$ om. 20 ( cf. v. l. 15 ). —$^{b}$) $V_1$ B ( $B_1$ om. ) Dn अपि; $D_5$ $T_1$ एव ( for अन्यत् ). —$^{c}$) $D_3$ स्तूयते ( for दृश्यते ). —$^{d}$) $G_{1.3}$ नियता ( for °तं ).

21 $D_4$ om. 21 ( cf. v. l. 15 ). —$^{a}$) $B_5$ $Dn_2$ S ( except $M_3$ ) विविधानि ( for त्रि° ). $T_3$ भूतानि ( for वृत्तानि ). —$^{c}$) M तथा पापं ( for पापमन्यन् ). —$^{d}$) $D_{5-7.9.10}$ $T_1$ पातकं ( for पापकम् ).

22 $D_4$ om. $22^{ab}$ ( cf. v. l. 15 ). $D_3$ om. (hapl.) 22. —$^{a}$) $V_1$ B ( $B_1$ om. ) Dn $D_{2.6-10}$ तस्य ( for ऽन्यस्य ). —$^{b}$) $M_4$ om. मन्यते. $V_1$ $B_2$ Dn न स; $B_{4.5}$ च न ( for ऽन्यस्य ). $D_1$ $T_1$ पातकं ( for पापकम् ). $D_{2.6-10}$ मन्यते तस्य पातकं. — After $22^{ab}$, $D_{7.10}$ ins. 608*. — $D_{6.8.9}$ om. ( hapl. ) $22^{cd}$. —$^{c}$) $Dn_2$ $T_2$ G $M_{2.3}$ यथा ( for तथा ). $D_4$ स्वधर्म- ( for स्वकर्म- ). $T_1$ -निर्वृत्यं ( for -निर्वृत्तं ). $D_{7.10}$ यथा स्वधर्मनिर्वृत्तं. —$^{d}$) $D_{4.7.10}$ पातकं ( for पापकम् ). — $B_{2-5}$ Dn $D_{1.2.4.7.10}$ ins. after 22: $D_{6.8.9}$ after $22^{ab}$:

609* यज्ञदानतपःशीला नरा वै पुण्यकर्मिणः ।
येऽभिद्रुह्यन्ति भूतानि ते वै पापकृतो जनाः ।
द्रव्याण्याददते चैव दुःखं यान्ति पतन्ति च ।
ततोऽन्यत्कर्म यत्किंचिन्न पुण्यं न च पातकम् ।

[ ( L. 1 ) $D_2$ -कर्मणि ( for -कर्मिणः ). — ( L. 2 ) $B_5$ ते ( for ये ). $B_{2-4}$ नराः ( for जनाः ). — ( L. 4 ) $B_{2.3}$ अतो ( for ततो ). $B_{2-5}$ $Dn_{2.}n_3$ $D_1$ पापकं ( for पातकम् ). ]

While S ins. after 22:

610* नित्यं चाकृपणो भुङ्क्ते स्वजनैर्देहि याचितः ।
भाग्यक्षयेण क्षीयन्ते नोपभोगेन संचयाः ।

[ ( L. 1 ) M तु ( for च ). $T_1$ M भुंक्ष्व ( for भुङ्क्ते ). ]

23 $^{b}$) $B_2$ $D_{1.4.5}$ जयस्व ( for यजस्व ). S देहि दाने ( $T_3$ °नं ) रमस्व च. — $T_1$ om. $23^{cd}$. —$^{c}$) $T_{2.3}$ G $M_4$ न त्वामति( $G_4$ °धि )गमिष्यंति. —$^{d}$) $B_2$ $D_4$ [ए]व ( for च ).

Colophon om. in $V_1$ $B_1$ S. — *Parvan name:* $B_{2-4}$ $Dn_3$ $D_1$ शांति. — *Sub-parvan:* $B_{2-5}$ Dn $D_{1.2.4-6.9.10}$ दानधर्म. — *Adhy. name:* $B_{3.4.6}$ Dn

# १२२

भीष्म उवाच ।
एवमुक्तः प्रत्युवाच मैत्रेयः कर्मपूजकः ।
अत्यन्तं श्रीमति कुले जातः प्राज्ञो बहुश्रुतः ॥ १
असंशयं महाप्राज्ञ यथैवात्थ तथैव तत् ।
अनुज्ञातस्तु भवता किंचिद्ब्रूयामहं विभो ॥ २
व्यास उवाच ।
यद्यदिच्छसि मैत्रेय यावद्यावद्यथा तथा ।
ब्रूहि तावन्महाप्राज्ञ शुश्रूषे वचनं तव ॥ ३
मैत्रेय उवाच ।
निर्दोषं निर्मलं चैव वचनं दानसंहितम् ।
विद्यातपोभ्यां हि भवान्भावितात्मा न संशयः ॥ ४
भवतो भावितात्मत्वाद्दायोऽयं सुमहान्मम ।
भूयो बुद्ध्यानुपश्यामि सुसमृद्धतपा इव ॥ ५
अपि मे दर्शनादेव भवतोऽभ्युदयो महान् ।
मन्ये भवत्प्रसादोऽयं तद्धि कर्म स्वभावतः ॥ ६
तपः श्रुतं च योनिश्चाप्येतद्ब्राह्मण्यकारणम् ।
त्रिभिर्गुणैः समुदितस्ततो भवति वै द्विजः ॥ ७
तस्मिंस्तृप्ते च तृप्यन्ते पितरो दैवतानि च ।
न हि श्रुतवतां किंचिदधिकं ब्राह्मणादृते ॥ ८
यथा हि सुकृते क्षेत्रे फलं विन्दति मानवः ।

C. 13. 5
B. 13. 1
K. 13. 1
M. 13. 1

D1. 2. 4. 8. 10 मैत्रेयभिक्षा ; D5–7. 9 मैत्रेयभिक्षणं. — *Adhy. no.* ( figures, words or both ): B6 110 ; Dn1 118 ; D10 127. — *Śloka no.* : Dn1. n3 27 ; D4 19.

## 122

☞ This adhy. is missing in D3 ( cf. v. l. 13. 82. 37 ). B1 om. this adhy. ( cf. v. l. 13. 120. 14 ).

1 $^{a}$) D2 महाप्राज्ञ ( for प्रत्युवाच ). — $^{b}$) T2. 3 G -पूर्वकः ( for -पूजकः ). D4–10 मैत्रेयो लोकपूजितः ; T1 °यः सर्वधर्मवित्. — T1 om. $1^{cd}$. — $^{c}$) B2. 3 Dn1 D2 M1–3 अत्यंत-. — $^{d}$) D1. 6 प्रज्ञो.

2 Before 2, some MSS. ins. मैत्रेय उवाच. — $^{b}$) D1. 2. 4. 7. 9. 10 वेत्थ ; D5. 6 चात्थ ; T1 [ए]वोक्तं ( for [ए]वात्थ ). — $^{c}$) V1 B2–5 Dn च ( for तु ). — $^{d}$) B6 प्रभो ( for विभो ).

3 D4 om. ( hapl. ) 3. — $^{b}$) D8 T2. 3 G M तथा ; T1 तदा ( for यथा ). V1 B2–4 Dn1. n2 D5–7. 9. 10 यथा ; T3 तदा ( for तथा ). — $^{c}$) V1 B1 Dn1. n3 S तत्त्वं ; B2 Dn2 तत्तन् ( for तावन् ). B3 ब्रूहि तत्तन्महाभाग.

4 D4 om. the ref. — $^{a}$) Dn1 [ए]वं ( for [ए]व ). — $^{b}$) S ( except M2. 3 ) सत्य- ( for दान- ). D2 -संमितं ( for -संहितम् ).

5 T1 om. $5^{ab}$. — $^{a}$) B5 भवतो भावितार्थत्वाद्. — $^{b}$) Dn1. n3 D5 लाभो ; D4. 6–10 भावो ( for दायो ). — D8 om $5^{c}$–$6^{b}$. — $^{d}$) T G M4 सुसंवृद्ध- ( for सुसमृद्ध- ). D4. 6. 7. 9 इति ( for इव ).

6 D8 om. $6^{ab}$ ( cf. v. l. 5 ). — $^{a}$) D1 तथा ; D2 अद्य ( for अपि ). V1 B ( B1 om. ) Dn नो ; T1 ते ( for मे ). — $^{b}$) D4. 6. 7. 9 भवति ; G3 °ता ( for °तो ). M4 ह्युदयो ( for ऽभ्यु° ). B2. 4. 5 Dn भवेत् ( for महान् ). V1 B3 भवतो ह्युदयो भवेत् ; T1 भविताभ्युदयो मम. — $^{c}$) D2 S मन्ये तपःप्र( T1 M °व प्र )सादोयं. — $^{d}$) D5. 10 तद्दै ; S ( except T1 ) बुद्धि- ( for तद्धि ).

7 $^{b}$) T2. 3 G2. 4 M4 [अ]प्येते ; G1 3 एते ( for [अ]प्येतद् ). Dn3 D1. 6–9 M ब्राह्मण- ( for °ण्य- ). D4 -लक्षणं ( for -कारणम् ). T1 [अ]प्येते ब्राह्मणलक्षणं. — $^{d}$) D10 T3 G1. 3 स्नातो ( for ततो ).

8 $^{a}$) V1 B2. 4. 5 Dn D1 अस्मिंस् ( for त° ). Dn3 D4–9 तु ; T2 [ऽ]पि ; T3 हि ; G1 damaged ; G4 om. ( for च ). B5 D6–10 T3 G1–3 M4 तृप्यंति ; T1 तुष्यंति ( for तृप्यन्ते ). — $^{b}$) D1. 2. 4. 6–9 पितरो देवतास्तथा ; D5. 10 देवताः पितरस्तथा. — $^{c}$) T1. 2 G श्रुतवतः ( for °वतां ). — After 8, N ( B1 om. ; D3 missing ) ins. :

611* सन्धं स्यात्तम एवेदं न प्रज्ञायेत किंचन ।
चातुर्वर्ण्यं न वर्तेत धर्माधर्मावृतानृते ।
[ ( L. 1 ) D4–10 सर्वं ( for अन्धं ). ]

10 13 16 एवं दत्त्वा श्रुतवति फलं दाता समश्नुते ॥ ९
ब्राह्मणश्चेन्न विद्येत श्रुतवृत्तोपसंहितः ।
प्रतिग्रहीता दानस्य मोघं स्याद्धनिनां धनम् ॥ १०
अदन्ह्यविद्वान्हन्त्यन्नमद्यमानं च हन्ति तम् ।
तं च हन्यति यस्यान्नं स हत्वा हन्यतेऽबुधः ॥ ११
प्रभुर्ह्यन्नमदन्विद्वान्पुनर्जनयतीश्वरः ।
स चान्नाज्जायते तस्मात्सूक्ष्म एव व्यतिक्रमः ॥ १२
यदेव ददतः पुण्यं तदेव प्रतिगृह्णतः ।
न ह्येकचक्रं वर्तेत इत्येवमृषयो विदुः ॥ १३
यत्र वै ब्राह्मणाः सन्ति श्रुतवृत्तोपसंहिताः ।
तत्र दानफलं पुण्यमिह चामुत्र चाश्नुते ॥ १४
ये योनिशुद्धाः सततं तपस्यभिरता भृशम् ।
दानाध्ययनसंपन्नास्ते वै पूज्यतमाः सदा ॥ १५
तैर्हि सद्भिः कृतः पन्थाश्चेतयानो न मुह्यते ।
ते हि स्वर्गस्य नेतारो यज्ञवाहाः सनातनाः ॥ १६

इति श्रीमहाभारते अनुशासनपर्वणि द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

---

D10 cont. : S ins. after 8 :

612* असंस्कारात्क्षत्रवैश्यौ नश्येते ब्राह्मणादृते ।
शूद्रो नश्यत्यशुश्रूषुराश्रमाणां यथार्हतः ।

[ T1 om. line 1. — (L. 1) D10 T2. 3 G1. 4 -वैश्या (for -वैश्यौ). D10 T2. 3 G1. 4 नश्यंते; M नश्यतो (for नश्येते). — (L. 2) T2. 3 G शुश्रूषुर् (for [अ]शु°).]

9 a) Bom. ed. सुलभे (for सुकृते). — b) T1 G1. 4 फलं विंदंति मानवाः. — c) D4–10 तु (D6. 8 [श्रा]शु) लभते; S श्रुतवते (for °ति). — d) T3 इष्टं; G2–4 दत्त्वा (for दाता). D4–10 न संशयः (for समश्नुते).

10 a) B2. 3 Dn1 n2 विंदेत (for विद्येत). — d) T G2–4 M4 वृथा; G1 damaged (for मोघं).

11 D10 reads 11 twice. — a) D10 (first time) T1, 2 G M4 अन्नं; T3 गृह्णन् (for अदन्). Dn D6. 10 (second time) om. हि. D10 (first time) S [ए]वम् (for [अ]न्नम्). D4. 6–9 अविद्यं च दहत्यन्नम्. — b) D10 (first time) S अ(D10 ह्य)विद्वांसं च हंति तत. — T1 om. 11cd. — c) V1 B2–5 Dn Cnp तच्चा( Dn1 तं चा)न्नं पाति यच्चा( B3 Dn1. n2 °श्चा )न्नं; D1 2 तच्चान्नं पाति यश्चाद्य; D4–9. 10 (second time) तदन्नं D7 न दत्तं ) हंति यच्चा( D8 °श्चा )न्नः; D10 (first time) T2. 3 G2. 4 M4 तच्चान्यं (D10 °न्नं ) हंति यच्चा( T3 °श्चा )न्यत्. — d) V1 B2–5 Dn D4–9. 10 (second time) हंता; D10 (first time) T2. 3 G M1–3 भुक्त्वा (for हत्वा). D1. 2, 4–9. 10 (second time) पुनः (for ऽबुधः).

12 a) T1. 2 G प्राहुर् (for प्रभुर्). T3 प्राहुर्ह्यन्यदविद्वांसः. — b) M1. 3 दातुर्; M2. 4 दातुं (for पुनर्). D1–10 भावयति (for जन°). — T1 om. 12cd. — c) S (T1 om.) दाता (for चान्नाज्). D1. 5. 10 यस्मात् (for त°). — G1. 3 om. 12d–13c. — d) V1 B2. 3 Dn D1–9 एष; T2. 3 G2. 4 एवं (for एव). — D10 T2. 3 G2. 4 M ins. after 12 : T1 after 12ab :

613* प्रभुर्ह्यनुपभोगी स्याददत्त्वान्नमसंशयः।
यस्तारयति वै विद्वान्पितॄन्देवान्समाहतान् ।

[ (L. 1) D10 T2. 3 G2 4 माह्नं ह्य( D10 प्राहयं ह्य- ; T3 प्राहुर् )नुपयोगी यो (for the prior half). M3 असंशयं. D10 T2. 3 G2. 4 [अ]ददंश्चान्नमसंशयं (for the post. half). — (L. 2) T1 यद्धारयति वै विद्वान् (for the prior half). D10 T2. 3 G2. 4 सदामृतान्; T1 स तर्पयेत्; M3 (also as above) सदाहृतान् (for समा°).]

13 G1. 3 om. 13abc (cf. v. l. 12). — a) D5. 8. 9 तद् (for यद्). — b) D4. 5. 7. 8. 10 एवं (for एव). — d) M1–3 [ए]तद् (for [ए]वम्).

14 a) D4–10 [ए]व (for वै). B3 संतः (for सन्ति). S यत्रैव (T1 °त्रैव; M1–3 °त्र वै) ब्राह्मणस्तात. — b) T G M3 -संहितः. — c) T1 तस्मिन् (for तत्र). — d) T1 च क्षमं; G1 वाश्नुते (for चा°).

15 a) T1 G1. 2 M4 योनिसिद्धाः; T3 येभिसिद्धाः (for योशुिनद्धाः). — d) D4–10 च; T G M4 नः (for वै). B6 स्मृताः (for सदा).

16 a) D4–10 तैर्महद्भिः; T1 अयं सद्भिः (for तैर्हि सद्भिः). — b) T2 3 G M देवयानो (for चेत°). B3 Dn3 D4. 6–9 मुह्यति (for °ते). D5. 10 येन याते न मुह्यति; T1 देवयानोपमः स्तवः. — c) M1–3 [ऽ]पि (for हि).

# १२३

भीष्म उवाच ।

एवमुक्तः स भगवान्मैत्रेयं प्रत्यभाषत ।
दिष्ट्यैवं त्वं विजानासि दिष्ट्या ते बुद्धिरीदृशी ।
लोको ह्ययं गुणानेव भूयिष्ठं स्म प्रशंसति ॥ १
रूपमानवयोमानश्रीमानाश्चाप्यसंशयम् ।
दिष्ट्या नाभिभवन्ति त्वां दैवस्तेऽयमनुग्रहः ।
यत्ते भृशतरं दानाद्वर्तयिष्यामि तच्छृणु ॥ २
यानीहागमशास्त्राणि याश्च काश्चित्प्रवृत्तयः ।
तानि वेदं पुरस्कृत्य प्रवृत्तानि यथाक्रमम् ॥ ३
अहं दानं प्रशंसामि भवानपि तपःश्रुते ।
तपः पवित्रं वेदस्य तपः स्वर्गस्य साधनम् ॥ ४
तपसा महदाप्नोति विद्यया चेति नः श्रुतम् ।
तपसैव चापनुदेद्यच्चान्यदपि दुष्कृतम् ॥ ५
यद्यद्धि किंचित्संधाय पुरुषस्तप्यते तपः ।
सर्वमेतदवाप्नोति ब्राह्मणो वेदपारगः ॥ ६
दुरन्वयं दुष्प्रधृष्यं दुरापं दुरतिक्रमम् ।
सर्वं वै तपसाभ्येति तपो हि बलवत्तरम् ॥ ७
सुरापोऽसंमतादायी भ्रूणहा गुरुतल्पगः ।
तपसा तरते सर्वमेनसश्च प्रमुच्यते ॥ ८
सर्वविद्यस्तु चक्षुष्मानपि यादृशतादृशः । C. 13. 58 B. 13. 12 K. 13. 18 M. 13. 10

Colophon om. in B1. —*Parvan name:* B2-4 Dn1. n3 D1 शांति. —*Sub-parvan:* V1 B2. 3. 5 Dn D1. 2. 6-7. 9. 10 M1-3 दानधर्म. —*Adhy. name:* V1 B2. 4. 5 Dn3 D2. 4-10 मैत्रेयभिक्षा; D1 मैत्रेयशिक्षा; T2 मैत्रेय-व्याससंवादः. —*Adhy. no.* (figures, words or both): V1 121; B5 111; Dn1 119; D10 128; T1 172; T2 189; T3 G2. 4 180; G1. 3 M1 174; M2. 3 175; M4 173. —*Śloka no.:* Dn1 D4 17; Dn2 18.

## 123

☞ This adhy. is missing in D3 (cf. v. l. 13. 82. 37). B1 om. this adhy. (cf. v. l. 13. 120. 14).

1 $^{a}$) B (B1 om.) M1-3 [ए]व; T1 तत्; T2. 3 G M4 [ए]तत् (for [ए]वं). —$^{d}$) D1 शिष्टा (for दिष्ट्या). — T1 om. 1$^{ef}$. —$^{e}$) D9 लोके (for लोको). V1 B (B1 om.) Dn D2 [आ]र्यं- (for [अ]यं). G1-3 गुणाद् (for गुणान्). —$^{f}$) V1 B (B1 om.) Dn तु; D4-10 T2. 3 G2-4 सं-; D6 स; G1 damaged (for स्म).

2 Before 2, T3 ins. व्यासः. —$^{a}$) D10 T G1. 3 4 M2-4 रूपमानो व(M4 °नव)योमानो (D10 °नः; M2 °न-). —$^{b}$) V1 M1-3 श्रीमानश्च. D4-10 श्रीमानैश्चाप्यहंकृताः; T G M1 धनविद्यामदस्तथा. —$^{c}$) Dn2 D5. 10 M2-4 त्वा (for त्वां). —$^{d}$) G2. 4 दैवतो (for दैवस्ते). G1. 3 अनुत्तमं (for °ग्रहः). —$^{e}$) S तत्ते बहुगुणं दानं. —$^{f}$) M1-3 श्रद्धया स्वगुणैरपि.

3 $^{a}$) S धर्मशास्त्राणि च तथा. —$^{b}$) D6. 8-10 काश्च (for काश्चित्). —$^{c}$) T1 M1-3 दानमेव; T2. 3 G M तानि चैव (for तानि वेदं).

4 D1 om. 4-5. —$^{b}$) D4 भवते हि; D5. 10 भवतेपि; G2 भवानिति (for °नपि). V1 D6 तपः श्रुतं; D7-9 तपस्तु ते (for तपःश्रुते). — After 4$^{ab}$, T1 ins.:

614* तत्तद्बहुगुणं दानं श्रद्धया स्वगुणैरपि ।

—$^{c}$) B5 प्रवृत्तं (for पवित्रं). B4 T2. 3 G1. 3. 4 देवस्य; D4-10 वेदेभ्यस्; T1 damaged; M देहस्य (for वेदस्य). —$^{d}$) M4 पावनं (for साधनम्).

5 D1 om. 5 (cf. v. l. 4). —$^{b}$) D5. 10 वा (for च). —$^{c}$) Dn3 वा (for च). D4-10 [अ]पनुदते; T1 M1-3 [अ]प्यपहरेद्; T2. 3 G M4 [अ]प्यनुवृत्तो (for [अ]पनुदेद्). —$^{d}$) D7 यथा (for यच्च).

6 $^{a}$) T1 G1. 3 [अ]स्ति (for यद्धि). D4-10 संध्यायन् (for संधाय). M2. 3 यत्किंचिदभिसंधाय. —$^{d}$) D1. 2 पुरुषो (for ब्राह्मणो). V1 B5 Dn विद्यया चेति नः श्रुतं.

7 $^{a}$) B2 partly damaged. D6. 7. 9 T1 दुरत्ययं (for °न्वयं). V1 B2-5 Dn T G1. 3 M दुष्प्रधर्षं; G4 °सहं (for °धृष्यं). —$^{b}$) T2 दुष्प्रापं (for दुरापं). —$^{c}$) D1. 4-10 हि (for वै). —$^{d}$) T1. 2 G1. 3 M2. 4 दिष्टं; T3 G2. 4 M1. 3 दृष्टं (for तपो). G2 om. from हि बल up to स्ताभ्यां (in 9$^{d}$).

8 G2 om. 8 (cf. v. l. 7). T1 om. 8-9. —$^{a}$) D10 T2. 3 G1. 3. 4 सुरापः स्वर्णहारी च.

0 तपस्विनौ च तावाहुस्ताभ्यां कार्यं सदा नमः ॥ ९
10 4 सर्वे पूज्याः श्रुतधनास्तथैव च तपस्विनः ।
दानप्रदाः सुखं प्रेत्य प्राप्नुवन्तीह च श्रियम् ॥ १०
इमं च ब्रह्मलोकं च लोकं च बलवत्तरम् ।
अन्नदानैः सुकृतिनः प्रतिपद्यन्ति लौकिकाः ॥ ११
पूजिताः पूजयन्त्येतान्मानिता मानयन्ति च ।
अदाता यत्र यत्रैति सर्वतः संप्रणुद्यते ॥ १२
अकर्ता चैव कर्ता च लभते यस्य यादृशम् ।
यद्येवोर्ध्वं यद्यवाक्च त्वं लोकमभियास्यसि ॥ १३
प्राप्स्यसे त्वन्नपानानि यानि दास्यसि कानिचित् ।
मेधाव्यसि कुले जातः श्रुतवानानृशंसवान् ॥ १४
कौमारदारव्रतवान्मैत्रेय निरतो भव ।
एतद्गृहाण प्रथमं प्रशस्तं गृहमेधिनाम् ॥ १५
यो भर्ता वासितातुष्टो भर्तुस्तुष्टा च वासिता ।
यस्मिन्नेवं कुले सर्वं कल्याणं तत्र वर्तते ॥ १६
अद्भिर्गात्रान्मलमिव तमोऽग्निप्रभया यथा ।

9 G2 om. up to स्ताभ्यां (in 9[d]) (cf. v. l. 7). T1 om. 9 (cf. v. l. 8). — [a]) B2.3 च; D8 स (for तु). D4 स च वैद्यस्तु चक्षुष्मान्; D5–7.9.10 स वैद्यः स च चक्षुष्मान्; T2 G1.3.4 M1–3 सर्वो वैद्यश्च (M1–3 °स्तु) च°; T3 सर्ववैद्यैश्च च°; M4 सर्वं वैद्यं च च°. — [b]) D7 T3 यादृक्ष- (for यादृश-). V1 B4.5 Dn1.n3 M1.2.4 -तादृशं. — [c]) V1 B2.4.5 Dn D4–10 M तपस्विनं तथै(D4–10 °मे)वाहुस्; B3 T2.3 G1.3.4 °नस्तथैवाहुस्. — [d]) D4–10 तस्मै (for ताभ्यां). T2.3 G1.3 M सतां मतं; G2 सतां मम; G4 सतां मतः (for सदा नमः).

10 [a]) S पूर्वं (for सर्वे). D4.6.8.9 श्रुतिधरास्; D5.7.10 श्रुतिपरास् (for श्रुतधनास्). — [b]) D4.6.8.9 ते तथैव (for तथैव च). — [c]) B2 partly damaged. B3 -प्रियाः (for -प्रदाः). T G1.3.4 तथा; G2 तदा; M4 तयोः (for सुखं). — [d]) M वा (for च).

11 [b]) T1 श्रेयश् (for लोकं). D5.10 बलवत्तरमुत्तरं. — [c]) T1 -दानात् (for -दानैः). — [d]) D10 T2.3 G M4 लौकिकं (for °काः). T1 प्राप्नुवंतीह लौकिकं; M1–3 प्रपद्यंते त्रिलौकिकं.

12 [a]) Dn1 S [ए]ते; D4 [ए]वं; D5–10 [ए]नं (for [ए]तान्). — [b]) M1–3 [उ]त (for च). — B3 reads 12[cd] twice. — [c]) D2.3 स दाता; T1 प्रदाता (for अ°). T G M1–3 तत्र (for the second यत्र). B3 (first time) दाता यत्र च यत्रैति. — [d]) B3 (first time) संप्रपूज्यते; T1 °बुध्यते; G2 °पद्यते; Bom. ed. °णूयते (for °णुद्यते). — After 12, T1 ins. 615*.

13 T1 om. 13–15. — [a]) D2 च (for [ए]व). V1 B (B1 om.) Dn D4.8 यदि चो( Dn3 चो )र्ध्वं यद्यधो वा; D1.6.7.10 तदेवोर्ध्वं यद्यथा वा (D7 °थावत्). — [d]) V1 B3–5 Dn1.n3 स्वाल्लँलोकान्; B2 स्वं लोकान्; D5.10 स्वर्लोकान्; D8 स्वं लोकम् (for त्वं लोकम्). Bom. ed. -यास्यति (for °सि). S (T1 om.) लोकान्नयसि यास्यसि.

14 T1 om. 14 (cf. v. l. 13). — [a]) B2 partly damaged. B3 Dn1 प्राप्स्यसि. D4–10 ह्यन्न-; T3 त्वं च (for त्वन्न-). — [b]) B2–4 Dn1 यास्यसि; Bom. ed. वांछसि (for दास्यसि). S (T1 om.) कर्हिचित् (for कानि°). V1 B5 Dn2.n3 यानि यास्यसि कानि च. — [d]) D1.2 अनृशंसवाक् (for °वान्).

15 T1 om. 15 (cf. v. l. 13). — [a]) V1 B (B1 om.) Dn -चारी; S (T1 om.) -दारो (for -दार-). D4–10 कौमारीव्रत( D5 °रवृत्त-; D10 °रव्रत )वान्मित्र ( D6.8.9 °न्विप्र ). — [b]) M4 नियतो (for निरतो). D5 (before corr.) भवान् (for भव). — After 15[ab], G2 ins. 615*. T2.3 G M4 om. 15[c]–17[b]; M1–3 read the same after 615*. — [c]) D1.2.6–10 गृहाणां (for °ण). — [d]) M1–3 -मेधिनः (for °नाम्).

16 For the sequence in M1–3, cf. v. l. 15. T2.3 G M4 om. 16 (cf. v. l. 15). — [a]) D1.2.4–10 M1–3 संतु( D1.2 M1–3 यस्तु )ष्टो भार्यया भर्ता. — [b]) V1 B4.5 Dn2.n3 भर्तृ-; B2.3 D4 भर्त्रा (for भर्तुस्). D1.2 भर्त्रा तुष्टा तथैव सा; D5.10 भर्त्रा च गृहमेधिनी; D6–9 भर्त्रा तुष्यति वासिता; M1–3 भर्त्रा तुष्टा तथाविधा. — [c]) D7 तस्मिन् (for य°). D1.6.8.10 एव (for एवं). D1.2 नित्यं (for सर्वं). — [d]) D1.2 वर्धते (for वर्तते).

17 For the sequence in M1–3, cf. v. l. 15. T2.3 G M4 om 17[ab] (cf. v. l. 15). — [a]) D1–10 अद्भि-र्गात्रमलानीव. — T2.3 G1.3.4 M ins. after 17[c]; T1 after 12; G2 after 15[ab]:

615* विष्णोरभ्यर्चनेन च ।

दानेन तपसा चैव सर्वपापमपोह्यते ॥ १७
स्वस्ति प्राप्नुहि मैत्रेय गृहान्साधु व्रजाम्यहम् ।
एतन्मनसि कर्तव्यं श्रेय एवं भविष्यति ॥ १८
तं प्रणम्याथ मैत्रेयः कृत्वा चाभिप्रदक्षिणम् ।
स्वस्ति प्राप्नोतु भगवानित्युवाच कृताञ्जलिः ॥ १९

इति श्रीमहाभारते अनुशासनपर्वणि त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥

## १२४

युधिष्ठिर उवाच ।
सत्स्त्रीणां समुदाचारं सर्वधर्मभृतां वर ।
श्रोतुमिच्छाम्यहं त्वत्तस्तं मे ब्रूहि पितामह ॥ १
भीष्म उवाच ।
सर्वज्ञां सर्वधर्मज्ञां देवलोके मनस्विनीम् ।
कैकेयी सुमना नाम शाण्डिलीं पर्यपृच्छत ॥ २
केन वृत्तेन कल्याणि समाचारेण केन वा ।
विधूय सर्वपापानि देवलोकं त्वमागता ॥ ३
हुताशनशिखेव त्वं ज्वलमाना स्वतेजसा ।
सुता ताराधिपस्येव प्रभया दिवमागता ॥ ४ C. 13. 586 B. 13. 123. K. 13. 185 M. 13. 108.

---

ब्राह्मणः स महाभाग तरेत्संसारसागरात् ।
स्वकर्मशुद्धसत्त्वानां तपोभिर्निर्मलात्मनाम् ।
विद्यया गतमोहानां तारणाय हरिः स्मृतः ।
तदर्चनपरो नित्यं तद्भक्तस्तं नमस्कुरु ।
तद्भक्ता न विनश्यन्ति ह्यष्टाक्षरपरायणाः ।
प्रणवोपासनपराः परमार्थपरास्त्विह ।
एतैः पावय चात्मानं.

[ T1 om. line 1. — (L. 2) T3 शु-; M सन् (for स). M तर संसारसागरं (for the post. half). T1 अन्नदानैस्तथा तेषां शुश्रूषापूजनैरपि. — (L. 3) G3 °-शुद्धिः (for -शुद्ध-). — (L. 4) T1 हरिस्मृतिः (for हरिः स्मृतः). ]

— After the above, M1–3 read 15$^{c}$–17$^{b}$. —$^{d}$) V1 B3.5 Dn3 D4–7.9.10 T2.3 M सर्वं (for सर्व-). V1 B3–5 Dn D2 क्षपोहते; D5–10 त्यपोहति; S अपोह्य च; Bom. ed. °हति (for °ह्यते).

18 $^{a}$) D4.6.7.9 कौंतेय (for मैत्रेय). B3 स्वस्तिमाप्नुहि मैत्रेय. — T1 om. (hapl.) 18$^{b}$–19$^{a}$. —$^{d}$) Dn3 T2.3 G एव (for एवं).

19 T1 om. 19$^{a}$ (cf. v. l. 18). —$^{a}$) D5.10 मैत्रेयं (for °यः). —$^{b}$) S [अ]पि (for [अ]भि-). — After 19$^{b}$, T1 ins.:

616*

भीष्मः ।
कृष्णद्वैपायनो राजन्मैत्रेयं द्विजसत्तमम् ।

—$^{c}$) M प्राप्नोति (for °तु). T1 श्रेयस्करं स भगवान्. —$^{d}$) D4–10 यतव्रतः (for कृताञ्जलिः).

Colophon om. in B1. —*Parvan name*: V1 B2–4 Dn3 D1 शांति. —*Sub-parvan*: V1 B2.3.5 Dn D1.2.4–9 M1–3 दानधर्म. —*Adhy. name*: V1 B2.4.5 Dn D1.2.4–10 मैत्रेयभिक्षा. —*Adhy. no.* (figures, words or both): V1 Dn1 122; B6 112; D10 129; T1 173; T2.3 G2.4 181; G1.3 M1 175; M2.3 176; M4 174. —*Śloka no.*: Dn1.n2 D4 20.

### 124

☞ This adhy. is missing in D3 (cf. v. l. 13. 82. 37). B1 om. this adhy. (cf. v. l. 13. 120. 14). For a similar account of the righteous behaviour of ladies, cf. 3. 222–223.

1 $^{a}$) D6.8.9 यत्स्त्रीणां; T2.3 G स्त्रीणां हि (T2 तु) (for सत्स्त्रीणां). T1 स्त्रीणां च समयाचारं. —$^{b}$) V1 B2.3 Dn S (except T1) -धर्मविदां (for °भृतां).

2 $^{a}$) V1 B2–4 Dn -तत्त्वज्ञां (for -धर्मज्ञां). —$^{b}$) B2.3 तपस्विनीं; Dn3 D1.2.4–9 मनस्विनी (for °नीम्). —$^{c}$) T1.3 G2 कैकेयीं (for °यी). D10 T2 G1.3.4 M कैकेयीं सुमनां नाम. —$^{d}$) D10 शांडिलः; T1 M °लीं; T2.3 G °ल्यः (for °लीं).

3 Before 3, T3 ins. शांडिल्यः. —$^{a}$) D4–10 केन कल्याणवृत्तेन. —$^{b}$) B2 (marg.) सदाचारेण केन वा.

अरजांसि च वस्त्राणि धारयन्ती गतक्लमा ।
विमानस्था शुभे भासि सहस्रगुणमोजसा ॥ ५
न त्वमल्पेन तपसा दानेन नियमेन वा ।
इमं लोकमनुप्राप्ता तस्मात्तत्त्वं वदस्व मे ॥ ६
इति पृष्टा सुमनया मधुरं चारुहासिनी ।
शाण्डिली निभृतं वाक्यं सुमनामिदमब्रवीत् ॥ ७
नाहं काषायवसना नापि वल्कलधारिणी ।
न च मुण्डा न जटिला भूत्वा देवत्वमागता ॥ ८
अहितानि च वाक्यानि सर्वाणि परुषाणि च ।
अप्रमत्ता च भर्तारं कदाचिन्नाहमब्रुवम् ॥ ९
देवतानां पितॄणां च ब्राह्मणानां च पूजने ।
अप्रमत्ता सदायुक्ता श्वश्रूश्वशुरवर्तिनी ॥ १०
पैशुन्ये न प्रवर्तामि न ममैतन्मनोगतम् ।
अद्वारे न च तिष्ठामि चिरं न कथयामि च ॥ ११
असद्वा हसितं किंचिदहितं वापि कर्मणा ।
रहस्यमरहस्यं वा न प्रवर्तामि सर्वथा ॥ १२
कार्यार्थे निर्गतं चापि भर्तारं गृहमागतम् ।
आसनेनोपसंयोज्य पूजयामि समाहिता ॥ १३
यद्यच्च नाभिजानाति यद्भोज्यं नाभिनन्दति ।
भक्ष्यं वाप्यथ वा लेह्यं तत्सर्वं वर्जयाम्यहम् ॥ १४
कुटुम्बार्थे समानीतं यत्किंचित्कार्यमेव तु ।
प्रातरुत्थाय तत्सर्वं कारयामि करोमि च ॥ १५

— [d]) $V_1$ समागता ( for त्वमा° ).

4 S om. (hapl.) 4–8. — [b]) $Dn_3$ $D_{4-10}$ च ( for स्व- ). — [c]) $V_1$ [इ]ह ( for [इ]व ). — [d]) $D_{5.10}$ त्वरया ( for प्रभया ).

5 S om. 5 ( cf. v. l. 4 ). — [c]) $V_1$ $B_{2-5}$ Dn $D_8$ शुभा ( for शुभे ).

6 S om. 6 ( cf. v. l. 4 ). — [a]) $D_{1.2.6-8}$ °सा ( for न ). — [b]) $D_{4-10}$ च ( for वा ). — [d]) $V_1$ B ( $B_1$ om. ) Dn त्वं हि ( for तस्मात् ).

7 S om. 7 ( cf. v. l. 4 ). — [a]) $Dn_3$ $D_{10}$ सुमनसा ( for °नया ). — [c]) $D_{10}$ शांडिल्यो ( for °ली ).

8 S om. 8 ( cf. v. l. 4 ). Before 8, $D_8$ ins. शांडिल्युवाच. — [b]) $D_{1.4-10}$ च ( for [अ]पि ). — [c]) $B_{2.3}$ $D_2$ च ( for the second न ). $D_{1-10}$ मलिना ( for जटिला ).

9 Before 9, S ins. सुमनाः. — [a]) $D_{1.2}$ तु; $T_1$ om. ( for च ). — [c]) $T_1$ अवमन्य ( for अप्रमत्ता ). — [d]) M अब्रवं ( for अब्रुवम् ).

10 [d]) $B_2$ ( marg. as in text ) भर्तुरंतरगामिनी.

11 [a]) $V_1$ $B_{4.5}$ $Dn_3$ पैशुन्यं ( for °न्ये ). $T_1$ om. न. $D_7$ प्रवृत्तापि; $D_8$ च वर्तामि ( for प्रव° ). — [b]) $D_{1-10}$ ममैतन्मे; $T_1$ न वक्ष्ये तन् ( for न ममैतन् ). — [c]) $B_3$ पुर्द्वारि; $Dn_1$ $D_2$ अद्वारि; $G_2$ प्रचारे ( for अद्वारे ). $V_1$ $B_{2.4}$ $Dn_{2.n3}$ प्रद्वारि च न तिष्ठामि; $D_5$ द्वारे न चैव ति°; $T_1$ गृहद्वारे न ति°; $T_2$ $G_4$ प्रद्वारे च न निष्क्रामि; $G_{1.3}$ प्रचारे न चरिष्यामि. — [d]) $T_{2.3}$ G परं ( for चिरं ).

12 [a]) $V_1$ अश्रद्धजृंभितं किंचिद्. — [b]) $D_{5.8.9.10}$ च ( for वा ). S ( except $G_{1.2}$ ) आहितं ( $T_1$ प्रयुक्तं; $M_{1-3}$ गूहितं; $M_4$ ग्रहणं ) पापकर्मणः ( T °णा ). — [c]) $T_1$ M परस्य च ( $M_4$ °स्यैवं ) रहस्ये वा; $T_{2.3}$ $G_1$ परस्यैव रहस्ये च ( $G_4$ °स्येव ); $G_{2.3}$ परस्वे च रहस्ये च. — [d]) $B_3$ $D_{1.2}$ $T_{1.2}$ $G_3$ सर्वदा ( for °था ).

13 [a]) $D_{4.6.9.10}$ कार्यार्थ-; $D_{5.7}$ °र्थं ( for °र्थे ). $D_4$ वा ( for च ). — [c]) $V_1$ $B_{3-5}$ -संयुज्य; $T_1$ -संपाद्य; $T_{2.3}$ G -संगम्य; $M_{1-3}$ -संपूज्य; $M_4$ -संपद्य ( for -संयोज्य ).

14 [a]) $G_4$ *partly damaged*. $V_1$ $B_{2-4}$ Dn $D_8$ अन्नं ( for यच्च ). $T_1$ $M_2$ ( *inf. lin.* ) [अ]नु- ( for [अ]भि- ). $D_{4.6.7.9}$ -जानामि ( for °ति ). — [b]) $D_{4.5.7.9}$ तद्भोज्यं ( for य° ). $M_4$ च ( for न ). $D_{1.2}$ -नंदते ( for °ति ). — [c]) $D_7$ भक्षं ( for भक्ष्यं ). $V_1$ B ( $B_1$ om. ) Dn यदि ( for [अ]प्यथ ). $T_1$ [अ]न्यच्च ( for लेह्यं ).

15 $D_4$ om. 15. — [a]) $D_{1.2.8}$ कुटुंबार्थं; some MSS. कुडुंबार्थे ( for कुटुम्बार्थे ). — [b]) $D_2$ वा; $D_{10}$ S च ( for तु ). — [c]) $D_{10}$ S पुनर् ( for प्रातर् ). — [d]) $D_{5.8.9}$ [अ]हं ( for च ). — After 15, $D_{10}$ S ins. :

617* अग्निसंरक्षणपरा गृहशुद्धिं च कारये ।
पात्राणां धनधान्यानां शयनासनवस्तुनाम् ।

प्रवासं यदि मे भर्ता याति कार्येण केनचित् ।
मङ्गलैर्बहुभिर्युक्ता भवामि नियता सदा ॥ १६
अञ्जनं रोचनां चैव स्नानं माल्यानुलेपनम् ।
प्रसाधनं च निष्क्रान्ते नाभिनन्दामि भर्तरि ॥ १७
नोत्थापयामि भर्तारं सुखसुप्तमहं सदा ।
आतुरेष्वपि कार्येषु तेन तुष्यति मे मनः ॥ १८
नायासयामि भर्तारं कुटुम्बार्थे च सर्वदा ।
गुप्तगुह्या सदा चास्मि सुसंमृष्टनिवेशना ॥ १९
इमं धर्मपथं नारी पालयन्ती समाहिता ।
अरुन्धतीव नारीणां स्वर्गलोके महीयते ॥ २०

भीष्म उवाच ।

एतदाख्याय सा देवी सुमनायै तपस्विनी ।
पतिधर्मं महाभागा जगामादर्शनं तदा ॥ २१
यश्चेदं पाण्डवाख्यानं पठेत्पर्वणि पर्वणि ।
स देवलोकं संप्राप्य नन्दने सुसुखं वसेत् ॥ २२ C. B. K. M.

इति श्रीमहाभारते अनुशासनपर्वणि चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥

---

कुमारान्पालये नित्यं कुमारीः परिशिक्षये ।
आत्मप्रियाणि हित्वापि गर्भसंरक्षणे रता ।
बालानां वर्जये नित्यं शापं कोपं प्रतापनम् ।
अविक्षिप्तानि धान्यानि नान्नविक्षेपणं गृहे ।
रत्नवत्स्पृहये गेहे गावः सयवसोदकाः ।
समुद्गम्य च शुद्धाहं भिक्षां दद्यां द्विजातिषु ।

[ D10 T2.3 G M2 om. line 2. — (L. 3) G कुमारीं (for °रीः). T3 -रक्षये (for -शिक्षये). — (L. 4) M1–3 च (for [अ]पि). — (L. 5) M1–3 प्रताडनं (for °पनम्). — M1–3 read lines 7–8 after 17. — (L. 7) T2.3 G1.3.4 रक्तवत् (for रत्न°). M व्रीहयो (for स्पृहये). M2 सु- (for स-). — (L. 8) G2 (*inf. lin.*) शुद्धान्नं (for °हं).]

16 $^{ab}$) Dn3 यद्दिने (for यदि मे). V1 B (B1 om.) Dn M1–3 याति भर्ता (by transp.). D8 केन वा (for केनचित्). — $^{d}$) V1 B (B1 om.) Dn तदा; D10 [आ]त्मना (for सदा). T2 G भवामि नियतात्मना. — After 16, T1 reads $19^{cd}$.

17 $^{a}$) B5 D8.10 S (G1 damaged) रोचनं (for °नां). B8 [अ]पि (for [ए]व). — $^{c}$) Some MSS. निःक्रांते. — After 17, M1–3 read lines 7–8 of 617*.

18 T3 om. (hapl.) $18^{b}$–$19^{a}$; D8 reads the same twice. — $^{b}$) G1.3 सुखं (for सुख-). D4 तदा (for सदा). — M1–3 subst. for $18^{ab}$: D10 T3 G ins. after $18^{ab}$:

618* नोत्थापये सुखं सुप्तं आतुरं पालये पतिम् ।

[ D10 G4 पतिं सुप्तं; T2 सुप्तंसुप्तं; G2 सुखं सुप्ते; M1–3 सुखस्वप्ने (for सुखं सुप्तं). M1–3 [ऽ]पि (for हि).]

— T1 M1–3 *om.* $18^{cd}$. — $^{c}$) V1 B (B1 om.) Dn D8 (both times) आंतरेषु (for आतु°).

19 For the repetition in D8, cf. v. l. 18. T3 om. $19^{a}$ (cf. v. l. 18). — $^{a}$) Dn3 कर्तारं (for भ°). — $^{b}$) M1.3 कुडुंबार्थे. V1 B2–5 Dn1.n3 [ऽ]पि (for च). D10 T G M4 कुटुं(T3 M4 °डुं)बार्थमहं सदा. — T1 reads $19^{cd}$ after 16. — $^{c}$) D6–9 सदाचारा (for सदा चास्मि). — $^{d}$) B5 सुसंश्लिष्ट- (for °मृष्ट-). D4 संसृष्टविनिवेशना. — After 19, D4–9 ins.:

619* बन्धकीं वर्जयाम्येव कुहकामूलकर्म च ।

[ D7 [अ]थ (for [ए]व). D6–9 कुहकाकर्म चैव हि (D7 च) (for the post. half).]

20 $^{a}$) D4.6.9 इदं (for इमं). D10 T2.3 G4 M2 -फलं (for -पथं). G1–3 इदं धर्मफलं नारी. — M4 om. (hapl.?) $20^{bc}$. — $^{c}$) D10 T2.3 G नारी सा (for नारीणां).

21 G4 om. the ref. — $^{a}$) D1.2.4–10 T3 एवम् (for एतद्). T1 G4 M1–3 वै (for सा). B6 (marg.) नारी (for देवी). — $^{b}$) S सुमना वै (for °नायै). D10 T3 तपस्विनं; T3 °नः (for °नी). — $^{d}$) G2 तथा (for तदा).

22 $^{a}$) V1 B (B1 om.) Dn2.n3 [ए]नं; D1.2 [ए]तत् (for [इ]दं). — $^{d}$) V1 B2.5 सुसुखी; Dn1.n3 स सुखी; D1.2.4.7 स सुखं (for सुसुखं). B3.4 D10

# १२५

युधिष्ठिर उवाच ।

साम्ना वापि प्रदाने वा ज्यायः किं भवतो मतम् ।
प्रब्रूहि भरतश्रेष्ठ यदत्र व्यतिरिच्यते ॥ १

भीष्म उवाच ।

साम्ना प्रसाद्यते कश्चिद्दानेन च तथापरः ।
पुरुषः प्रकृतिं ज्ञात्वा तयोरेकतरं भजेत् ॥ २
गुणांस्तु शृणु मे राजन्सान्त्वस्य भरतर्षभ ।
दारुणान्यपि भूतानि सान्त्वेनाराधयेद्यथा ॥ ३
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
गृहीत्वा रक्षसा मुक्तो द्विजातिः कानने यथा ॥ ४
कश्चित्तु बुद्धिसंपन्नो ब्राह्मणो विजने वने ।
गृहीतः कृच्छ्रमापन्नो रक्षसा भक्षयिष्यता ॥ ५
स बुद्धिश्रुतसंपन्नस्तं दृष्ट्वातीव भीषणम् ।
सामैवास्मिन्प्रयुयुजे न मुमोह न विव्यथे ॥ ६
रक्षस्तु वाचा संपूज्य प्रश्नं पप्रच्छ तं द्विजम् ।
मोक्ष्यसे ब्रूहि मे प्रश्नं केनास्मि हरिणः कृशः ॥ ७

---

S नंदने स सु( B4 T3 M1-3 सुसु )खी भवेत्.

Colophon om. in B1. — *Parvan name :* B2-4 Dn3 D1 शांति. — *Sub-parvan :* V1 B2.3.5 Dn D1.2.5.6.8-10 M1-3 दानधर्म. — *Adhy. name :* V1 B2.4.5 Dn3 D1.2.4-9 शांडिलीसुमनासंवादः; Dn1.n2 सुमनासंवादः; T2 शांडिल्यसुमनासंवादे स्त्रीधर्मकथनं; M4 कैकेयीशांडिलीसंवादः. — *Adhy. no.* (figures, words or both): V1 123; B5 113; Dn1 121; D10 180; T1 174; T2.3 G2.4 182; G1.3 M1 176; M2.3 177; M4 175. — *Śloka no.:* Dn1 22; Dn2 23; D4 21. — After 124, S ins. a passage given in App. I (No. 13).

## 125

☞ This adhy. is missing in D3 (cf. v. l. 13. 82. 37).

1 B1 om. up to हरि (in $21^{d}$) (cf. v. l. 13. 120. 14). — a) V1 B2-4 D1 साम्नि चापि; D4 साम्ना चोप-; D5 साम्ना चैव; D6.7.9 साम्नैवोप- (for साम्ना वापि). D10 T2.3 G1.3.4 M प्रदानेन (for °ने वा). B5 Dn D8 T1 G2 साम्नि चापि (Dn3 वापि; D8 वाथ) प्रदाने च (B5 G2 °नेन). — d) M ह्यति- (for व्यति-).

2 B1 om. 2 (cf. v. l. 1). — b) G1.3 यथा (for तथा). D4 [अ]परे (for °रः). — c) V1 Dn1.n2 D5 पुरुप-; D10 S पौरुषीं (T1 G2 °षं) (for पुरुषः). — d) V1 D1 व्रजेत्; Dn3 D5.8.10 T1.2 G2 भवेत् (for भजेत्).

3 B1 om. 3 (cf. v. l. 1). — a) D10 S (except G4) वै (for मे). — b) T2.3 G1.3 M पुरुषर्षभ (for भरत°). — d) V1 B2.4 Dn3 D1.2 [आ]नामयेद्; D4 [आ]गम°; D5.6.9 नम°; D7 मान°; D10 S (except G4) मंत्र° (for [आ]राध°). T1 बुधः (for यथा). B5 सामेनानामयेद्यथा.

4 B1 om. 4 (cf. v. l. 1).

5 B1 om. 5 (cf. v. l. 1). — a) V1 B2.4.5 Dn वा (for तु). V1 गृद्धि-; D4-9 गुण-; D10 G4 श्रुत-; T2 वेद- (for बुद्धि-). B3 मनोवाग्बुद्धिसंपन्नो. — b) D2 निर्जने (for विजने). — c) D1 corrupt. V1 गृहीत्वा (for °तः). D6-9 गृहीतः कृच्छ्रसंपन्नो; T1 °तो रक्षसा तत्र. — T1 om. (hapl.?) $5^{d}$–$6^{a}$.

6 B1 om. 6 (cf. v. l. 1). T1 om. $6^{a}$ (cf. v. l. 5). — a) D6 T2.3 G सु- (for स). V1 B2.4.5 Dn D2.4.6.7.9 T2 -श्रुति- (for -श्रुत-). — b) V1 B6 Dn2.n3 [अ]तिवि- (for [अ]तीव). B4 तं दृष्ट्वातिविचक्षणं; D10 S दृष्ट्वा तम( T1 °द )तिभीषणं. — c) D5 साम्नैव (for सामैव). D10 S सामैवास्मै प्र( T1 °म त्वथ प्र-; T2.3 °म्नैवास्मै प्र-; G1-3 °मैव संप्र )युंजानो.

7 B1 om. 7 (cf. v. l. 1). — a) V1 B (B1 om.) Dn D2.4.6-9 वाचं; D5 [उ]वाच (for वाचा). — c) D5 किं भक्ष्यं; D7 किं भक्षं; D3.9 तत्त्वेन (for मे प्रश्नं). — After $7^{abc}$, D1.5.7-9 repeat wrongly 13. 107. $66^{d}$–$67^{b}$, $68^{a}$–$73^{a}$. — d) T3 G4 येनाग्नि; G1.3 येनाह (for केनास्मि). — After 7, D1 reads 12 and

मुहूर्तमथ संचिन्त्य ब्राह्मणस्तस्य रक्षसः ।
आभिर्गाथाभिरव्यग्रः प्रश्नं प्रतिजगाद ह ॥ ८

विदेशस्थो विलोकस्थो विना नूनं सुहृज्जनैः ।
विषयानतुलान्भुङ्क्षे तेनासि हरिणः कृशः ॥ ९

नूनं मित्राणि ते रक्षः साधूपचरितान्यपि ।
स्वदोषादपरज्यन्ते तेनासि हरिणः कृशः ॥ १०

धनैश्वर्याधिकाः स्तब्धास्त्वद्गुणैः परमावराः ।
अवजानन्ति नूनं त्वां तेनासि हरिणः कृशः ॥ ११

गुणवान्विगुणानन्यान्नूनं पश्यसि सत्कृतान् ।
प्राज्ञोऽप्राज्ञान्विनीतात्मा तेनासि हरिणः कृशः ॥ १२

अवृत्त्या क्लिश्यमानोऽपि वृत्त्युपायान्विगर्हयन् ।
माहात्म्याद्व्यथसे नूनं तेनासि हरिणः कृशः ॥ १३

संपीड्यात्मानमार्यत्वात्त्वया कश्चिदुपस्कृतः ।
जितं त्वां मन्यते साधो तेनासि हरिणः कृशः ॥ १४

क्लिश्यमानान्विमार्गेषु कामक्रोधावृतात्मनः ।
मन्ये नु ध्यायसि जनांस्तेनासि हरिणः कृशः ॥ १५ C. 13. B. 13. K. 13. M. 13.

M4 reads 10.

8 B1 om. 8 (cf. v. l. 1). T3 om. (hapl.) 8–9. M4 om. 8[abc]. Before 8, D10 T2 G2, 4 ins. भीष्म उवाच. —[a]) D5 G1, 3 अपि (for अथ). —[b]) D10 T2 G2, 4 ब्राह्मणस्तं निरीक्ष्य सः (G2 च). —[c]) D10 T1, 2 G अभीतवदथाव्यग्रः; M1–3 आधिभावादथाव्यग्रः.

9 B1 om. 9 (cf. v. l. 1). T3 om. 9 (cf. v. l. 8). T2 transp. 9 and 10. —[a]) V1 B2–5 Dn2, n3 विलोकस्थैर्; D4, 5, 7–9 °स्थे (for °स्थो). —[b]) D2 शून्ये (for नूनं). —[c]) G1, 3 अखिलान् (for अतु°). D4–9 T1 M1 भुंक्ते. — After 9, T1 reads 13.

10 B1 om. 10 (cf. v. l. 1). T1 om. (hapl.) 10. T2 transp. 9 and 10. T3 reads 10 twice and M4 reads it after 7. —[a]) D10 T2, 3 (both times) G M एवं (for नूनं). —[b]) T2, 3 (both times) G M साधूनां (for साधूप°). —[c]) D4–9 स्वदोषैर् (for °षाद्). D10 T2, 3 (both times) G M स्वदोषात्तु (T2 सदोषं तु) परित्यज्य. —[d]) G2 [अ]पि (for [अ]सि). — After 10, D10 T2, 3 G M1–3 read 13, T3 reading it twice.

11 B1 om. 11 (cf. v. l. 1). B3 om. (hapl.) 11–19. D2 om. (hapl.) 11–12. D1, 4 om. (hapl.) 11. V1 B2, 4, 5 Dn D5–9 transp. 11 and 12. —[a]) B5 धनैरप्यधिकाः स्तब्धास्; D5, 7, 9 °श्वर्याधिकान्स्तब्धांस्; D10 S परकार्याधिकारस्थाः. —[b]) B2 (marg. as in text) D5–10 T2 G त्व(D10 G स)द्गुणैरधमा नराः (G3 °रः); T1 स्वगुणैरजरा नराः; T3 सद्गुणैरसमा नराः; M स्वद्गुणैरवरा नराः. —[c]) B5 ते नूनं; Dn2 नूनं त्वा (for नूनं त्वां).

12 B1 om. 12 (cf. v. l. 1). B3 D2 om. 12 (cf. v. l. 11). T1, 3 om. (hapl.) 12. V1 B2, 4, 5 Dn D5–9 transp. 11–12. D1 reads 12 after 7. —[a]) V1 B4 D4, 5, 8–10 S (T1, 3 om.) निर्गुणान् (for विगु°). —[b]) D6–9 पश्यति (for °सि). G4 न्यूनं पश्यसि सुव्रतान्. —[c]) T2 G1, 3, 4 प्राज्ञैरपि; M प्राज्ञैः प्राज्ञो (for प्राज्ञोऽप्राज्ञान्). — After 12, G2 reads 16.

13 B1 om. 13 (cf. v. l. 1). B3 om. 13 (cf. v. l. 11). M4 om. (hapl.) 13. D10 T2, 3 G M1–3 read 13 after 10, T3 reading it twice. T1 reads 13 after 9. —[a]) G3 अप्रीत्या (for अवृत्त्या). T3 हि; M1–3 [ऽ]थ (for ऽपि). D4–9 अ(D4, 8, 9 आ)वृत्त्या क्लिश्यमानस्य; D10 °त्त्या श्रम्यमानो हि; T3 (both times) °त्त्या क्लिश्यमानान्हि; G4 °त्यापि श्रम्यमानो. —[b]) T2 G मृत्युप्रायान् (for वृत्त्युपायान्). D4–9 वृत्त्युपायं चिकीर्षसि; D10 मृत्युप्रायानगर्हयत्; T1 M1–3 मृत्युपाशानग(T1 °न्न ग)र्हयन्. —[c]) D4 महात्मा ह्यर्थसे नूनं; D10 T1, 2, 3 (both times) G M1–3 महार्थान्ध्यायसे नूनं.

14 B1 om. 14 (cf. v. l. 1). B3 om. 14 (cf. v. l. 11). B5 om. (hapl.) 14–15. D4, 6, 7, 9, 10 T1 om. (hapl.) 14. —[a]) D8 T2, 3 G1, 3, 4 M संपीड्यमानमा(D8 °न आ)र्यत्वात्. —[b]) D1 अपहृतः; D8 अपाकृतः (for उपस्कृतः). S (T1 om.) परिभूय ततो हरिः (G2 हरिं; G4 रिपुं; M रिपुः). —[c]) D8 तेन (for जितं). M त्वा (for त्वां). D2, 5, 8 T2 G2 मन्यसे (for °ते).

15 B1 om. 15 (cf. v. l. 1). B3 om. 15 (cf. v. l. 11). B5 om. 15 (cf. v. l. 14). T2 repeats 15 after 22. —[a]) D4 विमार्गेण (for °षु). —[b]) Dn2 D6–9 कामक्रोधवृतात्मनः; D1 corrupt; D4 °धवशात्मनः; D10 T1, 2 (both times), 3 G M °धधृ(T1 °धैर्वृ)तात्मनः. —[c]) V1 B4 Dn1, n2 मन्ये त्वं; T1

# १२५

युधिष्ठिर उवाच ।
साम्ना वापि प्रदाने वा ज्यायः किं भवतो मतम् ।
प्रब्रूहि भरतश्रेष्ठ यदत्र व्यतिरिच्यते ॥ १
भीष्म उवाच ।
साम्ना प्रसाद्यते कश्चिद्दानेन च तथापरः ।
पुरुषः प्रकृतिं ज्ञात्वा तयोरेकतरं भजेत् ॥ २
गुणांस्तु शृणु मे राजन्सान्त्वस्य भरतर्षभ ।
दारुणान्यपि भूतानि सान्त्वेनाराधयेद्यथा ॥ ३
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
गृहीत्वा रक्षसा मुक्तो द्विजातिः कानने यथा ॥ ४
कश्चित्तु बुद्धिसंपन्नो ब्राह्मणो विजने वने ।
गृहीतः कृच्छ्रमापन्नो रक्षसा भक्षयिष्यता ॥ ५
स बुद्धिश्रुतसंपन्नस्तं दृष्ट्वातीव भीषणम् ।
सामैवास्मिन्प्रयुयुजे न मुमोह न विव्यथे ॥ ६
रक्षस्तु वाचा संपूज्य प्रश्नं पप्रच्छ तं द्विजम् ।
मोक्ष्यसे ब्रूहि मे प्रश्नं केनास्मि हरिणः कृशः ॥ ७

S नंदने स सु( B4 T3 M1-3 सुसु )खी भवेत्.

Colophon om. in B1. — *Parvan name :* B2-4 Dn3 D1 शांति. — *Sub-parvan :* V1 B2.3.5 Dn D1.2.5.6.8-10 M1-3 दानधर्म. — *Adhy. name :* V1 B2.4.5 Dn3 D1.2.4-9 शांडिलीसुमनासंवादः; Dn1.n2 सुमनासंवादः; T2 शांडिल्यसुमनासंवादे स्त्रीधर्मकथनं; M4 कैकेयीशांडिलीसंवादः. — *Adhy. no.* (figures, words or both): V1 123; B5 113; Dn1 121; D10 180; T1 174; T2.3 G2.4 182; G1.3 M1 176; M2.3 177; M4 175. — *Śloka no.:* Dn1 22; Dn2 23; D4 21. — After 124, S ins. a passage given in App. I (No. 13).

## 125

☞ This adhy. is missing in D3 (cf. v. l. 13. 82. 37).

1 B1 om. up to हरि (in 21$^d$) (cf. v. l. 13. 120. 14). —$^a$) V1 B2-4 D1 साम्नि चापि; D4 साम्ना चोप-; D5 साम्ना चैव; D6.7.9 साम्नैवोप- (for साम्ना वापि). D10 T2.3 G1.3.4 M प्रदानेन (for °ने वा). B5 Dn D8 T1 G2 साम्नि चापि (Dn3 वापि; D8 वाथ) प्रदाने च (B5 G2 °नेन). —$^d$) M ह्यति- (for व्यति-).

2 B1 om. 2 (cf. v. l. 1). —$^b$) G1.3 यथा (for तथा). D4 [अ]परे (for °रः). —$^c$) V1 Dn1.n2 D1 पुरुष-; D10 S पौरुषीं (T1 G2 °षं) (for पुरुषः). —$^d$) V1 D1 व्रजेत्; Dn3 D5.8.10 T1.2 G2 भवेत् (for भजेत्).

3 B1 om. 3 (cf. v. l. 1). —$^a$) D10 S (except G4) चै (for मे). —$^b$) T2.3 G1.3 M पुरुषर्षभ (for भरत°). —$^d$) V1 B2.4 Dn3 D1.2 [आ]नामयेद्; D4 [आ]गम°; D5.6.9 नम°; D7 मान°; D10 S (except G4) मंत्र° (for [आ]राध°). T1 बुधः (for यथा). B5 सामेनानामयेद्यथा.

4 B1 om. 4 (cf. v. l. 1).

5 B1 om. 5 (cf. v. l. 1). —$^a$) V1 B2.4.5 Dn वा (for तु). V1 गृद्धि-; D4-9 गुण-; D10 G4 श्रुत-; T2 वेद- (for बुद्धि-). B3 मनोवाग्बुद्धिसंपन्नो. —$^b$) D2 निर्जने (for विजने). —$^c$) D1 corrupt. V1 गृहीत्वा (for °तः). D6-9 गृहीतः कृच्छ्रसंपन्नो; T1 °तो रक्षसा तत्र. — T1 om. (hapl.?) 5$^d$-6$^a$.

6 B1 om. 6 (cf. v. l. 1). T1 om. 6$^a$ (cf. v. l. 5). —$^a$) D6 T2.3 G सु- (for स). V1 B2.4.5 Dn D2.4.6.7.9 T2 -श्रुति- (for -श्रुत-). —$^b$) V1 B5 Dn2.n3 [अ]तिवि- (for [अ]तीव). B4 तं दृष्ट्वातिविचक्षणं; D10 S दृष्ट्वा तम( T1 °द )तिभीषणं. —$^c$) D5 साम्नैव (for सामैव). D10 S सामैवास्मै प्र( T1 °म त्वथ प्र-; T2.3 °म्नैवास्मै प्र-; G1-3 °मैव संप्र )युंजानो.

7 B1 om. 7 (cf. v. l. 1). —$^a$) V1 B (B1 om.) Dn D2.4.6-9 वाचं; D5 [उ]वाच (for वाचा). —$^c$) D5 किं भक्ष्यं; D7 किं भक्षं; D3.9 तत्त्वेन (for मे प्रश्नं). — After 7$^{ab}$, D1.5.7-9 repeat wrongly 13. 107. 66$^d$-67$^b$, 68$^a$-73$^a$. —$^d$) T3 G4 येनास्मि; G1.3 येनाहं (for केनास्मि). — After 7, D1 reads 12 and

मुहूर्तमथ संचिन्त्य ब्राह्मणस्तस्य रक्षसः ।
आभिर्गाथाभिरव्यग्रः प्रश्नं प्रतिजगाद ह ॥ ८
विदेशस्थो विलोकस्थो विना नूनं सुहृज्जनैः ।
विषयानतुलान्भुङ्क्षे तेनासि हरिणः कृशः ॥ ९
नूनं मित्राणि ते रक्षः साधूपचरितान्यपि ।
स्वदोषादपरज्यन्ते तेनासि हरिणः कृशः ॥ १०
धनैश्वर्याधिकाः स्तब्धास्त्वद्गुणैः परमावराः ।
अवजानन्ति नूनं त्वां तेनासि हरिणः कृशः ॥ ११
गुणवान्विगुणानन्यान्नूनं पश्यसि सत्कृतान् ।
प्राज्ञोऽप्राज्ञान्विनीतात्मा तेनासि हरिणः कृशः ॥ १२
अवृत्त्या क्लिश्यमानोऽपि वृत्त्युपायान्विगर्हयन् ।
माहात्म्याद्व्यथसे नूनं तेनासि हरिणः कृशः ॥ १३
संपीड्यात्मानमार्यत्वात्त्वया कश्चिदुपस्कृतः ।
जितं त्वां मन्यते साधो तेनासि हरिणः कृशः ॥ १४
क्लिश्यमानान्विमार्गेषु कामक्रोधावृतात्मनः ।
मन्ये नु ध्यायसि जनांस्तेनासि हरिणः कृशः ॥ १५ C. 13. B. 13. K. 13. M. 13.

---

$M_4$ reads 10.

8 $B_1$ om. 8 (cf. v. l. 1). $T_3$ om. (hapl.) 8–9. $M_4$ om. 8$^{abc}$. Before 8, $D_{10}$ $T_2$ $G_{2,4}$ ins. भीष्म उवाच. —$^{a}$) $D_5$ $G_{1,3}$ अपि (for अथ). —$^{b}$) $D_{10}$ $T_2$ $G_{2,4}$ ब्राह्मणस्तं निरीक्ष्य सः ($G_2$ च). —$^{c}$) $D_{10}$ $T_{1,2}$ G अभीतवदथाव्यग्रः; $M_{1-3}$ आधिभावादथाव्यग्रः.

9 $B_1$ om. 9 (cf. v. l. 1). $T_3$ om. 9 (cf. v. l. 8). $T_2$ transp. 9 and 10. —$^{a}$) $V_1$ $B_{2-5}$ $Dn_{2,n3}$ विलोकस्थैर्; $D_{4,5,7-9}$ °स्थे (for °स्थो). —$^{b}$) $D_2$ शून्ये (for नूनं). —$^{c}$) $G_{1,3}$ अखिलान् (for अतु°). $D_{4-9}$ $T_1$ $M_1$ भुंक्ते. — After 9, $T_1$ reads 13.

10 $B_1$ om. 10 (cf. v. l. 1). $T_1$ om. (hapl.) 10. $T_2$ transp. 9 and 10. $T_3$ reads 10 twice and $M_4$ reads it after 7. —$^{a}$) $D_{10}$ $T_{2,3}$ (both times) G M एवं (for नूनं). —$^{b}$) $T_{2,3}$ (both times) G M साधूनां (for साधूप-). —$^{c}$) $D_{4-9}$ स्वदोषैर् (for °पाद्). $D_{10}$ $T_{2,3}$ (both times) G M स्वदोषात्तु ($T_2$ सदोषं तु) परित्यज्य. —$^{d}$) $G_2$ [अ]पि (for [अ]सि). — After 10, $D_{10}$ $T_{2,3}$ G $M_{1-3}$ read 13, $T_3$ reading it twice.

11 $B_1$ om. 11 (cf. v. l. 1). $B_3$ om. (hapl.) 11–19. $D_2$ om. (hapl.) 11–12. $D_{1,4}$ om. (hapl.) 11. $V_1$ $B_{2,4,5}$ Dn $D_{5-9}$ transp. 11 and 12. —$^{a}$) $B_5$ धनैरप्यधिकाः स्तब्धास्; $D_{5,7,9}$ °श्वर्याधिकान्स्तब्धांस्; $D_{10}$ S परकार्याधिकारस्थाः. —$^{b}$) $B_2$ (marg. as in text) $D_{5-10}$ $T_3$ G त्व($D_{10}$ G स)द्गुणैरधमा नराः ($G_3$ °रः); $T_1$ स्वगुणैरजरा नराः; $T_3$ सद्गुणैरसमा नराः; M स्वद्गुणैरवरा नराः. —$^{c}$) $B_5$ ते नूनं; $Dn_2$ नूनं त्वा (for नूनं त्वां).

12 $B_1$ om. 12 (cf. v. l. 1). $B_3$ $D_2$ om. 12 (cf. v. l. 11). $T_{1,3}$ om. (hapl.) 12. $V_1$ $B_{2,4,5}$ Dn $D_{5-9}$ transp. 11–12. $D_1$ reads 12 after 7. —$^{a}$) $V_1$ $B_4$ $D_{4,5,8-10}$ S ($T_{1,3}$ om.) निर्गुणान् (for विगु°). —$^{b}$) $D_{6-8}$ पश्यति (for °सि). $G_4$ न्यूनं पश्यसि सुव्रतान्. —$^{c}$) $T_2$ $G_{1,3,4}$ प्राज्ञैरपि; M प्राज्ञैः प्राज्ञो (for प्राज्ञोऽप्राज्ञान्). — After 12, $G_2$ reads 16.

13 $B_1$ om. 13 (cf. v. l. 1). $B_3$ om. 13 (cf. v. l. 11). $M_4$ om. (hapl.) 13. $D_{10}$ $T_{2,3}$ G $M_{1-3}$ read 13 after 10, $T_3$ reading it twice. $T_1$ reads 13 after 9. —$^{a}$) $G_3$ अप्रीत्या (for अवृत्त्या). $T_2$ हि; $M_{1-3}$ [ऽ]थ (for ऽपि). $D_{4-9}$ अ($D_{4,8,9}$ आ)-वृत्त्या क्लिश्यमानस्य; $D_{10}$ °त्त्या भ्रश्यमानो हि; $T_3$ (both times) °त्त्या क्लिश्यमानान्हि; $G_4$ °त्त्यापि भ्रश्यमानो. —$^{b}$) $T_2$ G मृत्युप्रायान् (for वृत्त्युपायान्). $D_{4-9}$ वृत्त्युपायं चिकीर्षसि; $D_{10}$ मृत्युप्रायानगर्हयन्; $T_1$ $M_{1-3}$ मृत्युपाशानग($T_1$ °न्स ग)र्हयन्. —$^{c}$) $D_4$ महात्मा ह्यर्थसे नूनं; $D_{10}$ $T_{1,2,3}$ (both times) G $M_{1-3}$ महार्थान्ध्यायसे नूनं.

14 $B_1$ om. 14 (cf. v. l. 1). $B_3$ om. 14 (cf. v. l. 11). $B_5$ om. (hapl.) 14–15. $D_{4,6,7,9,10}$ $T_1$ om. (hapl.) 14. —$^{a}$) $D_8$ $T_{2,3}$ $G_{1,3,4}$ M संपीड्यमानमा($D_8$ °न आ)र्यत्वात्. —$^{b}$) $D_1$ अपहृतः; $D_8$ अपाकृतः (for उपस्कृतः). S ($T_1$ om.) परिभूय ततो हरिः ($G_2$ हरिं; $G_4$ रिपुं; M रिपुः). —$^{c}$) $D_8$ तेन (for जितं). M त्वा (for त्वां). $D_{2,5,8}$ $T_2$ $G_3$ मन्यसे (for °ते).

15 $B_1$ om. 15 (cf. v. l. 1). $B_3$ om. 15 (cf. v. l. 11). $B_5$ om. 15 (cf. v. l. 14). $T_3$ repeats 15 after 22. —$^{a}$) $D_4$ विमार्गेण (for °षु). —$^{b}$) $Dn_2$ $D_{5-9}$ कामक्रोधवृतात्मनः; $D_1$ corrupt; $D_4$ °धवशात्मनः; $D_{10}$ $T_{1,2}$ (both times).$_3$ G M °धधृ($T_1$ °धैर्धृ)तात्मनः. —$^{c}$) $V_1$ $B_4$ $Dn_{1,n2}$ मन्ये त्वं; $T_1$

प्राज्ञैः संभावितो नूनं नप्राज्ञैरुपसंहितः ।
ह्रीमानमर्षी दुर्वृत्तैस्तेनासि हरिणः कृशः ॥ १६

नूनं मित्रमुखः शत्रुः कश्चिदार्यवदाचरन् ।
वञ्चयित्वा गतस्त्वां वै तेनासि हरिणः कृशः ॥ १७

प्रकाशार्थगतिर्नूनं रहस्यकुशलः कृती ।
तज्ज्ञैर्न पूज्यसे नूनं तेनासि हरिणः कृशः ॥ १८

असत्स्वभिनिविष्टेषु ब्रुवतो मुक्तसंशयम् ।
गुणास्ते न विराजन्ते तेनासि हरिणः कृशः ॥ १९

धनबुद्धिश्रुतैर्हीनः केवलं तेजसान्वितः ।
महत्प्रार्थयसे नूनं तेनासि हरिणः कृशः ॥ २०

तपःप्रणिहितात्मानं मन्ये त्वारण्यकाङ्क्षिणम् ।
बन्धुवर्गो न गृह्णाति तेनासि हरिणः कृशः ॥ २१

---

मानेन ( for मन्ये तु ).

16 B1 om. 16 ( cf. v. l. 1 ). B3 om. 16 ( cf. v. l. 11 ). G2 reads 16 after 12. —ᵃ) V1 B2. 4. 5 Dn प्रज्ञा-; D1. 2 प्राज्ञः ( for प्राज्ञैः ). D10 T1. 2 G2. 4 अपूजितो; M संपूजितो ( for संभावितो ). T3 G1. 3 प्राज्ञैरपूजितो नित्यं. —ᵇ) V1 B2. 4. 5 Dn अप्रज्ञैर् ( for नप्राज्ञैर् ). D6 अपि; D7. 9 असि; D8 अभि- ( for उप- ). D4 नप्राज्ञैरपि संहितं; D5 अप्रज्ञैरपि संहतः; D10 T2. 3 G4 प्राज्ञैरप्य( T3 °भ्य )भिनंदितः; T1 G1. 3 अप्राज्ञैरभिनंदितः; M अप्राज्ञैरपि निंदितः. —ᶜ) T1. 2 G4 दुर्वृत्तस्; G1 संयुक्तैस् ( for दुर्वृत्तैस् ). V1 हीनमानोसि दुर्वृत्तैस्; B2. 4. 5 Dn हीयमानोसि ( B5 °पि ) दु°; D4 corrupt; G2 ह्रीमानप्यथ संरक्तैस्. — After 16, M1-3 ins. 623*.

17 B1 om. 17 ( cf. v. l. 1 ). B3 om. 17 ( cf. v. l. 11 ). D4-9 om. ( hapl. ) 17. D10 T2. 3 G1. 3. 4 M om. 17ᵃ-18ᵇ. T1 om. ( hapl. ) 17-20. G2 om. ( hapl. ) 17-18. D1. 2 read 17 after 620*. —ᵇ) D1 आर्यवपुश् ( for आर्यवद् ).

18 B1 om. 18 ( cf. v l. 1 ). B3 om. 18 ( cf. v. l. 11 ). D10 T2. 3 G1. 3. 4 M om. 18ᵃᵇ; T1 G2 om. 18 ( for all, cf. v. l. 17 ). D1. 2 read 18 after 20. —ᵃ) Dn3 -रतिर् ( for -गतिर् ). B4 प्रकाशापरतिर्नूनं; B5 °र्थैरतैर्नूनं; Dn1. n2 °र्थैरतिर्नूनं; D1. 2 प्रकामार्थर- ( D2 °शाय र )तिर्नूनं; D4 corrupt; D6-9 प्रकाशार्य( D8. 9 °र्थ )मतिर्नूनं. — D10 T2. 3 G1. 3. 4 M read 18ᶜᵈ after 623*. —ᶜ) D4. 6-9 तस्मान् ( for तज्ज्ञैर् ). B2 नित्यं; D4-10 T2. 3 G1. 3. 4 M व्यक्तं ( for नूनं ). — After 18, D1. 2 ins. :

620* नूनं शक्त्या समारम्भान्विहितान्सुमहोदयान् ।
विपन्नार्थान्विजानासि तेनासि हरिणः कृशः ।
एकद्रव्यनिविष्टेन तुल्यार्थश्रुतसंपदा ।
परिभूतोऽसि नूनं त्वं तेनासि हरिणः कृशः ।

— After the above, D1. 2 read 17.

19 B1 om. 19 ( cf. v. l. 1 ). B3 om. 19 ( cf. v. l. 11 ). T1 om. 19 ( cf. v. l. 17 ). D2 om. ( hapl. ) 19. D10 T2. 3 G M2-4 om. read 19-21 after 27. —ᵃ) D10 S ( T1 om. ) त्रि- ( for [अ]भि- ). —ᵇ) V1 B2. 4. 5 Dn3 -संशयान्. D10 S ( T1 om. ) न गुणान्वदतः स्वयं. — After 19, M1 ins. 622*.

20 B1 om. 20 ( cf. v. l. 1 ). T1 om. 20 ( cf. v. l. 17 ). D6 om. ( hapl. ) 20-23. M1 om. ( hapl. ) 20-21. —ᵃ) D4. 5. 7. 8 त्वं तु बुद्धि-; D9 ननु बुद्धि-; D10 T2. 3 G धर्मवृत्त-; M2-4 धनवृत्त- ( for °बुद्धि- ). —ᵇ) D10 S ( T1 M1 om. ) पदं त्वं रजसान्वितः. —ᶜ) D1. 2 महान् ( for महत् ). — After 20, D1. 2 read 18.

21 B1 om. up to हरि ( in 21ᵈ ) ( cf. v. l. 1 ). D6 M1 om. 21 ( cf. v. l. 20 ). D7. 9 om. ( hapl. ) 21. T1 transp. 21 and 22. —ᵇ) V1 -कांक्षितं; T1 -चारिणं; M3 -कारिणं ( for -काङ्क्षिणम् ). —ᶜ) B2. 3 -वर्गोप-; D10 S ( M1 om. ) -वर्गो नि- ( for -वर्गो न ). V1 B4. 5 Dn D4. 5 बांधवा नाभिनंदति; D8 बंधुवर्गेण गृह्णीते. — After 21, V1 B2-6 Dn D5. 8 ins. :

621* इष्टभार्यस्य ते नूनं प्रातिवेश्यो महाधनः ।
युवा सुललितः कामी तेनासि हरिणः कृशः ।
[ ( L. 1 ) D8 -भार्योसि ( for -भार्यस्य ). ]

While D10 T G M2-4 ins. after 21 : M1 after 19 :

622* सुदुर्विनीतः पुत्रो वा जामाता वा प्रमार्जकः ।
दारा वा प्रतिकूलास्ते तेनासि हरिणः कृशः ।
भ्रातरोऽतीव विषमाः पिता वा क्षुत्क्षतो मृतः ।
माता ज्येष्ठो गुरुर्वापि तेनासि हरिणः कृशः ।
ब्राह्मणो वा हतो गौर्वा ब्रह्मस्वं वा हृतं पुरा । [ 5 ]
देवस्वं वाधिकं काले तेनासि हरिणः कृशः ।
हृतदारोऽथ वृद्धो वा लोके द्विष्टोऽथ वा नरैः ।
अविज्ञातेन वा वृद्धस्तेनासि हरिणः कृशः ।
वार्धक्यार्थं धनं दृष्ट्वा स्वा श्रीर्वापि परैर्हृता ।

नूनमर्थवतां मध्ये तव वाक्यमनुत्तमम् ।
न भाति कालेऽभिहितं तेनासि हरिण कृशः ॥ २२
दृढपूर्वश्रुतं मूर्खं कुपितं हृदयप्रियम् ।
अनुनेतुं न शक्नोषि तेनासि हरिणः कृशः ॥ २३
नूनमासंजयित्वा ते कृत्ये कस्मिंश्चिदीप्सिते ।
कश्चिदर्थयतेऽत्यर्थं तेनासि हरिणः कृशः ॥ २४
नूनं त्वा स्वगुणापेक्षं पूजयानं सुहृद्ध्रुवम् ।
मयार्थ इति जानाति तेनासि हरिणः कृशः ॥ २५
अन्तर्गतमभिप्रायं न नूनं लज्जयेच्छसि ।
विवक्तुं प्रास्तिशैथिल्यात्तेनासि हरिणः कृशः ॥ २६ C. 13. 5 B. 13. 1 K. 13. 1 M. 13. i

---

वृत्तिर्वा दुर्जनापेक्षा तेनासि हरिणः कृशः ।
संपत्काले न ते धर्मः क्षीणस्तात सुहृद्भवैः ।
असंन्यासमतस्तत्र तेनासि हरिणः कृशः ।

[ G2 om. (hapl.) lines 1–4. — (L. 1) T1 सहाध्यायी स पुत्रो वा (for the prior half). T1 G1 M1. 2. 4 प्रमार्गगः; T2 °दकः; G3 M3 °गंतः (for °जकः). — (L. 3) T1 G1. 3 M वाति- (for स्तीव). — (L. 4) D10 ज्येष्ठ- (for ज्येष्ठो). — (L. 5) T3 वा क्षतो; G3. 4 विहतो (for वा हतो). — (L. 6) T3 M कालं (for काले). — T2 om. (hapl.) lines 7–8. — (L. 7) M वा वृद्धो (by transp.). T1 हतदारो यथा वृद्धो (for the prior half). D10 G2 नरः (for नरैः). —T1 om. lines 8–9. —(L. 8) G4 अविज्ञातोथ वा वृद्धस् (for the prior half). —(L. 9) D10 G2 वार्धक्यार्थ-; M1–3 वार्धुकार्थ (for वार्धक्यार्थं). G3 स्मृता (for हृता). G4 श्रीर्वापि च परैः स्मृता (for the post. half). — (L. 10) T3 वृत्तिर्वात्मजनापेक्षा (for the prior half). —T2. 3 om. (hapl.) lines 11–12; M1–3 repeat the same after st. 24. — (L. 11) M1–3 (all both times). 4 त्यक्तः (for तात). T1 क्षीणस्त्यक्तः सुहृज्जनैः (for the post. half). — T1 om. line 12. — (L. 12) M1–3 (all second time) -मतिस् (for -मतस्).]

22 G2 om. (hapl.) 22–26. D6 M1. 3 om. (hapl.) 22–23. T1 transp. 21 and 22. — [a]) D10 T2. 3 G1. 3 M2. 4 अद्य सतां; T1 अन्यस्सतो (for अर्थवतां). B1 (marg. as in text) लोके; D5 श्रेष्ठं (for मध्ये). — [c]) D1. 5. 8. 9 नाभाति; T1 न भक्ति- (for न भाति). D2 निहतं; D5 निहिते; D7–9 निहितं; M4 [ऽ]भिहिते (for °तं). — After 22, T1 ins. 624*, and T2 repeats 15.

23 D6 G2 M1. 3 om. 23 (cf. v. l. 22). T1 om. 23[a]–28[b]. T2 om. (hapl.) 23. — [a]) B1. 3. 5 Dn1. n2 D1. 7 दृढपूर्वं; D8 दृष्टपूर्वं (for दृढपूर्व-). Dn3 D10 T3 G1. 3. 4 दृष्टपूर्वान्श्रुतपू( D10 °तः पू-; G3. 4 °तं पू )र्वान्; M2. 4 दृष्टपूर्वं श्रुतपूर्वं. — [b]) D7 कुपितः (for °तं). D4 corrupt; D10 T3 G1. 3. 4 कुपितान्हृदयप्रियान्. — [c]) V1 B1 शक्नोवि; G1. 3 M2. 4 शक्नोसि (for शक्नोषि).

24 G2 om. 24 (cf. v. l. 22). T1 om. 24 (cf. v. l. 23). — [a]) V1 B Dn त्वां (for ते). D1. 2 नूनं संयोजयित्वा ते (D2 त्वां); D4–9 M1–3 नूनमासज्जयित्वा ते; T3 नूनं मा संजनित्वा ते. — [b]) Dn2 कष्टे; G1. 3 कृत्वा; M1–3 कृते (for कृत्ये). D7–9 [ई]प्सितं (for °ते). — D9 om. 24[cd]. — [c]) T3 स्पृहयते (for अर्थ°). V1 B Dn D6 नित्यं; D2 ह्यर्थं; D4. 5. 7. 8 कृत्यं; D10 स्यर्थं (for ऽत्यर्थं). T2 G1. 3. 4 कश्चित्स्पृहयसे नित्यं (T2 स्यर्थं). — After 24, the sequence in D5 is: 33, 26, 29, 27, 28, 30, 31, 32, 34 and 25. D6–8 read 33 after 24 and D9 after 24[ab], all repeating it in its proper place. While D10 T2. 3 G1. 2. 4 M4 ins. after 24: M1–3 after 16:

623* परोक्षवादिभिर्मिथ्या दोषस्ते संप्रदर्शितः ।
[ M1–3 संप्रकाशितः (for °दर्शितः).]

— After the above, D10 T2. 3 G1. 3. 4 M read 18[cd]. M1–3 repeat lines 11–12 of 622* after 24.

25 For the sequence in D5, cf. v. l. 24. G2 om. 25 (cf. v. l. 22). T1 om. 25 (cf. v. l. 23). D4 M1 om. (hapl.) 25–26. M2. 3 om. (hapl.) 25. — [a]) V1 B1. 2. 4 Dn2. n3 D2 त्वां स्व-; B5 त्वां स- (for त्वा स्व-). B3 नूनं त्वं सुगुणैः पक्षं (sic); Dn1 नूनं त्वां सुगुणैर्युक्तं; D6–9 नूनं त्वां सुगु( D6 सग- ; D9 सगु )णोपेतान्; D10 T2. 3 G1. 3. 4 M4 नूनं त्वां (M4 त्वा) सद्गुणापेक्षं. — [b]) V1 पूजमानं (for °यानं). Dn2 सुहृद्धर्थं; D8 द्वि तद्भुवं; D10 T3 G1. 3. 4 सुहृत्प्रजाः; T2 M4 °ज्जनाः (for °ध्रुवम्). — [c]) V1 महार्थं; B Dn3 D1 ममार्थं (for मयार्थं). Dn1. n2 ममार्थं इति जानीते; D6. 7. 9 मायार्थमिति जानंति; D10 T2. 3 G1. 3. 4 M4 मायावीति च (G1. 3 हि) जानंति. — After 25, D2 reads 28. While D6. 7. 9 read 35 after 25, repeating it in its proper place.

26 For the sequence in D5, cf. v. l. 24. G2 om. 26 (cf. v. l. 22). T1 om. 26 (cf. v. l. 23). D4 M1 om. 26 (cf. v. l. 25). — [a]) D2 अंतर्वदित्यभिप्रायं. — [b]) V1 B Dn नूनं नेच्छसि लज्जया; M2. 3

16 प्राज्ञैः संभावितो नूनं नप्राज्ञैरुपसंहितः ।
16 ह्रीमानमर्षी दुर्वृत्तैस्तेनासि हरिणः कृशः ॥ १६
16 नूनं मित्रमुखः शत्रुः कश्चिदार्यवदाचरन् ।
वञ्चयित्वा गतस्त्वां वै तेनासि हरिणः कृशः ॥ १७
प्रकाशार्थगतिर्नूनं रहस्यकुशलः कृती ।
तज्ज्ञैर्न पूज्यसे नूनं तेनासि हरिणः कृशः ॥ १८

असत्स्वभिनिविष्टेषु ब्रुवतो मुक्तसंशयम् ।
गुणास्ते न विराजन्ते तेनासि हरिणः कृशः ॥ १९
धनबुद्धिश्रुतैर्हीनः केवलं तेजसान्वितः ।
महत्प्रार्थयसे नूनं तेनासि हरिणः कृशः ॥ २०
तपःप्रणिहितात्मानं मन्ये त्वारण्यकाङ्क्षिणम् ।
बन्धुवर्गो न गृह्णाति तेनासि हरिणः कृशः ॥ २१

---

मानेन ( for मन्ये नु ).

16 $B_1$ om. 16 ( cf. v. l. 1 ). $B_3$ om. 16 ( cf. v. l. 11 ). $G_2$ reads 16 after 12. — $^{a}$) $V_1$ $B_{2.4.5}$ Dn प्रज्ञा- ; $D_{1.2}$ प्राज्ञः ( for प्राज्ञैः ). $D_{10}$ $T_{1.2}$ $G_{2.4}$ अपूजितो ; M संपूजितो ( for संभावितो ). $T_3$ $G_{1.3}$ प्राज्ञैरपूजितो नित्यं. — $^{b}$) $V_1$ $B_{2.4.5}$ Dn अप्रज्ञैर् ( for नप्राज्ञैर् ). $D_6$ अपि ; $D_{1.9}$ असि ; $D_8$ अभि- (for उप-). $D_4$ नप्राज्ञैरपि संहितं ; $D_5$ अप्रज्ञैरपि संहृतः ; $D_{10}$ $T_{2.3}$ $G_4$ प्राज्ञैरप्य( $T_3$ °भ्य )भिनंदितः ; $T_1$ $G_{1.3}$ अप्राज्ञैरभिनंदितः ; M अप्राज्ञैरपि निंदितः. — $^{c}$) $T_{1.2}$ $G_4$ दुर्वृत्तस् ; $G_1$ संयुक्तैस् ( for दुर्वृत्तैस् ). $V_1$ हीनमानोसि दुर्वृत्तैस् ; $B_{2.4.5}$ Dn हीयमानोसि ( $B_5$ °पि ) दु° ; $D_4$ corrupt ; $G_2$ ह्रीमानप्यथ संरक्तैस्. — After 16, $M_{1-3}$ ins. 623*.

17 $B_1$ om. 17 ( cf. v. l. 1 ). $B_3$ om. 17 ( cf. v. l. 11 ). $D_{4-9}$ om. ( hapl. ) 17. $D_{10}$ $T_{2.3}$ $G_{1.3.4}$ M om. $17^{a}$–$18^{b}$. $T_1$ om. ( hapl. ) 17–20. $G_2$ om. ( hapl. ) 17–18. $D_{1.2}$ read 17 after 620*. — $^{b}$) $D_1$ आर्यवपुश् ( for आर्यवद् ).

18 $B_1$ om. 18 ( cf. v l. 1 ). $B_3$ om. 18 ( cf. v. l. 11 ). $D_{10}$ $T_{2.3}$ $G_{1.3.4}$ M om. $18^{ab}$ ; $T_1$ $G_2$ om. 18 ( for all, cf. v. l. 17 ). $D_{1.2}$ read 18 after 20. — $^{a}$) $Dn_3$ -रतिर् ( for -गतिर् ). $B_4$ प्रकाशापरतिर्नूनं ; $B_5$ °र्थैरतैर्नूनं ; $Dn_1$, $n_2$ °र्थैरतिर्नूनं ; $D_{1.2}$ प्रकामार्थैर-( $D_2$ °शाय र )तिर्नूनं ; $D_4$ corrupt ; $D_{6-9}$ प्रकाशार्थ( $D_{8.9}$ °ग्र )मतिर्नूनं. — $D_{10}$ $T_{2.3}$ $G_{1.3.4}$ M read $18^{cd}$ after 623*. — $^{c}$) $D_{4.6-9}$ तस्मान् ( for तज्ज्ञैर् ). $B_2$ नित्यं ; $D_{4-10}$ $T_{2.3}$ $G_{1.3.4}$ M व्यक्तं ( for नूनं ). — After 18, $D_{1.2}$ ins. :

620* नूनं शक्त्या समारम्भान्विहितान्सुमहोदयान् ।
विपन्नार्थान्विजानासि तेनासि हरिणः कृशः ।
एकद्रव्यनिविष्टेन तुल्यार्थश्रुतसंपदा ।
परिभूतोऽसि नूनं त्वं तेनासि हरिणः कृशः ।

— After the above, $D_{1.2}$ read 17.

19 $B_1$ om. 19 ( cf. v. l. 1 ). $B_3$ om. 19 ( cf. v. l. 11 ). $T_1$ om. 19 ( cf. v. l. 17 ). $D_2$ om. ( hapl. ) 19. $D_{10}$ $T_{2.3}$ G $M_{2-4}$ om. read 19–21 after 27. — $^{a}$) $D_{10}$ S ( $T_1$ om. ) त्रि- ( for [अ]भि- ). — $^{b}$) $V_1$ $B_{2.4.5}$ $Dn_3$ -संशयान्. $D_{10}$ S ( $T_1$ om. ) न गुणान्वदतः स्वयं. — After 19, $M_1$ ins. 622*.

20 $B_1$ om. 20 ( cf. v. l. 1 ). $T_1$ om. 20 ( cf. v. l. 17 ). $D_6$ om. ( hapl. ) 20–23. $M_1$ om. ( hapl. ) 20–21. — $^{a}$) $D_{4.5.7.8}$ त्वं तु बुद्धि- ; $D_9$ ननु बुद्धि- ; $D_{10}$ $T_{2.3}$ G धर्मवृत्त- ; $M_{2-4}$ धनवृत्त- ( for °बुद्धि- ). — $^{b}$) $D_{10}$ S ( $T_1$ $M_1$ om. ) पदं त्वं रजसान्वितः. — $^{c}$) $D_{1.3}$ महान् ( for महत् ). — After 20, $D_{1.2}$ read 18.

21 $B_1$ om. up to हरि ( in $21^{d}$ ) ( cf. v. l. 1 ). $D_6$ $M_1$ om. 21 ( cf. v. l. 20 ). $D_{7.9}$ om. ( hapl. ) 21. $T_1$ transp. 21 and 22. — $^{b}$) $V_1$ -कांक्षितं ; $T_1$ -चारिणं ; $M_3$ -कारिणं ( for -काङ्क्षिणम् ). — $^{c}$) $B_{2.3}$ -वर्गोप- ; $D_{10}$ S ( $M_1$ om. ) -वर्गो नि- ( for -वर्गो न ). $V_1$ $B_{4.5}$ Dn $D_{4.5}$ बांधवा नाभिनंदति ; $D_8$ बंधुवर्गेण गृह्णीते. — After 21, $V_1$ $B_{2-6}$ Dn $D_{5.8}$ ins. :

621* इष्टभार्यस्य ते नूनं प्रातिवेश्यो महाधनः ।
युवा सुललितः कामी तेनासि हरिणः कृशः ।
[ ( L. 1 ) $D_8$ -भार्योसि ( for -भार्यस्य ). ]

While $D_{10}$ T G $M_{2-4}$ ins. after 21 : $M_1$ after 19 :

622* सुदुर्विनीतः पुत्रो वा जामाता वा प्रमार्जकः ।
दारा वा प्रतिकूलास्ते तेनासि हरिणः कृशः ।
भ्रातरोऽतीव विषमाः पिता वा क्षुत्क्षतो मृतः ।
माता ज्येष्ठो गुरुर्वापि तेनासि हरिणः कृशः ।
ब्राह्मणो वा हतो गौर्वा ब्रह्मस्वं वा हृतं पुरा । [ 5 ]
देवस्वं वाधिकं काले तेनासि हरिणः कृशः ।
हृतदारोऽथ वृद्धो वा लोके द्विष्टोऽथ वा नरैः ।
अविज्ञातेन वा वृद्धस्तेनासि हरिणः कृशः ।
वार्धक्यार्थं धनं दृष्ट्वा स्वा श्रीर्वापि परैर्हृता ।

नूनमर्थवतां मध्ये तव वाक्यमनुत्तमम् ।
न भाति कालेऽभिहितं तेनासि हरिण कृशः ॥ २२
दृढपूर्वंश्रुतं मूर्खं कुपितं हृदयप्रियम् ।
अनुनेतुं न शक्नोषि तेनासि हरिणः कृशः ॥ २३
नूनमासंजयित्वा ते कृत्ये कस्मिंश्चिदीप्सिते ।
कश्चिदर्थयतेऽत्यर्थं तेनासि हरिणः कृशः ॥ २४
नूनं त्वा स्वगुणापेक्षं पूजयानं सुहृद्ध्रुवम् ।
मयार्थ इति जानाति तेनासि हरिणः कृशः ॥ २५
अन्तर्गतमभिप्रायं न नूनं लज्जयेच्छसि ।
विवक्तुं प्राप्तिशैथिल्यात्तेनासि हरिणः कृशः ॥ २६ C B K M

वृत्तिर्वा दुर्जनापेक्षा तेनासि हरिणः कृशः ।
संपत्काले न ते धर्मः क्षीणस्तात सुहृद्भवैः ।
असंन्यासमतस्तत्र तेनासि हरिणः कृशः ।

[ G2 om. (hapl.) lines 1–4. —(L. 1) T1 सहाध्यायी स पुत्रो वा (for the prior half). T1 G1 M1.2.4 प्रमार्गगः; T2 °दकः; G3 M3 °गैतः (for °जैकः). —(L. 3) T1 G1.3 M वाति- (for ऽतीव). —(L. 4) D10 ज्येष्ठ- (for ज्येष्ठो). —(L. 5) T3 वा क्षतो; G3.4 विहतो (for वा हतो). —(L. 6) T3 M कालं (for काले). —T2 om. (hapl.) lines 7–8. —(L. 7) M वा वृद्धो (by transp.). T1 हृतदारो यथा वृद्धो (for the prior half). D10 G2 नरः (for नरैः). —T1 om. lines 8–9. —(L. 8) G4 अविज्ञातोथ वा वृद्धस् (for the prior half). —(L. 9) D10 G2 वार्धक्यार्थ-; M1–3 वार्धुकार्थे (for वार्धक्यार्थे). G3 स्मृता (for हृता). G4 श्रीर्वापि च परैः स्मृता (for the post. half). —(L. 10) T3 वृत्तिर्वाल्पजनापेक्षा (for the prior half). —T2.3 om. (hapl.) lines 11–12; M1–3 repeat the same after st. 24. —(L. 11) M1–3 (all both times).4 त्यक्तः (for तात). T1 क्षीणस्त्यक्तः सुहृज्जनैः (for the post. half). —T1 om. line 12. —(L. 12) M1–3 (all second time) -मातिस् (for -मतस्).]

22 G2 om. (hapl.) 22–26. D8 M1.3 om. (hapl.) 22–23. T1 transp. 21 and 22. —a) D10 T2.3 G1.3 M2.4 अद्य सतां; T1 अन्यस्सतां (for अर्थवतां). B1 (marg. as in text) लोके; D5 श्रेष्ठं (for मध्ये). —c) D1.5.8.9 नाभाति; T1 न भक्ति- (for न भाति). D2 निहतं; D5 निहिते; D7–9 निहितं; M4 [ऽ]भिहिते (for °तं). —After 22, T1 ins. 624*, and T2 repeats 15.

23 D8 G2 M1.3 om. 23 (cf. v.l. 22). T1 om. 23a–28b. T2 om. (hapl.) 23. —a) B1.3.5 Dn1.n2 D1.7 दृढपूर्वं; D8 दृष्टपूर्वं (for दृढपूर्वं-). Dn3 D10 T3 G1.3.4 दृष्टपूर्वाञ्श्रुतपू(D10 °तः पू-; G3.4 °तं पू)र्वान्; M2.4 दृष्टपूर्वं श्रुतपूर्वं. —b) D7 कुपितः (for °तं). D4 corrupt; D10 T3 G1.3.4 कुपितान्हृदयप्रियान्. —c) V1 B1 शक्नोमि; G1.3 M2.4 शक्नोसि (for शक्नोषि).

24 G2 om. 24 (cf. v.l. 22). T1 om. 24 (cf. v.l. 23). —a) V1 B Dn त्वां (for ते). D1.2 नूनं संयोजयित्वा ते (D2 त्वां); D4–9 M1–3 नूनमासज्ज्यित्वा ते; T3 नूनं मा संजनित्वा ते. —b) Dn3 कष्टे; G1.3 कृत्वा; M1–3 कृते (for कृत्ये). D7–9 [ईं]प्सितं (for °ते). —D9 om. 24cd. —c) T3 स्पृहयते (for अर्थे°). V1 B Dn D9 नित्यं; D2 ग्रार्थं; D1.5.7.8 कृत्यं; D10 व्यर्थं (for ऽत्यर्थं). T3 G1.3.4 कच्चित्स्पृहयसे नित्यं (T3 व्यर्थं). —After 24, the sequence in D5 is: 33, 26, 29, 27, 28, 30, 31, 32, 34 and 25. D6–8 read 33 after 24 and D9 after 24ab, all repeating it in its proper place. While D10 T2.3 G1.3.4 M4 ins. after 24: M1–3 after 16:

623* परोक्षवादिभिर्मिथ्या दोषस्ते संप्रदर्शितः ।
[ M1–3 संप्रकाशितः (for °दर्शितः).]

—After the above, D10 T2.3 G1.3.4 M read 18cd. M1–3 repeat lines 11–12 of 622* after 24.

25 For the sequence in D5, cf. v.l. 24. G2 om. 25 (cf. v.l. 22). T1 om. 25 (cf. v.l. 23). D4 M1 om. (hapl.) 25–26. M2.3 om. (hapl.) 25. —a) V1 B1.2.4 Dn2.n3 D2 त्वां स्व-; B5 त्वां स- (for त्वा स्व-). B3 नूनं त्वं सुगुणैः पक्षं (sic); Dn1 नूनं त्वां सुगुणैर्युक्तं; D6–9 नूनं त्वां सुगु(D6 सग-; D9 सगु)णोपेतान्; D10 T2.3 G1.3.4 M4 नूनं त्वां (M4 त्वा) सद्गुणापेक्षं. —b) V1 पूजमानं (for °यानं). Dn3 सुहृद्ध्रुवं; D3 हि तद्ध्रुवं; D10 T3 G1.3.4 सुहृत्प्रजाः; T2 M4 °जनाः (for °द्ध्रुवम्). —c) V1 महार्थं; B Dn3 D1 ममार्थं (for मयार्थं). Dn1.n2 ममार्थं इति जानीते; D6.7.9 मायार्थमिति जानंति; D10 T2.3 G1.3.4 M4 मायावीति च (G1.3 हि) जानंति. —After 25, D2 reads 28. While D6.7.9 read 35 after 25, repeating it in its proper place.

26 For the sequence in D5, cf. v.l. 24. G2 om. 26 (cf. v.l. 22). T1 om. 26 (cf. v.l. 23). D4 M1 om. 26 (cf. v.l. 25). —a) D2 अंतर्हृदिस्थ-भिप्रायं. —b) V1 B Dn नूनं नेच्छसि लज्जया; M2.3

नानाबुद्धिरुचींल्लोके मनुष्यान्नूनमिच्छसि ।
ग्रहीतुं स्वगुणैः सर्वांस्तेनासि हरिणः कृशः ॥ २७
अविद्वान्भीरुरल्पार्थो विद्याविक्रमदानजम् ।
यशः प्रार्थयसे नूनं तेनासि हरिणः कृशः ॥ २८
चिराभिलषितं किंचित्फलमप्राप्तमेव ते ।
कृतमन्यैरपहृतं तेनासि हरिणः कृशः ॥ २९
नूनमात्मकृतं दोषमपश्यन्किंचिदात्मनि ।
अकारणेऽभिशस्तोऽसि तेनासि हरिणः कृशः ॥ ३
सुहृदामप्रमत्तानामप्रमोक्ष्यार्थहानिजम् ।
दुःखमर्थगुणैर्हीनं तेनासि हरिणः कृशः ॥ ३१
साधून्गृहस्थान्दृष्ट्वा च तथासाधून्वनेचरान् ।
मुक्तांश्चावसथे सक्तांस्तेनासि हरिणः कृशः ॥ ३२
धर्म्यमर्थं च काले च देशे चाभिहितं वचः ।
न प्रतिष्ठति ते नूनं तेनासि हरिणः कृशः ॥ ३३

---

लज्जया त्वं न शक्ष्यसे. —c) V1 B Dn G1 विवेक्तुं (for विवक्तुं). D6-9 प्राप्त- (for प्राप्ति-). D6 -शैथिल्यस् (for °ल्यात्). — After 26, D6-9 read 29.

27 For the sequence in D6, cf. v. l. 24. T1 om. 27 (cf. v. l. 23). —a) V1 B Dn -बुद्धिरुचो (Dn3 °चा); D1, 2 °मतां; M3 °रुचिर् (for °रुचींल्लँ). —b) D10 T2 G M मानुषान्; T3 मानुषं (for मनुष्यान्). V1 लोकम् (for नूनम्). —c) Some MSS. गृहीतुं (for °ग्र). D1 स्वगणैः; D5 सगणैः; D10 S (T1 om.) स्वैर्गुणैः (for स्वगुणैः). D1 सर्वं; D1-9 सर्वैस् (for सर्वांस्). — After 27, D10 T2, 3 G M1-4 read 19–21.

28 For the sequence in D6, cf. v. l. 24. T1 om. 28ab (cf. v. l. 23). T2, 3 G2 om. (hapl.) 28. D2 reads 28 after 25. —a) Dn3 D1, 3, 4, 5 अत्यागी (for अल्पार्थो). B5 अंतर्गतमभिप्रायं (= 26a); D10 G1, 3, 4 M अविद्वद्भिरकल्या( G4 °कार्या )र्थैर्. —b) Dn3 विद्यां; D4, 6, 8, 9 नाना- (for विद्या-). D10 विद्यातिक्रमदानजं. — G1, 3, 4 M ins. after 28ab: T1 after 22: T2, 3 G2 cont. after 623*:

624* अलमर्थयसे हीनांस्तेनासि हरिणः कृशः ।

—c) D10 T1 G1, 3, 4 M1, 3, 4 नित्यं (for नूनं).

29 For the sequence in D6, cf. v. l. 24. D4 om. (hapl.) 29. D6-9 read 29 after 26. —a) D9 चिराभिलिखितं किंचित्. —b) V1 B1, 2 Dn2, n3 T3 संप्राप्तम्; B4 *प्राप्तम्; D6-9 अप्राप्त; D10 प्राप्तव्यम् (for अप्राप्तम्). Dn2 D10 T G1-3 M च; D4, 6-9 हि; G4 वा (for ते). —c) D1 स्वकृतम् (hypermetric) (for कृतम्). B4 Dn3 G4 उपहृतं (for अपहृतं). D5-9 कृतकृत्यैरपहृतं; D10 T1, 3 M हृतमन्यैरुपरुद्ध( T1 °द्ध-; T3 °भृ )तं; T2 G1-3 जातमन्यैरुपहृतं. — After 29, T2 reads 34, repeating it in its proper place.

30 For the sequence in D6, cf. v. l. 24. M4 om. (hapl.) 30. —b) V1 B Dn D2 आत्मनः; °ना (for °नि). —c) V1 B1, 3 Dn1, n2 D1, 2, 4- [ऽ]भिशप्तो; B4, 5 D1 (also) °शक्तो; D8 °पिक्तो (°शस्तो). D10 T2, 3 G1, 2, 4 हि (for ऽसि).

31 For the sequence in D6, cf. v. l. 24. G2 om. (hapl.) 31–32. T1 om. (hapl.) 31–35. om. (hapl.) 31. —a) V1 B1-4 Dn D8 G4 सुह (Dn3 °दो) दुःखमार्तानां; D10 T3 °दां संप्रमत्तानां; M1 °दामर्थकामानां. —b) V1 B1-4 Dn G4 न प्रमोक्ष्य हानि( B1 जाति )जं; D4 अप्रमोक्षाय योजितं; D6-7 अप्रमोक्षार्थयोजिनां (D9 °नं); D8 अप्रमोक्षसि जाति D10 T2 G1, 3 न( T3 अ )प्रामाण्यमजानतां; M न प्रम ष्ठ्यर्थजातजं. —c) V1 B1-4 Dn D8 G4 अलम्; M1 अर्थम् (for दुःखम्). D4-7, 9 अर्थयसे (for °गुणैर् V1 B1, 2 Dn2, n3 D1 M3, 4 हीनस्; D8 नूनं (for हीनं D10 T2 G1, 3 आगतोर्थगुणैर्हीनैस्.

32 For the sequence in D6, cf. v. l. 24. B5 T G2 om. 32 (cf. v. l. 31). —a) D7 दृष्टांश्( for दृष्ट्वा) D4 [अ]थ; D6, 8, 9 [आ]शु (for च). —c) D1 [आ] त्मपथे (for [आ]वसथे). B1, 4 युक्तांस (for सक्तांस्) B3 मुक्तांश्चावसथासक्तांस्; D6, 7, 9 °वस्तुपथे सक्तांस् (sic).

33 For the sequence in D6, cf. v. l. 24. T. om. 33 (cf. v. l. 31). D6-9 read 33, for the first time, after 24. —a) B1 D4, 6, 7 (last two both times), 8 (first time), 9 (both times), 10 T2, 3 G M धर्मम् (for धर्म्यम्). Dn1, n3 M1-3 अर्थ्यं (for अर्थं). Dn काम्यं; D6-9 (all both times) T2, 3 G4 M4 कामं (for काले). —b) B3, 4 Dn काले (for देशे). B4 न; D2 वा (for च). D10 T2 G1, 3, 4 रहितं (for [अ]-भिहितं). V1 B6 काले चा( B5 °लेना )पि हितं वचः. —c) V1 B Dn1, n2 प्रतीयंति; D6 प्रतीप्यते; D10 T2, 3 G M1-3 प्रसिध्यति (for प्रतिष्ठति). Dn3 प्रतियंति न

दत्तानकुशलैरर्थान्मनीषी संजिजीविषुः ।
प्राप्य वर्तयसे नूनं तेनासि हरिणः कृशः ॥ ३४
पापान्विवर्धतो दृष्ट्वा कल्याणांश्चावसीदतः ।
ध्रुवं मृगयसे योग्यं तेनासि हरिणः कृशः ॥ ३५
परस्परविरुद्धानां प्रियं नूनं चिकीर्षसि ।
सुहृदामविरोधेन तेनासि हरिणः कृशः ॥ ३६
श्रोत्रियांश्च विकर्मस्थान्प्राज्ञांश्चाप्यजितेन्द्रियान् ।
मन्येऽनुध्यायसि जनांस्तेनासि हरिणः कृशः ॥ ३७
एवं संपूजितं रक्षो विप्रं तं प्रत्यपूजयत् ।
सखायमकरोच्चैनं संयोज्यार्थैर्मुमोच ह ॥ ३८

इति श्रीमहाभारते अनुशासनपर्वणि पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥

# १२६

युधिष्ठिर उवाच ।
पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
आगमैर्बहुभिः स्फीतो भवान्नः प्रथितः कुले ॥ १
त्वत्तो धर्मार्थसंयुक्तमायत्यां च सुखोदयम् ।

C. 13.
B. 13.
K. sub
M. sub

ते नूनं.

34 For the sequence in $D_5$, cf. v. l. 24. $T_1$ om. 34 (cf. v. l. 31). $T_2$ reads 34, for the first time, after 29. —[a]) $B_5$ दत्त्वा सन्कुशलैरर्थान्; $D_{10}$ $T_2$ (both times), $_3$ G $M_4$ दत्वा ते( $T_3$ °त्वाने )न कुशेनार्थं. —[c]) $D_{5-9}$ वर्तयते (for °से).

35 $T_1$ om. 35 (cf. v. l. 31). $M_1$ om. (hapl.) 35. $D_{6,7,9}$ read 35, for the first time, after 25. —[a]) $V_1$ अवर्धतो; $B_{1-4}$ Dn प्रवर्धतो; $B_5$ प्रकुर्वतो; $D_{6,7,9}$ (all first time) च वर्धतो; $D_{10}$ $T_{2,3}$ $G_{1,2,4}$ विवर्धितान्; $G_3$ °र्धतां (for °र्धतो). —[b]) $V_1$ B Dn $D_2$ अव- (for चाव-). $D_{6,7}$ (both first time) कल्याणांश्चाप्यवर्धतः; $D_9$ (first time) °श्चाथ वर्धत. —[c]) $D_8$ गर्हयसे (for मृग°). $D_{6,7,9}$ (all first time), $_{10}$ $T_{2,3}$ $G_{2,4}$ $M_{2-4}$ नूनं (for योग्यं). $V_1$ B Dn ध्रुवं गर्हयसे नित्यं; $G_{1,3}$ नूनं मृगयसे नूनं.

36 $D_{10}$ $T_{2,3}$ G $M_4$ om. (hapl.) 36–37. $M_{1-3}$ transp. 36 and 37. —[c]) $V_1$ B Dn $D_{2,5}$ सुहृदामुपरोधेन.

37 $D_{10}$ $T_{2,3}$ G $M_4$ om. 37 (cf. v. l. 36). $Dn_3$ om. (hapl.) 37. $M_{1-3}$ transp. 36 and 37. —[b]) $D_{5,7}$ $T_1$ प्राज्ञांश्चाविजितेंद्रियान्. —[c]) $T_1$ सान्यान्न (for मन्येऽनु-). —[d]) $V_1$ [ऽ]पि (for [ऽ]सि).

38 Before 38, $T_1$ ins. भीष्मः. —[a]) $V_1$ $D_{2,10}$ $T_{2,3}$ G संपूजितो (for °तं). —[b]) $B_5$ $D_1$ विप्रं तं प्रतिपूजयेत्. —[c]) $D_{1,4-7,9,10}$ $T_{2,3}$ $G_{2,4}$ सहायम् (for सखा°). —[d]) $Dn_2$ संयोज्यार्थें; $D_{4-9}$ संपूज्यार्थो ($D_{8,9}$ °र्थ); $D_{10}$ $T_{2,3}$ $G_{1,2,4}$ M संपूज्यासुं (for संयोज्यार्थैर्). $B_{2,4}$ $Dn_3$ $D_1$ $T_1$ च (for ह).

Colophon. — *Parvan name:* $B_{1-4}$ $Dn_3$ $D_1$ शांति. — *Sub-parvan:* $V_1$ $B_{1-3,5}$ Dn $D_{1,2,6,7,9,10}$ दानधर्म. — *Adhy. name:* $V_1$ $B_{2,4,5}$ $Dn_{1,n2}$ हरिणकृशकः; $B_1$ $Dn_3$ हरिणकृशः; $D_2$ कृशीयं; $D_{4-9}$ हरिणकृशीयं. — *Adhy. no.* (figures, words or both): $V_1$ 124; $B_5$ 114; $Dn_1$ 122; $D_{10}$ $T_{2,3}$ $G_{2,4}$ 184; $T_1$ 176; $G_{1,3}$ $M_1$ 178; $M_{2,3}$ 179; $M_4$ 177. — *Śloka no.:* $Dn_{1,n2}$ 39. — After this adhy., $V_1$ B Dn $D_{1,2,4-9}$ Cv ins. passages given in App. I (Nos. 14, 14A and 14B).

## 126

☞ This adhy. is missing in $D_3$ (cf. v. l. 13. 82. 37). For adhys. 126–134, $D_{10}$ S subst. a passage given in App. I (No. 15).

1 [a]) $D_1$ महाप्रज्ञ. —[d]) $V_1$ $B_{1,4,5}$ $Dn_{1,n2}$ प्रवरे;

2 आश्चर्यभूतं लोकस्य श्रोतुमिच्छाम्यरिंदम ॥ २
अयं च कालः संप्राप्तो दुर्लभज्ञातिबान्धवः ।
शास्ता च न हि नः कश्चित्त्वामृते भरतर्षभ ॥ ३
यदि तेऽहमनुग्राह्यो भ्रातृभिः सहितोऽनघ ।
वक्तुमर्हसि नः प्रश्नं यत्त्वां पृच्छामि पार्थिव ॥ ४
अयं नारायणः श्रीमान्सर्वपार्थिवसंमतः ।
भवन्तं बहुमानेन प्रश्रयेण च सेवते ॥ ५
अस्य चैव समक्षं त्वं पार्थिवानां च सर्वशः ।
भ्रातॄणां च प्रियार्थं मे स्नेहाद्भाषितुमर्हसि ॥ ६

वैशंपायन उवाच ।

तस्य तद्वचनं श्रुत्वा स्नेहादागतसंभ्रमः ।
भीष्मो भागीरथीपुत्र इदं वचनमब्रवीत् ॥ ७
हन्त ते कथयिष्यामि कथामतिमनोरमाम् ।
अस्य विष्णोः पुरा राजन्प्रभावोऽयं मया श्रुतः ॥ ८
यश्च गोवृषभाङ्कस्य प्रभावस्तं च मे शृणु ।
रुद्राण्याः संशयो यश्च दंपत्योस्तं च मे शृणु ॥ ९
व्रतं चचार धर्मात्मा कृष्णो द्वादशवार्षिकम् ।
दीक्षितं चागतौ द्रष्टुमुभौ नारदपर्वतौ ॥ १०
कृष्णद्वैपायनश्चैव धौम्यश्च जपतां वरः ।
देवलः काश्यपश्चैव हस्तिकाश्यप एव च ॥ ११
अपरे ऋषयः सन्तो दीक्षादमसमन्विताः ।
शिष्यैरनुगताः सर्वे देवकल्पैस्तपोधनैः ॥ १२
तेषामतिथिसत्कारमर्चनीयं कुलोचितम् ।
देवकीतनयः प्रीतो देवकल्पमकल्पयत् ॥ १३
हरितेषु सुवर्णेषु बर्हिष्केषु नवेषु च ।
उपोपविविशुः प्रीता विष्टरेषु महर्षयः ॥ १४
कथाश्चक्रुस्ततस्ते तु मधुरा धर्मसंहिताः ।
राजर्षीणां सुराणां च ये वसन्ति तपोधनाः ॥ १५
ततो नारायणं तेजो व्रतचर्येन्धनोत्थितम् ।
वक्त्रान्निःसृत्य कृष्णस्य वह्निरद्भुतकर्मणः ॥ १६

$B_{2.3}$ $D_{4}$ प्रथिते; $Dn_{3}$ प्रथमे ( for प्रथितः ).

2 $^{c}$) $B_{3}$ लोकं च ( for लोकस्य ).

3 $^{a}$) $D_{1}$ स; $D_{4.5.8.9}$ हि ( for च ). — $^{b}$) $V_{1}$ B $Dn_{1.n3}$ $D_{6-9}$ दुर्लभो ( for दुर्लभ- ). $Dn_{2}$ $D_{2.5}$ दुर्लभो ज्ञातिबांधवैः; $D_{4}$ दुर्लभं ज्ञातिबांधवं. — $^{c}$) $D_{1}$ नैवास्ति; $D_{4-8}$ नास्ति न ( $D_{5}$ च ) ( for च न हि ). — $^{d}$) $D_{5}$ त्वद् ( for त्वाम् ). $V_{1}$ B Dn $D_{4.5.8.9}$ पुरुषर्षभ.

4 $D_{2}$ om. 4. — $^{b}$) $Dn_{2}$ $D_{4.6-9}$ नृप ( for ऽनघ ). — $^{c}$) $B_{3}$ $Dn_{2}$ $D_{4.5}$ यं ( for यत् ). $V_{1}$ $B_{4.5}$ $D_{9}$ वक्ष्यामि ( for पृच्छामि ). $D_{4-8}$ भारत ( for पार्थिव ).

5 $^{a}$) $D_{6-9}$ स्वयं ( for अयं ). — $^{b}$) $B_{1}$ $Dn_{1}$ $D_{2.5}$ -सत्तमः ( for -संमतः ).

6 $^{a}$) $B_{3}$ तस्य ( for अस्य ). — $^{b}$) $D_{6.7}$ प्रार्थयानं ( for पार्थिवानां ).

7 $^{a}$) $D_{2}$ तथा ( for तस्य ).

8 Before 8, $V_{1}$ B Dn $D_{1.2.4-9}$ ins. भीष्म उवाच. — $^{a}$) $V_{1}$ $B_{1.4.5}$ Dn $D_{4.5}$ अहं ( for हन्त ). — $^{b}$) $B_{2.3}$ चित्रां ( for अति- ). B Dn $D_{4.5}$ -मनोहरां ( for -मनोरमाम् ). — $^{cd}$) $D_{1}$ यस्य ( for अस्य ). $D_{2}$ transp. पुरा राजन् and प्रभावोऽयं.

9 $^{a}$) $D_{5}$ यस्य ( for यश्च ). — $^{b}$) $B_{4}$ प्रभावं च ( for °वस्तं ). $B_{4}$ om. च. — $B_{5}$ om. (hapl.) $9^{cd}$. — $^{d}$) $D_{4-9}$ तच् ( for तं ).

10 $^{d}$) $B_{3}$ उभौ पर्वतनारदौ.

11 $^{c}$) $D_{1}$ कश्यपश्; $D_{1-9}$ कौशिकश् ( for काश्यपश् ). — $^{d}$) $B_{1}$ $D_{1}$ -कश्यप ( for -काश्यप ).

12 $^{a}$) $V_{1}$ B Dn चर्षयः ( for ऋषयः ). — $^{b}$) $B_{1.2}$ $Dn_{3}$ -शमान्विताः ( for -सम° ). — $^{c}$) $V_{1}$ $B_{1-4}$ $Dn_{1.n3}$ सिद्धैर्; $Dn_{2}$ सद्भिर् ( for सर्वे ).

13 $^{b}$) $D_{6-9}$ अर्चनीय-. — $^{d}$) $B_{1}$ -तुल्यम् ( for -कल्पम् ).

14 $^{a}$) $D_{1.6}$ सवर्णेषु ( for सु° ). — $^{b}$) $B_{1}$ बर्हिष्मत्सु ( for बर्हिष्केषु ). — $^{c}$) $D_{6-7}$ सर्वे ( for प्रीता ).

15 $^{a}$) $D_{8}$ तत्र ( for ततस् ). — $^{c}$) $D_{4-9}$ पुराणानां ( for सुराणां च ). — $^{d}$) $B_{2.3}$ $D_{2.8}$ च संति ( for वसन्ति ).

16 $^{b}$) $D_{6-9}$ ब्रह्म- ( for व्रत- ). — $D_{1}$ om. (hapl.)

सोऽग्निर्ददाह तं शैलं सद्रुमं सलताक्षुपम् ।
सपक्षिमृगसंघातं सश्वापदसरीसृपम् ॥ १७
मृगैश्च विविधाकारैर्हाहाभूतमचेतनम् ।
शिखरं तस्य शैलस्य मथितं दीप्तदर्शनम् ॥ १८
स तु वह्निर्महाज्वालो दग्ध्वा सर्वमशेषतः ।
विष्णोः समीपमागम्य पादौ शिष्यवदस्पृशत् ॥ १९
ततो विष्णुर्वनं दृष्ट्वा निर्दग्धमरिकर्शनः ।
सौम्यैर्दृष्टिनिपातैस्तत्पुनः प्रकृतिमानयत् ॥ २०
तथैव स गिरिर्भूयः प्रपुष्पितलताद्रुमः ।
सपक्षिगणसंघुष्टः सश्वापदसरीसृपः ॥ २१
तदद्भुतमचिन्त्यं च दृष्ट्वा मुनिगणस्तदा ।
विस्मितो हृष्टलोमा च बभूवास्राविलेक्षणः ॥ २२
ततो नारायणो दृष्ट्वा तानृषीन्विस्मयान्वितान् ।
प्रश्रितं मधुरं स्निग्धं पप्रच्छ वदतां वरः ॥ २३
किमस्य ऋषिपूगस्य त्यक्तसङ्गस्य नित्यशः ।
निर्ममस्यागमवतो विस्मयः समुपागतः ॥ २४
एतं मे संशयं सर्वं याथातथ्यमनिन्दिताः ।
ऋषयो वक्तुमर्हन्ति निश्चितार्थं तपोधनाः ॥ २५

ऋषय ऊचुः ।

भवान्विसृजते लोकान्भवान्संहरते पुनः ।
भवाञ्शीतं भवानुष्णं भवानेव प्रवर्षति ॥ २६
पृथिव्यां यानि भूतानि स्थावराणि चराणि च ।
तेषां पिता त्वं माता च प्रभुः प्रभव एव च ॥ २७
एतन्नो विस्मयकरं प्रशंस मधुसूदन ।
त्वमेवार्हसि कल्याण वक्तुं वह्नेर्विनिर्गमम् ॥ २८
ततो विगतसंत्रासा वयमप्यरिकर्शन ।
यच्छ्रुतं यच्च दृष्टं नस्तत्प्रवक्ष्यामहे हरे ॥ २९

वासुदेव उवाच ।

एतत्तद्वैष्णवं तेजो मम वक्त्राद्विनिःसृतम् ।
कृष्णवर्त्मा युगान्ताभो येनायं मथितो गिरिः ॥ ३०
ऋषयश्चार्तिमापन्ना जितक्रोधा जितेन्द्रियाः ।
भवन्तो व्यथिताश्चासन्देवकल्पास्तपोधनाः ॥ ३१

C. 13. 6
B. 13. 1
K. subs
M. subs

---

$16^{d}$–$18^{c}$.

17 $D_1$ om. 17 (cf. v. l. 16). —$^{b}$) $D_{8.9}$ ·लतान्वितं (for °क्षुपम्). —$^{c}$) $B_{2.3}$ ·गण· (for ·मृग·).

18 $D_1$ om. $18^{abc}$ (cf. v. l. 16). —$^{a}$) $D_{4-9}$ मृगैश्च शतधाकीर्णं. —$^{d}$) B Dn $D_{2.4}$ दीन· (for दीप्त·).

19 $^{c}$) $Dn_{1.n2}$ समीप (for °पम्).

20 $^{a}$) $V_1$ B Dn $D_{2.8}$ गिरिं (for वनं). —$^{b}$) Some MSS. ·कर्षणः (for ·कर्शनः). —$^{c}$) B Dn तं; $D_{4.6}$ तु; $D_8$ च (for तत्).

21 $^{a}$) $B_{1.3}$ अथ (for तथा). —$^{b}$) $D_{4.5}$ ·फल· (for ·लता·). $D_{6-9}$ स पुष्पितफलद्रुमः. —$^{c}$) $V_1$ ·संघुष्टैः (for °ष्टः).

22 $^{a}$) $V_1$ $B_5$ Dn तम् (for तद्). —$^{c}$) Some MSS. हृष्टरोमा.

24 $^{c}$) $V_1$ B Dn $D_2$ किमर्थं (for °स्य). $D_7$ ·संघस्य (for ·पूगस्य). —$^{d}$) $D_{4.5}$ सत्यसंधस्य नित्यशः. —$^{d}$) $V_1$ B Dn $D_5$ विस्मयः समुपागमत्.

25 $^{a}$) $Dn_{1.n2}$ सर्वं. —$^{b}$) $V_1$ $Dn_{1.n2}$ $D_1$ यथातथ्यम्. —$^{d}$) $D_{6-9}$ निश्चयार्थं (for निश्चितार्थं).

26 $^{a}$) $D_5$ हि (for वि·). —$^{d}$) $B_1$ तु; $B_{2-5}$ $Dn_{1.n2}$ च (for प्र·).

27 $^{a}$) $B_3$ भवानेव च भूतानि. —$^{b}$) $D_{1.2}$ त्रसानि ($D_2$ चराणि) स्थावराणि च. —$^{c}$) $B_3$ $Dn_3$ $D_{6.7.9}$ त्वं (for च). —$^{d}$) $D_1$ विभुः (for प्रभुः). $D_7$ तु (for च).

28 $^{a}$) $V_1$ B (except $B_1$) Dn एवं (for एतन्). —$^{b}$) $V_1$ B Dn $D_{6-8}$ संशयं; $D_4$ विस्मयं (for प्रशंस). —$^{c}$) $B_{2.3}$ वक्तुम् (for त्वमेव). —$^{d}$) $B_{2.3}$ वक्त्राद् (for वक्तुं).

29 $^{b}$) Some MSS. ·कर्षण (for ·कर्शन). —$^{c}$) $D_1$ नो दृष्टं (by transp.).

30 $^{a}$) B Dn $D_{2.5}$ वै (for तद्). —$^{b}$) $D_6$ वक्त्र· (for वक्त्राद्).

84

319 39. 33 st. st. व्रतचर्यापरीतस्य तपस्विव्रतसेवया ।
मम वह्निः समुद्भूतो न वै व्यथितुमर्हथ ॥ ३२
व्रतं चर्तुमिहायातस्त्वहं गिरिमिमं शुभम् ।
पुत्रं चात्मसमं वीर्ये तपसा स्रष्टुमागतः ॥ ३३
ततो ममात्मा यो देहे सोऽग्निर्भूत्वा विनिःसृतः ।
गतश्च वरदं द्रष्टुं सर्वलोकपितामहम् ॥ ३४
तेन चात्मानुशिष्टो मे पुत्रत्वे मुनिसत्तमाः ।
तेजसोऽर्धेन पुत्रस्ते भवितेति वृषध्वजः ॥ ३५
सोऽयं वह्निरुपागम्य पादमूले ममान्तिकम् ।
शिष्यवत्परिचर्यार्थं शान्तः प्रकृतिमागतः ॥ ३६
एतदस्य रहस्यं वः पद्मनाभस्य धीमतः ।
मया प्रेम्णा समाख्यातं न भीः कार्या तपोधनाः ॥३७
सर्वत्र गतिरव्यग्रा भवतां दीर्घदर्शनाः ।
तपस्विव्रतसंदीप्ता ज्ञानविज्ञानशोभिताः ॥ ३८
यच्छ्रुतं यच्च वो दृष्टं दिवि वा यदि वा भुवि ।
आश्चर्यं परमं किंचित्तद्भवन्तो ब्रुवन्तु मे ॥ ३९
तस्यामृतनिकाशस्य वाङ्मधोरस्ति मे स्पृहा ।
भवद्भिः कथितस्येह तपोवननिवासिभिः ॥ ४०
यद्यप्यहमदृष्टं वा दिव्यमद्भुतदर्शनम् ।
दिवि वा भुवि वा किंचित्पश्याम्यमलदर्शनाः ॥ ४१
प्रकृतिः सा मम परा न क्वचित्प्रतिहन्यते ।
न चात्मगतमैश्वर्यमाश्चर्यं प्रतिभाति मे ॥ ४२
श्रद्धेयः कथितो ह्यर्थः सज्जनश्रवणं गतः ।
चिरं तिष्ठति मेदिन्यां शैले लेख्यमिवार्पितम् ॥ ४३
तदहं सज्जनमुखान्निःसृतं तत्समागमे ।
कथयिष्याम्यहरहर्बुद्धिदीपकरं नृणाम् ॥ ४४
ततो मुनिगणाः सर्वे प्रश्रिताः कृष्णसंनिधौ ।
नेत्रैः पद्मदलप्रख्यैरपश्यन्त जनार्दनम् ॥ ४५
वर्धयन्तस्तथैवान्ये पूजयन्तस्तथापरे ।
वाग्भिर्ऋग्भूषितार्थाभिः स्तुवन्तो मधुसूदनम् ॥ ४६

32 [a]) D4–9 ब्रह्मचर्यपरीतस्य. — [b]) D4.5 तपस्वी (for °स्वि-). — [c]) D4–9 समुत्पन्नो (for °द्भूतो).

33 [b]) D4.6–9 स्वयं (for त्वहं). Dn8 गिरिवरं (for °मिमं). B8 द्रुतं (for शुभम्). — [d]) V1 B Dn D5 लब्धुम् (for स्रष्टुम्).

34 [a]) V1 महात्मा यो; D5 ममात्मजो (for °त्मा यो). — [b]) D7 विनिर्गतः (for विनिःसृतः).

35 [a]) V1 -सृष्टो (for -शिष्टो).

36 [a]) D6.8 तथागम्य (for उपा°). — [c]) B1.5 Dn1.n2 परिचर्यार्थं; D2 °पाल्यार्थ (for °चर्यार्थ). — [d]) V1 B4.5 D5.6 शांतिं (for शान्तः).

37 [a]) V1 B Dn D4–6 एव; D7–9 देव- (for अस्य). D4–8 च (for वः). — [b]) B3 पद्मगर्भस्य धीमतः. — [c]) V1 B Dn मया प्रोक्तं समासेन; D5 मम वर्त्मानुगं ख्यातं.

38 D4–9 om. (hapl.) 38[ab]; Dn3 reads it on marg. — [b]) D1 दिव्य- (for दीर्घ-). B1.3–5 Dn1.n2 -दर्शनात् (for °नाः). — [c]) B5 भवंतो (for तपस्वि-). — [d]) B3 -संयुताः (for -शोभिताः).

39 [a]) D2.4–9 वै (for वो).

41 [a]) V1 B Dn2.n3 D8 वो (for वा). — [d]) V1 B Dn1.n3 D4–9 [अ]मर- (for [अ]मल-). Dn2 पश्याम्यमरदर्शनात्.

42 [c]) B3 Dn2 [अ]नु-; B4.5 [अ]व- (for [आ]त्म-). D1.2.4–9 आश्चर्यम् (for ऐश्वर्यम्). — [d]) D1.2 इति (for प्रति-). V1 B4.5 Dn ह; B1 वा; D6 हि (for मे). B2.3 आश्चर्यं प्रतिहन्य(B2 °पद्य)ते.

43 [b]) D4–9 सज्जनाच् (for सज्जन-). — [d]) D1.2 [आ]गतं (for [अ]र्पितम्).

44 [c]) V1 B1–3 D4.6–9 अहरहो; Dn D5 °महो (for °रहर्). — [d]) D2 -प्रदीपकं (for -दीपकरं).

45 [b]) V1 B Dn विस्मिताः (for प्रश्रिताः). — [d]) V1 B Dn D2 अपश्यंस्तं (for °श्यन्त).

46 [a]) D4–9 कथयंतस् (for वर्ध°). — [c]) B4 D5 वाग्भिर्ऋग्भूषितात्माभिः; D4 °रिष्टाभिर्भूतार्थं.

47 [a]) B4 तदा (for ततो). D4.5 देवगणाः (for मुनि°). — [b]) D4–9 -वर्चसं (for -दर्शनम्). — [c]) B4

ततो मुनिगणाः सर्वे नारदं देवदर्शनम् ।
तदा नियोजयामासुर्वचने वाक्यकोविदम् ॥ ४७
यदाश्चर्यमचिन्त्यं च गिरौ हिमवति प्रभो ।
अनुभूतं मुनिगणैस्तीर्थयात्रापरायणैः ॥ ४८
तद्भवानृषिसंघस्य हितार्थं सर्वचोदितः ।
यथादृष्टं हृषीकेशे सर्वमाख्यातुमर्हति ॥ ४९
एवमुक्तः स मुनिभिर्नारदो भगवानृषिः ।
कथयामास देवर्षिः पूर्ववृत्तां कथां शुभाम् ॥ ५०

इति श्रीमहाभारते अनुशासनपर्वणि षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥

# १२७

भीष्म उवाच ।
ततो नारायणसुहृन्नारदो भगवानृषिः ।
शंकरस्योमया सार्धं संवादं प्रत्यभाषत ॥ १
तपश्चचार धर्मात्मा वृषभाङ्कः सुरेश्वरः ।
पुण्ये गिरौ हिमवति सिद्धचारणसेविते ॥ २
नानौषधियुते रम्ये नानापुष्पसमाकुले ।
अप्सरोगणसंकीर्णे भूतसंघनिषेविते ॥ ३
तत्र देवो मुदा युक्तो भूतसंघशतैर्वृतः ।
नानारूपैर्विरूपैश्च दिव्यैरद्भुतदर्शनैः ॥ ४
सिंहव्याघ्रगजप्रख्यैः सर्वजातिसमन्वितैः ।
क्रोष्टुकद्वीपिवदनैरृक्षर्षभमुखैस्तथा ॥ ५
उलूकवदनैर्भीमैः श्येनभासमुखैस्तथा ।
नानावर्णमृगप्रख्यैः सर्वजातिसमन्वयैः ।
किंनरैर्देवगन्धर्वैर्यक्षभूतगणैस्तथा ॥ ६

C. 13,
B. 13,
K. su
M. su

---

यदा ( for तदा ). $D_1$ नियोजयामास तदा. — $^d$) $V_1$ $B_{1-4}$ $D_{2.4}$ वचनं ( for °ने ).

48 Before 48, $Dn_{1.}$ $n_2$ ins. मुनयः; $D_{1.2.4-9}$ ऋषयः. — $^d$) $V_1$ $B_{1.2.4.5}$ Dn -परैर्मुने; $B_3$ -पराश्च ये ( for -परायणैः ).

49 $^b$) $V_1$ B Dn $D_{4-9}$ हितार्थं सर्वमादितः. — $^d$) $D_1$ व्याख्यातुम् ( for आख्या° ). $V_1$ $B_{1.3}$ Dn $D_{4-9}$ अर्हसि ( for °ति ).

50 $^b$) $V_1$ B Dn मुनिः ( for ऋषिः ). — $^d$) $B_{1.2.4.5}$ Dn इमां कथां; $B_3$ कथामिमां ( for कथां शुभाम् ). $D_4$ कथामेतां नरर्षभ; $D_{5-9}$ कथां दिव्यां मनोहरां.

Colophon. — *Parvan name:* $B_{1-4}$ $Dn_3$ शांति. — *Sub-parvan:* $V_1$ B Dn $D_{1.2.4}$ दानधर्म. — *Adhy. name:* $V_1$ B Dn $D_{1.2.4}$ उमामहेश्वरसंवादः; $D_{5-9}$ उमासंवादः. — *Adhy. no.* (figures, words or both): $V_1$ $D_{6.7}$ 139; $Dn_1$ 135. — *Śloka no.:* $Dn_1$ 50; $Dn_2$ 51.

## 127

☞ This adhy. is missing in $D_3$ ( cf. v. l. 13. 82. 37 ).

1 $V_1$ om. the ref. — $^b$) $V_1$ अपि ( for ऋषिः ). $D_{1.2}$ नारदो वदतां वरः.

2 $D_6$ om. 2. — $^b$) $D_4$ सुदुष्करं; $D_{5.8}$ सुदुश्चरं ( $D_8$ °रः ); $D_9$ स दुश्चरं ( for सुरेश्वरः ).

3 $D_4$ om. (hapl.) $3^d$–$4^a$. — $^d$) $B_5$ -निवेशिते ( for -निषेविते ).

4 $D_4$ om. $4^a$ ( cf. v. l. 3 ). — $^b$) $D_4$ युतैः ( for वृतः ). — $^d$) $Dn_2$ -दर्शनः.

5 $^b$) $B_3$ $D_{4.6.7.9}$ -समन्वयैः ( for °न्वितैः ). — $^d$) $D_{4-9}$ यक्षर्षभ- ( for ऋक्ष° ).

6 $^b$) $V_1$ $B_{3-5}$ $Dn_1$ वृकश्येन-; $B_{1.2}$ बकश्येन- ( for श्येनभास- ). — $D_2$ om. (hapl.) $6^{cdef}$. — $^c$) $V_1$ B Dn नानावर्णैर्मृगमुखैः. — $^d$) $V_1$ $B_{1.3.4}$ Dn -समन्वितैः ( for °न्वयैः ). — $^e$) $B_{1.3-5}$ $Dn_{1.}$ $n_3$ यक्ष- ( for देव- ).

दिव्यपुष्पसमाकीर्णं दिव्यमालाविभूषितम् ।
दिव्यचन्दनसंयुक्तं दिव्यधूपेन धूपितम् ।
तत्सदो वृषभाङ्कस्य दिव्यवादित्रनादितम् ॥ ७
मृदङ्गपणवोद्घुष्टं शङ्खभेरीनिनादितम् ।
नृत्यद्भिर्भूतसंघैश्च बर्हिणैश्च समन्ततः ॥ ८
प्रनृत्ताप्सरसं दिव्यं दिव्यस्त्रीगणसेवितम् ।
दृष्टिकान्तमनिर्देश्यं दिव्यमद्भुतदर्शनम् ॥ ९
स गिरिस्तपसा तस्य भूतेशस्य व्यरोचत ॥ १०
स्वाध्यायपरमैर्विप्रैर्ब्रह्मघोषैर्विनादितः ।
षट्पदैरुपगीतैश्च माधवाप्रतिमो गिरिः ॥ ११
तं महोत्सवसंकाशं भीमरूपधरं पुनः ।
दृष्ट्वा मुनिगणस्यासीत्परा प्रीतिर्जनार्दन ॥ १२
मुनयश्च महाभागाः सिद्धाश्चैवोर्ध्वरेतसः ।
मरुतो वसवः साध्या विश्वेदेवाः सनातनाः ॥ १३
यक्षा नागाः पिशाचाश्च लोकपाला हुताशनाः ।
भावाश्च सर्वे न्यग्भूतास्तत्रैवासन्समागताः ॥ १४
ऋतवः सर्वपुष्पैश्च व्यकिरन्त महाद्भुतैः ।
ओषध्यो ज्वलमानाश्च द्योतयन्ति स्म तद्वनम् ॥ १५
विहगाश्च मुदा युक्ताः प्रानृत्यन्व्यनदंश्च ह ।
गिरिपृष्ठेषु रम्येषु व्याहरन्तो जनप्रियाः ॥ १६
तत्र देवो गिरितटे दिव्यधातुविभूषिते ।
पर्यङ्क इव विभ्राजन्नुपविष्टो महामनाः ॥ १७
व्याघ्रचर्माम्बरधरः सिंहचर्मोत्तरच्छदः ।
व्यालयज्ञोपवीती च लोहिताङ्गदभूषणः ॥ १८
हरिश्मश्रुर्जटी भीमो भयकर्ता सुरद्विषाम् ।
अभयः सर्वभूतानां भक्तानां वृषभध्वजः ॥ १९
दृष्ट्वा तमृषयः सर्वे शिरोभिरवनीं गताः ।
विमुक्ताः सर्वपापेभ्यः क्षान्ता विगतकल्मषाः ॥ २०
तस्य भूतपतेः स्थानं भीमरूपधरं बभौ ।
अप्रधृष्यतरं चैव महोरगसमाकुलम् ॥ २१

---

V1 B3 Dn2 किंनरैर्यक्षगंधर्वै-. — $^{f}$) Dn -रक्षोभूत- (for यक्ष°).

7 $^{b}$) V1 B Dn दिव्यज्वाला( B2 °ज्ञान )समाकुलं; D4–9 °ज्वालासमन्वितं ( D4 °तैः ). — D1 om. ( hapl. ) $7^{c}$–$8^{b}$. D9 repeats $7^{d}$–$8^{d}$ after the second occurrence of $9^{a}$. — $^{d}$) B3 -धूपोप- (for -धूपेन). D4, 8, 9 ( both times ) दिव्यधूपसमन्वितं. — $^{f}$) V1 B1, 2, 4 Dn3 D4–7, 9 ( both times ) -वादितं (for -ना° ).

8 For the repetition in D9, cf. v. l. 7. D1 om. $8^{ab}$ ( cf. v. l. 7 ). D2 om. (hapl.) $8^{ab}$. — $^{a}$) B3, 4 मृदंगपणवैर्जुष्टं; D4–6 °पणवाघुष्टं. — $^{d}$) D6, 7 बर्हणैश्च.

9 D9 reads $9^{a}$ twice and repeats $7^{d}$–$8^{d}$ after the second occurrence of $9^{a}$. — $^{a}$) D6–7 प्रनृत्ताप्सरसंघैश्च. — $^{b}$) V1 B2, 4, 5 Dn D8 देवर्षि- (for दिव्यस्त्री-). D4–7, 9 -नादितं ( for -सेवितम् ). B1, 3 देवर्षिगणसंवृतं.

10 $^{b}$) V1 B Dn गिरिशस्य (for भूते°).

11 $^{b}$) V1 Dn3 D4, 7 निनादितः ( for वि° ). B Dn1, n2 ब्रह्मघोषनिनादितः; D5 °षविनादिभिः. — D4 om. $11^{c}$–$12^{b}$. — $^{c}$) V1 B ( except B5 ) Dn3 उपगीतश्च.

12 D4 om. $12^{ab}$ (cf. v. l. 11 ). — $^{a}$) B2 ( marg. as in text ). 3 महामेरु- ( for महोत्सव- ). — $^{b}$) V1 B Dn ततः ( for पुनः ).

13 $^{d}$) V1 B Dn सवासवाः ( for सनातनाः ).

14 $^{c}$) V1 B वाताः सर्वे महाभूतास्; D3 ततः सर्वे पृथग्भूतास्; D8 भावाः सर्वे ह्यभूताश्च.

15 $^{b}$) D6–9 व्यरोचंत ( for व्यकिरन्त ). D4, 5 महाद्रुमैः (for °द्भुतैः). — $^{c}$) D1, 2 ज्वलंत्यश्च तथौ( D2 महौ )षध्यो.

16 $^{a}$) Some MSS. विहंगाश्च. — $^{b}$) D4–9 व्यनृत्यन् ( for प्रा° ).

18 D2 om. $18^{cd}$. — $^{d}$) D6–7 रोहितांगदभूषणः.

19 $^{b}$) D4–9 [अ]मर- ( for सुर- ).

20 $^{a}$) V1 B Dn D8 महर्षयः (for तमृषयः). — $^{b}$) Some MSS. अवनिं.

21 $^{b}$) D1, 2 भीमरूपतरं विभो. — D4 om. ( hapl. ) $21^{c}$–$22^{d}$.

क्षणेनैवाभवत्सर्वमद्भुतं मधुसूदन ।
तत्सदो वृषभाङ्कस्य भीमरूपधरं बभौ ॥ २२
तमभ्ययाच्छैलसुता भूतस्त्रीगणसंवृता ।
हरतुल्याम्बरधरा समानव्रतचारिणी ॥ २३
बिभ्रती कलशं रौक्मं सर्वतीर्थजलोद्भवम् ।
गिरिस्रवाभिः पुण्याभिः सर्वतोऽनुगता शुभा ॥ २४
पुष्पवृष्ट्याभिवर्षन्ती गन्धैर्बहुविधैस्तथा ।
सेवन्ती हिमवत्पार्श्वं हरपार्श्वमुपागमत् ॥ २५
ततः स्मयन्ती पाणिभ्यां नर्मार्थं चारुदर्शना ।
हरनेत्रे शुभे देवी सहसा सा समावृणोत् ॥ २६
संवृताभ्यां तु नेत्राभ्यां तमोभूतमचेतनम् ।
निर्होमं निर्वषट्कारं तत्सदः सहसाभवत् ॥ २७
जनश्च विमनाः सर्वो भयत्राससमन्वितः ।
निमीलिते भूतपतौ नष्टसूर्य इवाभवत् ॥ २८
ततो वितिमिरो लोकः क्षणेन समपद्यत ।
ज्वाला च महती दीप्ता ललाटात्तस्य निःसृता ॥ २९
तृतीयं चास्य संभूतं नेत्रमादित्यसंनिभम् ।
युगान्तसदृशं दीप्तं येनासौ मथितो गिरिः ॥ ३०
ततो गिरिसुता दृष्ट्वा दीप्ताग्निसदृशेक्षणम् ।
हरं प्रणम्य शिरसा ददर्शायतलोचना ॥ ३१
दह्यमाने वने तस्मिन्सशालसरलद्रुमे ।
सचन्दनवने रम्ये दिव्यौषधिविदीपिते ॥ ३२
मृगयूथैर्द्रुतैर्भीतैर्हरपार्श्वमुपागतैः ।
शरणं चाप्यविन्दद्भिस्तत्सदः संकुलं बभौ ॥ ३३
ततो नभःस्पृशज्ज्वालो विद्युल्लोलार्चिरुज्ज्वलः ।
द्वादशादित्यसदृशो युगान्ताग्निरिवापरः ॥ ३४
क्षणेन तेन दग्धः स हिमवानभवन्नगः ।
सधातुशिखराभोगो दीनदग्धवनौषधिः ॥ ३५
तं दृष्ट्वा मथितं शैलं शैलराजसुता ततः ।
भगवन्तं प्रपन्ना सा साञ्जलिप्रग्रहा स्थिता ॥ ३६

C. 13. 63
B. 13. 14
K. subst
M. subst

22 $D_4$ om. 22 (cf. v. l. 31). —$^{b}$) $D_{1.2.5-9}$ अद्भुतं भरतर्षभ. —$^{d}$) $D_{1.2}$ विभो (for बभौ).

23 $^{b}$) $D_{4.5.7.9}$ -सेविता (for -संवृता). —$^{d}$) $B_3$ Dn -धारिणी (for -चारिणी).

24 For 24$^{ab}$, $D_{4-9}$ subst. :

625* बिभ्रती परमं रूपं सर्वभूतमनोहरम् ।
[ $D_{4.5.7}$ -मनोरमं (for °हरम्). ]

—$^{cd}$) $V_1$ B Dn $D_2$ सर्वाभिः पृष्ठतो (for पुण्याभिः सर्वतो).

25 $^{b}$) $D_{1.2.4-9}$ गंधवहैस् (for बहुविधैस्). —$^{c}$) B $Dn_3$ $D_2$ सेवती.

26 $D_6$ om. (hapl.) 26$^{b}$–27$^{a}$. —$^{b}$) $V_1$ B (except $B_1$) Dn -हासिनी (for -दर्शना). —$^{c}$) $D_{4.5.7-9}$ शुभा (for शुभे).

27 $D_6$ om. 27$^{a}$ (cf. v. l. 26). —$^{c}$) $D_{2.4}$ निर्मोहं (for निर्होमं). —$^{d}$) $Dn_1$. $n_2$ $D_{1.2}$ जगद्धै (for तत्सदः).

28 $^{a}$) $D_5$ जातश् (for जनश्). —$^{b}$) $B_5$ $D_2$ भव-; $D_{4.6.7.9}$ यत्र (for भय-).

29 $^{c}$) $D_4$ लोचनाग्नेस्तदा ज्वाला; $D_{5-9}$ ज्वाला ललाटात्सं($D_5$ °टसं)भूता. —$^{d}$) $D_{4.6-9}$ भीषणा (for ललाटात्).

30 $^{b}$) $B_1$ -संहितं; $B_3$ -संभवं (for -संनिभम्).

32 $^{b}$) Some MSS. ससाल-; some unused MSS. तमाल- (for सशाल-). —$^{c}$) $D_6$ om. (hapl.) from नवने up to चाप्यविन्द (in 33$^{c}$). $V_1$ B $Dn_3$ $D_2$ -वरे (for -वने).

33 $D_6$ om. up to चाप्यविन्द (in 33$^{c}$) (cf. v. l. 32). —$^{a}$) $D_{4.5.7-9}$ हतैर् (for द्रुतैर्). $D_{1.7.9}$ दीनैर् (for भीतैर्). —$^{c}$) $D_{4.7.9}$ शरण्यं (for शरणं). $D_5$ [अ]थ (for [अ]पि). $V_1$ B $Dn_3$ शरणं तत्र विंदाद्भिस्. —$^{d}$) $D_{4.5.7}$ सकलं (for संकुलं).

34 $^{a}$) $D_{4-8}$ ततो नभस्पृग्ज्वलनो. —$^{b}$) $V_1$ B Dn विद्युल्लोलाग्निरुल्बणः. —$^{c}$) $V_1$ B -संकाशो (for -सदृशो).

35 $^{a}$) $V_1$ B Dn निर्दग्धो (for दग्धः स). —$^{d}$) $D_{4-9}$ दाव- (for दीन-). Bom. ed. दीप्तदग्धलतौषधिः.

36 $^{c}$) $V_1$ B Dn $D_2$ वै; $D_4$ [अ]सौ (for सा).

उमां शर्वस्तदा दृष्ट्वा स्त्रीभावागतमार्दवाम् ।
पितुर्दैन्यमनिच्छन्तीं प्रीत्यापश्यत्ततो गिरिम् ॥ ३७
ततोऽभवत्पुनः सर्वः प्रकृतिस्थः सुदर्शनः ।
प्रहृष्टविहगश्चैव प्रपुष्पितवनद्रुमः ॥ ३८
प्रकृतिस्थं गिरिं दृष्ट्वा प्रीता देवी महेश्वरम् ।
उवाच सर्वभूतानां पतिं पतिमनिन्दिता ॥ ३९
भगवन्सर्वभूतेश शूलपाणे महाव्रत ।
संशयो मे महाञ्जातस्तं मे व्याख्यातुमर्हसि ॥ ४०
किमर्थं ते ललाटे वै तृतीयं नेत्रमुत्थितम् ।
किमर्थं च गिरिर्दग्धः सपक्षिगणकाननः ॥ ४१
किमर्थं च पुनर्देव प्रकृतिस्थः क्षणात्कृतः ।
तथैव द्रुमसंछन्नः कृतोऽयं ते महेश्वर ॥ ४२

महेश्वर उवाच ।

नेत्रे मे संवृते देवि त्वया बाल्यादनिन्दिते ।
नष्टालोकस्ततो लोकः क्षणेन समपद्यत ॥ ४३
नष्टादित्ये तथा लोके तमोभूते नगात्मजे ।
तृतीयं लोचनं दीप्तं सृष्टं ते रक्षता प्रजाः ॥ ४४
तस्य चाक्ष्णो महत्तेजो येनायं मथितो गिरिः ।
त्वत्प्रियार्थं च मे देवि प्रकृतिस्थः क्षणात्कृतः ॥ ४५

उमोवाच ।

भगवन्केन ते वक्त्रं चन्द्रवत्प्रियदर्शनम् ।
पूर्वं तथैव श्रीकान्तमुत्तरं पश्चिमं तथा ॥ ४६
दक्षिणं च मुखं रौद्रं केनोर्ध्वं कपिला जटाः ।
केन कण्ठश्च ते नीलो बर्हिबर्हनिभः कृतः ॥ ४७
हस्ते चैतत्पिनाकं ते सततं केन तिष्ठति ।
जटिलो ब्रह्मचारी च किमर्थमसि नित्यदा ॥ ४८
एतं मे संशयं सर्वं वद भूतपतेऽनघ ।
सधर्मचारिणी चाहं भक्ता चेति वृषध्वज ॥ ४९
एवमुक्तः स भगवाञ्शैलपुत्र्या पिनाकधृक् ।
तस्या वृत्त्या च बुद्ध्या च प्रीतिमानभवत्प्रभुः ॥ ५०

---

— [d]) D2. 6. 7. 9 प्रांजलिः (for साञ्जलि-).

37 [a]) D8 सद्यस् (for शर्वस्). D1 ततो (for तदा). — B5 om. (hapl.) 37[b]–39[a]. — [b]) V1 B (B5 om.) Dn -भावगत- (for -भावागत-). D8. 9 -मार्दवात्. — [c]) B1 Dn1 D6–9 अनिच्छंती (for °च्छन्तीं). — [d]) V1 B (B5 om.) Dn तदा (for ततो).

38 B5 om. 38 (cf. v. l. 37). — [a]) D8 [ऽ]सृजत् (for ऽभवत्). V1 B (B5 om.) Dn क्षणेन हिमवान्सर्वः. — [d]) V1 B (B5 om.) Dn D2 सु- (for प्र-). B3 -फल- (for -वन-).

39 B5 om. 39[a] (cf. v. l. 37). — [a]) D4. 6 च तं; D5. 7. 9 वनं (for गिरिं). — [b]) D1 प्रीत्या (for प्रीता). B2 Dn D2 देवं (for देवी). — [c]) V1 B Dn -लोकानां (for -भूतानां). — [d]) Dn2 om. (hapl.) पतिं. Dn3 शिवम् (for पतिम्).

40 Before 40, V1 B Dn D1. 2. 4–9 ins. उमोवाच.

41 B2 om. 41[d]–42[a]. — [d]) D2 -मृग-; D8 -गिरि- (for -गण-).

42 B2 om. 42[a] (cf. v. l. 41). — [b]) V1 B Dn त्वया (for क्षणात्). — [d]) V1 B Dn पिता मम (for महेश्वर).

43 [c]) V1 B2–5 Dn D6 तदा; B1 तथा (for ततो). — [d]) D1 om. क्षणेन.

44 [a]) D1–9 नष्टालोके तथादित्ये. — [d]) D6–9 रक्षितुं (for रक्षता). D1 सृष्टं ते रक्षितुं प्रजां.

45 [a]) D6 महातेजो (for महत्तेजो). — [d]) V1 B1–3 Dn पुनः कृतः; B4. 5 पुनः पुनः; D2 क्षणात्ततः; D6 क्षणात्कृतं (for °त्कृतः).

46 [c]) D1. 5. 8. 9 तथैव पूर्वं श्रीकांतम्; D6. 7 तथैव पूर्ववत्कांतम्.

47 [c]) D1–9 नीलस्ते (by transp.). — [d]) B3 D1–9 बर्हिकंठ- (for °बर्ह-).

48 [a]) V1 B Dn देव; D1–9 चापं (for चैतत्). D2 om. ते. — [d]) D2 नित्यशः (for °दा).

49 [a]) D2. 4. 9 एतं (for एतं). D1. 2 पूर्वं (for सर्वं). — [b]) V1 B Dn D2 वक्तुमर्हसि वै (B5 मे) प्रभो. — [c]) D1 सहधर्मचरी चाहं.

50 Before 50, V1 B2. 3 Dn D2 ins. भीष्मः; B1.

ततस्तामब्रवीद्देवः सुभगे श्रूयतामिति ।
हेतुभिर्यैर्ममैतानि रूपाणि रुचिरानने ॥ ५१

इति श्रीमहाभारते अनुशासनपर्वणि सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥

## १२८

महेश्वर उवाच ।
तिलोत्तमा नाम पुरा ब्रह्मणा योषिदुत्तमा ।
तिलं तिलं समुद्धृत्य रत्नानां निर्मिता शुभा ॥ १
साभ्यगच्छत मां देवि रूपेणाप्रतिमा भुवि ।
प्रदक्षिणं लोभयन्ती मां शुभे रुचिरानना ॥ २
यतो यतः सा सुदती मामुपाधावदन्तिके ।
ततस्ततो मुखं चारु मम देवि विनिर्गतम् ॥ ३
तां दिदृक्षुरहं योगाच्चतुर्मूर्तित्वमागतः ।
चतुर्मुखश्च संवृत्तो दर्शयन्योगमात्मनः ॥ ४
पूर्वेण वदनेनाहमिन्द्रत्वमनुशास्मि ह ।
उत्तरेण त्वया सार्धं रमाम्यहमनिन्दिते ॥ ५
पश्चिमं मे मुखं सौम्यं सर्वप्राणिसुखावहम् ।
दक्षिणं भीमसंकाशं रौद्रं संहरति प्रजाः ॥ ६
जटिलो ब्रह्मचारी च लोकानां हितकाम्यया ।
देवकार्यार्थसिद्ध्यर्थं पिनाकं मे करे स्थितम् ॥ ७
इन्द्रेण च पुरा वज्रं क्षिप्तं श्रीकाङ्क्षिणा मम ।
दग्ध्वा कण्ठं तु तद्यातं तेन श्रीकण्ठता मम ॥ ८
उमोवाच ।
वाहनेषु प्रभूतेषु श्रीमत्स्वन्येषु सत्सु ते ।
कथं गोवृषभो देव वाहनत्वमुपागतः ॥ ९
महेश्वर उवाच ।
सुरभीं ससृजे ब्रह्मामृतधेनुं पयोमुचम् । C. B. K. M.

4. 5 नारदः. — c) $V_1$ B (except $B_8$) Dn $D_2$ धृत्या (for वृत्त्या). $D_4$ तस्या बुद्ध्या च वृत्त्या च. — d) $D_1$ पुनः; $D_4$ भुवि; $D_{6-9}$ विभुः (for प्रभुः).

51 c) $D_4$ तैर् (for यैर्). $D_{8,9}$ [इ]मानि (for [ए]तानि). — d) $D_{6-9}$ रूपाणि रुचिराणि मे.

Colophon. — *Parvan name :* B $Dn_3$ $D_1$ शांति. — *Sub-parvan :* $V_1$ B $Dn_3$ $D_{1,2}$ दानधर्म. — *Adhy. name :* $V_1$ $B_{1,2,4,5}$ $Dn_1$, $n_2$ $D_{4-9}$ उमामहेश्वरसंवादः. — *Adhy. no.* (figures, words or both): $V_1$ 139; $Dn_1$ 137. — *Śloka no.:* $Dn_1$, $n_2$ 52; $D_4$ 49.

### 128

☞ This adhy. is missing in $D_3$ (cf. v. l. 13. 82. 37).

1 $V_1$ B Dn $D_8$ भगवान्; $D_2$ ईश्वर (for महेश्वर). — d) $B_3$ $D_8$ पुरा (for शुभा).

2 a) $D_{6,7}$ [अ]भ्यु($D_5$ °प्यु)पागच्छन् (for [अ]भ्यगच्छत). $B_{2,3}$ $Dn_1$ $D_{4,5,8}$ देवी (for देवि). — b) $D_1$ [अ]सदृशी (for [अ]प्रतिमा). — d) $D_5$ रुचिरानने.

3 a) $D_8$ सुवदना (for सा सुदती). — c) $D_{1,2}$ देवि (for चारु). — d) $D_{1,2}$ चारु (for देवि). $D_{4,5}$ विनिर्मितं (for °र्गतम्).

4 d) $V_1$ B Dn उत्तमं (for आत्मनः).

5 b) $D_{6-9}$ [अ]हं (for ह).

6 a) $D_{4-9}$ तु (for मे). — c) $D_{4,6,7-9}$ घोर- (for भीम-).

8 b) $D_{1,2}$ सदा; $D_4$ पुरा (for मम). — c) $D_1$ क्षुतं; $D_{4-9}$ च तद् (for तु तद्). — d) $D_{5-9}$ ततः (for तेन).

9 $D_2$ देवी (for उमा). — a) $V_1$ B Dn [अ]त्र सर्वेषु (for प्रभूतेषु). — b) $V_1$ B Dn $D_2$ सत्तम (for सत्सु ते). — c) $B_5$ Dn च (for गो-).

10 a) $D_2$ सुरभिं. $V_1$ B Dn असृजद् (for ससृजे).

99 I. 10 सा सृष्टा बहुधा जाता क्षरमाणा पयोऽमृतम् ॥ १०
तस्या वत्समुखोत्सृष्टः फेनो मद्गात्रमागतः ।
ततो दग्धा मया गावो नानावर्णत्वमागताः ॥ ११
ततोऽहं लोकगुरुणा शमं नीतोऽर्थवेदिना ।
वृषं चेमं ध्वजार्थं मे ददौ वाहनमेव च ॥ १२

उमोवाच ।

निवासा बहुरूपास्ते विश्वरूपगुणान्विताः ।
तांश्च संत्यज्य भगवञ्श्मशाने रमसे कथम् ॥ १३
केशास्थिकलिले भीमे कपालघटसंकुले ।
गृध्रगोमायुकलिले चिताग्निशतसंकुले ॥ १४
अशुचौ मांसकलिले वसाशोणितकर्दमे ।
विनिकीर्णामिषचये शिवानादविनादिते ॥ १५

महेश्वर उवाच ।

मेध्यान्वेषी महीं कृत्स्नां विचरामि निशास्वहम् ।
न च मेध्यतरं किंचिच्छ्मशानादिह विद्यते ॥ १६
तेन मे सर्ववासानां श्मशाने रमते मनः ।
न्यग्रोधशाखासंछन्ने निर्भुक्तस्रग्विभूषिते ॥ १७
तत्र चैव रमन्ते मे भूतसंघाः शुभानने ।
न च भूतगणैर्देवि विनाहं वस्तुमुत्सहे ॥ १८
एष वासो हि मे मेध्यः स्वर्गीयश्च मतो हि मे ।
पुण्यः परमकश्चैव मेध्यकामैरुपास्यते ॥ १९

उमोवाच ।

भगवन्सर्वभूतेश सर्वधर्मभृतां वर ।
पिनाकपाणे वरद संशयो मे महानयम् ॥ २०
अयं मुनिगणः सर्वस्तपस्तप इति प्रभो ।
तपोन्वेषकरो लोके भ्रमते विविधाकृतिः ॥ २१
अस्य चैवर्षिसंघस्य मम च प्रियकाम्यया ।
एतं ममेह संदेहं वक्तुमर्हस्यरिंदम ॥ २२
धर्मः किंलक्षणः प्रोक्तः कथं वाचरितुं नरैः ।
शक्यो धर्ममविन्दद्भिर्धर्मज्ञ वद मे प्रभो ॥ २३

---

— [b]) V1 B Dn देव- (for [अ]मृत-). — [c]) B दृष्टा (for सृष्टा). D8. 9 माता (for जाता). — [d]) Dn2 रक्षमाणा; D4. 5 रक्ष° (for क्षर°).

11 [a]) V1 B3. 4. 5 Dn -मुखोच्छिष्टः (for °त्सृष्टः). D4–7 यस्यास्तु वदनोत्सृष्टः. — [c]) B2. 5 Dn1 दग्ध्वा; D6. 7. 9 दुग्धा (for दग्धा).

12 [c]) V1 B Dn1. n3 [ए]नं; Dn2 [ए]वं (for [इ]मं).

13 [b]) V1 B Dn दिवि सर्व- (for विश्वरूप-). — [c]) B5 तु (for च). Dn1. n2 विविधांश्च (for भगवञ्). — [d]) D2 वससे; D6. 7–9 रमते (for °से).

14 [a]) D4–9 घोरे (for भीमे). — [c]) V1 B Dn -बहुले (for -कलिले). — [d]) B1 चिताभस्मसमाकुले; B2 (marg. as in text). 3 तद्बीभत्से निनादिते.

15 [c]) V1 B Dn विकीर्णान्त्रास्थिनिचये. — [d]) V1 -निनादिते (for -वि°).

16 B5 D1 om. the ref. — [b]) B Dn [अ]निशं सदा (B1 तदा; B5 तथा) (for निशास्वहम्). — [c]) D5 स्वमेध्यतरं (for च मे°). — [d]) V1 B2–5 Dn D8 लक्ष्यते; B1 लक्ष्ये (for विद्यते).

17 [d]) V1 B1. 3. 4. 5 Dn निर्भुग्न- (for निर्भुक्त-). B3 निर्भस्माग्निविभूषिते.

18 [a]) V1 B Dn D5 रमंतीमे (for रमन्ते मे). — [b]) V1 B Dn शुचिस्मिते (for शुभानने).

19 [a]) D1. 2 मेध्यश्च (for मे मेध्यः). — [b]) V1 B Dn शुभे; D4–9 मम (for हि मे). — B5 om. 19[c]–21[b]. — [c]) D1 मुख्यः (for पुण्यः). D8 परमिकश्च (for °मकश्च).

20 B5 om. 20 (cf. v. l. 19). D2 देवी (for उमा). — [b]) B1. 3 Dn -धर्मविदां (for °भृतां). — [d]) D8 अभूत् (for अयम्).

21 B5 om. 21[ab] (cf. v. l. 19). — [b]) B1. 3 तेप इति; D4–7. 9 तप्यति वै (for तप इति). — [c]) Bom. ed. तपोवेष- (for तपोन्वेष-).

22 [a]) D1. 8. 9 तस्य च; D6. 7 तस्य वै (for अस्य च). — [c]) D6–9 एवं (for एतं).

23 [d]) D5 धर्मं च (for धर्मज्ञ). V1 B Dn3 विभो (for प्रभो).

नारद उवाच ।

ततो मुनिगणः सर्वस्तां देवीं प्रत्यपूजयत् ।
वाग्भिर्ऋग्भूषितार्थाभिः स्तवैश्चार्थविदां वर ॥ २४

महेश्वर उवाच ।

अहिंसा सत्यवचनं सर्वभूतानुकम्पनम् ।
शमो दानं यथाशक्ति गार्हस्थ्यो धर्म उत्तमः ॥ २५
परदारेष्वसंकल्पो न्यासस्त्रीपरिरक्षणम् ।
अदत्तादानविरमो मधुमांसस्य वर्जनम् ॥ २६
एष पञ्चविधो धर्मो बहुशाखः सुखोदयः ।
देहिभिर्धर्मपरमैः कर्तव्यो धर्मसंचयः ॥ २७

उमोवाच ।

भगवन्संशयं पृष्टस्तं मे व्याख्यातुमर्हसि ।
चातुर्वर्ण्यस्य यो धर्मः स्वे स्वे वर्णे गुणावहः ॥ २८
ब्राह्मणे कीदृशो धर्मः क्षत्रिये कीदृशो भवेत् ।
वैश्ये किंलक्षणो धर्मः शूद्रे किंलक्षणो भवेत् ॥ २९

महेश्वर उवाच ।

न्यायतस्ते महाभागे संशयः समुदीरितः ।
भूमिदेवा महाभागाः सदा लोके द्विजातयः ॥ ३०
उपवासः सदा धर्मो ब्राह्मणस्य न संशयः ।
स हि धर्मार्थमुत्पन्नो ब्रह्मभूयाय कल्पते ॥ ३१
तस्य धर्मक्रिया देवि व्रतचर्या च न्यायतः ।
तथोपनयनं चैव द्विजायैवोपपद्यते ॥ ३२
गुरुदैवतपूजार्थं स्वाध्यायाभ्यसनात्मकः ।
देहिभिर्धर्मपरमैश्चर्तव्यो धर्मसंभवः ॥ ३३

उमोवाच ।

भगवन्संशयो मेऽत्र तं मे व्याख्यातुमर्हसि ।
चातुर्वर्ण्यस्य धर्मं हि नैपुण्येन प्रकीर्तय ॥ ३४

महेश्वर उवाच ।

रहस्यश्रवणं धर्मो वेदव्रतनिषेवणम् ।
व्रतचर्यापरो धर्मो गुरुपादप्रसादनम् ॥ ३५
भैक्षचर्यापरो धर्मो धर्मो नित्योपवासिता ।

C. 13.
B. 13.
K. su
M. su

24 Some MSS. om. the ref. —$^{a}$) $Dn_2$ $D_{4.6.8.9}$ -गणाः सर्वे (for -गणः सर्वस्). —$^{b}$) $D_{4.5}$ प्रत्यपूजयन्. —$^{c}$) $B_1$ वाग्भिर्वाग्भूषितात्माभिः. —$^{d}$) $V_1$ B Dn -विशारदैः (for -विदां वर).

25 $D_2$ ईश्वर (for महेश्वर).

26 $^{a}$) $V_1$ B Dn [अ]संसर्गो (for [अ]संकल्पो).

27 $^{a}$) $D_4$ एवंविधो; $D_{5.7-9}$ वै विविधो (for पञ्चविधो). —$^{c}$) $V_1$ B Dn देह- (for धर्म-). —$^{d}$) $D_{1.2}$ चर्तव्यो (for क°). $D_{4.5}$ -संभवः (for -संचयः). $V_1$ B Dn चर्तव्यो दे( $B_6$ °तुरैर्दे )हसंभवः.

28 $Dn_2$ वामा; $D_2$ देवी (for उमा). —$^{a}$) $V_1$ B Dn $D_2$ संशयः (for °यं). —$^{b}$) $V_1$ B Dn शंसितुम् (for व्याख्यातुम्). —$^{c}$) $D_{5.6.9}$ चातुर्वर्णस्य. —$^{d}$) $D_1$ धर्मे (for वर्णे). $D_{4-7}$ सुखावहः; $D_{8.9}$ सुखोदयः (for गुणावहः).

29 $^{b}$) $Dn_3$ [ऽ]भवत् (for भवेत्). —$^{d}$) $D_{1.2}$ धर्मः कथं (for किंलक्षणो).

30 $V_1$ B Dn भगवान्; $D_2$ ईश्वर (for महेश्वर). —$^{b}$) $B_{3.5}$ सर्वेशः (for संशयः).

31 $^{c}$) $V_1$ B Dn $D_6$ स हि धर्मार्थसंपन्नो.

32 $^{b}$) $B_{3-5}$ ब्रह्मचर्या (for व्रत°). —$^{c}$) $V_1$ B Dn व्रतोपनयनं चैव. —$^{d}$) $V_1$ B Dn $D_6$ द्विजो येन (for द्विजायैव). $D_2$ द्विजाय समुपद्यते.

33 $^{a}$) $D_{4-8}$ -पूजार्थे (for °र्थं). —$^{b}$) $B_3$ स्वाध्यायाभ्यसनार्थकः. —$^{d}$) $B_{4.5}$ -संस्तरः (for -संभवः). $D_{4-9}$ कर्तव्यो धर्मसंचयः.

34 $^{a}$) $V_1$ B Dn [ऽ]स्ति (for ऽत्र). —$^{c}$) B Dn वै (for हि). $V_1$ चातुर्वर्णस्य धर्मं वै. —$^{d}$) $V_1$ $B_{1.4.5}$ $D_1$ नैपुणेन (for °ण्येन).

35 $V_1$ महादेव; $D_2$ ईश्वर; $D_4$ हर (for महेश्वर). —$^{c}$) $V_1$ B Dn $D_2$ अग्निकार्यं तथा धर्मो. —$^{d}$) $V_1$ B $D_{4-7}$ गुरुद्वार- (for °पाद-). Dn $D_8$ गुरुकार्यप्रसाधनं.

36 $^{a}$) $B_{2-5}$ $D_8$ भैक्ष्य- (for भैक्ष-). —$^{b}$) $V_1$ B Dn नित्यय( $Dn_2$ °त्यं य )ज्ञोपवीतिता. —$^{c}$) Dn $D_8$ नित्यं (for नित्य-). $D_{2.7}$ -स्वाध्यायता (for °यिता). —$^{d}$) $D_{8.9}$ व्रत- (for ब्रह्म-).

25 1. 36 नित्यस्वाध्यायिता धर्मो ब्रह्मचर्याश्रमस्तथा ॥ ३६
गुरुणा त्वभ्यनुज्ञातः समावर्तेत वै द्विजः ।
विन्देतानन्तरं भार्यामनुरूपां यथाविधि ॥ ३७
शूद्रान्नवर्जनं धर्मस्तथा सत्पथसेवनम् ।
धर्मो नित्योपवासित्वं ब्रह्मचर्यं तथैव च ॥ ३८
आहिताग्निरधीयानो जुह्वानः संयतेन्द्रियः ।
विघसाशी यताहारो गृहस्थः सत्यवाक्शुचिः ॥ ३९
अतिथिव्रतता धर्मो धर्मस्त्रेताग्निधारणम् ।
इष्टीश्च पशुबन्धांश्च विधिपूर्वं समाचरेत् ॥ ४०
यज्ञश्च परमो धर्मस्तथाहिंसा च देहिषु ।
अपूर्वभोजनं धर्मो विघसाशित्वमेव च ॥ ४१
भुक्ते परिजने पश्चाद्भोजनं धर्म उच्यते ।
ब्राह्मणस्य गृहस्थस्य श्रोत्रियस्य विशेषतः ॥ ४२
दंपत्योः समशीलत्वं धर्मश्च गृहमेधिनाम् ।
गृह्याणां चैव देवानां नित्यं पुष्पबलिक्रिया ॥ ४३

नित्योपलेपनं धर्मस्तथा नित्योपवासिता ।
सुसंमृष्टोपलिप्ते च साज्यधूमोद्गमे गृहे ॥ ४४
एष द्विजजने धर्मो गार्हस्थ्यो लोकधारणः ।
द्विजातीनां सतां नित्यं सदैवैष प्रवर्तते ॥ ४५
यस्तु क्षत्रगतो देवि त्वया धर्म उदीरितः ।
तमहं ते प्रवक्ष्यामि तं मे शृणु समाहिता ॥ ४६
क्षत्रियस्य स्मृतो धर्मः प्रजापालनमादितः ।
निर्दिष्टफलभोक्ता हि राजा धर्मेण युज्यते ॥ ४७
प्रजाः पालयते यो हि धर्मेण मनुजाधिपः ।
तस्य धर्मार्जिता लोकाः प्रजापालनसंचिताः ॥ ४८
तत्र राज्ञः परो धर्मो दमः स्वाध्याय एव च ।
अग्निहोत्रपरिस्पन्दो दानाध्ययनमेव च ॥ ४९
यज्ञोपवीतधरणं यज्ञो धर्मक्रियास्तथा ।
भृत्यानां भरणं धर्मः कृते कर्मण्यमोघता ॥ ५०
सम्यग्दण्डे स्थितिर्धर्मो धर्मो वेदक्रतुक्रियाः ।

---

37 $^a$) $V_1$ B Dn च (for तु).

38 $^b$) $B_{2,3}$ (marg. as in text) तीर्थानु-; $D_8$ सत्य- स्य (for सत्पथ-).

39 $^b$) $D_8$ यज्वान: (for जुह्वानः). $D_{6-7}$ यज्वान: स जितेंद्रिय:. —$^c$) $D_{5-9}$ जिताहारो (for यता°). —$^d$) $D_8$ शुभ: (for शुचि:).

41 $^b$) $D_2$ देहिनां (for °षु). $D_6$ अहिंसा चैव देहिषु. —$^c$) $D_{1,2}$ -पूजनं (for -भो°).

42 $V_1$ om. (hapl.) from पश्चाद्भो (in $42^c$) to जने (in $45^a$). —$^d$) $D_2$ क्षत्रियस्य (for श्रो°).

43 $V_1$ om. 43 (cf. v. l. 42). —$^b$) B Dn $D_2$ धर्म: स्याद्गृहमेधिन:. —$^d$) $D_{1,4}$ नित्य- (for नित्यं).

44 $V_1$ om. 44 (cf. v. l. 42). $D_4$ om. $44^{cd}$. —$^c$) $D_5$ सुसंमृष्टे च लिप्ते च. —$^d$) B Dn $D_6$ -धूमो भवेद् (for -धूमोद्गमे). $D_2$ साज्यधूमोद्गमेन च.

45 $V_1$ om. up to जने (in $45^a$) (cf. v. l. 42). —$^b$) $Dn_1$. $n_2$ $D_3$ गार्हस्थो; $D_5$ °स्थ्ये (for °स्थ्यो). $D_{6,7,9}$ -धारिणि (for -धारणः). $D_8$ गार्हस्थो लोकधारित:. —$^c$) $D_2$ द्विजानां च (for °तीनां).

46 $^b$) Bom. ed. मया (for त्वया). —$^d$) $B_2$ तान्शृणुष्व; $D_4$ तं त्वं शृणु; $D_{6,7}$ तत्र शृणु (for तं मे शृणु).

47 $^c$) $D_{1,2}$ च (for हि).

48 $D_4$ om. $48^a$–$49^b$. —$^b$) $D_{7-9}$ धर्मेण मनुजेश्वर:.

49 $D_4$ om. $49^{ab}$ (cf. v. l. 48). $D_5$ om. 49–50. $Dn_1$ om. 49. —$^a$) $V_1$ B $Dn_2$. $n_3$ $D_8$ तस्य (for तत्र). —$^b$) $D_{7,9}$ वा (for च). — $D_2$ om. (hapl.) $49^c$–$53^d$. $D_{6,9}$ om. $49^d$. —$^d$) $D_7$ om. from ध्ययन up to यज्ञो (in $50^b$). $D_{4,8}$ दानयज्ञक्रियास्तथा.

50 $D_7$ om. up to यज्ञो (in $50^b$); $D_{2,5}$ om. 50 (for all, cf. v. l. 49). $D_1$ om. (hapl.) 50–53. $D_4$ om $50^{ab}$. —$^b$) $B_{4,5}$ यज्ञ- (for यज्ञो). $D_{6,7,9}$ यज्ञ- (for धर्म-). $B_2$ धर्मो यज्ञक्रियास्तथा. —$^c$) $D_6$ भृत्यानां धर्मभरणं.

51 $D_2$ om. 51 (cf. v. l. 49). $D_1$ om. 51 (cf. v. l. 50). —$^a$) $B_4$ दंड-; $D_4$ धर्मे (for दण्डे). —$^b$) $B_2$ देव- (for वेद-). $V_1$ -क्रतुस्तथा; $D_4$ -व्रतक्रिया; $D_{5,7}$ -क्रियाविधि: (for -क्रतुक्रियाः). $B_3$ धर्मो यज्ञक्रिया-

व्यवहारस्थितिर्धर्मः सत्यवाक्यरतिस्तथा ॥ ५१
आर्तहस्तप्रदो राजा प्रेत्य चेह महीयते ।
गोब्राह्मणार्थे विक्रान्तः संग्रामे निधनं गतः ।
अश्वमेधजिताँल्लोकान्प्राप्नोति त्रिदिवालये ॥ ५२
वैश्यस्य सततं धर्मः पाशुपाल्यं कृषिस्तथा ।
अग्निहोत्रपरिस्पन्दो दानाध्ययनमेव च ॥ ५३
वाणिज्यं सत्पथस्थानमातिथ्यं प्रशमो दमः ।
विप्राणां स्वागतं त्यागो वैश्यधर्मः सनातनः ॥ ५४
तिलान्गन्धान्रसांश्चैव न विक्रीणीत वै क्वचित् ।
वणिक्पथमुपासीनो वैश्यः सत्पथमाश्रितः ॥ ५५
सर्वातिथ्यं त्रिवर्गस्य यथाशक्ति यथार्हतः ।
शूद्रधर्मः परो नित्यं शुश्रूषा च द्विजातिषु ॥ ५६
स शूद्रः संशिततपाः सत्यसंधो जितेन्द्रियः ।
शुश्रूषन्नतिथिं प्राप्तं तपः संचिनुते महत् ॥ ५७
त्यक्तहिंसः शुभाचारो देवताद्विजपूजकः ।
शूद्रो धर्मफलैरिष्टैः संप्रयुज्येत बुद्धिमान् ॥ ५८
एतत्ते सर्वमाख्यातं चातुर्वर्ण्यस्य शोभने ।
एकैकस्येह सुभगे किमन्यच्छ्रोतुमिच्छसि ॥ ५९

इति श्रीमहाभारते अनुशासनपर्वणि अष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥

## १२९

उमोवाच ।
उक्तास्त्वया पृथग्धर्माश्चातुर्वर्ण्यहिताः शुभाः ।
सर्वव्यापी तु यो धर्मो भगवंस्तं ब्रवीहि मे ॥ १

महेश्वर उवाच ।
ब्राह्मणा लोकसारेण सृष्टा धात्रा गुणार्थिना ।
लोकांस्तारयितुं कृत्स्नान्मर्त्येषु क्षितिदेवताः ॥ २ C. 13. 645 B. 13. 141 K. subst M. subst

---

स्तथा; $D_{6,8}$ वेदधर्मो व्रतक्रियाः. — $V_1$ om. $51^{cd}$. —$^{d}$) $B_2$ -वाक्पूजनं (for -वाक्यरतिस्).

52 $D_2$ om. 52 (cf. v. l. 49). $D_1$ om. 52 (cf. v. l. 50). —$^{a}$) Cnp आर्द्र- (for आर्त-). ❁ Cn: आर्द्रेति पाठे सजलेन हस्तेन ददाति । ❁ —$^{b}$) $V_1$ $B_{1,3-5}$ $D_{4-7,9}$ transp. च and इह. —$^{e}$) $B_{4,5}$ अश्वमेधार्जिताँल्लोकान्. —$^{f}$) Bom. ed. आप्नोति (for प्रा°). $D_{4,6-9}$ प्राप्नोति त्रिदिवं गतः; $D_5$ संप्राप्नोति दिवं गतः.

53 $D_2$ om. 53 (cf. v. l. 49). $D_1$ om. 53 (cf. v. l. 50). —$^{b}$) $D_5$ पशुपाल्यं. — $D_5$ om. $53^{cd}$.

54 $^{a}$) $D_{1,2,4}$ वाणिज्यं सत्पथास्थानम्. — $D_1$ om. $54^{c}$–$55^{d}$. —$^{d}$) $D_2$ वैश्यकर्म सनातनं.

55 $D_1$ om. 55 (cf. v. l. 54). —$^{b}$) $D_{6,7}$ कर्हिचित् (for वै क्वचित्). $V_1$ B Dn विक्रीणीयान्न चैव हि ($V_1$ $B_{2,5}$ ह; $B_4$ च). —$^{d}$) $D_{4,6-8}$ आवसन् (for आश्रितः).

56 $^{c}$) $D_{4,6-9}$ शूद्रो धर्मपरं नित्यं. —$^{d}$) $D_1$ शुश्रूषा तु; $D_{4,6-9}$ °षायं (for °षा च). $D_2$ शुश्रूषा द्विजजातिषु.

57 $^{b}$) $V_1$ B Dn $D_2$ सत्यवादी (for °संधो). —$^{c}$) $V_1$ B Dn $D_{2,8}$ शुश्रूषुर् (for °षन्).

58 $^{a}$) $V_1$ B Dn नित्यं हि स ($B_1$ $Dn_1$; $n_3$ स हि) (for त्यक्तहिंसः). $D_{4-9}$ न्यस्तहिंससमाचारो. —$^{b}$) $B_2$ $D_{4-9}$ देवतातिथिपूजकः. —$^{d}$) $B_1$ -प्रपद्येत; $D_{1,2}$ -युज्यति च; $D_{6-9}$ -युक्तो याति (for -प्रयुज्येत).

59 $^{b}$) $V_1$ $B_{1,4,5}$ $Dn_1$, $n_2$ शोभनं; $D_8$ शासने (for शोभने). —$^{d}$) $D_{4,8}$ अर्हसि (for इच्छसि).

Colophon om. in $V_1$ $B_2$ Dn. — *Parvan name*: $B_{1,3,4}$ $D_1$ शांति. — *Sub-parvan*: $B_{1,3,5}$ $D_{2,4-6,8,9}$ दानधर्म. — *Adhy. name*: $B_{1,3-5}$ $D_{1,2,4,6-9}$ उमामहेश्वरसंवादः. — *Adhy. no.* (figures, words or both): $B_5$ 132. — *Śloka no.*: $Dn_1$, $n_2$ 60; $D_4$ 56.

## 129

☞ This adhy. is missing in $D_3$ (cf. v. l. 13. 82. 37).

1 $B_5$ om. 1 (retaining the ref.). —$^{ab}$) $V_1$ B ($B_5$ om.) Dn उक्तस्त्वया पृथग्धर्मश्चातुर्वर्ण्यहितः शुभः. —$^{d}$) $V_1$ $B_{2-4}$ Dn $D_{4,5,8}$ तद् (for तं).

2 $D_7$ महादेव (for महेश्वर). —$^{a}$) $V_1$ $B_{2-4}$ Dn

63 तेषामिमं प्रवक्ष्यामि धर्मकर्मफलोदयम् ।
ब्राह्मणेषु हि यो धर्मः स धर्मः परमो मतः ॥ ३
इमे तु लोकधर्मार्थं त्रयः सृष्टाः स्वयंभुवा ।
पृथिव्याः सर्जने नित्यं सृष्टास्तानपि मे शृणु ॥ ४
वेदोक्तः परमो धर्मः स्मृतिशास्त्रगतोऽपरः ।
शिष्टाचीर्णः परः प्रोक्तस्त्रयो धर्माः सनातनाः ॥ ५
त्रैविद्यो ब्राह्मणो विद्वान्न चाध्ययनजीवनः ।
त्रिकर्मा त्रिपरिक्रान्तो मैत्र एष स्मृतो द्विजः ॥ ६
षडिमानि तु कर्माणि प्रोवाच भुवनेश्वरः ।
वृत्त्यर्थं ब्राह्मणानां वै शृणु तानि समाहिता ॥ ७
यजनं याजनं चैव तथा दानप्रतिग्रहौ ।
अध्यापनमधीतं च षट्कर्मा धर्मभाग्द्विजः ॥ ८
नित्यस्वाध्यायता धर्मो धर्मो यज्ञः सनातनः ।
दानं प्रशस्यते चास्य यथाशक्ति यथाविधि ॥ ९
अयं तु परमो धर्मः प्रवृत्तः सत्सु नित्यशः ।
गृहस्थता विशुद्धानां धर्मस्य निचयो महान् ॥ १०
पञ्चयज्ञविशुद्धात्मा सत्यवागनसूयकः ।
दाता ब्राह्मणसत्कर्ता सुसंमृष्टनिवेशनः ॥ ११
अमानी च सदाजिह्मः स्निग्धवाणीप्रदस्तथा ।
अतिथ्यभ्यागतरतिः शेषान्नकृतभोजनः ॥ १२
पाद्यमर्घ्यं यथान्यायमासनं शयनं तथा ।
दीपं प्रतिश्रयं चापि यो ददाति स धार्मिकः ॥ १३
प्रातरुत्थाय चाचम्य भोजनेनोपमन्त्र्य च ।
सत्कृत्यानुव्रजेद्यश्च तस्य धर्मः सनातनः ॥ १४
सर्वातिथ्यं त्रिवर्गस्य यथाशक्ति दिवानिशम् ।
शूद्रधर्मः समाख्यातस्त्रिवर्णपरिचारणम् ॥ १५

---

$D_8$ ब्रह्मणा ( for ब्रा° ). —$^{b}$) $B_1$ हितार्थिना ; $B_6$ गुणान्विता: ; $D_{8,9}$ तपोर्थिना ( for गुणा° ). —$^{c}$) $D_4$ धारयितुं ( for तार° ). $D_1$ लोकं धारयितुं कृत्स्नं.

3 $^{a}$) $V_1$ $B_{2-5}$ Dn $D_{4,5}$ अपि प्र- ; $D_{6-9}$ इदं तु ( for इमं प्र- ). —$^{b}$) $B_1$ $D_3$ धर्मं कर्म- ; $B_3$ सर्वधर्म- ; $D_{4-9}$ कर्मधर्म- ( for धर्मकर्म- ). —$^{c}$) $D_{1,4}$ तु ; $D_{5-9}$ च ( for हि ). — $D_5$ om. ( hapl. ) $3^{d}$–$5^{a}$. —$^{d}$) $D_{6-9}$ transp. स and धर्मः.

4 $D_5$ om. 4 ( cf. v. l. 3 ). —$^{a}$) $V_1$ $Dn_{1,n2}$ इमं ; $B_{4,5}$ इदं ( for इमे ). $D_2$ लोकाश्च ; $D_{6-9}$ तु लोका ; Bom. ed. ते लोक- ( for तु लोक- ). $D_1$ इमे तु लोका धर्मार्थास्. —$^{b}$) $D_{4,6-9}$ तथा ( for त्रयः ). —$^{c}$) $D_{4,6-9}$ पृथिव्यां सत्सु ते दृष्टा. —$^{d}$) $V_1$ B ( except $B_4$ ) $D_2$ सृष्टांस् ; $D_{4,6-9}$ नित्यं ( for सृष्टास् ).

5 $D_5$ om. $5^{a}$ ( cf. v. l. 3 ). —$^{a}$) $B_2$ ( marg. as in text ) स परो ( for परमो ). —$^{b}$) $B_1$ धर्म- ( for स्मृति- ). $D_{4-9}$ तथा श्रु( $D_5$ स्मृ )तिगतः परः. —$^{c}$) $V_1$ $B_{2-5}$ $Dn_1$ [ऽ]परः ( for परः ).

6 $^{a}$) $D_{5,8}$ त्रिविधो ( for त्रैविद्यो ). —$^{b}$) $D_{5-9}$ तथा ( for न च ). $B_{4,5}$ $D_5$ -जीविनः ; Bom. ed. -जीवकः ( for °नः ).

7 $^{b}$) $D_{4-9}$ प्रोवाच मनुजेश्वरः. —$^{d}$) $V_1$ B Dn शृणु धर्मान्सनात( $Dn_3$ om. [ hapl. ] नात )नान्.

8 $^{b}$) $D_2$ -परिग्रहौ ( for -प्रति° ). —$^{c}$) $V_1$ B Dn चाध्ययनं ( for अधीतं च ). —$^{d}$) $D_{4-9}$ धर्मतो ( for °भाग् ).

9 $^{a}$) Bom. ed. नित्यः ( for नित्य- ). $V_1$ $B_{1,2,4}$ Dn -स्वाध्यायिता ( for °यता ). $B_{3,5}$ नित्यं स्वाध्यायिता धर्मो. —$^{b}$) $D_{4,6-9}$ धर्म- ( for धर्मो ).

10 $^{a}$) $V_1$ समस् ; Dn $D_5$ शमस् ( for अयं ). Bom. ed. शमस्तुपरमो धर्मः. —$^{c}$) $V_1$ B Dn गृहस्थानां ( for °स्थता ). $D_{4-9}$ गार्हस्थ्यता विशुद्धात्मा.

11 $^{a}$) $D_8$ एवं ( for पञ्च- ). —$^{d}$) $B_1$ स्वयंसृष्ट- ; $B_5$ सुसंहृष्ट- ( for °मृष्ट- ).

12 $^{a}$) $D_5$ ब्रह्मन् ( for [अ]जिह्मः ). —$^{b}$) $D_5$ om. from प्रदस्तथा up to ददाति स ( in $13^{d}$ ). $D_{4,6-9}$ सदा ( for तथा ).

13 $D_5$ om. up to ददाति स ( in $13^{d}$ ) ( cf. v. l. 12 ). —$^{a}$) $Dn_2$ अर्घं ( for अर्घ्यं ). —$^{c}$) $V_1$ B Dn [ए]व ( for [अ]पि ).

14 $^{c}$) $D_{6,8,9}$ तु ( for च ).

15 $^{a}$) $Dn_1$ तथातिथिं ( for सर्वातिथ्यं ). —$^{b}$) $V_1$ B $Dn_{1,n3}$ $D_2$ निशानिशं ; $D_{4-9}$ यथानिशं ( for दिवा° ). —$^{c}$) $D_5$ स्वयाख्यातस् ( for समा° ). —$^{d}$) $V_1$ $B_{2-5}$ Dn $D_{4-9}$ त्रिवर्ग- ( for °र्ण- ).

प्रवृत्तिलक्षणो धर्मो गृहस्थेषु विधीयते ।
तमहं कीर्तयिष्यामि सर्वभूतहितं शुभम् ॥ १६
दातव्यमसकृच्छक्त्या यष्टव्यमसकृत्तथा ।
पुष्टिकर्मविधानं च कर्तव्यं भूतिमिच्छता ॥ १७
धर्मेणार्थः समाहार्यो धर्मलब्धं त्रिधा धनम् ।
कर्तव्यं धर्मपरमं मानवेन प्रयत्नतः ॥ १८
एकेनांशेन धर्मार्थश्चर्तव्यो भूतिमिच्छता ।
एकेनांशेन कामार्थ एकमंशं विवर्धयेत् ॥ १९
निवृत्तिलक्षणस्त्वन्यो धर्मो मोक्ष इति स्मृतः ।
तस्य वृत्तिं प्रवक्ष्यामि शृणु मे देवि तत्त्वतः ॥ २०
सर्वभूतदया धर्मो न चैकग्रामवासिता ।
आशापाशविमोक्षश्च शस्यते मोक्षकाङ्क्षिणाम् ॥ २१
न कुण्ड्यां नोदके सङ्गो न वाससि न चासने ।
न त्रिदण्डे न शयने नाग्नौ न शरणालये ॥ २२
अध्यात्मगतचित्तो यस्तन्मनास्तत्परायणः ।
युक्तो योगं प्रति सदा प्रतिसंख्यानमेव च ॥ २३
वृक्षमूलशयो नित्यं शून्यागारनिवेशनः ।
नदीपुलिनशायी च नदीतीररतिश्च यः ॥ २४
विमुक्तः सर्वसङ्गेषु स्नेहबन्धेषु च द्विजः ।
आत्मन्येवात्मनो भावं समासज्याटति द्विजः ॥ २५
स्थाणुभूतो निराहारो मोक्षदृष्टेन कर्मणा ।
परिव्रजति यो युक्तस्तस्य धर्मः सनातनः ॥ २६
न चैकत्र चिरासक्तो न चैकग्रामगोचरः ।
युक्तो ह्यटति निर्मुक्तो न चैकपुलिनेशयः ॥ २७
एष मोक्षविदां धर्मो वेदोक्तः सत्पथः सताम् ।
यो मार्गमनुयातीमं पदं तस्य न विद्यते ॥ २८
चतुर्विधा भिक्षवस्ते कुटीचरकृतोदकः ।
हंसः परमहंसश्च यो यः पश्चात्स उत्तमः ॥ २९ C. 13. 6417 B. 13. 141 K. subst. M. subst.

16 $D_4$ om. from स्थेषु (in $16^b$) up to तमहं (in $16^c$). — $^c$) $V_1$ B Dn $D_6$ तमहं वर्तयिष्यामि. — $^d$) $D_{1,2}$ -वर्ण- (for -भूत-). $D_{4-9}$ शृणु मे देवि तत्त्वतः.

17 $^a$) $Dn_3$ om. (hapl.) from च्छक्त्या up to सकृ (in $17^b$). $D_{4-9}$ भक्त्या (for शक्त्या). — $^d$) $D_{4,5,7}$ पुष्टिम् (for भूतिम्).

18 $^a$) $D_{4,6-9}$ सहायार्थौ ($D_8$ °र्थं); $D_5$ सदाहार्यो (for समा°). — $^b$) $D_4$ धनलब्धं धनं धनं; $D_{6-8}$ धर्मलब्धध($D_7$ °ब्धे ध)नं धनं. — $^c$) $B_1$ कर्म- (for धर्म-). $D_{4-9}$ कर्तव्यो धर्मपरमो.

19 $^a$) $D_9$ om. (hapl.) from एके up to मंशं (in $19^d$). $D_{1,2,5-8}$ धर्मार्थौ (for °र्थश्च). — $D_4$ om. (hapl.) $19^{bc}$. — $^b$) $D_{1,2,5}$ कर्तव्यौ (for चर्तव्यो). $D_{6-8}$ कर्तव्यौ धर्ममिच्छता. — $^c$) $D_1$ कामाश्च; $D_2$ कामाद्वा; $D_{5-8}$ धर्मार्थम् (for कामार्थ). — $^d$) $D_{1,2}$ [अ]प्येकम् (for एकम्).

20 $^b$) $V_1$ B Dn $D_{4,5}$ धर्मो मोक्षाय तिष्ठति.

21 $^d$) $D_{1,5,7-9}$ -काङ्क्षिणः (for °णाम्).

22 $^a$) $B_3$ $D_5$ कुड्यां (for कुण्ड्यां). — $^b$) $D_4$ om. (hapl.) वाससि न. $D_4$ वा (for च). — $^d$) $D_{5-9}$ नाके न शरणे तथा.

23 $^a$) $V_1$ B Dn $D_{1-3,8,9}$ -गति- (for -गत-). — $^c$) $D_{1,6-9}$ युक्तं (for युक्तो).

24 $^a$) $V_1$ $B_{1,2,4,5}$ -मूलचरो; $B_3$ Dn $D_{2,4}$ °परो; $D_{6-7,9}$ -मूलाश्रयो (for -मूलशयो). — $^d$) $V_1$ $B_{1-4}$ $Dn_{2,n3}$ -रतश्च; $B_5$ -वृतश्च (for -रतिश्च).

25 $^a$) $B_1$ -संगेन (for °षु). — $^b$) $D_5$ -बंधेन (for -बन्धेषु). Some unused MSS. स्निग्धबंधुषु च द्विजः. — $B_3$ $D_8$ om. (hapl.) $25^{cd}$. — $^c$) $Dn_3$ योगं; $D_{4-7,9}$ भारं (for भावं). — $^d$) $D_{1,2}$ [अ]टते (for [अ]टति). $V_1$ $B_{1,2,4,5}$ $Dn_3$ समासज्जेत वै द्विजः.

26 $D_4$ om. $26^{cd}$. — $^c$) $B_{1,4,5}$ $Dn_{1,n2}$ $D_1$ मुक्तस् (for युक्तस्).

27 $^a$) $V_1$ $B_{2-5}$ $Dn_{1,n3}$ निरासक्तो; $D_4$ समा° (for चिरा°). — $^c$) $V_1$ B Dn $D_8$ मुक्तो (for युक्तो).

28 $^d$) $D_2$ च (for न).

29 $^a$) $V_1$ $B_{2,4,5}$ $Dn_{1,n2}$ तु (for ते). — $^b$) $D_1$ कुंडीचक्र- (for कुटीचर-). $D_{4-8}$ -बहूदकौ (for -कृतोदकः). $B_2$ (marg.) $Dn_3$ $D_8$ Cn कुटीचकबहूदकौ. ❀ Cn : कुटीचक-

अतः परतरं नास्ति नाधरं न तिरोऽग्रतः ।
अदुःखमसुखं सौम्यमजरामरमव्ययम् ॥ ३०

उमोवाच ।

गार्हस्थ्यो मोक्षधर्मश्च सज्जनाचरितस्त्वया ।
भाषितो मर्त्यलोकस्य मार्गः श्रेयस्करो महान् ॥ ३१
ऋषिधर्मं तु धर्मज्ञ श्रोतुमिच्छाम्यनुत्तमम् ।
स्पृहा भवति मे नित्यं तपोवननिवासिषु ॥ ३२
आज्यधूमोद्भवो गन्धो रुणद्धीव तपोवनम् ।
तं दृष्ट्वा मे मनः प्रीतं महेश्वर सदा भवेत् ॥ ३३
एतं मे संशयं देव मुनिधर्मकृतं विभो ।
सर्वधर्मार्थतत्त्वज्ञ देवदेव वदस्व मे ।
निखिलेन मया पृष्टं महादेव यथातथम् ॥ ३४

महेश्वर उवाच ।

हन्त तेऽहं प्रवक्ष्यामि मुनिधर्ममनुत्तमम् ।
यं कृत्वा मुनयो यान्ति सिद्धिं स्वतपसा शुभे ॥ ३५
फेनपानामृषीणां यो धर्मो धर्मविदां सदा ।
तं मे शृणु महाभागे धर्मज्ञे धर्ममादितः ॥ ३६
उञ्छन्ति सततं तस्मिन्ब्राह्मं फेनोत्करं शुभम् ।
अमृतं ब्रह्मणा पीतं मधुरं प्रसृतं दिवि ॥ ३७
एष तेषां विशुद्धानां फेनपानां तपोधने ।
धर्मचर्याकृतो मार्गो वालखिल्यगणे शृणु ॥ ३८
वालखिल्यास्तपःसिद्धा मुनयः सूर्यमण्डले ।
उञ्छमुञ्छन्ति धर्मज्ञाः शाकुनीं वृत्तिमास्थिताः ॥ ३९
मृगनिर्मोकवसनाश्चीरवल्कलवाससः ।
निर्द्वंद्वाः सत्पथं प्राप्ता वालखिल्यास्तपोधनाः ॥ ४०
अङ्गुष्ठपर्वमात्रास्ते स्वेष्वङ्गेषु व्यवस्थिताः ।
तपश्चरणमीहन्ते तेषां धर्मफलं महत् ॥ ४१
ते सुरैः समतां यान्ति सुरकार्यार्थसिद्धये ।

---

बहूदकौ त्रिदण्डिनौ। एको गृहे वसति, अपरस्तीर्थान्यटति। ❀

30 $D_4$ om. 30. — [b]) $V_1$ B $D_{n3}$ नावरं (for नाधरं). — [c]) $D_5$ अजरः (for असुखं). — After 30, $V_1$ $B_{1,3-5}$ ins. an addl. colophon [*Parvan name*: $B_{1,3,4}$ शांति. — *Sub-parvan*: $V_1$ $B_{1,3,4}$ दानधर्म. — *Adhy. name*: $V_1$ उमामहेश्वरसंवादः; $B_1$ महेश्वरसंवादः. — *Adhy. no.*: $V_1$ 140; $B_5$ 133].

31 $B_5$ om. the ref. — [a]) $D_{4,5,8,9}$ गार्हस्थ्यं (for °स्थ्यो). — [c]) $V_1$ B $D_n$ $D_4$ जीव- (for मर्त्य-).

32 [a]) $D_8$ -धर्मांस् (for -धर्मं). — [b]) $V_1$ B $D_n$ [अ]तःपरं; $D_8$ [अ]नुत्तमान् (for °मम्).

33 [b]) $D_{5-9}$ रुंधति (for रुणद्धि). $B_5$ $D_{n1,n2}$ $D_5$ तपोधनं (for °वनम्). — [c]) $D_{4-9}$ मनःप्रीतिर् (for मनः प्रीतं).

34 [d]) $D_{1,2}$ ब्रूहि धर्मार्थकोविद. — [e]) $D_{1,2,4-9}$ पृष्टो (for पृष्टं).

35 $V_1$ B $D_n$ $D_2$ भगवान् (for महेश्वर). — [b]) $B_5$ मुनेर् (for मुनि-). — [d]) $V_1$ $B_{1,2,4,5}$ $D_n$ सु- (for स्व-). $D_{4-9}$ सिद्धाश्च तपसा परं.

36 $D_1$ om. (hapl.) 36[bcd]. — [b]) $V_1$ $B_{1-4}$ $D_n$ -विदां सतां; $B_5$ -भृतां सतां (for -विदां सदा).

37 [a]) $D_{4-9}$ वांछंति (for उञ्छन्ति). $V_1$ B $D_n$ ये ते (for तस्मिन्). — [b]) B $D_{n1,n2}$ ब्राह्यं (for ब्राह्मं). $D_{4-9}$ ब्राह्मं ($D_7$ °ह्यं) तेजः सनातनं. — [d]) $V_1$ B $D_n$ अध्वरे (for मधुरं).

38 [c]) $B_3$ धर्मे; $D_1$ ब्रह्म- (for धर्म-). — [d]) Some MSS. वालिखिल्य- (for वालखिल्य-). $V_1$ $D_{n3}$ $D_8$ -गणैः (for -गणे). $B_3$ वालिखिल्लानां च मे शृणु (hypermetric).

39 [a]) Some MSS. वालिखिल्यास्. — [c]) $D_{4-9}$ इच्छंति (for उञ्छन्ति). $D_{n1,n2}$ उंछे तिष्ठंति धर्मज्ञाः.

40 [b]) $B_1$ -धारिणः (for -वाससः). — [c]) $B_1$ निर्द्वंद्वाः सूर्यसंतप्ताः; $D_{4-9}$ शीर्णपर्णफलाहाराः. — [d]) Some MSS. वालिखिल्यास्.

41 [a]) $V_1$ $B_{1,2,4,5}$ $D_n$ -मात्रा ये; $B_3$ -मानास्ते (for -मात्रास्ते). — [b]) $V_1$ B $D_n$ भूत्वा स्वे स्वे; $D_6$ अंगुष्ठेषु (for स्वेष्वङ्गेषु). $D_2$ स्वेष्वेवांगेष्ववस्थिताः. — [c]) $D_{5-7,9}$ ईहंतस् (for ईहन्ते). — [d]) $D_{4-7,9}$ भवेत् (for महत्).

42 [a]) $B_3$ तैः सुरैः; $B_5$ तेषु वै (for ते सुरैः). — [c]) $V_1$ B $D_{n1,n2}$ $D_8$ द्योतयंति; $D_{n3}$ °यवि

द्योतयन्तो दिशः सर्वास्तपसा दग्धकिल्बिषाः ॥ ४२
ये त्वन्ये शुद्धमनसो दयाधर्मपरायणाः ।
सन्तश्चक्रचराः पुण्याः सोमलोकचराश्च ये ॥ ४३
पितृलोकसमीपस्थास्त उञ्छन्ति यथाविधि ।
संप्रक्षालाश्मकुट्टाश्च दन्तोलूखलिनस्तथा ॥ ४४
सोमपानां च देवानामूष्मपाणां तथैव च ।
उञ्छन्ति ये समीपस्थाः स्वभावनियतेन्द्रियाः ॥ ४५
तेषामग्निपरिष्यन्दः पितृदेवार्चनं तथा ।
यज्ञानां चापि पञ्चानां यजनं धर्म उच्यते ॥ ४६
एष चक्रचरैर्देवि देवलोकचरैर्द्विजैः ।
ऋषिधर्मः सदा चीर्णो योऽन्यस्तमपि मे शृणु ॥ ४७
सर्वेष्वेवर्षिधर्मेषु जेय आत्मा जितेन्द्रियः ।
कामक्रोधौ ततः पश्चाज्जेतव्याविति मे मतिः ॥ ४८
अग्निहोत्रपरिस्पन्दो धर्मरात्रिसमासनम् ।
सोमयज्ञाभ्यनुज्ञानं पञ्चमी यज्ञदक्षिणा ॥ ४९
नित्यं यज्ञक्रिया धर्मः पितृदेवार्चने रतिः ।
सर्वातिथ्यं च कर्तव्यमन्नेनोञ्छार्जितेन वै ॥ ५०
निवृत्तिरुपभोगस्य गोरसानां च वै रतिः ।
स्थण्डिले शयनं योगः शाकपर्णनिषेवणम् ॥ ५१
फलमूलाशनं वायुरापः शैवलभक्षणम् ।
ऋषीणां नियमा ह्येते यैर्जयन्त्यजितां गतिम् ॥ ५२
विधूमे न्यस्तमुसले व्यङ्गारे भुक्तवज्जने ।
अतीतपात्रसंचारे काले विगतभैक्षके ॥ ५३
अतिथिं काङ्क्षमाणो वै शेषान्नकृतभोजनः ।
सत्यधर्मरतिः क्षान्तो मुनिधर्मेण युज्यते ॥ ५४
न स्तम्भी न च मानी यो न प्रमत्तो न विस्मितः ।
मित्रामित्रसमो मैत्रो यः स धर्मविदुत्तमः ॥ ५५

इति श्रीमहाभारते अनुशासनपर्वणि एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥

C. 13. [illegible]
B. 13. [illegible]
K. sub[illegible]
M. sub[illegible]

( for °यन्तो ).

43 [cd]) $B_1$ $Dn_{2,\,n3}$ चक्रधराः ( for °चराः ). $D_{4-9}$ सिद्धा देव- ( for पुण्याः सोम- ).

44 [a]) $D_1$ पितृलोके. — [c]) $D_{8-9}$ संप्रक्षाला अश्म-कुट्टा. — [d]) $Dn_{1,\,n2}$ च ये; $Dn_3$ च ते ( for तथा ). $V_1$ Bom. ed. दंतोलूखलिकाश्च ते ( $V_1$ ये ).

45 [c]) $D_1$ ते ( for ये ). $D_{6-9}$ उंछंति ते स्वभावस्थाः. — [d]) $V_1$ B Dn सदारा ( for स्वभाव- ). $D_{4-9}$ स्वदार-विजि( $D_5$ °निर )तेंद्रियाः.

46 [a]) $V_1$ B $Dn_3$ -परिस्पंदं ( for °ष्यन्दः ). — [b]) $D_{4,\,5}$ यथा ( for तथा ). $V_1$ B Dn पितॄणां चार्चनं तथा. — [c]) $V_1$ B Dn $D_4$ [ए]व ( for [अ]पि ). $D_{5-9}$ यज्ञानां पंच दिव्यानां ( sic ).

48 [b]) $D_{4-9}$ य आत्मानं ( for जेय आत्मा ). $D_1$ यतें-द्रियः. $V_1$ ज्ञेयोत्मा संजितेंद्रियैः; B Dn ज्ञेयोत्मा ( $B_3$ ज्ञेयार्थाः ) संयतेंद्रियैः. — [d]) $D_{4-9}$ निश्चयः ( for मे मतिः ).

49 [b]) $D_{6,\,7}$ -समानतां ( for °सनम् ). $V_1$ B Dn Cnp धर्मचक्रं सनातनं; $D_{1,\,7,\,9}$ धर्मो रात्रिसमानतां. ❀ Cn : धर्मचक्रं सनातनमिति गौडाः। ❀ — [c]) $V_1$ सोमयज्ञाभ्यनु-ज्ञाता.

50 [a]) $V_1$ $Dn_2$ नित्य- ( for नित्यं ). — [b]) $D_1$ -देवा-र्चनं. $D_{6-9}$ रतः ( for रतिः ). — [c]) $D_{4-9}$ तथातिथ्यं ( for सर्वा° ). $B_1$ तु ( for च ).

51 [a]) $V_1$ B Dn -भोगेषु ( for -भोगस्य ). — [b]) $V_1$ B Dn $D_{4-9}$ शमे ( for च वै ). — [c]) B Dn शयने ( for °नं ).

52 [b]) $D_{6,\,7,\,9}$ सेवाल-; $D_8$ शैवाल- ( for शैवल- ). — [c]) $D_{4-9}$ तु ( for हि ).

53 Cf. Manu. 6. 56. — [a]) Bom. ed. सन्न- ( for न्यस्त- ). — [c]) $D_{4-9}$ अपेत- ( for अतीत- ). — [d]) $V_1$ B Dn $D_{4,\,5}$ -भिक्षुके; $D_9$ -भिक्षके ( for -भै° ).

54 [a]) $D_{4-9}$ अतिथीन् ( for °थिं ). — [c]) $V_1$ B Dn -रतः ( for -रतिः ). $D_{4-9}$ दांतो; Bom. ed. शांतो ( for क्षान्तो ). — [d]) $V_1$ B $Dn_3$ $D_{4,\,7,\,8}$ मुनिर् ( for मुनि- ).

55 [a]) $V_1$ B Dn मानी स्यान्; $D_{4-8}$ मायी च ( for मानी यो ). — [b]) $V_1$ $B_{3-6}$ $Dn_{1,\,n2}$ प्रसन्नो; $B_1$ प्रशान्तो

अतः परतरं नास्ति नाधरं न तिरोऽग्रतः ।
अदुःखमसुखं सौम्यमजरामरमव्ययम् ॥ ३०

उमोवाच ।

गार्हस्थ्यो मोक्षधर्मश्च सज्जनाचरितस्त्वया ।
भाषितो मर्त्यलोकस्य मार्गः श्रेयस्करो महान् ॥ ३१
ऋषिधर्मं तु धर्मज्ञ श्रोतुमिच्छाम्यनुत्तमम् ।
स्पृहा भवति मे नित्यं तपोवननिवासिषु ॥ ३२
आज्यधूमोद्भवो गन्धो रुणद्धीव तपोवनम् ।
तं दृष्ट्वा मे मनः प्रीतं महेश्वर सदा भवेत् ॥ ३३
एतं मे संशयं देव मुनिधर्मकृतं विभो ।
सर्वधर्मार्थतत्त्वज्ञ देवदेव वदस्व मे ।
निखिलेन मया पृष्टं महादेव यथातथम् ॥ ३४

महेश्वर उवाच ।

हन्त तेऽहं प्रवक्ष्यामि मुनिधर्ममनुत्तमम् ।
यं कृत्वा मुनयो यान्ति सिद्धिं स्वतपसा शुभे ॥ ३५
फेनपानामृषीणां यो धर्मो धर्मविदां सदा ।
तं मे शृणु महाभागे धर्मज्ञे धर्ममादितः ॥ ३६
उञ्छन्ति सततं तस्मिन्ब्राह्मं फेनोत्करं शुभम् ।
अमृतं ब्रह्मणा पीतं मधुरं प्रसृतं दिवि ॥ ३७
एष तेषां विशुद्धानां फेनपानां तपोधने ।
धर्मचर्याकृतो मार्गो वालखिल्यगणे शृणु ॥ ३८
वालखिल्यास्तपःसिद्धा मुनयः सूर्यमण्डले ।
उञ्छमुञ्छन्ति धर्मज्ञाः शाकुनीं वृत्तिमास्थिताः ॥ ३९
मृगनिर्मोकवसनाश्चीरवल्कलवाससः ।
निर्द्वंद्वाः सत्पथं प्राप्ता वालखिल्यास्तपोधनाः ॥ ४०
अङ्गुष्ठपर्वमात्रास्ते स्वेष्वङ्गेषु व्यवस्थिताः ।
तपश्चरणमीहन्ते तेषां धर्मफलं महत् ॥ ४१
ते सुरैः समतां यान्ति सुरकार्यार्थसिद्धये ।

---

बहूदकौ त्रिदण्डिनौ । एको गृहे वसति, अपरस्तीर्थान्यटति । ❀

30 $D_4$ om. 30. —$^{b}$) $V_1$ B $Dn_3$ नावरं (for नाधरं). —$^{c}$) $D_5$ अजरः (for असुखं). — After 30, $V_1$ $B_{1, 3-5}$ ins. an addl. colophon [ *Parvan name :* $B_{1, 3, 4}$ शांति. — *Sub-parvan :* $V_1$ $B_{1, 3, 4}$ दानधर्म. — *Adhy. name :* $V_1$ उमामहेश्वरसंवादः; $B_1$ महेश्वरसंवादः. — *Adhy. no.:* $V_1$ 140; $B_5$ 133 ].

31 $B_5$ om. the ref. —$^{a}$) $D_{4, 5, 8, 9}$ गार्हस्थ्यं (for °स्थ्यो). —$^{c}$) $V_1$ B Dn $D_4$ जीव- (for मर्त्य-).

32 $^{a}$) $D_8$ -धर्मास् (for -धर्मं). —$^{b}$) $V_1$ B Dn [अ]तःपरं; $D_8$ [अ]नुत्तमान् (for °मम्).

33 $^{b}$) $D_{5-9}$ रुंधति (for रुणद्धि). $B_5$ $Dn_{1, n2}$ $D_5$ तपोधनं (for °वनम्). —$^{c}$) $D_{4-9}$ मनःप्रीतिर् (for मनः प्रीतं).

34 $^{d}$) $D_{1, 2}$ ब्रूहि धर्मार्थकोविद. —$^{e}$) $D_{1, 2, 4-9}$ पृष्टो (for पृष्टं).

35 $V_1$ B Dn $D_2$ भगवान् (for महेश्वर). —$^{b}$) $B_5$ मुनेर् (for मुनि-). —$^{d}$) $V_1$ $B_{1, 2, 4, 5}$ Dn सु- (for स्व-). $D_{4-9}$ सिद्धाश्च तपसा परं.

36 $D_1$ om. (hapl.) $36^{bcd}$. —$^{b}$) $V_1$ $B_{1-4}$ Dn -विदां सतां; $B_5$ -भृतां सतां (for -विदां सदा).

37 $^{a}$) $D_{4-9}$ वांछंति (for उञ्छन्ति). $V_1$ B Dn ये ते (for तस्मिन्). —$^{b}$) B $Dn_{1, n2}$ ब्राह्यं (for ब्राह्मं). $D_{4-9}$ ब्राह्मं ($D_7$ °ह्यं) तेजः सनातनं. —$^{d}$) $V_1$ B Dn अध्वरे (for मधुरं).

38 $^{c}$) $B_3$ धर्मै; $D_1$ ब्रह्म- (for धर्म-). —$^{d}$) Some MSS. वालिखिल्य- (for वालखिल्य-). $V_1$ $Dn_3$ $D_8$ -गणैः (for -गणे). $B_3$ वालिखिल्लानां च मे शृणु (hypermetric).

39 $^{a}$) Some MSS. वालिखिल्यास्. —$^{c}$) $D_{4-8}$ इच्छंति (for उञ्छन्ति). $Dn_{1, n2}$ उंछे तिष्ठंति धर्मज्ञाः.

40 $^{b}$) $B_1$ -धारिणः (for -वाससः). —$^{c}$) $B_1$ निर्द्वंद्वाः सूर्यसंतप्ता; $D_{4-9}$ शीर्णपर्णफलाहारा. —$^{d}$) Some MSS. वालिखिल्यास्.

41 $^{a}$) $V_1$ $B_{1, 2, 4, 5}$ Dn -मात्रा ये; $B_3$ -मानास्ते (for -मात्रास्ते). —$^{b}$) $V_1$ B Dn भूत्वा स्वे स्वे; $D_5$ अंगुष्ठेषु (for स्वेष्वङ्गेषु). $D_2$ स्वेष्वेवांगेष्ववस्थिताः. —$^{c}$) $D_{5-7, 9}$ ईहंतस् (for ईहन्ते). —$^{d}$) $D_{4-7, 9}$ भवेत् (for महत्).

42 $^{a}$) $B_3$ तैः सुरैः; $B_5$ तेषु वै (for ते सुरैः). —$^{c}$) $V_1$ B $Dn_{1, n2}$ $D_8$ द्योतयंति; $Dn_3$ °यति

द्योतयन्तो दिशः सर्वास्तपसा दग्धकिल्बिषाः ॥ ४२
ये त्वन्ये शुद्धमनसो दयाधर्मपरायणाः ।
सन्तश्चक्रचराः पुण्याः सोमलोकचराश्च ये ॥ ४३
पितृलोकसमीपस्थास्त उञ्छन्ति यथाविधि ।
संप्रक्षालाश्मकुट्टाश्च दन्तोलूखलिनस्तथा ॥ ४४
सोमपानां च देवानामूष्मपाणां तथैव च ।
उञ्छन्ति ये समीपस्थाः स्वभावनियतेन्द्रियाः ॥ ४५
तेषामग्निपरिष्यन्दः पितृदेवार्चनं तथा ।
यज्ञानां चापि पञ्चानां यजनं धर्म उच्यते ॥ ४६
एष चक्रचरैर्देवि देवलोकचरैर्द्विजैः ।
ऋषिधर्मः सदा चीर्णो योऽन्यस्तमपि मे शृणु ॥ ४७
सर्वेष्वेवर्षिधर्मेषु जेय आत्मा जितेन्द्रियः ।
कामक्रोधौ ततः पश्चाज्जेतव्याविति मे मतिः ॥ ४८
अग्निहोत्रपरिस्पन्दो धर्मरात्रिसमासनम् ।
सोमयज्ञाभ्यनुज्ञानं पञ्चमी यज्ञदक्षिणा ॥ ४९
नित्यं यज्ञक्रिया धर्मः पितृदेवार्चने रतिः ।
सर्वातिथ्यं च कर्तव्यमन्नेनोञ्छार्जितेन वै ॥ ५०
निवृत्तिरुपभोगस्य गोरसानां च वै रतिः ।
स्थण्डिले शयनं योगः शाकपर्णनिषेवणम् ॥ ५१
फलमूलाशनं वायुरापः शैवलभक्षणम् ।
ऋषीणां नियमा ह्येते यैर्जयन्त्यजितां गतिम् ॥ ५२
विधूमे न्यस्तमुसले व्यङ्गारे भुक्तवज्जने ।
अतीतपात्रसंचारे काले विगतभैक्षके ॥ ५३
अतिथिं काङ्क्षमाणो वै शेषान्नकृतभोजनः ।
सत्यधर्मरतिः क्षान्तो मुनिधर्मेण युज्यते ॥ ५४
न स्तम्भी न च मानी यो न प्रमत्तो न विस्मितः ।
मित्रामित्रसमो मैत्रो यः स धर्मविदुत्तमः ॥ ५५

इति श्रीमहाभारते अनुशासनपर्वणि एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥

C. 13. 6505
B. 13. 141.
K. subst.
M. subst.

( for °यन्तो ).

43 $^{cd}$ ) $B_1$ $Dn_{2,3}$ चक्रधराः ( for °चराः ). $D_{4-9}$ सिद्धा देव- ( for पुण्याः सोम- ).

44 $^{a}$ ) $D_1$ पितृलोके. — $^{c}$ ) $D_{8-9}$ संप्रक्षाला अश्मकुट्टा. — $^{d}$ ) $Dn_{1,2}$ च ये; $Dn_3$ च ते ( for तथा ). $V_1$ Bom. ed. दंतोलूखलिकाश्च ते ( $V_1$ ये ).

45 $^{c}$ ) $D_1$ ते ( for ये ). $D_{6-9}$ उंछंति ते स्वभावस्थाः. — $^{d}$ ) $V_1$ B Dn सदारा ( for स्वभाव- ). $D_{4-8}$ स्वदारनिजि( $D_4$ °निर )तेंद्रियाः.

46 $^{a}$ ) $V_1$ B $Dn_3$ -परिस्यंदं ( for °ष्यन्दः ). — $^{b}$ ) $D_{4,5}$ यथा ( for तथा ). $V_1$ B Dn पितृणां चार्चनं तथा. — $^{c}$ ) $V_1$ B Dn $D_4$ [ए]व ( for [अ]पि ). $D_{5-9}$ यज्ञानां पंच दिव्यानां ( sic ).

48 $^{b}$ ) $D_{4-9}$ य आत्मानं ( for जेय आत्मा ). $D_1$ यतेंद्रियः. $V_1$ ज्ञेयोत्मा संजितेंद्रियैः; B Dn ज्ञेयोत्मा ( $B_3$ ज्ञेयार्था: ) संयतेंद्रियैः. — $^{d}$ ) $D_{4-9}$ निश्चयः ( for मे मतिः ).

49 $^{b}$ ) $D_{6,7}$ -समानतां ( for °सनम् ). $V_1$ B Dn Cnp धर्मचक्रं सनातनं; $D_{5,8,9}$ धर्मो रात्रिसमानतां. ❀ Cn : धर्मचक्रं सनातनमिति गौडाः । ❀ — $^{c}$ ) $V_1$ सोमयज्ञाभ्यनुज्ञाता.

50 $^{a}$ ) $V_1$ $Dn_2$ नित्य- ( for नित्यं ). — $^{b}$ ) $D_1$ -देवार्चनं. $D_{6-9}$ रतः ( for रतिः ). — $^{c}$ ) $D_{4-8}$ तथातिथ्यं ( for सर्वा° ). $B_1$ तु ( for च ).

51 $^{a}$ ) $V_1$ B Dn -भोगेषु ( for -भोगस्य ). — $^{b}$ ) $V_1$ B Dn $D_{4-9}$ शमे ( for च वै ). — $^{c}$ ) B Dn शयने ( for °नं ).

52 $^{b}$ ) $D_{6,7,9}$ सेवाल-; $D_8$ शेवाल- ( for शैवल- ). — $^{c}$ ) $D_{4-8}$ तु ( for हि ).

53 Cf. Manu. 6. 56. — $^{a}$ ) Bom. ed. सन्न- ( for न्यस्त- ). — $^{c}$ ) $D_{4-9}$ अपेत- ( for अतीत- ). — $^{d}$ ) $V_1$ B Dn $D_{4,5}$ -भिक्षुके; $D_9$ -भिक्षके ( for -भै° ).

54 $^{a}$ ) $D_{4-9}$ अतिथीन् ( for °थिं ). — $^{c}$ ) $V_1$ B Dn -रतः ( for -रतिः ). $D_{4-9}$ दांतो; Bom. ed. शांतो ( for क्षान्तो ). — $^{d}$ ) $V_1$ B $Dn_3$ $D_{4,7,8}$ मुनिर् ( for मुनि- ).

55 $^{a}$ ) $V_1$ B Dn मानी स्यान्; $D_{1-9}$ मायी च ( for मानी यो ). — $^{b}$ ) $V_1$ $B_{3-5}$ $Dn_{1,2}$ प्रसन्नो; $B_1$ प्रशान्तो

479
41.90
st.
ost.

अतः परतरं नास्ति नाधरं न तिरोऽग्रतः ।
अदुःखमसुखं सौम्यमजरामरमव्ययम् ॥ ३०

उमोवाच ।

गार्हस्थ्यो मोक्षधर्मश्च सज्जनाचरितस्त्वया ।
भाषितो मर्त्यलोकस्य मार्गः श्रेयस्करो महान् ॥ ३१
ऋषिधर्मं तु धर्मज्ञ श्रोतुमिच्छाम्यनुत्तमम् ।
स्पृहा भवति मे नित्यं तपोवननिवासिषु ॥ ३२
आज्यधूमोद्भवो गन्धो रुणद्धीव तपोवनम् ।
तं दृष्ट्वा मे मनः प्रीतं महेश्वर सदा भवेत् ॥ ३३
एतं मे संशयं देव मुनिधर्मकृतं विभो ।
सर्वधर्मार्थतत्त्वज्ञ देवदेव वदस्व मे ।
निखिलेन मया पृष्टं महादेव यथातथम् ॥ ३४

महेश्वर उवाच ।

हन्त तेऽहं प्रवक्ष्यामि मुनिधर्ममनुत्तमम् ।
यं कृत्वा मुनयो यान्ति सिद्धिं स्वतपसा शुभे ॥ ३५
फेनपानामृषीणां यो धर्मो धर्मविदां सदा ।
तं मे शृणु महाभागे धर्मज्ञे धर्ममादितः ॥ ३६
उञ्छन्ति सततं तस्मिन्ब्राह्मं फेनोत्करं शुभम् ।
अमृतं ब्रह्मणा पीतं मधुरं प्रसृतं दिवि ॥ ३७
एष तेषां विशुद्धानां फेनपानां तपोधने ।
धर्मचर्याकृतो मार्गो वालखिल्यगणे शृणु ॥ ३८
वालखिल्यास्तपःसिद्धा मुनयः सूर्यमण्डले ।
उञ्छमुञ्छन्ति धर्मज्ञाः शाकुनीं वृत्तिमास्थिताः ॥ ३९
मृगनिर्मोकवसनाश्चीरवल्कलवाससः ।
निर्द्वंद्वाः सत्पथं प्राप्ता वालखिल्यास्तपोधनाः ॥ ४०
अङ्गुष्ठपर्वमात्रास्ते स्वेष्वङ्गेषु व्यवस्थिताः ।
तपश्चरणमीहन्ते तेषां धर्मफलं महत् ॥ ४१
ते सुरैः समतां यान्ति सुरकार्यार्थसिद्धये ।

---

बहूदकौ त्रिदण्डिनौ । एको गृहे वसति, अपरस्तीर्थान्यटति । ❀

30 $D_4$ om. 30. — $^b$) $V_1$ B $Dn_3$ नावरं (for नाधरं). — $^c$) $D_5$ अजरः (for असुखं). — After 30, $V_1$ $B_{1.3-5}$ ins. an addl. colophon [ *Parvan name* : $B_{1.3.4}$ शांति. — *Sub-parvan* : $V_1$ $B_{1.3.4}$ दानधर्म. — *Adhy. name* : $V_1$ उमामहेश्वरसंवादः ; $B_1$ महेश्वरसंवादः. — *Adhy. no.* : $V_1$ 140; $B_5$ 133 ].

31 $B_6$ om. the ref. — $^a$) $D_{4.5.8.9}$ गार्हस्थ्यं (for °स्थ्यो). — $^c$) $V_1$ B Dn $D_4$ जीव- (for मर्त्य-).

32 $^a$) $D_8$ -धर्मास् (for -धर्मं). — $^b$) $V_1$ B Dn [अ]तःपरं; $D_8$ [अ]नुत्तमान् (for °मम्).

33 $^b$) $D_{5-8}$ रुंधति (for रुणद्धि). $B_5$ $Dn_{1.n2}$ $D_5$ तपोधनं (for °वनम्). — $^c$) $D_{4-9}$ मनःप्रीतिर् (for मनः प्रीतं).

34 $^d$) $D_{1.2}$ ब्रूहि धर्मार्थकोविद. — $^e$) $D_{1.2.4-9}$ पृष्टो (for पृष्टं).

35 $V_1$ B Dn $D_2$ भगवान् (for महेश्वर). — $^b$) $B_5$ मुनेर् (for मुनि-). — $^d$) $V_1$ $B_{1.2.4.5}$ Dn सु- (for स्व-). $D_{4-8}$ सिद्धाश्च तपसा परं.

36 $D_1$ om. (hapl.) $36^{bcd}$. — $^b$) $V_1$ $B_{1-4}$ Dn -विदां सतां; $B_5$ -भृतां सतां (for -विदां सदा).

37 $^a$) $D_{4-9}$ वांछंति (for उञ्छन्ति). $V_1$ B Dn ये ते (for तस्मिन्). — $^b$) B $Dn_{1.n2}$ ब्राह्मयं (for ब्राह्मं). $D_{4-9}$ ब्राह्मं ($D_7$ °ह्यं) तेजः सनातनं. — $^d$) $V_1$ B Dn अध्वरे (for मधुरं).

38 $^c$) $B_3$ धर्मैं; $D_1$ ब्रह्म- (for धर्म-). — $^d$) Some MSS. वालिखिल्य- (for वालखिल्य-). $V_1$ $Dn_3$ $D_8$ -गणैः (for -गणे). $B_3$ वालिखिल्लानां च मे शृणु (hypermetric).

39 $^a$) Some MSS. वालिखिल्यास्. — $^c$) $D_{4-9}$ इच्छंति (for उञ्छन्ति). $Dn_{1.n2}$ उंछे तिष्ठंति धर्मज्ञाः.

40 $^b$) $B_1$ -धारिणः (for -वाससः). — $^c$) $B_1$ निर्द्वंद्वाः सूर्यसंतप्ता; $D_{4-9}$ शीर्णपर्णफलाहारा. — $^d$) Some MSS. वालिखिल्यास्.

41 $^a$) $V_1$ $B_{1.2.4.5}$ Dn -मात्रा ये; $B_3$ -मानास्ते (for -मात्रास्ते). — $^b$) $V_1$ B Dn भूत्वा स्वे स्वे; $D_5$ अंगुष्ठेषु (for स्वेष्वङ्गेषु). $D_2$ स्वेष्वेवांगेष्ववस्थिताः. — $^c$) $D_{5-7.9}$ ईहंतस् (for ईहन्ते). — $^d$) $D_{4-7.9}$ भवेत् (for महत्).

42 $^a$) $B_3$ तैः सुरैः; $B_5$ तेषु वै (for ते सुरैः). — $^c$) $V_1$ B $Dn_{1.n2}$ $D_8$ द्योतयंति; $Dn_3$ °यति

द्योतयन्तो दिशः सर्वास्तपसा दग्धकिल्बिषाः ॥ ४२
ये त्वन्ये शुद्धमनसो दयाधर्मपरायणाः ।
सन्तश्चक्रचराः पुण्याः सोमलोकचराश्च ये ॥ ४३
पितृलोकसमीपस्थास्त उञ्छन्ति यथाविधि ।
संप्रक्षालाश्मकुट्टाश्च दन्तोलूखलिनस्तथा ॥ ४४
सोमपानां च देवानामूष्मपाणां तथैव च ।
उञ्छन्ति ये समीपस्थाः स्वभावनियतेन्द्रियाः ॥ ४५
तेषामग्निपरिष्यन्दः पितृदेवार्चनं तथा ।
यज्ञानां चापि पञ्चानां यजनं धर्म उच्यते ॥ ४६
एष चक्रचरैर्देवि देवलोकचरैर्द्विजैः ।
ऋषिधर्मः सदा चीर्णो योऽन्यस्तमपि मे शृणु ॥ ४७
सर्वेष्वेवर्षिधर्मेषु जेय आत्मा जितेन्द्रियः ।
कामक्रोधौ ततः पश्चाज्जेतव्याविति मे मतिः ॥ ४८
अग्निहोत्रपरिस्पन्दो धर्मरात्रिसमासनम् ।
सोमयज्ञाभ्यनुज्ञानं पञ्चमी यज्ञदक्षिणा ॥ ४९
नित्यं यज्ञक्रिया धर्मः पितृदेवार्चने रतिः ।
सर्वातिथ्यं च कर्तव्यमन्नेनोञ्छार्जितेन वै ॥ ५०
निवृत्तिरुपभोगस्य गोरसानां च वै रतिः ।
स्थण्डिले शयनं योगः शाकपर्णनिषेवणम् ॥ ५१
फलमूलाशनं वायुरापः शैवलभक्षणम् ।
ऋषीणां नियमा ह्येते यैर्जयन्त्यजितां गतिम् ॥ ५२
विधूमे न्यस्तमुसले व्यङ्गारे भुक्तवज्जने ।
अतीतपात्रसंचारे काले विगतभैक्षके ॥ ५३
अतिथिं काङ्क्षमाणो वै शेषान्नकृतभोजनः ।
सत्यधर्मरतिः क्षान्तो मुनिधर्मेण युज्यते ॥ ५४
न स्तम्भी न च मानी यो न प्रमत्तो न विस्मितः ।
मित्रामित्रसमो मैत्रो यः स धर्मविदुत्तमः ॥ ५५

इति श्रीमहाभारते अनुशासनपर्वणि एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥

C. 1: B. 1 K. M. ε

( for °यन्तो ).

43 cd) $B_1$ $Dn_{2,n3}$ चक्रधराः ( for °चराः ). $D_{4-9}$ सिद्धा देव- ( for पुण्याः सोम- ).

44 a) $D_1$ पितृलोके. — c) $D_{8-9}$ संप्रक्षाला अश्म कुट्टा. — d) $Dn_{1,n2}$ च ये; $Dn_3$ च ते ( for तथा ). $V_1$ Bom. ed. दंतोलूखलिकाश्च ते ( $V_1$ ये ).

45 c) $D_1$ ते ( for ये ). $D_{6-9}$ उंछंति ते स्वभावस्थाः. — d) $V_1$ B Dn सदारा ( for स्वभाव- ). $D_{4-9}$ स्वदारत्रिजि( $D_4$ °निर )तेंद्रियाः.

46 a) $V_1$ B $Dn_3$ -परिस्पंदं ( for °ष्यन्दः ). — b) $D_{4,5}$ यथा ( for तथा ). $V_1$ B Dn पितॄणां चार्चनं तथा. — c) $V_1$ B Dn $D_4$ [ए]व ( for [अ]पि ). $D_{5-9}$ यज्ञानां पंच दिव्यानां ( sic ).

48 b) $D_{4-8}$ य आत्मानं ( for जेय आत्मा ). $D_1$ यतेंद्रियः. $V_1$ ज्ञेयोत्मा संजितेंद्रियैः; B Dn ज्ञेयोत्मा ( $B_3$ ज्ञेयार्थाः ) संयतेंद्रियैः. — d) $D_{4-9}$ निश्चयः ( for मे मतिः ).

49 b) $D_{6,7}$ -समानतां ( for °सनम् ). $V_1$ B Dn Cnp धर्मचक्रं सनातनं; $D_{1,-,8}$ धर्मो रात्रिसमानतां. ❀ Cn : धर्मचक्रं सनातनमिति गौडाः। ❀ — c) $V_1$ सोमयज्ञाभ्यनुज्ञाता.

50 a) $V_1$ $Dn_2$ नित्य- ( for नित्यं ). — b) $D_1$ -देवार्चनं. $D_{8-9}$ रतः ( for रतिः ). — c) $D_{4-9}$ तथातिथ्यं ( for सर्वा° ). $B_1$ तु ( for च ).

51 a) $V_1$ B Dn -भोगेषु ( for -भोगस्य ). — b) $V_1$ B Dn $D_{4-9}$ शमे ( for च वै ). — c) B Dn शयने ( for °नं ).

52 b) $D_{6,7,9}$ सेवाल-; $D_8$ शैवाल- ( for शैवल- ). — c) $D_{4-8}$ तु ( for हि ).

53 Cf. Manu. 6. 56. — a) Bom. ed. सन्न- ( for न्यस्त- ). — c) $D_{4-9}$ अपेत- ( for अतीत- ). — d) $V_1$ B Dn $D_{4,5}$ -भिक्षुके; $D_9$ -भिक्षके ( for -भै° ).

54 a) $D_{4-9}$ अतिथीन् ( for °थिं ). — c) $V_1$ B Dn -रतः ( for -रतिः ). $D_{4-9}$ दांतो; Bom. ed. शांतो ( for क्षान्तो ). — d) $V_1$ B $Dn_3$ $D_{4,7,8}$ मुनिर् ( for मुनि- ).

55 a) $V_1$ B Dn मानी स्यान्; $D_{1-8}$ मायी च ( for मानी यो ). — b) $V_1$ $B_{3-5}$ $Dn_{1,n2}$ प्रसन्नो; $B_1$ प्रशान्तो

# १३०

उमोवाच ।

देशेषु रमणीयेषु गिरीणां निर्झरेषु च ।
स्रवन्तीनां च कुञ्जेषु पर्वतोपवनेषु च ॥ १
देशेषु च विचित्रेषु फलवत्सु समाहिताः ।
मूलवत्सु च देशेषु वसन्ति नियतव्रताः ॥ २
तेषामपि विधिं पुण्यं श्रोतुमिच्छामि शंकर ।
वानप्रस्थेषु देवेश स्वशरीरोपजीविषु ॥ ३

महेश्वर उवाच ।

वानप्रस्थेषु यो धर्मस्तं मे शृणु समाहिता ।
श्रुत्वा चैकमना देवि धर्मबुद्धिपरा भव ॥ ४
संसिद्धैर्नियतैः सद्भिर्वनवासमुपागतैः ।
वानप्रस्थैरिदं कर्म कर्तव्यं शृणु यादृशम् ॥ ५
त्रिकालमभिषेकार्थः पितृदेवार्चनं क्रिया ।
अग्निहोत्रपरिस्पन्द इष्टिहोमविधिस्तथा ॥ ६
नीवारग्रहणं चैव फलमूलनिषेवणम् ।
इङ्गुदैरण्डतैलानां स्नेहार्थं च निषेवणम् ॥ ७
योगचर्याकृतैः सिद्धैः कामक्रोधविवर्जनम् ।
वीरशय्यामुपासद्भिर्वीरस्थानोपसेविभिः ॥ ८
युक्तैर्योगवहैः सद्भिर्ग्रीष्मे पञ्चतपैस्तथा ।
मण्डूकयोगनियतैर्यथान्यायनिषेविभिः ॥ ९
वीरासनगतैर्नित्यं स्थण्डिले शयनैस्तथा ।
शीतयोगोऽग्नियोगश्च चर्तव्यो धर्मबुद्धिभिः ॥ १०
अब्भक्षैर्वायुभक्षैश्च शैवालोत्तरभोजनैः ।
अश्मकुट्टैस्तथा दान्तैः संप्रक्षालैस्तथापरैः ॥ ११

---

(for प्रमत्तो). — $^{d}$) Dn सत्य- (for यः स).

Colophon. — *Parvan name :* $B_{1-4}$ $D_1$ शांति. — *Sub-parvan :* $V_1$ B $Dn_1$. $n_2$ $D_{1.2.4}$ दानधर्म. — *Adhy. name :* $V_1$ $B_{1.2.4.5}$ Dn $D_{2.5-9}$ उमामहेश्वरसंवादः. — *Adhy. no.* ( figures, words or both ): $V_1$ 141; $B_{1.4.5}$ 134; $Dn_1$ 138. — *Śloka no.* : $Dn_1$ 114; $Dn_2$ 116; $D_4$ 52.

## 130

☞ This adhy. is missing in $D_3$ ( cf. v. l. 13. 82. 37 ).

1 $^{b}$) $V_1$ B Dn नदीनां ( for गिरीणां ). $D_{4-9}$ शिखरेषु ( for निर्झ° ). — $D_5$ reads $1^{cd}$ after $3^{ab}$. — $^{c}$) $V_1$ B Dn $D_2$ नि- ( for च ). — $^{d}$) $V_1$ B Dn पर्वतेषु ( for °तोप- ).

2 $^{a}$) $D_{4-9}$ वनेषु ( for देशेषु ). $Dn_1$. $n_2$ पवित्रेषु ( for विचि° ). — $B_5$ om. ( hapl. ) $2^{cd}$. — $^{c}$) $B_{1-4}$ Dn मेध्येषु ( for देशेषु ).

3 $^{a}$) $D_{4-9}$ कृत्स्नं ( for पुण्यं ). — After $3^{ab}$, $D_5$ reads $1^{cd}$. — For $3^{cd}$, $D_{4-9}$ subst. :

627* वानप्रस्थोञ्छवृत्तीनां तपोविस्तृतचेतसाम् ।
[ $D_4$ -तेजसां ( for -चेतसाम् ). ]

4 $D_2$ ईश्वर ; $D_9$ महादेव ( for महेश्वर ).

5 $^{a}$) Bom. ed. नियमैः ( for °तैः ).

6 $^{a}$) $V_1$ $B_{1.2.4}$ अभिषेकार्थं ; $Dn_1$. $n_2$ °कं च ; $D_{4-9}$ °कश्च ( for °कार्थः ). — $^{b}$) $V_1$ B Dn $D_{4-9}$ तथा ( for क्रिया ). — $^{d}$) $D_6$ इति ; $D_8$ इष्टिं ( for इष्टि- ).

7 $^{a}$) $D_{4-9}$ साक्षात् ( for चैव ). — $^{c}$) $D_{6.7.9}$ इंगुदैरणतैलानां. — $^{d}$) $V_1$ $B_{1-4}$ $Dn_1$. $n_2$ $D_{4-9}$ स्नेहार्थे च ; $B_5$ °र्थेषु ( for °र्थं च ).

8 $^{a}$) $B_5$ -व्रतैः ; $D_{5-8}$ -गतैः ( for -कृतैः ). — $^{b}$) $V_1$ B Dn $D_{4-9}$ -विवर्जितैः ( for °र्जनम् ). — $^{c}$) $D_1$ वीरशय्यासनं सद्भिर्.

9 $D_2$ om. ( hapl. ) 9. — $^{a}$) $B_5$ $D_7$ मुक्तैर् ( for युक्तैर् ). $D_4$ योगसहैः. — $^{c}$) $B_5$ -निरतैर् ( for -नियतैर् ). $D_{4-9}$ यथायोगव्र( $D_7$ °गं व्र )तोपेतैर्. — $^{d}$) $B_{2.5}$ यथान्यायं.

10 $D_4$ om. ( hapl. ) 10. — $^{a}$) $V_1$ B Dn $D_2$ -रतैर् ( for -गतैर् ). — $^{b}$) $V_1$ $B_{1.2.4.5}$ Dn शयनं. — $^{c}$) $V_1$ B Dn -तोयाग्नि- ; $D_{5-9}$ -योगाग्नि- ( for -योगोऽग्नि- ). — $^{d}$) $Dn_2$ $D_{6.8}$ कर्तव्यो ( for च° ). $D_2$ ब्रह्म- ( for धर्म- ).

11 $^{a}$) $D_5$ अंबुभक्षैर्वायुभक्षैः. — $^{b}$) $V_1$ B Dn $D_4$ शैवलोत्तर-.

चीरवल्कलसंवीतैर्मृगचर्मनिवासिभिः ।
कार्या यात्रा यथाकालं यथाधर्मं यथाविधि ॥ १२
वननित्यैर्वनचरैर्वनपैर्वनगोचरैः ।
वनं गुरुमिवासाद्य वस्तव्यं वनजीविभिः ॥ १३
तेषां होमक्रिया धर्मः पञ्चयज्ञनिषेवणम् ।
नागपञ्चमयज्ञस्य वेदोक्तस्यानुपालनम् ॥ १४
अष्टमीयज्ञपरता चातुर्मास्यनिषेवणम् ।
पौर्णमास्यां तु यो यज्ञो नित्ययज्ञस्तथैव च ॥ १५
विमुक्ता दारसंयोगैर्विमुक्ताः सर्वसंकरैः ।
विमुक्ताः सर्वपापैश्च चरन्ति मुनयो वने ॥ १६
स्रुग्भाण्डपरमा नित्यं त्रेताग्निशरणाः सदा ।
सन्तः सत्पथनित्या ये ते यान्ति परमां गतिम् ॥ १७
ब्रह्मलोकं महापुण्यं सोमलोकं च शाश्वतम् ।
गच्छन्ति मुनयः सिद्धा ऋषिधर्मव्यपाश्रयात् ॥ १८
एष धर्मो मया देवि वानप्रस्थाश्रितः शुभः ।
विस्तरेणार्थसंपन्नो यथास्थूलमुदाहृतः ॥ १९

उमोवाच ।

भगवन्देवदेवेश सर्वभूतनमस्कृत ।
यो धर्मो मुनिसंघस्य सिद्धिवादेषु तं वद ॥ २०
सिद्धिवादेषु संसिद्धास्तथा वननिवासिनः ।
स्वैरिणो दारसंयुक्तास्तेषां धर्मः कथं स्मृतः ॥ २१

महेश्वर उवाच ।

स्वैरिणस्तापसा देवि सर्वे दारविहारिणः ।
तेषां मौण्ड्यं कषायश्च वासरात्रिश्च कारणम् ॥ २२
त्रिकालमभिषेकश्च होत्रं त्वृषिकृतं महत् ।
समाधिः सत्पथस्थानं यथोदितनिषेवणम् ॥ २३
ये च ते पूर्वकथिता धर्मा वननिवासिनाम् ।
यदि सेवन्ति धर्मास्तानाप्नुवन्ति तपःफलम् ॥ २४
ये च दंपतिधर्माणः स्वदारनियतेन्द्रियाः ।
चरन्ति विधिदृष्टं तदृतुकालाभिगामिनः ॥ २५

---

12 $^{c}$) $B_1$ यथाकामं ( for °लं ).

13 $^{b}$) $V_1$ $B_{1.2.4.5}$ $Dn_3$ $D_5$ वनजैर्; $B_3$ $D_9$ °स्थैर्; $Dn_2$ om. ( for वनपैर् ). — $^{c}$) $D_4$ वनं गूढम्; $D_{5.7}$ वने गूढम्; $D_{6.8.9}$ वने गूढम् ( for वनं गुरुम् ). — $^{d}$) $D_{1.2}$ वर्तव्यं ( for वस्तव्यं ).

14 $B_4$ om. ( hapl. ) $14^{c}$–$15^{b}$. — $^{c}$) $D_{4.6-9}$ -पंचमि- ( for -पञ्चम- ). $V_1$ $B_{1-3.5}$ Dn $D_5$ भागं च पंचयज्ञस्य. — $^{d}$) $V_1$ B ( $B_4$ om. ) Dn यथोक्तस्य ( for वेदो° ).

15 $B_4$ om. $15^{ab}$ ( cf. v. l. 14 ). — $^{c}$) $D_{5-9}$ धर्मो ( for यज्ञो ). $V_1$ B Dn पौर्णमासादयो यज्ञा.

16 $^{a}$) $D_{5-9}$ वियुक्ता ( for विमुक्ता ). — $^{b}$) $D_8$ वियुक्ताः ( for विमुक्ताः ).

17 $^{c}$) $D_{4-9}$ ते ( for ये ). — $^{d}$) $D_5$ प्र- ( for ते ).

18 $^{b}$) $D_7$ नु ( for च ). — $^{d}$) $D_5$ मुनि- ( for ऋषि- ). $V_1$ B Dn सत्यधर्मव्यपाश्रयाः.

19 $^{b}$) $B_1$ शुभे ( for शुभः ). — $^{c}$) $V_1$ $B_{2-5}$ Dn [अ]थ ( for [अ]र्थ- ). — $^{d}$) $D_{4-7.9}$ यथामूलम् ( for °स्थूलम् ).

20 $^{a}$) $V_1$ B Dn $D_4$ भगवन्सर्वभूतेश. — $^{c}$) Bom. ed -संगस्य ( for -संघस्य ). — $^{d}$) $D_{1.4.5.7-9}$ सिद्ध- ( for सिद्धि- ). $D_2$ शृणु ( for वद ).

21 $^{a}$) $V_1$ $D_{1.4.6.9}$ सिद्ध- ( for सिद्धि- ). — $^{d}$) $D_4$ कथंचन ( for कथं स्मृतः ). $D_1$ तेषां धर्माः कथं स्मृताः.

22 $V_1$ $B_{1.4.5}$ $Dn_3$ देव; $B_3$ महेश; $Dn_{1}$, $n_2$ देवदेव; $D_2$ ईश्वर ( for महेश्वर ). — $^{a}$) $Dn_3$ $D_{2.4-9}$ तपसा ( for ता° ). — $^{b}$) $D_{4-9}$ सर्वभूत- ( for सर्वे दार- ). — $^{c}$) $D_{1.2}$ येषां ( for तेषां ). $D_{4.6-9}$ तेषां कषायमोक्षश्च; $D_5$ तेषां कामोथ मोक्षश्च. — $^{d}$) $V_1$ B Dn वासे ( for वास- ).

23 $D_2$ om. $23^{ab}$. — $^{a}$) $V_1$ $B_{2.3}$ द्वि- ( for त्रि- ). $D_4$ त्रिरात्रमभिषेकं च. — $^{b}$) $D_1$ चर्षि-; $D_{4.6.7.9}$ वर्ष-; $D_5$ यज्ञ- ( for त्वृषि- ). — $^{d}$) $V_1$ $B_{2-5}$ Dn $D_2$ यथोद्दिष्ट-; $B_1$ यथादृष्ट- ( for यथोदित- ).

24 $^{b}$) $V_1$ B Dn $D_2$ ते वन- ( for वननि- ). — $^{d}$) $B_3$ $D_{2.4.6.8}$ ततः ( for तपः- ).

25 $^{a}$) $B_1$ -धर्मेण ( for -धर्माणः ). — $^{b}$) $V_1$ $B_{1.3.4}$ Dn स्वदारनिरतेंद्रियाः. — $^{c}$) $D_{1.5-9}$ तु; $D_4$ हि ( for तद् ). — $^{d}$) $Dn_2$, $n_3$ अनु- ( for ऋतु- ).

6531 142. 26 bst. तेषामृषिकृतो धर्मो धर्मिणामुपपद्यते ।
bst. न कामकारात्कामोऽन्यः संसेव्यो धर्मदर्शिभिः ॥ २६
सर्वभूतेषु यः सम्यग्ददात्यभयदक्षिणाम् ।
हिंसारोषविमुक्तात्मा स वै धर्मेण युज्यते ॥ २७
सर्वभूतानुकम्पी यः सर्वभूतार्जवव्रतः ।
सर्वभूतात्मभूतश्च स वै धर्मेण युज्यते ॥ २८
सर्ववेदेषु वा स्नानं सर्वभूतेषु चार्जवम् ।
उभे एते समे स्यातामार्जवं वा विशिष्यते ॥ २९
आर्जवं धर्म इत्याहुरधर्मो जिह्म उच्यते ।
आर्जवेनेह संयुक्तो नरो धर्मेण युज्यते ॥ ३०
आर्जवो भुवने नित्यं वसत्यमरसंनिधौ ।
तस्मादार्जवनित्यः स्याद्य इच्छेद्धर्ममात्मनः ॥ ३१
क्षान्तो दान्तो जितक्रोधो धर्मभूतोऽविहिंसकः ।
धर्मे रतमना नित्यं नरो धर्मेण युज्यते ॥ ३२
व्यपेततन्द्रो धर्मात्मा शक्त्या सत्पथमाश्रितः ।
चारित्रपरमो बुद्धो ब्रह्मभूयाय कल्पते ॥ ३३

उमोवाच ।

आश्रमाभिरता देव तापसा ये तपोधनाः ।
दीप्तिमन्तः कया चैव चर्ययाथ भवन्ति ते ॥ ३४
राजानो राजपुत्राश्च निर्धना वा महाधनाः ।
कर्मणा केन भगवन्प्राप्नुवन्ति महाफलम् ॥ ३५
नित्यं स्थानमुपागम्य दिव्यचन्दनरूषिताः ।
केन वा कर्मणा देव भवन्ति वनगोचराः ॥ ३६
एतं मे संशयं देव तपश्चर्यागतं शुभम् ।
शंस सर्वमशेषेण त्र्यक्ष त्रिपुरनाशन ॥ ३७

महेश्वर उवाच ।

उपवासव्रतैर्दान्ता अहिंस्राः सत्यवादिनः ।
संसिद्धाः प्रेत्य गन्धर्वैः सह मोदन्त्यनामयाः ॥ ३८

---

26 $^{a}$) $D_5$ मुनि- (for ऋषि-). — $D_2$ om. (hapl.?) $26^{c}$–$28^{d}$. — $^{d}$) $B_{2.3}$ -बुद्धिभिः (for -दर्शिभिः).

27 $D_2$ om. 27 (cf. v. l. 26). — $^{a}$) $D_{4-9}$ पश्यन् (for सम्यग्). — $^{c}$) $V_1$ B Dn -दोष- (for -रोष-). $Dn_2$ $D_{6-9}$ -वियुक्तात्मा (for -विमु°). — $^{d}$) $D_{6-9}$ धर्मेषु (for धर्मेण).

28 $D_2$ om. 28 (cf. v. l. 26). $D_{1.4.8}$ om. (hapl.) 28. — $^{a}$) $V_1$ -धर्मानु- (for -भूतानु-). $D_{6.7.9}$ च (for यः). — $^{b}$) $D_5$ -प्रियः (for -व्रतः). — $^{d}$) $D_{7.9}$ सर्व- (for स वै).

29 $^{a}$) $V_1$ -तीर्थेषु (for -वेदेषु). $B_1$ $D_{1.2}$ च; $B_5$ वै (for वा). $D_{4-9}$ सर्वतीर्थेषु यत्पुण्यं. — $^{b}$) $D_{4.6-9}$ -वेदेषु (for -भूतेषु-). $B_{4.5}$ वा (for च). — $^{c}$) $D_{1.2}$ ह्येते (for एते). $D_{4-9}$ उभावेतौ समौ स्याताम्. — $^{d}$) $D_{4-9}$ च (for वा).

30 $^{b}$) $V_1$ $B_{1.4.5}$ Dn न धर्मो (for अधर्मो). $D_{4-7.9}$ दुःखम् (for जिह्म).

31 $B_5$ om. (hapl.) 31–32. — $^{a}$) $V_1$ $B_{1.2.4}$ $Dn_3$ आर्जवे (for °वो). $B_3$ $Dn_1.n_2$ $D_{4-9}$ आर्जवे तु र($D_{4.6-9}$ निर)तो नित्यं. — $^{c}$) $V_1$ B ($B_5$ om.) Dn $D_2$ -युक्तः (for -नित्यः).

32 $B_5$ om. 32 (cf. v. l. 31). — $^{a}$) $D_7$ यत- (for जित-). — $^{b}$) $D_1$ सर्वभूतेष्वहिंसकः.

33 $^{a}$) B Dn $D_1$ -तंद्रिर् (for -तन्द्रो). — $D_7$ om. $33^{b}$. — $^{b}$) $B_1$ $D_{1.4-6.8.9}$ आस्थितः (for आश्रितः). — $^{c}$) $B_3$ भूयो; $Dn_3$ वृद्धो; $D_{4-9}$ धर्मो (for बुद्धो).

34 $^{a}$) $V_1$ B $Dn_3$ $D_{4.6-9}$ आश्रमांतरिता देव. — $^{b}$) $D_{6-8}$ तपसा (for ता°). — $^{c}$) $D_{4-9}$ दीप्तधर्मक्रियाश्चैव. — $^{d}$) $D_2$ ये; $D_{4-7.9}$ च (for [अ]थ).

35 $^{a}$) $D_7$ वा (for च). — $^{b}$) $B_1$ धनिनो (for निर्धना). $V_1$ B Dn $D_{4.5}$ ये (for वा). — $^{d}$) $D_2$ महत्फलं.

36 $^{a}$) $V_1$ B $Dn_3$ दिव्यं (for नित्यं). — $^{b}$) $B_{1-3}$ $Dn_1.n_2$ $D_{2.4-6.9}$ -भूषिताः (for -रूषिताः).

37 $^{a}$) $D_{4.5}$ एवं; $D_{6-9}$ एनं (for एतं). — $^{b}$) $V_1$ Dn तपश्चर्याश्रितं शुभं. — $^{c}$) $B_{2.3}$ धर्मम् (for सर्वम्).

38 $V_1$ $B_{1.2.4.5}$ Dn देवः $B_3$ महेश (for महेश्वर). — $^{a}$) $D_{4.6-9}$ -व्रता; $D_5$ -रता (for -व्रतैर्). $D_2$ दानैर् (for दान्ता). — $^{b}$) $V_1$ B Dn $D_2$ ह्यहिंस्राः (for अ°). — $^{d}$) $D_{4.6-9}$ [उ]मेनघाः (for [अ]नामयाः).

मण्डूकयोगशयनो यथास्थानं यथाविधि ।
दीक्षां चरति धर्मात्मा स नागैः सह मोदते ॥ ३९
शष्पं मृगमुखोत्सृष्टं यो मृगैः सह सेवते ।
दीक्षितो वै मुदा युक्तः स गच्छत्यमरावतीम् ॥ ४०
शैवालं शीर्णपर्णं वा तद्व्रतो यो निषेवते ।
शीतयोगवहो नित्यं स गच्छेत्परमां गतिम् ॥ ४१
वायुभक्षोऽम्बुभक्षो वा फलमूलाशनोऽपि वा ।
यक्षेष्वैश्वर्यमाधाय मोदतेऽप्सरसां गणैः ॥ ४२
अग्नियोगवहो ग्रीष्मे विधिदृष्टेन कर्मणा ।
चीर्त्वा द्वादश वर्षाणि राजा भवति पार्थिवः ॥ ४३
आहारनियमं कृत्वा मुनिर्द्वादशवार्षिकम् ।
मरुं संसाध्य यत्नेन राजा भवति पार्थिवः ॥ ४४
स्थण्डिले शुद्धमाकाशं परिगृह्य समन्ततः ।
प्रविश्य च मुदा युक्तो दीक्षां द्वादशवार्षिकीम् ॥ ४५
स्थण्डिलस्य फलान्याहुर्यानानि शयनानि च ।
गृहाणि च महार्हाणि चन्द्रशुभ्राणि भामिनि ॥ ४६
आत्मानमुपजीवन्यो नियतो नियताशनः ।
देहं वानशने त्यक्त्वा स स्वर्गं समुपाश्नुते ॥ ४७
आत्मानमुपजीवन्यो दीक्षां द्वादशवार्षिकीम् ।
त्यक्त्वा महार्णवे देहं वारुणं लोकमश्नुते ॥ ४८
आत्मानमुपजीवन्यो दीक्षां द्वादशवार्षिकीम् ।
अश्मना चरणौ भित्त्वा गुह्यकेषु स मोदते ॥ ४९
साधयित्वात्मनात्मानं निर्द्वंद्वो निष्परिग्रहः ।
चीर्त्वा द्वादश वर्षाणि दीक्षामेकां मनोगताम् ।
स्वर्गलोकमवाप्नोति देवैश्च सह मोदते ॥ ५०
आत्मानमुपजीवन्यो दीक्षां द्वादशवार्षिकीम् ।
हुत्वाग्नौ देहमुत्सृज्य वह्निलोके महीयते ॥ ५१
यस्तु देवि यथान्यायं दीक्षितो नियतो द्विजः ।
आत्मन्यात्मानमाधाय निर्द्वंद्वो निष्परिग्रहः ॥ ५२
चीर्त्वा द्वादश वर्षाणि दीक्षामेकां मनोगताम् ।

C. 1: B. 1: K. 8t M. 8t

39 $^{b}$) V1 B Dn D2 यथान्यायं ( for °स्थानं ).

40 $^{a}$) V1 B Dn -मुखोच्छिष्टं; D1 -गणोत्सृष्टं ( for -मुखो° ). — $^{b}$) V1 B भक्षति; D1–9 मोदते ( for सेवते ). — $^{c}$) D5 [ऽ]पि ( for वै ).

41 $^{a}$) D1.2 शैवलं ( for शैवालं ). B1.3 -पत्रं वा; D4.5 -पत्रं च; D7 -पर्णं च ( for -पर्णं वा ). D6.8.9 सैवालं दीर्णपत्रं च. — $^{b}$) V1 Dn3 D2.4–9 तद्व्रतं; Dn1.n2 °तौ ( for °तो ). — $^{c}$) B3 -योगसहो.

42 $^{c}$) D1.2 यक्षैश्च ( for यक्षेषु ). D4–8 आदाय ( for आधाय ).

43 $^{d}$) D4–9 धार्मिकः ( for पार्थिवः ).

44 D1.2.4.6.7.9 om. ( hapl. ) 44. — $^{c}$) Dn3 प्रसाध्य ( for सं° ). B3 कालेन ( for यत्नेन ). — $^{d}$) D8 नरो ( for राजा ).

45 After 45, Dn1.n2 D4–9 read $47^{cd}$, D4–9 repeating it in its proper place.

46 Dn3 om. ( hapl. ) $46^{a}$–$49^{b}$. B5 om. ( hapl. ) $46^{a}$–$48^{b}$. — $^{b}$) D4.5 वसनानि ( for शयनानि ). — $^{d}$) V1 B2.4 Dn2 भाविनि ( for भामिनि ).

47 B5 Dn3 om. 47 ( cf. v. l. 46 ). D4–9 om. $47^{ab}$. Dn1.n2 read $47^{cd}$ after 45; D4–9 read it for the first time after 45. — $^{c}$) B1 च ( for वा ). — $^{d}$) D6–9 ( all both times ) स स्वर्गे सुखमेधते.

48 B5 om. $48^{ab}$; Dn3 om. 48 ( for both, cf. v. l. 46 ). D1.2.3 om. ( hapl. ) 48. — $^{c}$) D3 घोरं ( for देहं ). — $^{d}$) B5 आप्नुते ( for अश्नुते ).

49 Dn3 om. $49^{ab}$ ( cf. v. l. 46 ).

50 $^{a}$) D4–8 [आ]त्मनो देहं ( for °नात्मानं ). — D8 om. ( hapl. ) $50^{b}$–$52^{c}$. — $^{d}$) V1 B Dn D8 एतां ( for एकां ). — Dn3 repeats $50^{ef}$ after 53.

51 D8 om. 51 ( cf. v. l. 50 ). — $^{c}$) D4.5 हुत्वा देहं समुत्सृज्य.

52 D8 om. $52^{abc}$ ( cf. v. l. 50 ). — $^{a}$) D4.6.7–9 यथायोगं ( for यस्तु देवि ). — $^{b}$) D4.6.7–9 दीक्षितो विगतज्वरः. — $^{d}$) V1 B Dn निर्ममो धर्मलालसः ( B3

अरणीसहितं स्कन्धे बद्ध्वा गच्छत्यनावृतः ॥ ५३
वीराध्वानमना नित्यं वीरासनरतस्तथा ।
वीरस्थायी च सततं स वीरगतिमाप्नुयात् ॥ ५४
स शक्रलोकगो नित्यं सर्वकामपुरस्कृतः ।
दिव्यपुष्पसमाकीर्णो दिव्यचन्दनभूषितः ।
सुखं वसति धर्मात्मा दिवि देवगणैः सह ॥ ५५
वीरलोकगतो वीरो वीरयोगवहः सदा ।
सत्त्वस्थः सर्वमुत्सृज्य दीक्षितो नियतः शुचिः ।
वीराध्वानं प्रपद्येद्यस्तस्य लोकाः सनातनाः ॥ ५६
कामगेन विमानेन स वै चरति च्छन्दतः ।
शक्रलोकगतः श्रीमान्मोदते च निरामयः ॥ ५७

इति श्रीमहाभारते अनुशासनपर्वणि त्रिंशत्यधिकशततमोऽध्यायः ॥ १३० ॥

## १३१

उमोवाच

भगवन्भगनेत्रघ्न पूष्णो दशनपातन ।
दक्षक्रतुहर त्र्यक्ष संशयो मे महानयम् ॥ १
चातुर्वर्ण्यं भगवता पूर्वं सृष्टं स्वयंभुवा ।
केन कर्मविपाकेन वैश्यो गच्छति शूद्रताम् ॥ २
वैश्यो वा क्षत्रियः केन द्विजो वा क्षत्रियो भवेत् ।
प्रतिलोमः कथं देव शक्यो धर्मो निषेवितुम् ॥ ३
केन वा कर्मणा विप्रः शूद्रयोनौ प्रजायते ।
क्षत्रियः शूद्रतामेति केन वा कर्मणा विभो ॥ ४
एतं मे संशयं देव वद भूतपतेऽनघ ।
त्रयो वर्णाः प्रकृत्येह कथं ब्राह्मण्यमाप्नुयुः ॥ ५

महेश्वर उवाच ।

ब्राह्मण्यं देवि दुष्प्रापं निसर्गाद्ब्राह्मणः शुभे ।
क्षत्रियो वैश्यशूद्रौ वा निसर्गादिति मे मतिः ॥ ६

---

°मानसः ).

53 [a]) Dn3 तीर्त्वा ( for चीर्त्वा ). —[b]) V1 B Dn D2 एतां ( for एकां ). —[d]) B4 अनावृतं; D4-7. 9 °हतः ( for °वृतः ). —After 53, Dn3 repeats 50[ef].

54 [b]) D4-9 -गतस् ( for -रतस् ). V1 सदा ( for तथा ).

55 [b]) D4 धर्म- ( for सर्व- ). V1 -पुरस्कृतं. —[d]) V1 B D5 -रूषितः ( for -भूषितः ).

56 [a]) D5 -मतो ( for -गतो ). V1 B Dn D2 नित्यं ( for वीरो ). —[b]) Bom. ed. -सहः ( for -वहः ). —[c]) D4. 6. 7. 9 सर्वस्थः ( for सत्त्वस्थः ).

57 [c]) D4 -गतिः ( for -गतः ). —[d]) D4-9 स ( for च ).

Colophon. —*Parvan name :* B2-4 D1 शांति. —*Sub-parvan :* V1 B1-3. 5 Dn1 D1. 2. 4. 5. 8. 9 दानधर्म. —*Adhy. name :* V1 B1. 2. 4. 5 Dn1 D1. 2. 5. 7 उमामहेश्वरसंवादः. —*Adhy. no.* ( figures, words or both ): V1 D1 142; B5 135; Dn1 139. —*Śloka no. :* Dn1, n2 59.

### 131

☞ *This adhy. is missing in D3 ( cf. v. l. 13. 82. 37 ).*

1 [b]) V1 B1. 3. 5 Dn दंतनि- ( for दशन- ). B2. 8 D4-9 पूष्णो दंतविनाशन.

2 [d]) D8 भवति ( for गच्छति ).

3 D9 om. 3-4. —[a]) D2 क्षत्रियतां ( for वा क्षत्रियः ). —[b]) D5 क्षत्रियो वा द्विजो भवेत्. —[d]) V1 B1. 2. 4. 5 Dn D1 निवर्तितुं ( for निषेवितुम् ). B3 शक्तो धर्मो निवर्तितुं.

4 D9 om. 4 ( cf. v. l. 3 ).

5 [b]) D4. 6-9 -देव ( for वद ). —[c]) D5. 7 [ए]व ( for [इ]ह ).

6 V1 B1. 2. 4. 5 Dn देव; D2. 4-9 ईश्वर ( for महे-

कर्मणा दुष्कृतेनेह स्थानाद्भ्रश्यति वै द्विजः ।
ज्येष्ठं वर्णमनुप्राप्य तस्माद्रक्षेत वै द्विजः ॥ ७
स्थितो ब्राह्मणधर्मेण ब्राह्मण्यमुपजीवति ।
क्षत्रियो वाथ वैश्यो वा ब्रह्मभूयाय गच्छति ॥ ८
यस्तु विप्रत्वमुत्सृज्य क्षात्रं धर्मं निषेवते ।
ब्राह्मण्यात्स परिभ्रष्टः क्षत्रयोनौ प्रजायते ॥ ९
वैश्यकर्म च यो विप्रो लोभमोहव्यपाश्रयः ।
ब्राह्मण्यं दुर्लभं प्राप्य करोत्यल्पमतिः सदा ॥ १०
स द्विजो वैश्यतामेति वैश्यो वा शूद्रतामियात् ।
स्वधर्मात्प्रच्युतो विप्रस्ततः शूद्रत्वमाप्नुते ॥ ११
तत्रासौ निरयं प्राप्तो वर्णभ्रष्टो बहिष्कृतः ।
ब्रह्मलोकपरिभ्रष्टः शूद्रः समुपजायते ॥ १२
क्षत्रियो वा महाभागे वैश्यो वा धर्मचारिणि ।
स्वानि कर्माण्यपाहाय शूद्रकर्माणि सेवते ॥ १३
स्वस्थानात्स परिभ्रष्टो वर्णसंकरतां गतः ।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रत्वं याति तादृशः ॥ १४
यस्तु शुद्धः स्वधर्मेण ज्ञानविज्ञानवाञ्शुचिः ।
धर्मज्ञो धर्मनिरतः स धर्मफलमश्नुते ॥ १५
इदं चैवापरं देवि ब्रह्मणा समुदीरितम् ।
अध्यात्मं नैष्ठिकं सद्भिर्धर्मकामैर्निषेव्यते ॥ १६
उग्रान्नं गर्हितं देवि गणान्नं श्राद्धसूतकम् ।
घुष्टान्नं नैव भोक्तव्यं शूद्रान्नं नैव कर्हिचित् ॥ १७
शूद्रान्नं गर्हितं देवि देवदेवैर्महात्मभिः ।
पितामहमुखोत्सृष्टं प्रमाणमिति मे मतिः ॥ १८
शूद्रान्नेनावशेषेण जठरे यो म्रियेत वै ।
आहिताग्निस्तथा यज्वा स शूद्रगतिभाग्भवेत् ॥ १९
तेन शूद्रान्नशेषेण ब्रह्मस्थानादपाकृतः ।
ब्राह्मणः शूद्रतामेति नास्ति तत्र विचारणा ॥ २०

C. 13. 6[...]
B. 13. 1[...]
K. subs[...]
M, subs[...]

श्वर ). — a) V1 B3 D7.8 दुष्प्राप्यं ( for °पं ). — b) Dn1.n2 निःसंगाद् ( for निसर्गाद् ). — c) V1 B1.2.4.5 Dn3 वैश्यः शूद्रो ( for वैश्यशूद्रौ ). Dn1 om.; D2 च ( for वा ).

7 a) V1 निष्कृतेन ( for दुष्कृ° ). — V1 D1.6.8.9 om. ( hapl. ) 7cd.

8 a) D1.6–8 -धर्मो यो ( for -धर्मेण ). D5 स्थितो ब्राह्मण्यधर्मो यो. — c) D5 क्षत्रियोऽप्यथ वा वैश्यो. — d) D6–9 कल्पते ( for गच्छति ).

9 D4 om. 9. — a) V1 विसृज्य ( for उत्सृज्य ). — b) V1 क्षात्र-; B2 क्षत्र- ( for क्षात्रं ). D1.2 कर्म ( for धर्मं ). — c) V1 B2–5 Dn स्वस्थानात् ( for ब्राह्मण्यात् ). — After 9, D2 reads 14.

11 D4 om. 11. — d) B3 आप्नुयात्; D5–9 अश्नुते ( for आप्नुते ).

12 a) V1 तदा; B2 यत्र ( for तत्र ). D1 प्राप्य ( for प्राप्तो ). — b) D3–9 ब्रह्म- ( for वर्ण- ). V1 ब्रह्मभ्रष्टो बहिःस्थितः. — c) V1 B Dn D9 -लोकात् ( for -लोक- ). — d) D1.2 शूद्रत्वमुपजायते; D4–9 क्षत्रियस्तूप( D4.5 °स्तु प्र )जायते.

13 a) D1.2 अपास्य यः स्वकर्माणि. — d) V1 B2.3 Dn शूद्रकर्म निषेवते.

14 D2 reads 14 after 9. — b) D1.2 वर्णसंकरसंभवः. — d) B3 शूद्रतां ( for °त्वं ). B D6–9 तादृशं ( for °शः ).

15 a) V1 B Dn D2.9 क्षुद्रः ( for शुद्धः ). — d) D4.5 स्व- ( for स ).

16 b) V1 B Dn ब्रह्मणा स( Dn2 श )मुदा( Dn1 °पा )हृतं. — c) D6 तद्धि ( for सद्भिर् ). D2 अध्यात्मनैव विद्वद्भिर्.

17 a) D4–9 ग्रामान्नं ( for उग्रान्नं ). — c) Dn1.n2 D4.6.7.9 दुष्टान्नं ( for घु° ). D4 च न; D5–7.9 न च ( for नैव ). — d) D5 च ( for [ए]व ). V1 B1.3–5 Dn3 वा क्वचित् ( for कर्हिचित् ).

18 b) V1 B Dn D5 सदा ( for देव- ).

19 b) B Dn D4–9 म्रियेद्द्विजः ( for म्रियेत वै ). V1 जठरे म्रियते द्विजः. — B3 om. ( hapl. ) 19c–21b.

20 B3 om. 20 ( cf. v. l. 19 ).

21 B3 om. 21ab ( cf. v. l. 19 ). — a) D5 तस्य ( for यस्य ). — b) V1 B ( B3 om. ) Dn D7 जठरे

यस्यान्नेनावशेषेण जठरे यो म्रियेत वै ।
तां तां योनिं व्रजेद्विप्रो यस्यान्नमुपजीवति ॥ २१
ब्राह्मणत्वं शुभं प्राप्य दुर्लभं योऽवमन्यते ।
अभोज्यान्नानि चाश्नाति स द्विजत्वात्पतेत वै ॥ २२
सुरापो ब्रह्महा क्षुद्रश्चौरो भग्नव्रतोऽशुचिः ।
स्वाध्यायवर्जितः पापो लुब्धो नैकृतिकः शठः ॥ २३
अव्रती वृषलीभर्ता कुण्डाशी सोमविक्रयी ।
निहीनसेवी विप्रो हि पतति ब्रह्मयोनितः ॥ २४
गुरुतल्पी गुरुद्वेषी गुरुकुत्सारतिश्च यः ।
ब्रह्मद्विड्चापि पतति ब्राह्मणो ब्रह्मयोनितः ॥ २५
एभिस्तु कर्मभिर्देवि शुभैराचरितैस्तथा ।
शूद्रो ब्राह्मणतां गच्छेद्वैश्यः क्षत्रियतां व्रजेत् ॥ २६
शूद्रकर्माणि सर्वाणि यथान्यायं यथाविधि ।
शुश्रूषां परिचर्यां च ज्येष्ठे वर्णे प्रयत्नतः ।
कुर्यादविमनाः शूद्रः सततं सत्पथे स्थितः ॥ २७

दैवतद्विजसत्कर्ता सर्वातिथ्यकृतव्रतः ।
ऋतुकालाभिगामी च नियतो नियताशनः ॥ २८
चौक्षश्चौक्षजनान्वेषी शेषान्नकृतभोजनः ।
वृथामांसान्यभुञ्जानः शूद्रो वैश्यत्वमृच्छति ॥ २९
ऋतवागनहंवादी निर्द्वंद्वः शमकोविदः ।
यजते नित्ययज्ञैश्च स्वाध्यायपरमः शुचिः ॥ ३०
दान्तो ब्राह्मणसत्कर्ता सर्ववर्णबुभूषकः ।
गृहस्थव्रतमातिष्ठन्द्विकालकृतभोजनः ॥ ३१
शेषाशी विजिताहारो निष्कामो निरहंवदः ।
अग्निहोत्रमुपासंश्च जुह्वानश्च यथाविधि ॥ ३२
सर्वातिथ्यमुपातिष्ठञ्शेषान्नकृतभोजनः ।
त्रेताग्निमन्त्रविहितो वैश्यो भवति वै यदि ।
स वैश्यः क्षत्रियकुले शुचौ महति जायते ॥ ३३
स वैश्यः क्षत्रियो जातो जन्मप्रभृति संस्कृतः ।
उपनीतो व्रतपरो द्विजो भवति सत्कृतः ॥ ३४

---

यो म्रियेद्द्विजः; $D_{4-6, 9}$ जठरे म्रियते द्विजः. — $^{c}$) $Dn_2$ $D_{4, 6, 7, 9}$ व्रजन् ( for व्रजेद् ).

22 $^{d}$) $D_{4-9}$ द्विजत्वात्पतते स वै.

23 $^{a}$) $D_{4-9}$ क्षौद्रश्. — $^{b}$) $B_3$ $D_5$ चोरो ( for चौरो ).

24 $^{c}$) $D_{1, 2}$ विहीन-; $D_{4, 5}$ न हीन- ( for निहीन- ). $D_{6-9}$ यः ( for हि ). — $^{d}$) $B_1$ हीयते; $D_{6-9}$ पतते ( for °ति ).

25 $^{a}$) $V_1$ $B_{3, 5}$ Dn गुरुद्रोही ( for °द्वेषी ). — $^{c}$) $V_1$ $B_{2, 4, 5}$ Dn $D_{4, 5}$ ब्रह्मविच् ( for °द्विड् ). $D_{2, 3}$ वा ( for च ).

26 $^{a}$) $Dn_3$ एतैस्; $D_{4-9}$ तथा ( for एभिस् ). — $^{b}$) $D_{4-9}$ सदा ( for तथा ). — $^{c}$) $Dn_{1, n2}$ याति; $D_2$ एति ( for गच्छेद् ).

27 $^{a}$) $D_7$ शूद्रः ( for शूद्र- ). $D_4$ शूद्रः सर्वाणि कर्माणि. — $^{d}$) $V_1$ $B_{1, 2, 4}$ Dn $D_{4, 7, 8}$ ज्येष्ठ- ( for ज्येष्ठे ). — $^{f}$) $D_9$ सत्पथ-.

28 $^{a}$) $V_1$ B Dn देवद्विजातिसत्कर्ता. — $^{b}$) $D_2$ सर्वातिथ्ये. $B_3$ -शुभव्रतः ( for -कृत° ).

29 $^{a}$) $V_1$ B $Dn_3$ $D_4$ चोक्षश्चोक्ष-; $Dn_1$ चोक्षाचोक्ष-; $D_{5, 7-9}$ दक्षो दक्ष- ( for चौक्षश्चौक्ष- ). $D_6$ दक्षो दक्ष-गणान्वेषी. — $D_6$ om. ( hapl. ) $29^{c}$–$31^{d}$. — $^{c}$) $D_{4, 5}$ -मांसम् ( for -मांसानि ). $V_1$ B Dn वृथामांसं न भुंजीत. — $^{d}$) $B_2$ $Dn_3$ $D_{1, 2}$ अच्छंति; $B_{2-5}$ अर्हति ( for ऋच्छति ).

30 $D_6$ om. 30 ( cf. v. l. 29 ). — $^{a}$) $D_8$ कृतवाग् ( for ऋत° ). — $^{c}$) $D_{1, 4, 7, 8}$ चैव ( for नित्य- ).

31 $D_6$ om. 31 ( cf. v. l. 29 ). — $^{b}$) $V_1$ $D_{4, 5}$ -विभूषकः ( for -बुभूषकः ). — After 31, $B_4$ reads $33^{cd}$, repeating it in its proper place.

32 $D_{1, 2}$ om. ( hapl. ) $32^{a}$–$33^{b}$. — $^{a}$) $D_{6, 7, 9}$ शेषाशी नियताहारो. — $^{b}$) $D_{4-9}$ निष्क्रोधो निरहंकृतः ( $D_5$ °तिः ). — $^{d}$) $D_8$ जुह्वानो जातवेदसं.

33 $D_{1, 2}$ om. $33^{ab}$ ( cf. v. l. 32 ). $B_4$ reads $33^{cd}$ for the first time after 31. — $^{c}$) $D_{4-9}$ त्रेताग्निमंत्राभिरतो. — $^{d}$) $V_1$ $Dn_{1, n2}$ $D_5$ द्विजः ( for यदि ). — $^{e}$) $D_{1, 4-9}$ वैश्यश्च ( $D_4$ °स्तु ) ( for स वैश्यः ). — $^{f}$) $D_{1, 2}$ शुभे; $D_{6, 7, 9}$ शुचि ( for शुचौ ).

34 $^{c}$) $B_3$ ब्रह्मपरो ( for व्रत° ).

ददाति यजते यज्ञैः संस्कृतैराप्तदक्षिणैः ।
अधीते स्वर्गमन्विच्छंस्त्रेताग्निशरणः सदा ॥ ३५
आर्तहस्तप्रदो नित्यं प्रजा धर्मेण पालयन् ।
सत्यः सत्यानि कुरुते नित्यं यः सुखदर्शनः ॥ ३६
धर्मदण्डो न निर्दण्डो धर्मकार्यानुशासकः ।
यन्त्रितः कार्यकरणे षड्भागकृतलक्षणः ॥ ३७
ग्राम्यधर्मान्न सेवेत स्वच्छन्देनार्थकोविदः ।
ऋतुकाले तु धर्मात्मा पत्नीं सेवेत नित्यदा ॥ ३८
सर्वोपवासी नियतः स्वाध्यायपरमः शुचिः ।
बर्हिष्कान्तरिते नित्यं शयानोऽग्निगृहे सदा ॥ ३९
सर्वातिथ्यं त्रिवर्गस्य कुर्वाणः सुमनाः सदा ।
शूद्राणां चान्नकामानां नित्यं सिद्धमिति ब्रुवन् ॥ ४०
स्वार्थाद्वा यदि वा कामान्न किंचिदुपलक्षयेत् ।
पितृदेवातिथिकृते साधनं कुरुते च यः ॥ ४१
स्ववेश्मनि यथान्यायमुपास्ते भैक्षमेव च ।
त्रिकालमग्निहोत्रं च जुह्वानो वै यथाविधि ॥ ४२
गोब्राह्मणहितार्थाय रणे चाभिमुखो हतः ।
त्रेताग्निमन्त्रपूतं वा समाविश्य द्विजो भवेत् ॥ ४३
ज्ञानविज्ञानसंपन्नः संस्कृतो वेदपारगः ।
विप्रो भवति धर्मात्मा क्षत्रियः स्वेन कर्मणा ॥ ४४
एतैः कर्मफलैर्देवि न्यूनजातिकुलोद्भवः ।
शूद्रोऽप्यागमसंपन्नो द्विजो भवति संस्कृतः ॥ ४५
ब्राह्मणो वाप्यसद्वृत्तः सर्वसंकरभोजनः ।
ब्राह्मण्यं पुण्यमुत्सृज्य शूद्रो भवति तादृशः ॥ ४६
कर्मभिः शुचिभिर्देवि शुद्धात्मा विजितेन्द्रियः ।
शूद्रोऽपि द्विजवत्सेव्य इति ब्रह्माब्रवीत्स्वयम् ॥ ४७
स्वभावकर्म च शुभं यत्र शूद्रेऽपि तिष्ठति ।
विशुद्धः स द्विजातिर्वै विज्ञेय इति मे मतिः ॥ ४८ C. 13. B. 13. K. su M. su

35 $^{b}$) $V_1$ B Dn समृद्धैर् ( for संस्कृतैर् ). $D_2$ आप्तु- ; $D_{4-9}$ चाप्त- ( for आप्त- ). — $^{c}$) $V_1$ B Dn अधीत्य ; $D_{4,6,7,9}$ अदीनैः ; $D_5$ अदीनः ( for अधीते ). — $^{d}$) $D_{4,6-9}$ स च ( for सदा ). — After 35, $D_{4-9}$ read 39$^{cd}$, $D_{5-9}$ repeating it in its proper place.

36 $^{a}$) $B_2$ ( marg. ).$_4$ आर्द्र- ( for आर्त- ). — $^{c}$) $D_{1,2}$ सद्यः ( for सत्यः ). — $^{d}$) $D_4$ तु ( for यः ).

37 $^{a}$) $D_{4-9}$ धर्मरतो ( for न निर्दण्डो ). $B_3$ धर्मदंडेन वै दंडो. — $^{b}$) $D_5$ -शासनः ; $D_8$ -साधकः ( for -शासकः ). — $^{c}$) $V_1$ B Dn -करणैः ( for °णे ).

38 $^{a}$) $V_1$ $B_{4,5}$ Dn ग्राम्यधर्मं ; $B_{1-3}$ ग्राम्यं धर्मं ; $D_{1,2}$ -ग्रामधर्मान् ( for ग्राम्य° ). — $^{b}$) $B_{1,4}$ $D_{4,5}$ [आ]त्म- ( for [अ]र्थ- ). — $^{d}$) $V_1$ पत्नीमुपविशेत्सदा ; $B_{1,2,4,5}$ Dn $D_{4,6-9}$ पत्नीमुपशयेत्सदा ( $D_4$ °त्तदा ) ; $B_3$ पत्नीमुपासयेत्तदा ; $D_5$ पत्नीं परिशयेत्सदा.

39 $^{a}$) $V_1$ B Dn $D_{4,5,8,9}$ सदोपवासी निरतः ; $D_{6,7}$ सदोपवासनिरतः. — $^{b}$) $V_1$ -नियतः ; $B_{1,4,5}$ Dn -निरतः ( for -परमः ). $B_{2,3}$ स्वाध्यायनिरतः सदा. — $D_4$ reads 39$^{cd}$ after 35. $D_{5-9}$ read 39$^{cd}$ for the first time after 35. — $^{c}$) $D_{1,2}$ बर्हिष्कांतरितो नित्यं.

41 $^{a}$) Bom. ed. स्वार्थाद् ( for स्वा° ). — $^{d}$) $B_{2,3}$ तु ( for च ). $D_{4-7,9}$ यत्र ; $D_8$ तत् ( for यः ).

42 $^{b}$) Some MSS. भैक्ष्यम्. — $^{c}$) $V_1$ $B_{2,3}$ $Dn_3$ $D_1$ द्वि- ( for त्रि- ).

43 $^{b}$) $B_3$ मृतः ( for हतः ). — $^{c}$) $B_4$ $D_1$ त्रेताग्निं ( for °ग्नि- ). $B_1$ -पूर्वं वा ; $Dn_3$ $D_8$ -पूतात्मा ; $D_{6,7,9}$ -पूतं च ( for -पूतं वा ). — $^{d}$) $D_{4,6-9}$ -समादिश्य ( for °विश्य ).

44 $^{d}$) $D_{6-9}$ तेन ( for स्वेन ). $B_5$ क्षत्रियस्येह कर्मणा.

45 $^{a}$) $D_{4-7,9}$ धर्म- ( for कर्म- ). — $^{b}$) $D_5$ -कुलो भवेत् ( for -कुलोद्भवः ). — $^{d}$) $D_1$ सत्तमः ; $D_{6-9}$ सत्कृतः ( for संस्कृतः ).

46 $^{a}$) $D_2$ [ऽ]पि हि ( for वापि ). — $^{c}$) $V_1$ $B_{4,5}$ Dn ब्राह्मण्यं स समुत्सृज्य ; $B_{1-3}$ स ब्राह्मण्यं समुत्सृज्य.

47 $^{a}$) $B_2$ ( marg. as in text ) स्वकृतैर् ; $B_3$ सुकृतैर् ; $D_{4,5}$ वर्जितैर् ; $D_{6,7,9}$ विजितैर् ( for शुचिभिर् ).

48 $^{a}$) $V_1$ B $Dn_{1,n3}$ स्वभावं ; Bom. ed. °वः ( for °व- ). $D_{6,7,9}$ [अ]प्यशुभं ( for च शुभं ). $D_{4,5}$ स्वाध्यायकर्माप्यशुभं. — $^{b}$) $V_1$ $B_{2,3,5}$ $Dn_3$ [ऽ]भि- ; $B_1$ [ऽ]धि- ; $B_4$ [ऽ]ति- ( for ऽपि ). — $^{c}$) Dn $D_{6,8}$

न योनिर्नापि संस्कारो न श्रुतं न च संनतिः ।
कारणानि द्विजत्वस्य वृत्तमेव तु कारणम् ॥ ४९
सर्वोऽयं ब्राह्मणो लोके वृत्तेन तु विधीयते ।
वृत्ते स्थितश्च सुश्रोणि ब्राह्मणत्वं निगच्छति ॥ ५०
ब्राह्मः स्वभावः कल्याणि समः सर्वत्र मे मतिः ।
निर्गुणं निर्मलं ब्रह्म यत्र तिष्ठति स द्विजः ॥ ५१
एते योनिफला देवि स्थानभागनिदर्शकाः ।
स्वयं च वरदेनोक्ता ब्रह्मणा सृजता प्रजाः ॥ ५२
ब्राह्मणो हि महत्क्षेत्रं लोके चरति पादवत् ।
यत्तत्र बीजं वपति सा कृषिः पारलौकिकी ॥ ५३

मिताशिना सदा भाव्यं सत्पथालम्बिना सदा ।
ब्राह्ममार्गमतिक्रम्य वर्तितव्यं बुभूषता ॥ ५४
संहिताध्यायिना भाव्यं गृहे वै गृहमेधिना ।
नित्यं स्वाध्याययुक्तेन दानाध्ययनजीविना ॥ ५५
एवंभूतो हि यो विप्रः सततं सत्पथे स्थितः ।
आहिताग्निरधीयानो ब्रह्मभूयाय कल्पते ॥ ५६
ब्राह्मण्यमेव संप्राप्य रक्षितव्यं यतात्मभिः ।
योनिप्रतिग्रहादानैः कर्मभिश्च शुचिस्मिते ॥ ५७
एतत्ते सर्वमाख्यातं यथा शूद्रो भवेद्द्विजः ।
ब्राह्मणो वा च्युतो धर्माद्यथा शूद्रत्वमाप्नुते ॥ ५८

इति श्रीमहाभारते अनुशासनपर्वणि एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥

---

विशिष्टः ( for विशुद्धः ).

49 $^{a}$) $V_1$ सत्कारो ( for संस्कारो ). — $^{b}$) $V_1$ श्रुतिं ( for श्रुतं ). $D_{4,5,8,9}$ [अ]पि ( for च ). $V_1$ संततिं; B Dn $D_{4,5,7}$ संततिः ( for संनतिः ). — $^{d}$) $D_9$ ह ( for तु ).

50 $^{b}$) $D_{1,2}$ विचाल्यते; $D_4$ विचार्यते ( for विधीयते ). $D_{5-9}$ वृत्तेन भुवि चार्यते. — $^{c}$) $V_1$ $B_3$ Dn तु शूद्रोपि; $B_{1,2,4,5}$ $D_2$ तु सुश्रोणि ( for च सुश्रोणि ). $D_{4-8}$ वृत्ते स्थि( $D_{4,5}$ °तस्थि )तिश्चेत्सुश्रोणि. — $^{d}$) $B_{1,4,5}$ Dn $D_{4,5}$ नियच्छति ( for निग° ).

51 $^{a}$) $D_{6-9}$ ब्राह्मयः ( for ब्राह्मः ). $B_2$ सुश्रोणि ( for कल्याणि ). $V_1$ $B_{1,3-5}$ Dn ब्रह्मस्वभावः सुश्रोणि. — $^{b}$) $D_1$ मतः ( for मतिः ). — $^{c}$) $D_1$ निर्ममं; $D_2$ निर्दंमं ( for निर्गुणं ). $D_{4-9}$ निर्मलं सकलं ब्रह्म.

52 $^{a}$) $V_1$ B $Dn_{1,n3}$ $D_5$ योनिमला ( for °फला ). — $^{b}$) $B_1$ $D_1$ -भाव- ( for -भाग- ). $D_{4-9}$ सततं सत्पथे स्थिताः. — $^{c}$) $D_{4,6-9}$ [उ]क्तं ( for [उ]क्ता ).

53 $^{a}$) Dn [ऽ]पि ( for हि ). — $^{c}$) $D_{4-9}$ यस् ( for यत् ). $V_1$ $B_{1,2}$ $Dn_3$ पतति; $B_4$ पतते ( for वपति ). — $^{d}$) $D_{4,5}$ कृतिः ( for कृषिः ). $V_1$ B Dn सा कृपिः ( $Dn_3$ °तिः ) प्रेत्यभाविनी.

54 $^{a}$) $V_1$ $B_{1,2 (marg.),4}$ Dn विघसाशिना ( hypermetric ); $B_5$ विघसाशी ( for मिताशिना ). $Dn_1$ om. सदा. — $D_4$ om. ( hapl. ) $54^{b}$–$55^{a}$. — $^{b}$) $V_1$ B Dn तथा ( for सदा ). $D_{6-9}$ सर्वथालंबिना सदा. — $^{c}$) $D_{5-9}$ अनु- ( for अति- ). $V_1$ B Dn ब्राह्मं हि मार्गमाक्रम्य.

55 $D_4$ om. $55^{a}$ ( cf. v. l. 54 ). — $^{b}$) $D_5$ -भाविना ( for -मेधिना ). — $^{c}$) $D_1$ नित्य- ( for नित्यं ). Bom. ed. नित्यं स्वाध्यायिना भाव्यं. — $^{d}$) $V_1$ B Dn $D_{4,5}$ न चाध्ययनजीविना.

56 $^{a}$) $D_1$ ब्रह्म- ( for एवं- ). — $^{b}$) $Dn_3$ सत्पथं ( for सततं ).

57 $^{a}$) $V_1$ $B_{1,2,4,5}$ Dn देवि ( for एव ). $B_3$ ब्राह्मण्यं देवि संभाव्य. — $^{b}$) $V_1$ B Dn यतात्मना; $D_{6-9}$ जितात्माभिः ( for यता° ).

58 $^{a}$) $V_1$ B Dn गुह्यम् ( for सर्वम् ). — $^{b}$) $D_1$ तथा ( for यथा ). — $^{c}$) $D_1$ ब्राह्माद् ( for धर्माद् ). — $^{d}$) $D_8$ तथा ( for यथा ). $B_{2,3}$ आप्नुयात्; $D_{5,9}$ अश्नुते ( for आप्नुते ).

Colophon. — *Parvan name :* $B_{3,4}$ $D_1$ शांति. — *Sub-parvan :* $V_1$ $B_{2,3,5}$ $Dn_{1,n2}$ $D_{1,2,4-7}$ दानधर्म. — *Adhy. name :* $V_1$ $B_{2-5}$ $Dn_{1,n2}$ $D_{1,2,4-9}$ उमामहेश्वरसंवादः. — *Adhy. no.* ( figures, words or both ): $V_1$ 143; $B_5$ 136; $Dn_1$ 141. — *Śloka no.:* $Dn_1$ 60; $Dn_2$ 59.

# १३२

उमोवाच ।

भगवन्सर्वभूतेश सुरासुरनमस्कृत ।
धर्माधर्मे नृणां देव ब्रूहि मे संशयं विभो ॥ १
कर्मणा मनसा वाचा त्रिविधं हि नरः सदा ।
बध्यते बन्धनैः पाशैर्मुच्यतेऽप्यथ वा पुनः ॥ २
केन शीलेन वा देव कर्मणा कीदृशेन वा ।
समाचारैर्गुणैर्वाक्यैः स्वर्गं यान्तीह मानवाः ॥ ३

महेश्वर उवाच ।

देवि धर्मार्थतत्त्वज्ञे सत्यनित्ये दमे रते ।
सर्वप्राणिहितः प्रश्नः श्रूयतां बुद्धिवर्धनः ॥ ४
सत्यधर्मरताः सन्तः सर्वलिप्साविवर्जिताः ।
नाधर्मेण न धर्मेण बध्यन्ते छिन्नसंशयाः ॥ ५
प्रलयोत्पत्तितत्त्वज्ञाः सर्वज्ञाः समदर्शिनः ।
वीतरागा विमुच्यन्ते पुरुषाः सर्वबन्धनैः ॥ ६
कर्मणा मनसा वाचा ये न हिंसन्ति किंचन ।
ये न सज्जन्ति कस्मिंश्चिद्बध्यन्ते ते न कर्मभिः ॥ ७
प्राणातिपाताद्विरताः शीलवन्तो दयान्विताः ।
तुल्यद्वेष्यप्रिया दान्ता मुच्यन्ते कर्मबन्धनैः ॥ ८
सर्वभूतदयावन्तो विश्वास्याः सर्वजन्तुषु ।
त्यक्तहिंसासमाचारास्ते नराः स्वर्गगामिनः ॥ ९
परस्वे निर्ममा नित्यं परदारविवर्जकाः ।
धर्मलब्धार्थभोक्तारस्ते नराः स्वर्गगामिनः ॥ १०
मातृवत्स्वसृवच्चैव नित्यं दुहितृवच्च ये ।
परदारेषु वर्तन्ते ते नराः स्वर्गगामिनः ॥ ११
स्तैन्यान्निवृत्ताः सततं संतुष्टाः स्वधनेन च । C. 13. 663 B. 13. 144
स्वभाग्यान्युपजीवन्ति ते नराः स्वर्गगामिनः ॥ १२ K. subst. M. subst.

## 132

☞ This adhy. is missing in D8 ( cf. v. l. 13. 82. 37 ).

1 a ) D1, 4–9 -देवेश ( for -भूतेश ). — b ) Bom. ed. देवासुर- ( for सुरा° ). — c ) Dn1. n2 धर्माधर्मौ ( for °धर्मे ). D4 क्षणं ( for नृणां ). — d ) D4 त्वं ( for मे ).

2 b ) D4, 6–9 मनः ( for नरः ). — c ) B3 पापैर् ( for पाशैर् ). B5 बंधनैर्बध्यते पाशैर्. — d ) D6. 7. 9 पार्थिवाः ( for ऽप्यथ वा ).

3 a ) V1 B Dn1. n2 वै देव ; Bom. ed. वृत्तेन ( for वा देव ). — c ) D6–9 सदाचारैर् ( for समा° ). V1 B1. 2. 4. 5 Dn कैर्वा ( for वाक्यैः ). B3 समाचारगुणैः कैर्वा. — d ) D1. 2 हि ( for [इ]ह ).

4 D4 om. 4. V1 B1. 2. 4. 5 Dn देव ; D2 ईश्वर ( for महेश्वर ). — b ) V1 B Dn धर्मनित्ये ; D5–9 सत्यव्रत- ( for °नित्ये ).

5 a ) D8 सर्व- ( for सत्य- ). — b ) V1 B Dn D4–9 -लिंग- ( for -लिप्सा- ). — After $5^{ab}$, Bom. ed. reads $10^{cd}$, repeating it in its proper place. — d ) Dn3 D8 बध्यते ; D5 बाध्यंते ( for बध्यन्ते ).

6 b ) V1 B2–5 Dn D4–9 सर्व- ( for सम- ). — d ) V1 B Dn D5 कर्म- ( for सर्व- ).

7 b ) D7 कंचन ( for किं° ). — d ) V1 B Dn D4–9 ते न बध्यंति कर्मभिः.

8 c ) V1 B2–5 Dn2. n3 -द्वेषि- ( for -द्वेष्य- ).

10 D4. 5 om. ( hapl. ) 10. — a ) D6. 7. 9 निर्मला ( for निर्ममा ). Dn2 परस्वनिर्मला नित्यं. — b ) B4 -विवर्जिताः ( for °र्जकाः ). — Bom. ed. reads $10^{cd}$ for the first time after $5^{ab}$. B3 om. ( hapl. ) $10^{c}$–$24^{b}$. — c ) B4. 5 Dn D8 -लब्धान्न- ( for °र्थ- ).

11 B3 om. 11 ( cf. v. l. 10 ). After 11, B1 reads $13^{ab}$ followed by $20^{c}$–$21^{b}$, repeating the same in its proper place.

12 B3 om. 12 ( cf. v. l. 10 ). D1. 4. 6. 7. 9 om. ( hapl. ) 12–13.

13 B3 om. 13 ( cf. v. l. 10 ). D1, 4, 6, 7, 9 om.

न योनिर्नापि संस्कारो न श्रुतं न च संनतिः ।
कारणानि द्विजत्वस्य वृत्तमेव तु कारणम् ॥ ४९
सर्वोऽयं ब्राह्मणो लोके वृत्तेन तु विधीयते ।
वृत्ते स्थितश्च सुश्रोणि ब्राह्मणत्वं निगच्छति ॥ ५०
ब्राह्मः स्वभावः कल्याणि समः सर्वत्र मे मतिः ।
निर्गुणं निर्मलं ब्रह्म यत्र तिष्ठति स द्विजः ॥ ५१
एते योनिफला देवि स्थानभागनिदर्शकाः ।
स्वयं च वरदेनोक्ता ब्रह्मणा सृजता प्रजाः ॥ ५२
ब्राह्मणो हि महत्क्षेत्रं लोके चरति पादवत् ।
यत्तत्र बीजं वपति सा कृषिः पारलौकिकी ॥ ५३
मिताशिना सदा भाव्यं सत्पथालम्बिना सदा ।
ब्राह्ममार्गमतिक्रम्य वर्तितव्यं बुभूषता ॥ ५४
संहिताध्यायिना भाव्यं गृहे वै गृहमेधिना ।
नित्यं स्वाध्याययुक्तेन दानाध्ययनजीविना ॥ ५५
एवंभूतो हि यो विप्रः सततं संत्पथे स्थितः ।
आहिताग्निरधीयानो ब्रह्मभूयाय कल्पते ॥ ५६
ब्राह्मण्यमेव संप्राप्य रक्षितव्यं यतात्मभिः ।
योनिप्रतिग्रहादानैः कर्मभिश्च शुचिस्मिते ॥ ५७
एतत्ते सर्वमाख्यातं यथा शूद्रो भवेद्द्विजः ।
ब्राह्मणो वा च्युतो धर्माद्यथा शूद्रत्वमाप्नुते ॥ ५८

इति श्रीमहाभारते अनुशासनपर्वणि एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥

---

विशिष्टः ( for विशुद्धः ).

49 $^{a}$) V1 सत्कारो ( for संस्कारो ). — $^{b}$) V1 श्रुतिं ( for श्रुतं ). D4. 5. 8. 9 [अ]पि ( for च ). V1 संततिं; B Dn D4. 5. 7 संततिः ( for संनतिः ). — $^{d}$) D9 ह ( for तु ).

50 $^{b}$) D1. 2 विचाल्यते; D4 विचार्यते ( for विधीयते ). D6–9 वृत्तेन भुवि चार्यते. — $^{c}$) V1 B3 Dn तु शूद्रोपि; B1. 2. 4. 5 D2 तु सुश्रोणि ( for च सुश्रोणि ). D4–8 वृत्ते स्थि( D4. 5 °तस्थि )तिश्चेत्सुश्रोणि. — $^{d}$) B1. 4. 5 Dn D4. 5 नियच्छति ( for निग° ).

51 $^{a}$) D6–9 ब्राह्मयः ( for ब्राह्मः ). B2 सुश्रोणि ( for कल्याणि ). V1 B1. 3–5 Dn ब्रह्मस्वभावः सुश्रोणि. — $^{b}$) D1 मतः ( for मतिः ). — $^{c}$) D1 निर्ममं; D2 निर्दमं ( for निर्गुणं ). D4–9 निर्मलं सकलं ब्रह्म.

52 $^{a}$) V1 B Dn1. n3 D5 योनिमला ( for °फला ). — $^{b}$) B1 D1 -भाव- ( for -भाग- ). D4–9 सततं सत्पथे स्थिताः. — $^{c}$) D4. 6–9 [उ]क्तं ( for [उ]क्ता ).

53 $^{a}$) Dn [ऽ]पि ( for हि ). — $^{c}$) D4–9 यस् ( for यत् ). V1 B1. 2 Dn3 पतति; B4 पतते ( for वपति ). — $^{d}$) D4. 5 कृतिः ( for कृषिः ). V1 B Dn सा कृषिः ( Dn3 °तिः ) प्रेत्यभाविनी.

54 $^{a}$) V1 B1. 2 ( marg.). 4 Dn विघसाशिना ( hypermetric ); B5 विघसाशी ( for मिताशिना ). Dn1 om. सदा. — D4 om. ( hapl. ) 54$^{b}$–55$^{a}$. — $^{b}$) V1 B Dn तथा ( for सदा ). D6–9 सत्पथालंबिना सदा. — $^{c}$) D5–9 अनु- ( for अति- ). V1 B Dn ब्राह्मं हि मार्गमाक्रम्य.

55 D4 om. 55$^{a}$ ( cf. v. l. 54 ). — $^{b}$) D5 -भाविना ( for -मेधिना ). — $^{c}$) D1 नित्य- ( for नित्यं ). Bom. ed. नित्यं स्वाध्यायिना भाव्यं. — $^{d}$) V1 B Dn D4. 5 न चाध्ययनजीविना.

56 $^{a}$) D1 ब्रह्म- ( for एवं- ). — $^{b}$) Dn3 सत्पथं ( for सततं ).

57 $^{a}$) V1 B1. 2. 4. 5 Dn देवि ( for एव ). B3 ब्राह्मण्यं देवि संभाव्य. — $^{b}$) V1 B Dn यतात्मना; D6–9 जितात्मभिः ( for यता° ).

58 $^{a}$) V1 B Dn गुह्यम् ( for सर्वम् ). — $^{b}$) D1 तथा ( for यथा ). — $^{c}$) D1 ब्राह्माद् ( for धर्माद् ). — $^{d}$) D8 तथा ( for यथा ). B2. 3 आप्नुयात्; D6. 9 अश्नुते ( for आप्नुते ).

Colophon. — *Parvan name:* B3. 4 D1 शांति. — *Sub-parvan:* V1 B2 3. 5 Dn1. n2 D1. 2. 4–7 दानधर्म. — *Adhy. name:* V1 B2–5 Dn1. n2 D1. 2. 4–9 उमामहेश्वरसंवादः. — *Adhy. no.* ( figures, words or both ): V1 143; B5 136; Dn1 141. — *Śloka no.:* Dn1 60; Dn2 59.

# १३२

उमोवाच ।
भगवन्सर्वभूतेश सुरासुरनमस्कृत ।
धर्माधर्मे नृणां देव ब्रूहि मे संशयं विभो ॥ १
कर्मणा मनसा वाचा त्रिविधं हि नरः सदा ।
बध्यते बन्धनैः पाशैर्मुच्यतेऽप्यथ वा पुनः ॥ २
केन शीलेन वा देव कर्मणा कीदृशेन वा ।
समाचारैर्गुणैर्वाक्यैः स्वर्गं यान्तीह मानवाः ॥ ३
महेश्वर उवाच ।
देवि धर्मार्थतत्त्वज्ञे सत्यनित्ये दमे रते ।
सर्वप्राणिहितः प्रश्नः श्रूयतां बुद्धिवर्धनः ॥ ४
सत्यधर्मरताः सन्तः सर्वलिप्साविवर्जिताः ।
नाधर्मेण न धर्मेण बध्यन्ते छिन्नसंशयाः ॥ ५
प्रलयोत्पत्तितत्त्वज्ञाः सर्वज्ञाः समदर्शिनः ।
वीतरागा विमुच्यन्ते पुरुषाः सर्वबन्धनैः ॥ ६
कर्मणा मनसा वाचा ये न हिंसन्ति किंचन ।
ये न सज्जन्ति कस्मिंश्चिद्बध्यन्ते ते न कर्मभिः ॥ ७
प्राणातिपाताद्विरताः शीलवन्तो दयान्विताः ।
तुल्यद्वेष्यप्रिया दान्ता मुच्यन्ते कर्मबन्धनैः ॥ ८
सर्वभूतदयावन्तो विश्वास्याः सर्वजन्तुषु ।
त्यक्तहिंसासमाचारास्ते नराः स्वर्गगामिनः ॥ ९
परस्वे निर्ममा नित्यं परदारविवर्जकाः ।
धर्मलब्धार्थभोक्तारस्ते नराः स्वर्गगामिनः ॥ १०
मातृवत्स्वसृवच्चैव नित्यं दुहितृवच्च ये ।
परदारेषु वर्तन्ते ते नराः स्वर्गगामिनः ॥ ११
स्तैन्यान्निवृत्ताः सततं संतुष्टाः स्वधनेन च ।
स्वभाग्यान्युपजीवन्ति ते नराः स्वर्गगामिनः ॥ १२

## 132

☞ This adhy. is missing in D3 ( cf. v. l. 13. 82. 37 ).

1 $^{a}$) D1. 4–9 -देवेश ( for -भूतेश ). — $^{b}$) Bom. ed. देवासुर- ( for सुरा° ). — $^{c}$) Dn1. n2 धर्माधर्मौ ( for °धर्मे ). D4 क्षणं ( for नृणां ). — $^{d}$) D4 त्वं ( for मे ).

2 $^{b}$) D4. 6–9 मनः ( for नरः ). — $^{c}$) B8 पापैर् ( for पाशैर् ). B5 बंधनैर्बध्यते पाशैर्. — $^{d}$) D6. 7. 9 पार्थिवाः ( for ऽप्यथ वा ).

3 $^{a}$) V1 B Dn1. n2 वै देव; Bom. ed. वृत्तेन ( for वा देव ). — $^{c}$) D6–9 सदाचारैर् ( for समा° ). V1 B1. 2. 4. 5 Dn कैर्वा ( for वाक्यैः ). B3 समाचारगुणैः कैर्वा. — $^{d}$) D1. 2 हि ( for [इ]ह ).

4 D4 om. 4. V1 B1. 2. 4. 5 Dn देव; D2 ईश्वर ( for महेश्वर ). — $^{b}$) V1 B Dn धर्मनित्ये; D5–9 सत्यव्रत- ( for °नित्ये ).

5 $^{a}$) D8 सर्व- ( for सत्य- ). — $^{b}$) V1 B Dn D4–9 -लिंग- ( for -लिप्सा- ). — After 5$^{ab}$, Bom. ed. reads 10$^{cd}$, repeating it in its proper place. — $^{d}$) Dn3 D8 बध्यते; D5 बाध्यंते ( for बध्यन्ते ).

6 $^{b}$) V1 B2–5 Dn D4–9 सर्व- ( for सम- ). — $^{d}$) V1 B Dn D5 कर्म- ( for सर्व- ).

7 $^{b}$) D7 कंचन ( for किं° ). — $^{d}$) V1 B Dn D4–9 ते न बध्यंति कर्मभिः.

8 $^{c}$) V1 B2–5 Dn2. n3 -द्वेषि- ( for -द्वेष्य- ).

10 D4. 5 om. ( hapl. ) 10. — $^{a}$) D6. 7. 9 निर्मला ( for निर्ममा ). Dn2 परस्वनिर्मला नित्यं. — $^{b}$) B4 -विवर्जिताः ( for °र्जकाः ). — Bom. ed. reads 10$^{cd}$ for the first time after 5$^{ab}$. B3 om. ( hapl. ) 10$^{c}$–24$^{b}$. — $^{c}$) B1. 5 Dn D9 -लब्धान्न- ( for °र्थ- ).

11 B3 om. 11 ( cf. v. l. 10 ). After 11, B1 reads 13$^{ab}$ followed by 20$^{c}$–21$^{b}$, repeating the same in its proper place.

12 B3 om. 12 ( cf. v. l. 10 ). D1. 4. 6. 7. 9 om. ( hapl. ) 12–13.

13 B3 om. 13 ( cf. v. l. 10 ). D1. 4, 6. 7. 9 om.

8.13 स्वदारनिरता ये च ऋतुकालाभिगामिनः ।
अग्राम्यसुखभोगाश्च ते नराः स्वर्गगामिनः ॥ १३
परदारेषु ये नित्यं चारित्रावृतलोचनाः ।
यतेन्द्रियाः शीलपरास्ते नराः स्वर्गगामिनः ॥ १४
एष देवकृतो मार्गः सेवितव्यः सदा नरैः ।
अकषायकृतश्चैव मार्गः सेव्यः सदा बुधैः ॥ १५
दानधर्मतपोयुक्तः शीलशौचदयात्मकः ।
वृत्त्यर्थं धर्महेतोर्वा सेवितव्यः सदा नरैः ।
स्वर्गवासमभीप्सद्भिर्न सेव्यस्त्वत उत्तरः ॥ १६

उमोवाच ।

वाचाथ बध्यते येन मुच्यतेऽप्यथ वा पुनः ।
तानि कर्माणि मे देव वद भूतपतेऽनघ ॥ १७

महेश्वर उवाच ।

आत्महेतोः परार्थे वा नर्महास्याश्रयात्तथा ।
ये मृषा न वदन्तीह ते नराः स्वर्गगामिनः ॥ १८
वृत्त्यर्थं धर्महेतोर्वा कामकारात्तथैव च ।
अनृतं ये न भाषन्ते ते नराः स्वर्गगामिनः ॥ १९
श्लक्ष्णां वाणीं निराबाधां मधुरां पापवर्जिताम् ।
स्वागतेनाभिभाषन्ते ते नराः स्वर्गगामिनः ॥ २०
कटुकां ये न भाषन्ते परुषां निष्ठुरां गिरम् ।
अपैशुन्यरताः सन्तस्ते नराः स्वर्गगामिनः ॥ २१
पिशुनां ये न भाषन्ते मित्रभेदकरीं गिरम् ।
ऋतां मैत्रीं प्रभाषन्ते ते नराः स्वर्गगामिनः ॥ २२
वर्जयन्ति सदा सूच्यं परद्रोहं च मानवाः ।
सर्वभूतसमा दान्तास्ते नराः स्वर्गगामिनः ॥ २३

---

13 ( cf. v. l. 12 ). B1 reads $13^{ab}$ followed by $20^{c}$–$21^{b}$, repeating the same in its proper place after 11. —$^{a}$) D5 चैव ( for ये च ).

14 B3 om. 14 ( cf. v. l. 10 ). —$^{b}$) B5 चारिव्या-वृत्तलोचनाः; D4–9 चारित्रव्रत°. —$^{c}$) B1 D4–6. 8. 9 जितेंद्रियाः ( for य° ). —$^{d}$) D6–9 देवब्राह्मणपूजकाः. — After 14, D4–9 read $35^{cd}$ repeating it in its proper place.

15 B3 om. 15 ( cf. v. l. 10 ). —$^{a}$) D4–9 देवि सतां ( for देवकृतो ). —$^{b}$) V1 B1. 2. 4. 5 Dn सदा बुधैः; D4–9 नरैः सदा ( by transp ). — B1 om. ( hapl. ) $15^{cd}$. D4–7. 9 om. ( hapl. ) $15^{d}$–$16^{c}$. —$^{d}$) D8 सेवितव्यः सदा नरैः ( = $15^{b}$ ).

16 B3 om. 16 ( cf. v. l. 10 ). D4–7. 9 om. $16^{abc}$ ( cf. v. l. 15 ). D1. 2 om. ( hapl. ) $16^{abcd}$. —$^{e}$) D1. 2. 6. 8. 9 -द्वारम् ( for -वासम् ). D4. 5. 7 स्वर्गद्वारं तु वांछद्भिर्. —$^{f}$) D4–9 यत्नः कार्यः सदा नरैः.

17 B3 om. 17 ( cf. v. l. 10 ). —$^{a}$) V1 B ( B3 om. ) Dn तु; D5 च ( for [अ]थ ). —$^{b}$) D2 येन; D6 चाथ; D6. 7. 9 त्वथ ( for ऽप्यथ ). D8 मुच्यते त्वथ कर्मणा.

18 B3 om. 18 ( cf. v. l. 10 ). Dn1 उमेश्वर; D1 देवदेव; D2 ईश्वर ( for महेश्वर ).

19 B3 om. 19 ( cf. v. l. 10 ). D4 om. ( hapl. ) 19. —$^{b}$) D5. 9 कामचारास्; D6–8 कामकारास्.

20 B3 om. 20 ( cf. v. l. 10 ). D1. 2 om. ( hapl. ) 20. D5 om. ( hapl. ) 20–21. —$^{b}$) D4. 6–9 दोष- ( for पाप- ). — B1 reads $20^{c}$–$21^{b}$ for the first time after $13^{ab}$.

21 For the repetition in B1, cf. v. l. 20. B3 om. 21 ( cf. v. l. 10 ). D5 om. 21 ( cf. v. l. 20 ). —$^{a}$) V1 B1 ( both times ). 2. 4. 5 Dn परुषं ( for कटुकां ). —$^{b}$) V1 B1 ( both times ). 2. 4. 5 Dn कटुकं निष्ठुरं त( Dn3 य )था. — D8 repeats $21^{cd}$ after $22^{ab}$.

22 B3 om. 22 (cf. v. l. 10). —$^{a}$) D8 पैशुन्यं ( for पिशुनां ). V1 B1. 3. 4. 5 Dn न प्र- ( for ये न ). —$^{b}$) Dn2 D4–9 -भेदकरां ( for °करीं ). — After $22^{ab}$, D8 repeats $21^{cd}$. —$^{c}$) V1 B1. 2. 4. 5 Dn ऋतं मै( V1 मि )त्रं तु ( Dn3 च ) भाषंते.

23 B3 om. 23 ( cf. v. l. 10 ). —$^{a}$) D4–6. 8. 9 स्तेयं ( for सूच्यं ). V1 B1. 2. 4. 5 Dn ये वर्जयंति परुषं. —$^{b}$) D5 न ( for च ). —$^{c}$) B5 शांतास् ( for दान्तास् ).

24 B3 om. $24^{ab}$ ( cf. v. l. 10). D1. 2 om. (hapl.)

शठप्रलापाद्विरता विरुद्धपरिवर्जकाः ।
सौम्यप्रलापिनो नित्यं ते नराः स्वर्गगामिनः ॥ २४
न कोपाद्व्याहरन्ते ये वाचं हृदयदारणीम् ।
सान्त्वं वदन्ति क्रुद्धापि ते नराः स्वर्गगामिनः ॥ २५
एष वाणीकृतो देवि धर्मः सेव्यः सदा नरैः ।
शुभः सत्यगुणो नित्यं वर्जनीया मृषा बुधैः ॥ २६

उमोवाच ।

मनसा बध्यते येन कर्मणा पुरुषः सदा ।
तन्मे ब्रूहि महाभाग देवदेव पिनाकधृक् ॥ २७

महेश्वर उवाच ।

मानसेनेह धर्मेण संयुक्ताः पुरुषाः सदा ।
स्वर्गं गच्छन्ति कल्याणि तन्मे कीर्तयतः शृणु ॥ २८
दुष्प्रणीतेन मनसा दुष्प्रणीततराकृतिः ।
बध्यते मानवो येन शृणु चान्यच्छुभानने ॥ २९
अरण्ये विजने न्यस्तं परस्वं वीक्ष्य ये नराः ।
मनसापि न हिंसन्ति ते नराः स्वर्गगामिनः ॥ ३०
ग्रामे गृहे वा यद्द्रव्यं पारक्यं विजने स्थितम् ।
नाभिनन्दन्ति वै नित्यं ते नराः स्वर्गगामिनः ॥ ३१
तथैव परदारान्ये कामवृत्तान्रहोगतान् ।
मनसापि न हिंसन्ति ते नराः स्वर्गगामिनः ॥ ३२
शत्रुं मित्रं च ये नित्यं तुल्येन मनसा नराः ।
भजन्ति मैत्राः संगम्य ते नराः स्वर्गगामिनः ॥ ३३
श्रुतवन्तो दयावन्तः शुचयः सत्यसंगराः ।
स्वैरर्थैः परिसंतुष्टास्ते नराः स्वर्गगामिनः ॥ ३४
अवैरा ये त्वनायासा मैत्रचित्तपराः सदा । C. 13.
सर्वभूतदयावन्तस्ते नराः स्वर्गगामिनः ॥ ३५ B. 13. K. 80 M. 80

---

24–25. —$^{c}$) $D_{4-9}$ ये च ( for नित्यं ).

25 $D_{1.2}$ om. 25 ( cf. v. l. 24 ). —$^{a}$) $D_{5-9}$ क्रोधाद् ( for कोपाद् ). $D_{4.5}$ व्याहरंति. —$^{b}$) $B_1$ $Dn_1$ -दारिणीं; $D_{6.7.9}$ -दारुणां ( for -दारणीम् ). —$^{c}$) $B_1$ क्रुद्धाश्च; $B_5$ क्रुद्धा वै; $D_{4.5.7-9}$ ये क्रुद्धास् ( for क्रुद्धापि ).

26 $^{a}$) $D_{4-9}$ पूर्वं- ( for वाणी- ). —$^{b}$) $B_8$ बुधैः ( for नरैः ). —$^{c}$) $D_1$ -गुणो नित्यो; $D_{4-9}$ -गुणोपेतो ( for -गुणो नित्यं ). —$^{d}$) $B_1$ वर्जनीयं ( for °नीया ). $B_{4.5}$ वर्जनीयं सदा बुधैः.

27 $D_6$ om. ( hapl. ) 27. —$^{a}$) $D_{5.7-9}$ चैव ( for येन ). —$^{b}$) $D_4$ बध्यते ( for पुरुषः ). —$^{c}$) $D_{1.2}$ महादेव ( for °भाग ).

28 $D_{1.8.9}$ देवदेव; $D_2$ ईश्वर; $D_4$ देव; $D_6$ om. ( for महेश्वर ). —$^{d}$) $B_{2.3}$ निगदतः ( for कीर्तयतः ).

29 $D_6$ reads $29^{b}$–$30^{a}$ twice. —$^{b}$) $D_4$ दुष्प्रणीते स्थिराकृतिः; $D_{5.6}$ ( both times ).$_{7-9}$ °तेन कर्मणा. —$^{c}$) $V_1$ B Dn $D_{4.5.6}$ ( both times ).$_{7-9}$ मनो बध्नाति ये( $D_{5-9}$ ते )नेह. —$^{d}$) $V_1$ B Dn वाक्यं; $D_{4.5.6}$ ( both times ).$_{7-9}$ तच्च ( for चान्यच् ).

30 For the repetition in $D_6$, cf. v. l. 29. —$^{b}$) $D_{4.5.6}$ ( both times ).$_{7-9}$ प्रेक्ष्य ( for वीक्ष्य ). $V_1$ $B_{1.8}$ Dn परस्वं दृश्य ये सदा ( $B_8$ $Dn_{1.n2}$ ते यदा ). —$D_7$ om. $30^{c}$–$31^{d}$.

31 $D_7$ om. 31 ( cf. v. l. 30 ). $Dn_2$ $D_5$ om. ( hapl. ) 31. —$^{a}$) $V_1$ B $Dn_{1.n3}$ ये ( for यद् ). —$^{b}$) $B_3$ हितं ( for स्थितम् ). —$^{c}$) $D_{4.8.9}$ नाभिगृह्णं( $D_4$ °ह्णा )ति ये देवि.

32 $D_5$ reads 32 twice. —$^{a}$) $D_4$ परदारं ( for °रान् ). —$^{b}$) $D_4$ रहोगतं ( for °गतान् ). $D_5$ ( first time ).$_{6-9}$ वाचा वै कर्मणा तथा. —$^{c}$) $D_{4.5}$ ( second time ) हीच्छंति; $D_5$ ( first time ).$_{6-9}$ कामंते ( for हिंसन्ति ).

33 $D_{4.6.7.9}$ om. ( hapl. ) 33–35. —$^{a}$) $Dn_2$ शत्रुमित्रं च नित्यं तु. —$^{c}$) $B_1$ मैत्रं; $Dn_{1.n2}$ मित्राः ( for मैत्राः ). $D_5$ भजंत्यमित्रान्संगेन.

34 $D_{4.6.7.9}$ om. 34 ( cf. v. l. 33 ). $Dn_2$ transp. 34 and 35.

35 $D_{4.6.7.9}$ om. 35 ( cf. v. l. 33 ). $Dn_2$ transp. 34 and 35. —$^{b}$) $D_1$ मैत्रे ( for मैत्र- ). $V_1$ $B_{1.2.4.5}$ Dn मैत्रीचित्तरताः सदा. — $D_{4-9}$ read $35^{cd}$ for the first time after 14 and $D_5$ reads 38 after the second occurrence of $35^{cd}$.

36 $^{b}$) $D_{5-9}$ शुद्धाशुद्ध- ( for चोक्षाश्चोक्ष- ). —$^{c}$)

7 श्रद्धावन्तो दयावन्तश्चोक्षाश्चोक्षजनप्रियाः ।
धर्माधर्मविदो नित्यं ते नराः स्वर्गगामिनः ॥ ३६
शुभानामशुभानां च कर्मणां फलसंचये ।
विपाकज्ञाश्च ये देवि ते नराः स्वर्गगामिनः ॥ ३७
न्यायोपेता गुणोपेता देवद्विजपराः सदा ।
समतां समनुप्राप्तास्ते नराः स्वर्गगामिनः ॥ ३८
शुभैः कर्मफलैर्देवि मयैते परिकीर्तिताः ।
स्वर्गमार्गोपगा भूयः किमन्यच्छ्रोतुमिच्छसि ॥ ३९

उमोवाच ।

महान्मे संशयः कश्चिन्मर्त्यान्प्रति महेश्वर ।
तस्मात्तं नैपुणेनाद्य ममाख्यातुं त्वमर्हसि ॥ ४०
केनायुर्लभते दीर्घं कर्मणा पुरुषः प्रभो ।
तपसा वापि देवेश केनायुर्लभते महत् ॥ ४१
क्षीणायुः केन भवति कर्मणा भुवि मानवः ।
विपाकं कर्मणां देव वक्तुमर्हस्यनिन्दित ॥ ४२
अपरे च महाभोगा मन्दभोगास्तथापरे ।
अकुलीनास्तथा चान्ये कुलीनाश्च तथापरे ॥ ४३
दुर्दर्शाः केचिदाभान्ति नराः काष्ठमया इव ।
प्रियदर्शास्तथा चान्ये दर्शनादेव मानवाः ॥ ४४
दुष्प्रज्ञाः केचिदाभान्ति केचिदाभान्ति पण्डिताः ।
महाप्रज्ञास्तथैवान्ये ज्ञानविज्ञानदर्शिनः ॥ ४५
अल्पाबाधास्तथा केचिन्महाबाधास्तथापरे ।
दृश्यन्ते पुरुषा देव तन्मे शंसितुमर्हसि ॥ ४६

महेश्वर उवाच ।

हन्त तेऽहं प्रवक्ष्यामि देवि कर्मफलोदयम् ।
मर्त्यलोके नराः सर्वे येन स्वं भुञ्जते फलम् ॥ ४७
प्राणातिपाती यो रौद्रो दण्डहस्तोद्यतस्तथा ।
नित्यमुद्यतदण्डश्च हन्ति भूतगणान्नरः ॥ ४८

---

$D_{4-9}$ नित्यास् ( for नित्यं ).

37 $D_{1,2}$ om. (hapl.) 37. — $^{b}$) $V_1$ B Dn -संचयं; $D_5$ -संक्षये ( for -संचये ).

38 $D_{4,6,7,9}$ om. (hapl.) 38. $D_5$ reads 38 after the second occurrence of $35^{cd}$. — $^{c}$) $V_1$ B Dn $D_5$ समुत्थानम( $B_1$ °य त्व )नुप्राप्तास्.

39 $^{c}$) $B_{2,5}$ $Dn_{1}$. $n_{3}$ -मार्गपरा ( for -मार्गोपगा ). — $^{d}$) $D_{6,8,9}$ अर्हसि ( for इच्छसि ). $V_1$ B Dn $D_{4,5}$ किं त्वं श्रोतुमिहेच्छ( $D_4$ °हार्ह )सि. — After 39, $D_{4-9}$ ins. an addl. colophon [ *Adhy. name:* $D_{4-9}$ उमामहेश्वरसंवादः ].

40 $^{c}$) $V_1$ B Dn $D_{4-6,8,9}$ त्वं ( for तं ). $D_{5-9}$ [अ]थ ( for [अ]द्य ). — $^{d}$) $V_1$ B Dn $D_2$ व्याख्यातुम् ( for [आ]ख्यातुं त्वम् ). $D_{5,7}$ मामेवाख्यातुमर्हसि.

41 $^{a}$) $D_{6,9}$ किम् ( for केन ).

42 $^{a}$) $D_{1,2}$ दीर्घायुः ( for क्षीणायुः ).

43 $^{a}$) $V_1$ B Dn महाभाग्या; $D_{4-8}$ °भागा ( for °भोगा ). — $^{b}$) $V_1$ B Dn $D_5$ मंदभाग्यास्; $D_{4,6-9}$ °भागास् ( for °भोगास् ). — $^{c}$) $B_5$ कुलशीलास् ( for अकुलीनास् ).

44 $^{a}$) $D_7$ केन च ( for केचिद् ). — $D_1$ om. (hapl.) $44^{b}$–$45^{a}$. $D_2$ om. $44^{bcd}$. $D_{6,7,9}$ om. $44^{c}$–$45^{d}$. — $^{c}$) $D_4$ सुदर्शनास् ( for प्रियदर्शास् ). — $D_4$ om. (hapl.) $44^{d}$–$45^{c}$.

45 $D_1$ om. $45^{a}$; $D_4$ om. $45^{abc}$; $D_{6,7,9}$ om. 45 ( for all, cf. v. l. 44 ). — $^{c}$) $V_1$ $B_{3,5}$ $Dn_3$ $D_{2,8}$ महाप्राज्ञास् ( for °प्रज्ञास् ). $D_{1,2}$ च ( for [ए]व ). — $^{d}$) $V_1$ B Dn $D_{5,8}$ -भाविनः; $D_4$ -शालिनः ( for -दर्शिनः ).

46 $^{a}$) $B_5$ $D_{2,5-8}$ अल्पबाधास् ( for अल्पा° ). — $^{d}$) $V_1$ B Dn $D_{4,5}$ व्याख्यातुम् ( for शंसितुम् ).

47 B Dn देव; $D_{1,4-7,9}$ देवदेव; $D_2$ ईश्वर ( for महेश्वर ). — $^{a}$) $D_{6-9}$ सं- ( for ऽहं ). — $^{c}$) $V_1$ B Dn $D_{4-9}$ नरः सर्वो ( for नराः सर्वे ). — $^{d}$) $V_1$ $B_{2,3}$ $D_{4,5}$ येन स्वफलमश्नुते; $B_{1,4,5}$ Dn $D_{6-9}$ येन स्वं फलमश्नुते.

48 $^{a}$) $V_1$ प्राणाभि- ( for °ति- ). $Dn_2$ $D_{1,2}$ -पाते ( for -पाति ). — $^{b}$) $V_1$ B Dn $D_{4-9}$ सदा ( for तथा ). — $^{c}$) $V_1$ B Dn $D_{4-9}$ -शस्त्रस् ( for -दण्डश् ).

निर्दयः सर्वभूतानां नित्यमुद्वेगकारकः ।
अपि कीटपिपीलानामशरण्यः सुनिर्घृणः ॥ ४९
एवंभूतो नरो देवि निरयं प्रतिपद्यते ।
विपरीतस्तु धर्मात्मा रूपवानभिजायते ॥ ५०
निरयं याति हिंसात्मा याति स्वर्गमहिंसकः ।
यातनां निरये रौद्रां स कृच्छ्रां लभते नरः ॥ ५१
अथ चेन्निरयात्तस्मात्समुत्तरति कर्हिचित् ।
मानुष्यं लभते चापि हीनायुस्तत्र जायते ॥ ५२
पापेन कर्मणा देवि बद्धो हिंसारतिर्नरः ।
अप्रियः सर्वभूतानां हीनायुरुपजायते ॥ ५३
यस्तु शुक्लाभिजातीयः प्राणिघातविवर्जकः ।
निक्षिप्तदण्डो निर्दण्डो न हिनस्ति कदाचन ॥ ५४
न घातयति नो हन्ति घ्नन्तं नैवानुमोदते ।
सर्वभूतेषु सस्नेहो यथात्मनि तथापरे ॥ ५५
ईदृशः पुरुषोत्कर्षो देवि देवत्वमश्नुते ।
उपपन्नान्सुखान्भोगानुपाश्नाति मुदा युतः ॥ ५६
अथ चेन्मानुषे लोके कदाचिदुपपद्यते ।
तत्र दीर्घायुरुत्पन्नः स नरः सुखमेधते ॥ ५७
एवं दीर्घायुषां मार्गः सुवृत्तानां सुकर्मणाम् ।
प्राणिहिंसाविमोक्षेण ब्रह्मणा समुदीरितः ॥ ५८

इति श्रीमहाभारते अनुशासनपर्वणि द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥

## १३३

उमोवाच ।
किंशीलाः किंसमाचाराः पुरुषाः कैश्च कर्मभिः ।
स्वर्गं समभिपद्यन्ते संप्रदानेन केन वा ॥ १

महेश्वर उवाच ।
दाता ब्राह्मणसत्कर्ता दीनान्धकृपणादिषु ।
भक्ष्यभोज्यान्नपानानां वाससां च प्रदायकः ॥ २

C. 13,
B. 13
K. ...
M. 8...

49 $^{b}$) D2 उद्विग्न- ( for उद्वेग- ). — $^{c}$) V1 B2. 3 -पतंगानाम्; B5 -पिपीलिनाम् ( for °लानाम् ).

50 D9 om. $50^{a}$–$55^{b}$. — $^{b}$) D2 निरयान्. — D1. 2 om. $50^{cd}$. D4 om. $50^{d}$–$54^{a}$. D6. 7 om. $50^{d}$. — $^{d}$) D8 प्राणिघातविवर्जकः ( = $54^{b}$ ). — After 50, Dn2 reads 53.

51 D4. 9 om. 51 ( cf. v. l. 50 ). B3 om. ( hapl. ) 51–52. — $^{a}$) D5 निरयान् ( for °यं ). — $^{c}$) D1. 2 रौद्रे ( for रौद्रां ).

52 D4. 9 om. 52 ( cf. v. l. 50 ). B3 om. 52 ( cf. v. l. 51 ). D6. 7 om. $52^{a}$–$54^{a}$. — $^{a}$) V1 B1. 2. 4. 5 Dn D5. 8 यः कश्चिन् ( for अथ चेन् ).

53 D4. 9 om. 53 ( cf. v. l. 50 ). D6. 7 om. 53 ( cf. v. l. 52 ). Dn2 reads 53 after 50. — $^{d}$) D3 चैव ( for उप- ).

54 D4 om. $54^{a}$; D9 om. 54 ( for both, cf. v. l. 50 ). D6. 7 om. $54^{a}$ ( cf. v. l. 52 ). — $^{b}$) Dn1 -विवर्तकः; D2 °र्जनः ( for °र्जकः ). — $^{c}$) V1 B Dn D2. 8 -शस्त्रो ( for -दण्डो ). — $^{d}$) V1 B Dn1. n3 D8 हिंसति ( for हिनस्ति ).

55 D9 om. $55^{ab}$ ( cf. v. l. 50 ). — $^{b}$) D4. 5. 7 हंतुं; D6. 8 हतं ( for घ्नन्तं ). — $^{c}$) D9 एवं ( for सर्व- ).

56 $^{a}$) Dn1 पुरुषोत्कर्षं. — $^{b}$) Dn2 D7 दिवि ( for देवि ). — $^{c}$) D4–9 शुभाँल्लोकान् ( for सुखान्भोगान् ). — $^{d}$) D4–9 सदाश्नाति ( for उपा° ). B5 [अ]न्वितः ( for युतः ).

58 $^{a}$) V1 B Dn एष ( for एवं ). D4–9 एष दीर्घायुषो मार्गः. — $^{b}$) B3 सुपुण्यानां ( for सुवृत्तानां ). Dn सुकर्मिणां ( for °र्मणाम् ). — $^{c}$) B3 -विमोक्षाणां.

Colophon om. in V1. — *Parvan name:* B1–3 शांति. — *Sub-parvan:* B D1. 2. 6. 9 दानधर्म. — *Adhy. name:* B1. 2 D1. 2. 4–9 उमामहेश्वरसंवादः. — *Adhy. no.* ( figures, words or both ): Dn1 141. — *Śloka no.:* Dn1 58; Dn2 59.

## 133

☞ This adhy. is missing in D3 ( cf. v. l. 13. 82. 37 ).

1 $^{a}$) V1 B Dn किंशीलः किंसमाचारः. — $^{b}$) V1 B

प्रतिश्रयान्सभाः कूपान्प्रपाः पुष्करिणीस्तथा ।
नैत्यकानि च सर्वाणि किमिच्छकमतीव च ॥ ३
आसनं शयनं यानं धनं रत्नं गृहांस्तथा ।
सस्यजातानि सर्वाणि गाः क्षेत्राण्यथ योषितः ॥ ४
सुप्रतीतमना नित्यं यः प्रयच्छति मानवः ।
एवंभूतो मृतो देवि देवलोकेऽभिजायते ॥ ५
तत्रोष्य सुचिरं कालं भुक्त्वा भोगाननुत्तमान् ।
सहाप्सरोभिर्मुदितो रमित्वा नन्दनादिषु ॥ ६
तस्मात्स्वर्गाच्च्युतो लोकान्मानुषेषूपजायते ।
महाभोगे कुले देवि धनधान्यसमाचिते ॥ ७
तत्र कामगुणैः सर्वैः समुपेतो मुदा युतः ।
महाभोगो महाकोशो धनी भवति मानवः ॥ ८
एते देवि महाभोगाः प्राणिनो दानशीलिनः ।
ब्रह्मणा वै पुरा प्रोक्ताः सर्वस्य प्रियदर्शनाः ॥ ९
अपरे मानवा देवि प्रदानकृपणा द्विजैः ।
याचिता न प्रयच्छन्ति विद्यमानेऽप्यबुद्धयः ॥ १०
दीनान्धकृपणान्दृष्ट्वा भिक्षुकानतिथीनपि ।
याच्यमाना निवर्तन्ते जिह्वालोभसमन्विताः ॥ ११
न धनानि न वासांसि न भोगान्न च काञ्चनम् ।
न गावो नान्नविकृतिं प्रयच्छन्ति कदाचन ॥ १२
अप्रवृत्तास्तु ये लुब्धा नास्तिका दानवर्जिताः ।
एवंभूता नरा देवि निरयं यान्त्यबुद्धयः ॥ १३
ते चेन्मनुष्यतां यान्ति यदा कालस्य पर्ययात् ।
धनरिक्ते कुले जन्म लभन्ते स्वल्पबुद्धयः ॥ १४
क्षुत्पिपासापरीताश्च सर्वभोगबहिष्कृताः ।
निराशाः सर्वभोगेभ्यो जीवन्त्यधमजीविकाम् ॥ १५

---

$D_n$ पुरुषः. $D_{4, 6-9}$ चैव ( for कैश्च ). — $^{c}$) $V_1$ B $D_n$ -पद्येत ( for -पद्यन्ते ).

2 $D_1$ देवदेव; $D_2$ ईश्वर ( for महेश्वर ). — $^{b}$) $V_1$ B $D_n$ दीनार्त- ( for °न्ध- ). — $^{c}$) $B_{2, 5}$ $D_{6, 9}$ भक्ष- ( for भक्ष्य- ). — $^{d}$) $B_1$ महामतिः ( for प्रदायकः ).

3 $^{a}$) $D_{4, 6-9}$ प्रतिश्रयाः ( for °श्रयान् ). — $^{c}$) $V_1$ नित्यकानि; $D_{4, 6-9}$ चैत्य°; $D_5$ मेच° ( for नैत्य° ).

4 $^{a}$) $D_5$ वस्त्रं ( for यानं ). — $^{b}$) $V_1$ B $D_n$ $D_4$ गृहं र( $D_4$ धनर )त्नं धनं तथा.

5 $^{a}$) $B_4$ सुप्रणीत- ( for °तीत- ). $D_5$ सुप्रीतमनसा नित्यं. — $^{c}$) $V_1$ B $D_n$ $D_2$ नरो ( for मृतो ). — $^{d}$) $D_{5-9}$ महीयते ( for ऽभिजायते ).

6 $^{c}$) $D_{5, 7}$ सदा ( for सह ). — $^{d}$) $B_5$ वसित्वा; $D_1$ रमते ( for रमित्वा ).

7 $^{b}$) $D_4$ प्र- ( for [उ]प- ). — $^{c}$) $V_1$ $B_1$ (marg.). $_{4, 5}$ $D_n$ $D_4$ महाभोग-; $B_1$ °भाग-; $D_2$ °भागे; $D_{6-9}$ °भाग्ये ( for °भोगे ). — $^{d}$) $V_1$ $B_{1-4}$ $D_n$ -समाचितः; $B_5$ $D_{1, 4-7}$ -समन्विते ( $B_5$ °तः ) ( for -समाचिते ).

8 $^{b}$) $D_{1, 6-9}$ सदा देवि ( for समुपेतो ). — $^{c}$) $V_1$ $D_{6, 7, 9}$ महाभागो ( for °भोगो ). $B_1$ महाकायो; some MSS. महाकोपो ( for °कोशो ).

9 $^{a}$) $V_1$ B $D_n$ $D_{4-9}$ महाभागाः ( for °भोगाः ). — $D_1$ om. from ब्रह्मणा ( in 9$^{c}$ ) up to सर्वसत्त्व ( in 32$^{b}$ ). — $^{d}$) $B_5$ सर्वत्र ( for सर्वस्य ).

10 $D_1$ om. 10 ( cf. v. l. 9 ). — $^{c}$) $D_4$ यानि तानि ( for याचिता न ). — $^{d}$) $D_{7, 9}$ विद्यमानेष्वबुद्धयः.

11 $D_1$ om. 11 ( cf. v. l. 9 ). — $^{d}$) $B_{2, 8}$ जिह्मा; $D_{4, 6-9}$ जिह्म- ( for जिह्वा- ).

12 $D_1$ om. 12 ( cf. v. l. 9 ). — $^{b}$) $B_3$ भोगं ( for भोगान् ). $D_{5, 7, 9}$ [ए]व ( for च ). — $^{c}$) $D_2$ च गा ( for गावो ). $D_{5, 6, 8, 9}$ -विकृतं ( for °तिं ).

13 $D_1$ om. 13 ( cf. v. l. 9 ). $B_4$ om. 13$^{ab}$. — $^{a}$) $B_5$ अप्रमत्तास् ( for °वृत्तास् ). $V_1$ B ( $B_4$ om. ) $D_n$ च ( for तु ).

14 $D_1$ om. 14 ( cf. v. l. 9 ). $D_{2, 4}$ om. (hapl.) 14. — $^{a}$) $V_1$ $B_{1, 2, 4, 5}$ $D_n$ $D_8$ वै ( for चेन् ). $B_3$ $D_{5-9}$ मानुषतां ( for मनुष्यतां ). — $^{b}$) $D_{6-9}$ कदाचित्कालपर्ययात्. — $^{d}$) $D_{5-9}$ तेल्प- ( for स्वल्प- ).

15 $D_1$ om. 15 ( cf. v. l. 9 ). — $^{b}$) $V_1$ B $D_n$ -लोक-; $D_2$ -भूतैर् ( for -भोग- ). — $^{c}$) $D_2$ -कामेभ्यो; $D_{4-9}$ -कार्येषु ( for -भोगेभ्यो ). — $^{d}$) $V_1$ $B_{1, 4, 5}$ $D_n$ $D_3$ [अ]धन-; $B_3$ [अ]धर्म- ( for [अ]धम- ).

अल्पभोगकुले जाता अल्पभोगरता नराः ।
अनेन कर्मणा देवि भवन्त्यधनिनो नराः ॥ १६
अपरे स्तम्भिनो नित्यं मानिनः पापतो रताः ।
आसनार्हस्य ये पीठं न प्रयच्छन्त्यचेतसः ॥ १७
मार्गार्हस्य च ये मार्गं न यच्छन्त्यल्पबुद्धयः ।
पाद्यार्हस्य च ये पाद्यं न ददत्यल्पबुद्धयः ॥ १८
अर्घार्हान्न च सत्कारैरर्चयन्ति यथाविधि ।
अर्घ्यमाचमनीयं वा न यच्छन्त्यल्पबुद्धयः ॥ १९
गुरुं चाभिगतं प्रेम्णा गुरुवन्न बुभूषते ।
अभिमानप्रवृत्तेन लोभेन समवस्थिताः ॥ २०
संमान्यांश्चावमन्यन्ते वृद्धान्परिभवन्ति च ।
एवंविधा नरा देवि सर्वे निरयगामिनः ॥ २१
ते वै यदि नरास्तस्मान्निरयादुत्तरन्ति वै ।
वर्षपूगैस्ततो जन्म लभन्ते कुत्सिते कुले ॥ २२
श्वपाकपुल्कसादीनां कुत्सितानामचेतसाम् ।
कुलेषु तेषु जायन्ते गुरुवृद्धापचायिनः ॥ २३
न स्तम्भी न च मानी यो देवताद्विजपूजकः ।
लोकपूज्यो नमस्कर्ता प्रश्रितो मधुरं वदन् ॥ २४
सर्ववर्णप्रियकरः सर्वभूतहितः सदा ।
अद्वेषी सुमुखः श्लक्ष्णः स्निग्धवाणीप्रदः सदा ॥ २५
स्वागतेनैव सर्वेषां भूतानामविहिंसकः ।
यथार्हसत्क्रियापूर्वमर्चयन्नुपतिष्ठति ॥ २६
मार्गार्हाय ददन्मार्गं गुरुं गुरुवदर्चयन् ।
अतिथिप्रग्रहरतस्तथाभ्यागतपूजकः ॥ २७

C. 13. 6709
B. 13. 145. 2
K. subst.
M. subst.

16 D1 om. 16 (cf. v. l. 9). D4.6.7.9 om. 16-35. —a) B1 स्वल्पभोगे; B2.3 अल्पभोगे (for °भोग-). —b) B1 D3 स्वल्प- (for अल्प-). — D2 om. (hapl.) 16cd.

17 D1 om. 17 (cf. v. l. 9). D4.6.7.9 om. 17 (cf. v. l. 16). —b) B1 Dn2 D5 नराः (for रताः). Dn1 मानिनः पापचेतसः. —d) B2.3 [अ]ल्पबुद्धयः (hypermetric); D3 [अ]बुद्धयः (for [अ]चेतसः).

18 D1 om. 18 (cf. v. l. 9). D4.6.7.9 om. 18 (cf. v. l. 16). V1 reads 18ab twice. —b) V1 (first time) Dn2.n3 D5 प्रयच्छंति (hypermetric) (for यच्छन्ति). V1 (second time) B4 न प्रयच्छंत्यबुद्धयः; D3 न ददत्यल्पमेधसः. —d) D3 -चेतसः (for -बुद्धयः).

19 D1 om. 19 (cf. v. l. 9). D4.6.7.9 om. 19 (cf. v. l. 16). —a) D5.8 अर्घ्यार्हान् (for अर्घा°). D2 सत्क्रियार्हांश्च सत्कारैर्. —c) V1 अर्घम् (for अर्घ्यम्). B1 च (for वा). —d) D2 [अ]बुधा नराः (for [अ]ल्पबुद्धयः). D5 न प्रयच्छंत्यबुद्धयः.

20 D1 om. 20 (cf. v. l. 9). D4.6.7.9 om. 20 (cf. v. l. 16). —a) D5 गुर्वाचार- (for गुरुं चाभि-). B1.3 -मतं (for -गतं). —b) D2 [अ]भ्युपासते (for बुभूषते).

21 D1 om. 21 (cf. v. l. 9). D4.6.7.9 om. 21 (cf. v. l. 16). —a) D2 मान्यांश्चापि (for संमान्यांश्च). —b) D8 अभि- (for परि-).

22 D1 om. 22 (cf. v. l. 9). D4.6.7.9 om. 23 (cf. v. l. 16). —a) D2 चेद् (for वै). —b) D3 ते (for वै). D5 उत्तरंति यथा न वै. —d) D5 कुनृणां (for कुत्सिते).

23 D1 om. 23 (cf. v. l. 9). D4.6.7.9 om. 23 (cf. v. l. 16). —a) V1 B Dn श्वपाकपुक्क(Dn2.n3 °ल्क)सादीनां. —c) B2.3 तेभि- (for तेषु). D5 महत्कुलेषु जायंते. —d) D2 गुरुवृद्धावमानिनः.

24 D1 om. 24 (cf. v. l. 9). D4.6.7.9 om. 24 (cf. v. l. 16). —c) D2 लोके पूज्य- (for लोकपूज्यो). —d) V1 B3-5 Dn1.n3 D5.8 वचः (for वदन्). B1 Dn3 प्रश्रितो मधुरस्वनः (Dn3 °रः).

25 D1 om. 25 (cf. v. l. 9). D4.6.7.9 om. 25 (cf. v. l. 16). —d) D2 समः (for सदा).

26 D1 om. 26 (cf. v. l. 9). D4.6.7.9 om. 26 (cf. v. l. 16). —c) D5.8 यथार्हं. —d) D5 यत्नेन (for अर्चयन्). V1 B4.5 Dn1.n3 D8 अव- (for उप-). B1-3 अर्चयन्नवतिष्ठते.

27 D1 om. 27 (cf. v. l. 9). D4.6.7.9 om. 27 (cf. v. l. 16). —b) D2 शुभं (for गुरुं). —c) D5 अतिथिप्रेक्षणपरस्.

28 D1 om. 28 (cf. v. l. 9). D4.6.7.9 om. 28

10 5. 28 एवंभूतो नरो देवि स्वर्गतिं प्रतिपद्यते ।
ततो मानुषतां प्राप्य विशिष्टकुलजो भवेत् ॥ २८
तत्रासौ विपुलैर्भोगैः सर्वरत्नसमायुतः ।
यथार्हदाता चार्हेषु धर्मचर्यापरो भवेत् ॥ २९
संमतः सर्वभूतानां सर्वलोकनमस्कृतः ।
स्वकर्मफलमाप्नोति स्वयमेव नरः सदा ॥ ३०
उदात्तकुलजातीय उदात्ताभिजनः सदा ।
एष धर्मो मया प्रोक्तो विधात्रा स्वयमीरितः ॥ ३१
यस्तु रौद्रसमाचारः सर्वसत्त्वभयंकरः ।
हस्ताभ्यां यदि वा पद्भ्यां रज्ज्वा दण्डेन वा पुनः ॥ ३२
लोष्टैः स्तम्भैरुपायैर्वा जन्तून्बाधति शोभने ।
हिंसार्थं निकृतिप्रज्ञः प्रोद्वेजयति चैव ह ॥ ३३
उपक्रामति जन्तूंश्च उद्वेगजननः सदा ।
एवंशीलसमाचारो निरयं प्रतिपद्यते ॥ ३४
स चेन्मानुषतां गच्छेद्यदि कालस्य पर्ययात् ।
बह्वाबाधपरिक्लिष्टे सोऽधमे जायते कुले ॥ ३५
लोकद्वेष्योऽधमः पुंसां स्वयं कर्मकृतैः फलैः ।
एष देवि मनुष्येषु बोद्धव्यो ज्ञातिबन्धुषु ॥ ३६
अपरः सर्वभूतानि दयावाननुपश्यति ।
मैत्रदृष्टिः पितृसमो निर्वैरो नियतेन्द्रियः ॥ ३७
नोद्वेजयति भूतानि न विहिंसयते तथा ।
हस्तपादैः सुनियतैर्विश्वास्यः सर्वजन्तुषु ॥ ३८
न रज्ज्वा न च दण्डेन न लोष्टैर्नायुधेन च ।
उद्वेजयति भूतानि श्लक्ष्णकर्मा दयापरः ॥ ३९
एवंशीलसमाचारः स्वर्गे समुपजायते ।
तत्रासौ भवने दिव्ये मुदा वसति देववत् ॥ ४०

(cf. v. l. 16). — $^{b}$) $D_{2}$ भुवनं (for स्वर्गतिं). — $^{c}$) $B_{2.3}$ मनुष्यतां (for मानुषतां). — $^{d}$) $D_{5}$ -कुलगो (for °जो).

29 $D_{1}$ om. 29 (cf. v. l. 9). $D_{4.6.7.9}$ om. 29 (cf. v. l. 16). — $^{a}$) $D_{2}$ [अ]पि (for [अ]सौ). — $^{b}$) $B_{1}$ -समाचित:; $B_{3}$ °युतैः (for °युतः). — $^{c}$) $B_{5}$ यथार्थ- (for °र्ह-).

30 $D_{1}$ om. 30 (cf. v. l. 9). $D_{4.6.7.9}$ om. 30 (cf. v. l. 16). — $^{a}$) $D_{2}$ स मतः सर्वजंतूनां.

31 $D_{1}$ om. 31 (cf. v. l. 9). $D_{4.6.7.9}$ om. 31 (cf. v. l. 16). $D_{2}$ om. (hapl.) $31^{ab}$. — $^{a}$) $B_{4.5}$ यदा तु; $Dn_{3}$ तदा तु (for उदात्त-).

32 $D_{1}$ om. up to सर्वसत्त्व (in $32^{b}$) (cf. v. l. 9). $D_{4.6.7.9}$ om. 32 (cf. v. l. 16). — $^{a}$) $D_{2}$ पाप- (for रौद्र-). — $^{b}$) $V_{1}$ $D_{2}$ -भूत- (for -सत्त्व-).

33 $D_{4.6.7.9}$ om. 33 (cf. v. l. 16). — $^{a}$) $D_{2}$ आयुधैर् (for उपायैर्). — $^{b}$) $D_{5}$ om. from न्बाधति up to निरयं (in $34^{d}$). $B_{5}$ धावति (for बाधति). — $D_{2}$ om. $33^{c}$–$34^{d}$. — $^{d}$) $D_{8}$ हि (for ह).

34 $D_{4.6.7.9}$ om. 34 (cf. v. l. 16). $D_{2}$ om. 34; $D_{5}$ om. up to निरयं (in $34^{d}$) (for both, cf. v. l. 33). — $^{b}$) $D_{1}$ तदुद्वेगकरः सदा.

35 $D_{4.6.7.9}$ om. 35 (cf. v. l. 16). — $^{a}$) $D_{1}$ वै (for चेन्). $B_{3}$ मानुष्यतां (for °षतां). $V_{1}$ $B_{1.2.4.5}$ Dn $D_{5.8}$ स वै मनुष्यतां गच्छेद्. — $^{c}$) $D_{2}$ बह्वायाधापरिक्लिष्टः; $D_{5}$ बहुबाधासमायुक्ते. — $^{d}$) $V_{1}$ B $Dn_{2}$ $D_{5.8}$ कुले जायति सोधमे; $Dn_{3}$ जायते सोधमे कुले.

36 $^{a}$) $B_{3}$ लोके द्वेष्यो; $D_{1}$ लोकद्वेष्टो (for °द्वेष्यो). — $^{b}$) $V_{1}$ $B_{1.4.5}$ Dn $D_{5}$ -फलैः कृतैः (for -कृतैः फलैः). — $^{c}$) $D_{2}$ एतदेव; $D_{4-9}$ एवंविधो (for एष देवि). — $^{d}$) $D_{1.2.6-9}$ बोद्धव्यो ज्ञानबुद्धिभिः ($D_{1.2}$ °षु).

37 $^{a}$) $D_{5}$ अथ वा (for अपरः).

38 $^{b}$) $V_{1}$ $D_{8}$ वा ($D_{8}$ च) चोद्विजते; B $Dn_{3}$ विहेठयते; $Dn_{1}$, $n_{2}$ विहेल°; $D_{2}$ विवेद°; $D_{4-7.9}$ व बोध°; Bom. ed. विघात° (for विहिंस°). — $^{c}$) $D_{6-9}$ नियामितैर् (for सुनियतैर्).

39 $D_{4.6.7.9}$ om. 39. — $^{b}$) $B_{1.3}$ लोष्ट्रैर् (for लोष्टैर्). $D_{1.2}$ om. न. — $^{d}$) $B_{1}$ $D_{1}$ शुक्ल-; $B_{2}$ (marg. as in text) शुद्ध- (for श्लक्ष्ण-).

40 $^{a}$) $D_{1.2}$ सशीलसमुदाचारः. — $D_{5}$ om. (hapl. ?) $40^{c}$–$41^{d}$. $D_{8}$ om. (hapl.) $40^{c}$–$41^{b}$. — $^{c}$) $D_{6.7.9}$ पुण्ये (for दिव्ये). $D_{4}$ तत्रासौ शोभने पुण्ये. — $^{d}$) $B_{1}$ सदा; $D_{4.6.7.9}$ उमे (for मुदा).

स चेत्कर्मक्षयान्मर्त्यो मनुष्येषूपजायते ।
अल्पाबाधो निरीतीकः स जातः सुखमेधते ॥ ४१
सुखभागी निरायासो निरुद्वेगः सदा नरः ।
एष देवि सतां मार्गो बाधा यत्र न विद्यते ॥ ४२

उमोवाच ।

इमे मनुष्या दृश्यन्ते ऊहापोहविशारदाः ।
ज्ञानविज्ञानसंपन्नाः प्रज्ञावन्तोऽर्थकोविदाः ।
दुष्प्रज्ञाश्चापरे देव ज्ञानविज्ञानवर्जिताः ॥ ४३
केन कर्मविपाकेन प्रज्ञावान्पुरुषो भवेत् ।
अल्पप्रज्ञो विरूपाक्ष कथं भवति मानवः ।
एतं मे संशयं छिन्द्धि सर्वधर्मविदां वर ॥ ४४
जात्यन्धाश्चापरे देव रोगार्ताश्चापरे तथा ।
नराः क्लीबाश्च दृश्यन्ते कारणं ब्रूहि तत्र वै ॥ ४५

महेश्वर उवाच ।

ब्राह्मणान्वेदविदुषः सिद्धान्धर्मविदस्तथा ।
परिपृच्छन्त्यहरहः कुशलाकुशलं तथा ॥ ४६
वर्जयन्त्यशुभं कर्म सेवमानाः शुभं तथा ।
लभन्ते स्वर्गतिं नित्यमिह लोके सुखं तथा ॥ ४७
स चेन्मानुषतां याति मेधावी तत्र जायते ।
श्रुतं प्रज्ञानुगं चास्य कल्याणमुपजायते ॥ ४८
परदारेषु ये मूढाश्चक्षुर्दुष्टं प्रयुञ्जते ।
तेन दुष्टस्वभावेन जात्यन्धास्ते भवन्ति ह ॥ ४९
मनसा तु प्रदुष्टेन नग्नां पश्यन्ति ये स्त्रियम् ।
रोगार्तास्ते भवन्तीह नरा दुष्कृतकर्मिणः ॥ ५०
ये तु मूढा दुराचारा वियोनौ मैथुने रताः ।
पुरुषेषु सुदुष्प्रज्ञाः क्लीबत्वमुपयान्ति ते ॥ ५१
पशूंश्च ये बन्धयन्ति ये चैव गुरुतल्पगाः ।
प्रकीर्णमैथुना ये च क्लीबा जायन्ति ते नराः ॥ ५२

उमोवाच ।

सावद्यं किं नु वै कर्म निरवद्यं तथैव च ।

C. B. K. M.

---

41 $D_{5}$ om. 41; $D_{8}$ om. 41$^{a}$ (for both, cf. v. l. 40). —$^{a}$) $D_{1,2,4,6,7,9}$ काल- (for कर्म-). —$^{b}$) $D_{6,7,9}$ मानुषेषु (for मनुष्येषु). $V_{1}$ प्र- (for [उ]प-). —$^{c}$) $B_{3,4}$ $Dn_{2}$ अल्पबाधो. $Dn_{1}, n_{2}$ $D_{4}$ निरातंकः (for निरीतीकः). $D_{6-9}$ बा($D_{8}$ व)धान्मुक्तो निरातंको. —$^{d}$) $D_{2}$ सुजातः; $D_{4}$ संजातः; $D_{6-9}$ जातः सन् (for स जातः).

42 $^{b}$) $D_{6-9}$ निरुद्वेगकरः सदा.

43 $B_{5}$ om. the ref. —$^{a}$) $D_{2}$ चैव (for देव).

44 $^{a}$) $V_{1}$ B Dn -विशेषेण (for -विपाकेन). —$^{c}$) $D_{1,2}$ अप्राज्ञो वा (for अल्पप्रज्ञो). —$^{e}$) $D_{1,2}$ एवं (for एतं). —$^{f}$) $D_{1,2}$ -धर्मभृतां (for °विदां).

45 $^{b}$) $D_{4-9}$ रोगांधाश्च (for रोगार्ताश्च). $D_{1,4}$ transp. [अ]परे and तथा. —$^{c}$) $D_{1,2}$ वृथा- (for नराः). $D_{4-9}$ तथा क्लीबाश्च जायंते.

46 $D_{1}$ देवदेव; $D_{2}$ ईश्वर (for महेश्वर). —$^{d}$) $B_{2,3}$ सदा; $B_{4,5}$ तदा (for तथा).

47 $^{a}$) $V_{1}$ B Dn $D_{5}$ वर्ज($Dn_{1}$ °र्ज)यंतो (for वर्जयन्ति). —$^{b}$) $D_{1,4,6-9}$ सदा (for तथा). —$^{d}$) $V_{1}$ $B_{2-5}$ Dn $D_{4,5}$ तथा सुखं (by transp.); $B_{1}$ तथा शुभं.

48 $^{a}$) $B_{1}$ मनुष्यतां (for मानुषतां). —$^{b}$) $D_{4-9}$ तेन (for तत्र). —$^{c}$) $V_{1}$ B Dn यस्य (for चास्य).

49 $^{a}$) $V_{1}$ B Dn चापि (for मूढाश्). —$^{b}$) $D_{1}$ om. (hapl.) from श्चक्षु up to मूढा (in 51$^{a}$). $B_{1}$ द्रष्टुं; $D_{8}$ दृष्टिं (for दुष्टं). —$^{c}$) $D_{4-9}$ संदुष्ट- (for दुष्टस्व-). —$^{d}$) $D_{2}$ च (for ते). $V_{1}$ $D_{2}$ ते; $B_{2,3}$ च; $B_{4,5}$ वै; $D_{6-8}$ हि (for ह).

50 $D_{1}$ om. 50 (cf. v. l. 49). —$^{a}$) $D_{4,6-9}$ सं- (for तु). $D_{5}$ मनसा संप्रहृष्टेन. —$^{b}$) $D_{4-9}$ वै (for ये). —$^{c}$) $D_{4-7}$ रोगांधास् (for रोगार्तास्). —$^{d}$) $D_{6-9}$ -कर्मणा.

51 $D_{1}$ om. up to मूढा (in 51$^{a}$) (cf. v. l. 49). —$^{a}$) $B_{3}$ [ऽ]पि (for तु). —$^{c}$) $D_{1,4}$ च (for सु-). $D_{6-9}$ वधूस्वस्रपितृव्यानां. —$^{d}$) $D_{1,2}$ च; $D_{6-9}$ वै (for ते).

52 $^{a}$) $Dn_{1}, n_{2}$ बंधयंते; $D_{1,2,4-9}$ घातयंति (for

श्रेयः कुर्वन्नवाप्नोति मानवो देवसत्तम ॥ ५३

महेश्वर उवाच ।

श्रेयांसं मार्गमातिष्ठन्सदा यः पृच्छते द्विजान् ।
धर्मान्वेषी गुणाकाङ्क्षी स स्वर्गं समुपाश्नुते ॥ ५४
यदि मानुषतां देवि कदाचित्स निगच्छति ।
मेधावी धारणायुक्तः प्राज्ञस्तत्राभिजायते ॥ ५५
एष देवि सतां धर्मो मन्तव्यो भूतिकारकः ।
नृणां हितार्थाय तव मया वै समुदाहृतः ॥ ५६

उमोवाच ।

अपरे स्वल्पविज्ञाना धर्मविद्वेषिणो नराः ।
ब्राह्मणान्वेदविदुषो नेच्छन्ति परिसर्पितुम् ॥ ५७
व्रतवन्तो नराः केचिच्छ्रद्धादमपरायणाः ।
अव्रता भ्रष्टनियमास्तथान्ये राक्षसोपमाः ॥ ५८
यज्वानश्च तथैवान्ये निर्होमाश्च तथापरे ।
केन कर्मविपाकेन भवन्तीह वदस्व मे ॥ ५९

महेश्वर उवाच ।

आगमाल्लोकधर्माणां मर्यादाः पूर्वनिर्मिताः ।
प्रामाण्येनानुवर्तन्ते दृश्यन्ते हि दृढव्रताः ॥ ६०
अधर्मं धर्ममित्याहुर्ये च मोहवशं गताः ।
अव्रता नष्टमर्यादास्ते प्रोक्ता ब्रह्मराक्षसाः ॥ ६१
ते चेत्कालकृतोद्योगात्संभवन्तीह मानुषाः ।
निर्होमा निर्वषट्कारास्ते भवन्ति नराधमाः ॥ ६२
एष देवि मया सर्वः संशयच्छेदनाय ते ।
कुशलाकुशलो नृणां व्याख्यातो धर्मसागरः ॥ ६३

इति श्रीमहाभारते अनुशासनपर्वणि त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥

---

वन्ध°). —[c]) D5 वै; D6–9 तु (for च).

54 D2 ईश्वर (for महेश्वर). —[a]) V1 B Dn अन्विच्छन् (for आतिष्ठन्). —[b]) V1 B1.2 Dn पृच्छति (for °ते). D1 द्विजः; D2 द्विजं (for द्विजान्). —[c]) D1.2 धर्मविद्वेषी (for °न्वेषी). D4–8 गुणान्वेषी (for °काङ्क्षी).

55 [b]) B4.5 नियच्छति (for निग°). —[d]) Bom. ed. प्रायस् (for प्राज्ञस्).

56 D1.2.4.6–9 om. 56[cd]. —[cd]) Dn1 तव मुदा; Dn2 D5 मया तव (by transp.). D5 [इ]दं (for वै).

57 [a]) Dn1.n2 अल्प- (for स्वल्प-). —[b]) D4–9 नृपाः (for नराः). —[d]) D1.4–8 -पृच्छितुं (for -सर्पितुम्).

58 [b]) Dn1.n2 D1 -धर्म- (for -दम-).

59 [a]) D5–9 यज्विनश्. —[b]) D1–9 निर्मोहाश् (for निर्होमाश्). —[d]) B2.3 च (for [इ]ह).

60 D2.4.6.8.9 ईश्वर (for महेश्वर). —[a]) V1 B1.2.5 Dn1.n2 D6–9 आगमाल्लोकधर्माणां. —[b]) Bom. ed. सर्व- (for पूर्व-). D1.2 मर्यादां पूर्वनिर्मितां. —[d]) V1 B Dn च (for हि). D6–8 यतव्रताः (for दृढ°).

61 [a]) D1.2 धर्म (for धर्मम्). —[b]) B1.3 D1 तु (for च).

62 D1.2 om. 62[ab]. —[a]) D6–9 -कृताद्योगाद् (for -कृतो°). —[b]) Dn3 D6–9 मानवाः (for मानुषाः). D5 भवंतीह च मानवाः. —[c]) V1 B1 D4.5 निर्मोहा (for निर्होमा).

63 D7 om. 63. —[a]) D8 धर्मो (for देवि). B5 धर्मः (for सर्वः). D4–6.9 एष धर्मो मया देवि. —[c]) D1.6.9 कुशलाकुशले नृणां. —[d]) D4–6.8.9 -संग्रहः (for -सागरः).

Colophon. — *Parvan name:* B1–4 Dn3 D1 शांति. — *Sub-parvan:* V1 B1–3.5 D1.2.5.6.9 दानधर्म. — *Adhy. name:* V1 B1.2.4 D1.2.5.7.8 उमामहेश्वरसंवादः. — *Adhy. no.* (figures, words or both): V1 143; Dn1 142. — *Śloka no.:* Dn1.n2 64; D4 42.

## १३४

महेश्वर उवाच ।
परावरज्ञे धर्मज्ञे तपोवननिवासिनि ।
साध्वि सुभ्रु सुकेशान्ते हिमवत्पर्वतात्मजे ॥ १
दक्षे शमदमोपेते निर्ममे धर्मचारिणि ।
पृच्छामि त्वां वरारोहे पृष्टा वद ममेप्सितम् ॥ २
सावित्री ब्रह्मणः साध्वी कौशिकस्य शची सती ।
मार्तण्डजस्य धूमोर्णा ऋद्धिर्वैश्रवणस्य च ॥ ३
वरुणस्य तथा गौरी सूर्यस्य च सुवर्चला ।
रोहिणी शशिनः साध्वी स्वाहा चैव विभावसोः ॥ ४
अदितिः कश्यपस्याथ सर्वास्ताः पतिदेवताः ।
पृष्टाश्चोपासिताश्चैव तास्त्वया देवि नित्यशः ॥ ५
तेन त्वां परिपृच्छामि धर्मज्ञे धर्मवादिनि ।
स्त्रीधर्मं श्रोतुमिच्छामि त्वयोदाहृतमादितः ॥ ६
सहधर्मचरी मे त्वं समशीला समव्रता ।
समानसारवीर्या च तपस्तीव्रं कृतं च ते ।
त्वया ह्युक्तो विशेषेण प्रमाणत्वमुपैष्यति ॥ ७
स्त्रियश्चैव विशेषेण स्त्रीजनस्य गतिः सदा ।
गौर्गां गच्छति सुश्रोणि लोकेष्वेषा स्थितिः सदा ॥ ८
मम चार्धं शरीरस्य मम चार्धाद्विनिःसृता ।
सुरकार्यकरी च त्वं लोकसंतानकारिणी ॥ ९
तव सर्वः सुविदितः स्त्रीधर्मः शाश्वतः शुभे ।
तस्मादशेषतो ब्रूहि स्त्रीधर्मं विस्तरेण मे ॥ १०
उमोवाच ।
भगवन्सर्वभूतेश भूतभव्यभवोद्भव ।

### 134

☞ This adhy. is missing in D3 (cf. v. l. 13. 82. 37).

1 Before the ref., Dn2 ins.:

628* नारद उवाच ।
एवमुक्त्वा महादेवः श्रोतुकामः स्वयं प्रभुः ।
अनुकूलां प्रियां भार्यां पार्श्वस्थां समभाषत ।

— D4 ईश्वर (for महेश्वर). — a) B1 (marg.).4 परापरज्ञे धर्मज्ञे.

2 a) D1.3 दक्षे दमशमोपेते. — d) D1 चेदं (for वद).

3 c) B3.5 Dn2 D1 मार्तंडस्य च धूमोर्णा; Dn1.n3 D5.7.9 मार्तंडेयस्य धू°; D2.4.6.8 मार्कंडेयस्य धू°. — d) D6 सिद्धिर्; D8 सिद्धा (for ऋद्धिर्).

4 b) Dn3 D1.5 सुवर्चसा (for °ला).

5 c) D1.7 दृष्टाश्च; D4-6.8.9 दृष्टाश्च (for पृष्टाश्च). — d) D5 स्त्रियो (for त्वया).

6 d) D1.4-9 आत्मनः (for आदितः). D2 त्वयोदाहृतमानसः.

7 a) V1 B Dn स(V1 Dn2 स्व)धर्मचारिणी मे त्वं. — c) D4-9 -शील- (for -सार-). — d) D5 च ते कृतं (for कृतं च ते). — e) D1.2 ह्युक्तं (for ह्युक्तो). — After 7e, V1 B Dn ins.:

629* गुणवान्स भविष्यति ।
लोके चैव तथा देवि·

[(L. 1) Dn2 सं- (for स). —(L. 2) Dn1.n3 त्वया (for तथा).]

8 a) D5-9 [ए]वं (for [ए]व). — b) V1 B Dn D8 परां (for सदा). — D2 om. (hapl.) 8cd. — c) Dn1.n2 D4.6-9 गौर्या (for गौर्गां). — d) D5.7 लोके च (for लोकेषु). V1 B Dn D2.4.8 गतिः (for स्थितिः).

9 D5 om. 9-10. — b) V1 B2.4.5 Dn तव चार्धेन निर्मितं; B1.3 मम चार्धेन निर्मिता. — c) D4 -कार्यकरा; D6.9 °चरी (for °करी).

10 D5 om. 10 (cf. v. l. 9). — a) D4 धर्मः (for सर्वः). D1.2 तु (for सु-). D6-9 तव धर्मः सुविहितः. — b) B3 शुभः. — d) V1 B Dn D4.6 स्व- (for स्त्री-). B1 वै (for मे).

11 b) D4-6.8.9 सर्वभव्य-; D7 सर्वभूत- (for भूत-

13 त्वत्प्रभावादियं देव वाक्चैव प्रतिभाति मे ॥ ११
इमास्तु नद्यो देवेश सर्वतीर्थोदकैर्युताः ।
उपस्पर्शनहेतोस्त्वा समीपस्था उपासते ॥ १२
एताभिः सह संमन्त्र्य प्रवक्ष्याम्यनुपूर्वशः ।
प्रभवन्योऽनहंवादी स वै पुरुष उच्यते ॥ १३
स्त्री च भूतेश सततं स्त्रियमेवानुधावति ।
मया संमानिताश्चैव भविष्यन्ति सरिद्वराः ॥ १४
एषा सरस्वती पुण्या नदीनामुत्तमा नदी ।
प्रथमा सर्वसरितां नदी सागरगामिनी ॥ १५
विपाशा च वितस्ता च चन्द्रभागा इरावती ।
शतद्रुर्देविका सिन्धुः कौशिकी गोमती तथा ॥ १६
तथा देवनदी चेयं सर्वतीर्थाभिसंवृता ।
गगनाद्गां गता देवी गङ्गा सर्वसरिद्वरा ॥ १७
इत्युक्त्वा देवदेवस्य पत्नी धर्मभृतां वरा ।
स्मितपूर्वमिवाभाष्य सर्वास्ताः सरितस्तदा ॥ १८
अपृच्छद्देवमहिषी स्त्रीधर्मं धर्मवत्सला ।
स्त्रीधर्मकुशलास्ता वै गङ्गाद्याः सरितां वराः ॥ १९
अयं भगवता दत्तः प्रश्नः स्त्रीधर्मसंश्रितः ।
तं तु संमन्त्र्य युष्माभिर्वक्तुमिच्छामि शंकरे ॥ २०
न चैकसाध्यं पश्यामि विज्ञानं भुवि कस्यचित् ।
दिवि वा सागरगमास्तेन वो मानयाम्यहम् ॥ २१

भीष्म उवाच ।

एवं सर्वाः सरिच्छ्रेष्ठाः पृष्टाः पुण्यतमाः शिवाः ।
ततो देवनदी गङ्गा नियुक्ता प्रतिपूज्य ताम् ॥ २२
बह्वीभिर्बुद्धिभिः स्फीता स्त्रीधर्मज्ञा शुचिस्मिता ।
शैलराजसुतां देवीं पुण्या पापापहां शिवाम् ॥ २३
बुद्ध्या विनयसंपन्ना सर्वज्ञानविशारदा ।
सस्मितं बहुबुद्ध्याढ्या गङ्गा वचनमब्रवीत् ॥ २४
धन्याः स्मोऽनुगृहीताः स्मो देवि धर्मपरायणा ।
या त्वं सर्वजगन्मान्या नदीर्मानयसेऽनघे ॥ २५

-भव्य- ). $V_1$ B $Dn_{1.n8}$ $D_2$ -भवोत्तम ( for °भव ). —$^{d}$) $V_1$ चैवं; $D_2$ नैवं; $D_{4-7}$ वै न ( for चैव ).

12 $^{b}$) $V_1$ शुभाः; $D_{1.2}$ स्थिताः; $D_{4-9}$ तथा ( for युताः ). —$^{d}$) $V_1$ B Dn उपयांति समीपतः; $D_{4-9}$ उपासंति ( $D_4$ °ते ) समीपतः.

13 $^{c}$) $B_5$ $D_{6.7.9}$ भगवन् ( for प्रभवन् ).

14 $V_1$ reads $14^{ab}$ twice. —$^{c}$) $B_1$ $Dn_3$ [ए]ता ( for [ए]व ).

15 $^{b}$) $D_1$ विभो; $D_2$ प्रभो ( for नदी ).

16 $^{a}$) $D_{4-9}$ वितस्ता च विपाशा च. —$^{d}$) $V_1$ B Dn $D_{2.9}$ गौतमी ( for गोमती ).

17 $^{b}$) $B_{4.5}$ $Dn_{3.n8}$ $D_2$ -संभृताः $D_7$ -संस्तृता ( for -संवृता ). —$^{d}$) $D_{4.5}$ तस्माद्गंगा ( for गङ्गा सर्व- ).

18 $D_4$ om. ( hapl. ) 18–19. —$^{c}$) $V_1$ $B_{2-5}$ Dn अथ ( for इव ). —$^{d}$) $V_1$ $B_{1.4.5}$ $Dn_{1.n2}$ $D_{5-9}$ तथा ( for तदा ).

19 $D_4$ om. 19 ( cf. v. l. 18 ). —$^{d}$) $Dn_{1.n3}$ गंगाद्याः सरितस्तथा.

20 Before 20, some MSS. ins. उमोवाच. —$^{ab}$) $V_1$ B Dn प्रश्नो दत्तः ( by transp. ); Bom. ed. प्रोक्तः प्रश्नः. $Dn_2$ -संचितः; $D_4$ -संमतः; $D_{5-9}$ -संहितः ( for -संश्रितः ). —$^{c}$) $D_5$ ननु ( for तं तु ). —$^{d}$) $D_{4-9}$ शंकरं ( for °रे ).

21 $^{b}$) $Dn_2$ किंचन ( for कस्यचित् ). —$^{d}$) $D_1$ वरयामि ( for मान° ). $D_{4.5}$ तेन चोपनयाम्यहं.

22 $V_1$ B Dn $D_{4-9}$ om. the ref. —$^{b}$) $D_{1.2}$ पुण्याः ( for पृष्टाः ). —$^{d}$) $B_8$ -पृच्छ; $B_{4.5}$ -गृह्य ( for -पूज्य ). *Bom. ed.* च ( for ताम् ).

23 $^{a}$) $D_{8.9}$ युक्ता ( for स्फीता ). —$^{d}$) $D_1$ शुभां ( for शिवाम् ). $V_1$ $B_{2.4.5}$ Dn पुण्या पा( $Dn_2$ °ण्यपा )-पभयापहा; $B_{1.8}$ पुण्यां पापभयापहां; $D_{1.2}$ पुण्या पापापहारिणी.

24 $^{a}$) $B_2$ नियम- ( for विनय- ). $B_1$ -संपन्नां. —$^{b}$) $V_1$ $B_{2-5}$ Dn -धर्म- ( for -ज्ञान- ). $B_1$ सर्वधर्मविशारदां. —$^{c}$) $D_5$ सर्व- ( for बहु- ). $D_4$ -पुण्यौघा; $D_8$ -पुण्याढ्या ( for -बुद्ध्याढ्या ).

25 Before 25, *$B_8$ $D_{1.2}$* ins. गङ्गोवाच. —$^{a}$) $V_1$

प्रभवन्पृच्छते यो हि संमानयति वा पुनः ।
नूनं जनमदुष्टात्मा पण्डिताख्यां स गच्छति ॥ २६
ज्ञानविज्ञानसंपन्नानूहापोहविशारदान् ।
प्रवक्तॄन्पृच्छते योऽन्यान्स वै ना पदमर्च्छति ॥ २७
अन्यथा बहुबुद्ध्याढ्यो वाक्यं वदति संसदि ।
अन्यथैव ह्यहंमानी दुर्बलं वदते वचः ॥ २८
दिव्यज्ञाने दिवि श्रेष्ठे दिव्यपुण्ये सदोत्थिते ।
त्वमेवार्हसि नो देवि स्त्रीधर्ममनुशासितुम् ॥ २९

भीष्म उवाच ।

ततः साराधिता देवी गङ्गया बहुभिर्गुणैः ।
प्राह सर्वमशेषेण स्त्रीधर्मं सुरसुन्दरी ॥ ३०
स्त्रीधर्मो मां प्रति यथा प्रतिभाति यथाविधि ।
तमहं कीर्तयिष्यामि तथैव प्रथितो भवेत् ॥ ३१
स्त्रीधर्मः पूर्व एवायं विवाहे बन्धुभिः कृतः ।
सहधर्मचरी भर्तुर्भवत्यग्निसमीपतः ॥ ३२
सुस्वभावा सुवचना सुवृत्ता सुखदर्शना ।
अनन्यचित्ता सुमुखी भर्तुः सा धर्मचारिणी ॥ ३३
सा भवेद्धर्मपरमा सा भवेद्धर्मभागिनी ।
देववत्सततं साध्वी या भर्तारं प्रपश्यति ॥ ३४
शुश्रूषां परिचारं च देववद्या करोति च ।
नान्यभावा ह्यविमनाः सुव्रता सुखदर्शना ॥ ३५ C. 13. 67 B. 13. 14 K. subst M. subst
पुत्रवक्त्रमिवाभीक्ष्णं भर्तुर्वदनमीक्षते ।

B Dn धन्यास्म्यनुगृहीतास्मि. — $^{b}$) V1 B1.2.4.5 Dn °परायणे. — $^{c}$) B3 °जगन्मातर्; D4-9 °न्माता (for °न्मान्या).

26 $^{a}$) B1.4.5 भगवन्; D4-9 प्रभावं (for प्रभवन्). — $^{c}$) Dn2 नूनमसत्यधर्मात्मा; D1 न्यूनं जनमदात्मा; D4.5.8 नूनं जन्मनि तृप्तात्मा (D5 तृप्तास्ते; D8 दुष्टात्मा); D6.7.9 न्यूनं जन्मनि तृप्तात्मा. — $^{d}$) B3 गमिष्यति (for स गच्छति).

27 D1 om. (hapl.) 27. — $^{c}$) B3 प्रवक्तुं; D6 प्रभवं; D7-9 प्रब्रुवन् (for प्रवक्तॄन्). — $^{d}$) B1 Dn2 D6.7.8 ऋच्छति; Dn1 इच्छति (for अर्च्छति).

28 $^{b}$) D6 सर्ववित् (for संसदि). — $^{c}$) V1 B Dn [अ]हंवादी (for °मानी).

29 $^{a}$) B5 विधिश्रेष्ठे; D2.6 दिव्यपुण्ये (for दिवि श्रेष्ठे). D8.9 दिव्यज्ञानोदधिश्रेष्ठे. — $^{b}$) V1 B1 Dn1.n3 सह (for सदा). B2-5 D3.8 दिव्यश्रेष्ठे सहोत्थिते; Dn2 दिव्यैः पुण्यैः सहो°. — $^{d}$) B2.4 Dn1.n3 स्त्रीधर्मान्. B1.3.5 Dn2 D4-9 स्त्रीधर्माननुभाषितुं; D1.2 स्त्रीधर्मं सुरसुंदरी (=30$^{d}$).

30 V1 B Dn om. the ref. — $^{a}$) Dn1 संराधिता (for सारा°). — $^{c}$) D5-9 धर्मम् (for सर्वम्).

31 Dn1 om. 31. Before 31, some MSS. ins. उमोवाच. — $^{d}$) V1 B Dn D4-9 तथैव प्रथिता भव.

32 $^{a}$) D1.5-9 पूर्वम्; D4 सर्वम् (for पूर्वं). — $^{d}$) D6-9 भवेद् (for भवति).

33 $^{a}$) D1.2 अविमनाः; D4-8 अभिमता (for सुवचना). — $^{b}$) D1.2.4.5 सुचित्ता (for सुवृत्ता). D8-9 सुचित्ता समदर्शना. — Dn2 om. 33$^{cd}$. 33$^{cd}$=37$^{cd}$. — $^{d}$) D1.2 °भागिनी (for °चारिणी). — V1 B Dn3 ins. after 33: Dn1 D8 after the first occurrenc of 34:

630* दंपत्योरेष वै धर्मः सहधर्मकृतः शुभः ।

34 V1 repeats 34$^{ab}$, and B Dn1.n3 D8 repeat and Dn2 D1.2 4-7.9 read 34-35 after 37$^{ab}$. — $^{a}$) V1 B1 (both second time).2 (both times).3-5 Dn1 (all second time).n2.n3 (second time) D1.2.4-7.8 (second time).9 या (for सा). V1 (first time) भर्तृशुश्रूषणरता. — $^{b}$) V1 B Dn1 (all second time).n2.n3 (second time) D1.2.4-7.8 (second time).9 नारी धर्म(D4 भर्तृ)समव्रता. — $^{c}$) B3 (second time) देवं च (for देववत्). — $^{d}$) D4.5 अनु- (hypermetric) (for प्र-). B Dn1 (all second time).n2.n3 (second time) D1.2.6.7.8 (second time).9 भर्तारमनुपश्यति. — After the first occurrence of 34, Dn1 D8 ins. 630*.

35 For the repetition in B Dn1.n3 D8 and the sequence in Dn2 D1.2.4-7 9, cf. v. l. 34. — $^{a}$) B1.2 (both second time).3 (both times).4 (second time).5 (both times) Dn2.n3 (second time) D1.2.4-7.8 (second time).9 परिचर्यां (for °चारं). — $^{b}$) D8 (second time) प्रकुर्वती (for करोति च). B Dn1 (all second time).n2.n3 (second time) D1.2.4 देवतुल्यं प्रकुर्वतो; D5-7.9 °वत्तां (D6 °त्तं) प्रकुर्वते (D9

38 या साध्वी नियताचारा सा भवेद्धर्मचारिणी ॥ ३६
शुश्रूषां दंपतिधर्मं वै सहधर्मकृतं शुभम् ।
अनन्यचित्ता सुमुखी भर्तुः सा धर्मचारिणी ॥ ३७
परुषाण्यपि चोक्ता या दृष्टा वा क्रूरचक्षुषा ।
सुप्रसन्नमुखी भर्तुर्या नारी सा पतिव्रता ॥ ३८
न चन्द्रसूर्यौ न तरुं पुंनाम्नो या निरीक्षते ।
भर्तृवर्जं वरारोहा सा भवेद्धर्मचारिणी ॥ ३९
दरिद्रं व्याधितं दीनमध्वना परिकर्शितम् ।
पतिं पुत्रमिवोपास्ते सा नारी धर्मभागिनी ॥ ४०
या नारी प्रयता दक्षा या नारी पुत्रिणी भवेत् ।
पतिप्रिया पतिप्राणा सा नारी धर्मभागिनी ॥ ४१
शुश्रूषां परिचर्यां च करोत्यविमनाः सदा ।
सुप्रतीता विनीता च सा नारी धर्मभागिनी ॥ ४२
न कामेषु न भोगेषु नैश्वर्ये न सुखे तथा ।
स्पृहा यस्या यथा पत्यौ सा नारी धर्मभागिनी ॥ ४३
कल्योत्थानरता नित्यं गुरुशुश्रूषणे रता ।
सुसंमृष्टक्षया चैव गोशकृत्कृतलेपना ॥ ४४
अग्निकार्यपरा नित्यं सदा पुष्पबलिप्रदा ।
देवतातिथिभृत्यानां निरुप्य पतिना सह ॥ ४५
शेषान्नमुपभुञ्जाना यथान्यायं यथाविधि ।
तुष्टपुष्टजना नित्यं नारी धर्मेण युज्यते ॥ ४६
श्वश्रूश्वशुरयोः पादौ तोषयन्ती गुणान्विता ।
मातापितृपरा नित्यं या नारी सा तपोधना ॥ ४७
ब्राह्मणान्दुर्बलानाथान्दीनान्धकृपणांस्तथा ।

°ती ). — c ) B Dn1 ( all second time ). n2. n3 ( second time ) D1. 2. 4–7. 8 ( second time ). 9 वइया: B1. 2. 4. 5 °इय )भावेन सुमनाः. — d ) D1. 2. 4–7. 8 ( second time ). 9 सुव्रता सुमहाहिता.

36 b ) B1 D2 ईक्षती ( for ईक्षते ). D1 भर्तृवचनमीक्षती ( sic ). — c ) Dn1 D4–9 या साध्वी नियता नित्यं ( Dn1 °ताहारा ). — d ) D4–9 भर्तुः सा ( for सा भवेद् ).

37 b ) Dn1. n3 D2. 4. 5 सहधर्मं. B1 -भूतं ( for -कृतं ). — After 37ab, V1 repeats 34ab, and B Dn1. n3 D8 repeat and D1. 2. 4–7. 9 read 34–35. V1 om. 37c–38d. 37cd = 33cd. — d ) Dn2 सा नारी ( for भर्तुः सा ). D1. 2 -भागिनी ( for -चारिणी ).

38 V1 om. 38 ( cf. v. l. 37 ). — b ) B1 Dn2. n3 क्रुद्धेन; B2–5 Dn1 D2 दुष्टेन ( for वा क्रूर- ). D5–9 हृष्यते मनसा सह. — c ) D1. 8. 9 -मुखा ( for -मुखी ).

39 a ) D2. 4–9 तरून् ( for तरुं ). — b ) V1 B Dn D2 पुंनाम्ना. D6 निरीक्ष्यति; D8. 9 °क्षति ( for °क्षते ). D4. 5 पुंनाम्ना या निरीक्ष्यति. — c ) Dn2 भर्तृपूज्या ( for °वर्जं ). — d ) V1 Dn D1. 2. 4–9 -भागिनी ( for -चारिणी ).

40 b ) Some MSS. -कर्षितं. — d ) D4–9 -चारिणी ( for -भागिनी ).

41 B3 om. ( hapl. ) 41. — c ) D1. 4–9 -व्रता ( for -प्रिया ). — d ) D4–9 -चारिणी ( for -भागिनी ).

42 D1 om. ( hapl. ) 42–43. — b ) Dn1 D9 तदा ( for सदा ). — c ) D4–9 क्ष( D5 द्य )विमनाः ( for विनीता च ). — d ) D4–7 -चारिणी ( for -भागिनी ).

43 D1 om. 43 ( cf. v. l. 42 ). — c ) D4–9 भर्तुः ( for पत्यौ ). — d ) D4. 5. 7 -चारिणी ( for -भागिनी ).

44 a ) D1. 7 कालोत्थान-. B5 Dn1. n2 -रतिर्; D4–9 -परा ( for -रता ). — b ) V1 B Dn गृह- ( for गुरु- ). — c ) D5 -गृहा ( for -क्षया ). ❀ Cn: सुसंमृष्टक्षया शोधितगृहा । ❀

45 a ) D4. 5 -करी ( for -परा ). — b ) B1 -बलिप्रिया ( for °प्रदा ). — c ) D4–9 -भूतानां ( for -भृत्यानां ). — d ) V1 B1. 3–5 Dn निर्वाप्य ( for निरुप्य ). D1 बलिना ( for पतिना ).

46 a ) B1–4 Dn2. n3 D8 -भुंजाना ( for -भुञ्जाना ). D4. 5 शेषान्नामृतभुंजाना ( sic ). — c ) D6. 7. 9 पुष्ट-; D8 हृष्ट- ( for तुष्ट- ). D1 -भृत्य- ( for -पुष्ट- ). — D2 om. ( hapl. ) 46d–47c.

47 D2 om 47abc ( cf. v. l. 46 ). — a ) V1 B Dn D4–9 पादांस ( for पादौ ). — b ) D8 जोषयंती ( for तोष° ). D1 पतिव्रता; D4. 5. 7–9 यतव्रता ( for गुणान्विता ). — d ) D4. 5. 7–9 पतिव्रता ( for तपोधना ).

48 d ) D4 या ( for सा ).

49 a ) D5. 8 नारी ( for नित्यं ). — b ) D5 दुस्तरं ( for दुश्चरं ). ❀ Cn: लघुसत्त्वया शीघ्रमर्यादावबोधिन्या

बिभर्त्यन्नेन या नारी सा पतिव्रतभागिनी ॥ ४८
व्रतं चरति या नित्यं दुश्चरं लघुसत्त्वया ।
पतिचित्ता पतिहिता सा पतिव्रतभागिनी ॥ ४९
पुण्यमेतत्तपश्चैव स्वर्गश्चैष सनातनः ।
या नारी भर्तृपरमा भवेद्भर्तृव्रता शिवा ॥ ५०
पतिर्हि देवो नारीणां पतिर्बन्धुः पतिर्गतिः ।
पत्या समा गतिर्नास्ति दैवतं वा यथा पतिः ॥ ५१
पतिप्रसादः स्वर्गो वा तुल्यो नार्या न वा भवेत् ।
अहं स्वर्गं न हीच्छेयं त्वय्यप्रीते महेश्वर ॥ ५२
यद्यकार्यमधर्मं वा यदि वा प्राणनाशनम् ।
पतिर्ब्रूयाद्दरिद्रो वा व्याधितो वा कथंचन ॥ ५३
आपन्नो रिपुसंस्थो वा ब्रह्मशापार्दितोऽपि वा ।
आपद्धर्माननुप्रेक्ष्य तत्कार्यमविशङ्कया ॥ ५४
एष देव मया प्रोक्तः स्त्रीधर्मो वचनात्तव ।
या त्वेवंभाविनी नारी सा भवेद्धर्मभागिनी ॥ ५५

भीष्म उवाच ।

इत्युक्तः स तु देवेशः प्रतिपूज्य गिरेः सुताम् ।
लोकान्विसर्जयामास सर्वैरनुचरैः सह ॥ ५६
ततो ययुर्भूतगणाः सरितश्च यथागतम् ।
गन्धर्वाप्सरसश्चैव प्रणम्य शिरसा भवम् ॥ ५७

इति श्रीमहाभारते अनुशासनपर्वणि चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥

## १३५

वैशंपायन उवाच ।

श्रुत्वा धर्मानशेषेण पावनानि च सर्वशः ।
युधिष्ठिरः शांतनवं पुनरेवाभ्यभाषत ॥ १
किमेकं दैवतं लोके किं वाप्येकं परायणम् । C. 13 B. 13 K. 13 M. 1

बुद्ध्या । ꕥ —$^{c}$) $D_{1.2}$ पतिपरा ( for °हिता ). $D_{4.5.7-9}$ पतिचिंतापरा सापि. —$^{d}$) $D_{4.5.7-9}$ पतिव्रतविभागिनी.

50 $^{a}$) $D_{5}$ एव ( for एतत् ). $V_{1}$ B $Dn_{3}$ [ए]तत् ( for [ए]व ). —$^{b}$) $D_{4-7.9}$ धर्मश् ( for स्वर्गश् ). —$^{d}$) $D_{6.8.9}$ भर्तृपरा ( for °व्रता ). $V_{1}$ B Dn सती ( for शिवा ).

51 $^{c}$) $D_{4-9}$ गतिः समा ( by transp. ).

52 $^{a}$) $D_{4-9}$ -प्रसादात् ( for °दः ). —$^{d}$) $Dn_{3}$ $D_{4}$ महेश्वरे. $D_{8.9}$ अद्य प्रीते महेश्वरे.

53 $^{a}$) $B_{1}$ यत्र ( for यदि ). $D_{3.4-9}$ यदि कार्यमकार्यं वा. —$^{c}$) $D_{6}$ भूयो ( for ब्रूयाद् ). —$^{d}$) $B_{1}$ कदाचन ( for कथंचन ).

55 $^{a}$) $D_{5-7.9}$ एव ( for देव ). —$^{b}$) $D_{1.2}$ स्त्रीधर्मो वदतां वर. —$^{d}$) $V_{1}$ B Dn पतिव्रत- ( for भवेद्धर्म- ).

56 $B_{2}$ ▪ नारद ; $D_{1-9}$ om. ( for भीष्म ): —$^{b}$) $B_{1-4}$ $Dn_{3}$ प्रतिगृह्य ( for °पूज्य ). —$^{d}$) $V_{1}$ B Dn वृतान् ( for सह ).

Colophon. — *Parvan name :* $B_{1-3}$ $D_{1}$ शांतिपर्व. *Sub-parvan :* $V_{1}$ B Dn $D_{1.2.5}$ दानधर्म. — *Adhy. name :* $V_{1}$ $B_{1.2.4.6}$ Dn $D_{1.2}$ उमामहेश्वरसंवादः ; $D_{4-9}$ उमामहेश्वरसंवादे स्त्रीधर्मः. — *Adhy. no* ( figures, words or both ) : $V_{1}$ 144 ; $Dn_{1}$ 143. — *Śloka no.* : $Dn_{1}$ 61 ; $Dn_{2}$ 58. — After this adhy., $V_{1}$ B Dn $D_{1.2.4-9}$ ins. a passage given in App. I ( No. 16 ); while $D_{10}$ S ins. a passage given in App. I ( No. 17 ) followed by adhy. 151.

## 135

☞ This adhy. is missing in $D_{3}$ ( cf. v. l. 13. 82. 37 ).

$B_{1.5}$ ins. before the ref. : $V_{1}$ $B_{2-4}$ $Dn_{1}$ $D_{4.10}$ T G after the ref. :

ॐ नमो भगवते वासुदेवाय ।
ॐ नमः सर्वलोकगुरवे ।
ॐ नमः सर्वलोकपित्रे ।
ॐ नमः सर्वलोकपितामहाय ।

या साध्वी नियताचारा सा भवेद्धर्मचारिणी ॥ ३६
श्रुत्वा दंपतिधर्मं वै सहधर्मकृतं शुभम् ।
अनन्यचित्ता सुमुखी भर्तुः सा धर्मचारिणी ॥ ३७
परुषाण्यपि चोक्ता या दृष्टा वा क्रूरचक्षुषा ।
सुप्रसन्नमुखी भर्तुर्या नारी सा पतिव्रता ॥ ३८
न चन्द्रसूर्यौ न तरुं पुंनाम्नो या निरीक्षते ।
भर्तृवर्जं वरारोहा सा भवेद्धर्मचारिणी ॥ ३९
दरिद्रं व्याधितं दीनमध्वना परिकर्शितम् ।
पतिं पुत्रमिवोपास्ते सा नारी धर्मभागिनी ॥ ४०
या नारी प्रयता दक्षा या नारी पुत्रिणी भवेत् ।
पतिप्रिया पतिप्राणा सा नारी धर्मभागिनी ॥ ४१
शुश्रूषां परिचर्यां च करोत्यविमनाः सदा ।
सुप्रतीता विनीता च सा नारी धर्मभागिनी ॥ ४२
न कामेषु न भोगेषु नैश्वर्ये न सुखे तथा ।
स्पृहा यस्या यथा पत्यौ सा नारी धर्मभागिनी ॥ ४३
कल्योत्थानरता नित्यं गुरुशुश्रूषणे रता ।
सुसंमृष्टक्षया चैव गोशकृत्कृतलेपना ॥ ४४
अग्निकार्यपरा नित्यं सदा पुष्पबलिप्रदा ।
देवतातिथिभृत्यानां निरुप्य पतिना सह ॥ ४५
शेषान्नमुपभुञ्जाना यथान्यायं यथाविधि ।
तुष्टपुष्टजना नित्यं नारी धर्मेण युज्यते ॥ ४६
श्वश्रूश्वशुरयोः पादौ तोषयन्ती गुणान्विता ।
मातापितृपरा नित्यं या नारी सा तपोधना ॥ ४७
ब्राह्मणान्दुर्बलानाथान्दीनान्धकृपणांस्तथा ।

°ती). —$^{c}$) B $Dn_1$ (all second time). $n_2.n_3$ (second time) $D_{1.2.4-7.8}$ (second time). $_9$ वश्या' $B_{1.2.4.5}$ °श्य )भावेन सुमनाः. —$^{d}$) $D_{1.2.4-7.8}$ (second time). $_9$ सुव्रता सुमहाहिता.

36 $^{b}$) $B_1$ $D_2$ ईक्षती (for ईक्षते). $D_1$ भर्तृवचनमीक्षती (sic). —$^{c}$) $Dn_1$ $D_{4-9}$ या साध्वी नियता नित्यं ($Dn_1$ °ताहारा). —$^{d}$) $D_{4-9}$ भर्तुः सा (for सा भवेद्).

37 $^{b}$) $Dn_{1.n3}$ $D_{2.4.6}$ सहधर्मं. $B_4$ -भूतं (for -कृतं). — After $37^{ab}$, $V_1$ repeats $34^{ab}$, and B $Dn_{1.n3}$ $D_8$ repeat and $D_{1.2.4-7.9}$ read 34–35. $V_1$ om. $37^{c}$–$38^{d}$. $37^{cd} = 33^{cd}$. —$^{d}$) $Dn_2$ सा नारी (for भर्तुः सा). $D_{1.2}$ -भागिनी (for -चारिणी).

38 $V_1$ om. 38 (cf. v. l. 37). —$^{b}$) $B_1$ $Dn_{2.n3}$ क्रुद्धेन; $B_{2-5}$ $Dn_1$ $D_2$ दुष्टेन (for वा क्रूर-). $D_{5-9}$ हृष्यते मनसा सह. —$^{c}$) $D_{4.8.9}$ -मुखा (for -मुखी).

39 $^{a}$) $D_{2.4-9}$ तरून् (for तरुं). —$^{b}$) $V_1$ B Dn $D_2$ पुंनाम्ना. $D_6$ निरीक्ष्यति; $D_{8.9}$ °क्षति (for °क्षते). $D_{4.5}$ पुंनाम्ना या निरीक्ष्यति. —$^{c}$) $Dn_2$ भर्तृपूज्या (for °वर्जं). —$^{d}$) $V_1$ Dn $D_{1.2.4-9}$ -भागिनी (for -चारिणी).

40 $^{b}$) Some MSS. -कर्षितं. —$^{d}$) $D_{4-9}$ -चारिणी (for -भागिनी).

41 $B_3$ om. (hapl.) 41. —$^{c}$) $D_{1.4-9}$ -व्रता (for -प्रिया). —$^{d}$) $D_{4-9}$ -चारिणी (for -भागिनी).

42 $D_1$ om. (hapl.) 42–43. —$^{b}$) $Dn_1$ $D_9$ तदा (for सदा). —$^{c}$) $D_{4-9}$ अ( $D_5$ ह्य )विमनाः (for विनीता च). —$^{d}$) $D_{4-7}$ -चारिणी (for -भागिनी).

43 $D_1$ om. 43 (cf. v. l. 42). —$^{c}$) $D_{4-9}$ भर्तुः (for पत्यौ). —$^{d}$) $D_{4.5.7}$ -चारिणी (for -भागिनी).

44 $^{a}$) $D_{1.7}$ कालोत्थान-. $B_6$ $Dn_{1.n2}$ -रतिर्; $D_{4-9}$ -परा (for -रता). —$^{b}$) $V_1$ B Dn गृह- (for गुरु-). —$^{c}$) $D_5$ -गृहा (for -क्षया). ❀ Cn: सुसंमृष्टक्षया शोधितगृहा । ❀

45 $^{a}$) $D_{4.6}$ -करी (for -परा). —$^{b}$) $B_1$ -बलिप्रिया (for °प्रदा). —$^{c}$) $D_{4-9}$ -भूतानां (for -भृत्यानां). —$^{d}$) $V_1$ $B_{1.3-5}$ Dn निर्वाप्य (for निरुप्य). $D_1$ बलिना (for पतिना).

46 $^{a}$) $B_{1-4}$ $Dn_{2.n3}$ $D_8$ -युंजाना (for -भुञ्जाना). $D_{4.5}$ शेषान्नामृतभुंजाना (sic). —$^{c}$) $D_{6.7.9}$ पुष्ट-; $D_8$ हृष्ट- (for तुष्ट-). $D_1$ -भृत्य- (for -पुष्ट-). — $D_2$ om. (hapl.) $46^{d}$–$47^{c}$.

47 $D_2$ om $47^{abc}$ (cf. v. l. 46). —$^{a}$) $V_1$ B Dn $D_{4-9}$ पादांस (for पादौ). —$^{b}$) $D_6$ जोषयंती (for तोष°). $D_1$ पतिव्रता; $D_{4.5.7-9}$ यतव्रता (for गुणान्विता). —$^{d}$) $D_{4.5.7-9}$ पतिव्रता (for तपोधना).

48 $^{d}$) $D_4$ या (for सा).

49 $^{a}$) $D_{5.8}$ नारी (for नित्यं). —$^{b}$) $D_5$ दुस्तरं (for दुश्चरं). ❀ Cn: लघुसत्त्वया शीघ्रमर्यादावबोधिन्या

बिभर्त्यन्नेन या नारी सा पतिव्रतभागिनी ॥ ४८
व्रतं चरति या नित्यं दुश्चरं लघुसत्त्वया ।
पतिच्चित्ता पतिहिता सा पतिव्रतभागिनी ॥ ४९
पुण्यमेतत्तपश्चैव स्वर्गश्चैष सनातनः ।
या नारी भर्तृपरमा भवेद्भर्तृव्रता शिवा ॥ ५०
पतिर्हि देवो नारीणां पतिर्बन्धुः पतिर्गतिः ।
पत्या समा गतिर्नास्ति दैवतं वा यथा पतिः ॥ ५१
पतिप्रसादः स्वर्गो वा तुल्यो नार्या न वा भवेत् ।
अहं स्वर्गं न हीच्छेयं त्वय्यप्रीते महेश्वर ॥ ५२
यद्यकार्यमधर्मं वा यदि वा प्राणनाशनम् ।
पतिर्ब्रूयाद्दरिद्रो वा व्याधितो वा कथंचन ॥ ५३
आपन्नो रिपुसंस्थो वा ब्रह्मशापार्दितोऽपि वा ।
आपद्धर्माननुप्रेक्ष्य तत्कार्यमविशङ्कया ॥ ५४
एष देव मया प्रोक्तः स्त्रीधर्मो वचनात्तव ।
या त्वेवंभाविनी नारी सा भवेद्धर्मभागिनी ॥ ५५

भीष्म उवाच ।

इत्युक्तः स तु देवेशः प्रतिपूज्य गिरेः सुताम् ।
लोकान्विसर्जयामास सर्वैरनुचरैः सह ॥ ५६
ततो ययुर्भूतगणाः सरितश्च यथागतम् ।
गन्धर्वाप्सरसश्चैव प्रणम्य शिरसा भवम् ॥ ५७

इति श्रीमहाभारते अनुशासनपर्वणि चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥

## १३५

वैशंपायन उवाच ।

श्रुत्वा धर्मानशेषेण पावनानि च सर्वशः ।
युधिष्ठिरः शांतनवं पुनरेवाभ्यभाषत ॥ १
किमेकं दैवतं लोके किं वाप्येकं परायणम् ।

C. B. K. M.

---

तुल्या । ❀ —ᶜ ) D1. 2 पतिपरा ( for °हिता ). D4. 5. 7–9 पतिचिंतापरा सापि. —ᵈ ) D4. 5. 7–9 पतिव्रताविभागिनी.

50 ᵃ ) D5 एव ( for एतत् ). V1 B Dn3 [ए]तत् ( for [ए]व ). —ᵇ ) D4–7. 9 धर्मश् ( for स्वर्गश् ). —ᵈ ) D5. 8. 9 भर्तृपरा ( for °व्रता ). V1 B Dn सती ( for शिवा ).

51 ᶜ ) D4–9 गतिः समा ( by transp. ).

52 ᵃ ) D4–9 -प्रसादात् ( for °दः ). —ᵈ ) Dn3 D4 महेश्वरे. D8. 9 अद्य प्रीते महेश्वरे.

53 ᵃ ) B1 यत्र ( for यदि ). D2. 4–9 यदि कार्यमकार्यं वा. —ᶜ ) D6 भूयो ( for ब्रूयाद् ). —ᵈ ) B1 कदाचन ( for कथंचन ).

55 ᵃ ) D5–7. 9 एव ( for देव ). —ᵇ ) D1. 2 स्त्रीधर्मो वदतां वर. —ᵈ ) V1 B Dn पतिव्रत- ( for भवेद्धर्म- ).

56 B2. 3 नारद ; D1–9 om. ( for भीष्म ): —ᵇ ) B1–4 Dn3 प्रतिगृह्य ( for °पूज्य ). —ᵈ ) V1 B Dn वृतान् ( for सह ).

Colophon. — *Parvan name :* B1–3 D1 शांतिपर्व. *Sub-parvan :* V1 B Dn D1. 2. 5 दानधर्म. — *Adhy. name :* V1 B1. 2. 4. 5 Dn D1. 2 उमामहेश्वरसंवादः ; D4–9 उमामहेश्वरसंवादे स्त्रीधर्मः. — *Adhy. no* ( figures, words or both ) : V1 144 ; Dn1 143. — *Śloka no. :* Dn1 61 ; Dn2 58. — After this adhy., V1 B Dn D1. 2. 4–9 ins. a passage given in App. I ( No. 16 ) ; while D10 S ins. a passage given in App. I ( No. 17 ) followed by adhy. 151.

## 135

☞ This adhy. is missing in D3 ( cf. v. l. 13. 82. 37 ).

B1. 5 ins. before the ref. : V1 B2–4 Dn1 D4. 10 T G after the ref. :

ॐ नमो भगवते वासुदेवाय ।
ॐ नमः सर्वलोकगुरवे ।
ॐ नमः सर्वलोकपित्रे ।
ॐ नमः सर्वलोकपितामहाय ।

स्तुवन्तः कं कमर्चन्तः प्राप्नुयुर्मानवाः शुभम् ॥ २
को धर्मः सर्वधर्माणां भवतः परमो मतः ।
किं जपन्मुच्यते जन्तुर्जन्मसंसारबन्धनात् ॥ ३

भीष्म उवाच ।

जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम् ।
स्तुवन्नामसहस्रेण पुरुषः सततोत्थितः ॥ ४
तमेव चार्चयन्नित्यं भक्त्या पुरुषमव्ययम् ।
ध्यायन्स्तुवन्नमस्यंश्च यजमानस्तमेव च ॥ ५
अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम् ।
लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत् ॥ ६
ब्रह्मण्यं सर्वधर्मज्ञं लोकानां कीर्तिवर्धनम् ।
लोकनाथं महद्भूतं सर्वभूतभवोद्भवम् ॥ ७
एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः ।
यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा ॥ ८
परमं यो महत्तेजः परमं यो महत्तपः ।
परमं यो महद्ब्रह्म परमं यः परायणम् ॥ ९
पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम् ।
दैवतं देवतानां च भूतानां योऽव्ययः पिता ॥ १०

---

ॐ नमः सर्वलोकप्रपितामहाय ।
ॐ नमः सर्वलोकप्रधानाय ।
ॐ नमः सर्वलोकविशिष्टाय ।
ॐ नमः सर्वलोकनमस्कृताय ।
ॐ नमः सर्वलोकेश्वराय ।
ॐ नमः सर्वलोकसुखाय ।
ॐ नमः सर्वलोकसुखप्रदाय ।
ॐ नमः सर्वलोककर्त्रे ।
ॐ नमः सर्वलोकहर्त्रे ।
ॐ नमः सर्वलोकभर्त्रे ।
ॐ नमः सर्वलोकनिधये ।
ॐ नमः सर्वलोकहिताय ।
ॐ नमः सर्वलोकहितकराय ।
ॐ नमः सर्वलोकोद्भवाय ।
ॐ नमः सर्वलोकोद्भवकराय ।
ॐ नमो विष्णवे प्रभविष्णवे नमः

[ Before नमः, MSS. promiscuously ins. ॐ. Insertions or omissions of ॐ are, therefore, ignored. — $V_1$ om. lines 3, 5, 8, 10, 13, 14 and 17–19. After line 16, $V_1$ reads सर्वलोकोत्तराय । सर्वलोकोत्तरकराय । — $B_1$ $Dn_1$ om. lines 3, 5, 7, 8, 10, 13, 14 and 17. — $B_3$ om. lines 8 and 11, and transp. lines 13 and 14. — $B_4$ om. lines 19 and 20, and transp lines 7 and 8 and 13 and 14. — $B_6$ om. lines 13 and 19, and transp. lines 7 and 8. — $D_4$ om. lines 3, 5, 8, 10, 13, 14, 17 and 18. — $D_{10}$ om lines 1, 8, 10 and 19, reads line 7 after line 9, and transp. lines 13 and 14. — $T_1$ om. lines 5, 7, 8, 13–15 and 17–19, and reads line 6 followed by line 16 after line 9. After line 1, $T_1$ G read ॐ नमो भगवते पुरुषोत्तमाय । — $G_1$ om. lines 8, 10, 16 and 18, reads line 7 after line 9, and transp. lines 13 and 14. — $G_2$ om. lines 5, 8, 10, 17 and 18, reads line 7 after line 9, and reads after 16 : नमः सर्वलोकहितकारणाय । — $G_3$ om. lines 8, 10, 13, 17 and 18, reads नमः सर्वहितकराय । after line 16, and reads line 20 twice. — $G_4$ om. lines 8, 10, 17 and 18, transp. lines 13 and 14, and reads as in $G_2$ after line 16. ]

1 $^{a}$) $T_{1.3}$ $G_2$ धर्माणि (for धर्मान्). $D_5$ विशेषेण (for अशे°). — $^{d}$) $T_1$ [अ]प्यभाषत (for [अ]भ्य°).

2 $M_4$ om. 2. — $^{a}$) $V_1$ B $Dn_{2.n3}$ कं स्तुवंतः (by transp.).

3 $^{b}$) $D_1$ भवता (for °तः). $B_6$ धर्मोधिकतमो मतः. — $^{c}$) $D_1$ किं जपन्पुरुषो मुच्येज्.

4 $D_1$ om. $4^{d}$.

5 $^{a}$) $V_1$ $B_{1.2.4}$ $Dn_3$ [अ]भ्यर्चयन्; $D_9$ चार्चयेन् (for °यन्).

7 $^{a}$) $D_1$ ब्रह्मण्यः सर्वधर्मज्ञो. — $^{d}$) $V_1$ -महोत्तरं (for -भवोद्भवम्).

8 $^{b}$) $D_4$ [ऽ]धिकतरो; $D_3$ ह्येकतमो (for ऽधिक°). — $^{c}$) $G_4$ यो (for यद्).

9 $Dn_3$ om. (hapl.) $9^{a}$. — $^{d}$) $M_1$ यत् (for यः).

10 $^{a}$) $D_3$ पवित्रोयं (for °त्रं यो). — $^{b}$) Some MSS. मंगळानां च मंगळं. — $^{c}$) Some MSS. दैवतानां

यतः सर्वाणि भूतानि भवन्त्यादियुगागमे ।
यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ॥ ११
तस्य लोकप्रधानस्य जगन्नाथस्य भूपते ।
विष्णोर्नामसहस्रं मे शृणु पापभयापहम् ॥ १२
यानि नामानि गौणानि विख्यातानि महात्मनः ।
ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये ॥ १३

* * * *

विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः ।
भूतकृद्भूतभृद्भावो भूतात्मा भूतभावनः ॥ १४
पूतात्मा परमात्मा च मुक्तानां परमा गतिः ।
अव्ययः पुरुषः साक्षी क्षेत्रज्ञोऽक्षर एव च ॥ १५
योगो योगविदां नेता प्रधानपुरुषेश्वरः ।
नारसिंहवपुः श्रीमान्केशवः पुरुषोत्तमः ॥ १६
सर्वः शर्वः शिवः स्थाणुर्भूतादिर्निधिरव्ययः । C. 13 B. 13 K. 17 M. 13

---

(for दे°). $Dn_3$ om.; $D_1$ यो (for च).

11 $^{c}$) Some MSS. प्रळयं.

12 $^{b}$) $D_5$ $G_2$ $M_4$ भूपतेः. — $^{c}$) $D_{1.2}$ वै (for मे).

13 $G_3$ om. $13^{ab}$. — $^{b}$) $D_{1.7}$ मुख्यानि च (for विख्यातानि). — $^{d}$) $D_{1.2.5}$ $T_3$ भूपते (for भूतये).

☞ See the note on 13. 17. 30, which is pertinent also in the context of the following Viṣṇusahasranāmastotra. There are two sahasranāmastotras of Viṣṇu in the *Nārada Pāñcarātra*, one in IV. 3 and the other in IV. 8, and there is a third in the *Garuḍamahāpurāṇa* 15. Since the days of Śaṁkarācārya who wrote a Com. (Cś) on it, the text of this stotra has remained practically unchanged. The MSS. and Cv, no doubt, give a few variants, but many of these are either due to scribal vagaries or are corrupt. For a study and analysis of the names in the stotra, see S. M. PARANJAPE, *Sāhityasaṁgraha* (in Marathi, Vol. I). See also S. N. TADPATRIKAR, *ABORI*, Vol. X, III–IV, p. 330.

14 Before 14, $B_1$ ins. ॐ वेदव्यासऋषिः । अनुष्टुप् छन्दः । श्रीकृष्णो देवता । श्रीविष्णोर्नामसहस्रपाठस्य पुरुषार्थचतुष्टयसिद्धये विनियोगः ।; $B_2$ (before 13). $_3$ (before $13^{cd}$) ॐ वेदव्यासऋषिः । अनुष्टुप् छन्दः । श्रीकृष्णपरमात्मा देवता । श्रीविष्णोः सहस्रनामपाठे विनियोगः ।; $D_5$

631* विष्णोर्नामसहस्रस्य वेदव्यासो महानृषिः ।
छन्दोऽनुष्टुप्तथा देवो भगवान्विश्वरूपधृक् ।

अमृतांशूद्भवो भानुरिति बीजम् । देवकीनन्दनः स्रष्टेति शक्तिः । शङ्खभृन्नन्दकी चक्रीति कीलकम् । शार्ङ्गधन्वा गदाधर इत्यस्त्रम् । रथाङ्गपाणिरक्षोभ्य इति कवचम् । उद्भवः क्षोभणो देव इति मन्त्रः । श्रीविष्णुप्रेरणया श्रीविष्णुप्रीत्यर्थं श्रीविष्णोर्दिव्यसहस्रनामस्तोत्रमंत्रजपं करिष्ये ।; $D_{6.8.9}$ श्रीवेदव्यासऋषिः । विश्वरूपः परमात्मा देवता । अनुष्टुप् छन्दः । देवकीनन्दनः स्रष्टा इति शक्तिः । अमृतांशूद्भवो भानुरिति बीजम् । श्रीविष्णोर्नामसहस्रस्य मोक्षार्थं ($D_6$ मोक्षस्यार्थे; $D_9$ मालार्थे) जपे विनियोगः ।; $D_7$ ॐ अस्य सहस्रनामस्तोत्रस्य वेदव्यासऋषिः । विश्वरूपः परमात्मा देवता । अनुष्टुप् छन्दः । विश्वं विष्णुरिति हृदयम् । देवकीनन्दनः स्रष्टेति शक्तिः । आत्मयोनिः स्वयंजात इति बीजम् । अमृतांशूद्भवो भानुरिति शिरः । ब्रह्मण्यो ब्रह्मकृद्ब्रह्मेति शिखा । निमिषोऽनिमिषः स्रग्वीति नेत्रे । सुवर्णबिन्दुरक्षोभ्य इति कवचम् । रथाङ्गपाणिरक्षोभ्य इत्यस्त्रम् । सर्वपापक्षयार्थं मोक्षाप्तये स्तवे विनियोगः ।; $D_{10}$ T G $M_{1-3}$

632* ऋषिर्नाम्नां सहस्रस्य वेदव्यासो महामुनिः ।
छन्दोऽनुष्टुप्तथा देवो भगवान्देवकीसुतः ।
अमृतांशूद्भवो बीजं शक्तिर्देवकीनन्दनः ।
त्रिसामा हृदयं तस्य शान्त्यर्थे विनियुज्यते ।

[(L. 1) $D_{10}$ विष्णोर् (for ऋषिर्). $T_1$ नाम- (for नाम्नां). $D_{10}$ महानृषिः. —(L. 4) $M_{1-3}$ त्रिधामा (for त्रिसामा). $D_{10}$ कीलकं (for हृदयं). $D_{10}$ वांछितार्थे (for शान्त्यर्थे वि-). $M_{1-3}$ -योजयेत् (for -युज्यते).]

— $T_1$ cont.:

633* विष्णुं जिष्णुं महाविष्णुं प्रभविष्णुं महेश्वरम् ।
अनेकरूपदैत्यान्तं नमामि पुरुषोत्तमम् ।

— $^{a}$) $D_1$ वर्षकारो (for वषट्कारो). — $^{c}$) $D_1$ भूतहृद् (for °भृद्).

15 $^{a}$) $Dn_3$ $T_2$ भूतात्मा (for पू°). — $^{b}$) $D_{1.2}$ भूतानां (for मुक्तानां). — $^{d}$) $B_3$ $Dn_1$ [ऽ]क्षत्र; $D_1$ [ऽ]क्षत्रम्; $D_2$ [ऽ]क्षेत्रम् (for ऽक्षर).

16 $D_{1.2}$ om. $16^{ab}$. — $^{a}$) $M_4$ योगवतां (for °विदां). — $^{b}$) $D_4$ प्रधानः (for °न-). — $D_{1.2}$ read $16^{cd}$ after 21. — $^{c}$) $B_5$ $Dn_{1.n2}$ $D_{6.9}$ नरसिंह- (for नार°). $D_7$ नरसिंहगतिः श्रीमान्.

17 $^{a}$) $V_1$ सर्वः सर्व-; $B_1$ शर्वः सर्वः (by transp.).

6953 149. 17 .254. 19 .140. 19 संभवो भावनो भर्ता प्रभवः प्रभुरीश्वरः ॥ १७
स्वयंभूः शंभुरादित्यः पुष्कराक्षो महास्वनः ।
अनादिनिधनो धाता विधाता धातुरुत्तमः ॥ १८
अप्रमेयो हृषीकेशः पद्मनाभोऽमरप्रभुः ।
विश्वकर्मा मनुस्त्वष्टा स्थविष्ठः स्थविरो ध्रुवः ॥ १९
अग्राह्यः शाश्वतः कृष्णो लोहिताक्षः प्रतर्दनः ।
प्रभूतस्त्रिककुब्धाम पवित्रं मङ्गलं परम् ॥ २०
ईशानः प्राणदः प्राणो ज्येष्ठः श्रेष्ठः प्रजापतिः ।
हिरण्यगर्भो भूगर्भो माधवो मधुसूदनः ॥ २१
ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः ।
अनुत्तमो दुराधर्षः कृतज्ञः कृतिरात्मवान् ॥ २२
सुरेशः शरणं शर्म विश्वरेताः प्रजाभवः ।
अहः संवत्सरो व्यालः प्रत्ययः सर्वदर्शनः ॥ २३
अजः सर्वेश्वरः सिद्धः सिद्धिः सर्वादिरच्युतः ।
वृषाकपिरमेयात्मा सर्वयोगविनिःसृतः ॥ २४
वसुर्वसुमनाः सत्यः समात्मा संमितः समः ।
अमोघः पुण्डरीकाक्षो वृषकर्मा वृषाकृतिः ॥ २५
रुद्रो बहुशिरा बभ्रुर्विश्वयोनिः शुचिश्रवाः ।
अमृतः शाश्वतः स्थाणुर्वरारोहो महातपाः ॥ २६
सर्वगः सर्वविद्भानुर्विष्वक्सेनो जनार्दनः ।
वेदो वेदविदव्यङ्गो वेदाङ्गो वेदवित्कविः ॥ २७
लोकाध्यक्षः सुराध्यक्षो धर्माध्यक्षः कृताकृतः ।
चतुरात्मा चतुर्व्यूहश्चतुर्दंष्ट्रश्चतुर्भुजः ॥ २८
भ्राजिष्णुर्भोजनं भोक्ता सहिष्णुर्जगदादिजः ।
अनघो विजयो जेता विश्वयोनिः पुनर्वसुः ॥ २९
उपेन्द्रो वामनः प्रांशुरमोघः शुचिरूर्जितः ।
अतीन्द्रः संग्रहः सर्गो धृतात्मा नियमो यमः ॥ ३०
वेद्यो वैद्यः सदायोगी वीरहा माधवो मधुः ।
अतीन्द्रियो महामायो महोत्साहो महाबलः ॥ ३१
महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिः ।
अनिर्देश्यवपुः श्रीमानमेयात्मा महाद्रिधृक् ॥ ३२
महेष्वासो महीभर्ता श्रीनिवासः सतां गतिः ।

---

D1.2 समः ( for शिवः ). — $^{d}$) D1.2 अव्ययः ( for ईश्वरः ).

18 $^{b}$) B8 महाशनः; B6 °मनाः; D1.2 महोदयः ( for महास्वनः ).

19 $^{b}$) D1.2 महर्षभः; D6.8.9 [ऽ]मरप्रभः ( for °प्रभुः ). — $^{d}$) D9 ध्रुवं ( for ध्रुवः ).

20 $^{a}$) D8 आग्राह्यः ( for अ° ). — $^{b}$) D5.6.9 T2 प्रमर्दनः ( for प्रत° ). — $^{c}$) V1 B1.3.4 D8 T2.3 G4 Cv प्रभूतस्त्रिककुद्धाम ( T2.3 °ब्धामा ).

21 $^{b}$) D1.2 श्रेष्ठो ज्येष्ठः ( by transp. ). — After 21, D1.2 read 16$^{cd}$.

22 $^{a}$) B1.3–6 D1.5.10 G2 त्रि( D1 त्रि )क्रमो ( for °मी ). V1 ईश्वरो विक्रमो धर्मी. — $^{d}$) V1 कृतिज्ञः ( for कृतज्ञः ).

23 $^{d}$) V1 प्रलयः ( for प्रत्ययः ). D2 सम- ( for सर्व- ).

24 $^{a}$) G4 सिद्धिः ( for सिद्धः ). — $^{b}$) Dn1. n2 सिद्धः; D1 संधिः ( for सिद्धिः ). — $^{d}$) D5.10 T1.3 -विनि( T1 °निः )सुतः ( for -विनिःसृतः ).

25 $^{a}$) D1.2 सम्यक् ( for सत्यः ). — $^{b}$) D1.2 संमतः; D4 T1 समितः; D5 G1 स( G1 सं )मितिः ( for संमितः ). D8 सर्वात्मा संमतः समः. — $^{d}$) D6.9 वृषाकपिः ( for °कृतिः ).

26 $^{a}$) Dn2. n3 बहुशिरो ( for °रा ). — $^{c}$) D1.2 स्थानं ( for स्थाणुर् ).

27 $^{b}$) MSS. ( wrongly ) विश्वक्सेनो. — $^{d}$) D7 क्रमः; G4 कपिः ( for कविः ). D1 वेदवेदांगवित्कविः.

28 $^{a}$) Dn1 पुराध्यक्षो ( for सुरा° ). — $^{b}$) D6–9 T G4 कृताकृतिः ( for °कृतः ).

29 $^{a}$) Dn3 D7 अनयो ( for °घो ). D1.2 सुनयो विनयो जेता. — $^{d}$) D1.2 -चक्षुः ( for -योनिः ).

30 $^{b}$) D1.2 अमेयः पतिरूर्जितः.

31 $^{a}$) Dn1 वैद्यो; D1 वेद्यं; M8 वेदो ( for वेद्यो ).

32 $^{c}$) D2 धीमान् ( for श्री° ). — $^{d}$) T1 M1–3 -धृत्; C6 -धृक् ( as in text ). D1.2 अद्वयात्मा प्रधानधृत्.

अनिरुद्धः सुरानन्दो गोविन्दो गोविदां पतिः ॥ ३३
मरीचिर्दमनो हंसः सुपर्णो भुजगोत्तमः ।
हिरण्यनाभः सुतपाः पद्मनाभः प्रजापतिः ॥ ३४
अमृत्युः सर्वदृक्सिंहः संधाता संधिमान्स्थिरः ।
अजो दुर्मर्षणः शास्ता विश्रुतात्मा सुरारिहा ॥ ३५
गुरुर्गुरुतमो धाम सत्यः सत्यपराक्रमः ।
निमिषोऽनिमिषः स्रग्वी वाचस्पतिरुदारधीः ॥ ३६
अग्रणीर्ग्रामणीः श्रीमान्न्यायो नेता समीरणः ।
सहस्रमूर्धा विश्वात्मा सहस्राक्षः सहस्रपात् ॥ ३७
आवर्तनो निवृत्तात्मा संवृतः संप्रमर्दनः ।
अहः संवर्तको वह्निरनिलो धरणीधरः ॥ ३८
सुप्रसादः प्रसन्नात्मा विश्वधृग्विश्वभुग्विभुः ।
सत्कर्ता सत्कृतः साधुर्जह्नुर्नारायणो नरः ॥ ३९
असंख्येयोऽप्रमेयात्मा विशिष्टः शिष्टकृच्छुचिः ।
सिद्धार्थः सिद्धसंकल्पः सिद्धिदः सिद्धिसाधनः ॥ ४०
वृषाही वृषभो विष्णुर्वृषपर्वा वृषोदरः ।
वर्धनो वर्धमानश्च विविक्तः श्रुतिसागरः ॥ ४१
सुभुजो दुर्धरो वाग्मी महेन्द्रो वसुदो वसुः ।
नैकरूपो बृहद्रूपः शिपिविष्टः प्रकाशनः ॥ ४२
ओजस्तेजो द्युतिधरः प्रकाशात्मा प्रतापनः ।
ऋद्धः स्पष्टाक्षरो मन्त्रश्चन्द्रांशुर्भास्करद्युतिः ॥ ४३
अमृतांशूद्भवो भानुः शशबिन्दुः सुरेश्वरः ।
औषधं जगतः सेतुः सत्यधर्मपराक्रमः ॥ ४४
भूतभव्यभवन्नाथः पवनः पावनोऽनिलः ।
कामहा कामकृत्कान्तः कामः कामप्रदः प्रभुः ॥ ४५
युगादिकृद्युगावर्तो नैकमायो महाशनः ।
अदृश्यो व्यक्तरूपश्च सहस्रजिदनन्तजित् ॥ ४६
इष्टो विशिष्टः शिष्टेष्टः शिखण्डी नहुषो वृषः ।
क्रोधहा क्रोधकृत्कर्ता विश्वबाहुर्महीधरः ॥ ४७
अच्युतः प्रथितः प्राणः प्राणदो वासवानुजः ।
अपां निधिरधिष्ठानमप्रमत्तः प्रतिष्ठितः ॥ ४८
स्कन्दः स्कन्दधरो धुर्यो वरदो वायुवाहनः । C. 13. 69 B. 13. 149 K. 13. 25 M. 13. 14

33 $^{a}$) $D_{4}$ $G_{2}$ महाभर्ता (for मही°). — $^{c}$) $D_{4}$ अनुरुद्धः (for अनि°). $D_{6.8.9}$ T सदानंदो (for सुरा°).

34 $^{a}$) $Dn_{3}$ गमनो (for द°). — $^{d}$) $D_{1.2}$ प्रजाधरः (for °पतिः).

35 $^{b}$) $D_{5}$ $T_{3}$ स्थितः (for स्थिरः). — $^{c}$) $D_{1}$ दुर्धर्षणः (for दुर्म°).

36 $^{a}$) $D_{4.7}$ गुरुतरो (for °तमो). — $^{b}$) $D_{1.2}$ सत्यं (for सत्यः). — $^{c}$) $D_{1}$ अनिशो (for निमिषो). — $^{d}$) $D_{1}$ वाचां प्रभुर् (for वाचस्पतिर्).

37 $^{b}$) $D_{7}$ न्यायोन्नेता (for न्यायो नेता). — $^{d}$) $T_{2}$ शतमूर्तिः (for सहस्राक्षः).

38 $^{a}$) $Dn_{2}$ $D_{8}$ निर्वृत्तात्मा (for निवृत्ता°). — $^{b}$) $B_{4}$ $D_{1.2}$ -प्रवर्तकः; $D_{4.6.8.9}$ -प्रतर्दनः (for -प्रम°). — $^{c}$) $M_{4}$ संवत्सरो (for °र्तको). — $^{d}$) $D_{1.2}$ अचलो (for अनिलो).

39 $^{c}$) $D_{5.8.10}$ $T_{2.3}$ $G_{2.8}$ सत्कृतिः (for °तः). — $^{d}$) $D_{5}$ विभुः (for नरः).

40 $^{b}$) $D_{1.2}$ शिष्टभुक् (for °कृच्). — $^{d}$) $V_{1}$ $B_{3}$ $G_{4}$ सिद्ध- (for सिद्धि-).

41 $^{a}$) $D_{1.2}$ विषाणी (for वृषाही). — $^{c}$) $D_{1.2}$ विमुक्तः (for विविक्तः).

42 $^{a}$) $D_{1.2}$ दुर्भुजो (for दुर्धरो).

43 $^{a}$) $B_{1}$ $D_{6.8.9}$ द्युतिकरः (for °धरः). $D_{1}$ तेजस्तेजो द्युतिकरः. — $^{b}$) $D_{6-9}$ प्रकाशनः (for प्रतापनः). — $^{c}$) $D_{4.8}$ रुद्धः (for ऋद्धः). $C_{v}$ अष्टाक्षरो (for स्प°). $D_{8}$ मंत्री (for मन्त्रश्).

44 $^{a}$) $D_{5}$ (also as in text) अमृतांशुद्भवो भानुः. — $^{b}$) $D_{5.10}$ $T_{2.3}$ $G_{4}$ शशि- (for शश-). — $^{d}$) $D_{1.2}$ सत्यकर्मा महाव्रतः.

45 $^{a}$) $G_{2}$ -जगन्नाथः (for -भव°). — $^{d}$) $D_{1}$ कामी (for कामः). $G_{2}$ शुभः (for प्रभुः).

47 $^{a}$) $D_{6-9}$ [ऽ]विशिष्टः (for वि°). — $^{c}$) $M_{4}$ क्रोधनः (for °हा). — $^{d}$) $D_{1.2}$ महाभुजः (for महीधरः).

48 $^{a}$) $D_{1.2}$ अजितः (for अच्युतः). $T_{3}$ $G_{4}$ प्रच्युतः

985 9.49 वासुदेवो बृहद्भानुरादिदेवः पुरंदरः ॥ ४९
4.51 40.51 अशोकस्तारणस्तारः शूरः शौरिर्जनेश्वरः ।
अनुकूलः शतावर्तः पद्मी पद्मनिभेक्षणः ॥ ५०
पद्मनाभोऽरविन्दाक्षः पद्मगर्भः शरीरभृत् ।
महर्द्धिर्ऋद्धो वृद्धात्मा महाक्षो गरुडध्वजः ॥ ५१
अतुलः शरभो भीमः समयज्ञो हविर्हरिः ।
सर्वलक्षणलक्षण्यो लक्ष्मीवान्समितिंजयः ॥ ५२
विक्षरो रोहितो मार्गो हेतुर्दामोदरः सहः ।
महीधरो महाभागो वेगवानमिताशनः ॥ ५३
उद्भवः क्षोभणो देवः श्रीगर्भः परमेश्वरः ।
करणं कारणं कर्ता विकर्ता गहनो गुहः ॥ ५४
व्यवसायो व्यवस्थानः संस्थानः स्थानदो ध्रुवः ।
परर्द्धिः परमः स्पष्टस्तुष्टः पुष्टः शुभेक्षणः ॥ ५५
रामो विरामो विरतो मार्गो नेयो नयोऽनयः ।
वीरः शक्तिमतां श्रेष्ठो धर्मो धर्मविदुत्तमः ॥ ५६
वैकुण्ठः पुरुषः प्राणः प्राणदः प्रणवः पृथुः ।
हिरण्यगर्भः शत्रुघ्नो व्याप्तो वायुरधोक्षजः ॥ ५७
ऋतुः सुदर्शनः कालः परमेष्ठी परिग्रहः ।
उग्रः संवत्सरो दक्षो विश्रामो विश्वदक्षिणः ॥ ५८
विस्तारः स्थावरः स्थाणुः प्रमाणं बीजमव्ययम् ।
अर्थोऽनर्थो महाकोशो महाभोगो महाधनः ॥ ५९
अनिर्विण्णः स्थविष्ठो भूर्धर्मयूपो महामखः ।
नक्षत्रनेमिर्नक्षत्री क्षमः क्षामः समीहनः ॥ ६०
यज्ञ इज्यो महेज्यश्च क्रतुः सत्रं सतां गतिः ।
सर्वदर्शी विमुक्तात्मा सर्वज्ञो ज्ञानमुत्तमम् ॥ ६१
सुव्रतः सुमुखः सूक्ष्मः सुघोषः सुखदः सुहृत् ।
मनोहरो जितक्रोधो वीरबाहुर्विदारणः ॥ ६२
स्वापनः स्ववशो व्यापी नैकात्मा नैककर्मकृत् ।
वत्सरो वत्सलो वत्सी रत्नगर्भो धनेश्वरः ॥ ६३
धर्मगुब्धर्मकृद्धर्मी सदसत्क्षरमक्षरम् ।

(for प्रथितः). —$^{b}$) $D_1$ प्राणात्मा (for प्राणदो). —$^{d}$) $D_1$ अप्रतिष्ठः (for °मत्तः).

49 $^{a}$) $D_{1.2}$ वायुवेगो (for वासुदेवो).

51 $^{a}$) $D_{1.2}$ पद्महस्तो (for °नाभो). —$^{c}$) $Dn_1$ $D_{4.5}$ $T_2$ $G_2$ $M_3$ रुद्धो (for ऋद्धो). $D_{1.2.6}$ विश्वात्मा (for वृद्धात्मा). —$^{d}$) $V_1$ $D_{1.2}$ महात्मा (for °क्षो).

52 $^{b}$) $G_2$ हरिर्हविः (by transp.).

53 $^{a}$) $D_{1.2}$ विष्टरो (for विक्षरो). —$^{c}$) $B_2$ (marg.) महाभोगो (for °भागो).

54 $^{c}$) $D_1$ कर्म (for कर्ता). $D_4$ कारणं कारणः कर्ता.

55 $^{a}$) $D_{1.2}$ व्यवस्थानं (for °नः). —$^{b}$) $D_{1.2}$ संस्थानं स्थानदो भवः. —$^{c}$) $D_{1.6-8}$ मृष्टस् (for स्पष्टस्). —$^{d}$) $D_{1.2}$ सुतोषणः (for शुभेक्षणः).

56 $^{a}$) $B_{1.3}$ $Dn_{1}$, $n_3$ $D_{1.4-6.8.9}$ $T_1$ $G_{2.4}$ $M_2$ (*sup. lin.*) विरजो; $D_7$ °जा (for °तो). —$^{b}$) $D_7$ ज्ञेयो (for नेयो). $C_V$ ऽनयो नयः (by transp.). —$^{d}$) $B_1$ -विदांवरः (for -विदुत्तमः).

57 $^{b}$) $D_1$ प्राणभुः (for प्रणवः). —$^{c}$) $D_{1.2}$ -वर्णः; $M_4$ -नाभः (for -गर्भः).

58 $^{a}$) $C_V$ क्रतुः (for ऋतुः). —$^{b}$) $B_5$ पितामहः (for परिग्रहः). —$^{c}$) $D_1$ विश्रमो (for विश्रामो).

59 $^{c}$) $B_{1-4}$ महाकोपो. —$^{d}$) $D_{1.2}$ महाशनः (for °धनः). $D_{6.8.9}$ महाभूतो महानिधिः.

60 $^{b}$) $D_8$ -रूपो (for -यूपो). $D_5$ महामघः; $T_3$ °नघः (for °मखः).

61 $^{a}$) Dn यज्ञ ईज्यो; $D_1$ यज्ञेज्यश्च (for यज्ञ इज्यो). —$^{b}$) $B_5$ सत्यं; $T_3$ सत्रः (for सत्रं). $D_1$ सदा- (for सतां).

62 $^{a}$) $T_3$ $G_3$ सुवृतः (for सुव्रतः). —$D_2$ om. 62$^{cd}$. —$^{c}$) $D_1$ जितक्लेशो (for °क्रोधो). —$^{d}$) $D_1$ विधारणः (for विदा°).

63 $^{a}$) $Dn_1$ स्वपनः; $D_5$ स्था° (for स्वा°). $V_1$ स्वपनो (for स्ववशो). —$^{c}$) $D_4$ वत्सलो वत्सरो वत्सी.

64 $^{a}$) $D_1$ धर्मगुरु; $D_4$ धर्मात्मा (for धर्मगुब्). $T_3$ धर्मकृद्धर्मगुब्धर्मी. —$^{b}$) $V_1$ अव्ययं (for अक्षरम्). —$^{c}$) $V_1$ विज्ञातात्मा; $B_5$ $D_{1.2}$ अविज्ञातः (for °ज्ञाता).

अविज्ञाता सहस्रांशुर्विधाता कृतलक्षणः ॥ ६४
गभस्तिनेमिः सत्त्वस्थः सिंहो भूतमहेश्वरः ।
आदिदेवो महादेवो देवेशो देवभृद्गुरुः ॥ ६५
उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः ।
शरीरभूतभृद्भोक्ता कपीन्द्रो भूरिदक्षिणः ॥ ६६
सोमपोऽमृतपः सोमः पुरुजित्पुरुसत्तमः ।
विनयो जयः सत्यसंधो दाशार्हः सात्वतां पतिः ॥६७
जीवो विनयिता साक्षी मुकुन्दोऽमितविक्रमः ।
अम्भोनिधिरनन्तात्मा महोदधिशयोऽन्तकः ॥ ६८
अजो महार्हः स्वाभाव्यो जितामित्रः प्रमोदनः ।
आनन्दो नन्दनो नन्दः सत्यधर्मा त्रिविक्रमः ॥ ६९
महर्षिः कपिलाचार्यः कृतज्ञो मेदिनीपतिः ।
त्रिपदस्त्रिदशाध्यक्षो महाशृङ्गः कृतान्तकृत् ॥ ७०
महावराहो गोविन्दः सुषेणः कनकाङ्गदी ।
गुह्यो गभीरो गहनो गुप्तश्चक्रगदाधरः ॥ ७१
वेधाः स्वाङ्गोऽजितः कृष्णो दृढः संकर्षणोऽच्युतः ।
वरुणो वारुणो वृक्षः पुष्कराक्षो महामनाः ॥ ७२
भगवान्भगहा नन्दी वनमाली हलायुधः ।
आदित्यो ज्योतिरादित्यः सहिष्णुर्गतिसत्तमः ॥ ७३
सुधन्वा खण्डपरशुर्दारुणो द्रविणप्रदः ।
दिवःस्पृक्सर्वदृग्व्यासो वाचस्पतिरयोनिजः ॥ ७४
त्रिसामा सामगः साम निर्वाणं भेषजं भिषक् ।
संन्यासकृच्छमः शान्तो निष्ठा शान्तिः परायणम् ॥७५
शुभाङ्गः शान्तिदः स्रष्टा कुमुदः कुवलेशयः ।
गोहितो गोपतिर्गोप्ता वृषभाक्षो वृषप्रियः ॥ ७६
अनिवर्ती निवृत्तात्मा संक्षेप्ता क्षेमकृच्छिवः ।
श्रीवत्सवक्षाः श्रीवासः श्रीपतिः श्रीमतां वरः ॥ ७७
श्रीदः श्रीशः श्रीनिवासः श्रीनिधिः श्रीविभावनः ।
श्रीधरः श्रीकरः श्रेयः श्रीमाँल्लोकत्रयाश्रयः ॥ ७८
स्वक्षः स्वङ्गः शतानन्दो नन्दिर्ज्योतिर्गणेश्वरः ।
विजितात्मा विधेयात्मा सत्कीर्तिश्छिन्नसंशयः ॥ ७९
उदीर्णः सर्वतश्चक्षुरनीशः शाश्वतः स्थिरः । C B. K. M.

— d) D1 आधाता (for वि°). M1 -लक्षणं (for °णः).

65 d) D1 भृगुः (for गुरुः).

66 c) D5 G4 शरीरी (for °र-). D1. 2 शरीरी भूतभृद्भोगी. — d) D1. 2 M3 कवींद्रो (for कपीन्द्रो).

67 b) V1 B3. 5 पुरुजित्पुरुषोत्तमः; D1. 2 °त्पुरुजित्तमः; D6. 7. 9 T1 पुर( D7 T1 °रु )जित्पुरसत्तमः. — c) Hypermetric. Dn1. n2 विजयो; D1. 2. 6. 9 जयो; D7. 8 नयो (for विनयो). B2. 5 D4 T2 विजयो नयः सत्यसंधो.

68 b) D1. 2 सत्य- (for ऽमित-). D8 मुचुकुंदोमितप्रभः.

69 a) D2 अब्दो (for अजो). D1 संभाव्यो (for स्वा°). — b) D5 प्रमर्दनः (for प्रमोदनः). — c) D1 नंदको (for °नो). — d) D1. 2 सत्यकर्मा; D10 T3 G4 °धर्मस् (for °धर्मा).

70 c) D1 त्रिपदस्त्रिपदाध्यक्षो.

71 b) Dn1 D1. 2. 6 G2 कनकांगदः.

72 a) D1. 2 वेदाः स्वांगो जितक्रोधो. — b) D1. 2 [ऽ]जितः (for ऽच्युतः). — d) B5 D1. 2 महास्वनः (for °मनाः).

73 a) Ćs [आ]नंदी (for नन्दी). — c) D1. 2 अनादिर् (for आदित्यो). — d) B3 D8. 9 गतिरुत्तमः; D1. 2 °कृत्तमः (for गतिस°).

74 c) Dn2 T2. 3 G M Ćs दिविस्पृक् (for दिवः-स्पृक्). D8 सर्वदो (for °दृग्). D1 दिवःस्पृक्सर्वजिद्वामो.

75 c) Dn2 D3 G2 श्रमः; G4 समः (for शमः). — d) B1. 4. 6 Dn3 D4–8 परायणः.

76 a) D1 शुभ्रांगः; D5 सुभगः (for शुभाङ्गः). — b) D1. 2 कुंदः कुवलयेशयः.

77 a) T3 G4 अनिवृत्तिर् (for °वर्ती). D6. 7 अनिर्वर्तं निवर्तात्मा. — b) D4 ध्रुवः; D8 शुचिः (for शिवः).

78 b) D9 श्रीनिधिः श्रीमतां वरः. — c) D1. 2 श्रीभवः (for श्रीधरः).

79 a) T3 सदानंदो (for शता°). — b) D6. 7 नंदी (for नन्दिर्). — c) B3 D1. 9 विदितात्मा (for विजि°).

80 b) D1. 2 स्थितिः (for स्थिरः). — c) Dn3 भूषणो भूशयो भूतिर्.

16
. 80 भूशयो भूषणो भूतिर्विशोकः शोकनाशनः ॥ ८०
4. 82
0. 82 अर्चिष्मानर्चितः कुम्भो विशुद्धात्मा विशोधनः ।
अनिरुद्धोऽप्रतिरथः प्रद्युम्नोऽमितविक्रमः ॥ ८१
कालनेमिनिहा वीरः शूरः शौरिर्जनेश्वरः ।
त्रिलोकात्मा त्रिलोकेशः केशवः केशिहा हरिः ॥ ८२
कामदेवः कामपालः कामी कान्तः कृतागमः ।
अनिर्देश्यवपुर्विष्णुर्वीरोऽनन्तो धनंजयः ॥ ८३
ब्रह्मण्यो ब्रह्मकृद्ब्रह्मा ब्रह्म ब्रह्मविवर्धनः ।
ब्रह्मविद्ब्राह्मणो ब्रह्मी ब्रह्मज्ञो ब्राह्मणप्रियः ॥ ८४
महाक्रमो महाकर्मा महातेजा महोरगः ।
महाक्रतुर्महायज्वा महायज्ञो महाहविः ॥ ८५
स्तव्यः स्तवप्रियः स्तोत्रं स्तुतिः स्तोता रणप्रियः ।
पूर्णः पूरयिता पुण्यः पुण्यकीर्तिरनामयः ॥ ८६
मनोजवस्तीर्थकरो वसुरेता वसुप्रदः ।
वसुप्रदो वासुदेवो वसुर्वसुमना हविः ॥ ८७
सद्गतिः सत्कृतिः सत्ता सद्भूतिः सत्परायणः ।
शूरसेनो यदुश्रेष्ठः सन्निवासः सुयामुनः ॥ ८८
भूतावासो वासुदेवो सर्वासुनिलयोऽनलः ।
दर्पहा दर्पदो दृप्तो दुर्धरोऽथापराजितः ॥ ८९
विश्वमूर्तिर्महामूर्तिर्दीप्तमूर्तिरमूर्तिमान् ।
अनेकमूर्तिरव्यक्तः शतमूर्तिः शताननः ॥ ९०
एको नैकः सवः कः किं यत्तत्पदमनुत्तमम् ।
लोकबन्धुर्लोकनाथो माधवो भक्तवत्सलः ॥ ९१
सुवर्णवर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी ।
वीरहा विषमः शून्यो घृताशीरचलश्चलः ॥ ९२
अमानी मानदो मान्यो लोकस्वामी त्रिलोकधृक् ।
सुमेधा मेधजो धन्यः सत्यमेधा धराधरः ॥ ९३
तेजो वृषो द्युतिधरः सर्वशस्त्रभृतां वरः ।
प्रग्रहो निग्रहोऽव्यग्रो नैकशृङ्गो गदाग्रजः ॥ ९४
चतुर्मूर्तिश्चतुर्बाहुश्चतुर्व्यूहश्चतुर्गतिः ।

---

81 $^{d}$) $T_1$ पर्जन्यो ( for प्रद्युम्नो ).

82 $^{a}$) $V_1$ B $Dn_{1,n3}$ $M_{1.4}$ शौरिः ( for वीरः ). — $^{b}$) $V_1$ B $Dn_{1,n3}$ वीरः शूर-; $T_{2.3}$ M शूरः शूर-; $C^{s}$ शौरिः शूर- ( for शूरः शौरिर् ). $D_{1.2}$ शूरः शूरगणेश्वरः. — $^{d}$) $D_{1.2.5-7.9}$ केशहा ( for केशिहा ).

83 $^{b}$) $D_{1.2}$ कामकांति- ( $D_2$ °तिः ) ( for कामी कान्तः ). — $^{c}$) $D_{1.2}$ अविभाव्य- ( for अनिर्देश्य- ). $D_{1.8}$ जिष्णुर् ( for विष्णुर् ).

84 $^{a}$) $D_1$ ब्रह्मविद् ( for °कृद् ). — $^{b}$) $D_6$ विप्र- ( for ब्रह्म- ). — $^{c}$) $V_1$ ब्रह्मा; $B_5$ $D_{6.8}$ ब्राह्मी ( for ब्रह्मी ). — $^{d}$) $D_{1.2}$ ब्रह्मष्टो; $D_9$ °ण्यो ( for °ज्ञो ).

85 $^{a}$) $D_8$ महाकामी ( for °कर्मा ). — $^{d}$) $D_{1.2}$ महेश्वरः ( for महाहविः ).

86 $D_5$ reads $86^{ab}$ twice. — $^{b}$) $T_{2.3}$ $G_{1.3.4}$ M स्तुतः; Bom. ed. स्तुति- ( for स्तुतिः ). — $D_5$ om. $86^{c}$–$87^{b}$. — $^{d}$) $D_1$ निरामयः ( for अना° ).

87 $D_5$ om. $87^{ab}$ ( cf. v. l. 86 ). — $^{b}$) $B_{1.2}$ ( marg. as in text ). $_{3-5}$ $T_1$ $G_4$ $M_4$ वसुप्रियः ( for °प्रदः ). — $D_5$ reads $87^{cd}$ twice. — $^{c}$) $D_4$ वसुप्रियो ( for °प्रदो ). $D_{1.2}$ वसुप्रजो वासवेशो. — $^{d}$) $B_{3-5}$ Cv हरिः ( for हविः ). $D_{1.2}$ वासो वासमनोहरः.

88 $^{b}$) $D_{6.7}$ $M_2$ ( *sup. lin.* ) सद्भूतः ( for °तिः ). $D_1$ सत्परायणं. — $^{d}$) $T_1$ श्रीनिवासः ( for सन्नि° ).

89 $^{b}$) $D_{1.9}$ [ऽ]मलः ( for ऽनलः ). — $^{c}$) $D_1$ दर्पणो ( for °दो ).

90 $^{c}$) $D_{1.2}$ अस्पष्टः ( for अव्यक्तः ).

91 $^{a}$) $V_1$ $Dn_3$ $D_{6-9}$ [ऽ]नेकः ( for नैकः ).

92 $^{b}$) $D_{1.6.8.9}$ चंदनांगदः. — $^{d}$) $D_{8.9}$ घृतार्चिर् ( for °शीर् ). $T_3$ चरः ( for चलः ). $D_{1.2}$ घृतार्चिरचरश्चरः.

93 $^{b}$) $B_{1.3}$ $D_{10}$ त्रिलोकधृत; $D_{1.2.8.9}$ $T_1$ °कृत् ( for °धृक् ). — $^{d}$) $D_8$ सत्यसंधो ( for °मेधा ).

94 $^{a}$) $D_1$ तेजोधरो ( for तेजो वृषो ). — $^{b}$) $D_{1.2}$ -भृदावहे ( for -भृतां वरः ). — $^{c}$) $D_{1.2}$ प्रग्रहानुग्रहोव्यग्रो.

95 $^{a}$) $V_1$ चतुर्व्यूहश्च; $D_{1.2}$ °र्वक्त्रश्च ( for °र्बाहुश्च ).

चतुरात्मा चतुर्भावश्चतुर्वेदविदेकपात् ।। ९५
समावर्तो निवृत्तात्मा दुर्जयो दुरतिक्रमः ।
दुर्लभो दुर्गमो दुर्गो दुरावासो दुरारिहा ।। ९६
शुभाङ्गो लोकसारङ्गः सुतन्तुस्तन्तुवर्धनः ।
इन्द्रकर्मा महाकर्मा कृतकर्मा कृतागमः ।। ९७
उद्भवः सुन्दरः सुन्दो रत्ननाभः सुलोचनः ।
अर्को वाजसनः शृङ्गी जयन्तः सर्वविज्जयी ।। ९८
सुवर्णबिन्दुरक्षोभ्यः सर्ववागीश्वरेश्वरः ।
महाह्रदो महागर्तो महाभूतो महानिधिः ।। ९९
कुमुदः कुंदरः कुन्दः पर्जन्यः पवनोऽनिलः ।
अमृतांशोऽमृतवपुः सर्वज्ञः सर्वतोमुखः ।। १००
सुलभः सुव्रतः सिद्धः शत्रुजिच्छत्रुतापनः ।
न्यग्रोधोदुम्बरोऽश्वत्थश्चाणूरान्ध्रनिषूदनः ।। १०१
सहस्रार्चिः सप्तजिह्वः सप्तैधाः सप्तवाहनः ।
अमूर्तिरनघोऽचिन्त्यो भयकृद्भयनाशनः ।। १०२
अणुर्बृहत्कृशः स्थूलो गुणभृन्निर्गुणो महान् ।
अधृतः स्वधृतः स्वास्यः प्राग्वंशो वंशवर्धनः ।। १०३
भारभृत्कथितो योगी योगीशः सर्वकामदः ।
आश्रमः श्रमणः क्षामः सुपर्णो वायुवाहनः ।। १०४
धनुर्धरो धनुर्वेदो दण्डो दमयिता दमः ।
अपराजितः सर्वसहो नियन्ता नियमो यमः ।। १०५
सत्त्ववान्सात्त्विकः सत्यः सत्यधर्मपरायणः ।
अभिप्रायः प्रियार्होऽर्हः प्रियकृत्प्रीतिवर्धनः ।। १०६
विहायसगतिर्ज्योतिः सुरुचिर्हुतभुग्विभुः ।
रविर्विरोचनः सूर्यः सविता रविलोचनः ।। १०७
अनन्तो हुतभुग्भोक्ता सुखदो नैकदोऽग्रजः ।
अनिर्विण्णः सदामर्षी लोकाधिष्ठानमद्भुतम् ।। १०८
सनात्सनातनतमः कपिलः कपिरव्ययः । C. 13. B. 13. K. 13. M. 13

— [b] ) V1 चतुर्बाहुश्च; D1. 2 °र्वंशश्च ( for °र्व्यूहश्च ).

96 [a] ) B3 D1. 2. 4 G2 समावृत्तो; D6 समवर्ती ( for समावर्तो ). — [b] ) D1. 2 ह्यजेयो ( for दुर्जयो ). — [d] ) D1. 2 दुरारुहः ( for °रिहा ).

97 [a] ) V1 शुभांगं ( for शुभाङ्गो ). — [cd] ) B6 महाकर्मा कृतवर्मा इंद्रकर्मा कृतागमः.

98 [b] ) D1 सुभोजनः ( for सुलोचनः ). — [c] ) G2-4 Cv वाजसनिः ( for °सनः ).

99 [c] ) D1 महावर्तो ( for °गर्तो ). — [d] ) D1. 2 महोदधिः; T3 महाधनः ( for °निधिः ).

100 [b] ) V1 B2. 4 Dn2 G1 पावनोनिलः; B6 पारदोनलः; D1. 8-10 T1 G2. 4 Cv पवनोऽनलः; D6 T2. 3 G3 Cś पावनोनलः ( for पवनोऽनिलः ). — [c] ) B1-3 Dn3 D4. 6. 9 T2 G1. 3. 4 M2. 3 अमृताशो ( for °तांशो ). — [d] ) D1. 2 सर्वांगः ( for सर्वज्ञः ).

101 [a] ) Dn1 D8. 9 G2 सिद्धिः ( for सिद्धः ). D1. 2 शलभः सुविदः स्निग्धः. — [c] ) V1 B1 न्यग्रोधोदुंबरोश्वत्थश्. — [d] ) Dn2 चाणूरांध्री- ( for °रान्ध्र- ).

102 [c] ) Dn2. n3 अनयो ( for °घो ).

103 D5 om. 103. — [b] ) G3. 4 गुणभिन् ( for °भृन् ). — [c] ) B6 अदृष्टः ( for °तः ). D10 T2. 3 G1. 4 स्वास्थ्यः; Cv स्वाख्यः ( for स्वास्यः ). D1. 2 सुहुतः सुव्रतः स्वास्यः. — [d] ) Cv प्राग्वंदो ( for °शो ).

104 [b] ) D1. 2 योगात्मा योगसाधनः. — [c] ) D1. 2 कालः ( for क्षामः ). — [d] ) D5 M3 सुवर्णो ( for सुपर्णो ).

105 [c] ) Hypermetric. D1. 2 वरार्चितः ( for अपराजितः ). — [d] ) D7 नियतो ( for नियमो ). D8 नियमोनियमः स्मृतः; Cś नियंतानियमोयमः.

106 [a] ) D1 सत्यवाक् ( for सत्त्ववान् ). T1 सात्यकः; G4 सात्त्विकिः ( for °कः ). D1. 2 सत्त्वे ( for सत्यः ). — [b] ) D1. 2 -परायणं.

107 [b] ) Dn3 सुरुतिर् ( for सुरुचिर् ). D1 बलः ( for विभुः ). — [c] ) D1 T3 विलोचनः ( for विरो° ).

108 [a] ) G3. 4 अनंत- ( for अनन्तो ). D1. 2 अनंतधनभुग्भोक्ता. — [b] ) V1 B Dn1. n2 D6. 7 M1-3 Cv [ए]कजो ( for °दो ). — [d] ) V1 B Dn2. n3 D1-9 अद्भुतः; Dn1 उद्धतः ( for अद्भुतम् ).

109 [b] ) T3 कपिलं ( for °लः ). D8. 9 कविर् ( for कपिर् ). Cv कपिलः कपिलोऽव्ययः. — [d] ) D1. 2 स्वस्तिमान् ( for °भुक् ).

109 स्वस्तिदः स्वस्तिकृत्स्वस्ति स्वस्तिभुक्स्वस्तिदक्षिणः ॥
अरौद्रः कुण्डली चक्री विक्रम्यूर्जितशासनः ।
शब्दातिगः शब्दसहः शिशिरः शर्वरीकरः ॥ ११०
अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणां वरः ।
विद्वत्तमो वीतभयः पुण्यश्रवणकीर्तनः ॥ १११
उत्तारणो दुष्कृतिहा पुण्यो दुःस्वप्ननाशनः ।
वीरहा रक्षणः सन्तो जीवनः पर्यवस्थितः ॥ ११२
अनन्तरूपोऽनन्तश्रीर्जितमन्युर्भयापहः ।
चतुरस्रो गभीरात्मा विदिशो व्यादिशो दिशः॥११३
अनादिर्भूर्भुवो लक्ष्मीः सुवीरो रुचिराङ्गदः ।
जननो जनजन्मादिर्भीमो भीमपराक्रमः ॥ ११४
आधारनिलयो धाता पुष्पहासः प्रजागरः ।
ऊर्ध्वगः सत्पथाचारः प्राणदः प्रणवः पणः ॥ ११५
प्रमाणं प्राणनिलयः प्राणकृत्प्राणजीवनः ।
तत्त्वं तत्त्वविदेकात्मा जन्ममृत्युजरातिगः ॥ ११६
भूर्भुवःस्वस्तरुस्तारः सविता प्रपितामहः ।
यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः ॥ ११७
यज्ञभृद्यज्ञकृद्यज्ञी यज्ञभुग्यज्ञसाधनः ।
यज्ञान्तकृद्यज्ञगुह्यमन्नमन्नाद एव च ॥ ११८
आत्मयोनिः स्वयंजातो वैखानः सामगायनः ।
देवकीनन्दनः स्रष्टा क्षितीशः पापनाशनः ॥ ११९
शङ्खभृन्नन्दकी चक्री शार्ङ्गधन्वा गदाधरः ।
रथाङ्गपाणिरक्षोभ्यः सर्वप्रहरणायुधः ॥ १२०

* * * *

इतीदं कीर्तनीयस्य केशवस्य महात्मनः ।
नाम्नां सहस्रं दिव्यानामशेषेण प्रकीर्तितम् ॥ १२१
य इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत् ।
नाशुभं प्राप्नुयात्किंचित्सोऽमुत्रेह च मानवः ॥ १२२
वेदान्तगो ब्राह्मणः स्यात्क्षत्रियो विजयी भवेत् ।
वैश्यो धनसमृद्धः स्याच्छूद्रः सुखमवाप्नुयात् ॥ १२३

---

110 $^{d}$) $D_{1.2}$ शिखरः (for शिशिरः).

111 $^{c}$) $D_{8.9}$ वीततमः (for °भयः).

112 $^{a}$) $D_1$ दुष्टनिहा (for दुष्कृतिहा). — $B_1$ om. $112^{c}$–$114^{d}$. — $^{c}$) $D_1$ भीतिहा (for वीरहा). $G_8$ लक्षणः; $G_4$ दक्षिणः (for रक्षणः). $V_1$ $Dn_2$ $D_{5-8}$ शांतो; $Dn_3$ शीतो (for सन्तो). $D_2$ भीतिहा रक्षणः स्वांतो. — $^{d}$) $D_{10}$ $T_{1.3}$ $G_{3.4}$ जीवनं (for °नः).

113 $B_1$ om. 113 (cf. v. l. 112).

114 $B_1$ om. 114 (cf. v. l. 112). — $^{a}$) $D_1$ अवंध्यो (for अनादिर्). — $^{b}$) $D_1$ सुग्रीवो (for सुवीरो). — $^{c}$) $D_1$ जनको (for °नो). $D_2$ -जन्मा च (for -जन्मादिर्).

115 $^{a}$) $D_2$ दाता; $Cś$ [s]धाता (for धाता). — $^{b}$) $G_8$ प्रजाकरः (for °गरः). — $^{c}$) $D_6$ सत्पथाधारः (for °चारः).

116 $^{a}$) $D_{1.2}$ प्राणकृत् (for प्रमाणं). $D_{10}$ प्राणि- (for प्राण-). — $^{b}$) $D_{6.7.10}$ T $G_{2.3}$ प्राण( $T_1$ °णि )-धृक्; $G_4$ प्राणधृत् (for °कृत्).

117 $^{a}$) $D_7$ -स्वस्तरस्; $T_3$ -स्वस्तमस् (for -स्वस्तरुस्). — $^{b}$) $B_{1.2.4}$ $Dn_{1}$, $n_2$ $D_{1.2.4}$ $T_{1.2}$ सपिता (for सविता). — $B_{4.5}$ om. (hapl.) $117^{d}$–$118^{a}$. — $^{d}$) $B_3$ -साधनः (for -वाहनः).

118 $B_{4.5}$ om. $118^{a}$ (cf. v. l. 117). — $^{a}$) $T_1$ $G_{1.3.4}$ यज्ञकृद् (for °भृद्). $T_3$ यज्ञभृद् (for °कृद्). $D_{10}$ यज्ञकृद्यज्ञभुग्यज्ञी. — $^{b}$) $B_{4.5}$ यज्ञांगो; $D_{10}$ यज्ञभृद् (for °भुग्). — $^{c}$) $D_8$ -गुह्यो (for -गुह्यम्). — $^{d}$) $B_2$ अन्नादस् (for अन्नाद).

119 $D_1$ om. 119. — $^{c}$) $D_4$ श्रेष्ठः (for स्रष्टा).

120 $^{c}$) $D_1$ रक्षोघ्नः (for अक्षोभ्यः). — $B_3$ $Dn_3$ $D_{5.10}$ T G $M_{2.3}$ read $120^{d}$ twice. — After 120, all MSS. ins. ॐ नमः.

121 $^{a}$) $B_4$ य (for इति). — $^{d}$) $B_2$ [इ]ह (for प्र-).

122 $^{b}$) $D_1$ वा (for च). — $^{c}$) $D_{6.7}$ परत्र (for सोऽमुत्र).

123 $^{c}$) $V_1$ $B_{3-5}$ $D_{5.6.10}$ -समृद्धिः (for °द्धः).

धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी चार्थमाप्नुयात् ।
कामानवाप्नुयात्कामी प्रजार्थी चाप्नुयात्प्रजाः ॥ १२४
भक्तिमान्यः सदोत्थाय शुचिस्तद्गतमानसः ।
सहस्रं वासुदेवस्य नाम्नामेतत्प्रकीर्तयेत् ॥ १२५
यशः प्राप्नोति विपुलं ज्ञातिप्राधान्यमेव च ।
अचलां श्रियमाप्नोति श्रेयश्चाप्नोत्यनुत्तमम् ॥ १२६
न भयं क्वचिदाप्नोति वीर्यं तेजश्च विन्दति ।
भवत्यरोगो द्युतिमान्बलरूपगुणान्वितः ॥ १२७
रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ।
भयान्मुच्येत भीतश्च मुच्येतापन्न आपदः ॥ १२८
दुर्गाण्यतितरत्याशु पुरुषः पुरुषोत्तमम् ।
स्तुवन्नामसहस्रेण नित्यं भक्तिसमन्वितः ॥ १२९
वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः ।
सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम् ॥ १३०
न वासुदेवभक्तानामशुभं विद्यते क्वचित् ।
जन्ममृत्युजराव्याधिभयं वाप्युपजायते ॥ १३१
इमं स्तवमधीयानः श्रद्धाभक्तिसमन्वितः ।
युज्येतात्मसुखक्षान्तिश्रीधृतिस्मृतिकीर्तिभिः ॥ १३२
न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः ।
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे ॥ १३३
द्यौः सचन्द्रार्कनक्षत्रा खं दिशो भूर्महोदधिः ।
वासुदेवस्य वीर्येण विधृतानि महात्मनः ॥ १३४
ससुरासुरगन्धर्वं सयक्षोरगराक्षसम् ।
जगद्वशे वर्ततेदं कृष्णस्य सचराचरम् ॥ १३५
इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः ।
वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च ॥ १३६
सर्वागमानामाचारः प्रथमं परिकल्प्यते ।
आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः ॥ १३७
ऋषयः पितरो देवा महाभूतानि धातवः ।
जङ्गमाजङ्गमं चेदं जगन्नारायणोद्भवम् ॥ १३८ C. 13. 7074 B. 13. 149. K. 13. 254. M. 13. 140.

124 $^{c}$) $D_6$ कामं (for कामी). —$^{d}$) $B_2$ $Dn_{1.n2}$ $D_{1.2.8}$ $M_{1.4}$ प्राप्नुयात् (for चा°). $Dn_2$ $D_{3-7.9}$ $G_2$ $M_2$ (*sup. lin.*) प्रजां (for प्रजाः). $T_1$ $G_1$ प्रजार्थी प्राप्नुयात्प्रजां.

125 $^{a}$) $Dn_1$ समुत्थाय (for सदो°). —$^{b}$) $T_3$ शूरस् (for शुचिस्). $D_1$ तत्पर- (for तद्गत-).

126 $^{b}$) $T_{2.3}$ $G_4$ यानि- (for ज्ञाति-). — $B_1$ om. (hapl.) $126^{d}$–$127^{a}$. —$^{d}$) $B_{3-5}$ Dn $D_{2.4.5.8.9}$ $T_{1.2}$ $G_1$ प्राप्नोति (for चा°). $D_{6.7}$ सर्वत्र विजयं तथा.

127 $B_1$ om. $127^{a}$ (cf. v. l. 126). —$^{b}$) $D_2$ तेजश्चायुश् (for वीर्यं तेजश्). —$^{c}$) $V_1$ $B_4$ [अ]रोगी (for °गो). —$^{d}$) $D_{1.8.9}$ -समन्वितः (for -गुणा°).

128 $^{a}$) $V_1$ $B_2$ $D_{1.2}$ रोगाद्विमुच्यते रोगी. —$^{c}$) $D_{1.8.9}$ $T_{2.3}$ $G_{3.4}$ $M_{1-3}$ तु (for च). —$^{d}$) $B_8$ $Dn_{1.n2}$ $D_{1.2.6.7.10}$ $T_3$ $G_{1.2.4}$ $M_{1.4}$ मुच्येद् (for °त).

129 $^{b}$) $Dn_2$ $T_2$ पुरुषोत्तमः; $T_3$ °त्तमात् (for °त्तमम्). —$^{d}$) $T_3$ भक्त्या (for भक्ति-).

130 $^{b}$) $D_5$ वासुदेवः परायणं.

131 $D_{6.7}$ transp. 131 and 132. —$^{d}$) $B_5$ $Dn_{1.n2}$ नैव; $D_{1.2.7}$ नापि (for वापि).

132 $D_{6.7}$ transp. 131 and 132. —$^{c}$) $B_{1-3}$ [आ]युः- (for [आ]त्म-). —$^{d}$) $G_4$ -स्तुति- (for -स्मृति-).

133 $^{b}$) $D_7$ गतिः (for मतिः).

134 $^{a}$) $T_1$ -नक्षत्रं (for °त्रा).

135 $^{a}$) $V_1$ $B_3$ $Dn_2$ -गंधर्व- (for °र्वं). —$^{c}$) $B_{1-4}$ $Dn_3$ $D_4$ वर्तति (for °ते).

136 $^{b}$) $B_6$ सत्यं (for सत्त्वं). $Dn_1$ मनो धृतिः; $D_1$ धृतिर्बलं (by transp.). —$^{d}$) $D_{1.10}$ $T_{2.3}$ $G_{2-4}$ $M_2$ (*inf. lin.*)$_{.4}$ क्षेत्रज्ञम् (for °ज्ञ). $D_6$ क्षेत्रं क्षेत्रज्ञमुच्यते.

137 $^{b}$) $B_1$ प्रथमः (for °मं). $D_{4.6-9}$ $T_3$ $G_4$ -कल्पते (for -कल्प्यते). —$^{c}$) $B_3$ $D_5$ $T_2$ $G_4$ आचारः प्रथमो धर्मो.

138 $^{b}$) $V_1$ -भूतादि- (for °नि). —$^{c}$) $T_3$ [ए]वञ्; $G_2$ [ए]वं (for [इ]दं).

139 $^{b}$) $B_8$ $Dn_2$ $D_{2.5}$ S (except $M_4$) शिल्पादि.

योगो ज्ञानं तथा सांख्यं विद्याः शिल्पानि कर्म च ।
वेदाः शास्त्राणि विज्ञानमेतत्सर्वं जनार्दनात् ॥ १३९
एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः ।
त्रींल्लोकान्व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः॥१४०
इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्तितम् ।
पठेद्य इच्छेत्पुरुषः श्रेयः प्राप्तुं सुखानि च ॥ १४१
विश्वेश्वरमजं देवं जगतः प्रभवाप्ययम् ।
भजन्ति ये पुष्कराक्षं न ते यान्ति पराभवम् ॥ १४२

इति श्रीमहाभारते अनुशासनपर्वणि पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥

---

( for °लि ). — $^{d}$) $G_{3}$ वेदशास्त्रादिविज्ञानम्.

140 $^{c}$) $D_{2}$ विश्वात्मा ( for भूतात्मा ). $D_{7}$ त्रींल्लोकान्प्राप्य विश्वात्मा.

141 $^{a}$) $V_{1}$ $D_{2}$ इदं ( for इमं ). — $^{c}$) $D_{n1}$ इच्छन् ( for इच्छेत् ). — For 141, $D_{7}$ subst. :

634* एतत्स्तोत्रं भगवता व्यासेन परिकीर्तितम् ।
य: पठेच्छृणुयाद्वापि श्रेयः प्राप्नोत्यनुत्तमम् ।

142 $^{b}$) $V_{1}$ $B_{4.5}$ $D_{n2}$ $D_{4.6.8}$ जगतः प्रभवाव्ययं; $D_{5}$ $T_{2.3}$ $G_{1.3}$ °तः प्रभुर( $G_{1.3}$ °म )व्ययं; $D_{7}$ °त्प्रभवमव्ययं. — $^{c}$) $D_{7}$ स्तुवंति ( for भजन्ति ). — $T_{2.3}$ $G_{2.3}$ read 142$^{d}$ twice. After 142, $D_{n1.n2}$ $D_{5-10}$ S ( except $M_{4}$ ) ins. :

635* अर्जुन उवाच ।
पद्मपत्रविशालाक्ष पद्मनाभ सुरोत्तम ।
भक्तानामनुरक्तानां त्राता भव जनार्दन ।
श्रीभगवानुवाच ।
यो मां नामसहस्रेण स्तोतुमिच्छति पाण्डव ।
सोऽहमेकेन श्लोकेन स्तुत एव न संशयः । [5]
नमोऽस्त्वनन्ताय सहस्रमूर्तये
सहस्रपादाक्षिशिरोरुबाहवे ।
सहस्रनाम्ने पुरुषाय शाश्वते
सहस्रकोटीयुगधारिणे नमः ।

[ $D_{6-9}$ युधिष्ठिर ( for अर्जुन ). $M_{1-3}$ om. lines 1–4. — ( L. 4 ) $D_{7}$ तेनाहमेकश्लोकेन ( for the prior half ). — $D_{10}$ $T_{2.3}$ G read post. half twice. — $D_{10}$ $T_{2.3}$ G ins. after line 4 : $D_{5}$ after line 8 :

636* अर्जुन उवाच ।
वासनाद्वासुदेवस्य वासितं ते जगत्त्रयम् ।
सर्वभूतनिवासोऽसि वासुदेव नमोऽस्तु ते ।

[ $D_{10}$ $T_{3}$ om. the ref. ]
— $G_{1.3}$ read line 8 twice. ]

*$D_{5}$ cont. :*

637* नमोऽस्तु ते व्यास विशालबुद्धे
फुल्लारविन्दायतपत्रनेत्र ।
येन त्वया भारततैलपूर्णः
प्रज्वालितो ज्ञानमयः प्रदीपः ।
एष निष्कण्टकः पन्था यत्र संपूज्यते हरिः । [5]
कुपथं तं विजानीयाद्गोविन्दरहितागमम् ।
रुद्र उवाच ।
राम रामेति रामेति रमे रामे मनोरमे ।
श्रीसहस्रनामतत्तुल्यं रामनाम वरानने ।

$T_{3}$ cont. :

638* इति स्तुत्वा हृषीकेशं पार्थस्तूष्णीं स्थितस्ततः ।

While $M_{1-3}$ cont. :

639* नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ।
जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ।
आकाशात्पतितं तोयं यथा गच्छति सागरम् ।
सर्वदेवनमस्कारः केशवं प्रति गच्छति ।
सर्ववेदेषु यत्पुण्यं सर्ववेदेषु यत्फलम् । [5]
तत्फलं पुरुष आप्नोति स्तुत्वा देवं जनार्दनम् ।

[ $M_{1-3}$ read the post. half of line 6 twice. ]

Colophon. — *Parvan name* : B $D_{n2.n3}$ $D_{1}$ शांति. — *Sub-parvan* : $V_{1}$ B $D_{n}$ $D_{1.2.4-8.9}$ दानधर्म. — *Adhy. name* : $V_{1}$ B $D_{n3}$ $D_{1.2.6-10}$ विष्णोर्नामसहस्रं; $D_{n1}$ विष्णुसहस्रनामकथनं : $D_{n2}$ भगवतो वासुदेवस्य नाम्नां सहस्रं; $D_{4}$ $G_{1.3.4}$ सहस्रनामकथनं : $D_{5}$ श्रीविष्णोर्दिव्यसहस्रं : $D_{10}$ $G_{2}$ विष्णुसहस्रनामस्तोत्रं : $T_{2.3}$ सहस्रनामस्तोत्रं : सहस्रनामस्तोत्रं. — *Adhy no.* ( figures, words or both ) : $V_{1}$ 147 ; $D_{n1}$ 146 ; $D_{10}$ $T_{2.3}$ $G_{2.4}$ 235 ; $T_{1}$ 227 ;

# १३६

युधिष्ठिर उवाच ।
के पूज्याः के नमस्कार्याः कथं वर्तेत केषु च ।
किमाचारः कीदृशेषु पितामह न रिष्यते ॥ १
भीष्म उवाच ।
ब्राह्मणानां परिभवः सादयेदपि देवताः ।
ब्राह्मणानां नमस्कर्ता युधिष्ठिर न रिष्यते ॥ २
ते पूज्यास्ते नमस्कार्या वर्तेथास्तेषु पुत्रवत् ।
ते हि लोकानिमान्सर्वान्धारयन्ति मनीषिणः ॥ ३
ब्राह्मणाः सर्वलोकानां महान्तो धर्मसेतवः ।
धनत्यागाभिरामाश्च वाक्संयमरताश्च ये ॥ ४
रमणीयाश्च भूतानां निधानं च धृतव्रताः ।
प्रणेतारश्च लोकानां शास्त्राणां च यशस्विनः ॥ ५
तपो येषां धनं नित्यं वाक्चैव विपुलं बलम् ।
प्रभवश्चापि धर्माणां धर्मज्ञाः सूक्ष्मदर्शिनः ॥ ६
धर्मकामाः स्थिता धर्मे सुकृतैर्धर्मसेतवः ।
यानुपाश्रित्य जीवन्ति प्रजाः सर्वाश्चतुर्विधाः ॥ ७
पन्थानः सर्वनेतारो यज्ञवाहाः सनातनाः ।
पितृपैतामहीं गुर्वीमुद्वहन्ति धुरं सदा ॥ ८
धुरि ये नावसीदन्ति विषमे सद्गवा इव ।
पितृदेवातिथिमुखा हव्यकव्याग्रभोजिनः ॥ ९

C. 13, 71
B. 13, 15
K. 13, 25
M. 13, 14

---

$G_{1,3}$ 239; $M_{1,2}$ 231; $M_3$ 232; $M_4$ 237. —*Śloka* no.: $Dn_1$ 141; $Dn_2$ 142.

— After the colophon, $M_{1-3}$ ins.:

640* जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेश महापुरुषपूर्वज ।

— After 13. 135, $V_1$ B Dn $D_{1,2,4-9}$ ins. a passage given in App. I (No. 18).

## 136

☞ This adhy. is missing in $D_3$ (cf. v. l. 13. 82. 37). $D_4$ is not collated for this adhy.

1 $D_9$ om. the ref. —$^b$) $Dn_1$ $M_{1,2,4}$ केषुचित्; $T_1$ तेषु च; $M_3$ केनचित् (for केषु च). —$^c$) $T_1$ कीदृशो हि; $G_2$ °शेन (for °शेषु).

2 $D_{10}$ om. the ref. —$^a$) $T_1$ साधारण: (for ब्राह्म- णानां). $D_2$ परिभवात्. —$^c$) $B_1$ ब्राह्मणान्वा; $D_2$ °णांस्तु (for °णानां). $Dn_2$ नमस्कृत्य (for °स्कर्ता). $Dn_1$ ब्राह्मणांस्तु नमस्कृत्य; $D_{10}$ S ब्राह्मणेभ्यो नमस्कृत्वा. —$^d$) $D_7$ रिष्यसे; $T_1$ °ति (for °ते).

3 $^a$) $D_{10}$ $T_3$ G संपूज्यास्ते; $T_1$ द्विजाः पूज्या; $M_4$ पूज्यास्ते तु (for ते पूज्यास्ते). —$^c$) $D_{10}$ T G $M_4$ ते हि सर्वानिमाँल्लोकान्. —$^d$) $Dn_1$ तारयंति (for धार°).

4 $D_{5-7,9}$ om. (hapl.) $4^c$–$7^b$. —$^c$) $D_{1,2}$ सर्व- (for धन-). —$^d$) $D_{10}$ S वाक्संयमधुराश्च ये.

5 $D_{5-7,9}$ om. 5 (cf. v. l. 4). $T_1$ om. (hapl.?) $5^{bc}$. —$^b$) $D_{10}$ $T_{2,3}$ $G_{2,4}$ नियमेन; $G_{1,3}$ नियमे च; M निधने च (for निधानं च). —$^c$) $D_{10}$ $T_{2,3}$ G कोशानां (for लोकानां). —$^d$) $T_2$ $G_2$ यशस्विनां.

6 $D_{5-7,9}$ om. 6 (cf. v. l. 4). —$^b$) $D_{8,10}$ $T_{2,3}$ $G_4$ धनं (for बलम्). —For $6^{ab}$, $T_1$ subst.:

641* महात्मनां ज्ञानविदां तप एव धनं परम् ।

—$T_1$ om. $6^c$–$13^d$. —$^c$) $D_{10}$ $T_{2,3}$ G $M_{2,3}$ प्रसवाश्; $M_{1,4}$ प्रसवश् (for प्रभवश्). $V_1$ B Dn $D_2$ [ए]व (for [अ]पि). —$^d$) $T_{2,3}$ G -दर्शना: (for -दर्शिनः).

7 $D_{5-7,9}$ om. $7^{ab}$ (cf. v. l. 4). $T_1$ om. 7 (cf. v. l. 6). —$^b$) $D_1$ $G_2$ सुकृते (for °तैर्). —$^c$) $V_1$ B Dn समाश्रित्य (for उपा°). $D_{10}$ S (except $M_4$; $T_1$ om.) तिष्ठंति (for जीवन्ति).

8 $T_1$ om. 8 (cf. v. l. 6). —$^a$) $D_{10}$ S (T1 om.) स्वर्ग- (for सर्व-). —$^c$) $T_2$ सर्वाम् (for गुर्वीम्). —$^d$) $D_{5,8,9}$ उद्वहंतो (for °हन्ति).

9 $T_1$ om. 9 (cf. v. l. 6). —$^a$) $T_{2,3}$ $M_4$ धुर्येण; $G_2$ युद्धेन; $M_3$ युधि ये (for धुरि ये). $D_{1,2,5-9}$ विषी- दंति (for [अ]वसीदन्ति) —$^b$) $D_{5-9}$ वहंत: (for विषमे). $D_{10}$ $T_3$ G सद्वया; $T_2$ सद्गवा (for सद्गवा). $V_1$ विषमे सुरसत्तम. —$^d$) $Dn_1$ $D_6$ -भोजना: (for -भोजिनः).

10 भोजनादेव ये लोकांस्त्रायन्ते महतो भयात् ।
10 10 दीपाः सर्वस्य लोकस्य चक्षुश्चक्षुष्मतामपि ॥ १०
सर्वशिल्पादिनिधयो निपुणाः सूक्ष्मदर्शिनः ।
गतिज्ञाः सर्वभूतानामध्यात्मगतिचिन्तकाः ॥ ११
आदिमध्यावसानानां ज्ञातारश्छिन्नसंशयाः ।
परावरविशेषज्ञा गन्तारः परमां गतिम् ॥ १२
विमुक्ता धुतपाप्मानो निर्द्वंद्वा निष्परिग्रहाः ।
मानार्हा मानिता नित्यं ज्ञानविद्भिर्महात्मभिः ॥ १३
चन्दने मलपङ्के च भोजनेऽभोजने समाः ।
समं येषां दुकूलं च शाणक्षौमाजिनानि च ॥ १४
तिष्ठेयुरप्यभुञ्जाना बहूनि दिवसान्यपि ।
शोषयेयुश्च गात्राणि स्वाध्यायैः संयतेन्द्रियाः ॥ १५
अदैवं दैवतं कुर्युर्दैवतं चाप्यदैवतम् ।
लोकानन्यान्सृजेयुश्च लोकपालांश्च कोपिताः ॥ १६
अपेयः सागरो येषामभिशापान्महात्मनाम् ।
येषां कोपाग्निरद्यापि दण्डके नोपशाम्यति ॥ १७
देवानामपि ये देवाः कारणं कारणस्य च ।
प्रमाणस्य प्रमाणं च कस्तानभिभवेद्बुधः ॥ १८
येषां वृद्धश्च बालश्च सर्वः संमानमर्हति ।
तपोविद्याविशेषात्तु मानयन्ति परस्परम् ॥ १९
अविद्वान्ब्राह्मणो देवः पात्रं वै पावनं महत् ।
विद्वान्भूयस्तरो देवः पूर्णसागरसंनिभः ॥ २०

10 T1 om. 10 ( cf. v. l. 6 ). — a) D5–9 M4 लोकास्त्रींस्; D10 G1. 3. 4 यैर्लोकांस्; T2 वै लोकांस् ( for ये लोकांस् ). — b) B5 Dn1 G1. 3 त्रायते; D6. 8. 9 त्रायंतो; M त्रायंति ( for त्रायन्ते ). — c) B1 Dn2 दीपः ( for दीपाः ). D5–9 प्रदीपाः सर्वलोकस्य. — d) D6. 7. 9 इव; D10 T2. 3 G तथा ( for अपि ).

11 T1 om. 11 ( cf. v. l. 6 ). — a) V1 B Dn -निधना; G2 -विधयो ( for -नि° ). D5–9 सर्वशिक्षाश्रुतिधना. — b) Bom. ed. मोक्ष- ( for सूक्ष्म- ). D6 -दर्शनाः. — d) D10 T2. 3 G अध्यात्मगतयः स्मृताः ( G1. 3 °यस्तथा ).

12 T1 om. 12 ( cf. v. l. 6 ). — a) D5 आदिमध्यावसानज्ञा. — M4 om. ( hapl.? ) $12^{c}$–$15^{d}$.

13 T1 om. 13 ( cf. v. l. 6 ). M4 om. 13 ( cf. v. l. 12 ). — a) Some MSS. धूत- ( for धुत- ). — d) V1 Dn3 ज्ञानवद्भिर्; D5 मानवद्भिर् ( for ज्ञानविद्भिर् ).

14 M4 om. 14 ( cf. v. l. 12 ). — a) D2 विमर्दे ( for चन्दने ). D1. 2 वा ( for च ). — b) Dn3 D8 T2 G M1–3 भोजनाभोजने समाः; D5–7. 9 भोजनासनत्राससा. — c) D10 T2. 3 G ए( T2 G1. 4 ये )षां दुकूलं तुल्यं च; T1 वासो येषां दुकूलाश्च. — d) V1 B Dn D7. 10 तथा; D1. 2 शाली-; D5 भांड-; D6. 9 साटी-; D8 शाणी- ( for शाण- ). T1 शाणमेणाजिनानि च.

15 M4 om. 15 ( cf. v. l. 12 ). — a) S ( M4 om. ) चापि ( for अपि ). — b) D3 च ( for [अ]पि ). — c) D6 शोषयंति ( for °येयुश्). — d) D5 स्वाध्याये. V1 D6–9 स्वाध्याये संजितेंद्रियाः; T1 साधयेयुर्यतेंद्रियाः.

16 cf. Manu. 9. 315. — a) Dn1 T2. 3 अदैव-; Dn2 अदेवं; T1 अथैवं ( for अदैवं ). B1 कुर्याद्; D1 कुर्या ( for कुर्युर् ). — b) D6. 7. 9 कुर्युर्देवमदैवतं; D10 S भस्म कुर्युश्च ते जगत्. — c) D1. 6–9 लोकपालान् ( for लोकानन्यान् ). V1 B3–5 Dn ते; B1 ये ( for च ). — d) D1. 5–9 लोकानन्यांश् ( for लोकपालांश् ). B2 तु ( for च ).

17 b) V1 B Dn D5–9 M1 अपि शापान्; T1 आसीच्छा°; T2 भीमक्रो° ( for अभिशा° ).

18 D5. 7 read $18^{bc}$ twice. — b) D5. 7 ( both second time ) कारणस्य च कारणं. — c) D5. 7 ( both first time ) प्रमाणं च प्रमाणस्य; D5. 7 ( both second time ) तेषां च वचनं नित्यं. — d) D10 T2. 3 G तस्मान्न ( for कस्तान् ).

19 a) D5–7. 9 M1–3 तेषां ( for येषां ). T1 च वृद्धो ( by transp ). — b) T1 पूज्या एव नसं शयः. — For $19^{ab}$, D10 T2. 3 G M4 subst. :

642* तेषां वृद्धाश्च बालाश्च सर्वे सन्मार्गदर्शिनः ।
[ T1 च वृद्धा ( for वृद्धाश्च ). ]

— T1 om. $19^{c}$–$20^{b}$. — c) B1 T2 -विशेषं तु; D1. 2. 5–9 °षाभ्यां ( for °षात्तु ). — d) M1–3 मानयेत ( for °यन्ति ).

20 T1 om. $20^{ab}$ ( cf. v. l. 19 ). D2 repeats $20^{ab}$ after $20^{cd}$. — a) D5. 6. 8. 9. वेद; D7 वेदः; D10 T3 G1 M1–3 देये ( for देवः ). — b) D2 ( second time ). 6–10 S ( T1 om. ) आवपनं ( for वै पावनं ).

अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत् ।
प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतं महत् ॥ २१
श्मशाने ह्यपि तेजस्वी पावको नैव दुष्यति ।
हविर्यज्ञेषु च वहन्भूय एवाभिशोभते ॥ २२
एवं यद्यप्यनिष्टेषु वर्तते सर्वकर्मसु ।
सर्वथा ब्राह्मणो मान्यो दैवतं विद्धि तत्परम् ॥ २३

इति श्रीमहाभारते अनुशासनपर्वणि षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥

## १३७

युधिष्ठिर उवाच ।
कां तु ब्राह्मणपूजायां व्युष्टिं दृष्ट्वा जनाधिप ।
कं वा कर्मोदयं मत्वा तानर्चसि महामते ॥ १
भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
पवनस्य च संवादमर्जुनस्य च भारत ॥ २
सहस्रभुजभृच्छ्रीमान्कार्तवीर्योऽभवत्प्रभुः ।
अस्य लोकस्य सर्वस्य माहिष्मत्यां महाबलः ॥ ३
स तु रत्नाकरवतीं सद्वीपां सागराम्बराम् ।
शशास सर्वां पृथिवीं हैहयः सत्यविक्रमः ॥ ४
स्ववित्तं तेन दत्तं तु दत्तात्रेयाय कारणे ।
क्षत्रधर्मं पुरस्कृत्य विनयं श्रुतमेव च ॥ ५
आराधयामास च तं कृतवीर्यात्मजो मुनिम् ।
न्यमन्त्रयत संहृष्टः स द्विजश्च वरैस्त्रिभिः ॥ ६ C. 13. 7190 B 13. 153. K. 13. 257. M. 13. 142.

21 = Manu. 9. 317. $D_{2}$ om. (hapl.) 21[ab]. $D_{5, 6, 9, 10}$ S om. (hapl.) 21[cd].

22 Cf. Manu. 9. 318. $G_{1}$ om. 22–23. $D_{1}$ damaged. —[a]) $T_{1}$ [ऽ]पि च (for ह्यपि). Dn3 $D_{5-9}$ $T_{2, 3}$ $G_{3}$ $M_{4}$ श्मशानेष्वपि तेजस्वी. —[b]) $D_{6-9}$ प्र- (for [ए]व). $D_{10}$ दूष्यंति; T $G_{3, 4}$ दूष्यते; $G_{2}$ M दुष्यते (for दुष्यति). —[c]) $D_{5}$ विधिवद् (for च वहन्). $V_{1}$ B Dn हविर्यज्ञे च विधिवद्; $D_{2, 10}$ $T_{2, 3}$ $G_{2-4}$ $M_{4}$ हविर्यज्ञं च ($T_{2}$ °ज्ञश्च) विवहन्; $T_{1}$ °र्यज्ञे च निवहन्; $M_{1-3}$ °र्यज्ञांश्च विवहन्. —[d]) Dn1 n2 गृह (for भूय). $B_{5}$ Dn2 [अ]ति-; $D_{10}$ हि (for [अ]भि-). $D_{5, 7}$ -वर्धते (for -शोभते).

23 = (var.) Manu. 9. 319. $G_{1}$ om. 23 (cf. v. l. 22). $T_{1}$ om. 23[ab]. —[a]) $D_{6}$ [अ]शिष्टेषु (for [अ]नि°). —[c]) $D_{10}$ S ($G_{1}$ om.) सर्वथा ब्राह्मणा मान्या. —[d]) $D_{5, 7}$ तं (for तत्).

Colophon om. in $B_{3}$. — *Parvan name* : $B_{1, 2}$ $D_{1}$ शांति. — *Sub-parvan* : $V_{1}$ $B_{1, 2, 4, 5}$ $D_{1, 2, 5-9}$ $M_{1-3}$ दानधर्म. — *Adhy. name* : $D_{1, 2, 5-9}$ ब्राह्मणपूजा; $D_{10}$ $T_{2, 3}$ $G_{1, 2}$ $M_{4}$ ब्राह्मणप्रशंसा; $G_{3}$ ब्राह्मणप्रशंसनं. — *Adhy. no.* (figures, words or both) : $V_{1}$ 149; Dn1 148; $T_{1}$ $M_{4}$ 228; $T_{2, 3}$ $G_{2, 4}$ 236; $G_{1, 3}$ 230; $M_{1, 2}$ 232; $M_{3}$ 233. — *Śloka no.* : Dn1, n2 23.

### 137

☞ This adhy. is missing in $D_{8}$ (cf. v. l. 13. 82. 37).

1 $G_{2}$ om. the ref. —[a]) $V_{1}$ B कां नु; $D_{4}$ किं वा; $D_{5-9}$ $M_{4}$ कां वा; $D_{10}$ T G $M_{1-3}$ कां त्वं (for कां तु). —[b]) $G_{2}$ नराधिप (for जना°). —[c]) $B_{1}$ $T_{2, 3}$ किं; $M_{1-3}$ क (for कं). $D_{10}$ $T_{2, 3}$ $G_{1, 3}$ धर्मोदयं (for कर्मो°). $D_{5-9}$ $T_{1}$ दृष्ट्वा (for मत्वा). $G_{2}$ कालधर्मोदयं मत्वा. —[d]) $V_{1}$ $D_{5}$ अर्चति (for °सि). $T_{1}$ महीपते (for महामते).

3 $D_{1, 2}$ om. 3–5. —[b]) $M_{2}$ महा- (for ऽभवत्). —[c]) $D_{4, 6, 9}$ अस्य सर्वस्य लोकस्य. —[d]) $G_{3}$ माहिष्मत्या.

4 $D_{1, 2}$ om. 4 (cf. v. l. 3). —[a]) T $G_{1, 3, 4}$ $M_{2}$ च (for तु). $G_{2}$ स च रक्षार्थमवनीं. —[b]) T G $M_{1, 4}$ सप्तद्वीपां ससागरां. —[c]) $V_{1}$ B $D_{10}$ $T_{2, 3}$ G $M_{4}$ शशास पृथिवीं सर्वां. —[d]) $T_{2, 3}$ $G_{1, 3, 4}$ M हेहयः (for है°).

5 $D_{1, 2}$ om. 5 (cf. v. l. 3). —[a]) $T_{2, 3}$ स्वं (for स्व-). $D_{10}$ S येन (for तेन). —[b]) $D_{10}$ $T_{2}$ G कर्मणे (for कारणे).

6 [a]) $G_{1, 3}$ हि (for च). —[b]) $D_{4}$ $T_{2}$ मुनिः (for

स वरैश्छन्दितस्तेन नृपो वचनमब्रवीत् ।
सहस्रबाहुर्भूयां वै चमूमध्ये गृहेऽन्यथा ॥ ७
मम बाहुसहस्रं तु पश्यन्तां सैनिका रणे ।
विक्रमेण महीं कृत्स्नां जयेयं विपुलव्रत ।
तां च धर्मेण संप्राप्य पालयेयमतन्द्रितः ॥ ८
चतुर्थं तु वरं याचे त्वामहं द्विजसत्तम ।
तं ममानुग्रहकृते दातुमर्हस्यनिन्दित ।
अनुशासन्तु मां सन्तो मिथ्यावृत्तं तदाश्रयम् ॥ ९
इत्युक्तः स द्विजः प्राह तथास्त्विति नराधिपम् ।
एवं समभवंस्तस्य वरास्ते दीप्ततेजसः ॥ १०

ततः स रथमास्थाय ज्वलनार्कसमद्युतिः ।
अब्रवीद्वीर्यसंमोहात्को न्वस्ति सदृशो मया ।
वीर्यधैर्ययशःशौचैर्विक्रमेणौजसापि वा ॥ ११
तद्वाक्यान्ते चान्तरिक्षे वागुवाचाशरीरिणी ।
न त्वं मूढ विजानीषे ब्राह्मणं क्षत्रियाद्वरम् ।
सहितो ब्राह्मणेनेह क्षत्रियो रक्षति प्रजाः ॥ १२
अर्जुन उवाच ।
कुर्यां भूतानि तुष्टोऽहं क्रुद्धो नाशं तथा नये ।
कर्मणा मनसा वाचा न मत्तोऽस्ति वरो द्विजः ॥ १३
पूर्वो ब्रह्मोत्तरो वादो द्वितीयः क्षत्रियोत्तरः ।

---

मुनिम्). D5 कार्तवीर्यार्जुनो मुनिं; D6.8.9 कृतवीरात्मजो मुनिं; D7 कार्तवीर्यात्मजो मुनिं. —c) V1 B Dn D8.9 तं तुष्टः; D1 से हृष्टः; D6.7.10 S संतुष्टः (G2 °ष्टं) (for संहृष्टः). —d) V1 B Dn द्विजश्चैनं (Dn2 °वं); D2 स द्विजांश्च; D5 द्विजश्चैव (for स द्विजश्च).

7 a) G2 गदितस्; G4 छादि° (for छन्दि°). —c) D10 S सहस्रबाहुता मेस्तु. —d) D10 G2 यूपमध्ये गृहो यथा; T1 भूमिमध्ये गृहं तथा; M धूममध्ये गृहे त(M4 य)था.

8 a) D4 महा-; D6.7.9 महद् (for मम). D1.5 वै; D4.6–9 M1–3 हि (for तु). —b) Dn2 D8 पश्यंतु (for पश्यन्तां). D4.6–9 सैन्यका (for सैनिका). B1 D10 रणे पश्यंतु सैनिकाः. —c) M4 सर्वां (for कृत्स्नां). —d) V1 B1 Dn1 D4.6–8.10 G -व्रतः (for -व्रत). T1 जयेयं संशितव्रतः. —e) D1–9 धर्मज्ञ (for संप्राप्य).

9 M1–3 om. 9ab. —a) D2.6.8.9 च (for तु). —b) Dn1 -सत्तमं. — T1 om. 9cd. —c) D5 त्वं; T2.3 G3 M1.3.4 तन् (for तं). —d) V1 D2 T3 [अ]निंदितः; M4 [अ]तंद्रितः (for [अ]निन्दित). —e) D1.2 मा (for मां). D1.2 नित्यं (for सन्तो). —f) D5 त्वदाश्रुतं; D6.9 ततो ह्यहं; D8 T1 त्वदाश्रयं (for तदा°). V1 B Dn मिथ्योद्वृत्तं (B1 °पेतं; Dn2 °द्वृत्ते) त्वदाश्रयं; D7 मिथ्यावृत्तिं ततो ह्ययं; D10 T2 °वृत्तादु- (T2 °द)पाश्रयं; T3 °वृत्तादपाश्रितं.

10 b) D4–9 G2 नराधिप (for °पम्). —c) S (except T1) भगवतस् (for समभवंस्). —d) D10 T2.3 G4 वराद्दीपिततेजसः; T1 °न्दत्त्वा स्वतेजसा; G1–3 M4 °दीप्तः स्वतेजसा; M1–3 °दीप्तश्च तेजसा.

11 a) D10 S गतः (for ततः). G4 स्व- (for स). —b) V1 B3–5 Dn2.n3 -समद्युतिं; B2 T G1.3.4 °प्रभं; D4.8 °न्वितः; D5 °न्वितं; G2 M °प्रभः (for °द्युतिः). —d) B4.5 G1.3.4 [ऽ]न्योस्ति; T1 वास्ति; G2 [ऽ]न्यस्मिन् (for न्वस्ति). V1 B3–5 Dn3 मम (for मया). Dn1 कोन्वस्ति पुरुषोत्तमः. —e) D2 वीर्यै धैर्यै; D6 धैर्यै वीर्यै; D8.9 T1 G1–3 धैर्यवीर्य-; D10 T2.3 G4 M4 धैर्यशौर्य- (for वीर्यधैर्य-). V1 B Dn1.n3 धैर्यवीर्यैर्यशःशौर्यैर्; Dn2 धैर्यै वीर्यै यशःशौर्यै; D5 धैर्यवीर्ययशोभिश्च; D7 धैर्यैर्वीर्ययशःशौर्यो; T1 धैर्यवीर्ययशःकामैर्; M1–3 धैर्यवीर्ययशःशौर्यैर्. —f) D6–9 तथा; M1–3 [अ]पि च (for [अ]पि वा).

12 a) V1 B1.2.4.5 चांतरीक्षे; D6.9 [ऽ]थांतरिक्षं (for चान्तरिक्षे). Dn2 तद्वाक्यांतेंतरिक्षाद्वै; D10 T1.2 G M1–3 °तेंतरिक्षे तं (T1 M1–3 वै); T3 M4 °तेंतरिक्षं (M4 °क्षे) तु. D8 corrupt. —c) M2 (*inf. lin.*) न (for वि-). —e) T2 रक्षितो; G1.3 विहितो; M4 गृहीतो (for सहितो). —f) V1 B Dn शास्ति वै; T1 पालयेत् (for रक्षति).

13 a) T2 M4 कुर्याद् (for कुर्यां). T3 कुर्यां भूतो हि दृष्टोहं. —b) D9 नये ह्यहं (for *तथा* नये). —d) T2 G4 वर- (for वरो).

14 T1 om. 14. —a) D10 पूर्व-; T2.3 G2.4 M2–4 पूर्वं (for पूर्वो). D2.5.6.8 ब्राह्मोत्तरो (for ब्रह्मो°). G1–3 पूर्वं ब्रा(G2 ब्र)ह्मोत्तरो (G1 °रे) वादः. —b) D10 T2.3 G M2.4 क्षत्रियः (for द्वितीयः). M1.3

त्वयोक्तौ यौ तु तौ हेतू विशेषस्त्वत्र दृश्यते ॥ १४
ब्राह्मणाः संश्रिताः क्षत्रं न क्षत्रं ब्राह्मणाश्रितम् ।
श्रितान्ब्रह्मोपधा विप्राः खादन्ति क्षत्रियान्भुवि ॥१५
क्षत्रियेष्वाश्रितो धर्मः प्रजानां परिपालनम् ।
क्षत्राद्वृत्तिर्ब्राह्मणानां तैः कथं ब्राह्मणो वरः ॥ १६
सर्वभूतप्रधानांस्तान्भैक्षवृत्तीनहं सदा ।
आत्मसंभावितान्विप्रान्स्थापयाम्यात्मनो वशे ॥ १७
कथितं ह्यनया सत्यं गायत्र्या कन्यया दिवि ।
विजेष्याम्यवशान्सर्वान्ब्राह्मणांश्चर्मवाससः ॥ १८
न च मां च्यावयेद्राष्ट्रात्त्रिषु लोकेषु कश्चन ।
देवो वा मानुषो वापि तस्माज्ज्येष्ठो द्विजादहम् ॥ १९
अद्य ब्रह्मोत्तरं लोकं करिष्ये क्षत्रियोत्तरम् ।
न हि मे संयुगे कश्चित्सोढुमुत्सहते बलम् ॥ २०
अर्जुनस्य वचः श्रुत्वा वित्रस्ताभून्निशाचरी ।
अथैनमन्तरिक्षस्थस्ततो वायुरभाषत ॥ २१
त्यजैनं कलुषं भावं ब्राह्मणेभ्यो नमस्कुरु ।
एतेषां कुर्वतः पापं राष्ट्रक्षोभो हि ते भवेत् ॥ २२
अथ वा त्वां महीपाल शमयिष्यन्ति वै द्विजाः ।
निरसिष्यन्ति वा राष्ट्राद्धतोत्साहं महाबलाः ॥ २३
तं राजा कस्त्वमित्याह ततस्तं प्राह मारुतः ।
वायुर्वै देवदूतोऽस्मि हितं त्वां प्रब्रवीम्यहम् ॥ २४

अर्जुन उवाच ।

अहो त्वयाद्य विप्रेषु भक्तिरागः प्रदर्शितः ।
यादृशं पृथिवी भूतं तादृशं ब्रूहि वै द्विजम् ॥ २५　C. 13. / B. 13. / K. 13. / M. 13.

---

क्षत्रियाः क्षत्रियोत्तमाः. — [c]) $D_{10}$ मया (for त्वया). $V_1$ B Dn $T_{2.3}$ $G_{2.4}$ M त्व($T_{2.3}$ $G_{2.4}$ म)योक्तौ हेतुयुक्तौ तौ ($V_1$ $B_{1.2.4}$ Dn तु). — [d]) $B_3$ $D_{1-9}$ $G_2$ $M_4$ तत्र (for त्वत्र). $D_{1.2.5.6.8}$ दृश्यतां (for °ते).

15 [a]) $D_8$ समिताः (for संश्रिताः). $T_1$ ब्राह्मण्यं संश्रितं क्षत्रं. — [b]) $T_1$ न क्षत्रं ब्रह्मसंश्रितं. — $T_1$ om. $15^{cd}$. — [c]) $D_{5.7.8}$ न ता ब्रह्मोपधं विप्राः; $D_6$ corrupt; $D_{10}$ $T_{2.3}$ G $M_4$ तान्ब्राह्मणाः कथं विप्राः; $M_{1-3}$ संश्रितान्ब्राह्मणः कथं (sic). — [d]) $M_{1-3}$ विप्रान्खादन्ति क्षत्रियाः.

16 [a]) $D_{1.2.4-9}$ स्थितो (for [आ]श्रितो). — [b]) $D_{4.6-9}$ लोकानां (for प्रजानां). — [c]) $D_{6.7.9}$ क्षत्रियाद् (hypermetric) (for क्षत्राद्). $T_3$ वृत्तं; $G_4$ वृद्धिर् (for वृत्तिर्). — [d]) $D_{4-9}$ तत्कथं; $D_{10}$ T G $M_4$ कथं वै (for तैः कथं).

17 [a]) $T_2$ $G_{1.2}$ सर्वतस्त्वप्रधानांस्तान्. — [b]) $Dn_3$ $T_1$ हतान् (for सदा). — [c]) $Dn_2$ अर्थ- (for आत्म-). $T_1$ -संभावनान् (for °वितान्). — [d]) $T_1$ स्थापये हि (for °यामि).

18 [a]) $D_{10}$ $G_4$ corrupt. $Dn_3$ तु (for हि). — [b]) $D_{10}$ $T_{2.3}$ $G_{2.4}$ $M_{2.3}$ गायंत्या (for गायत्र्या). $T_1$ गायंत्या देवकन्यया. — [c]) $T_1$ विशिष्यामि; $T_3$ $G_2$ $M_{1-3}$ विशे° (for विजे°).

19 [a]) $D_{10}$ $T_{2.3}$ G M स्थापयेद् (for च्याव°). $T_1$ द्रष्टुं (for राष्ट्रात्). — [b]) $D_{10}$ $T_{2.3}$ G किंचन (for कश्चन). — [d]) $D_{6.7.9}$ तस्माद्वक्ष्ये द्विजानहं; $D_{8.10}$ $T_{2.3}$ G M तस्माज्जे($T_{2.3}$ $G_1$ °द्दे)ष्ठे द्विजानहं; $T_1$ तस्मादत्र विशाम्यहं.

20 [a]) $G_3$ लोके (for लोकं). — [b]) $D_8$ करिष्ये क्षत्रियोत्तमं. — [c]) $T_1$ संशयः (for संयुगे).

21 $T_1$ om. $21^{bc}$. — [b]) $D_{10}$ S ($T_1$ om.) संत्रस्ता (for वि°). $D_6$ च (for [अ]भून्). — [c]) Some MSS. अंतरीक्षस्थस्. — [d]) $D_{1.2}$ तदा (for ततो).

22 [a]) $T_2$ [इ]मं (for [ए]नं). $D_{10}$ $T_3$ G $M_4$ त्यजेमं कल्मषं भावं. — [c]) $D_1$ $T_{2.3}$ कुर्वतां (for °तः). — [d]) $M_{2.3}$ राष्ट्रक्षेपो (for °क्षोभो). $D_{5.7}$ [ऽ]पि (for हि). $D_8$ तं; $T_1$ तद् (for ते). $V_1$ B Dn राष्ट्रक्षोभो भविष्यति.

23 [a]) $T_1$ अद्य (for अथ). $D_{10}$ S च (for वा). $G_4$ त्वा (for त्वां). $B_2$ $G_2$ महीपालं. — [c]) $B_1$ $D_{1.2}$ वै ($D_2$ वा) राज्याद्; $B_2$ $Dn_2$ वै राष्ट्राद्; $D_{4-9}$ राष्ट्राच्च; $D_{10}$ $T_{2.3}$ $G_4$ M ते राज्यं (for वा राष्ट्राद्). $T_1$ नाशयिष्यंति ते राज्यं; $G_{1-3}$ विनशिष्यति ते राज्यं. — [d]) $Dn_2$ हतोत्साहं; $T_{1.3}$ महोत्साहा (for हतोत्साहं). $V_1$ B $Dn_{1.n3}$ $D_2$ महाव्रताः; G °बलं (for °बलाः). $D_1$ हतोत्साहा महाव्रताः; $D_{4-9}$ ततो मैवं ($D_5$ नैनं; $D_7$ नैवं) वदिष्यति.

24 $B_5$ om. $24^{ab}$. — [b]) $M_4$ भूत- (for प्राह). — [c]) $D_4$ -भूतानां; $D_{6.7}$ -भूतोस्मि (for -दूतोऽस्मि). — [d]) $T_1$ ततस् (for हितं). $D_{1.2}$ त्वाद्य (for त्वां प्र-).

कक्षसेनश्च राजर्षिर्ये चान्ये नानुकीर्तिताः ॥ ५०
मा विघ्नं मा च मे पापं मा च मे परिपन्थिनः ।
ध्रुवो जयो मे नित्यं स्यात्परत्र च परा गतिः ॥ ५१

इति श्रीमहाभारते अनुशासनपर्वणि एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥

---

$_{6.8}$ च (for न). — *After 50*, $V_1$ B $D_n$ $D_{2.3.4-8}$ ins.:

711* कल्यमुत्थाय यो नित्यं संध्ये द्वेऽस्तमयोदये ।
पठेच्छुचिरनावृत्तः स धर्मफलभाग्भवेत् ।
देवा देवर्षयश्चैव स्तुता राजर्षयस्तथा ।
पुष्टिमायुर्यशः स्वर्गं विधास्यन्ति ममेश्वराः ।

[ (L. 1) $D_{2.3.6-7}$ काल्यम्; $D_4$ काल्मम् (for कल्यम्). $D_8$ मर्त्यः (for नित्यं). $B_{1.2.4.5}$ $D_{1-3}$ संध्ये देवतमनोऽरये (for the post. half). — (L. 2) $D_{n1}$ अनावृत्तिः; $D_3$ सुसंवृत्तः; $D_{1-6.8}$ समावृत्तः; $D_7$ समावृत्तं (for अनावृत्तः). — (L. 3) $D_{n3}$ $D_{1-8}$ तथा (for स्तुता). $D_{1-8}$ [ऽ]पि च (for तथा). — (L. 4) $D_1$ चैव (for स्वर्गं). $B_4$ $D_{n8}$ $D_{1.3}$ महेश्वराः; $D_{1-3}$ न संशयः (for ममेश्वराः).]

51 $D_9$ missing (cf. v. l. 39). — [a]) $D_1$ ते (for मे). $D_{4.6.8}$ शोको (for पापं). — [b]) $D_1$ ते (for मे). — [c]) $D_{1.2}$ च (for मे). — [d]) $V_1$ $B_{3-5}$ $D_n$ $D_{5-8}$ शुभा गतिः; $B_1$ शुभा मतिः (for परा गतिः). — For 51, S ($T_1$ $G_2$ om.) subst.:

712* नमस्तेभ्यो नमस्तेभ्यो मा च मे परिपन्थिनः ।
परात्परतरा चैव गतिः स्यादिति तत्पठेत् ।

— $T_2$ M ins. after 51: $T_3$ after the colophon:

ॐ नमो भगवते वासुदेवाय । ॐ नमो भगवते पुरुषोत्तमाय ।
ॐ नमः सर्वलोकगुरवे । ॐ नमः सर्वलोकपित्रे ।
ॐ नमः सर्वलोकपितामहाय । ॐ नमः सर्वलोकप्रपितामहाय ।
ॐ नमः सर्वलोकप्रधानाय । ॐ नमः सर्वलोकेश्वराय ।
ॐ नमः सर्वलोकविशिष्टाय । ॐ नमः सर्वलोकसुखाय ।
ॐ नमः सर्वलोकसुखप्रदाय । ॐ नमः सर्वलोककर्त्रे ।
ॐ नमः सर्वलोकभर्त्रे । ॐ नमः सर्वलोकहर्त्रे ।
ॐ नमः सर्वलोकनिधये । ॐ नमः सर्वलोकहिताय ।
ॐ नमः सर्वलोकहितकराय । ॐ नमः सर्वलोकशिवाय ।
ॐ नमः सर्वलोकशिवकराय । ॐ नमः सर्वलोकभवाय ।
ॐ नमः सर्वलोकोद्भवाय । सर्वलोकोद्भवकराय ।
ॐ विष्णवे प्रभविष्णवे ।

[ (L. 3) $M_4$ om. the second half. — (L. 4) $T_3$ om. नमः in the second half. — (L. 5) $T_3$ om. the second half. — After line 5, $M_1$ ins. ॐ नमः सर्वलोकसुखकराय. — (L. 7) $T_2$ om. the second half. $T_3$ -नियंत्रे (for -हर्त्रे). — $T_3$ om. line 8, the second half of line 9 and line 10. — (L. 10) $M_1$ -प्रदाय (for -भवाय). — (L. 11) $T_3$ om. the first half. — After line 11, $T_2$ ins. ॐ नमो नारायणाय । ॐ नमः, while $T_3$ ins. after line 11:

713* अविकाराय शुद्धाय नित्याय परमात्मने ।
सदैकरूपरूपाय विष्णवे प्रभविष्णवे ।

Colophon missing in $D_9$; om. in $D_{10}$ $T_{1.2}$ G $M_4$. — *Parvan name*: $D_{1.2}$ शांति°. — *Sub-parvan*: $V_1$ $D_{1.2.4-6}$ दानधर्म°. — *Adhy. name*: $V_1$ वंशानुकीर्तनं; $D_1$ ऋषिवंशानुकीर्तनं; $D_{2.4-8}$ देवर्षिवंशानुकीर्तनं; $T_3$ पुण्यपुरुषकथनं. — *Adhy. no.* (figures, words or both): $T_3$ 234; $M_{1.2}$ 230; $M_3$ 231. — *Śloka no.*: $D_{n1}$ 62; $D_{n2}$ 61. — After this adhy., $D_{4.5}$ ins. passages given in App. I (Nos. 14, 14A and 14B).

# १५२

वैशंपायन उवाच ।

तूष्णींभूते तदा भीष्मे पटे चित्रमिवार्पितम् ।
मुहूर्तमिव च ध्यात्वा व्यासः सत्यवतीसुतः ।
नृपं शयानं गाङ्गेयमिदमाह वचस्तदा ॥ १
राजन्प्रकृतिमापन्नः कुरुराजो युधिष्ठिरः ।
सहितो भ्रातृभिः सर्वैः पार्थिवैश्चानुयायिभिः ॥ २
उपास्ते त्वां नरव्याघ्र सह कृष्णेन धीमता ।
तमिमं पुरयानाय त्वमनुज्ञातुमर्हसि ॥ ३
एवमुक्तो भगवता व्यासेन पृथिवीपतिः ।
युधिष्ठिरं सहामात्यमनुजज्ञे नदीसुतः ॥ ४
उवाच चैनं मधुरं ततः शांतनवो नृपः ।
प्रविशस्व पुरं राजन्व्येतु ते मानसो ज्वरः ॥ ५
यजस्व विविधैर्यज्ञैर्बह्वन्नैः स्वाप्तदक्षिणैः ।
ययातिरिव राजेन्द्र श्रद्धादमपुरःसरः ॥ ६
क्षत्रधर्मरतः पार्थ पितॄन्देवांश्च तर्पय ।
श्रेयसा योक्ष्यसे चैव व्येतु ते मानसो ज्वरः ॥ ७  C. 13. 765[…] B. 13. 167. K. 13 272. M. 13. 154

## 152

☞ This adhy. is missing in D3 (cf. v. l. 13. 82. 37).

Before 1, V1 B Dn D1. 2. 4–9 ins.:

714*  जनमेजय उवाच ।
शरतल्पगते भीष्मे कौरवाणां धुरंधरे ।
शयाने वीरशयने पाण्डवैः समुपस्थिते ।
युधिष्ठिरो महाप्राज्ञो मम पूर्वपितामहः ।
धर्माणामागमं श्रुत्वा विदित्वा धर्मसंशयान् ।
दानानां च विधिं श्रुत्वा छिन्नधर्मार्थसंशयः । [5]
यदन्यदकरोद्विप्र तन्मे शंसितुमर्हसि ।
वैशंपायन उवाच ।
अभून्मुहूर्तं स्तिमितं सर्वं तद्राजमण्डलम् ।

[(L. 2) D4 शयानं. B3 समुपागते; D4. 6–9 °पस्थितैः (for °पस्थिते). —(L. 3) D1 महाप्रज्ञो; D2 °तेजा (for °प्राज्ञो). —(L. 4) D1 सागरं (for आगमं). B1 -संचयान्; Dn3 -संश्रयात् (for -संशयान्). D6–8 विदित्वा सर्वसंशयं (for the post. half). — D4 om. (hapl.) line 5. —(L. 6) D4–7. 9 क्षिप्रं (for विप्र). —(L. 7) D1. 2. 4–9 तत्सर्वं स्तिमितं (for स्तिमितं सर्वं तद्).]

1 Some MSS. om. the ref. —$^{a}$) D6–9 तूष्णीभूते. V1 B Dn ततस्तस्मिन्; D5. 10 S ततो (D5 °था) भीष्मे (for तदा भीष्मे). — T1 G2 M om. 1$^{bc}$. —$^{b}$) D10 T2. 3 G1. 3. 4 पटे चित्र इवार्पिते. —$^{c}$) D2 तु ध्यात्वा; D4 तं वृद्धो; D5 तद्दृष्ट्वा; D6–9 तं दृष्ट्वा; D10 T2. 3 G4 तं ध्यात्वा (for च ध्यात्वा). —$^{e}$) D4–9 भृशं (for नृपं). —$^{f}$) D10 T1. 3 G1. 3. 4 M त्वरन्; T2 स्मरन् (for तदा). D2 इदं वचनमब्रवीत्.

2 Before 2, T3 G1. 3. 4 ins. व्यासः. —$^{b}$) M1–3 कुंतीपुत्रो (for कुरुराजो). — M4 om. 2$^{cd}$. —$^{c}$) D8 भ्रातृभिः सहितः सर्वैस्. —$^{d}$) D4–9 तथा चैव (D9 वै च) (for पार्थिवैश्च).

3 $^{a}$) D4. 6–9 एवं गते; T2. 3 M1–3 उपास्ते त्वा; G1. 3 °स्तेसौ (for °स्ते त्वां). D1. 2 -श्रेष्ठ (for -व्याघ्र). —$^{c}$) D4. 6. 7. 9 तमिमं पुरुषव्याघ्र; D10 S °मं पुनरागंतुं. —$^{d}$) V1 B Dn समनु-; D4. 6. 9 त° (for त्व°). T G M4 अनुज्ञातुं त्वमर्हसि.

4 Before 4, D10 T2. 3 G1. 4 ins. वैशंपायन उवाच. —$^{b}$) D4. 6. 7. 9 व्यासेन सहितः सुतः. —$^{d}$) D4–9 [ऽ]रिसूदनः (for नदीसुतः).

5 T1 G2 M om. 5$^{ab}$. —$^{b}$) V1 B Dn D2 नृपं (for ततः). —$^{c}$) V1 B Dn1. n2 पुरीं; M4 महा- (for पुरं). T2 शीघ्रं (for राजन्). —$^{d}$) D4–10 S धर्मे ते धी(D5 दी-; D10 T2. 3 G ध्रि)यतां मनः.

6 $^{b}$) M1–3 स्वधनैः; M4 स्वाद्वन्नैः (for बह्वन्नैः). B1 प्राप्त-; Dn2 चाप्त-; D4–9 आप्त- (for स्वाप्त-). D10 T1 G पावनैराप्तदक्षिणैः. — T1 om. 6$^{c}$–7$^{d}$. G2 om. 6$^{cd}$. —$^{c}$) D1. 2 राजर्षे (for राजेन्द्र). —$^{d}$) T2 -पुरःसरं (for °रः).

7 T1 om. 7 (cf. v. l. 6). —$^{a}$) D5–9 क्षात्र- (for

रञ्जयस्व प्रजाः सर्वाः प्रकृतीः परिसान्त्वय ।
सुहृदः फलसत्कारैरभ्यर्चय यथार्हतः ॥ ८
अनु त्वां तात जीवन्तु मित्राणि सुहृदस्तथा ।
चैत्यस्थाने स्थितं वृक्षं फलवन्तमिव द्विजाः ॥ ९
आगन्तव्यं च भवता समये मम पार्थिव ।
विनिवृत्ते दिनकरे प्रवृत्ते चोत्तरायणे ॥ १०
तथेत्युक्त्वा तु कौन्तेयः सोऽभिवाद्य पितामहम् ।
प्रययौ सपरीवारो नगरं नागसाह्वयम् ॥ ११
धृतराष्ट्रं पुरस्कृत्य गान्धारीं च पतिव्रताम् ।
सह तैरृषिभिः सर्वैर्भ्रातृभिः केशवेन च ॥ १२
पौरजानपदैश्चैव मन्त्रिवृद्धैश्च पार्थिवः ।
प्रविवेश कुरुश्रेष्ठ पुरं वारणसाह्वयम् ॥ १३

इति श्रीमहाभारते अनुशासनपर्वणि द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥

॥ समाप्तं दानधर्मपर्व ॥

# १५३

वैशंपायन उवाच ।
ततः कुन्तीसुतो राजा पौरजानपदं जनम् ।
पूजयित्वा यथान्यायमनुजज्ञे गृहान्प्रति ॥ १
सान्त्वयामास नारीश्च हतवीरा हतेश्वराः ।

---

क्षत्र-). D1. 8 G1. 2 -धर्मं (for -धर्म-). — b) D1. 8 G1 पितृ- (for पितॄन्). D2. 10 T2. 8 G1. 2. 4 तर्पयन् (for °य). G2 श्रद्धावांश्चैव तर्पय. — c) D1. 2. 4-9 ह्येवं; D10 S (T1 om.) राजन् (for चैव).

8 a) D5 रंजयंश्च (for °यस्व). — b) D1-9 प्रकृतीः पालयस्व च. — T1 om. 8cd. — d) V1 B Dn अर्चयस्व; D6. 8 M1-3 अभ्यर्च्य च (for °र्चय). D1. 2 यथाविधि (for °र्हतः).

9 a) D1 M2. 8 त्वा (for त्वां). D10 T G M4 उप- (for तात). — b) M1-8 च ते (for तथा). — c) D2. 8 -स्थान- (for -स्थाने). — d) D1-9 [अं]डजाः (for द्विजाः).

10 b) D10 T G M4 साधयस्वेह पार्थिव; M1-3 समये पार्थिवर्षभ. — c) G2. 8 तदा राजन् (for दिनकरे).

11 Before 11, T2. 3 ins. वैशंपायनः. — a) V1 B1. 8 Dn1 T2. 8 G च; B2 [अ]थ; B4 om.; Dn2 स (for तु). — d) D1. 2 पुरं वारणसाह्वयं.

12 b) D4 यशस्विनीं (for पतिव्रताम्). — c) D10 T3 G चैव (for सर्वैर्). D4-9 सहितो मुनिभिः सर्वैर्; T8 सबलैः सर्षिभिश्चैव; M4 सहितैरृषिभिश्चैव. — d) D9 वै (for च). D10 S भ्रातृभिश्च समन्वि(G1. 8 M4 °मंत)तः.

13 b) Dn1 मति-; D1 मंत्र- (for मन्त्रि-). D5-1. 9 T3 पार्थिवैः (for °वः). — c) B Dn D2 कुरुश्रेष्ठः; D1-9 नृपश्रेष्ठः; D10 S पुरश्रेष्ठं (for कुरुश्रेष्ठ). — d) D10 T2. 8 G तदा (for पुरं).

Colophon. — *Parvan name :* B2-5 Dn8 D1 शांति-. — *Sub-parvan :* V1 B Dn1. n2 D1. 5-9 दानधर्म-. — *Adhy. name :* D1 गजपुरप्रवेशः; D2 हस्तिनापुरप्रवेशः; T8 G8 युधिष्ठिरप्रतिप्रयाणं; M1-8 सर्वसंशयच्छेदः. — *Adhy. no. (figures, words or both) :* V1 164; Dn1 163; D10 T2. 8 G2. 4 250; T1 G1. 8 244; M1. 2 246; M8 247; M4 242. — *Śloka no. :* Dn1. n2 17.

## 153

☞ This adhy. is missing in D8 (cf. v. l. 13. 82. 37).

1 Before the ref., D2 ins. अथ भीष्मस्वर्गारोहणपर्व. — a) M1-3 वाचा (for राजा). — b) D5 दृष्ट्वा (for पौर-). — d) B1 अन्वयास्त्व- (for अनुजज्ञे). G2 M4 गृहं (for गृहान्). D4 मनुजेंद्र प्रति गृहान्.

2 a) D1. 2 नार्यश्च (for नारीश्च). B1 गत्वा तुतोष नारीश्च. — b) D1-7. 9 हतनाथा; D10 T2. 3 G M4 °पुत्रा (for °वीरा). D1. 2 हतप्रजाः (for हतेश्वराः). — c)

विपुलैरर्थदानैश्च तदा पाण्डुसुतो नृपः ॥ २
सोऽभिषिक्तो महाप्राज्ञः प्राप्य राज्यं युधिष्ठिरः ।
अवस्थाप्य नरश्रेष्ठः सर्वाः स्वप्रकृतीस्तदा ॥ ३
द्विजेभ्यो बलमुख्येभ्यो नैगमेभ्यश्च सर्वशः ।
प्रतिगृह्याशिषो मुख्यास्तदा धर्मभृतां वरः ॥ ४
उषित्वा शर्वरीः श्रीमान्पञ्चाशन्नगरोत्तमे ।
समयं कौरवाग्र्यस्य सस्मार पुरुषर्षभः ॥ ५
स निर्ययौ गजपुराद्याजकैः परिवारितः ।
दृष्ट्वा निवृत्तमादित्यं प्रवृत्तं चोत्तरायणम् ॥ ६
घृतं माल्यं च गन्धांश्च क्षौमाणि च युधिष्ठिरः ।
चन्दनागरुमुख्यानि तथा कालागरूणि च ॥ ७
प्रस्थाप्य पूर्वं कौन्तेयो भीष्मसंसाधनाय वै ।
माल्यानि च महार्हाणि रत्नानि विविधानि च ॥ ८
धृतराष्ट्रं पुरस्कृत्य गान्धारीं च यशस्विनीम् ।
मातरं च पृथां धीमान्भ्रातॄंश्च पुरुषर्षभः ॥ ९
जनार्दनेनानुगतो विदुरेण च धीमता ।
युयुत्सुना च कौरव्यो युयुधानेन चाभिभो ॥ १०
महता राजभोग्येन परिबर्हेण संवृतः ।
स्तूयमानो महाराज भीष्मस्याग्नीननुव्रजन् ॥ ११
निश्चक्राम पुरात्तस्माद्यथा देवपतिस्तथा । C. 13. 77 B. 13. 16 K. 13. 27 M. 13. 15

Dn3 -मानैः ( for -दानैश् ). V1 B2. 3. 5 Dn1. n3 स ( for च ). B1 विपुलैरतुलैर्दानैस्. — d) D1. 6. 9 तथा; D10 S ततः ( for तदा ). B1 Dn1 G2 नृप ( for नृपः ).

3 a) B2 महाराज ( for °प्राज्ञः ). — b) G4 राष्ट्रं ( for राज्यं ). — c) D10 T G2. 4 M उप- ( for अव- ). B3 D1. 2. 8 T3 M1–3 नरश्रेष्ठ ( for °श्रेष्ठः ). — d) D2 T1 G1–3 M तु; T2. 3 G4 च ( for स्व- ). V1 B3–5 Dn1. n3 ततः; B1. 2 Dn2 S तथा ( for तदा ). D4–7. 9 सर्वाः प्रकृतयस्तदा.

4 a) V1 B Dn3 D8 गण-; Dn1 गुण- ( for बल- ). — b) D10 S निश्यशः ( for सर्वशः ). — d) V1 B Dn तथा; D10 S ततो ( for तदा ).

5 a) T3 G शर्वरीं ( for °रीः ). M1–3 धीमान् ( for श्री° ). — b) T3 G पंचाहं ( for °शन् ). — d) B2 Dn3 G2 सस्मार पुरुषर्षभ ( G2 °भं ); D4–9 °र भरतर्षभ. — After 5, T1 ins.:

715* ततश्च पुण्डरीकाक्षमाह धर्मभृतां वरः ।
भगवन्योगयुक्तोऽसि तूष्णीं ध्यायसि शत्रुहन् ।
ब्रूहि मां पुरुषश्रेष्ठ आज्ञाप्यो भवता ह्यहम् ।
ध्यायस्व पुण्डरीकाक्ष श्रेयो मे परमं हितम् ।
श्रीभगवान् ।
शरतल्पगतो भीष्मः शाम्यन्निव हुताशनः । [5]
मां ध्याति पुरुषव्याघ्रस्ततो मे तद्गतं मनः ।

6 T1 om. $6^{ab}$. — a) D8 नाग- ( for गज- ). D4 निर्ययौ नगरादश्वै. — b) D4 रथैश्च ( for याजकैः ). B2 -चेष्टितः ( for -वारितः ). — c) D10 T3 G ततो ( for दृष्ट्वा ). D4 कालं च ( for आदित्यं ).

7 a) V1 D4. 8 घृतमाल्यं; T1 घृतकुंभांश् ( for घृतं माल्यं ). V1 सु- ( for the first च ). — T1 om. $7^{c}$–$8^{d}$. — c) Some MSS. चंदनागुरु-. D5 -मुख्यांश्च ( for -मुख्यानि ). — d) D10 [अ]पि ( for च ). V1 B Dn D1. 2 तथा कालीयकान्यपि ( B1 D1 °नि च ); S ( T1 om. ) तथा काळागुरूणि च.

8 T1 om. 8 ( cf. v. l. 7 ). — a) T3 G4 तथा प्रस्थाप्य कौंतेयो. — b) D5. 7 च ( for वै ). V1 B Dn भीष्मसंस्करणाय च. — c) V1 B Dn1. n3 D2 वरार्हाणि ( for महा° ).

9 d) B1. 3 Dn1 G2 भ्रातॄंश्च पुरुषर्षभान् ( B3 G2 °भ ); B4. 5 D1. 2. 4–9 T2 G1 °श्च भरतर्षभ ( B4. 5 D4. 5 T2 G4 °भः ). — For $9^{cd}$, T1 subst.:

716* भ्रातॄंश्चैव पुरस्कृत्य मातरं च पृथामपि ।

10 T1 om. $10^{ab}$. — d) V1 B Dn वा विभो; D6 च प्रभुः; T1 चाभिभूः; G4 चापि भो ( for चाभिभो ).

11 a) B2 partly damaged. Dn1 -भोगेन; Dn2 T1 M1–3 -योग्येन ( for -भो° ). B6 राजभोग्येन महता. — b) D4. 5 G2 पारि- ( for परि- ). B1. 2 -वारेण ( for -बर्हेण ). D1 संहतः; D2 संयुतः ( for संवृतः ). B3 पारिबर्हेण संभृतः. — c) B Dn महातेजा; D10 T2. 3 G4 M °राजो ( for °राज ). — d) G2 M [अ]ग्निम्. T G1 भीष्मस्यांतिकमागमत् ( T2 G1 °माव्रजन् ); G3. 4 °स्यांतमनुव्रजन्.

12 c) D4. 6. 8. 9 T1 कुरुक्षेत्रं. — d) Dn3 G3 तदा; D5 तथा ( for ततः ). B1 D5 नृप; M नृपः ( for

आससाद कुरुक्षेत्रे ततः शांतनवं नृपम् ॥ १२
उपास्यमानं व्यासेन पाराशर्येण धीमता ।
नारदेन च राजर्षे देवलेनासितेन च ॥ १३
हतशिष्टैर्नृपैश्चान्यैर्नानादेशसमागतैः ।
रक्षिभिश्च महात्मानं रक्ष्यमाणं समन्ततः ॥ १४
शयानं वीरशयने ददर्श नृपतिस्ततः ।
ततो रथादवारोहद्भ्रातृभिः सह धर्मराट् ॥ १५
अभिवाद्याथ कौन्तेयः पितामहमरिंदमम् ।
द्वैपायनादीन्विप्रांश्च तैश्च प्रत्यभिनन्दितः ॥ १६
ऋत्विग्भिर्ब्रह्मकल्पैश्च भ्रातृभिश्च सहाच्युतः ।
आसाद्य शरतल्पस्थमृषिभिः परिवारितम् ॥ १७
अब्रवीद्भरतश्रेष्ठं धर्मराजो युधिष्ठिरः ।
भ्रातृभिः सह कौरव्य शयानं निम्नगासुतम् ॥ १८
युधिष्ठिरोऽहं नृपते नमस्ते जाह्नवीसुत ।
शृणोषि चेन्महाबाहो ब्रूहि किं करवाणि ते ॥ १९
प्राप्तोऽस्मि समये राजन्नग्नीनादाय ते विभो ।
आचार्या ब्राह्मणाश्चैव ऋत्विजो भ्रातरश्च मे ॥ २०
पुत्रश्च ते महातेजा धृतराष्ट्रो जनेश्वरः ।
उपस्थितः सहामात्यो वासुदेवश्च वीर्यवान् ॥ २१
हतशिष्टाश्च राजानः सर्वे च कुरुजाङ्गलाः ।
तान्पश्य कुरुशार्दूल समुन्मीलय लोचने ॥ २२
यच्चेह किंचित्कर्तव्यं तत्सर्वं प्रापितं मया ।
यथोक्तं भवता काले सर्वमेव च तत्कृतम् ॥ २३
एवमुक्तस्तु गाङ्गेयः कुन्तीपुत्रेण धीमता ।

---

नृपम्). $T_1$ यत्र शांतनवो नृपः. — After 12, $T_1$ reads $15^{ab}$.

13 $^c$) $D_{1.2}$ राजेंद्र ( for राजर्षे ).

14 $^a$) $T_1$ हतशेषैर् ( for °शिष्टैर् ). — $M_4$ om. $14^c$–$15^d$. — $^c$) $D_{1.2}$ $T_1$ $M_{1-3}$ तं ( for च ).

15 $M_4$ om. 15 ( cf. v. l. 14 ). $G_{1.3}$ om. ( hapl. ) $15^{ab}$. $D_4$ reads $15^{ab}$ twice; $T_1$ reads it after 12. — $^a$) $D_4$ ( both times ) शयानं वीरमासाद्य. — $^b$) $D_{1.2}$ नृपतिं ( for °तिस् ). $T_3$ तदा ( for ततः ). — After $15^{ab}$, $T_1$ ins. :

717* ध्यायन्तं परमात्मानं कृष्णधर्मं सनातनम् ।

— After the above, $T_1$ reads $16^{cd}$. — $^c$) $G_4$ तदा ( for ततो ). $V_1$ B Dn अवातीर्य; $D_{4-9}$ °रुह्य ( for °रोहद् ). — $^d$) $D_2$ धर्मवित् ( for °राट् ).

16 $D_1$ om. 16–17. $B_4$ repeats $16^{ab}$ after $17^{ab}$. $V_1$ $B_{1-3.5}$ $Dn_{1.}n_3$ $T_1$ repeat $16^{ab}$ after 17. — $^a$) $D_{4-7.9}$ कौंतेयस्तैः परिवृतः. — $^b$) $D_4$ अरिंदमः; $D_{6.9}$ °दम. — $T_1$ reads $16^{cd}$ after 717*. — $^d$) $D_2$ [ए]-वाप्यभि-; $D_{4-7.9}$ नित्याभि- ( for प्रत्यभि- ). — For $16^{cd}$, $D_{10}$ S subst. :

718* द्वैपायनप्रभृतिभिर्मुनिभिः प्रतिनन्दितः ।
[ $T_1$ परिवारितं ( for प्रतिनन्दितः ). ]

17 $D_1$ om. 17 ( cf. v. l. 16 ). — $^a$) $T_2$ ऋषिभिर् ( for ऋत्विग्भिर् ). $D_2$ देव- ( for ब्रह्म- ). — $^b$) $V_1$ $B_{1.3}$ Dn भ्रातृभिः सह धर्मजः ( $B_1$ °राट् ); $B_{4.5}$ $T_1$ °भिः परिवारितः ( $T_1$ °तं ). — After $17^{ab}$, $B_4$ repeats $16^{ab}$; while $T_1$ ins. after $17^{ab}$ :

719* माधवेन महाराजः कृष्णेनाक्लिष्टकर्मणा ।

— $B_4$ om. $17^{cd}$. After 17, $V_1$ $B_{1-3.5}$ $Dn_{1.}n_3$ $T_1$ repeat $16^{ab}$.

18 $^a$) $D_{10}$ S ( except $T_1$ ) -श्रेष्ठो ( for -श्रेष्ठं ). — $^c$) $V_1$ $B_3$ $Dn_2$ $M_{1-3}$ कौरव्यः; $D_{1.2.10}$ T G °व्यं ( for °व्य ).

20 $^c$) $D_{4-10}$ $T_{2.3}$ G M [इ]मे ( for [ए]व ). $Dn_1$ $T_1$ आचार्यान्ब्राह्मणांश्चैव. — $^d$) $D_{4.6.8}$ ऋत्विजः क्षत्रियास्तथा; $T_1$ °जो नागरास्तथा; $T_{2.3}$ G $M_4$ °जो नागरा इमे; $M_{1-3}$ °जो ब्राह्मणा इमे.

21 $^a$) $B_1$ हि ( for च ). $T_1$ [अ]यं ( for ते ). $D_3$ महाभाग; $D_{10}$ $T_{2.3}$ G °राज; $M_4$ °राजो ( for °तेजा ).

22 $^a$) $V_1$ हतशेषाश्; $G_{1-3}$ अत्रशिष्टाश् ( for हत° ). — $^c$) $D_6$ पश्यैतान्; $D_7$ पश्य तान् ( by transp. ). $V_1$ B $Dn_{1.}n_2$ $D_{1.2}$ नर- ( for कुरु- ). — $^d$) $Dn_2$ समुन्मीलितलोचन; $T_1$ $M_{1-3}$ समुन्मील्य च लोचने.

23 $^a$) $D_{6-9}$ यथा ( for यच्च ). — $^d$) $D_{4-8}$ हि ( for च ). $T_1$ सत्वरं ( for तत्कृतम् ). — After 23, $T_1$ ins. an addl. colophon [ *Adhy. no.* : 245 ].

24 Before 24, $B_2$ $Dn_2$ $T_1$ ins. वैशंपायनः. — $^a$) $V_1$ B Dn $D_{4-9}$ $T_{2.3}$ $M_4$ भरतान् ( for भा° ). — $^d$) $V_1$

दद‍र्श भारतान्सर्वान्स्थितान्संपरिवार्य तम् ॥ २४
ततश्चलवलिर्भीष्मः प्रगृह्य विपुलं भुजम् ।
ओघमेघस्वनो वाग्मी काले वचनमब्रवीत् ॥ २५
दिष्ट्या प्राप्तोऽसि कौन्तेय सहामात्यो युधिष्ठिर ।
परिवृत्तो हि भगवान्सहस्रांशुर्दिवाकरः ॥ २६
अष्टपञ्चाशतं रात्र्यः शयानस्याद्य मे गताः ।
शरेषु निशिताग्रेषु यथा वर्षशतं तथा ॥ २७
माघोऽयं समनुप्राप्तो मासः पुण्यो युधिष्ठिर ।
त्रिभागशेषः पक्षोऽयं शुक्लो भवितुमर्हति ॥ २८
एवमुक्त्वा तु गाङ्गेयो धर्मपुत्रं युधिष्ठिरम् ।
धृतराष्ट्रमथामन्त्र्य काले वचनमब्रवीत् ॥ २९
राजन्विदितधर्मोऽसि सुनिर्णीतार्थसंशयः ।
बहुश्रुता हि ते विप्रा बहवः पर्युपासिताः ॥ ३०
वेदशास्त्राणि सर्वाणि धर्मांश्च मनुजेश्वर ।
वेदांश्च चतुरः साङ्गान्निखिलेनावबुध्यसे ॥ ३१
न शोचितव्यं कौरव्य भवितव्यं हि तत्तथा ।
श्रुतं देवरहस्यं ते कृष्णद्वैपायनादपि ॥ ३२
यथा पाण्डोः सुता राजंस्तथैव तव धर्मतः ।
तान्पालय स्थितो धर्मे गुरुशुश्रूषणे रतान् ॥ ३३
धर्मराजो हि शुद्धात्मा निदेशे स्थास्यते तव ।
आनृशंस्यपरं ह्येनं जानामि गुरुवत्सलम् ॥ ३४
तव पुत्रा दुरात्मानः क्रोधलोभपरायणाः । C. 13. B. 13. K. 13. M. 13.

---

B $Dn_{1.3}$ ह; $D_{1.2}$ $M_{1-3}$ तान् (for तम्). $D_{10}$ $T_{2.3}$ G $M_4$ संस्थितान्परिवार्य तान्; $T_1$ परिवार्य च संस्थितान्.

25 $^a$) $V_1$ $B_2$ $Dn_3$ $T_3$ $G_2$ $M_4$ चलवली; $B_{1.3-5}$ च स वली; $Dn_1$ च तं वली; $Dn_2$ $D_8$ च बलवान्; $D_{4-7.9}$ चलयते; $T_1$ कुरुपतिर्; $T_2$ $G_1$ चलवपुर् (for °वलिर्). —$^b$) $V_1$ प्रसह्य (for प्रगृह्य). —$^c$) $Dn_3$ $D_{4-9}$ उद्यन्नोघ- (for ओघमेघ-). $V_1$ $B_1$ $G_1$ -स्वरो (for -स्वनो). $Dn_{1.2}$ उद्यन्मेघस्वरो वाग्मी; $D_{1.2}$ भीम- ($D_2$ दीर्घ)मेघस्वरो वाग्मी; $T_1$ माघो मासः समो वाग्मी (sic).

26 $G_2$ om. 26–27. $M_4$ om. $26^b$–$27^c$. —$^b$) $T_1$ सत्यवांस्त्वं (for सहामात्यो).

27 $G_2$ om. 27; $M_4$ om. $27^{abc}$ (for both, cf. v. l. 26). —$^a$) $D_{10}$ $T_{2.3}$ $G_{3.4}$ -पंचाशता; $G_1$ °शतो (for °शतं). $D_{4.5.7}$ रात्र्यश्चैवाष्टपंचाशच्. —$^b$) $D_{4-9}$ [अ]स्य (for [अ]द्य). $V_1$ B Dn [ऽ]नघ (for गताः). —$^d$) $D_{4-9}$ -शतोपमाः (for -शतं तथा).

28 $T_3$ om. 28. —$^a$) $G_4$ मासो (for माघो). —$^b$) $V_1$ B Dn मासः सौम्यो; $D_{4-7.9}$ पुण्यो मासो (by transp.); $D_8$ पुण्यमासो; $G_4$ पुण्यः पुण्यो. —$^c$) $B_1$ $Dn_{2.3}$ -शेषपक्षो; $D_{4.6-9}$ -शेषयुक्तो; $D_5$ -शेषः शुक्लो (for -शेषः पक्षो). —$^d$) $D_{4-9}$ पक्षो (for शुक्लो).

23 $B_1$ om. $29^{ab}$. —$^a$) $D_2$ कौंतेयं (for गाङ्गेयो). —$^c$) $D_{10}$ तदा; $T_{2.3}$ $G_{1.3.4}$ तथा (for अथ). $V_1$ $B_{2-5}$ Dn [आ]श्रित्य (for [आ]मन्त्र्य). $B_1$ ततो धैर्यमथाश्रित्य.

30 Before 30, $Dn_2$ $T_3$ ins. भीष्म उवाच. —$^a$) $D_{10}$ $G_{2.4}$ $M_4$ -धर्मज्ञः (for -धर्मोऽसि). —$^b$) $G_4$ -निश्चयः (for -संशयः). $D_{4-7.9}$ विनिर्णिक्तार्थसंशयः; $T_3$ $G_{1.3}$ बुद्ध्या वीतार्थसं°. — $D_{1.6.7.9}$ om. $30^c$–$31^b$. $D_8$ om. $30^{cd}$. $G_2$ partly damaged for $30^{cd}$. —$^c$) $D_{10}$ S ($G_2$ damaged) त्वया ($T_1$ M हि ते) वृद्धा (for हि ते विप्रा).

31 $D_{4.6.7.9}$ om. $31^{ab}$ (cf. v. l. 30). —$^a$) $B_2$ $D_{10}$ $G_{1.3.4}$ वेत्थ (for वेद-). $Dn_2$ $D_{10}$ S (except $G_2$) सूक्ष्माणि (for सर्वाणि). —$^c$) $V_1$ $Dn_{2.3}$ $T_2$ $G_2$ $M_4$ सर्वान् (for साङ्गान्). $T_1$ वेदाश्च सर्वे चत्वारः. —$^d$) $D_5$ अखिलान् (for निखिलेन). $D_{4.6-9}$ नराधिप (for [अ]वबुध्यसे). $D_1$ अखिलेनावबुध्यथाः; $D_{10}$ S षडंगैरुपबृंहितान् ($T_1$ $M_{1-3}$ °ताः).

32 $G_2$ partly damaged. —$^c$) $D_7$ वेद-; $T_2$ $G_3$ धर्म- (for देव-).

33 $^a$) $D_{10}$ $T_{1.2}$ $G_{1.4}$ तव (for पाण्डोः). —$^b$) $D_{4-9}$ $M_{1-3}$ पार्थिव; $D_{10}$ $T_{2.3}$ G $M_4$ पांडवाः (for धर्मतः).

34 $G_2$ partly damaged. —$^a$) $Dn_3$ $D_{4-9}$ वि- (for हि). $B_3$ धर्मात्मा; $D_{10}$ S ($G_2$ damaged) राजेंद्र (for शुद्धात्मा). —$^b$) $Dn_2$ $D_{10}$ $T_1$ $M_{1-3}$ शासने (for निदेशे). $D_{4.6-9}$ निर्दे($D_7$ °दे)शस्थश्च ते तव; $D_{10}$ $T_2$ $G_{1.3.4}$ $M_4$ स्थास्यते शासने तव; $T_3$ स्थास्यते तव शासने. —$^c$) $V_1$ $D_5$ $G_1$ आनृशंस्यं; $T_2$ $G_4$

र्याभिभूता दुर्वृत्तास्तान्न शोचितुमर्हसि ॥ ३५

वैशंपायन उवाच ।

तावदुक्त्वा वचनं धृतराष्ट्रं मनीषिणम् ।
सुदेवं महाबाहुमभ्यभाषत कौरवः ॥ ३६
गवन्देवदेवेश सुरासुरनमस्कृत ।
विक्रम नमस्तेऽस्तु शङ्खचक्रगदाधर ॥ ३७
नुजानीहि मां कृष्ण वैकुण्ठ पुरुषोत्तम ।
क्ष्याश्च ते पाण्डवेया भवान्ह्येषां परायणम् ॥ ३८
क्तवानस्मि दुर्बुद्धिं मन्दं दुर्योधनं पुरा ।
तः कृष्णस्ततो धर्मो यतो धर्मस्ततो जयः ॥ ३९
वासुदेवेन तीर्थेन पुत्र संशाम्य पाण्डवैः ।
संधानस्य परः कालस्तवेति च पुनः पुनः ॥ ४०
न च मे तद्वचो मूढः कृतवान्स सुमन्दधीः ।
घातयित्वेह पृथिवीं ततः स निधनं गतः ॥ ४१
त्वां तु जानाम्यहं वीर पुराणमृषिसत्तमम् ।
नरेण सहितं देवं बदर्यां सुचिरोषितम् ॥ ४२
तथा मे नारदः प्राह व्यासश्च सुमहातपाः ।
नरनारायणावेतौ संभूतौ मनुजेष्विति ॥ ४३

वासुदेव उवाच ।

अनुजानामि भीष्म त्वां वसूनाप्नुहि पार्थिव ।

---

ांस्ये ( for °शंस्य· ). $B_1$ $D_{4.6.8.9}$ आनृशंस्यं परं ह्येतं $B_1$ त्वेतं ). —$^{d}$) $D_{10}$ $T_2$ $G_{1.3.4}$ जानामि तु युधिष्ठिरं·

35 $^{a}$) $V_1$ सर्वाभि·; $B_1$ ते चाभि· ( for ईर्ष्याभि- ). —$^{d}$) $D_{5-9}$ न ताञ् ( by transp. )

36 $D_{4.5.8-10}$ $T_3$ $G_4$ om. the ref. $G_2$ partly damaged. —$^{a}$) $V_1$ $B_{1.2.4}$ $Dn_{1}$, $n_2$ $D_{6-9}$ महाबाहुर्; $D_{10}$ $T_{2.3}$ $G_{1.3.4}$ °त्मानम् ( for °बाहुम् ). —$^{d}$) $V_1$ $D_{4.7.10}$ $G_4$ कौरव ( for °वः ).

37 Before 37, some MSS. ins. भीष्म उवाच· —$^{c}$) Bom. ed. तुभ्यं ( for तेऽस्तु ). — After 37, $D_{10}$ T G $M_4$ ins. :

720* वासुदेवो हिरण्यात्मा पुरुषः सविता विराट् ।
जीवभूतोऽनुरूपस्त्वं परमात्मा सनातनः ।
त्वद्भक्तं त्वद्गतस्वान्तमदारमपरिग्रहम् ।
त्रायस्व पुण्डरीकाक्ष पुरुषोत्तम नित्यशः ।

[ $G_2$ damaged up to the prior half of line 2. — ( L. 1 ) $T_2$ सविता च स्वराड्विराट् ( for the post. half ). — ( L. 2 ) $M_4$ [ऽ]नुभूतस् ( for °रूपस् ). — ( L. 3 ) $G_1$ त्वद्भक्तस्· $T_1$ त्वद्भक्तस्त्वद्गतमना ; $T_3$ °क्तं त्वद्गतं बालं ( for the prior half ). $T_1$ अदाराश्च परिग्रहाः ; $T_3$ त्वमेव शरणं गतं ( for the post. half ).]

38 $D_4$ om. $38^{c}$–$39^{c}$. —$^{c}$) $D_{5-9}$ पांडुसुता ( for पाण्डवेया ). —$^{d}$) $B_3$ $Dn_1$ $D_9$ $T_{1.3}$ येषां ; $D_{5.6-8}$ तेषां ; $D_{10}$ $G_{1.3.4}$ एषां ( for ह्येषां ). $D_2$ परायणः ( for °णम् ). $G_2$ भवान्येषां परा गतिः·

39 $D_4$ om. $39^{abc}$ ( cf. v. l. 38 ). —$^{b}$) $V_1$ B Dn $T_1$ तदा ( for पुरा ). $D_{5-9}$ पुत्र संशा( $D_5$ °श )म्य पांडवैः ( = $40^{b}$ ). — After $39^{ab}$, $D_{5-9}$ ins. :

721* दुर्योधनं दुराचारं क्षत्रियान्तकरं रणे ।

40 $^{b}$) $D_{1.2}$ सुत ( for पुत्र ). — After $40^{ab}$, $T_1$ ins. :

722* सुहृद्भिः सहितो राजन्भुङ्क्ष्व राज्यमकण्टकम् ।

— $T_1$ om. $40^{c}$–$43^{b}$. —$^{c}$) $B_1$ संसारस्य ( for संधानस्य ).

41 $T_1$ om. 41 ( cf. v. l. 40 ). —$^{a}$) $B_1$ संधाय; $T_3$ $G_{1.3}$ तु मे तद् ( for च मे तद् ). —$^{b}$) $G_4$ श्रुतवान् ( for कृत° ). —$^{c}$) $D_{10}$ $G_4$ पातयित्वा ( for घात° ).

42 $T_1$ om. 42 ( cf. v. l. 40 ). —$^{a}$) $D_{6.9}$ तु ( for तु ). $V_1$ B $Dn_3$ वीरं ; $Dn_1$ $D_{10}$ $T_{2.3}$ $G_{1.3.4}$ M देवं ; $D_5$ कृष्ण ; $G_2$ सम्यक् ( for वीर ). —$^{b}$) $G_2$ om. from पुराण up to सुचि ( in $42^{d}$ ). $B_4$ ·सत्तम· —$^{c}$) $T_2$ रुचिरं ( for सहितं ). $V_1$ $B_{3-5}$ वीर; $B_1$ $Dn_3$ $M_{2.3}$ वीरं; $B_2$ damaged ; $Dn_1$ $D_2$ देव; $D_5$ दिव्यं ( for देवं ). —$^{d}$) $D_{10}$ $T_3$ $G_4$ तु ( for सु- ).

43 $T_1$ om. $43^{ab}$ ( cf. v. l. 40 ). $D_4$ reads $43^{a}$–$44^{b}$ after $47^{ab}$. —$^{a}$) $T_2$ ततो ( for तथा ). —$^{b}$) $D_2$ ·मनाः; $G_2$ ·मतिः ( for ·तपाः ). —$^{d}$) $Dn_3$ $T_1$ मानुषेषु ( for मनुजेषु ). $B_1$ $Dn_2$ $D_4$ $G_2$ [इ]ह ( for [इ]ति ). $D_{5-10}$ $T_{2.3}$ $G_{1.3.4}$ $M_4$ संभूतौ मानुषेष्विह ( $M_4$ °षाविति ). — After 43, $V_1$ B Dn $D_{5.8}$ ins. :

723* स मां त्वमनुजानीहि कृष्ण मोक्ष्ये कलेवरम् ।
त्वयाहं समनुज्ञातो गच्छेयं परमां गतिम् ।

44 For the sequence in $D_4$, cf. v. l. 43. $D_{19}$

न तेऽस्ति वृजिनं किंचिन्मया दृष्टं महाद्युते ॥ ४४
पितृभक्तोऽसि राजर्षे मार्कण्डेय इवापरः ।
तेन मृत्युस्तव वशे स्थितो भृत्य इवानतः ॥ ४५

वैशंपायन उवाच ।

एवमुक्तस्तु गाङ्गेयः पाण्डवानिदमब्रवीत् ।
धृतराष्ट्रमुखांश्चापि सर्वान्ससुहृदस्तथा ॥ ४६
प्राणानुत्स्रष्टुमिच्छामि तन्मानुज्ञातुमर्हथ ।
सत्ये प्रयतितव्यं वः सत्यं हि परमं बलम् ॥ ४७
आनृशंस्यपरैर्भाव्यं सदैव नियतात्मभिः ।
ब्रह्मण्यैर्धर्मशीलैश्च तपोनित्यैश्च भारत ॥ ४८
इत्युक्त्वा सुहृदः सर्वान्संपरिष्वज्य चैव ह ।
पुनरेवाब्रवीद्धीमान्युधिष्ठिरमिदं वचः ॥ ४९
ब्राह्मणाश्चैव ते नित्यं प्राज्ञाश्चैव विशेषतः ।
आचार्या ऋत्विजश्चैव पूजनीया नराधिप ॥ ५०

इति श्रीमहाभारते अनुशासनपर्वणि त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३ ॥

# १५४

वैशंपायन उवाच ।

एवमुक्त्वा कुरून्सर्वान्भीष्मः शांतनवस्तदा ।
तूष्णीं बभूव कौरव्यः स मुहूर्तमरिंदम ॥ १
धारयामास चात्मानं धारणासु यथाक्रमम् ।

C. 13. 77
B. 13. 16
K. 13. 27
M. 13. 1

$T_{1, 2}$ $G_{1, 3, 4}$ $M_4$ भगवान् ( for वासुदेव ). — $^{b}$) $Dn_1$ $D_3$ $T_3$ प्रामुहि ( for आ° ). — $^{c}$) $D_{4, 6-9}$ च मे; $D_5$ हि मे ( for तेऽस्ति ). $G_2$ व्यसनं ( for वृजिनं ). — $^{d}$) $V_1$ $B_{1, 2, 5}$ Dn $T_3$ इह लोके; $D_{4-9}$ त्वयि दृष्टं ( for मया दृष्टं ). $D_{1, 2}$ नरोत्तम ( for महाद्युते ). $B_3$ इह लोके महामते; $D_{10}$ $T_{1, 2}$ G $M_4$ शुद्धात्मैश्वर्यसंयुत: ( $T_1$ °वृतः; $T_2$ °युतं ).

45 $^{a}$) $T_{2, 3}$ $G_{1, 3, 4}$ हि ( for ऽसि ). — $^{c}$) $T_1$ इष्ट- ( for तेन ). $D_{4-9}$ विभो ( for वशे ). — $^{d}$) $M_4$ गृह्य ( for भृत्य ). $B_1$ [अ]नघ; $D_2$ [आ]गतः; $D_{4, 6, 7, 9}$ [आ]हतः; $M_{1-3}$ [अ]ग्रतः ( for [आ]नतः ).

46 $D_{4-10}$ $T_{1, 2}$ G M om. the ref. — $^{a}$) $D_{6, 9}$ उक्ते ( for उक्तस् ). — $^{b}$) $D_{5-9}$ पांडवं च ( for पाण्डवान् ). — $^{c}$) $T_1$ सर्वान् ( for चापि ). — $^{d}$) $V_1$ B Dn $D_5$ सर्वांश्च; $T_1$ सामात्य- ( for सर्वान्स- ).

47 $^{b}$) $V_1$ $B_{2, 4}$ $Dn_2$ ते मानु-; $B_1$ यूयं तज्-; $B_3$ मामनु-; $B_5$ तें नानु-; Bom. ed. तत्रानु- ( for तन्मानु- ). — After $47^{ab}$, $D_4$ reads $43^{c}$–$44^{b}$. — $^{c}$) $B_{1, 3-5}$ $Dn_{1, n3}$ सत्येषु; $B_2$ सत्ये तु ( for सत्ये प्र- ). $D_{10}$ S ( $G_2$ damaged ) च ( for वः ).

48 $^{a}$) $B_3$ $D_{2, 4-9}$ $T_1$ ब्राह्मणैर् ( for ब्रह्मण्यैर् ). $B_2$ यज्ञ-; $Dn_2$ दान- ( for धर्म- ). — $^{d}$) $Dn_2$ धर्म- ( for तपो- ). $V_1$ $B_{1, 2, 4}$ Dn $D_4$ भारताः ( for °त ).

49 $D_{6, 9}$ om. ( hapl. ) $49^{b}$–13. 154. $1^{a}$. — $^{b}$) $B_{1, 2, 5}$ $Dn_{2, n3}$ $D_{4, 5, 7, 8}$ हि ( for ह ). $D_{10}$ $T_{2, 3}$ $G_{1, 3, 4}$ तथा संपूज्य चैव हि ( $T_3$ ह ). — After $49^{ab}$, $D_{10}$ T G $M_4$ ins. :

724* धनं बहुविधं राजन्दत्त्वा नित्यं द्विजातिषु ।

[ $G_4$ बहुधनं ( for °विधं ). $D_{10}$ $T_2$ राजा; $T_1$ दत्त्वा ( for राजन् ). $T_1$ समानीतं ( for दत्त्वा नित्यं ). ]

50 $D_{6, 9}$ om. 50 ( cf. v. l. 49 ). — $^{a}$) $D_{10}$ $T_{2, 3}$ G M सर्वे ( for नित्यं ). $D_{4, 5, 7}$ ब्राह्मणानां मते नित्यं; $T_1$ °णाः श्रुतवृद्धाश्च. — $^{b}$) $D_{4, 5, 7}$ वेदज्ञांस्त्वं; $D_{10}$ S वृद्धाश्चैव ( for प्राज्ञाश्चैव ). — $^{d}$) $V_1$ $B_{2-5}$ $Dn_{1, n3}$ $D_{2, 5, 10}$ जनाधिप ( for नरा° ).

Colophon om. in $D_{6, 9}$. — *Parvan name* : B $Dn_3$ $D_1$ शांति. — *Sub-parvan* : $M_{1-3}$ भीष्मस्वर्गारोहणं. — *Adhy. name* : $D_{1, 2}$ भीष्मवाक्यं; $T_{2, 3}$ $M_{1-3}$ भीष्मस्वर्गाभ्यनुज्ञाग्रहणं; $G_1$ भीष्मस्वर्गाद्यनुग्रहणं; $G_3$ भीष्मस्वर्गानुग्रहणं; $M_4$ भीष्मस्वर्गाभ्यनुज्ञा. — *Adhy. no.* ( figures, words or both ) : $T_1$ 246; $T_{2, 3}$ $G_{2, 4}$ 251; $G_{1, 2}$ 245; $M_{1-3}$ 247; $M_4$ 243. — *Śloka no.* : $D_4$ 47.

## 154

☞ This adhy. is missing in $D_3$ ( cf. v. l. 13. 82, 37 ).

तस्योर्ध्वमगमन्प्राणाः संनिरुद्धा महात्मनः ॥ २
इदमाश्चर्यमासीच्च मध्ये तेषां महात्मनाम् ।
यद्यन्मुञ्चति गात्राणां स शंतनुसुतस्तदा ।
तत्तद्विशल्यं भवति योगयुक्तस्य तस्य वै ॥ ३
क्षणेन प्रेक्षतां तेषां विशल्यः सोऽभवत्तदा ।
तं दृष्ट्वा विस्मिताः सर्वे वासुदेवपुरोगमाः ।
सह तैर्मुनिभिः सर्वैस्तदा व्यासादिभिर्नृप ॥ ४
संनिरुद्धस्तु तेनात्मा सर्वेष्वायतनेषु वै ।
जगाम भित्त्वा मूर्धानं दिवमभ्युत्पपात च ॥ ५
महोल्केव च भीष्मस्य मूर्धदेशाज्जनाधिप ।
निःसृत्याकाशमाविश्य क्षणेनान्तरधीयत ॥ ६
एवं स नृपशार्दूल नृपः शांतनवस्तदा ।
समयुज्यत लोकैः स्वैर्भरतानां कुलोद्वहः ॥ ७
ततस्त्वादाय दारूणि गन्धांश्च विविधान्बहून् ।
चितां चक्रुर्महात्मानः पाण्डवा विदुरस्तथा ।
युयुत्सुश्चापि कौरव्यः प्रेक्षकास्त्वितरेऽभवन् ॥ ८

1 $D_{6,9}$ om. $1^{a}$ (cf. v. l. 13. 153. 49). $M_4$ om. the ref. — $^{a}$) $D_7$ इत्युक्त्वा सुहृदः सर्वान्. — $^{b}$) $B_4$ $D_{10}$ $T_3$ $G_{1,3,4}$ तथा (for तदा). — $G_3$ partly damaged for $1^{cd}$. — $^{c}$) $D_{4,6,9}$ अभवत्; $D_{5,7}$ अभूच्च (for बभूव). $D_{1,2,5-9}$ कौरव्य (for °व्यः). — $^{d}$) B $Dn_1$ $D_{1,10}$ $T_{1,3}$ $M_{1-3}$ सु- (for स). $D_{10}$ S ($G_2$ damaged) कुरूद्वह ($T_{1,2}$ $M_4$ °हः) (for आरिंदम). $D_{4-9}$ मुहूर्तं स विशां पते.

2 $T_1$ om. $2^{a}$–$3^{b}$. — $^{a}$) $D_{10}$ $T_3$ $M_4$ समादधत्स चात्मानं; $T_2$ G समादधत्स्वमा°; $M_{1-3}$ समाधिना स चा°. — $^{b}$) $D_{6,7,9}$ धारणाः स्वा; $D_3$ °णाभिर् (for °णासु). $D_4$ धारणाः स्वा यथाक्रमे; $D_{10}$ $T_2$ $G_{1,3}$ °णानुक्रमस्थितः; $T_3$ $G_{2,4}$ $M_4$ °णानुक्रमास्थितः; $M_{1-3}$ °णा क्रममास्थितः. — $D_4$ om. $2^{c}$–$3^{b}$. — $^{d}$) $Dn_2$ $T_2$ संनिरुध्य (for °रुद्धा). $M_{1-3}$ महात्मना (for °त्मनः).

3 $D_4$ $T_1$ om. $3^{ab}$ (cf. v. l. 2). $G_2$ damaged for $3^{ab}$. After $3^{ab}$, $V_1$ B Dn $D_3$ read $4^{ef}$, repeating it in its proper place. — $^{a}$) $B_1$ यस्मान् (for यद्यन्). $V_1$ B Dn गात्रं हि; $D_{1,2,4}$ $T_1$ $G_3$ गात्राणि (for °णां). — $^{d}$) Some MSS. शांतनु-. $D_{1,2}$ भीष्मः शंतनुनंदनः. — $G_2$ om. $3^{ef}$. — $^{e}$) $Dn_2$ तत्र (for तत्तद्). $D_{10}$ T $G_{1,3,4}$ $M_4$ अभवद् (for भवति). — $^{f}$) $D_{10}$ T G $M_4$ वै ($T_2$ ते) क्रमात् (for तस्य वै).

4 $^{b}$) $T_1$ तथा (for तदा). $D_{1,2}$ विशल्यः समपद्यत. — $^{c}$) $Dn_1$ $G_1$ तद् (for तं). — $V_1$ B Dn $D_3$ read $4^{ef}$ for the first time after $3^{ab}$. — $^{e}$) $B_{4,5}$ (both second time) $D_{2,4-7,8}$ (second time).$_9$ सहितैर्; $D_{10}$ $T_{2,3}$ $G_{3,4}$ संगतैर् (for सह तैर्). $V_1$ $B_{1,3-5}$ Dn $D_3$ (all first time) सहितैर्ऋषिभिः सर्वैस्; $B_2$ (first time) ऋषिभिः सहितैः सर्वैस्. — $^{f}$) $V_1$ $B_1$ (both second time).$_2$ (both times).$_{3-5}$ $Dn_1$ (all second time). $n_2$, $n_3$ (both both times) $T_1$ $G_{1,3}$ तथा; $D_{1,2}$ सह (for तदा). $V_1$ B $Dn_1$, $n_3$ $D_3$ (all first time) प्रभो (for नृप).

5 $^{b}$) $B_1$ $Dn_1$ $D_6$ $T_{1,2}$ च (for वै). — Before $5^{cd}$, $T_2$ ins. वैशंपायनः. — $^{c}$) $T_3$ हित्वा (for भित्त्वा). — $^{d}$) $D_{1,2}$ T G $M_4$ ह (for च). — After 5, $D_{10}$ S ins.:

725* देवदुंदुभिनादश्च पुष्पवर्षैः सहाभवत् ।
सिद्धा ब्रह्मर्षयश्चैव साधु साध्विति हर्षिताः ।

[(L. 1) $T_3$ -नादैश्; $M_{1-3}$ -नादाश्. $T_2$ $G_{1,2,4}$ महानभूत्; $M_{1-3}$ तदाभवन् (for सहाभवत्). $T_1$ पुष्पवृष्टिस्तदाभवत्; $T_2$ °वृष्टिर्महानभूत् (for the post. half).]

6 $^{b}$) $D_{4-6,9}$ $T_{2,3}$ $G_{1,4}$ $M_4$ मूर्ध्नि (for मूर्ध-). $D_{1,2}$ नराधिप (for जना°). $T_1$ मूर्धदेशे नराधिप. — $^{c}$) $T_2$ निर्वृत्य (for निःसृत्य).

7 $^{a}$) $V_1$ B Dn राज- (for नृप-). — $^{b}$) $D_{1,2}$ भीष्मः; $D_{10}$ $T_{2,3}$ G ($G_2$ damaged) श्रीमान् (for नृपः). — After $7^{ab}$, $D_7$ reads $8^{ef}$, repeating it in its proper place. — $^{c}$) $D_{10}$ S समायुज्यत (for सम°). $V_1$ B Dn कालेन; $D_{4,6,8,9}$ लोकैस्तैर्; $T_1$ लोकान्वै (for लोकैः स्वैर्). — $^{d}$) $D_{1,10}$ S ($G_2$ damaged) भारतानां (for भ°). $D_{1,2}$ $T_{1,3}$ पितामहः (for कुलोद्वहः).

8 $M_4$ om. (hapl.) $8^{a}$–$11^{b}$. $G_2$ damaged for $8^{ab}$. — $^{a}$) $D_5$ च (for तु). — $^{b}$) $D_{4-9}$ [उ]च्चावचान् (for विविधान्). $T_1$ तदा (for बहून्). $D_{10}$ $T_{2,3}$ $G_{1,3,4}$ चंदनान्यगरूणि च. — After $8^{ab}$, $T_1$ ins.:

726* चन्दनानां च खण्डानि महार्घाणि बहूनि च ।

युधिष्ठिरस्तु गाङ्गेयं विदुरश्च महामतिः ।
छादयामासतुरुभौ क्षौमैर्माल्यैश्च कौरवम् ॥ ९
धारयामास तस्याथ युयुत्सुश्छत्रमुत्तमम् ।
चामरव्यजने शुभ्रे भीमसेनार्जुनावुभौ ।
उष्णीषे पर्यगृह्णीतां माद्रीपुत्रावुभौ तदा ॥ १०
स्त्रियः कौरवनाथस्य भीष्मं कुरुकुलोद्भवम् ।
तालवृन्तान्युपादाय पर्यवीजन्समन्ततः ॥ ११
ततोऽस्य विधिवच्चक्रुः पितृमेधं महात्मनः ।
याजका जुहुवुश्चाग्निं जगुः सामानि सामगाः ॥ १२
ततश्चन्दनकाष्ठैश्च तथा कालेयकैरपि ।
कालागरुप्रभृतिभिर्गन्धैश्चोच्चावचैस्तथा ॥ १३
समवच्छाद्य गाङ्गेयं प्रज्वाल्य च हुताशनम् ।
अपसव्यमकुर्वन्त धृतराष्ट्रमुखा नृपाः ॥ १४
संस्कृत्य च कुरुश्रेष्ठं गाङ्गेयं कुरुसत्तमाः ।
जग्मुर्भागीरथीतीरमृषिजुष्टं कुरूद्वहाः ॥ १५
अनुगम्यमाना व्यासेन नारदेनासितेन च ।
कृष्णेन भरतस्त्रीभिर्ये च पौराः समागताः ॥ १६
उदकं चक्रिरे चैव गाङ्गेयस्य महात्मनः ।
विधिवत्क्षत्रियश्रेष्ठाः स च सर्वो जनस्तदा ॥ १७
ततो भागीरथी देवी तनयस्योदके कृते ।

C. 13. 7780
B. 13. 169.
K. 13. 274
M. 13. 156

— $B_5$ om. $8^{c}$–$9^{d}$. $G_2$ om. from $8^{c}$ up to the end of this adhy. —$^{d}$) $V_1$ $D_{5-9}$ $G_{1.3}$ तदा ( for तथा ). — $D_7$ reads $8^{ef}$ for the first time after $7^{ab}$. —$^{e}$) $G_4$ कौरव्यं. —$^{f}$) $D_7$ ( first time ) धृतराष्ट्रस्य वंशधृक्.

9 $B_5$ $G_2$ $M_4$ om. 9 (cf. v. l. 8). —$^{a}$) $B_{1.3}$ $Dn_1$ $D_{4.5.10}$ $T_{2.3}$ $G_{1.3.4}$ $M_{1-3}$ च ( for तु ). —$^{b}$) $D_{10}$ $T_{2.3}$ $G_{1.3.4}$ धृतराष्ट्रश्च दुःखितौ. —$^{c}$) $D_{5-9}$ तदा ( for उभौ ). —$^{d}$) $T_1$ भारत ( for कौरवम् ).

10 $G_2$ $M_4$ om. 10 ( cf. v. l. 8 ). —$^{c}$) $T_3$ $G_{1.3}$ चामरे ( for °र- ). —$^{d}$) $T_1$ तथा ( for [उ]भौ ). — $B_1$ om. $10^{ef}$. —$^{e}$) $D_{10}$ $T_2$ $G_{1.3}$ छत्रे च; $T_1$ $M_{1-3}$ उष्णीषं ( for °षे ). $D_{4-9}$ पादयोः ( $D_8$ उष्णीषे ) प्रतिगृह्णीतां. —$^{f}$) $V_1$ B ( $B_1$ om ) Dn $D_{5.10}$ $T_{1.3}$ तथा; $D_{1.2}$ अपि ( for तदा ). — After 10, T $G_{1.3.4}$ $M_{1-3}$ ins. :

727* युधिष्ठिरेण सहितौ धृतराष्ट्रस्तु पादतः ।
[ $T_{1.2}$ $G_{1.3}$ पांडवैः ( for पादतः ). ]

11 $G_2$ om. 11 ; $M_4$ om. $11^{ab}$ ( for both, cf. v. l. 8 ). —$^{a}$) $Dn_3$ कौरव्य-. $D_{10}$ T $G_{1.3.4}$ वृद्धाः स्त्रियः कौरवाणां; $M_{1-3}$ ताः स्त्रियः कौरवाणां च. —$^{b}$) $T_1$ वृद्धं ( for भीष्मं ). $D_{4-9}$ भीष्मस्य भरतर्षभ. —$^{c}$) $D_{5-9}$ $M_{1-3}$ तालवृंतान्. —$^{d}$) $V_1$ B Dn पर्यवीजंत सर्वशः.

12 $G_2$ om. 12 ( cf. v. l. 8 ). —$^{a}$) $B_1$ कृत्वा ( for चक्रुः ). —$^{b}$) $V_1$ पितृकृत्यं; $T_3$ ब्रह्ममेधं ( for पितृ° ). —$^{c}$) $V_1$ B Dn यजनं बहुशश्चाग्नौ; $D_{4-9}$ याजका जुह्वमानाश्च; $T_1$ जुहवांचक्रिरे चाग्निः —$^{d}$) $V_1$ B Dn $D_{1.2}$ चापरे ( for सामगाः ).

13 $G_2$ om. 13 ( cf. v. l. 8 ). —$^{b}$) $M_{1-3}$ ततः ( for तथा ). Some MSS. कालीयकैर्. —$^{c}$) Some MSS. कालागुरु- ( for °गरु- ). —$^{d}$) $D_{4-9}$ अपि ( for तथा ). $D_{10}$ T $G_{1.3.4}$ $M_4$ गंधैश्चाज्यघटैरपि.

14 $G_2$ om. 14 (cf. v. l. 8 ). —$^{b}$) $V_1$ B Dn संप्रज्वाल्य ( for प्रज्वाल्य च ). —$^{c}$) $D_{1.2}$ अकुर्वंस्ते ; $T_{1.2}$ प्रकुर्वंत ( for अ° ). —$^{d}$) $V_1$ B ( $B_2$ damaged ) $Dn_3$ चितां ; $T_2$ $G_{1.3.4}$ नृप ( for नृपाः ).

15 $G_2$ om. 15 ( cf. v. l. 8 ). —$^{a}$) $D_{1.2}$ संकल्प्य च; $D_{4.6.7.9}$ संसाध्य तु ; $T_1$ संज्वाल्य च ( for संस्कृत्य च ). $D_{10}$ $T_{2.3}$ $G_{1.3.4}$ M सं( $T_3$ प्र )ज्वाल्य तु नरश्रेष्ठं. —$^{b}$) $D_{1.2}$ $T_1$ नृप- ( for कुरु- ). $D_{10}$ $T_{1.2}$ $G_{1.3.4}$ -सत्तमं ( for °माः ). —$^{c}$) $V_1$ B Dn $D_{1.2}$ जग्मुर्भागीरथीं पुण्याम्. —$^{d}$) $V_1$ B Dn $D_{1.5}$ $M_4$ ऋषिजुष्टां ( for °जुष्टं ). $D_{2.6-9}$ ऋषिजुष्टां कुरूद्वह.

16 $G_2$ om. 16 ( cf. v. l. 8 ). —$^{a}$) Hypermetric. $T_3$ -गच्छमाना ( for -गम्य° ). —$^{b}$) $D_{4-9}$ [अ]पि सत्तम ( for [अ]सितेन च ). —$^{c}$) $T_2$ $G_{1.3}$ भारत- ( for भ° ). —$^{d}$) $V_1$ B $Dn_{1.n3}$ $T_3$ समंततः ( for समागताः ).

17 $G_2$ om. 17 ( cf. v. l. 8 ). —$^{a}$) $D_1$ $T_1$ तस्य; $T_{2.3}$ $G_{1.3.4}$ $M_4$ सर्वे ( for चैव ). —$^{b}$) $Dn_2$ विधिवद्भरतश्रेष्ठ. —$^{d}$) $G_{1.3}$ पौर- ( for सर्वो ). $B_{2.4.5}$ तथा ( for तदा ). $T_1$ $M_4$ ये च पौ( $M_4$ सपौ )रजनास्तथा ; $T_{2.3}$ $G_4$ $M_{1-3}$ स च पौरजनस्तथा.

18 $G_2$ om. 18 ( cf. v. l. 8 ). —$^{a}$) $D_{10}$ T $G_{3.4}$ M सा च ( for ततो ). $T_1$ -तीरे ( for देवी ). —$^{d}$) $V_1$ B Dn -विह्वला ( for -लालसा ).

'80 :.22 उत्थाय सलिलात्तस्माद्रुदती शोकलालसा ॥ १८
:.80 6.21 परिदेवयती तत्र कौरवानभ्यभाषत ।
निबोधत यथावृत्तमुच्यमानं मयानघाः ॥ १९
राजवृत्तेन संपन्नः प्रज्ञयाभिजनेन च ।
सत्कर्ता कुरुवृद्धानां पितृभक्तो दृढव्रतः ॥ २०
जामदग्न्येन रामेण पुरा यो न पराजितः ।
दिव्यैरस्त्रैर्महावीर्यः स हतोऽद्य शिखण्डिना ॥ २१
अश्मसारमयं नूनं हृदयं मम पार्थिवाः ।
अपश्यन्त्याः प्रियं पुत्रं यत्र दीर्यति मेऽद्य वै ॥ २२
समेतं पार्थिवं क्षत्रं काशिपुर्यां स्वयंवरे ।
विजित्यैकरथेनाजौ कन्यास्ता यो जहार ह ॥ २३
यस्य नास्ति बले तुल्यः पृथिव्यामपि कश्चन ।
हतं शिखण्डिना श्रुत्वा यन्न दीर्यति मे मनः ॥ २४
जामदग्न्यः कुरुक्षेत्रे युधि येन महात्मना ।
पीडितो नातियत्नेन निहतः स शिखण्डिना ॥ २५
एवंविधं बहु तदा विलपन्तीं महानदीम् ।
आश्वासयामास तदा साम्ना दामोदरो विभुः ॥ २६
समाश्वसिहि भद्रे त्वं मा शुचः शुभदर्शने ।
गतः स परमां सिद्धिं तव पुत्रो न संशयः ॥ २७
वसुरेष महातेजाः शापदोषेण शोभने ।
मनुष्यतामनुप्राप्तो नैनं शोचितुमर्हसि ॥ २८
स एष क्षत्रधर्मेण युध्यमानो रणाजिरे ।

19 G2 om. 19 (cf. v. l. 8). —b) Some MSS. कौरव्यान्. —c) D4-9 यथातत्त्वम्; T1 महावृत्तम् (for यथा°). —d) D10 S (G2 om.) नृपाः (for [अ]नघाः).

20 G2 om. 20 (cf. v. l. 8). —a) D2 राजवृत्ते समुत्पन्ने. —b) V1 B Dn नियमेन (for [अ]भिजनेन). —c) D10 T2.3 G1.3.4 M1.2.4 समर्थः (for सत्कर्ता). V1 B2.3 Dn3 D1.2 गुरु-; B1.5 पितृ- (for कुरु-). D4-9 सत्कर्ता लोक(D5 राज)वीराणां; T1 M3 समर्थः कुरुवीराणां. —d) V1 B Dn महाव्रतः; T3 धृतव्रतः (for दृढ°).

21 G2 om. 21 (cf. v. l. 8). —b) V1 Dn य पुरा (by transp.); D4 om. — B2 damaged for 21cd. —c) D1.2 महाबाहुः; D4-9 °तेजाः; D10 T2.3 G1.3.4 °वीर्यैः (for °वीर्यः).

22 G2 om. 22 (cf. v. l. 8). D6 reads from नूनं (in 22a) up to the end of the adhy. on marg. (*sec. m.*). —c) M3 अपश्यंत्यां (for °श्यन्त्याः). —d) D4.5.7-9 अनेकधा (for मेऽद्य वै).

23 G2 om. 23 (cf. v. l. 8). —a) D10 G4 पार्थिवाः (for °वं). M1-3 सत्रं (for क्षत्रं). T3 समेताः पार्थिवाः क्षत्रं. —b) D2 काशिराज- (for °पुर्यां). —c) V1 B Dn2.n3 D10 [ए]व; Dn1 D6 [ए]वं (for [आ]जौ). —d) B3 Dn1 T1 G1 चार्यं; G3 चैव (for ता यो). D4-6.8 यः; D7 सः; T1 च (for ह). D10 T3 G2.4 M4 ताश्चैवोपजहार ह (G4 यः); M1-3 ताः स चापजहार च.

24 G2 om. 24 (cf. v. l. 8). —b) D1.2 इह (for अपि). —c) D5 दृष्ट्वा (for श्रुत्वा). T1 शिखंडिना हतं श्रुत्वा. —d) V1 B1.3.5 Dn D6 न विदीर्येत यन्मनः; D2 ततो दीर्येत मे मनः.

25 G2 om. 25 (cf. v. l. 8). —a) T1 -श्रेष्ठ (for -क्षेत्रे). —b) T2.3 युद्धे (for युधि). —c) D6 M4 नापि (for नाति-). D10 T G1.3.4 यो(T3 बो)धयत्नापि निहतो; M1-3 योधितो नापि निहतो. —d) V1 B Dn D1.2.5.6 स हतोद्य; D8 निहतोद्य; D10 T3 निद्रितः स (for निहतः स).

26 G2 om. 26 (cf. v. l. 8). —a) D10 S (G2 om.) एवं वाक्यं बहुविधं. —c) D1 ततः (for तदा). —d) V1 B Dn D6 गंगां (for साम्ना). D1.2 T1 हरिः; D4 सखा (for विभुः).

27 G2 om. 27 (cf. v. l. 8). —a) V1 D1-9 भद्रं ते; D10 T1.2 G1.3.4 M गंगे त्वं (for भद्रे त्वं). —b) Dn3 प्रिय- (for शुभ-). —c) D10 T2.3 G1.3.4 M3.4 पारमिकां (for स परमां). V1 B Dn D6 गतः स परमं लोकं.

28 G2 om. 28 (cf. v. l. 8). —a) D4.7-9 महाभागे (for °तेजाः). —c) V1 B Dn D6 T1 मानुषत्वम्; G4 मानुष्यताम् (for म°).

29 G2 om. 29 (cf. v. l. 8). —a) D4.5.7.9 एवं स; D3 स एवं (for स एष). —b) Bom. ed. अयुध्यत (for युध्यमानो). G1 रणांगणे (for रणाजिरे).

धनंजयेन निहतो नैष नुन्नः शिखण्डिना ॥ २९
भीष्मं हि कुरुशार्दूलमुद्यतेषुं महारणे ।
न शक्तः संयुगे हन्तुं साक्षादपि शतक्रतुः ॥ ३०
स्वच्छन्देन सुतस्तुभ्यं गतः स्वर्गं शुभानने ।
न शक्ताः स्युर्निहन्तुं हि रणे तं सर्वदेवताः ॥ ३१
तस्मान्मा त्वं सरिच्छ्रेष्ठे शोचस्व कुरुनन्दनम् ।
वसूनेष गतो देवि पुत्रस्ते विज्वरा भव ॥ ३२
इत्युक्ता सा तु कृष्णेन व्यासेन च सरिद्वरा ।
त्यक्त्वा शोकं महाराज स्वं वार्यवततार ह ॥ ३३
सत्कृत्य ते तां सरितं ततः कृष्णमुखा नृपाः ।
अनुज्ञातास्तया सर्वे न्यवर्तन्त जनाधिपाः ॥ ३४

इति श्रीमहाभारते अनुशासनपर्वणि चतुष्पञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥

॥ समाप्तं भीष्मस्वर्गारोहणपर्व ॥

॥ समाप्तमनुशासनपर्व ॥

C. 13. 7
B. 13. 16
K. 13. 27
M. 13. 15

— $^{d}$) $D_{10}$ $T_{2.3}$ $M_4$ नैव ; $T_1$ स वै ; $M_{1-3}$ न वै ( for नैष ). $V_1$ B Dn $D_{6.8}$ देवि ; $D_{4.5.7.9}$ तत्र ( for नुन्नः ).

30 $G_2$ om. 30 ( cf. v. l. 8 ). — $^{b}$) $D_1$ महाहवे ( for °रणे ). — $^{c}$) $D_2$ न शक्यः ; $D_{4.5.9}$ अशक्तः ( for न शक्तः ). $D_{10}$ $T_{2.3}$ $G_{1.3.4}$ समरे ( for संयुगे ). — $^{d}$) $D_{4.5.7-9}$ $G_4$ पुरंदरः ( for शतक्रतुः ).

31 $G_2$ om. 31 ( cf v. l. 8 ). — $^{a}$) $D_{4.5.7-9}$ गतः स्वर्गं ( for सुतस्तुभ्यं ). $V_1$ B Dn $D_8$ स्वच्छंदतस्तव सुतो. — $^{b}$) $D_{1.2}$ वरानने ( for शुभा° ). $D_{4.6.7-9}$ सुतस्तव वरानने. — $^{c}$) $V_1$ B Dn $D_{2.6}$ $G_1$ वि- ; $D_{10}$ T $G_{3.4}$ तं ( for स्युर् ). $D_{1.5}$ $T_3$ वै ( for हि ). — $^{d}$) $D_{10}$ रणे ते ; $T_1$ समरे ; $T_3$ रणे स्युः ( for रणे तं ).

32 $G_2$ om. 32 ( cf. v. l. 8 ). — $^{a}$) $D_{10}$ $T_2$ $G_{1.3}$ न ( for मा ). $Dn_3$ तस्मान्मा देवि गंगे त्वं ; $D_{4.6.7-9}$ तस्मात्त्वं सरितां श्रेष्ठे. — $^{b}$) $Dn_{2.3}$ $D_{4.5.8-10}$ $T_{2.3}$ $G_{1.3.4}$ मा शुचः ; $D_{1.2}$ शुचस्तं ( for शोचस्व ). $Dn_1$ स्वं वार्यवततार ह ( = $33^{d}$ ). — $^{c}$) $V_1$ $B_{1.5}$ $D_5$ वसुरेष ; $B_1$ $G_{3.4}$ वसूनेव ( for °नेष ). — $^{d}$) $D_{4.5.7-9}$ स्वस्ति ( for पुत्रस् ). $Dn_2$ पुत्रस्ते विश्वसंभवे.

33 $G_2$ om. 33 ( cf. v. l. 8 ). Before 33, some MSS. ins. वैशंपायन उवाच. — $^{a}$) $D_1$ च ; $M_{1-3}$ [स]थ ( for तु ). $D_{4.5.7-9}$ इत्युक्ता वासुदेवेन. — $^{b}$) $B_{3.5}$ $D_2$ व्यासेन तु ; $T_1$ समाश्वस्ता ( for व्यासेन च ). $D_{10}$ $T_{2.3}$ $G_{1.2.4}$ $M_4$ व्यासेन सरितां वरा. — $^{d}$) $B_{1.5}$ $D_{4.5.9.10}$ $T_3$ $G_{1.2.4}$ $M_3$ स्ववारि ; $T_1$ सा चापि ( for स्वं वारि ).

34 $G_2$ om. 34 ( cf. v. l. 8 ). — $^{a}$) $D_{5.7-9}$ तां च ( for ते तां ). $T_1$ सांत्वयित्वा च सरितं. — $^{b}$) $V_1$ B Dn $D_{1.8}$ $G_1$ नृप ( for नृपाः ). — $Dn_1$ om. (hapl.) $34^{cd}$. — $^{c}$) $D_{2.4.5.7-9}$ राजन् ( for सर्वे ). $D_{10}$ S ( $G_2$ om. ) अनुज्ञाप्य च ते सर्वे. — $^{d}$) $B_2$ damaged ; $B_6$ $Dn_2$ $D_{4.7}$ $M_{1-3}$ जनाधिप ; $D_1$ तदा नृप ; $D_2$ नराधिपाः ( for जना° ). — After 34, $D_{4.5.7-9}$ ins. :

728* सर्वे ते दीनमनसः शोचमानाः पुनः पुनः ।
हस्त्यश्वरथयानैश्च संप्राप्ता हस्तिनापुरम् ।

$D_5$ cont. :

729* इत्येतद्बहुविस्तारमानुशासनिकं शुभम् ।
यत्रोक्ताः सर्वधर्माश्च पर्वण्यस्मिंस्त्रयोदशे ।
श्रुत्वा यान्स्वस्थतामाप धर्मपुत्रो युधिष्ठिरः ।
भीष्माद्भागीरथीपुत्रात्सर्वसंदेहहारिणः ।
एतत्त्रयोदशं पर्व धर्मनिश्चयकारकम् ।
अध्यायानां शतं चात्र षट्चत्वारिंशदेव तु ।
नव श्लोकसहस्राणि शतान्यष्टौ तथैव च ।
व्यासेनोदारमतिना दृष्टो ग्रन्थो महात्मना ।
आनुशासनिकं पर्व श्रुत्वा भक्तिसमन्वितः ।
मुच्यते सर्वपापेभ्यः सर्वधर्मफलं लभेत् ।
नारायणं पूजयित्वा भक्त्या परमया ततः ।
भीष्मोद्देशेन कर्तव्यं ब्राह्मणानां च तर्पणम् ।
व्यासरूपी हरिः साक्षात्पश्यतामिति कीर्तयेत् ।
दद्याद्धेनुहिरण्यादि वाचकाय विशेषतः ।

सर्वकामानवाप्नोति दीर्घमायुश्च विन्दति । [15]
द्वैपायनप्रसादेन नित्यमुत्सववान्भवेत् ।

Colophon om. in G2. —*Parvan name* : B Dn2. n3 D1 शांति. — *Sub-parvan* : B1 Dn3 D10 T G1. 3 M4 भीष्मस्वर्गारोहणं. — *Adhy. name* : D1. 2 M1-3 भीष्मोत्क्रांतिः; D5 युधिष्ठिरभीष्मसंवादः; G4 भीष्मस्वर्गप्राप्तिः. — *Adhy. no.* (figures, words or both): D5 156; D10 T2. 3 G4 252; T1 247; G1. 3 246; M1 240; M2 248; M3 249; M4 244.

— After the last colophon, V1 concludes with :

विद्वानेव हि जानाति लेखकस्य परिश्रमम् ।
नैव वन्ध्या विजानीयाद्गुर्विणीप्रसवव्यथाम् ।

लिखितेदं पुस्तकं जयनाथस्य समजानाग्रामावस्थितस्य । शुभमस्तु ॥ श्रीरस्तु ॥ नारायणाय ॥

— B1 concludes with :

ॐ तत्सत् । समाप्तं चेदं शान्तिपर्वणां दानधर्मपर्व । अस्यानन्तरं आश्रमेधिकं पर्व भविष्यति । श्री श्रीगुरवे नमः ।

* * * * * शुभाने
मासे शुभेश्वविदितेऽद्रिसुतासुपक्षे ।
शुभ्रे तु गीष्पतिदिनेऽपि शरेन्दुसंख्ये
साङ्गं कृतं किल मया शिवशान्तिपर्व ॥

श्रीरामतनुदेवशर्मणा लिखितमिदं पुस्तकम् । लिखितमलियत्नेन । यश्चोरयति पुस्तकं शूकरी तस्य माता पिता च गर्दभो भवेत् । श्री श्रीकृष्णाय नमः । ॐ नमः शिवाय नमः । ॐ दुर्गायै नमः । ॐ सरस्वत्यै नमः । ॐ श्यामायै नमः । श्री श्रीहरिः शरणम् ॥

— B3 concludes with :

समाप्तेदं शान्तिपर्व इति उत्तमानुशासनपर्व च । अस्यानन्तरमाश्वमेधिकं पर्व भविष्यति तस्यायमाद्यः श्लोकः नारायणमित्यादि ।

वैशंपायन उवाच ।
कृतोदकं तु राजानं धृतराष्ट्रं युधिष्ठिरः ।
पुरस्कृत्य महाबाहुरुत्ताराकुलेन्द्रियः ॥

यथा दृष्टेत्यादिपरिहारः ॥ ॐ नमः श्रीकृष्णाय । शुभमस्तु । शकाब्दाः । १४४२.

— B3 concludes with :

श्रीहरये देवदेवाय तस्मै नमः ॥ श्रीदुर्गाचरणारविन्दयुगले मतिरास्ताम् । ॐ नमो जगज्जनन्यै ॥

सदाशिवानीप्रियभूषणायै
सदाशिवानीप्रियभूषणाय ।
शिवान्वितायै च शिवान्विताय
नमः शिवायै च नमः शिवाय ॥
नमः शिवाभ्यां शशिशेखराभ्यां
परस्परश्लिष्टवपुर्धराभ्याम् ।
नगेन्द्रकन्यावृषकेतनाभ्यां
नमो नमः पार्वतीशंकराभ्याम् ॥

ॐ नमो भवभवानीभ्याम् ॥ द्वितीयशतएकचत्वारिं समाप्तोऽयं ग्रन्थ इति ॥

— B4. 5 conclude with :

अस्यानन्तरमाश्वमेधिकं पर्व भविष्यति । तस्यायमाद्यः श्लो

वैशंपायन उवाच ।
कृतोदकं तु राजानं धृतराष्ट्रं युधिष्ठिरः ।
पुरस्कृत्य महाबाहुरुत्ताराकुलेन्द्रियः ॥

B4 cont. :

श्रीहरिः । शकाब्दाः १७६४ ॥ श्रीचण्डीवरशर्मणः स्वामिदम् ॥ श्रीदुर्गा ॥

B5 cont. :

ॐ तत्सत् । ॐ नमो भगवते वासुदेवाय । शुभमस्तु शकातीताब्दाः १७३५ । श्रीहरिर्जयति । पौषस्य पंचमी सीयानिपिरिति (*sic*) ।

— Dn1 concludes with :

अस्यानु आश्रमेधिकं पर्व भविष्यति । तस्यायमाद्यः श्लोक
वैशंपायन उवाच ।
कृतोदकं तु राजानं धृतराष्ट्रं युधिष्ठिरः ।
पुरस्कृत्य महाबाहुरुत्ताराकुलेन्द्रियः ॥

श्रीकृष्णार्पणमस्तु ॥ श्रीजगदम्बार्पणमस्तु ॥

अदृष्टदोषान्मतिविभ्रमाद्वा यत्किंचिदूनं लिखितं मयेदम् ।
यच्चाधिकं तत्परिशोधनीयं कोपे न च स्युः खलु पण्डितेन
यादृशं पुस्तकं दृष्टं तादृशं लिखितं मया ।
यदि शुद्धमशुद्धं वा मम दोषो न विद्यते ॥

शके १७०६ वर्षे क्रोधीनामसंवत्सरे श्रावणशुद्धत्रयोदशी भृगुवासरे तद्दिने अनुशासनपर्व समाप्तम् । इदं पुस्तकं बापदेभट्टात्मजनीलकंठेन लिखितम् । इदं पुस्तकं राजेश्री अबाजीरा पण्डितप्रतिनिधीनाम् । शुभं भवतु ॥

— Dn2 concludes with :

अस्यानन्तरं चाश्वमेधिकं पर्व भविष्यति यस्यायमादिश्लोकः ॥
कृतोदकं तु राजानं धृतराष्ट्रं युधिष्ठिरः ।
पुरस्कृत्य महाबाहुरुत्ताराकुलेन्द्रियः ॥

दानधर्मे वृत्तान्ताः ॥ गौतमीमृत्युसंवादः । सुदर्शनोपाख्यानं ।

शुकव्याससंवादः । दैवपुरुषकारीयं । कर्मफलिकं । सृगालवानरसंवादः । दुरुपविष्टं । श्रीरुक्मिणीसंवादः । भङ्गाश्वोपाख्यानं । उपमन्युस्तवः । शिवनामसहस्रं । अष्टवक्रदिक्संवादः । श्येनकपोतीयं । स्वर्गनरकवर्णनं । अङ्गिरसतीर्थयात्रा । मतङ्गशक्रसंवादः । वीतहव्योपाख्यानं । कृष्णनारदसंवादः । ब्राह्मणप्रशंसा । नारदपञ्चचूडासंवादः । विपुलोपाख्यानं । विवाहधर्मः । च्यवनोपाख्यानं । च्यवनकुशिकसंवादः । आरामतडागवर्णनं । बृहस्पतीन्द्रसंवादः । अन्नदानप्रशंसा । नक्षत्रयोगशमनं । नृगवासुदेवसंवादः । गोप्रदानिकं । गोप्रश्नः । श्रीगोसंवादः । सुवर्णोत्पत्तिः । सुवर्णदानं । श्राद्धकल्पः । बिसस्तैन्यं । पुष्करस्तैन्यं । छत्रोपानहोत्पत्तिः । बलिप्रदानं । सुवर्णमनुसंवादः । अगस्त्यभृगुसंवादः । राजन्यचाण्डालसंवादः । हस्तिकूटं । ब्रह्मभगीरथसंवादः। आयुष्याचारः । ज्येष्ठकनिष्ठवृत्तिः । उपवासविधिः । विष्णोर्द्वादशकं । संसारचक्रं । अमांसभक्षणं । कीटोपाख्यानं । मैत्रेयभिक्षा । शाण्डिलीसुमनासंवादः । देवरहस्यं । भोज्याभोज्यानुकीर्तनं । प्रायश्चित्तं । एते वृत्तान्ताः समाप्ताः ॥ श्रीरस्तु ॥ शके १६७५ संवत् १८१० मास श्रावण शुद्ध ८ सोमवासरे । लिखितं राजेश्वरेण । शुभं भवतु ॥

— Dn3 concludes with :

समाप्तं चेदं शान्तिपर्वेति ॥ छ ॥ श्रीराम सत्यः ॥ श्रीकृष्ण सत्यः ॥ संवत् १७१७ वर्षे शाके १५८२ प्रवर्तमाने सच्छुद्ध डीडूज्ञातीय परीक्षक श्रीनाथजी तस्यात्मजः परीक्षक श्री ५ नाहान तस्यात्मज परीक्षक श्री ५ मोहनदासेन व्यासतीर्थनिवासी अग्निहोत्री विष्णुजी तस्यात्मजोऽग्निहोत्री शारंगधर तस्यात्मजाय उपासनिकायमहं ( sic ) ईश्वराय महाभारतस्य अनुशासनपर्व पौषान्तदर्शे अर्धोदयपर्वणि ब्रह्मार्पणबुद्ध्या प्रदत्तं ॥

— D1. 2 conclude with :

समाप्तं चेदमा( D2 °हमनु )शासनं पर्व । अस्यान्वाश्वमेधिकं पर्व यस्यायं प्रतिसंधिः ।

वैशंपायनः ।

कृतोदकं तु राजानं धृतराष्ट्रं युधिष्ठिरः ।
पुरस्कृत्य महाबाहुरुत्तताराकुलेन्द्रियः ॥

शुभं भूयात् ।

विष्टं । श्रीरुक्मिणीसंवादः । भङ्गोपाख्यानं । ईश्वरसहस्रनाम । अष्टावक्रदिक्संवादः । पात्रपरीक्षा । स्वर्गनरककीर्तनं । ब्रह्मघातीयं । अङ्गिरसतीर्थयात्रायां गङ्गामाहात्म्यं । इन्द्रमतङ्गसंवादः । वीतहव्योपाख्यानं । कृष्णनारदसंवादः । ब्राह्मणप्रशंसा । पृथिवीसंवादः । शक्रशम्बरसंवादः । पात्रपरीक्षा । नारदपञ्चचूलासंवादः । वपुलोपाख्यानं । विवाहधर्माः । वर्णसांकरिकं । पुत्रप्रणिधिः । नहुषच्यवनसंवादः । च्यवनकुशिकसंवादः । नियमदानफलानि । ब्राह्मणप्रशंसा । भूमिदानं । अन्नदानप्रशंसा । पानीयदानं । यमशर्मिलसंवादः । गोदानप्रशंसा । नृगोपाख्यानं । नाचिकेतोपाख्यानं । स्वयंभूशक्रसंवादः । सुवर्णोत्पत्तिः । रामवसिष्ठसंवादः । तारकवधः । तिथिश्राद्धं । तिथिकल्पे दानविधिः । गृहस्थाश्रमधर्माः । श्राद्धकल्पः । वृषादर्भिसप्तऋषिसंवादः । बिसस्तैन्यं । पुष्करस्तैन्यं । छत्रोपानदुत्पत्तिः । आरामतडागीयं । बलिदानं । बलिशुक्रसंवादः । सुमनोबलिः । धूपदीपदानं । अगस्त्यभृगुसंवादः । हस्तिपुत्रकीयं । पितामहभगीरथसंवादः । आयुष्याचारोद्देशः । ज्येष्ठकनिष्ठीयं । उपवासविधिः । तीर्थशौचं । संसारचक्रगतिः । अमांसभक्षणीयः । कीटोपाख्यानं । मैत्रेयभिक्षा । शाण्डिलीसुमनासंवादः । हरिणकृशीयं । उमामहेश्वरसंवादः । विष्णोर्नामसहस्रं । ब्राह्मणप्रशंसा । पवनार्जुनसंवादः । ब्राह्मणपूजा । महापुरुषनिर्देशः । दुर्वासोभिक्षा । ईश्वरमाहात्म्यं । कर्महैतुके आचारोपदेशः । वंशानुकीर्तनं । युधिष्ठिरस्वास्थ्यं । भीष्मानुज्ञा । युधिष्ठिरपुरगमनं । सर्वराज्ञामनुज्ञा । गदमदगमनं । मानसतीर्थकथनं । लोभाध्यायः । बहुलोपाख्यानं । देवर्षिवंशकीर्तनं । देवरहस्यं । पुनः कुरुक्षेत्रे भीष्मं प्रति युधिष्ठिरागमनं । भीष्मस्वर्गारोहणं । भागीरथ्याः श्रीकृष्णेन शोकापनोदो नाम ॥

इत्येता बहुवृत्तान्ता आनुशासनिकं शुभम् ।
यत्रोक्ता दानधर्माश्च पर्वण्यस्मिंस्त्रयोदशे ।
श्रुत्वा यान्स्वस्थतामाप धर्मपुत्रो युधिष्ठिरः ।
भीष्माद्भागीरथीपुत्रात्सर्वसंदेहहारिणः ।
आनुशासनिकं पर्व श्रुत्वा श्रद्धासमन्वितम् ।
मुच्येत सर्वपापेभ्यः सर्वदानफलं लभेत् ।
नारायणं पूजयित्वा भक्त्या परमया युतः ।
भीष्मोपदेशेन कर्तव्यं ब्राह्मणानां च [illegible]
[illegible]

अब्रवं नैकवर्णं तं सैकवर्णमथाब्रवीत् ।
जिता दासी भवेत्पुत्राः सा वाहं वा न संशयः ।
एकवर्णश्च वाजी स चन्द्रकोकनदप्रभः ।
साहं दासी भविष्यामि जिता पुत्रा न संशयः ।
ते यूयमश्वप्रवरमाविशध्वमतन्द्रिताः ।
सर्वेश्चैतं वालधिषु वाला भूत्वाञ्जनप्रभाः ।

सर्पाः ।

निकृत्या न जयः श्रेयान्मातः सत्या गिरः शृणु ।
आयत्यां च तदात्वे च न च धर्मोऽत्र विद्यते ।
सा त्वं धर्मादपेतं वै कुलस्यैवाहितं तव ।
निकृत्या विजयं मातर्मा स्म कार्षीः कथंचन ।
यद्यधर्मेण विजयं वयं काङ्क्षामहे क्वचित् ।
त्वया नाम निवार्याः स्म मा कुरुध्वमिति ध्रुवम् ।
सा त्वमस्मानपि सतो विपापानृजुबुद्धिनः ।
कल्मषेणाभिसंयोक्तुं काङ्क्षसे लोभमोहिता ।
ते वयं त्वां परित्यज्य द्रविष्याम दिशो दश ।
यत्र वाक्यं न ते मातः पुनः श्रोष्याम ईदृशम् ।
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथं प्रतिपन्नस्य परित्यागो विधीयते ।

कद्रूः ।

शृणोमि त्रिविधा वाचो हेतुमत्यः समीरिताः ।
वक्रगा मन्निवृत्त्यर्थं तदहं वो न रोचये ।
न च तत्पणितं मन्दाः शक्यं जेतुमतोऽन्यथा ।
जिते निकृत्या श्रुत्वैतत्क्षमं कुरुत पुत्रकाः ।
श्वोऽहं प्रभातसमये जिता धर्मेण पुत्रकाः ।
शैलूषिणी भविष्यामि विनताया न संशयः ।
इह चामुत्र चार्थाय पुत्रानिच्छन्ति मातरः ।
सेयमीहा विपन्ना मे युष्मानासाद्य संगताम् ।
इह वा तारयेत्पुत्रः प्रेत्य वा तारयेत्पितॄन् ।
नात्र चित्रं भवेत्किंचित्पुनातीति च पुत्रता ।
ते यूयं तारणार्थाय मम पुत्रा मनोजवाः ।
आविशध्वं हयश्रेष्ठं वाला भूत्वाञ्जनप्रभाः ।
जानाम्यधर्मं सकलं विजिता विनता भवेत् ।
निकृत्या दासभावस्तु युष्मानप्यवपीडयेत् ।
निकृत्या विजयो वेति दासत्वं वा पराजये ।
उभयं निश्चयं कृत्वा जयो वै धार्मिको वरः ।
यद्यप्यधर्मो विजयो युष्मानेव स्पृशेत्पुनः ।
गुरोर्वचनमास्थाय धर्मो वः स भविष्यति ।

Colophon.

---

post. half up to the prior half of line 91. D10 T2. 3 G2. 4 -संशपथा (for °यना). — (L. 92) T2. 3 G3. 4 M2 कृत- (for कृतः). — (L. 93) M तं (for तच्). — (L. 94) D10 T1 M अहमब्रुवं नैकवर्णं; T2. 3 G2-4 अहं ब्रु( G3 त्वपि ब्रु )वन्नै( G3. 4 °न्नै )कवर्णः ( T3 °र्णं; G2 °र्णे ); Madras ed. अहं ब्रुवं नैकवर्णं (for the prior half). T2 G2 [ऽ]स्यैक- (for सैक-). T1 एकवर्णं च साब्रवीत् (for the post. half). — (L. 95) D10 सहसा वै; T2 सा ह्यहं वै; T3 G साहसं वै (for सा वाहं वा°). — (L. 96) T1 स्याच् (for स). — (L. 98) M1 प्रविशध्वम् (for आ°). — (L. 99) M1-3 सर्वे (for सर्वे·). T1 वालदेशे (for वालधिषु). Cv सर्वे त्वेकं वालधिना (for the prior half). — (L. 100) D10 G2. 4 जये श्रेयो; T3 G1. 3 जनः श्रेयान् (for जयः श्रेयान्). — T1 om. line 101. — (L. 102) Cv कालस्यैव हितं वचः (for the post. half). — (L. 105) M स्मो (for स्म). Cv ध्रुवे (for ध्रुवम्). — (L. 106) T1 पापे नास्मान् (for सा त्वम°). T3 इति (for अपि). D10 G2. 4 ततो (for सतो). — (L. 108) T1 विद्रवाम; T2 M1. 2. 4 द्रविष्यामो (for °म). — Lines 110-111 = 1. App. I, No. 81, lines 109-110; 5. 178. 24; 12. 57. 7; 12. 138. 48; Rām. 2. 21. 13. — (L. 111) G2 कार्यं (for परि·). — (L. 112) D10 G2 विधिना (for विविधा). — (L. 113) Kumbh. ed. वक्रमार्गनिवृत्त्यर्थं (for the prior half). T1 ता (for वो). — (L. 114) D10 फ(भ)णितं; G2 पाणितं (for प°). — (L. 115) T1 M ऋते (for जिते). Kumbh. ed. क्षेमं (for क्षमं). — (L. 116) T1. 3 G1. 3 सा (for श्वो). D10 T1 G2. 4 M1. 2. 4 व( T1 च )क्रगाः (for पुत्रकाः). — (L. 117) T1 शैलूषी सं-; T3 G1. 3 M4 शैलूषणी (for °षिणी). — (L. 118) T1 सौख्याय; G2 चार्थेयं (for चार्थाय). — (L. 119) T3 साहमत्र विपापा हि; Madras ed. साहं विपन्ना निरये (for the prior half). T1 पुत्रान् (for युष्मान्). — T1 om. line 121. — (L. 121) D10 T2. 3 G M4 (also) पुत्रकाः (for °ता). — (L. 122) M मनोजवं. — (L. 124) T1 M4 जानाम्यधर्मः सकलो. — G2 om. (hapl.) line 125. — (L. 126) D10 G1. 3. 4 परे (D10 °रो) भवेत्; T2. 3 परो भवे; Kumbh. ed. पराभवे (for पराजये). Madras ed. दासीत्वमवरं भवेत् (for the prior half). — (L. 127) M1. 2 उभयोर् (for °यं). M4 परं (for वरः). — (L. 128) T1 हि (for [अ]पि). T1 M विजये. G2 वः सं-; M1-3 नैव; M4 एष (for एव). — (L. 129) D10 T2. 3 G1. 3. 4 आदाय; G2 M1. 3 आज्ञाय (for आस्थाय). G1 यः; G2 वै; Kumbh. ed. वा (for वः). Kumbh. ed. सं- (for स). — Colophon. *Sub-parvan:* D10 M दानधर्म. — *Adhy. name:* T2 सुपर्णोपाख्याने दासप्राप्तिः; M4 सौपर्णे

भीष्मः ।

श्रुत्वा तु वचनं मातुः क्रुद्धायास्ते भुजंगमाः ।
कृच्छ्रेणैवान्वमोदन्त केचिच्छिन्ना दिशो गताः ।
ये प्रतस्थुर्दिशस्तत्र क्रुद्धा तानशपत्कृशम् ।
भुजंगमानां मातासौ कद्रूर्वैरकरी तदा ।

कद्रूः ।

उत्पत्स्यति हि राजन्यः पाण्डवो जनमेजयः ।
चतुर्थो धन्विनां श्रेष्ठात्कुन्तीपुत्राद्धनंजयात् ।
स सर्पसत्रमाहर्ता क्रुद्धः कुरुकुलोद्वहः ।
तस्मिन्सत्रेऽग्निना युष्मान्पञ्चत्वमुपनेष्यति ।
एवं क्रुद्धाशपन्माता पन्नगान्धर्मचारिणः ।
गुरोः परित्यागकृतं नैतदन्यद्भविष्यति ।
एवं शप्ता दिशः प्राप्ताः पन्नगा धर्मचारिणः ।
विहाय मातरं क्रुद्धा गता वैरकरीं तदा ।
तत्र ये वृजिनं तस्या अनापन्ना भुजंगमाः ।
ते तस्य वाजिनो वाला बभूवुरसितप्रभाः ।
तान्दृष्ट्वा वालधिस्थांश्च पुत्रान्कद्रूरथाब्रवीत् ।
विनतामथ संहृष्टा हयोऽसौ दृश्यतामिति ।
एकवर्णो न वा भद्रे पणो नौ सुव्यवस्थितः ।
उदकादुत्तरन्तं तं हयं चैव च भामिनी ।
सा त्ववक्रमतिर्देवी विनता जिह्मगामिनीम् ।
अब्रवीद्भगिनीं किंचिद्विहसन्तीव भारत ।
हन्त पश्याव गच्छावः सुकृतो नौ पणः शुभे ।
दासी वा ते भविष्यामि त्वं वा दासी भविष्यसि ।
एवं स्थिरं पणं कृत्वा हयं ते तु ददर्शतुः ।
कृष्णा साक्षिणमात्मानं भगिन्यौ कुरुसत्तम ।
सा दृष्ट्वैव हयं मन्दं विनता शोककर्शिता ।
श्वेतं चन्द्रांशुवालं तं कालवालं मनोजवम् ।
तत्र सा ब्रीडिता वाक्यं विनता साश्रुबिन्दुका ।
उवाच कालवालोऽयं तुरगो विजितं त्वया ।
दासी मां प्रेषयस्वार्थे यथाकामवशां शुभे ।
दासाश्च कामकारा हि भर्तृणां नात्र संशयः ।

Colophon.

भीष्मः ।

ततः कद्रूर्समन्नीय विनतां धर्मचारिणीम् ।
दासीवत्प्रेषयामास सा च सर्वं चकार तत् ।
न विवर्णा न संक्षुब्धा न च क्रुद्धा न दुःखिता ।
प्रेष्यकर्म चकारास्या विनता कमलेक्षणा ।
इमा दिशश्चतस्रोऽस्याः प्रेष्यभावेन वर्तिताः ।
अथ स वैनतेयं वै बलदर्पौ समीयतुः ।
तं दर्पवशमापन्नं परिधावन्तमन्तिकात् ।
ददर्श नारदो राजन्देवर्षिर्दर्पसंयुतम् ।
तमब्रवीच्च देवर्षिर्नारदः प्रहसन्निव ।
किं दर्पवशमापन्नो न वै पश्यसि मातरम् ।

---

निकृतिनिवारणं. — *Adhy. no.* : S 23. — (L. 130) $T_1$ कृत्वा याने; $G_4$ क्रुद्धायां तु (for क्रुद्धायास्ते). — (L. 132) $T_1$ कृत्या (for क्रुद्धा). — (L. 133) $D_{10}$ $G_{2.4}$ सा (for [अ]सौ). — (L. 135) $G_{2.4}$ श्रेष्ठः. — (L. 136) $T_1$ -कुलोद्भवः (for °द्वहः). — (L. 137) $G_2$ [ऽ]ग्निरायुष्मान् (for ऽग्निना यु°). — $D_{10}$ om. (hapl.) lines 138–139; M transp. them. — (L. 138) $G_2$ इति (for एवं). Madras ed. च सा (for क्रुद्धा). — (L. 139) Madras ed. -कृतो (for -कृतं). Madras. ed. दोष पतद्भविष्यति (for the post. half). — (L. 141) $T_1$ क्रुद्धां; Madras ed. प्राप्ता. — (L. 142) Madras ed. तस्यां. $D_{10}$ उपपन्ना; $T_1$ अंगीचक्रुर्; $T_2$ $G_{2.4}$ $M_{1.3.4}$ अनुपन्ना (for अना°). — $T_1$ om. line 144. — (L. 145) $T_{1.3}$ $G_{1.3}$ $M_3$ संहृष्टां. — $T_1$ om. lines 146–147. — (L. 146) $T_3$ मया (for न वा). $G_2$ फणाकार- (for पणो नौ सु-). — (L. 147) $G_2$ तु (for तं). M हयं चेयाव भामिनि (for the post. half). — $T_3$ om. (hapl.) line 148. — (L. 148) $G_{1.3}$ $M_{2.3}$ सा तु वक्रमतीं ($M_{2.3}$ °ति) देवीं (for the prior half). $D_{10}$ $T_{1.2}$ G $M_4$ -गामिनी (for °नीम्). — (L. 149) $G_1$ विहरंतीव; $G_2$ °सन्निव (for °सन्तीव). — (L. 150) T M हंत गच्छाव पश्याव (for the prior half). $D_{10}$ $G_2$ सुकृते; $T_1$ कार्योसौ; $T_3$ संजातो (for सुकृतो). $T_1$ वि-; $G_2$ तौ (for नौ). — (L. 151) $T_2$ -भूता (for वा ते). — (L. 152) $D_{10}$ एतं; $G_2$ एतद् (for एवं). $T_1$ ततः कृत्वा तु विपणं (for the prior half). $D_{10}$ T $G_{1-3}$ तं (for तु). M हयं ददृशतुश्च ते (for the post. half). — (L. 154) $T_1$ $G_{1.3}$ [इ]ह (for [ए]व). $T_1$ M मंदा (for मन्दं). — (L. 156) $T_1$ M ततः (for तत्र). $M_1$ सं- (for सा). $M_{1.2.4}$ -बिंदुकं; $M_3$ -बिंदुनां (for °का). $T_1$ विनता धर्मचारिणी (for the post. half). — (L. 157) $T_3$ $M_{1.2}$ तुरंगो. $G_{1.3}$ विजितस्; M °ता (for °तं). — (L. 158) Kumbh. ed. दासी मां प्रेषय स्वार्थे (for the prior half). — (L. 159) $T_1$ दास्यहं; $M_{1.3.4}$ दासाश्च. — Colophon. *Sub-parvan* : $D_{10}$ M दानधर्म. — *Adhy. name* : $D_{10}$ $T_2$ सुपर्णोपाख्यानं; $M_4$ सौपर्णे अश्वदर्शनं. — *Adhy. no.* : S 24. — (L. 160) $T_3$ च (for [इ]व). — (L. 161) $T_1$ [अ]थ (for च). $G_2$ तं (for तत्). — (L. 162) $T_{1.3}$ M संरब्धा; $T_2$ $G_{2.4}$ संलुब्धा (for संक्षुब्धा). $M_{1.2.4}$ न क्रुद्धा न च दुःखिता (for the post. half). — (L. 164) $T_{2.3}$ $G_{1.3.4}$ M इमां (for इमा). $G_1$ स्युः (for ऽस्याः). — (L. 165) $T_3$ तं (for स). $T_1$ M तं (for वै). — (L. 168) $D_{10}$ देवऋषिर् (for च देवर्षिर्). — (L.

बलेन दृप्तः सततमहंमानकृतः सदा ।
दासीं पन्नगराजस्य मातुरन्तर्गृहे सतीम् ।
तमब्रवीद्वैनतेयः कर्म किं तन्महामुने ।
जनयित्री मयि सुते जाता दासी तपस्विनी ।
अथाब्रवीदृषिर्वाक्यं दीव्यती त्रिजिता खग ।
निकृत्या पन्नगेन्द्रस्य मात्रा पुत्रैः पुरा सह ।

गरुडः ।

कथं जिता निकृत्या सा भगवञ्जननी मम ।
ब्रूहि तन्मे यथावृत्तं श्रुत्वा वेत्स्ये ततः परम् ।
ततस्तस्य यथावृत्तं सर्वं तन्नारदस्तदा ।
आचख्यौ भरतश्रेष्ठ यथावृत्तं पतत्रिणः ।
तच्छ्रुत्वा वैनतेयस्य कोपो हृदि समाविशत् ।
जगर्हे पन्नगान्सर्वान्मात्रा सह परंतप ।
ततस्तु रोषाद्दुःखाच्च तूर्णमुत्पत्य पक्षिराट् ।
जगाम यत्र मातास्य कृच्छ्रे महति वर्तते ।
तत्रापश्यत्ततो दीनां जटिलां मलिनां कृशाम् ।
तोयदेन प्रतिच्छन्नां सूर्याभामिव मातरम् ।
तस्य दुःखाच्च रोषाच्च नेत्राभ्यामश्रु चास्रवत् ।
प्रवृत्तिं च निवृत्तिं च पौरुषे प्रतितस्थुषः ।
अनुक्त्वा मातरं किंचित्पतत्रिवरपुंगवः ।
कद्रूमेव स धर्मात्मा वचनं प्रत्यभाषत ।
यदि धर्मेण मे माता जिता यद्यप्यधर्मतः ।
ज्येष्ठा त्वमसि मे माता धर्मः सर्वः स मे मतः ।
इयं तु मे स्यात्कृपणा मयि पुत्रेऽम्ब दुःखिता ।
अनुजानीहि तां साधु मत्कृते धर्मदर्शिनी ।
कद्रूः श्रुत्वास्य तद्वाक्यं वैनतेयस्य धीमतः ।
उवाच वाक्यं दुष्प्रज्ञा परीता दुःखमूर्छिता ।
नाहं तव न ते मातुर्वैनतेय कथंचन ।
कुर्यां प्रियमनिष्टात्मा मां ब्रवीषि खग द्विज ।
तां तदा ब्रुवतीं वाक्यमनिष्टां क्रूरभाषिणीम् ।
दारुणां सूनृताभिस्तामनुनेतुं प्रचक्रमे ।

गरुडः ।

ज्येष्ठा त्वमसि कल्याणि मातुर्मे भामिनि प्रिया ।
सोदर्या मम चासि त्वं ज्येष्ठा माता न संशयः ।

कद्रूः ।

विहंगम यथाकामं गच्छ कामगम द्विज ।
सूनृताभिस्त्वया माता नादासी शक्यमण्डज ।
अमृतं यद्याहरेस्त्वं विहंग जननीं तव ।
अदासीं मम पश्येमां वैनतेय न संशयः ।

Colophon.

भीष्मः ।

तथेत्युक्त्वा तु विहगः प्रतिज्ञाय महाद्युतिः ।

---

169 ) T2 त्वं दर्प- ; G2 कं दर्प- ( for किं दर्प- ). — T1 om. line 170. —( L. 170 ) M स्तब्धः ( for दृप्तः ). D10 [अ]हं नाम ( for अहंमान- ). Cv बलेन च पुनः स्तब्धो योहं मानकृता सदा. —( L. 172 ) Kumbh. ed. महामते ( for °मुने ). T1 कर्मणा केन वै मुने ( for the post. half ). —( L. 173 ) M यज्जनित्री ( for जनयित्री ). —( L. 175 ) G2 आत्म- ( for मात्रा ). T1 मात्रा पुत्रपुरःसरैः ( for the post. half ). —( L. 176 ) D10 G2.4 M [अ]सौ ; T1 वै ( for सा ). D10 G2.4 भगवन्मुनिसत्तम ( for the post. half ). —( L. 177 ) D10 G2.4 यथातत्त्वं ( for °वृत्तं ). D10 T G1.3.4 योत्स्ये ( for वेत्स्ये ). —( L. 179 ) T1 यथावत्तत् ; M1–3.4 ( *inf. lin.* ) यथावच्च ( for °वृत्तं ). —( L. 180 ) T1 M क्रोधो ( for कोपो ). —( L. 181 ) D10 G स गर्हे ( for जगर्हे ). D10 S सह मात्रा ( by transp. ). T1 G2.4 परंतपः. —( L. 182 ) Madras ed. उत्प्लुत्य ( for उत्पत्य ). —( L. 183 ) T2 जगाम माता यत्रास्य ( for the prior half ). —( L. 184 ) T1 मलिनां जटिलां कृशां ( for the post. half ). — T1 om. line 185. T1 om. line 187. —( L. 187 ) T3 G4 प्रवृत्तिश्च निवृत्तिश्च ( for the prior half ). —( L. 189 ) D10 G2.4 च ( for स ). —( L. 191 ) G2 om. from the post. half up to the post. half of line 194. D10 G4 प्रणम्य प्रार्थयाम्यतः ; T1 स धर्मः सर्वतो मतः ; M तस्माद्धर्मः स मे मतः ( for the post. half ). —( L. 192 ) T1 च ( for ऽम्ब ). —( L. 193 ) T1 मां सार्धं ( for तां साधु ). G4 M -दर्शिनीं. —( L. 194 ) T1 च तद् ; M तस्य ( for [अ]स्य तद् ). —( L. 195 ) D10 T G वाचं ( for वाक्यं ). G2 दुष्प्राज्ञा. T1 पतिता ( for परीता ). —( L. 196 ) T1 कुते ( for न ते ). —( L. 197 ) G2 M [अ]निष्टां ( M4 °ष्टं ) मां ( for °ष्टात्मा ). D10 कुर्यामप्रियमनिष्टां ( for the prior half ). M प्र- ( for मां ). M4 कथं ( for खग ). —( L. 198 ) D10 निष्ठुरां ; Kumbh. ed. अनिष्टं ( for °ष्टां ). —( L. 199 ) T1 दारुणामकृतप्रज्ञाम् ( for the prior half ). — T1 G3 om. the ref. —( L. 200 ) T1.3 G1.3 M भगिनी ; T2 G2.4 भामिनी ( for °नि ). —( L. 201 ) D10 T3 सोदर्यां ; G1–3 सौदर्यां ; G4 सौकर्या ( for सोदर्या ). M1.2.4 ज्येष्ठ- ( for ज्येष्ठा ). — For line 201, T1 subst. :

* न दासी भवितुं योग्या मम माता तपस्विनी ।

—( L. 203 ) T1 सूनृताभिस्त्वं मा वाग्भिर् ( for the prior half ). M1.3 क्रियते ( for शक्यम् ). —( L. 204 ) D10 T2 G2.4 त्वं हि ; G1 त्वं च ( for त्वं ). —( L. 205 ) T2.3 G1.3.4 M2 अदासी. T2 अनु- ( for मम ). M4 पश्येयं ( for °मां ). Madras ed. अदासीं त्वमपश्येमां ( for the prior half ). — Colophon. *Sub-parvan :* D10 M

अमृताहरणे वाचं ततः पितरमब्रवीत् ।
कामं वै सूनृता वाचो विसृज्य च मुहुर्मुहुः ।
यच्चाप्यनुज्ञां मातुर्वै न च सा ह्यनुमन्यते ।
सा मा चतुर्विधा वाचो वज्रकल्पा विसृज्य वै ।
भगवन्विनता दासी मम माता महाद्युते ।
कद्रूः प्रेषयते चैव दासीयमिति चाब्रवीत् ।
आहरामृतमित्येव मोक्ष्यते विनता ततः ।
सोऽहं मातुर्विमोक्षार्थमाहरिष्य इति ब्रुवन् ।
अमृतं प्रार्थितस्तूर्णमाहर्तुं प्रतिनन्द्य वै ।

कश्यपः ।

अमृतं तात दुष्प्रापं देवैरपि कुतस्त्वया ।
रक्ष्यते हि भृशं पुत्र रक्षिभिस्तन्निबोध मे ।
गुप्तमग्निर्भृशं साधु सर्वतः परिवारितम् ।
अनन्तरमथो गुप्तं ज्वलता जातवेदसा ।
ततः शतसहस्राणि प्रयुतान्यर्बुदानि च ।
रक्षन्त्यमृतमत्यर्थं किंकरा नाम राक्षसाः ।
तेषां शक्त्यृष्टिशूलांश्च शतघ्न्यः पट्टसास्तथा ।
आयुधा रक्षिणां तात वज्रकल्पाः शिलास्तथा ।
ततो जालेन महता अवनद्धं समन्ततः ।
अयस्मयेन वै तात वृत्रहन्तुः स शासनात् ।
तत्त्वमेवंविधं तात कथं प्रार्थयसेऽमृतम् ।
सुरक्षितं वज्रभृता वैनतेय विहंगम ।
इन्द्रेण देवैर्नागैश्च खड्गैर्गिरिजलादिभिः ।

गरुडः ।

पुत्रगृद्ध्या ब्रवीष्येतच्छृणु तात विनिश्चयम् ।
बलवानुपायवानस्मि भूयः किं करवाणि ते ।
तमब्रवीत्पिता हृष्टः प्रहसन्वै पुनः पुनः ।
यदि तौ भक्षयेस्तात क्रूरौ कच्छपवारणौ ।
तथा बलमसेयं ते भविता तत्र संशयः ।
अमृतस्यैव चाहर्ता भविष्यसि न संशयः ।

गरुडः ।

क तौ क्रूरौ महाभाग वर्तेते हस्तिकच्छपौ ।
भक्षयिष्याम्यहं तात बलस्याप्यायनं प्रति ।

कश्यपः ।

पर्वतो वै समुद्रान्ते नभः स्पृष्ट्वेह तिष्ठति ।
उरगो नाम दुष्प्रापः पुरा देवगणैरपि ।
गोरुतानि स विस्तीर्णः पुष्पितद्रुमसानुमान् ।
तत्र पन्थाः कृतस्तात कुञ्जरेण बलीयसा ।
गोरुतान्युच्छ्रयस्तस्य त्रत सप्त च पुत्रक ।
गच्छतागच्छता चैव क्षपितः स महागिरिः ।
तावान्भूमिसमस्तात कृतः पन्थाः समुत्थितः ।
तेन गत्वा स मातंगः पिपासुर्युद्धमिच्छति ।
तमतीत्य तु शैलेन्द्रं ह्रदः कोकनदायुतः ।
कनकेति च विख्यातस्तत्र कूर्मो महाबलः ।
गोरुतानि स विस्तीर्णः कच्छपः कुञ्जरश्च सः ।
आयामतश्चापि समौ तेजोबलसमन्वितौ ।

दानधर्म॰. — *Adhy. no.* : S 25. — Before line 208, $D_{10}$ $T_{2,3}$ $G_{1,2,4}$ ins. गरुडः. — $T_1$ *om.* lines 208–210. — (L. 208) $D_{10}$ $G_{2,4}$ कामं च ( $G_2$ तु ); M तामहं (for कामं वै). M व्यसृजं वै (for विसृज्य च). — (L. 209) M ॰या चा( $M_4$ यच्छा )प्यनुज्ञा ( $M_1$ ॰ज्ञां ) मातुर्मे (for the prior half). — (L. 210) M तन् (for सा). — (L. 213) $M_4$ [आ]ह (for [ए]त ). $T_1$ तव (for ततः). — (L. 214) T $G_{1,3}$ $M_{2,3}$ साहं (for सोऽहं). — (L. 215) $T_1$ $M_{1,3,4}$ प्रस्थितस् (for प्रार्थि॰). M प्रतिनंद (for ॰नन्द्य). $T_1$ अनुजानीहि मां प्रभो; Madras ed. हर्तुमप्रतिनंद्य वै (for the post. half). — (L. 216) $G_4$ प्राप्य (for तात). — (L. 220) Kumbh. ed. अयुतानि (for प्र॰). $D_{10}$ अयुतानि (for अर्बुदानि). $G_4$ [अ]पि (for च). — (L. 221) Kumbh. ed. अत्यंतं (for अत्यर्थं). — (L. 222) $D_{10}$ $G_4$ शक्त्यश्च; $G_2$ शक्तिश्च (for शक्त्यृष्टि-). — (L. 223) $T_1$ शिताः (for तथा). — (L. 224) $D_{10}$ $G_{2,4}$ अपिनद्धं; Madras ed. अप॰ (for अव॰). — (L. 225) $T_1$ अयोमयेन (for अयस॰). — $T_1$ *om.* lines 227–228. $D_{10}$ $T_{2,3}$ $G_{1,3}$ M *om.* line 228. — (L. 229) $T_1$ पुत्रबुध्या; $G_{2,4}$ ॰गृध्न्या (for ॰गृद्ध्या). $D_{10}$ [अ]ब्रवीद् (for ब्रवीषि). — (L. 230) Prior half hypermetric. — (L. 232) $D_{10}$ कृशौ (for क्रूरौ). — (L. 233) $T_1$ M भविष्य( $T_1$ $M_4$ ॰ते )ति (for ॰ता तन्). — (L. 234) $T_1$ ततो हर्ता (for [ए]व चाहर्ता). $T_2$ भविष्यति (for ॰सि). — $D_{10}$ *om.* the ref. — (L. 235) $G_4$ महाभागौ (for ॰ग). $D_{10}$ $G_2$ गज- (for हस्ति-). — $T_1$ M पिता; some MSS. काश्यपः (for कश्यपः). — (L. 237) $D_{10}$ $G_2$ सर्वतो; $M_1$ पूर्वतो (for प॰). $D_{10}$ $T_2$ $G_2$ $M_{1,3,4}$ [इ]व (for [इ]ह). — (L. 238) $D_{10}$ $G_4$ पर्वतो; $T_1$ तुरगो (for उरगो). $T_1$ अलं (for अपि). — (L. 239) $T_3$ गोरुतानां; Cv ॰तं तु (for ॰तानि). $D_{10}$ $T_2$ सु- (for स). — M $T_1$ गोरुतादपि विस्तीर्णः (for the prior half). — M transp. lines 240 and 241. — (L. 240) $T_2$ विस्तरेण (for कुञ्ज॰). — $T_1$ *om.* line 241. — (L. 241) $T_2$ तात (for तस्य). — (L. 243) $T_1$ M समः सुखः (for समुत्थितः). — $T_1$ *om.* line 244. — (L. 244) $D_{10}$ $T_3$ $G_2$ (before corr.)$_{,4}$ ह्रदम् (for युद्धम्). — $T_1$ *om.* line 246. — (L. 246) $M_{1,2,4}$ करकेति (for कन॰). $T_3$ $G_1$ ततः (for

पुनरावृत्तिमापन्नौ तावेतौ मधुकैटभौ ।
जन्मान्तरे विप्रमूढौ परस्परवधैषिणौ ।
यदा स नागो व्रजति पिपासुस्तं जलाशयम् ।
तदैनं कच्छपो रोषात्प्रतियाति महाबलः ।
नखैश्च दशनैश्चापि निमज्योन्मज्य चासकृत् ।
विरराद्ग्रहस्तेन कुञ्जरं तं जलेचरः ।
नागराडपि तोयार्थी पिपासुश्चरणैरपि ।
अग्रहस्तेन दन्ताभ्यां निवारयति वारिजम् ।
स तु तोयादुत्तिष्ठन्वारिजो गजयूथपम् ।
नखैश्च दशनैश्चैव द्विरदं प्रतिषेधति ।
निवारितो गजश्रेष्ठः पुनर्गच्छति स्वं वनम् ।
पिपासुः छिन्नहस्ताग्रो रुधिरेण समुक्षितः ।
तौ गच्छ सहितौ पुत्र यदि शक्तोपि भक्षय ।
न तौ पृथक्त्वया शक्यावप्रमत्तौ बले स्थितौ ।

Colophon.

गरुडः ।

कथं तौ भगवञ्शक्यौ मया वारणकच्छपौ ।
युगपद्ग्रहीतुं तन्मे त्वमुपायं वक्तुमर्हसि ।

कश्यपः ।

योद्धुकामे गजे तस्मिन्मुहूर्तं स जलेचरः ।
उत्तिष्ठति जलात्तूर्णं योद्धुकामः पुनः पुनः ।
जलजं निर्जलं तात प्रमत्तं चैव वारणम् ।
ग्रहीष्यसि पतंगेश नान्यो योगोऽत्र विद्यते ।

भीष्मः ।

इत्येवमुक्तो विहगस्तद्गत्वा वनमुत्तमम् ।
ददर्श वारणेन्द्रं तं मेघाचलसमप्रभम् ।
तां स नागो गिरेर्वीथिं संप्राप्त इव भारत ।
स तं दृष्ट्वा महाभागः संप्रहृष्टतनूरुहः ।
बिभक्षयिषतो राजन्दारुणस्य महात्मनः ।
मातंगं कच्छपं चैव प्रहर्षः सुमहानभूत् ।
अथ वेगेन महता खेचरः स महाबलः ।
संकुच्य सर्वगात्राणि कृच्छ्रेणैवान्वपद्यत ।
तथा गत्वा तमध्वानं वारणप्रवरो बली ।
निशश्वास महाश्वासं श्रमाद्विश्रमणाय च ।
तस्य निःश्वासवातेन मदगन्धेन चैव ह ।
उदतिष्ठन्महाकूर्मो वारणप्रतिषेधकः ।
तयोः सुतुमुलं युद्धं ददर्श पतगेश्वरः ।
कच्छपेन्द्रद्विरदयोरिन्द्रप्रह्लादयोरिव ।
स्पृशन्तमग्रहस्तेन तोयं वारणयूथपम् ।
दन्तैर्नखैश्च जलजो वारयामास भारत ।
जलजं वारणोऽप्येवं चरणैः पुष्करेण च ।
प्रत्यषेधन्निमज्जन्तमुन्मज्जन्तं तथैव च ।
मुहूर्तमभवद्युद्धं तयोर्भीमप्रदर्शनम् ।
अथ तस्माज्जलाद्राजन्कच्छपः स्थलमास्थितः ।
स तु नागः प्रभग्नोऽपि पिपासुर्न न्यवर्तत ।
तोयगृध्नुः शनैस्तर्षादपासर्पत पृष्ठतः ।

तत्र ). —( L. 247 ) $T_2$ सु- ( for स ). $G_3$ यः ( for सः ). —( L. 248 ) $D_{10}$ $T_{2,3}$ M [अ]द्रि- ( for [अ]-पि ). Cv यथासौ गोवृद्दति ( sic ) ( for the prior half ). $T_1$ -समौ तथा ( for -समन्वितौ ). — $T_1$ om. ( hapl. ) lines 253–257. —( L. 254 ) $G_2$ विदधार ; Kumbh. ed. विददार ( for विरराद ). M -हस्ते तं ( for -हस्तेन ). $G_4$ तज् ; $M_2$ स ( for तं ). $M_{1,3,4}$ कुंजरं सलिलेचरः ( for the post. half ). —( L. 259 ) $T_1$ स ( for नि- ). —( L. 260 ) $D_{10}$ $G_{1-3}$ $M_2$ समुत्क्षितः ( for °क्षितः ). —( L. 262 ) Kumbh. ed. पृथक्तया. $D_{10}$ T G जले ( for मले ). — Colophon. *Sub-parvan :* $D_{10}$ M दानधर्म. — *Adhy. name :* $T_2$ सुपर्णोपाख्याने अमृताहरणे गजकच्छपकथनं ; $M_4$ सौपर्णे काश्यपगरुडसंवादः. — *Adhy. no.:* S 26. —( L. 264 ) Prior half hypermetric. $T_1$ यत्तन्मे ; $G_2$ तस्मिंस्त्वम् ( for तन्मे त्वम् ). — $T_1$ पिता ; some MSS. काश्यपः ( for कश्यपः ). —( L. 265 ) $D_{10}$ $T_3$ $G_2$ गते ( for गजे ). $T_1$ मुहूर्तांव ( for °र्तं ). $T_2$ मुहूर्तं सलिलेचरः ( for the post. half ). —( L. 266 ) $T_{2,3}$ उत्तिष्ठते. — $T_1$ om. line 267. —( L. 267 ) Kumbh. ed. निर्गतं ( for निर्जलं ). —( L. 268 ) $D_{10}$ $G_2$ गृहीष्यसि ( for ग्र° ). $T_1$ तदा मत्तौ ( for पतंगेश ). —( L. 269 ) $T_1$ $G_{1,3}$ उक्त्वा ( for उक्तो ). — $T_1$ om. line 271. —( L. 271 ) $G_2$ तं ( for तां ). $T_2$ $G_{1,3,4}$ वृद्धिं ; $T_3$ उर्वीं ; $G_2$ विद्धि ( for वीथिं ). $D_{10}$ तं स नागो गिरिवृद्धिं ( for the prior half ). —( L. 272 ) M महाभाग ( for °गः ). — $T_1$ om. line 273. —( L. 273 ) M महौजसः ( for महात्मनः ). —( L. 274 ) M तं गजं ( for मातंगं ). $T_2$ जलेचरं कच्छपं च ( for the prior half ). $D_{10}$ $T_2$ $G_2$ स ( for सु- ). $T_1$ हर्षेण समभिप्लुतः ( for the post. half ). — $T_1$ om. lines 275–280. —( L. 275 ) $D_{10}$ $T_2$ G M खचरः ( for खे° ). —( L. 277 ) $T_2$ तदा ; $G_{1,3}$ यथा ; M अथ ( for तथा ). —( L. 279 ) Madras ed. तेन ( for मद- ). $M_2$ -गंडेन ( for -गन्धेन ). —( L. 282 ) M -द्विपेंद्राभ्याम् ( for -द्विरदयोर् ). $T_1$ गजकच्छपयोश्चैव ( for the prior half ). — $T_1$ om. line 286. —( L. 286 ) $D_{10}$ प्रत्यक्षयन् ( for °षेधन् ). $G_2$ उन्मुखैव ( for उन्मज्जन्तं ). —( L. 287 ) $D_{10}$ $T_1$ $G_{2,4}$ M एवं मुहूर्तमभवद् ( for the prior half ). $D_{10}$ $T_1$ $G_{2,4}$ M युद्धं ( for तयोर् ). —( L. 288 ) $M_1$ सालम् ( for स्थलम् ). $T_1$ M आश्रितः ( for आस्थितः ). —( L. 289 ) $D_{10}$ $T_1$

तं दृष्ट्वा जलजं तूर्णमपसर्पन्तमाहवात् ।
अभिदुद्राव वेगेन वज्रपाणिरिवासुरम् ।
तं रोषात्स्थलमुत्तीर्णमसंत्रासं गजोत्तमम् ।
उभावेव समस्तौ तु जग्राह विनतासुतः ।
चरणेन तु सव्येन जग्राह स गजोत्तमम् ।
प्रस्पन्दमानं बलवान्दक्षिणेन तु कच्छपम् ।
उत्पपात ततस्तूर्णं पन्नगेन्द्रनिषूदनः ।
दिवं खं च समावृत्य पक्षाभ्यामपराजितः ।
तेन चोत्पतता तूर्णं संगृहीतौ नखैर्भृशम् ।
वज्रगर्भैः सुनिशितैः प्राणांस्तूर्णं मुमोचतुः ।
तौ गृह्य बलवांस्तूर्णं स्रस्तपादशिरोधरौ ।
विवल्गन्निव खे क्रीडन्खेचरोऽभिजगाम ह ।
भक्तुकामस्ततो वीरः पृथिव्यां पृथिवीपते ।
निरैक्षत न चापश्यद्द्रुमं पर्याप्तमासितुम् ।
नैमिषं त्वथ संप्राप्य देवारण्यं महाद्युतिः ।
अपश्यत द्रुमं कंचिच्छाखास्कन्धसमावृतम् ।
हिमवच्छिखरप्रख्यं योजनद्वयमुच्छ्रितम् ।
परिणाहेन राजेन्द्र नल्वमात्रं समन्ततः ।
तस्य शाखाभवत्काचिदायता पञ्चयोजनम् ।
दृढमूला दृढस्कन्धा वज्रपत्रसमाचिता ।
तत्रोपविष्टः सहसा वैनतेयो निगृह्य तौ ।
भक्तुकामस्ततः शाखां तस्य वेगादवापतत् ।
तां पतन्तीमभिप्रेक्ष्य प्रेक्ष्य चर्षिगणानथ ।
आसीनान्वसुभिः सार्धं सत्रेण जगतीपते ।
वैखानसान्नाम यतीन्वालखिल्यगणानपि ।
तस्य भीराविशत्तत्र पतगेन्द्रस्य भारत ।
तान्दृष्ट्वा स यतींस्तत्र समासीनान्सुरैः सह ।
तुण्डेन गृह्य तां शाखामुत्पपात खगेश्वरः ।
तौ च पक्षी भुजंगाशो व्योम्नि क्रीडन्निवाव्रजत् ।
तं दृष्ट्वा गुरुसंभारं प्रगृह्योत्पतितं खगम् ।
ऋषयस्तेऽब्रुवन्सर्वे गरुडोऽयमिति स्म ह ।
न ह्यन्यः क्षमते कश्चिद्यथायं वीर्यवान्खगः ।
असौ गच्छति धर्मात्मा गुरुभारसमन्वितः ।
अयं क्रीडन्निवाकाशे तस्माद्गरुड एव सः ।
एवं ते समयं सर्वे वसवश्च दिवौकसः ।
अकार्षुः पक्षिराजस्य गरुडेत्येव नाम ह ।
स पक्षी पृथिवीं सर्वां परिधावंस्ततस्ततः ।
मुमुक्षुः शाखिनः शाखां न स्म देशमपश्यत ।
स वाचमशृणोद्दिव्यामुपर्युपरि जल्पतः ।
देवदूतस्य विस्पष्टमाभाष्य गरुडेति च ।
वैनतेय कुविन्देषु समुद्रान्ते महाबल ।
पात्यतां शाखिनः शाखा न हि ते धर्मनिश्चयः ।

$G_{2.4}$ M निवर्तेते ( for न्यवर्तत ). — $T_1$ line 290. — (L. 290) $G_2$ लोभगृद्धः ( for °गृध्नुः ). $T_3$ दर्पाद्; $G_2$ M तस्माद् ( for तर्पाद् ). $D_{10}$ $G_4$ अपसर्पंत; $G_{1.3}$ उपा°; $G_2$ M अ( $M_3$ उ )पसर्पंति ( for अपासर्पत ). — ( L. 291 ) $G_4$ जलजस्( for °जं ). $T_{1.3}$ आहवे ( for °वात् ). — $T_1$ om. lines 293–294. — ( L. 293 ) $G_1$ तद् ( for तं ). $D_{10}$ $G_2$ स्थूलम् ( for स्थ° ). $T_2$ $G_4$ असंत्रास- ( for °सं ). — ( L. 294 ) $D_{10}$ $G_2$ $M_{1.2.4}$ समेतौ; $T_3$ समौ तौ ( for समस्तौ ). M जग्राह विनतात्मजः ( for the post. half ). — ( L. 296 ) $T_1$ प्रस्पंदमानो; Madras ed. प्रस्कंदमानं. — ( L. 297 ) M -निसूदनः ( for -निषू° ). — $T_1$ om. line 298. — ( L. 298 ) Kumbh. ed. समुत्पत्य ( for समावृत्य ). — ( L. 299 ) $T_{2.3}$ $G_{1.3.4}$ $M_3$ संग्रहीतौ; Madras ed. संगृहीतैर् ( for °हीतौ ). $T_1$ संगृहीतेन तौ भृशं ( for the post. half ). — ( L. 300 ) $T_1$ वज्रकल्पैः ( for °गर्भैः ). $G_2$ मुमोच तत् ( for °चतुः ). $T_1$ नखैः प्राणानमुंचतां ( for the post. half ). — ( L. 301 ) $T_1$ om. the post. half and the prior half of line 302. $T_3$ $G_{1.3}$ स्तब्ध- ( for स्रस्त- ). — ( L. 302 ) $G_1$ विवलन्; $G_4$ विचरन् ( for विवल्गन् ). $T_2$ खचरो हि ( for खेचरोऽभि- ). — ( L. 303 ) $T_1$ उदीच्यां ( for पृथिव्यां ). — ( L. 304 ) $G_2$ निरीक्ष्यते ( for निरैक्षत ). — ( L. 305 ) Some MSS. नैमिशं ( for °षं ). — $T_1$ om. lines 306–315. — ( L. 306 ) $M_{1.3}$ अपश्यत्तं; $M_2$ °त्तद् ( for °त ). $D_{10}$ $T_3$ G किंचिच् ( for कं° ). — ( L. 307 ) $D_{10}$ $G_2$ उच्छ्रयं ( for उच्छ्रितम् ). — ( L. 310 ) $D_{10}$ दृढ-; $T_{2.3}$ $G_{1.3.4}$ M बहु- ( for वज्र- ). — ( L. 311 ) $G_4$ जगृह्य ( for नि° ). — ( L. 313 ) Kumbh. ed. अधः ( for अथ ). — ( L. 315 ) $D_{10}$ S वैखानसानां याति( $T_3$ $G_2$ °ती )नां ( for the prior half ). — ( L. 316 ) Kumbh. ed. तत्र ( for तस्य ). Kumbh. ed. तस्य ( for तत्र ). $T_1$ om. (hapl.) from the post. half up to the prior half of line 317. — ( L. 318 ) $M_{1.2}$ तुंडे नि- ( for तुण्डेन ). — ( L. 319 ) $D_{10}$ भुजंगेशो ( for °गाशो ). $T_1$ [आ]द्रवत् ( for [अ]व्रजत् ). — ( L. 320 ) $T_1$ त्वरितं ( for [उ]त्पतितं ). — ( L. 321 ) $D_{10}$ तं ( for ते ). — ( L. 322 ) M पततां ( for क्षमते ). $T_1$ [अ]सौ ( for [अ]यं ). — ( L. 323 ) $T_1$ -समन्वितं ( for °तः ). — $T_1$ om. lines 324–325. — ( L. 324 ) $G_4$ अथ ( for अयं ). — ( L. 325 ) $D_{10}$ $T_3$ $G_2$ मुनयः ( for समयं ). $T_2$ $G_4$ वासवश् ( for व° ). — ( L. 326 ) $G_2$ अकार्षीः ( for °र्षुः ). $T_1$ देवाश्च ऋषयश्चक्रुर् ( for the prior half ). — ( L. 327 ) $T_1$ इतस्ततः ( for तत° ). — ( L. 328 ) $D_{10}$ तस्य ( for न स ). — ( L. 329 ) M स वाचमथ शुश्राव ( for the prior half ).

तच्छ्रुत्वा गरुडस्तूर्णं जगाम लवणाम्भसः ।
उद्देशं यत्र ते मन्दाः कुविन्दाः पापकर्मिणः ।
ततो गत्वा ततः शाखां मुमोच पततां वरः ।
तया हता जनपदास्तदा षट्त्रिंशतो नृप ।
स देशो राजशार्दूल ख्यातः परमदारुणः ।
शाखापतग इत्येव कुविन्दानां दुरात्मनाम् ।

Colophon.

भीष्मः ।

हत्वा तं पक्षिशार्दूलः कुविन्दानां जनव्रजम् ।
उपोपविश्य शैलाग्रे भक्षयामास तावुभौ ।
वारणं कच्छपं चैव संहृष्टः स पतत्रिराट् ।
तयोः स रुधिरं पीत्वा मेदसी च परंतप ।
संहृष्टः पततां श्रेष्ठो लब्ध्वा बलमनुत्तमम् ।
जगाम देवराजस्य भवनं पन्नगाशनः ।
तं प्रणम्य महात्मानं पावकं विस्फुलिङ्गिनम् ।
रात्रिंदिवं प्रज्वलितं रक्षार्थममृतस्य ह ।
तं दृष्ट्वा विहगेन्द्रस्य भयं तीव्रमथाविशत् ।
न तु तोयान्न रक्षोभ्यो भयमस्योपपद्यते ।
पक्षित्वमात्मनो दृष्ट्वा ज्वलन्तं च हुताशनम् ।
पितामहमथो गत्वा ददर्श भुजगाशनः ।
तं प्रणम्य महात्मानं गरुडः प्रयताञ्जलिः ।
प्रोवाच तदसंदिग्धं वचनं पतगेश्वरः ।
उद्यतं गुरुकृत्ये मां भगवन्धर्मनिश्चितम् ।
विमोक्षणार्थं मातुर्हि दासभावादनिन्दितम् ।
कद्रूसकाशममृतं मया हर्तव्यमीश्वर ।
तदा मे जननी देव दासभावात्प्रमोक्ष्यते ।
तत्रामृतं प्रज्वलितो नित्यमीश्वर रक्षति ।
हिरण्यरेता भगवान्पाकशासनशासनात् ।
तत्र मे देवदेवेश भयं तीव्रमथाविशत् ।
ज्वलन्तं पावकं दृष्ट्वा पक्षित्वं चात्मनः प्रभो ।
समतिक्रमितुं शक्यः कथं स्यात्पावको मया ।
तस्याभ्युपायं वरद वक्तुमीशोऽसि मे प्रभो ।
तमब्रवीन्महाभाग तप्यमानं विहंगमम् ।
अग्नेः संशमनोपायमुत्स्मयन्स पुनः पुनः ।
पयसा शाम्यते वत्स सर्पिषा च हुताशनः ।
शरीरस्थोऽपि भूतानां किं पुनः प्रज्वलन्भुवि ।
नवनीतं पयो वापि पावके त्वं समादधेः ।
ततो गच्छ यथाकामं न त्वा धक्ष्यति पावकः ।

Colophon.

—(L. 330) $T_1$ विसृष्टम् (for विसृ°). —(L. 331) $T_1$ कुळिंदेषु; $M_{1.3}$ कुणिं°; $M_4$ कुलिं° (for कुविन्देषु). —(L. 332) $G_2$ सर्व- (for धर्म-). $T_1$ -विप्लवः (for -निश्चयः). Madras ed. न भीस्ते धर्मनिश्चयात् (for the post. half). —(L. 333) $T_1$ विहगस् (for गरुडस्). $D_{10}$ (before corr.) जगाम लवणांभसि (for the post. half). —(L. 334) $T_1$ कुळिंदाः; M कुणिं($M_4$ °लिं)दाः (for कुविन्दाः). $D_{10}$ $T_2$ $G_{2.4}$ -कारिणः; $G_3$ -कर्मणः (for -कर्मिणः). —(L. 335) $T_1$ M तत्र (for ततो). —(L. 336) $T_1$ तदा; $G_{1.3.4}$ $M_2$ तथा (for तया). Kumbh. ed. षड्विंशतो (for षट्त्रिंशतो). —(L. 338) $T_1$ $M_2$ -पातक; $G_2$ -पतंग; $M_1$ -वातिक (for -पतग). $G_4$ शाखामपातयत्येव (for the prior half). $T_1$ कुळिंदानां; $M_{1.3}$ कुणिं°; $M_4$ कुलिं° (for कुविन्दानां). $T_2$ $G_{1.3}$ महात्मनां (for दुरा°). —Colophon. *Sub-parvan* : $D_{10}$ M दानधर्म. —*Adhy. name* : $D_{10}$ सुपर्णोपाख्यानं; $T_2$ सुपर्णोपाख्याने काश्यपगरुडसंवादे शाखाविसर्जनं; $M_4$ सौपर्णे शाखामोचनं. —*Adhy. no.* : S 27. —(L. 339) $T_2$ तु (for तं). $T_1$ कुळिंदानां; M कुणिं($M_4$ °लिं)दानां (for कुविन्दानां). $G_1$ जनं प्रति; $G_3$ जनव्रतीं; Kumbh. ed. जनं मती (for जनव्रजम्). —(L. 341) $T_1$ न स हृष्टः (for संहृष्टः स). —(L. 342) $T_{2,3}$ तु (for स). $T_1$ परंतपः. —(L. 343) $T_1$ स (for सं-). $D_{10}$ $G_2$ फलम् (for बलम्). $T_1$ लब्ध्वा च बलमुत्तमं (for the post. half). —$T_1$ om. (hapl.) lines 345–349. —(L. 345) M तत्रापश्यन् (for तं प्रणम्य). —(L. 346) $M_1$ रात्रिंदिनं (for °वं). —(L. 347) M तं दृष्ट्वा पतगेंद्रस्य (for the prior half). Kumbh. ed. उपाविशत् (for अथा°). —$G_2$ om. line 348. —(L. 348) $D_{10}$ रक्षेभ्यो; Kumbh. ed. रक्षिभ्यो (for रक्षोभ्यो). Madras ed. -जायते (for -पद्यते). —(L. 349) M ज्वलितं जातवेदसं (for the post. half). —(L. 350) $T_1$ om. from मथो up to प्रणम्य (in line 351). —(L. 351) $D_{10}$ $G_4$ गरुडः प्रांजलिः स्थितः; $M_{1.2}$ °डः पततांजलिः (for the post. half). —(L. 352) $T_3$ तम्; M [ए]तद् (for तद्). $D_{10}$ $G_2$ वचनं पन्नगेश्वरः (sic); Madras ed. °नं पक्षिराट् ततः (for the post. half). —$T_1$ om. 353–354. —(L. 354) $T_2$ दासी- (for दास-). M अनिंदित. —(L. 356) $M_{1.2.4}$ दासभावं; Madras ed. दासीभावात्. —(L. 357) $T_1$ तु ज्वलतो (for प्रज्वलितो). —$T_1$ $G_2$ om. line 359. —(L. 361) $T_1$ $G_1$ शक्यं. M समतिक्रामितुं शक्यः (for the prior half). —(L. 362) $G_2$ [अ]प्युपायं (for [अ]भ्यु°). —Before line 363, $T_1$ ins. भीष्मः. —(L. 363) $T_{1.2}$ M महाराज; $G_4$ °भागस्; Madras ed. °भागं (for °भाग). —(L. 364) $G_{2-4}$ विस्मयन् (for उत्स्मयन्). M वै (for स). —(L. 365) $T_1$ M वा (for च). $T_3$ $G_{1.3}$ पुनः पुनः (for हुताशनः). —$T_1$ om. line 366. —(L. 367) $T_1$ M समादधाः

तं दृष्ट्वा जलजं तूर्णमपसर्पन्तमाहवात् ।
अभिदुद्राव वेगेन वज्रपाणिरिवासुरम् ।
तं रोषात्स्थलमुत्तीर्णमसंप्राप्तं गजोत्तमम् ।
उभावेव समस्तौ तु जग्राह विनतासुतः ।
चरणेन तु सव्येन जग्राह स गजोत्तमम् ।
प्रस्पन्दमानं बलवान्दक्षिणेन तु कच्छपम् ।
उत्पपात ततस्तूर्णं पन्नगेन्द्रनिपूदनः ।
दिवं खं च समावृत्य पक्षाभ्यामपराजितः ।
तेन चोत्पतता तूर्णं संगृहीतौ नखैर्भृशम् ।
वज्रगर्भैः सुनिशितैः प्राणांस्तूर्णं मुमोचतुः ।
तौ गृह्य बलवांस्तूर्णं स्रस्तपादशिरोधरौ ।
विवल्गन्निव खे क्रीडन्खेचरोऽभिजगाम ह ।
अत्तुकामस्ततो वीरः पृथिव्यां पृथिवीपते ।
निरैक्षत न चापश्यद्द्रुमं पर्याप्तमासितुम् ।
नैमिषं त्वथ संप्राप्य देवारण्यं महाद्युतिः ।
अपश्यत द्रुमं कंचिच्छाखास्कन्धसमावृतम् ।
हिमवच्छिखरप्रख्यं योजनद्वयमुच्छ्रितम् ।
परिणाहेन राजेन्द्र नल्वमात्रं समन्ततः ।
तस्य शाखाभवत्काचिदायता पञ्चयोजनम् ।
दृढमूला दृढस्कन्धा वज्रपत्रसमाचिता ।
तत्रोपविष्टः सहसा वैनतेयो निगृह्य तौ ।
अत्तुकामस्ततः शाखां तस्य वेगादथापतत् ।
तां पतन्तीमभिप्रेक्ष्य प्रेक्ष्य चर्षिगणानथ ।
आसीनान्वसुभिः सार्धं सत्रेण जगतीपते ।
वैखानसान्नाम यतीन्वालखिल्यगणानपि ।
तस्य भीराविशत्तत्र पतगेन्द्रस्य भारत ।
तान्दृष्ट्वा स यतींस्तत्र समासीनान्सुरैः सह ।
तुण्डेन गृह्य तां शाखामुत्पपात खगेश्वरः ।
तौ च पक्षी भुजंगाशो व्योम्नि क्रीडन्निवाव्रजत् ।
तं दृष्ट्वा गुरुसंभारं प्रगृह्योत्पतितं खगम् ।
ऋषयस्तेऽब्रुवन्सर्वे गरुडोऽयमिति स्म ह ।
न ह्यन्यः क्षमते कश्चिद्यथायं वीर्यवान्खगः ।
असौ गच्छति धर्मात्मा गुरुभारसमन्वितः ।
अयं क्रीडन्निवाकाशे तस्माद्गरुड एव सः ।
एवं ते समयं सर्वे वसवश्च दिवौकसः ।
अकार्षुः पक्षिराजस्य गरुडेत्येव नाम ह ।
स पक्षी पृथिवीं सर्वां परिधावंस्ततस्ततः ।
मुमुक्षुः शाखिनः शाखां न स्म देशमपश्यत ।
स वाचमशृणोद्दिव्यामुपर्युपरि जल्पतः ।
देवदूतस्य विस्पष्टमाभाष्य गरुडेति च ।
वैनतेय कुविन्देषु समुद्भ्रान्ते महाचल ।
पात्यतां शाखिनः शाखा न हि ते धर्मनिश्चयः ।

G2.4 M निवर्तते (for न्यवर्तत). — T1 line 290. —(L. 290) G2 तोयगृद्धः (for °गृध्नुः). T3 दर्पाद्; G2 M तस्माद् (for तर्पाद्). D10 G4 अपसर्पत; G1.3 उपा°; G2 M अ(M3 उ)पसर्पति (for अपासर्पत). — (L. 291) G4 जलजस् (for °जं). T1.3 आहवे (for °वात्). — T1 om. lines 293-294. — (L. 293) G4 तद् (for तं). D10 G2 स्थूलम् (for स्थ°). T2 G4 असंप्राप्त- (for °प्तं). — (L. 294) D10 G2 M1.2.4 समंतौ; T3 समौ तौ (for समस्तौ). M जग्राह विनतात्मजः (for the post. half). — (L. 296) T1 प्रस्पंदमानो; Madras ed. प्रस्कंदमानं. — (L. 297) M -निसूदनः (for -निषू°). — T1 om. line 298. — (L. 298) Kumbh. ed. समुत्पत्य (for समावृत्य). — (L. 299) T2.3 G1.3.4 M2 संग्रहीतौ; Madras ed. संगृहीतैर् (for °हीतौ). T1 संगृहीतेन तौ भृशं (for the post. half). — (L. 300) T1 वज्रकल्पैः (for °गर्भैः). G2 मुमोच तत् (for °चतुः). T1 नखैः प्राणानमुंचतां (for the post. half). — (L. 301) T1 om. the post. half and the prior half of line 302. T3 G1.3 स्तब्ध- (for स्रस्त-). — (L. 302) G1 विवल्गन्; G4 विचरन् (for विवल्गन्). T2 खचरो हि (for खेचरोऽभि-). — (L. 303) T1 उदीच्यां (for पृथिव्यां). — (L. 304) G2 निरीक्ष्यते (for निरैक्षत). — (L. 305) Some MSS. नैमिशं (for °षं). — T1 om. lines 306-315. — (L. 306) M1.3 अपश्यत्तं; M2 °त्तद् (for °त). D10 T3 G किंचिच् (for कं°). — (L. 307) D10 G2 उच्छ्रयं (for उच्छ्रितम्). — (L. 310) D10 दृढ-; T2.3 G1.2.4 M बहु- (for वज्र-). — (L. 311) G4 जगृह्य (for नि°). — (L. 313) Kumbh. ed. अथः (for अथ). — (L. 315) D10 S वैखानसानां यति(T3 G2 °ती)नां (for the prior half). — (L. 316) Kumbh. ed. तत्र (for तस्य). Kumbh. ed. तस्य (for तत्र). T1 om. (hapl.) from the post. half up to the prior half of line 317. — (L. 318) M1.2 तुंडे नि- (for तुण्डेन). — (L. 319) D10 भुजंगेशो (for °गाशो). T1 [आ]द्रवत् (for [अ]व्रजत्). — (L. 320) T1 त्वरितं (for [उ]त्पतितं). — (L. 321) D10 तं (for ते). — (L. 322) M पततां (for क्षमते). T1 [अ]सौ (for [अ]यं). — (L. 323) T1 -समन्वितं (for °तः). — T1 om. lines 324-325. — (L. 324) G4 अथ (for अयं). — (L. 325) D10 T3 G2 मुनयः (for समयं). T2 G4 वासवश् (for व°). — (L. 326) G2 अकार्षीः (for °र्षुः). T1 देवाश्च ऋषयश्चक्रुर् (for the prior half). — (L. 327) T1 इतस्ततः (for तत°). — (L. 328) D10 तस्य (for न स). — (L. 329) M स वाचमथ शुश्राव (for the prior half).

तच्छ्रुत्वा गरुडस्तूर्णं जगाम लवणाम्भसः ।
उद्देशं यत्र ते मन्दाः कुविन्दाः पापकर्मिणः ।
ततो गत्वा ततः शाखां मुमोच पततां वरः ।
तया हता जनपदास्तदा षट्त्रिंशतो नृप ।
स देशो राजशार्दूल ख्यातः परमदारुणः ।
शाखापतग इत्येव कुविन्दानां दुरात्मनाम् ।

Colophon.

भीष्मः ।

हत्वा तं पक्षिशार्दूलः कुविन्दानां जनव्रजम् ।
उपोपविश्य शैलाग्रे भक्षयामास तावुभौ ।
वारणं कच्छपं चैव संहृष्टः स पतत्रिराट् ।
तयोः स रुधिरं पीत्वा मेदसी च परंतप ।
संहृष्टः पततां श्रेष्ठो लब्ध्वा बलमनुत्तमम् ।
जगाम देवराजस्य भवनं पन्नगाशनः ।
तं प्रणम्य महात्मानं पावकं विस्फुलिङ्गिनम् ।
रात्रिंदिवं प्रज्वलितं रक्षार्थममृतस्य ह ।
तं दृष्ट्वा विहगेन्द्रस्य भयं तीव्रमथाविशत् ।
न तु तोयान्न रक्षोभ्यो भयमस्योपपद्यते ।
पक्षित्वमात्मनो दृष्ट्वा ज्वलन्तं च हुताशनम् ।
पितामहमथो गत्वा ददर्श भुजगाशनः ।
तं प्रणम्य महात्मानं गरुडः प्रयताञ्जलिः ।
प्रोवाच तदसंदिग्धं वचनं पतगेश्वरः ।
उद्यतं गुरुकृत्ये मां भगवन्धर्मनिश्चितम् ।
विमोक्षणार्थं मातुर्हि दासभावादनिन्दितम् ।
कद्रूसकाशममृतं मया हर्तव्यमीश्वर ।
तदा मे जननी देव दासभावात्प्रमोक्ष्यते ।
तत्रामृतं प्रज्वलितो नित्यमीश्वर रक्षति ।
हिरण्यरेता भगवान्पाकशासनशासनात् ।
तत्र मे देवदेवेश भयं तीव्रमथाविशत् ।
ज्वलन्तं पावकं दृष्ट्वा पक्षित्वं चात्मनः प्रभो ।
समतिक्रमितुं शक्यः कथं स्यात्पावको मया ।
तस्याभ्युपायं वरद वक्तुमीशोऽसि मे प्रभो ।
तमब्रवीन्महाभाग तप्यमानं विहंगमम् ।
अग्नेः संशमनोपायमुत्स्मयन्स पुनः पुनः ।
पयसा शाम्यते वत्स सर्पिषा च हुताशनः ।
शरीरस्थोऽपि भूतानां किं पुनः प्रज्वलन्भुवि ।
नवनीतं पयो वापि पावके त्वं समादधेः ।
ततो गच्छ यथाकामं न त्वा धक्ष्यति पावकः ।

Colophon.

—(L. 330) T1 विसृष्टम् (for विस्र°). —(L. 331) T1 कुलिंदेषु; M1.3 कुर्णि°; M4 कुलि° (for कुविन्देषु). —(L. 332) G2 सर्व- (for धर्म-). T1 -विप्लवः (for -निश्चयः). Madras ed. न भीस्ते धर्मनिश्चयात् (for the post. half). —(L. 333) T1 विहगस् (for गरुडस्). D10 (before corr.) जगाम लवणांभसि (for the post. half). —(L. 334) T1 कुलिंदाः; M कुर्णि(M4 °लि)दाः (for कुविन्दाः). D10 T2 G2.4 -कारिणः; G3 -कर्मणः (for -कर्मिणः). —(L. 335) T1 M तत्र (for ततो). —(L. 336) T1 तदा; G1.3.4 M2 तथा (for तया). Kumbh. ed. षड्विंशतो (for षट्त्रिंशतो). —(L. 338) T1 M2 -पातक; G2 -पतंग; M1 -वातिक (for -पतग). G4 शाखामपातयत्येव (for the prior half). T1 कुलिंदानां; M1.3 कुर्णि°; M4 कुलि° (for कुविन्दानां). T2 G1.3 महात्मनां (for दुरा°). —Colophon. *Sub-parvan :* D10 M दानधर्म. —*Adhy. name :* D10 सुपर्णोपाख्यानं; T2 सुपर्णोपाख्याने काश्यपगरुडसंवादे शाखाविसर्जनं; M4 सौपर्णे शाखामोचनं. —*Adhy. no.:* S 27. —(L. 339) T2 तु (for तं). T1 कुलिंदानां; M कुर्णि(M4 °लि)दानां (for कुविन्दानां). G1 जनं प्रति; G3 जनमती; Kumbh. ed. जनं मती (for जनव्रजम्). —(L. 341) T1 न स हृष्टः (for संहृष्टः स). —(L. 342) T2.3 तु (for स). T1 परंतरः. —(L. 343) T1 स (for सं-). D10 G2 फलम् (for बलम्). T1 लब्ध्वा च बलमुत्तमं (for the post. half). —T1 om. (hapl.) lines 345–349. —(L. 345) M तत्रापश्यन् (for तं प्रणम्य). —(L. 346) M1 रात्रिंदिनं (for °वं). —(L. 347) M तं दृष्ट्वा पतगेंद्रस्य (for the prior half). Kumbh. ed. उपाविशत् (for अथा°). —G2 om. line 348. —(L. 348) D10 रक्षेभ्यो; Kumbh. ed. राक्षिभ्यो (for रक्षोभ्यो). Madras ed. -जायते (for -पद्यते). —(L. 349) M ज्वलितं जातवेदसं (for the post. half). —(L. 350) T1 om. from मथो up to प्रणम्य (in line 351). —(L. 351) D10 G4 गरुडः प्रांजलिः स्थितः; M1.2 °डः पतत्रांजलिः (for the post. half). —(L. 352) T3 तम्; M [प्र]तद् (for तद्). D10 G2 वचनं पन्नगेश्वरः (sic); Madras ed. °नं पक्षिराट् ततः (for the post. half). —T1 om. 353–354. —(L. 354) T2 दासी- (for दास-). M अनिंदित. —(L. 356) M1.2.4 दासभावं; Madras ed. दासीभावात्. —(L. 357) T1 तु ज्वलतो (for प्रज्वलितो). —T1 G2 om. line 359. —(L. 361) T1 G1 शक्यं. M समतिक्रामितुं शक्यः (for the prior half). —(L. 362) G2 [अ]प्युपायं (for [अ]भ्यु°). —Before line 363, T1 ins. भीष्मः. —(L. 363) T1.2 M महाराज; G4 °भागस्; Madras ed. °भागं (for °भाग). —(L. 364) G2–4 विस्मयन् (for उत्स्मयन्). M वै (for स). —(L. 365) T1 M वा (for च). T2 G1.3 पुनः पुनः (for हुताशनः). —T1 om. line 366. —(L. 367) T1 M समादधाः

भीष्मः ।

पितामहवचः श्रुत्वा गरुडः पततां वरः ।
जगाम गोकुलं किंचिन्नवनीतजिहीर्षया ।
नवनीतं तथापश्यन्मथितं कलशे स्थितम् ।
तदादाय ततोऽगच्छद्यतस्तद्रक्ष्यतेऽमृतम् ।
स तत्र गत्वा पतगस्तिर्यक्तोयं महाबलः ।
हुताशनमपक्रम्य नवनीतमपातयत् ।
सोऽर्चिष्मान्मन्दवेगोऽभूत्सर्पिषा तेन तर्पितः ।
धूमकेतुर्न जज्वाल धूममेव ससर्ज ह ।
तमतीत्याशु गरुडो हृष्टात्मा जातवेदसम् ।
रक्षांसि समतिक्रामत्पक्षवातेन पातयन् ।
ते पतन्ति शिरोभिश्च जानुभिश्चरणैस्तथा ।
उत्सृज्य शस्त्रावरणं पक्षिपक्षसमाहताः ।
उत्प्लुत्य चावृतान्नागान्हत्वा चक्रं व्यतीत्य च ।
अरान्तरेण शिरसा भित्त्वा जालं समाद्रवत् ।
स भित्त्वा शिरसा जालं वज्रवेगसमो बली ।
उज्जहार ततः शीघ्रममृतं भुजगाशनः ।
तदादायाद्रवच्छीघ्रं गरुडः श्वसनो यथा ।
अथ संनाहमकरोद्वृत्रहा विबुधैः सह ।
ततो मातलिसंयुक्तं हरिभिः स्वर्णमालिभिः ।
आरुरोह रथं शीघ्रं सूर्याग्निसमतेजसम् ।
सोऽभ्यद्रवत्पक्षिराजं वृत्रहा पाकशासनः ।
उद्यम्य निशितं वज्रं वज्रहस्तो महाबलः ।
तथैव गरुडो राजन्वज्रहस्तं समाद्रवत् ।
ततो वै मातलिं प्राह शीघ्रं वाहय वाजिनः ।
अथ दिव्यं महाघोरं गरुडाय ससर्ज ह ।
वज्रं सहस्रनयनस्तिग्मवेगपराक्रमः ।
उत्क्षिप्तसृक्षन्तमाज्ञाय वज्रं वै त्रिदशेश्वरम् ।
तूर्णं वेगतरो भूत्वा जगाम पततां वरः ।
पितामहनिसर्गेण ज्ञात्वा लब्धवरः खगः ।
आयुधानां वरं वज्रमथ शक्रमुवाच ह ।
वृत्रहन्नेष वज्रस्ते वरो लब्धः पितामहात् ।
अतः संमानमाकाङ्क्षन्मुञ्चाम्येकं तनूरुहम् ।
एतेनायुधराजेन यदि शक्तोऽसि वृत्रहन् ।
हन्यास्त्वं परया शक्त्या गच्छाम्यहमनामयः ।
तत्तु तूर्णं तदा वज्रं स्वेन वेगेन भारत ।
जघान परया शक्त्या न चैनमदहद्भृशम् ।
ततो देवर्षयो राजन्पश्यन्तो वै विहायसा ।
दृष्ट्वा वज्रं विपक्तं तं पक्षिपर्णेऽब्रुवन्वचः ।
सुपर्णः पक्षिगरुडो यस्य पर्णे वरायुधम् ।
विपक्तं देवराजस्य वृत्रहन्तुः सनातनम् ।
एवं सुपर्णो विहगो वैनतेयः प्रतापवान् ।
ऋषयस्तं विजानन्ति चाग्नेयं वैष्णवं पुनः ।
वेदाभिष्टुतमत्यन्तं स्वर्गमार्गफलप्रदम् ।

---

(for °धेः). — (L. 368) T1 त्वां (for त्वा). — Colophon. *Sub-parvan :* D10 M दानधर्म. — *Adhy. name :* D10 सुपर्णोपाख्यानं; T2 सुपर्णोपाख्याने पितामहगरुडसंवादे अग्निजयोपायकथनं. — *Adhy. no. :* S 28. — (L. 370) D10 नवनीतं (for °त-). G2 नवनीतं जिगीषया (for the post. half). — (L. 371) T1 M ततो (for तथा). — (L. 374) T1 अभिक्रम्य; T2 उप°; M1. 3 अति° (for अप°). — (L. 375) T1 G1. 3 M2 [s]र्चिषा (for ऽर्चिष्मान्). D10 G2. 4 सर्वतः (for तर्पितः). — (L. 376) M3 स (for न). — (L. 377) G1. 3 M2 समतील (for त°). — (L. 378) D10 S (except M1. 4) -क्रामन् (for -क्रामत्). T1. 2 G1. 3 M2. 3 -पातेन (for -वातेन). — (L. 379) M1 पततः (for पतन्ति). G3 (before corr.) सह (for तथा). — (L. 380) G2 पक्ष- (for पक्षि-). T1. 2 G1. 3 -समाहतं (for °ताः). — (L. 381) G2 उत्पात्य (for उत्प्लुत्य). T1 उद्दहणविषौ नागौ; M उद्भमंतौ विषं नागौ; Madras ed. उत्पत्य पर्वतं नागं (for the prior half). — (L. 382) G2 अथांतरेण; G4 तदंतरेण (for अरान्तरेण). D10 T3 G1-3 M2 हत्वा; G4 जालं (for भित्त्वा). G1 हत्वा (for जालं). — (L. 383) D10 G2 हित्वा (for भित्त्वा). — (L. 384) T2 अमृतं पन्नगाशनः (for the post. half). — (L. 387) D10 G2. 4 M मातलिना (for °लिसं-). — (L. 389) D10 T G [s]भिद्रवत् (for °ऽभ्य°). D10 T1 G2-4 M पक्षिवरं (for °राजं). — (L. 391) D10 T2. 3 G1. 3. 4 -हस्तात् (for -हस्तं). — (L. 393) D10 T1 वज्रं (for दिव्यं). — T1 om. line 394. — (L. 394) D10 दिव्यं (for वज्रं). — (L. 396) T1 M तूर्ण- (for तूर्णं). Kumbh. ed. वेगपरो (for °तरो). — (L. 397) D10 G4 M लब्धवरं (for °वरः). — (L. 399) M वर- (for वरो). — (L. 400) G1. 3 [ए]कं- (for [ए]कं). — (L. 401) G1. 3 -जालेन (for -राजेन). M एष आयुधराजस्ते (for the prior half). D10 शक्नोषि; M शक्नोति (for शक्तोऽसि). — (L. 402) M हन्यात्स (for °स्त्वं). G4 अनामयं. — (L. 403) G2 तं (for तत्). — (L. 404) G2 भक्त्या (for शक्त्या). T1 M1. 3 अहनद् (for अदहद्). — (L. 406) T1 सुपर्ण इति चाब्रुवन् (for the post. half). — (L. 407) T1. 2 M सुपर्णः पक्षिराडेष (for the prior half). — (L. 410) T1 तद् (for तं). G2 विजानंते. D10 G2. 4 ह्याग्नेयं; T1 सुमहद् (for चाग्नेयं). M1-3 वसुः (for पुनः). — (L. 411) Kumbh.

तनु पर्णं सुपर्णस्य जगृहुर्बर्हिणस्तथा ।
मयूरा विस्मिताः सर्वे आद्रवन्ति स्म वज्रिणम् ।

Colophon.

भीष्मः ।

ततो वज्रं सहस्राक्षो दृष्ट्वा सक्तं वरायुधम् ।
ऋषींश्च दृष्ट्वा सहसा सुपर्णमिदमब्रवीत् ।
न ते सुपर्ण पश्यामि प्रभावं तेन योधये ।
इत्युक्ते न मया रक्षा शक्या कर्तुमतोऽन्यथा ।
इदं वज्रं मया सार्धं निवृत्तं हि यथागतम् ।
ततः सहस्रनयने निवृत्ते गरुडस्तथा ।
कद्रूमभ्यागमत्तूर्णममृतं गृह्य भारत ।

गरुडः ।

तदाहृतं मया शीघ्रममृतं जननीकृते ।
अदासी सा भवत्वद्य विनता धर्मचारिणी ।

कद्रूः ।

स्वागतं स्वाहृतं चेदममृतं विनतात्मज ।
अदासी जननी तेऽद्य पुत्र कामवशा शुभा ।
एवमुक्ते तदा सा च संप्राप्ता विनता गृहम् ।
उपनीय यथान्यायं विहगो बलिनां वरः ।
स्मृत्वा निकृत्या विजयं मातुः संप्रतिपद्यत ।
वधं च भुजगेन्द्राणां ये वालास्तस्य वाजिनः ।
बभूवुरसितप्रख्या निकृत्या वै जितं त्वया ।
तामुवाच ततो न्यायं विहगो बलिनां वरः ।
उज्जहारामृतं तूर्णमुत्पपात च रंहसा ।
तद्गृहीत्वामृतं तूर्णं प्रयान्तमपराजितम् ।
कद्रूर्भुजंगजननी सुपर्णमिदमब्रवीत् ।
किमर्थं वैनतेय त्वमाहृत्यामृतमुत्तमम् ।
पुनर्हरसि दुर्बुद्धे मा जातु वृजिनं कृथाः ।

सुपर्णः ।

अमृताहरणं मेऽद्य यत्कृतं जननीकृते ।
भवत्या वचनादेतदाहरामृतमित्युत ।
आहृतं तदिदं शीघ्रं मुक्ता च जननी मम ।
हराम्येष पुनस्तत्र यत एतन्मयाहृतम् ।
यदि मां भवती ब्रूयादमृतं मे च दीयताम् ।
तथा कुर्यां न वा कुर्यां न हि त्वममृतक्षमा ।
मया धर्मेण सत्येन विनता च समुद्धृता ।

भीष्मः ।

ततो गत्वाथ गरुडः पुरंदरमुवाच ह ।
इदं मया वृत्रहन्तर्हृतं तेऽमृतमुत्तमम् ।
मात्रर्थं हि तथैवेदं गृहाणामृतमाहृतम् ।
माता च मम देवेश दासीत्वमुपजग्मुषी ।
भुजंगमानां मातुर्वै सा मुक्तामृतदर्शनात् ।
एतच्छ्रुत्वा सहस्राक्षः सुपर्णमनुमन्यते ।
उवाच च मुदा युक्तो दिष्ट्या दिष्ट्येति वासवः ।

---

ed. अत्यर्थं ( for °न्तं ). M स्वर्गमोक्ष- ( for °मार्ग- ). — ( L. 412 ) $T_1$ तत्सु- ; M तत्तु ( for तनु ). — ( L. 413 ) $T_1$ मयूरास्तद्गृहीत्वा तु अनुकुर्वंति वज्रिणं. — Colophon. *Sub-parvan :* $D_{10}$ $M_{1-3}$ दानधर्म. — *Adhy. name :* $T_2$ सुपर्णोपाख्याने अमृताहरणे गरुडवासवयुद्धं ; $M_4$ सौपर्णे अमृताहरणं. — *Adhy. no. :* S 29. — ( L. 414 ) $M_{1,4}$ वज्री ( for वज्रं ). — ( L. 415 ) $T_1$ पृष्ट्वा ( ior दृष्ट्वा ). — ( L. 416 ) $T_1$ प्रभावं सुमहात्मनः ; $M_4$ °वं येन मे भवान् ( for the post. half ). — ( L. 417 ) $T_1$ [उ]क्त्वैव ( for [उ]क्ते न ). $G_4$ शक्यं ; $M_4$ शक्त्या ( for शक्या ). — ( L. 418 ) $T_1$ स्याद् ( for हि ). — Before line 419, M ins. भीष्मः. — ( L. 420 ) Kumbh. ed. [अ]भ्यगमत् ( for [अ]भ्या° ). — ( L. 422 ) $T_1$ ते ( for सा ). — $D_{10}$ om. the ref. — ( L. 423 ) $D_{10}$ $T_1$ $G_4$ स्वाहृतं स्वागतं चेदम् ( $T_1$ चैव ) ( for the prior half ). $T_1$ अमृतं विनतासुत ( for the post. half ). — ( L. 424 ) $D_{10}$ $G_{2,4}$ [इ]त्येव ; $T_1$ तेस्तु ( for तेऽद्य ). $T_1$ $M_{1,2,4}$ यत्र ( for पुत्र ). $T_1$ कामगमा ( for °वशा ). $G_4$ [अ]नुगा ( for शुभा ). — Before line 425, M ins. भीष्मः. — ( L. 425 ) $D_{10}$ $T_1$ $G_{2,4}$ [उ]क्ता ( for [उ]क्ते ). $T_1$ तथा सा च ; M तया वेश्म ( for तदा सा च ). M तदा ( for गृहम् ). — $T_1$ M om. line 426. $G_2$ om. ( hapl. ) lines 427–430. — ( L. 427 ) $T_1$ -पद्य च ; $M_{1-3}$ -पद्यते ; $M_4$ -पद्यसे ( for -पद्यत ). — ( L. 428 ) $D_{10}$ वधस्तु ( for वधं च ). $D_{10}$ $G_4$ शुद्ध- ( for तस्य ). — $T_1$ transp. lines 429 and 430. — ( L. 429 ) $T_1$ विनता जननी पूर्वं ( for the prior half ). $D_{10}$ $T_2$ $G_{3,4}$ M वै जितास्म ; $T_1$ विजिता ; $T_3$ वै जयास्म् ( for वै जितं ). — ( L. 431 ) $T_1$ इत्युक्त्वा चामृतं गृह्य ( for the prior half ). $G_{1,3}$ om. ( hapl. ) from the post. half up to the prior half of line 432. $G_4$ विहायसं ( for च रंहसा ). — ( L. 437 ) M वचनं हि ( for °नाद् ). $D_{10}$ $G_{2,4}$ [अ]थ ( for [उ]त ). $T_2$ आहृतममृतं मया ( for the post. half ). — ( L. 438 ) $G_2$ आहरं ( for आहृतं ). $M_{1-3}$ तदिदं शीघ्रमानीतं ( for the prior half ). — ( L. 440 ) $D_{10}$ $T_{2,3}$ $G_{2,4}$ M मा ( for मां ). — ( L. 442 ) $T_1$ मया सत्येन धर्मेण ( for the prior half ). — $D_{10}$ om. the ref. — ( L. 443 ) $T_1$ च ( for [अ]थ ). — ( L. 444 ) $M_4$ धृतं ( for हृतं ). $D_{10}$ M मे ( for ते ). — ( L. 445 ) $T_1$ M मातुरर्थे ( for मात्रर्थं हि ). $D_{10}$ $T_1$ $G_{2,4}$ उत्तमं ( for आहृतम् ). — Before line 448, M ins.

ऋषयो ये सहस्राक्षमुपासन्ति सुरैः सह ।
ते सर्वे च मुदा युक्ता विश्वे देवास्तथैव च ।
ततस्तमृषयः सर्वे देवाश्च भरतर्षभ ।
ऊचुः पुरंदरं हृष्टा गरुडो लभतां वरम् ।
ततः शचीपतिर्वाक्यमुवाच प्रहसन्निव ।
जनिष्यति हृषीकेशः स्वयमेवैष पक्षिराट् ।
केशवः पुण्डरीकाक्षः शूरपुत्रस्य वेश्मनि ।
स्वयं धर्मस्य रक्षार्थं विभज्य भुजगाशनः ।
एष ते पाण्डवश्रेष्ठ गरुडोऽथ पतत्रिराट् ।
सुपर्णो वैनतेयश्च कीर्तितो भद्रमस्तु ते ।
तदेतद्वदतां श्रेष्ठ मयाख्यानं प्रकीर्तितम् ।
सुपर्णस्य महाबाहो किं भूयः कथयामि ते ।

*Colophon.*

2

After 13. 11, $D_{10}$ S Kumbh. ed. Madras ed. and Cv ins. :

युधिष्ठिरः ।

प्रायश्चित्तं कृतघ्नानां प्रतिब्रूहि पितामह ।
मातृः पितॄन्गुरूंश्चैव येऽवमन्यन्ति मोहिताः ।
ये चाप्यन्ये परे तात कृतघ्ना निरपत्रपाः ।
तेषां गतिं महाबाहो श्रोतुमिच्छामि तत्त्वतः ।

भीष्मः ।

कृतघ्नानां गतिस्तात नरके शाश्वतीः समाः ।
मातापितृगुरूणां च ये न तिष्ठन्त शासने ।
कृमिकीटपिपीलेषु जायन्ते स्थावरेषु च ।
दुर्लभो हि पुनस्तेषां मानुष्ये पुनरुद्भवः ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
वत्सनाभो महाप्राज्ञो महर्षिः संशितव्रतः ।
वल्मीकभूतो ब्रह्मर्षिस्तप्यते सुमहत्तपः ।
तस्मिंश्च तप्यति तपो वासवो भरतर्षभ ।
ववर्ष सुमहद्वर्षं सविद्युत्स्तनयित्नुमान् ।
तत्र सप्ताहवर्षं तु मुमुचे पाकशासनः ।
निमीलिताक्षस्तद्वर्षं प्रत्यगृह्णत वै द्विजः ।
तस्मिन्पतति वर्षे तु शीतवातसमन्विते ।
विशीर्णध्वस्तशिखरो वल्मीकोऽशनिताडितः ।
ताड्यमाने ततस्तस्मिन्वत्सनाभे महात्मनि ।
कारुण्यात्तस्य धर्मस्तु आनृशंस्यमथाकरोत् ।
चिन्तयानस्य ब्रह्मर्षिं तपन्तमतिधार्मिकम् ।
अनुरूपा मतिः क्षिप्रमुपजाता स्वभावजा ।
स्वं रूपं माहिषं कृत्वा सुमहान्तं मनोहरम् ।
त्राणार्थं वत्सनाभस्य चतुष्पादुपरि स्थितः ।
यदा त्वपगतं वर्षं वृष्टिवातसमन्वितम् ।

---

भीष्मः. — (L. 448) $T_1$ -मान्य वै; $T_{2.3}$ G -मन्यत (for -मन्यते). — (L 450) $T_1$ M उपासंत ($T_1$ °ते) (for °सन्ति). — $T_1$ om. line 452. — (L. 452) $T_3$ $G_3$ तद् (for तम्). — (L. 453) $T_2$ दृष्ट्वा (for हृष्टा). — (L. 455) $D_{10}$ S (except $M_4$) भजिष्यति हृषीकेशं (for the prior half). $M_4$ [इ]ह (for [ए]ष). — $T_1$ om. line 457. — (L. 457) $D_{10}$ $G_{2.4}$ विभजन् (for °ज्य). — For line 457, M subst.:

स्वयमेवात्मनः साक्षाद्विजः स्याद्भुजगाशनः ।

— Before line 458, $D_{10}$ M ins. भीष्मः. — (L. 458) M स एष (for एष ते). — (L. 460) T $G_{1.3.4}$ वदतां; Kumbh. ed. भरत- (for द्वदतां). $G_1$ [आ]ख्यातं (for °नं). — (L. 461) M किं भूयः कथ्यतामिति (for the post. half). — Colophon. *Sub-parvan :* $D_{10}$ M दानधर्म. — *Adhy. name :* $D_{10}$ $T_{2.3}$ $G_{1-3}$ सु($G_2$ सौ)-पर्णोपाख्यानं; $M_{1.3.4}$ सौपर्णं; $M_2$ अमृतप्रत्याहरणं. — *Adhy. no. :* S 30.

2

(L. 1) M प्रब्रवीहि (for प्रतिब्रूहि). — (L. 2) $T_2$ माता- (for मातृः). — $T_1$ om. line 3. — (L. 3) M ये चान्येप्यपरास्तात (for the prior half). — (L. 4) $G_1$ गतिर् (for गतिं). $D_{10}$ $G_{2.4}$ महाभाग (for °बाहो). — (L. 6) M वै मते (for शासने). — (L. 7) $T_2$ $G_1$ $M_{1.3.4}$ कृमि- (for क्रिमि-). — (L. 8) $T_1$ $M_3$ मनुष्ये (for मा°). — After line 9, $T_1$ M ins. :

वत्सनाभस्य संवादं धर्मस्य च महात्मनः ।
[ $T_1$ युधिष्ठिर (for महात्मनः). ]

— $T_1$ om. line 10. — (L. 10) $G_4$ महाप्राज्ञ (for °ज्ञो). $T_{2.3}$ $G_{1.3.4}$ $M_{2.4}$ संश्रित- (for संशित-). — (L. 11) $D_{10}$ महर्षिस् (for ब्रह्म°). M स्म (for सु-). — (L. 13) $M_{1.3.4}$ -स्तनयित्नुमत् (for °मान्). — (L. 14) $D_{10}$ -वर्षे (for -वर्षं). $T_1$ तत्र सप्तदिने वर्षं (for the prior half). — (L. 15) $D_{10}$ $G_2$ प्रतिगृह्णीत; $T_{2.3}$ $G_{1.3.4}$ प्रत्यगृह्णीत; Kumbh. ed. °गृह्यत (for °गृह्णत). — $T_1$ om. line 17. — (L. 17) $M_{1.2.4}$ विशीर्णो (for °र्ण-). $T_2$ $G_1$ -शिखरे (for °रो). — (L. 18) M पीड्यमाने (for ता°). $T_1$ ताड्यमाने च वल्मीके (for the prior half). — (L. 19) $T_1$ M कार्पण्यात् (for कारु°). $T_{2.3}$ धर्मस्य; Kumbh. ed. धर्मः स्वम् (for धर्मस्तु). $T_{2.3}$ स्वानृशंस्यम् (for आ°). — $T_1$ om. lines 20–21. — (L. 21) M धर्मरूपा (for अनु°). $M_{2.4}$ अस्य (for उप-). — (L. 22) $T_3$ स्व-; M स- (for स्वं). $G_4$ उपशांतं (for सुमहान्तं). — (L. 23) Kumbh. ed. रक्षार्थं (for त्राणार्थं). — (L. 24) $T_1$ चोद्गतं (for [अ]पगतं). $T_{2.3}$ यत्रोपरतं वर्षं (submetric); $G_3$ यदात्मपरतं वर्षं (for the prior half). — (L. 25)

ततो महिषरूपेण धर्मो धर्मभृतां वर ।
शनैर्वल्मीकमुत्सृज्य प्राद्रवद्भरतर्षभ ।
स्थितेऽस्मिन्वृष्टिसंपाते वीक्षते स महातपाः ।
दिशश्च विपुलास्तत्र गिरीणां शिखराणि च ।
दृष्ट्वा च पृथिवीं सर्वां सलिलेन परिप्लुताम् ।
जलाशयान्स तान्दृष्ट्वा विप्रः प्रमुदितोऽभवत् ।
अचिन्तयद्विस्मितश्च वर्षात्केनास्मि रक्षितः ।
सोऽपश्यत्तत्र महिषमवस्थितमदूरतः ।
तिर्यग्योनावपि कथं दृश्यते धर्मवत्सलः ।
अतो नु भद्रमहिषः शिलापट्टमवस्थितः ।
पीवरश्चैव बल्यश्च बहुमांसो भवेदयम् ।
तस्य बुद्धिरियं जाता धर्मसंसक्तजा मुनेः ।
कृतघ्ना नरकं यान्ति ये च विश्वस्तघातिनः ।
निष्कृतिं नेह पश्यामि कृतघ्नानां कथंचन ।
ऋते प्राणपरित्यागाद्धर्मज्ञानां वचो यथा ।
अकृत्वा भरणं पित्रोरदत्त्वा गुरुदक्षिणाम् ।
कृतघ्नतां च संप्राप्य मरणान्ता च निष्कृतिः ।
आकाङ्क्षायामुपेक्षायां चोपपातकमुत्तमम् ।
तस्मात्प्राणान्परित्यक्ष्ये प्रायश्चित्तार्थमित्युत ।
स मेरुशिखरं गत्वा निःसङ्गेनान्तरात्मना ।
प्रायश्चित्तं कर्तुकामः शरीरं त्यक्तुमुद्यतः ।
निगृहीतश्च धर्मात्मा हस्ते धर्मेण धर्मवित् ।

धर्मः ।

वत्सनाभ महाप्राज्ञ बहुवर्षशतायुष ।
परितुष्टोऽस्मि त्यागेन निःसङ्गेन तथात्मनः ।
एवं धर्मभृतः सर्वे विमृशन्ति कृताकृतम् ।
न कश्चिद्वत्सनाभस्य यस्य नोपहतं मनः ।
यश्चानवद्यश्चरति शक्तो धर्मं च सर्वशः ।
निवर्तस्व महाप्राज्ञ पूतात्मा ह्यसि शाश्वतः ।

Colophon.

3

After 13. 13, $D_{10}$ T G Kumbh. ed. and Madras ed. ins. :

युधिष्ठिरः ।

चित्तं मे दूयते तात लोके परमविन्दतः ।
अशाश्वतमिदं सर्वं जगत्स्थावरजंगमम् ।
ऋते नारायणं पुण्यं प्रतिभाति पितामह ।
नारायणो हि विश्वात्मा पुरुषः पुष्करेक्षणः ।
तस्मास्य देवकीसूनोः श्रुतं कृत्स्नं त्वयानघ ।

भीष्मः ।

युधिष्ठिर महाप्राज्ञ मया दृष्टं च संगरे ।

युधिष्ठिरः ।

त्वत्त एव तु राजेन्द्र राजधर्माश्च पुष्कलाः ।

---

M -रूपी स ( for -रूपेण ). $T_{1.3}$ G ततो महिष( $T_1$ $G_{1.3}$ °षि )रूपी स ( for the prior half ). —( L. 27 ) $G_1$ दृष्टि- ( for वृष्टि- ). M स्थिते तस्मिन्वृष्टिपाते ( for the prior half ). $D_{10}$ T $G_{1.3.4}$ वीक्षति ( for °ते ). $G_4$ स ( for स ). —( L. 28 ) $D_{10}$ S सु- ( for the first च ). —( L. 29 ) M स ( for च ). $D_{10}$ $T_{1.2}$ $G_{1-3}$ सलिले च ( for °लेन ). — $T_1$ om. line 30. —( L. 30 ) $G_{2.4}$ स ( for प्र- ). —( L. 31 ) $T_{1.2}$ $G_1$ [अ]भि- ( for [अ]स्मि ). —( L. 32 ) $T_{2.3}$ $G_{3.4}$ अपश्यत् ( for सोऽप° ). Kumbh. ed. Madras ed. ततोपश्यत्स ( Madras ed. °त्तं ) महिषम् ( for the prior half ). $T_2$ $G_{1.3}$ अविदूरमवस्थितं ( for the post. half ). —( L. 33 ) $M_{1-3}$ तिर्यग्योन्याम् ( for °नाव् ). $T_1$ दृश्यते चानृशंस्यता ( for the post. half ). —( L. 34 ) $T_{1.3}$ M अहो ( for अतो ). $D_{10}$ $T_3$ $G_2$ भद्रं ; $T_1$ भद्रो ; $T_2$ $G_{1.3}$ भूतं ( for भद्र- ). $D_{10}$ S ( except $G_2$ ) शिलापट्टमभिन्वतः ; Madras ed. शिलापट्ट इव स्थितः ( for the post. half ). —( L. 35 ) $D_{10}$ $T_{2.3}$ $G_{3.4}$ M शल्यश्च ; $T_1$ स्थूलश्च ( for बल्यश्च ). —( L. 36 ) $T_1$ -संयुक्तजा ; $T_3$ -संसिक्तजा ; $M_{1-3}$ -संसक्तिजा ( for °क्तजा ). —( L. 37 ) $G_{2.4}$ ते ( for ये ). Madras ed. विश्वास- ( for विश्वस्त- ). $T_1$ -घातकाः ( for -घातिनः ). —( L. 38 ) $M_{1-3}$ [ए]व ( for [इ]ह ). —( L. 39 ) Madras ed. -परित्यागं ( for °त्यागाद् ). —( L. 40 ) $M_3$ अदत्त्वा ( for अकृत्वा ). — $T_1$ om. line 42. —( L. 42 ) $D_{10}$ $T_{2.3}$ G उपेक्षे वा ( for °क्षायां ). M पापं ( for चोप- ). $D_{10}$ -वासकम् ( for -पातकम् ). —( L. 45 ) $M_{1.3}$ इच्छति ; $M_4$ अर्हसि ; $M_4$ ( also ) इच्छसि ( for उद्यतः ). —( L. 46 ) $T_1$ स ( for नि- ). —( L. 47 ) $D_{10}$ $G_{2.4}$ $M_{1.2.4}$ -शतायुतं ; T $G_{1.3}$ $M_3$ °युत ; Madras ed. °युषः ( for °युष ). —( L. 49 ) Madras ed. तथाकृतं ( for कृता° ). —( L. 50 ) $T_1$ समो ( for कश्चिद् ). $D_{10}$ $T_{2.3}$ M न स कश्चिद्वत्सनाभो ( for the prior half ). —( L. 51 ) M यश्च जातो न शोचति ( for the post. half ). —( L. 52 ) $D_{10}$ S ( except $M_{1-3}$ ) भूतात्मा ( for पू° ). —Colophon. *Sub-parvan* : $D_{10}$ M दानधर्म. —*Adhy. name* : $T_3$ कृतघ्नादिपातकप्रायश्चित्ते वत्सनाभचरित्रकथनं ; $M_4$ वत्सनाभोपाख्यानं. —*Adhy. no.* : S 34.

3

( L. 1 ) $D_{10}$ दूयतां ( for °ते ). —( L. 3 ) $G_2$ ( also as above ) नराधिप ( for पितामह ). —( L. 4 ) $D_{10}$ $T_2$ $G_{1-3}$ पुरुषः पुष्करो विभुः ( for the post. half ). —( L. 5 ) $T_1$ च कर्म तत् ( for त्वयानघ ). — $T_1$ om. line 5 ( with the ref. ). $G_{1.3}$ om. the ref. —( L. 6 ) $G_{1.3}$ त्वत्तो राजन् ( for

श्रुतं पुराणमखिलं नारदेन निवेदितम् ।
गुह्यं नारायणाख्यानं त्रिविधक्लेशनाशनम् ।
एकान्तधर्मनियमाः समासव्यासकल्पिताः ।
कथिता वै महाभाग त्वया वै मदनुग्रहात् ।
लोकरक्षणकर्तृत्वं तस्यैव हरिमेधसः ।
आतिथेयविधिश्चैव तपांसि नियमाश्च ये ।
वेदवादप्रसिद्धाश्च वाजपेयादयो मखाः ।
यज्ञा द्रविणनिष्पाद्या अग्निहोत्रानुपालिताः ।
जपयज्ञाश्च विविधा ब्राह्मणानां तपस्विनाम् ।
एकादशविधाः प्रोक्ता हविर्यज्ञा द्विजातिनाम् ।
तेषां फलविशेषाश्च उञ्छधर्मास्तथैव च ।
अहन्यहनि ये प्रोक्ता महायज्ञा द्विजातिनाम् ।
वेदश्रवणधर्माश्च ब्रह्मयज्ञफलं तथा ।
वेदव्रतविधानं च नियमाश्चैव वैदिकाः ।
स्वाहा स्वधा प्रणीते च इष्टापूर्तफलं तथा ।
उत्तरोत्तरसेवायामाश्रमाणां च यत्फलम् ।
प्रत्येकशश्च निष्ठायामाश्रमाणां महामते ।
मासपक्षोपवासानां सम्यगुक्तं फलं च यत् ।
अनाशितानां ये लोका ये च पञ्चतपा नराः ।
वीराध्वानं प्रपन्नानां या गतिश्चाग्निहोत्रिणाम् ।
ग्रीष्मे पञ्चतपानां च शिशिरे जलचारिणाम् ।
वर्षे स्थण्डिलशायीनां फलं यत्परिकीर्तितम् ।
लोके चक्रचराणां च द्विजानां यत्फलं स्मृतम् ।
अन्नादीनां च दानानां यत्फलं परिकीर्तितम् ।
सर्वतीर्थाभिषिक्तानां नराणां च फलोदयः ।
राज्ञां धर्मश्च ये लोके सम्यक्पालयतां प्रजाः ।
ये च सत्यव्रता लोके ये च तीर्थे कृतश्रमाः ।
मातापितृपरा ये च गुरुवृत्तीश्च संश्रिताः ।
गोब्राह्मणपरित्राणे राष्ट्रातिक्रमणे तथा ।
त्यजन्त्यभिमुखाः प्राणान्निर्भयाः सत्त्वमाश्रिताः ।
सहस्रदक्षिणानां च या गतिर्ददतां वर ।
ये च संध्यामुपासन्ते सम्यगुक्ता महाव्रताः ।
तथा योगविधानं च यद्ग्रन्थेष्वभिशब्दितम् ।
वेदाद्याः श्रुतयश्चापि श्रुता मे कुरुसत्तम ।
सिद्धान्तनिर्णयाश्चापि द्वैपायनमुखोद्गताः ।
श्रुताः पञ्च महायागा येषु सर्वं प्रतिष्ठितम् ।
तत्प्रभेदेषु ये धर्मास्तेऽपि वै कृत्स्नशः श्रुताः ।
न च दूषयितुं शक्याः सद्भिरुक्ता हि ते तथा ।
एतेषां किल धर्माणामुत्तमो वैष्णवो विधिः ।
रक्षते भगवान्विष्णुर्भक्तमात्मशरीरवत् ।
कर्मणो हि कृतस्येह कामितस्य द्विजोत्तमैः ।
फलं ह्यवश्यं भोक्तव्यमृषिर्द्वैपायनोऽब्रवीत् ।
भोगान्ते चापि पतनं गतिः पूर्वं प्रभाषिता ।
न मे प्रीतिकरास्त्वेते विषोदर्का हि मे मताः ।
वधात्कष्टतरं मन्ये गर्भवासं महाद्युते ।
दिष्टान्ते यानि दुःखानि पुरुषो विन्दते विभो ।
ततः कष्टतराणीह गर्भवासे हि विन्दति ।
ततश्चाभ्यधिकां तीव्रां वेदनां लभते नरः ।

युधिष्ठिर ). $G_3$ संगमे ( for संगरे ). — ( L. 9 ) $G_3$ त्रिविधं ( for °ध- ). — ( L. 10 ) Kumbh. ed. एकांति- ( for -एकान्त- ). $T_1$ निर्मला ( for समास- ). — ( L. 11 ) $D_{10}$ कथितं ( for °ता ). — ( L. 12 ) $D_{10}$ $G_{2,4}$ -रक्षक- ( for °ण- ). $T_1$ सर्वयज्ञेषु भोक्तृत्वं ( for the prior half ). — ( *L. 13* ) *$D_{10}$ $T_2$ $G_{2,4}$* -विधेश् ( for -विधिश् ). — ( L. 14 ) $G_3$ जपयज्ञादयो मखाः ( for the post. half ). — $T_1$ om. line 15. — ( L. 16 ) $T_1$ देव- ( for जप- ). — ( L. 17 ) $T_1$ च ये ( for -विधाः ). — $T_1$ om. line 19. — ( L. 20 ) $T_1$ ब्रह्मयज्ञे ( for °ज्ञ- ). — ( L. 21 ) $G_3$ भेदकाः ( for वैदिकाः ). — ( L. 22 ) $T_1$ इष्टापूर्ते ; $G_2$ °पूर्तं ( for °पूर्त- ). — $T_1$ om. line 24. — ( L. 25 ) $T_1$ महाफलं ( for फलं च यत् ). — ( L. 27 ) $T_1$ प्रसन्नानां ( for प्रप° ). $G_{1,3}$ om. from the post. half up to the prior half of line 30. — ( L. 29 ) $T_1$ -सुप्तानां ( for -शायीनां ). $T_1$ एतत्प- ( for यत्परि- ). — ( L. 31 ) $T_3$ दातॄणां ( for दानानां ). — ( L. 32 ) $T_1$ पुण्य- ( for सर्व- ). — ( L. 33 ) $T_1$ पालयितुः ( for °यतां ). — ( L. 34 ) $G_3$ सम्यग्व्रता ( for सत्यव्रता ). $G_4$ तीर्थ- ( for तीर्थे ). — ( L. 35 ) $T_3$ -कृता ( for -परा ). $D_{10}$ $T_1$ $G_2$ गुरुवृत्ति ; $T_{2,3}$ °त्तिश् ( for °त्तीश् ). $T_2$ संवृताः ( for संश्रिताः ). — ( L. 36 ) $G_1$ राष्ट्रसंरक्षणे तथा ( for the post. half ). — ( L. 37 ) $G_1$ सत्यम् ( for सत्त्वम् ). — ( L. 38 ) $G_2$ वदतां ( for द° ). — ( L. 40 ) *$D_{10}$* यथा ( for तथा ). — *$T_1$ om. line 41.* — ( L. 41 ) $T_{2,3}$ read the post. half and the prior half of line 42 twice. $D_{10}$ $G_2$ गुरु- ( for कुरु- ). — ( L. 42 ) $G_2$ सिद्धांतं निर्णयश्चापि द्वैपायनमुखोद्गतः. — ( L. 43 ) Kumbh. ed. -यज्ञा ( for -यागा ). — ( L. 44 ) $T_3$ कृताः ( for श्रुताः ). $T_1$ उक्ता मे कृत्स्नशः प्रभो ( for *the post. half* ). — ( L. 45 ) $G_2$ शक्ताः ( for शक्याः ). — ( L. 47 ) $T_1$ $G_{1,3,4}$ भक्तान् ( for भक्तम् ). — ( L. 48 ) $T_1$ कामस्य द्विजसत्तमः ( for the post. half ). — ( L. 49 ) $T_1$ अश्नाति ( for भोक्तव्यम् ). — ( L. 50 ) $G_3$ गतिं ( for गतिः ). $G_4$ पूर्व- ( for पूर्वं ). — ( L. 52 ) $D_{10}$ $T_2$ $G_{2,4}$ भगवान्स ( $G_2$ °वन्स्तु- ) ( for गर्भवासं ). — ( L. 53 ) $T_1$ नरके ( for

गर्भोपक्रमणे तात कर्मणामुपसर्पणे ।
तस्मान्मे निश्चयो जातो धर्मेष्वेतेषु भारत ।
तदिच्छामि कुरुश्रेष्ठ त्वत्प्रसादान्महामते ।
तं धर्मं चेह वेत्तुं वै यो जराजन्ममृत्युहा ।
येनोष्णदा वैतरणी असिपत्रवनं च तत् ।
कुण्डानि चाग्नितप्तानि क्षुरधारापथस्तथा ।
शाल्मलीं च महाघोरामायसीं घोरकण्टकाम् ।
मातापितृकृते चापि सुहृन्मित्रार्थकारणात् ।
आत्महेतोश्च पापानि कृतानीह नरैश्च यैः ।
तेषां फलोदयं कष्टमृषिर्द्वैपायनोऽब्रवीत् ।
कुम्भीपाकप्रदीप्तानां शूलार्तानां च क्रन्दताम् ।
रौरवे क्षिप्यमाणानां प्रहारैर्मथितात्मनाम् ।
स्तनतामपक्वत्तानां पिबतामात्मशोणितम् ।
तेषामेव प्रवदतां कारुण्यं नास्ति यत्रतः ।
तृष्णाशुष्कोष्ठकण्ठानां विह्वलानामचेतसाम् ।
सर्वदुःखाभितप्तानां रुजार्तानां च क्रोशताम् ।
वेदनार्ता हि क्रन्दन्ति पूरयन्तो दिशो दश ।
एकः करोति पापानि सहभोज्यानि बान्धवैः ।
तेषामेकः फलं भुङ्क्ते कष्टे वैवस्वतक्षये ।
येन नैतां गतिं गच्छेन्न विण्मूत्रास्थिपिच्छिले ।
विष्ठामूत्रकृमीमध्ये बहुजन्तुनिषेविते ।
को गर्भवासात्परतो नरकोऽन्यो विधीयते ।
यत्र वासकृतो योगः कुक्षौ वासो विधीयते ।
जातो विस्तीर्णदुःखः स्याद्भवते विगतज्वरः ।
न चैष लभ्यते कामो जातमात्रं हि मानवम् ।
आविशन्तीह दुःखानि मनोवाक्कायिकानि तु ।
तैरस्वतन्त्रो भवति पीड्यमानो भयानकैः ।
तैर्गर्भवासं गच्छति अवशो जायते तथा ।
अवशश्चेहते जन्तुर्व्रजत्यवश एव हि ।
जरसा रूपविध्वंसं प्राप्नोत्यवश एव तु ।
शरीरभेदमाप्नोति जीर्यत्यवश एव तु ।
एवं ह्यनियतो मृत्युर्भवत्येव सदा नृषु ।
गर्भेषु म्रियते कश्चिज्जायमानस्तथापरः ।
जाता म्रियन्ते बहवो यौवनस्थास्तथापरे ।
मध्यभावे तु नश्यन्ति स्थविरो मृत एव तु ।
को जन्मनो नोद्विजते स्वयंभूरपि यो भवेत् ।
कुतस्त्वस्मद्विधस्तात मरणस्य वशानुगः ।
नित्याविष्टो भयेनाहं मनसा कुरुसत्तम ।
मुहूर्तमप्यहं शर्म न विन्दामि महामते ।
कालात्मनि तिरोभूतो नित्यं तद्गुणवर्जितः ।
अन्नैर्बहुविधैः पुष्टं वस्त्रैर्नानाविधैर्वृतम् ।
चन्दनागरुदिग्धाङ्गं मणिमुक्ताविभूषितम् ।

दिष्टान्ते ). —( L. 54 ) $T_2$ [ऽ]भि- ; $G_4$ [ऽ]पि ( for हि ). —( L. 56 ) $T_{2.3}$ $G_{1.3}$ गर्भाति- ( for °प- ). $T_1$ $G_2$ गर्भाव( $G_2$ °या )क्रमणे तात ( for the prior half ). $T_1$ कर्मणा संप्रवर्तते ( for the post. half ). —( L. 58 ) $G_2$ कुल- ( for कुरु- ). —( L. 59 ) $T_1$ वेत्तुमिह ( for चेह वेत्तुं ). —( L. 60 ) $T_1$ [उ]ष्मदा ; $G_4$ [उ]ष्णोदा ( for [उ]ष्णदा ). $T_1$ यत् ( for तत् ). —( L. 61 ) $T_1$ क्षुरधारास्तथैव च ( for the post. half ). —( L. 62 ) Some MSS. शाल्मलीं. $G_2$ -कर्मभिः ( for -कण्टकाम् ). —( L. 63 ) $G_4$ सुहृन्मित्रापकारणात् ( for the post. half ). —( L. 66 ) $T_1$ कुंड- ( for कुम्भी- ). $T_1$ पलायिनां ( for च क्रन्दताम् ). —( L. 67 ) $D_{10}$ रौरवे क्षीयमाणानां ( for the prior half ). —$T_1$ om. line 69. —( L. 69 ) $T_3$ $G_{1-3}$ [ए]वं ( for [ए]व ). $G_2$ कारुण्यान् ( for °ण्यं ). —( L. 71 ) $D_{10}$ $T_{1.2}$ -भूतानां ( for -तप्तानां ). —( L. 72 ) $G_4$ पूरयंति ( for °यन्तो ). —( L. 74 ) Madras ed. कष्टं ( for कष्टे ). Kumbh. ed. कष्टं वैवस्वते गृहे ( for the post. half ). —$T_1$ om. line 75. —( L. 75 ) Madras ed. स ( for the second न ). — After line 77, $D_{10}$ $T_3$ $G_{1-3}$ Madras ed. ins. :

यत्राहारकृता यात्रा विष्ठामूत्रेण संपदा ।
[ Madras ed. मात्राहार- ( for यत्रा° ). ]

— After the above, $D_{10}$ $T_{1.3}$ $G_{1-3}$ repeat line 77. —( L. 78 ) $G_{1.3}$ अत्र ( for यत्र ). —( L. 79 ) $D_{10}$ $G_2$ जाते ( for जातो ). Kumbh. ed. -शोकः ( for -दुःखः ). $G_2$ भवेद् ; Kumbh. ed. भवेत ( for भवते ). —( L. 80 ) $T_{1.2}$ $G_{1.3}$ [ए]व ( for [ए]ष ). $D_{10}$ लभते ( for लभ्यते ). $T_1$ कर्म ( for कामो ). —( L. 81 ) $G_2$ आदिशंति ( for आविशन्ति ). —( L. 82 ) $T_1$ मुहुर्मुहुः ( for भयानकैः ). —( L. 83 ) $D_{10}$ गच्छेति ; $G_3$ गच्छेत ( for गच्छति ). $T_1$ अवशो गर्भमागच्छन् ; $G_2$ ते गर्भवासं गच्छंति ( for the prior half ). $T_2$ ह्यवशो ( for अ° ). —( L. 84 ) $T_3$ चेंगते ( for चेहते ). —$D_{10}$ $G_2$ om. ( hapl. ) line 85. —( L. 85 ) $T_1$ $G_{1.3}$ जरया ; $T_3$ रजसा ( for जरसा ). —$T_2$ om. ( hapl. ) line 86. —( L. 86 ) Kumbh. ed. जीर्यते ( for °ति ). —( L. 87 ) $G_2$ [अ]नियमो ( for °तो ). $G_2$ [ए]प ( for [ए]व ). —( L. 88 ) $G_2$ [अ]परे ( for °रः ). —( L. 89 ) $G_{1.3.4}$ म्रियंतो ( for म्रियन्ते ). $T_1$ [ए]व च ( for [अ]परे ). —( L. 90 ) $T_1$ मध्यभागे ( for °वे ). $G_1$ भूत ( for मृत ). —( L. 91 ) $T_1$ शंभोरपि भयं भवेत् ( for the post. half ). —$T_1$ om. line 93. —( L. 93 ) $T_2$ नित्यानिष्ट- ; $G_{1.3}$ °शिष्टो ( for °विष्टो ). —$T_1$ om. line 95. —( L. 95 ) $G_{1.3}$ कालात्मना ( for °नि ). $G_2$ तं गुण- ( for तद्गुण- ).

यानैर्बहुविधैर्यातमेकान्तेनैव लालितम् ।
यौवनोद्धतरूपाभिर्मदविह्वलगामिभिः ।
इष्टाभिरभिरामाभिर्वरस्त्रीभिरयन्त्रितम् ।
रमितं सुचिरं कालं शरीरममितप्रभम् ।
अवितृप्ता गमिष्यन्ति हित्वा प्राणांस्तथापरे ।
स्वर्गेऽप्यनियता भूतिस्तथैवाकाशसंश्रये ।
देवाप्यधिष्ठानवशास्तस्माद्देवं न कामये ।
कामानां नास्त्यधिष्ठानमकामस्तु निवर्तते ।
लोकसंग्रहधर्मास्तु सर्व एव न संशयः ।
डोलासधर्मान्धर्मज्ञ ऋषिर्द्वैपायनोऽब्रवीत् ।
कस्मात्को विषमं दुःखमारोहेत विचक्षणः ।
विद्यमाने समे मार्गे डोलाधर्मविवर्जिते ।
को ह्यात्मानं प्रियं लोके डोलासाधर्म्यतां नयेत् ।
चराचरैः सर्वभूतैर्गन्तव्यमविशङ्कया ।
अस्माल्लोकात्परं लोकमपाथेयमदैशिकम् ।
घोरं तमः प्रवेष्टव्यमत्रातारमबान्धवम् ।
ये तु तं किल धर्मज्ञा धर्मं नारायणेरितम् ।
अनन्यमनसो दान्ताः स्मरन्ति नियतव्रताः ।
ततस्ते न च पश्यन्ति प्राप्नुवन्ति परं पदम् ।
रक्षते भगवान्विष्णुर्भक्तानात्मशरीरवत् ।
कुलालचक्रप्रतिमे भ्राम्यमाणेषु जन्तुषु ।
मातापितृसहस्राणि संप्राप्तानि मया गुरो ।
स्नेहापन्नेन पीतास्तु मातॄणां विविधाः स्तनाः ।
पुत्रदारसहस्राणि इष्टानिष्टशतानि च ।
प्राप्तान्यधिष्ठानवशादतीतानि तथैव च ।
न क्वचिच्च सुखं प्राप्तं न क्वचिच्छाश्वती गतिः ।
स्थानैर्महद्भिर्विभ्रंशो दुःखलब्धैः पुनः पुनः ।
धननाशश्च संप्राप्तो लब्ध्वा दुःखेन तद्धनम् ।
अध्वगानामिव पथि च्छायामाश्रित्य संगमः ।
एवं कर्मवशो लोको ज्ञातीनां हितसंगमः ।
विश्रम्य च पुनर्याति कर्मभिर्दर्शितां गतिम् ।
एतदीदृशकं दृष्ट्वा ज्ञात्वा चैव समागमम् ।
को न बिभ्येत्कुरुश्रेष्ठ विष्ठान्नस्येव भोजनात् ।
बुद्धिश्च मे समुत्पन्ना वैष्णवे धर्मविस्तरे ।
तदेष शिरसा पादौ गतोऽस्मि भगवंस्तव ।
शरणं च प्रपन्नोऽस्मि गन्तव्ये शरणे ध्रुवे ।
जन्ममृत्युजराखिन्नस्त्रिभिर्दुःखैर्निपीडितः ।
इच्छामि भवता त्रातुमेभ्यस्त्वत्तो महामुने ।
तस्याद्ययुगधर्मस्य श्रवणात्कुरुपुंगव ।
एतदाद्ययुगोद्भूतं त्रेतायां तत्तिरोहितम् ।
स एव धर्ममखिलमृषिर्द्वैपायनोऽब्रवीत् ।

Colophon.

भीष्मः ।

सदृशं राजशार्दूल वृत्तस्य च कुलस्य च ।
को राज्यं विपुलं गृह्य स्फीताकारपुरं महत् ।
निर्जितारातिसामन्तं देवराज्योपमं सुखम् ।

—(L. 96) G2 अंते (for अन्नैर्). G2 स्मृतं (for वृतम्). —(L. 97) T1 G2 -दिग्धं च (for -दिग्धाङ्गं). T1 मणिरत्न- (for °मुक्ता-). —(L. 98) G1, 3 [ड]प- (for [प]व). —(L. 99) T1 यौवनोत्तमरूपाभिर् (for the prior half). Kumbh. ed. मंद- (for मद-). —(L. 100) T1 -रूपाभिर्; G4 -मानाभिर् ((for -रामाभिर्). T2 G2 वारस्त्रीभिर् (for वर°). T1 अतंत्रितं; Madras ed. च यंत्रितं (for अयन्त्रितम्). —(L. 101) T1 शरीरममितं प्रभो (for the post. half). —(L. 102) D10 T2 G2, 4 भविष्यंति (for गमि°). —(L. 104) T1 देवान्; G1 नैनं (for देवं). —(L. 106) T1 G2 एते (for एव). —(L. 107) T1 आयासधर्मान्; G2 दोला°; G3 डोलासधर्मा (for °र्मान्). —(L. 108) T1, 2 G4 तस्मात्; Kumbh. ed. अस्मात् (for क°). T1 दुर्गम् (for दुःखम्). T2 आरोहति (for °हेत). —(L. 109) G2 विद्यमानानि मे मार्गे (for the prior half). —(L. 110) T1 [आ]त्मनः (for [आ]त्मानं). G4 -साधर्मतां (for °र्म्यतां). —(L. 112) T1 अमुं (for परं). —(L. 113) D10 T2 G3 अंतः; G2 अंतं (for तमः). —(L. 114) T1 शील- (for किल). T2 धर्मज्ञं; G3 °ज्ञ (for °ज्ञा). G4 धर्मान् (for धर्मं). —(L. 116) T1 अतस् (for ततस्). G4 च न (by transp.). —(L. 120) G2 स्नेहादनेन पीतास्तु (for the prior half). —(L. 123) Kumbh. ed. स्थितिः (for गतिः). —(L. 125) G2 धननाशं (for °शश्). G2 तं धनं (for तद्धनम्). —(L. 126) D10 T1 G4 आध्विकानाम् (for अध्वगानाम्). —(L. 127) T1, 2 एवं कर्मवशे लोके (for the prior half). T1 को ज्ञातीनां हि संगमः (for the post. half). —(L. 128) T1 धर्मिभिर् (for कर्म°). —(L. 130) T1 नु लभ्येत् (for न बि°). T2 G2 विपान्नस्य (for विष्ठा°). T1 भोजनं (for °नात्). —(L. 131) G4 वैष्णवैर् (for °वे). —(L. 133) T1 त्वां (for च). Madras ed. गंता ते चरणे ध्रुवे (for the post. half). —(L. 134) T1 जन्ममृत्युजराव्याधिदुःखाद्यैर्विनिपीडितः. —(L. 135) T3 भगवंस् (for भवता). T1 महामते (for °मुने). —(L. 137) G2 ते (for तत्). T1 धर्मस्त्वाद्ययुगोद्भूतः पर्यायेण तिरोहितः. —Colophon. *Sub-parvan:* D10 दानधर्म. —*Adhy. name:* T2 जननमरणदुःखसंसारकथनं. —*Adhy. no.:* T1 36; T2, 3 G 37. —(L. 140) T1 श्वेतागार-; G2 स्थिताकार- (for

राज्ये राज्यगुणा ये च तान्व्युदस्य नराधिप ।
दोषं पश्यसि राजेन्द्र देहेऽस्मिन्पाञ्चभौतिके ।
अतिक्रान्तास्त्वया राजन्वृत्तेन प्रपितामहाः ।
धर्मो विग्रहवान्धीरो विदुरश्च महायशाः ।
संजयश्च महातेजा ये चान्ये दिव्यदर्शनाः ।
प्रवृत्तज्ञानसंपन्नास्तत्त्वज्ञानविदो नृप ।
तेऽतिक्रान्ता महाराज ब्रह्माद्याः ससुरासुराः ।
अनित्यं दुःखसंतप्तं जगदेतन्न संशयः ।
एवमेतान्महाबाहो ब्रह्माद्यान्ससुरासुरान् ।
अनित्यान्सततं पश्य मनुष्यादिषु का कथा ।
नित्यां तु प्रकृतीमाहुर्यासौ प्रसवधर्मिणी ।
अरूपिणीमनिर्देश्यामकृतां पुरुषातिगाम् ।
तामत्यन्तसुखां सौख्यां निर्वाणमिति संज्ञिताम् ।
आहुर्ब्रह्मर्षयो ह्याद्यां भुवि चैव महर्षयः ।
तया पुरुषरूपिण्या धर्मप्रकृतिकोऽनघ ।
स यात्येव हि निर्वाणं यत्तत्प्रकृतिसंज्ञितम् ।
स एष प्राकृतो धर्मो भ्राजत्यादियुगे नृप ।
विकारधर्माः शेषेषु युगेषु भरतर्षभ ।
भ्राजन्तेऽभ्यधिकं वीर संसारपथगोचराः ।
प्रकृतीनां च सर्वासामकृता प्रकृतिः स्मृता ।
एवं प्रकृतिधर्मा हि वरां प्रकृतिमाश्रिताः ।
पश्यन्ति परमां लोके दृष्टादृष्टानुदर्शिनीम् ।
सत्त्वादियुगपर्यन्ते त्रेतायुगसमुद्भवे ।
कामं कामयमानेषु ब्राह्मणेषु तिरोहितः ।
कुपथेषु तु धर्मेषु प्रादुर्भूतेषु कौरव ।
जातो मन्दप्रचारो हि धर्मः कलियुगे नृप ।
नित्यस्तु पुरुषो ज्ञेयो विश्वरूपो निरञ्जनः ।
ब्रह्माद्या अपि देवाश्च यं सदा पर्युपासते ।
तं च नारायणं विद्धि परं ब्रह्मेति शाश्वतम् ।
तत्कर्म कुरु कायेन ध्यायस्व मनसा च तम् ।
कीर्तयस्व च तन्नाम वाचा सर्वत्र भूपते ।
तत्पदं प्राप्नुहि प्राप्यं शाश्वतं चापुनर्भवम् ।
इत्येतद्विष्णुमाश्रित्य संसारग्रहमोक्षणम् ।
कथितं ते महाबाहो किं भूयः श्रोतुमिच्छसि ।

Colophon.

युधिष्ठिरः ।

क्लिश्यमानेषु भूतेषु जातीमरणसागरे ।
यत्प्राप्य क्लेशं नाप्नोति तन्मे ब्रूहि पितामह ।

भीष्मः ।

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
सनत्कुमारस्य सतः संवादं नारदस्य च ।
सनत्कुमारो भगवान्ब्रह्मपुत्रो महायशाः ।
पूर्वजातास्त्रयस्तस्य कथ्यन्ते ब्रह्मवादिनः ।
सनकः सनन्दनश्चैव तृतीयश्च सनातनः ।
जातमात्राश्च ते सर्वे प्रतिबुद्धा इति श्रुतिः ।
चतुर्थश्चैव तेषां स भगवान्योगवित्तमः ।
सनत्कुमार इति वै कथयन्ति महर्षयः ।
हैरण्यगर्भः स मुनिर्वसिष्ठः पञ्चमः स्मृतः ।
षष्ठः स्थाणुः स भगवानमेयात्मा त्रिशूलधृत् ।
ततोऽपरे समुत्पन्नाः पावका दारुणे क्रतौ ।

स्फीताकार- ). Kumbh. ed. स्फीताकारं पुनर्महत् ( for the post. half ). — ( L. 141 ) $T_1$ शुभं ( for सुखम् ). — ( L. 142 ) $T_1$ राज्यं ( for राज्ये ). $D_{10}$ T G तान्युदस्य ( for तान्व्यु° ). — ( L. 143 ) Kumbh. ed. पश्यति ( for °सि ). $D_{10}$ $T_{2.3}$ G दोषे( $G_2$ देहे )स्मिन्पंचविंशकः ( $G_{1.3}$ °के ); $T_1$ वयसाथ नवेन च ( for the post. half ). — ( L. 145 ) $G_2$ धर्म- ( for धर्मो ). $T_1$ पिशाचवान् ( for विग्रह° ). — ( L. 147 ) $T_1$ प्रवृत्ति- ( for °त्त- ). — ( L. 148 ) $T_3$ $G_{1.3}$ अतिक्रांता ( for तेऽति° ). $G_2$ महाभाग ( for °राज ). $T_1$ त्वया च समतिक्रांता ( for the prior half ). — $T_1$ om. ( hapl. ) lines 149–150. — ( L. 150 ) $D_{10}$ $G_{1-3}$ [ए]तन् ( for [ए]तान् ). — ( L. 152 ) $T_1$ प्राहुर्; Kumbh. ed. आह ( for आहुर् ). $T_1$ सर्वे प्रसवधर्मिणां ( for the post. half ). — ( L. 154 ) $D_{10}$ $T_{1.2}$ $G_{1.4}$ अति- ( for इति ). $T_3$ $G_{2.3}$ निर्वाणमानिचौन्य( $G_3$ °संज्ञि )तां ( for the post. half ). — ( L. 155 ) $T_3$ महर्षयो ( for ब्रह्म° ). $T_1$ [आ]र्यां ( for [आ]द्यां ). $T_2$ $G_{3.4}$ बहु ( for भुवि ). — ( L. 156 ) $G_2$ पुरुषवि- ( for पुरुष- ). $G_3$ धर्मप्रकृतितो नृप ( for the post. half ). — $T_1$ repeats line 157 after line 162. — ( L. 158 ) $D_{10}$ प्रकृतो ( for प्रा° ). — ( L. 160 ) $G_2$ ह्यधिकं ( for ऽभ्य° ). $T_3$ $G_{3.4}$ -गोचरः ( for -गोचराः ). — ( L. 162 ) $G_2$ परां; Madras ed. वराः ( for वरां ). $T_1$ आस्थिताः ( for आश्रिताः ). — $T_1$ om. line 163. — ( L. 163 ) $T_3$ तदाहुः ( for पश्यन्ति ). — ( L. 164 ) $T_1$ कृतादि- ( for सत्त्वादि- ). — ( L. 165 ) $T_2$ कामान् ( for कामं ). $T_3$ पुरा हितः ( for तिरोहितः ). — ( L. 167 ) $T_3$ $G_{1.3}$ -प्रकारो ( for -प्रचारो ). — $D_{10}$ $T_{1.2}$ $G_{2.4}$ om. lines 168–173. — ( L. 175 ) T $G_{1.3}$ मे ( for ते ). $T_3$ अर्हसि ( for इच्छसि ). $T_1$ $G_2$ किं भूयः कथयामि ते ( for the post. half ). — Colophon. *Sub-parvan :* $D_{10}$ दानधर्म. — *Adhy. name :* $T_3$ प्रकृतिनिरूपणं. — *Adhy. no. :* $T_1$ 37 ; $T_{2.3}$ $G_{1.3.4}$ 38 ; $G_2$ 36. — $G_{1.3}$ om. the ref. — ( L. 176 ) Madras ed. यतिर् ( for जाती- ). $T_1$ -संकटे ( for -सागरे ). — ( L. 179 ) $T_1$ तदा ( for सतः ). — ( L. 184 ) $T_3$ योगसत्तमः ( for °वित्तमः ). — ( L. 187 ) T G त्रिशू( $T_2$ स शू-; $T_3$ तु शू )लधृक् ( $T_1$ $G_2$ °भृत् ) ( for °धृत् ). — ( L. 188 )

मनसा स्वयंभुवो ह्रीमे मरीचिप्रमुखास्तथा ।
भृगुर्मरीचेरनुजो भृगोरप्यङ्गिरास्तथा ।
अनुजोऽङ्गिरसोऽथात्रिः पुलस्त्योऽत्रेस्तथानुजः ।
पुलस्त्यस्यानुजो विद्वान्पुलहो नु महाद्युतिः ।
पठ्यन्ते ब्रह्मजा ह्येते विद्वद्भिरमितौजसः ।
सर्वमेतन्महाराज कुर्वन्नादिगुरुर्महान् ।
प्रभुर्विभुरनन्तश्रीर्ब्रह्मा लोकपितामहः ।
मूर्तिमन्तोऽमृतीभूतास्तेजसातितपोन्विताः ।
सनकप्रभृतयस्तत्र ये च प्राप्ताः परं पदम् ।
कृत्स्नं क्षयमनुप्राप्य विमुक्ता मूर्तिबन्धनात् ।
सनत्कुमारस्तु विभुर्योगमास्थाय योगवित् ।
त्रीँल्लोकानचरच्छश्वदैश्वर्येण परेण हि ।
रुद्रश्चाप्यष्टगुणितं योगं प्राप्तो महायशाः ।
सूक्ष्ममष्टगुणं राजन्नितरे नृपसत्तम ।
मरीचिप्रमुखास्तात सर्वे सृष्ट्यर्थमेव ते ।
नियुक्ता राजशार्दूल तेषां सृष्टिं शृणुष्व मे ।
सप्त ब्रह्माण इत्येते पुराणे निश्चयं गताः ।
सर्वे वेदेषु चैवोक्ताः खिलेषु च न संशयः ।
इतिहासपुराणे च श्रुतिरेषा सनातनी ।
ब्राह्मणा वरदानेतान्प्राहुर्वेदान्तपारगाः ।
एतेषां पितरस्तात पुत्रा इत्यनुचक्षते ।
गणाः सप्त महाराज मूर्तयोऽमूर्तयस्तथा ।
पितॄणां चैव राजेन्द्र पुत्रा देवा इति श्रुतिः ।
देवैर्व्याप्ता इमे लोका इत्येवमनुशुश्रुम ।
कृष्णद्वैपायनाच्चैव देवस्थानात्तथैव च ।
देवलाच्च नरश्रेष्ठ काश्यपाच्च मया श्रुतम् ।
गौतमादपि कौण्डिन्याद्भारद्वाजात्तथैव च ।
मार्कण्डेयात्तथैवैतदपेर्देवमतात्तथा ।
पित्रा च मम राजेन्द्र श्राद्धकाले प्रभाषितम् ।
परं रहस्यं वेदान्तं प्रियं हि परमात्मनः ।
अतः परं प्रवक्ष्यामि यन्मां पृच्छसि भारत ।
तदिहैकमनोबुद्धिः शृणुष्वावहितो नृप ।
स्वायंभुवस्य संवादं नारदस्य च धीमतः ।
सनत्कुमारो भगवान्दिव्यं जज्वाल तेजसा ।
अङ्गुष्ठमात्रो भूत्वा वै विचचार महाद्युतिः ।
स कदाचिन्महाभागो मेरुपृष्ठं समागमत् ।
नारदेन नरश्रेष्ठ मुनिना ब्रह्मवादिना ।
जिज्ञासमानावन्योन्यं सकाशे ब्रह्मणस्ततः ।
ब्रह्मभावगतौ तात परमार्थार्थचिन्तकौ ।
मतिमान्मतिमच्छ्रेष्ठं बुद्धिमान्बुद्धिमत्तरम् ।
क्षेत्रवित्क्षेत्रविच्छ्रेष्ठं ज्ञानविज्ञानवित्तमम् ।
सनत्कुमारं तत्त्वज्ञं भगवन्तमरिंदम ।
लोकविल्लोकविच्छ्रेष्ठमात्मविच्चात्मवित्तमम् ।
सर्ववेदार्थकुशलं सर्वशास्त्रविशारदम् ।
सांख्ययोगं च यो वेद पाणावामलकं यथा ।
नारदोऽथ नरश्रेष्ठ तं पप्रच्छ महाद्युतिः ।

$T_3$ तदा (for ततो). — (L. 189) $D_{10}$ $G_2$ भीमे (for ह्रीमे). — (L. 190) $T_1$ भृगुर्मरीचिनितनुजो (for the prior half). — (L. 193) $T_1$ पश्यंते (for पठ्यन्ते). — (L. 194) $T_1$ सर्गम् (for सर्वम्). $D_{10}$ $T_{1,2}$ $G_{1,3}$ आदिर् (for आदि-). — $T_1$ om. line 195. — (L. 196) $G_2$ ते (for [अ]ति-). $T_1$ -तपोन्वितान् (for °ताः). — After line 196, $T_1$ ins.:

सर्गे नियोजयामास न च चक्रुर्मनस्तु ते ।

— $T_1$ om. line 197. — (L. 197) Prior half hypermetric. $G_2$ -प्रभृतास् (for -प्रभृतयस्). — (L. 198) $T_3$ अनुप्राप्ता (for °प्य). — (L. 199) $T_1$ repeats the post. half and the prior half of line 200 after the prior half of line 201. — (L. 200) $T_1$ (first time) न्यचरन् (for अ°). $T_1$ (second time) चचार पृथिवीं सर्वां (for the prior half). — (L. 201) $T_1$ प्राप्य (for प्राप्तो). — $T_1$ om. line 202. — (L. 203) $T_1$ सह सृष्ट्या व्यवस्थिताः (for the post. half). — $T_1$ om. lines 204 and 206. — (L. 206) $G_2$ ह्यखिलेषु (for खिलेषु च). — (L. 207) Madras ed. इतिहासे (for °हास-). — $T_1$ om. line 208. — (L. 208) $T_2$ ब्राह्मणान् (for °णा). $D_{10}$ $T_2$ $G_{1,3,4}$ ह्येतान् (for ए°). — (L. 209) $T_1$ एतेषां चैव पुत्रास्तु पितरः परिकीर्तिताः. — (L. 212) $T_2$ G -शुश्रुमः (for °म). — $T_1$ om. line 215. — (L. 215) $G_2$ भरद्वाजात् (for भा°). — (L. 216) $T_1$ देवमदात्; $T_3$ $G_{1,3}$ °तमात् (for °मतात्). Kumbh. ed. अपि (for तथा). — (L. 217) $T_1$ श्रद्धा- (for श्राद्ध-). — (L. 218) $T_1$ राजेंद्र (for वेदान्तं). $T_1$ ब्रह्मणः (for प्रियं हि). — (L. 222) $T_1$ दिवं; $G_2$ दिवि (for दिव्यं). $D_{10}$ $G_4$ तेजसः (for °सा). — (L. 224) $T_1$ महाराज (for °भागो). $T_1$ मेरुपृष्ठे समेयिवान् (for the post. half). — (L. 226) $T_1$ ब्रह्मवादिनां; $G_2$ °सत्तम (for °णस्ततः). — After line 226, $T_1$ reads line 234. $T_1$ om. lines 227–229. — (L. 227) $T_3$ $G_{2,3}$ परमार्थविचिंतकौ (for the post. half). — (L. 228) $T_{2,3}$ $G_3$ मतिमच्छ्रेष्ठ- $G_4$ बुद्धिमत्तमं (for °त्तरम्). — (L. 229) $D_{10}$ $T_3$ $G_{1,3}$ ज्ञानविज्ञानमुत्तमं; $T_2$ $G_2$ ज्ञानं वि(${G_2}$ °नवि)-ज्ञानमुत्तमं (for the post. half). — (L. 230) $G_2$ तत्त्वज्ञानम् (for भगवन्तम्). — $T_1$ om. lines 232–233. —(L.

नारदः ।

त्रयोविंशतितत्त्वस्य अव्यक्तस्य महामुने ।
प्रभवं चाप्ययं चैव श्रोतुमिच्छामि तत्त्वतः ।
अध्यात्ममधिभूतं च अधिदैवं तथैव च ।
कालसंख्यां च सर्गं च स्रष्टारं पुरुषं प्रभुम् ।
यं विश्वमुपजीवन्ति येन सर्वमिदं ततम् ।
यं प्राप्य न निवर्तन्ते तद्भवान्वक्तुमर्हति ।

सनत्कुमारः ।

यं विश्वमुपजीवन्ति यमाहुः पुरुषं परम् ।
तं वै शृणु महाबुद्धे नारायणमनामयम् ।
एष नारायणो नाम यं विश्वमुपजीवति ।
एष स्रष्टा विधाता च हर्ता पालयिता प्रभुः ।
प्राप्यैनं न निवर्तन्ते यतयोऽध्यात्मचिन्तकाः ।
एतावदेव वक्तव्यं मया नारद पृच्छते ।
परं न वेद्मि तत्सर्गं यावांश्चायं यथाप्ययम् ।
श्रूयतामानुपूर्व्येण नव सर्गाः प्रयत्नतः ।
यथाकालपरीमाणं तत्त्वानाम्प्रविसत्तम ।
अध्यात्ममधिभूतं च अधिदैवं तथैव च ।
कालसंख्यां च सर्गं च सर्वमेव महामुने ।
तमसः कुर्वतः सर्गं तामसो ह्यभिधीयते ।
ब्रह्मविद्भिर्द्विजैर्नित्यं नित्यमध्यात्मचिन्तकैः ।
पर्यायनामान्येतस्य कथयन्ति मनीषिणः ।
तानि ते संप्रवक्ष्यामि तदिहैकमनाः शृणु ।
महार्णवोऽर्णवश्चैव सलिलं च गुणास्तथा ।
वेदास्तपश्च यज्ञाश्च धर्माश्च भगवान्विभुः ।
प्राणः संवर्तकोऽग्निश्च व्योम कालस्तथैव च ।
नामान्येतानि ब्रह्मर्षे शरीरस्येश्वरस्य वै ।
कीर्तितानि द्विजश्रेष्ठ मया शास्त्रानुमानतः ।
चतुर्युगसहस्राणि चतुर्युगमरिंदम ।
प्राहुः कल्पसहस्रं वै ब्राह्मणास्तत्त्वदर्शिनः ।
दश कल्पसहस्राणि अव्ययस्य महानिशा ।
तथैव दिवसं प्राहुर्योगाः सांख्याश्च तत्त्वतः ।
निशासुप्तोऽथ भगवान्क्षपान्ते प्रत्यबुध्यत ।
पश्चाद्बुद्ध्वा ससर्जापस्तासु वीर्यमवासृजत् ।
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।
अहंकृत्वा ततस्तस्मिन्ससर्ज प्रभुरीश्वरः ।
हिरण्यगर्भं विश्वात्मा ब्रह्माणं जलवन्मुनिम् ।
भूतभव्यभविष्यस्य कर्तारमनघं विभुम् ।
मूर्तिमन्तं महात्मानं विश्वशंभुं स्वयंभुवम् ।
अणिमा लघिमा प्राप्तिरीशानो ज्योतिषां वरम् ।
चक्रे तिरोधां भगवानेतत्कृत्वा महायशाः ।
एतस्यापि निशामाहुर्वेदवेदाङ्गपारगाः ।
पञ्च कल्पसहस्राणि अहरेतावदेव च ।
स सर्गं कुरुते ब्रह्मा तामसस्यानुपूर्वशः ।
सृजते ह त्वहंकारं परमेष्ठिनमव्ययम् ।
अहंकारेण वै लोका व्याप्ताः साहंकृतेन वै ।
येनाविष्टानि भूतानि मज्जन्त्यव्यक्तसागरे ।
देवर्षिदानवनरा यक्षगन्धर्वकिंनराः ।

232 ) $D_{10}$ $G_4$ -विशारदः ( for °दम् ). — ( L. 233 ) $T_3$ $G_{1,3}$ सांख्यं ( for सांख्य- ). — ( L. 234 ) $T_{2,3}$ $G_{1-3}$ मुनिश्रेष्ठं ; $G_4$ नरश्रेष्ठं ( for °श्रेष्ठ ). — ( L. 235 ) $T_1$ महामते ( for °मुने ). — ( L. 236 ) $D_{10}$ [अ]व्ययं ( for [अ]प्ययं ). — ( L. 237 ) $G_2$ आधिदैवं ( for अ° ). $T_1$ अध्यात्ममाधिदैवं च अधिभूतं तथैव च. — ( L. 238 ) $T_2$ कालसांख्यं ; $T_3$ $G_{1,3}$ °संख्याश् ( for °संख्यां ). — ( L. 240 ) $D_{10}$ $T_2$ $G_2$ अर्हसि ( for °ति ). — ( L. 241 ) $T_1$ -जीवेत ( for -जीवन्ति ). $G_4$ प्राहुः ( for आहुः ). — ( L. 244 ) $G_2$ भर्ता ( for हर्ता ). $D_{10}$ $G_4$ विभुः ( for प्रभुः ). — ( L. 245 ) $D_{10}$ [ए]कं ( for [ए]नं ). $T_1$ मुनयो ध्यानचिंतकाः ( for the post. half ). — ( L. 247 ) T त्वं वेत्सि ; $G_2$ न वेद ( for न वेद्मि ). $T_{1,2}$ G सर्वं ( for सर्गं ). $T_3$ [अ]हं ( for [अ]यं ). $G_2$ तथा ( for यथा ). $T_1$ यथा चाहं महामते ( for the post. half ). — ( L. 248 ) $T_3$ तव ( for नव ). Madras ed. सर्गान् ( for सर्गाः ). — ( L. 249 ) $T_3$ $G_2$ तथा ( for यथा- ). $T_3$ -परीनानं ( for °माणं ). — ( L. 252 ) $T_3$ $G_1$ [ऽ]ध्यभि- ; $G_3$ [ऽ]भ्यभि- ( for ह्यभि- ). — ( L. 253 ) $T_3$ -चिंतकाः ( for °कैः ). — $T_1$ om. line 255. — ( L. 257 ) Kumbh. ed. तपांसि ( for तपश्च ). $T_1$ यशश् ( for यज्ञाश् ). $T_1$ धर्मश् ( for धर्माश् ). — ( L. 258 ) Kumbh. ed. सांवर्तको ( for सं° ). — ( L. 259 ) $G_2$ विप्रर्षे ( for ब्रह्मर्षे ). $T_1$ स्वकस्य ( for [ई]श्वरस्य ). — ( L. 260 ) $T_1$ मुनि- ( for द्विज- ). Kumbh. ed. -सारतः ( for -मानतः ). — ( L. 261 ) $D_{10}$ चतुर्गुण- ( for °युग- ). $T_1$ $G_2$ -सहस्रं तु ( for °स्राणि ). $T_1$ ब्रह्मणो दिवसः स्मृतः ( for the post. half ). — $T_1$ om. line 262. — ( L. 262 ) $G_4$ -सहस्राणि ( for °स्रं वै ). — ( L. 263 ) $D_{10}$ महायशाः ( for °निशा ). — ( L. 265 ) $T_1$ निशां सुप्त्वा ; $T_3$ निशि सुप्तो ( for निशासुप्तो ). $G_2$ प्रत्यबुध्यते. — $T_1$ om. lines 268–276. — ( L. 269 ) $G_2$ हिरण्यगर्भो ( for °र्भं ). Madras ed. जलजान् ( for °वन् ). — ( L. 272 ) $G_3$ वरः ; Kumbh. ed. नरं ( for वरम् ). — ( L. 273 ) $G_2$ तिरोधिं ; Madras ed °धं ( for °धां ). — ( L. 276 ) Kumbh. ed. तामसश्चानुपूर्व्यशः ( for the post. half ). — ( L. 277 ) $G_3$ सृजंते ( for सृजते ). $T_1$ स ( for ह ). — ( L. 278 ) Kumbh. ed. [ए]व ( for वै ). $D_{10}$ प्राप्ताः ( for व्याप्ताः ). $T_1$ तेहंकृतेन ( for साहं° ). — ( L. 280 ) $T_1$ देवर्षिदानवा यक्षा नरा गंधर्वकिंनराः. — ( L. 282 ) $T_1$ उप- ( for अथ ).

उन्मज्जन्ति निमज्जन्ति ऊर्ध्वाधस्तिर्यगेव च ।
एतस्यापि निशामाहुस्तृतीयामथ कुर्वतः ।
त्रीणि कल्पसहस्राणि अहरेतावदेव तु ।
अहंकारस्तु सृजति महाभूतानि पञ्च वै ।
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ।
एतेषां गुणतत्त्वानि पञ्च प्राहुर्द्विजातयः ।
शब्दे स्पर्शे च रूपे च रसे गन्धे तथैव च ।
गुणेष्वेतेष्वभिरताः पङ्कलग्ना इव द्विपाः ।
नोत्तिष्ठन्त्यवशीभूताः सक्ता अव्यक्तसागरे ।
एतेषामिह वै सर्गं चतुर्थमिह कुर्वतः ।
चतुर्युगसहस्रे वै अहोरात्रास्तथैव च ।
अनन्त इति विख्यातः पञ्चमः सर्ग उच्यते ।
इन्द्रियाणि दशैकं च यथाश्रुतिनिदर्शनात् ।
मनः सर्वमिदं तात विश्वं सर्वमिदं जगत् ।
न तथान्यानि भूतानि बलवन्ति यथा मनः ।
एतस्यापि ह वै सर्गं षष्ठमाहुर्द्विजातयः ।
अहः कल्पसहस्रं वै रात्रिरेतावती तथा ।
ऊर्ध्वस्रोतस्तु वै सर्गं सप्तमं ब्रह्मणो विदुः ।
अष्टमं चाप्यधःस्रोतस्तिर्यक्तु नवमः स्मृतः ।
एतानि नव सर्गाणि तत्त्वानि च महामुने ।
चतुर्विंशति तत्त्वानि तत्त्वसंख्यानि तेऽनघ ।
सर्वस्य प्रभवः पूर्वमुक्तो नारायणः प्रभुः ।
अव्ययः प्रभवश्चैव अव्यक्तस्य महामुने ।
प्रवक्ष्याम्यपरं तत्त्वं यस्य यस्येश्वरश्च यः ।
अध्यात्ममधिभूतं च अधिदैवं तथैव च ।
यथाश्रुतं यथादृष्टं तत्त्वतो वै निबोध मे ।

Colophon.

सनत्कुमारः ।

अधःस्रोतसि सर्गे च तिर्यक्स्रोतसि चैव हि ।
एताभ्यामीश्वरं विद्यादूर्ध्वस्रोतस्तथैव च ।
कर्मेन्द्रियाणां पञ्चानामीश्वरो बुद्धिगोचरः ।
बुद्धीन्द्रियाणामथ तु ईश्वरो मन उच्यते ।
मनसः पञ्च भूतानि सगुणान्याहुरीश्वरम् ।
भूतानामीश्वरं विद्याद्ब्रह्माणं परमेष्ठिनम् ।
भवान्हि कुशलश्चैव धर्मेष्वेषु परेषु वै ।
कालाग्निरहः कल्पान्ते जगद्दहति चांशुभिः ।
ततः सर्वाणि भूतानि स्थावराणि चराणि च ।
महाभूतानि दग्धानि स्वयोनिं गमितानि वै ।
कूर्मपृष्ठनिभा भूमिर्निर्दग्धकुशकण्टका ।
निर्वृक्षा निस्तृणा चैव दग्धा कालाग्निना तदा ।
जगत्प्रलीनं जगति जगच्चाप्सु प्रलीयते ।
नष्टगन्धा तदा सूक्ष्मा जलमेवाभवत्तदा ।
ततो मयूखजालेन सूर्यस्त्वापीयते जलम् ।
रसात्मा लीयते चार्के तदा ब्राह्मणसत्तम ।
अन्तरिक्षगतान्भूतान्प्रदहत्यनलस्तदा ।
अग्निभूतं तदा व्योम भवतीत्यभिचक्षते ।
तं तथा विस्फुरन्तं हि वायुर्जरयते महान् ।
महता बलवेगेन आदत्ते तं हि भानुमान् ।
वायोरपि गुणं स्पर्शमाकाशं ग्रसते यदा ।

—(L. 285) G2 पंचमः. —(L. 287) D10 G2 शब्द- (for शब्दे). T1 शब्दस्पर्शौ च रूपं च (for the prior half). T1 रसगंधौ; T2, 3 G1, 3 रसगंधे (for रसे गन्धे). —(L. 288) G2 द्विजाः (for द्विपाः). —(L. 290) Kumbh. ed. सर्वं (for सर्गं). T1 तेषामिहोपसर्गं च (for the prior half). —(L. 291) T1 द्वे तु कल्प- (for चतुर्युग-). G2 -सहस्रं (for °स्रे). T1, 3 द्वे (for वै). T1 अहोरात्रस् (for °त्रास्). —(L. 294) T1 षष्ठम् (for the first सर्वम्). —(L. 298) D10 G2 और्ध्व- (for ऊर्ध्व-). —(L. 299) T1 G2 अष्टमश् (for °मं). G2 [अ]थ (for [अ]धः-). T3 G1, 3 नवमं (for °मः). —(L. 300) T1 महात्मना (for महामुने). —(L. 301) D10 G -संख्या च (for -संख्यानि). T1 चतुर्विंशतिरुक्तानि कालसंख्या तथैव च. —(L. 303) T1 महात्मनः (for °मुने). —(L. 306) T1 G1, 3, 4 मे (for वै). — Colophon. *Sub-parvan:* D10 दानधर्म. — *Adhy. name:* T2 सनत्कुमारनारदसंवादे विश्वसर्गादिनवसर्गप्रकारकथनं; G1, 3 विश्वसर्गादिनवसर्गप्रकारकथनं. — *Adhy. no.:* T1 38; T2, 3 G 39. —(L. 307) T1 अथ स्रोताभिसर्गे च (for the prior half). —(L. 308) Kumbh. ed. विंद्याद् (for विद्याद्). G2 और्ध्व- (for ऊर्ध्व-). —(L. 309) G1 ईश्वरा बुद्धिगोचरी (for the post. half). —(L. 310) T1 अभवद्; G1, 3 अधिकम्; Kumbh. ed. अपि तु (for अथ तु). T1 ईश्वरं मन एव तु (for the post. half). — T1 om. line 313. —(L. 314) T2, 3 G1, 3, 4 कालोग्निर् (for कालाग्निर्). T1 कालोग्निरहरत्वं ते तु (for the prior half). —(L. 316) G2 हा हा (for महा-). Kumbh. ed. स्वां योनिं (for स्वयोनिं). —(L. 318) G2 तथा (for तदा). — D10 om. (hapl.) lines 319–320. —(L. 319) Kumbh. ed. [अ]पि (for [अ]प्सु). —(L. 320) G2 तथा (for the first तदा). —(L. 321) T1 सूर्यस्य (for सूर्यस्तु). —(L. 322) Kumbh. ed. तथा (for तदा). —(L. 323) T1 -चरान् (for -गतान्). T1 यथा (for तदा). — G2 om. lines 325–329. —(L. 325) Kumbh. ed. -तं तथा विस्फुरद्धि (for the prior

प्रशाम्यति ततो वायुः खं तु तिष्ठति नानदत् ।
तस्य तं निनदं शब्दमादत्ते वै मनस्तदा ।
स शब्दगुणहीनात्मा तिष्ठते मूर्तिमांस्तु वै ।
भुङ्क्ते च स तदा व्योम मनस्तात दिगात्मकम् ।
व्योमात्मनि विनष्टे तु संकल्पात्मा विवर्धते ।
संकल्पात्मानमादत्ते चित्तं वै स्वेन तेजसा ।
चित्तं ग्रसत्यहंकारस्तदा वै मुनिसत्तम ।
विनष्टे च तदा चित्ते अहंकारोऽभवन्महान् ।
अहंकारं तदादत्ते महान्ब्रह्मा प्रजापतिः ।
अभिमाने विनष्टे तु महान्ब्रह्मा विराजते ।
तं तदा त्रिषु लोकेषु मूर्तिष्वेवाग्रमूर्तिजम् ।
येन विश्वमिदं कृत्स्नं निर्मितं वै गुणार्थिना ।
मूर्तिं जलेश्वरमपि व्यवसायगुणात्मकम् ।
प्रसिष्णुर्भगवान्ब्रह्मा व्यक्ताव्यक्तमसंशयः ।
एषोऽव्ययस्य प्रलयो मया ते परिकीर्तितः ।
अध्यात्ममधिभूतं च अधिदैवं च श्रूयताम् ।

आकाशं प्रथमं भूतं श्रोत्रमध्यात्मं शब्दोऽधिभूतं दिशोऽधिदैवतम् ॥ १ ॥ वायुर्द्वितीयं भूतं त्वगध्यात्मं स्पर्शोऽधिभूतं विद्युदधिदैवतं स्यात् ॥ २ ॥ ज्योतिस्तृतीयं भूतं चक्षुरध्यात्मं रूपमधिभूतं सूर्योऽधिदैवतं स्यात् ॥ ३ ॥ आपश्चतुर्थं भूतं जिह्वाध्यात्मं रसोऽधिभूतं वरुणोऽधिदैवतं स्यात् ॥ ४ ॥ पृथिवी पञ्चमं भूतं घ्राणमध्यात्मं गन्धोऽधिभूतं वायुरधिदैवतं स्यात् ॥ ५ ॥ पाञ्चभौतिकमेतच्चतुष्टयमनुवर्णितम् ॥ ६ ॥

अत ऊर्ध्वमिन्द्रियमनुवर्णयिष्यामः ॥ १ ॥ पादावध्यात्मं गन्तव्यमधिभूतं विष्णुरधिदैवतं स्यात् ॥ २ ॥ हस्तावध्यात्मं कर्तव्यमधिभूतमिन्द्रोऽधिदैवतं स्यात् ॥ ३ ॥ पायुरध्यात्मं विसर्गोऽधिभूतं मित्रोऽधिदैवतं स्यात् ॥४॥ उपस्थोऽध्यात्ममानन्दोऽधिभूतं प्रजापतिरधिदैवतं स्यात् ॥ ५ ॥ वागध्यात्मं वक्तव्यमधिभूतमग्निरधिदैवतं स्यात् ॥ ६ ॥ मनोऽध्यात्मं मन्तव्यमधिभूतं चन्द्रमा अधिदैवतं स्यात् ॥ ७ ॥ अहंकारोऽध्यात्मममिमानोऽधिभूतं विरिञ्चोऽधिदैवतं स्यात् ॥ ८ ॥ बुद्धिरध्यात्मं व्यवसायोऽधिभूतं ब्रह्माधिदैवतं स्यात् ॥ ९ ॥

एवमव्यक्तो भगवान्सकृत्कृत्स्नान्कुरुते संहरते च । कस्मात् । क्रीडार्थम् ॥ १ ॥ यथादित्योंऽशुजालं क्षिपति संहरते च एवमव्यक्तो गुणान्सृजति संहरते च ॥ २ ॥ यथार्णवादूर्मिमालानिचयश्चोर्ध्वमुत्तिष्ठते संहरते च ॥ ३ ॥ यथा चान्तरिक्षादभ्रकोशमुत्तिष्ठति स्तनितगर्जितोन्मिश्रं तद्वत्तत्रैव प्रणाशात् । एवमव्यक्तो गुणान्सृजति संहरते च ॥ ४ ॥

यथा कूर्मोऽङ्गानि कामात्प्रसारयते पुनश्च प्रवेशयति एवमव्यक्तो लोकान्प्रकाशयते प्रवेशयते च ॥ १ ॥ एवं चेतनश्च भगवान्पञ्चविंशकः शुचिः । तेनाधिष्ठिता प्रकृतिश्चेतयति नित्यं सहधर्मा च ॥ २ ॥ भगवतोऽव्यक्तस्य क्रियावतोऽक्रियावतश्च प्रकृतिः । क्रियावानजरामरः क्षेत्रज्ञो नारायणः पुरुषः ॥ ३ ॥

---

half ). — T1 om. (hapl.?) line 326. — (L. 327) T3 आकाशो (for °शं). T1 हसते (for प्र°). T1.2 तदा (for यदा). — (L. 328) D10 T2 G4 यतो; Kumbh. ed. तदा (for ततो). — (L. 229) T1 सं- (for तं). D10 T2 G1.3 तथा (for तदा). — (L. 330) G1 स्व- (for स). — (L. 331) T1 तु स; T3 स च (by transp.). G2 तथा (for तदा). — (L. 333) T3 G3 संकल्पान्मनसाद( G4 °न आद )त्ते (for the prior half). — (L. 337) T1 G1.3 [ऽ]पि (for वि-). G1.3 विजानते (for विराजते). — T1 om. line 338. — (L. 338) G4 तथा (for तदा). — (L. 339) T3 गुणात्मना (for °र्थिना). — (L. 340) T1 मूर्तं (for मूर्तिं). Kumbh. ed. मूर्तं जलेचरमपि (for the prior half). — (L. 341) T3 G3 श्रीविष्णुर् (for प्रसिष्णुर्). T1 व्यक्तोव्यक्तम् (for व्यक्ता°). Kumbh. ed. असंशयं (for °यः). — (L. 342) T1 प्रभवो (for प्रलयो). — (L. 344. 1) D10 T3 G1.3 आकाशः (for °शं). G2 शब्दादिभूतं (for शब्दोऽधि°). — For line 344. 1, T1 subst.:

आकाशं प्रथमं भूतं श्रोत्रमध्यात्ममेव च ।
शब्दोऽधिभूतं तत्रैव दिशश्चाप्यधिदैवतम् ।

— (L. 344. 2) D10 द्वितीय- (for °यं). T1 om. स्यात्. — (L. 344. 4) T1.2 सोमो (for वरुणो). T1 दैवं (for स्यात्). — (L. 344. 5) T2 G1.3 प्राणम् (for घ्राणम्). T1 वायुरधिदैवं (for °दैवतं स्यात्). — (L. 344. 6) D10 G2 पांचभूतिकम् (for °भौतिकम्). D10 T2 G2.4 -वर्तितं (for -वर्णितम्). — (L. 345. 1) T1 इंद्रियविधिम् (for इन्द्रियम्). — (L. 345. 2) T2 पतिर् (for विष्णुर्). G4 अथ (for अधि-). T1 om. स्यात्. — (L. 345. 3) T2.3 G1.3 [अ]ध्यात्मकं (for °ध्यात्मं). — (L. 345. 4) G2 अध्यात्ममपि (for °त्मं). T G3.4 इंद्रो (for मित्रो). — G1.3 om. (hapl.) lines 345. 7 and 345. 8. — (L. 345. 7) T1 अवमंतव्यम् (for मन्तव्यम्). — (L. 346. 1) T1 सकृत्सर्गं; G2 असकृत्सर्गान् (for सकृत्कृत्स्नान्). G3 reads from कस्मात् up to क्षिपति संहरते च (in line 346. 2) twice. — (L. 346. 2) G2 गुणवान् (for गुणान्). — G1.3 om. (hapl.) line 346. 4. — (L. 346. 4) Kumbh. ed. अभ्रमाकाशम् (for अभ्रकोशम्). Kumbh. ed. प्राणशत् (for प्रणाशात्). Kumbh. ed. संहरति (for °ते). — For line 346. 4, T1 subst.: यथार्णवादूर्मिजालं निःसरत्यूर्ध्वं पतति तत्रैव प्रणश्यति एवमव्यक्तो लोकान्सृजति संहरते च । यथान्तरिक्षाद्विद्युत्प्रकाशमुपगच्छति स्तनति गर्जनोन्मिश्रं तत्रैव प्रणश्यति । एवमव्यक्तो गुणान्सृजति संहरते च ।

भीष्मः ।

इत्येतन्नारदायोक्तं कुमारेण च धीमता ।
एतच्छ्रुत्वा द्विजो राजन्सर्वयज्ञफलं लभेत् ।

Colophon.

## 3 A

$D_{10}$ T G Cv cont.: M ins. after 13. 11:

युधिष्ठिरः ।

आत्मन्यग्नीन्समाधाय य एते कुरुनन्दन ।
द्विजातयो व्रतोपेता जपयज्ञपरायणाः ।
यजन्त्यारम्भयज्ञैश्च मानसं यज्ञमास्थिताः ।
अग्निभ्यश्च परं नास्ति येषामेषा व्यवस्थितिः ।
तेषां गतिर्महाप्राज्ञ कीदृशी किंपराश्च ते ।
एतदिच्छामि तत्त्वेन त्वत्तः श्रोतुं पितामह ।

भीष्मः ।

अत्र ते वर्तयिष्यामि इतिहासं पुरातनम् ।
वैकुण्ठस्य च संवादं सुपर्णस्य च भारत ।
अमृतस्य समुत्पत्तौ देवानामसुरैः सह ।
षष्टिं वर्षसहस्राणि देवासुरमवर्तत ।
तत्र देवास्तु दैतेयैर्वध्यन्ते भृशदारुणैः ।
त्रातारं नाधिगच्छन्ति वध्यमाना महासुरैः ।
आर्तास्ते देवदेवेशं प्रपन्नाः शरणैषिणः ।
पितामहं महाप्राज्ञं वध्यमानाः सुरेतरैः ।
ता दृष्ट्वा देवता ब्रह्मा संभ्रान्तेन्द्रियमानसः ।
वैकुण्ठं शरणं देवं प्रतिपेदे च तैः सह ।
ततः स देवैः सहितः पद्मयोनिर्नरेश्वर ।
तुष्टाव प्राञ्जलिर्भूत्वा नारायणमनामयम् ।
त्वद्रूपचिन्तनान्नाम्नां स्मरणादर्चनादपि ।
तपोयोगादिभिश्चैव श्रेयो यान्ति मनीषिणः ।
भक्तवत्सल पद्माक्ष परमेश्वर पापहन् ।
परमात्माविकाराद्य नारायण नमोऽस्तु ते ।
नमस्ते सर्वलोकादे सर्वात्मामितविक्रम ।
सर्वभूतभविष्येश सर्वभूतमहेश्वर ।
देवानामपि देवस्त्वं सर्वविद्यापरायणः ।
जगद्बीजसमाहार जगतः परमो ह्यसि ।
त्रायस्व देवता वीर दानवार्थैः सुपीडिताः ।
लोकांश्च लोकपालांश्च ऋषींश्च जयतां वर ।
वेदाः साङ्गोपनिषदः सरहस्याः ससंग्रहाः ।
सोंकाराः सवषट्काराः प्राहुस्त्वां यज्ञमुत्तमम् ।
पवित्राणां पवित्रं च मङ्गलानां च मङ्गलम् ।
तपस्विनां तपश्चैव दैवतं देवतास्वपि ।
एवमादिपुरस्कारैर्ऋक्सामयजुषां गणैः ।
वैकुण्ठं तुष्टुवुर्देवाः सर्वे ब्रह्मर्षिभिः सह ।
ततोऽन्तरिक्षे वागासीन्मेघगम्भीरनिस्वना ।
जेष्यध्वं दानवान्यूयं मयैव सह संगरे ।

---

—(L. 347. 1) Kumbh. ed. अव्यक्तो भगवान् (for अव्यक्तो). Kumbh. ed. प्रकाशयति (for °ते). —(L. 347. 2) $T_1$ पद्मलोचनो (for चेतनश्च). $T_1$ om. पञ्चविंशकः शुचिः. $T_3$ पंचविंशः; $G_2$ °विंशाति (for °विंशकः). —(L. 347. 3) $T_1$ भगवान् (for °वतो). —(L. 348) $D_{10}$ नारदप्रोक्तं (for °दायोक्तं). $T_2$ सनत्कुमारेण धीमता (hypermetric) (for the post. half). —(L. 349) $T_2$ $G_3$ वचो (for द्विजो). — Colophon. *Sub-parvan*: $D_{10}$ दानधर्म. — *Adhy. name*: $T_2$ $G_{1,3}$ सनत्कुमारनारदसंवादे पंचभूतप्रकृतिविभागः ($T_2$ °कारः). — *Adhy. no.*: $T_1$ 39; $T_{2,3}$ G 40.

### 3 A

—(L. 1) $G_2$ $M_4$ [अ]ग्निं; Kumbh. ed. [अ]ग्नौ (for [अ]ग्नीन्). $G_2$ समादाय (for °धाय). $T_1$ ये यांति; $T_2$ यजंते (for य एते). —(L. 4) $T_2$ [अ]भ्यवस्थितिः (for व्यव°). M [इ]त्येषा ये($M_4$ ते)गां व्यवस्थितिः (for the post. half). —(L. 5) $T_1$ कीदृशी किंविधा च वै (for the post. half). —(L. 6) $G_2$ महामते (for पितामह). —(L. 10) $T_1$ षष्टि-; $G_4$ षष्टिर् (for षष्टिं). —(L. 11) $M_{1-3}$ स (for तु). —(L. 12) $M_{1-3}$ त्रातारं नाध्यगच्छंत (for the prior half). $T_1$ अर्द्यमाना (for वध्य°). — $T_1$ om. line 14. —(L. 14) $G_2$ M महात्मानं (for °प्राज्ञं). —(L. 15) $T_{2,3}$ G $M_{2,3}$ -तां (for ता). —(L. 16) $T_1$ $G_2$ M प्रपेदे दैवतैः सह (for the post. half). —(L. 18) M अरिंदमं (for अनामयम्). — Before line 19, Madras ed. ed. ins. ब्रह्मा. —(L. 19) $G_3$ त्वद्रूपं (for °प-). —(L. 23) $T_1$ सर्वत्र (for सर्वात्म). —(L. 24) $T_1$ -मनोहर (for -महेश्वर). —(L. 25) $M_{3,4}$ वेदानाम् (for देवा°). $T_1$ अधि- (for अपि). $M_{1-3}$ वेधस्; $M_4$ वेदस् (for देवस्). $T_1$ $G_{1,2}$ M -परायण ($M_4$ °णं) (for °यणः). —(L. 26) $T_1$ M प्रभवो (for परमो). —(L. 27) M दानवासुरपीडिताः (for the post. half). —(L. 30) $T_{1,2}$ ओं($T_2$ सा)काराः (for सोंकाराः). —(L. 32) $T_1$ M [अ]सि (for [ए]व). M दैवतानां च दैवतं (for the post. half). — *Before* line 33, Madras ed. ins. भीष्मः. —(L. 34) $D_{10}$ T $G_{2,3}$ सर्वर् (for सर्वे). Madras ed. समेत्य ब्रह्मणा सह (for the post. half). —(L. 36) $T_1$ $G_2$ M देवा (for यूयं). $T_1$ संगताः; M संयुगे (for संगरे). —(L. 38) $T_1$ शंख- (for शार्ङ्ग-). —(L. 39) $T_2$ सुपर्णमास्थाय तदा (for the prior half). —(L. 42) $M_{1-2}$ व्यनशंत

ततो देवगणानां च दानवानां च युध्यताम् ।
प्रादुरासीन्महातेजाः शार्ङ्गचक्रगदाधरः ।
सुपर्णपृष्ठमास्थाय तेजसा प्रदहन्निव ।
व्यधमद्दानवान्सर्वान्बाहुद्रविणतेजसा ।
तं समासाद्य समरे दैत्यदानवपुंगवाः ।
व्यनश्यन्त महाराज पतंगा इव पावकम् ।
स विजित्यासुरान्सर्वान्दानवांश्च महामतिः ।
पश्यतामेव देवानां तत्रैवान्तरधीयत ।
तं दृष्ट्वान्तर्हितं देवं विष्णुं देवामितद्युतिम् ।
विस्मयोत्फुल्लनयना ब्रह्माणमिदमब्रुवन् ।
भगवन्सर्वलोकेश सर्वलोकपितामह ।
इदमत्यद्भुतं वृत्तं तन्नः शंसितुमर्हसि ।
देवासुरेऽस्मिन्संग्रामे त्राता येन वयं प्रभो ।
एतद्विज्ञातुमिच्छामः कुतोऽसौ कश्च तत्त्वतः ।
कोऽयमस्मान्परित्राय तूष्णीमेव यथागतम् ।
प्रतिप्रयातो दिव्यात्मा तं नः शंसितुमर्हसि ।
एवमुक्तः सुरैः सर्वैर्वचनं वचनार्थवित् ।
उवाच पद्मनाभस्य पूर्वरूपं प्रति प्रभो ।

ब्रह्मा ।

न ह्येनं वेद तत्त्वेन भुवनं भुवनेश्वरम् ।
संख्यातुं नैव चात्मानं निर्गुणं गुणिनां वरम् ।
अत्र वो वर्तयिष्यामि इतिहासं पुरातनम् ।
सुपर्णस्य च संवादमृषीणां चापि देवताः ।
पुरा ब्रह्मर्षयश्चैव सिद्धाश्च भुवनेश्वरम् ।
आश्रित्य हिमवत्पृष्ठे चक्रिरे विविधाः कथाः ।
तेषां कथयतां तत्र कथान्ते पततां वरः ।
प्रादुरासीन्महातेजा वाहश्चक्रगदाभृतः ।
स तानृषीन्समासाद्य विनयावनताननः ।
अवतीर्य महावीर्यस्तानृषीनभिजग्मिवान् ।
अभ्यर्चितः स ऋषिभिः स्वागतेन महाबलः ।
उपाविशत तेजस्वी भूमौ वेगवतां वरः ।
तमासीनं महात्मानं वैनतेयं महाद्युतिम् ।
ऋषयः परिपप्रच्छुर्महात्मानस्तपस्विनः ।
कौतूहलं वैनतेय परं नो हृदि वर्तते ।
तस्य नान्योऽस्ति वक्तेह त्वामृते पन्नगाशन ।
तदाख्यातुमिहेच्छामो भवता प्रश्नमुत्तमम् ।
एवमुक्तः प्रत्युवाच प्राञ्जलिर्विनतासुतः ।
धन्योऽस्म्यनुगृहीतोऽस्मि यन्मां ब्रह्मर्षिसत्तमाः ।
प्रष्टव्यं प्रष्टुमिच्छन्ति प्रीतिमन्तोऽनसूयकाः ।
किं मया ब्रूत वक्तव्यं कार्यं च वदतां वराः ।
यूयं हि मां यथायुक्तं सर्वे वै प्रष्टुमर्हथ ।
नमस्कृत्वा ह्यनन्ताय ततस्ते ऋषिसत्तमाः ।
प्रष्टुं प्रचक्रमुस्तत्र वैनतेयं महाबलम् ।
देवदेवं महात्मानं नारायणमनामयम् ।
भवानुपास्ते वरदं कुतोऽसौ कश्च तत्त्वतः ।
प्रकृतिर्विकृतिर्वास्य कीदृशी क्व नु संस्थितिः ।

(for °श्यन्त). —(L. 43) $D_{10}$ $T_{2.3}$ G $M_2$ स विजित्वा; $T_1$ स निर्जित्य; $M_1$ सुविजित्य (for स वि°). M महाद्युतिः (for °मतिः). — $T_1$ om. line 45. —(L. 45) $G_{1.3}$ विप्रं (for देवं). M दृष्ट्वा त्वंतर्हितं देवास् (for the prior half). $G_4$ [अं]कित- (for [अ]मित-). M तं देवममितद्युतिं (for the post. half). — Before line 47, $T_3$ ins. देवाः. —(L. 48) Madras ed. त्वं (for तन्). $T_3$ $G_3$ $M_4$ अर्हति (for °सि). —(L. 49) Kumbh. ed. दैवासुरे (for दे°). $T_1$ M विभो (for प्रभो). —(L. 50) M एवं (for एतद्). $T_3$ $G_{1.3}$ इच्छामि (for °मः). —(L. 51) $T_3$ परिज्ञाय (for °त्राय). — Before line 53, Madras ed. ins. भीष्मः. —(L. 53) $G_4$ वचनार्थवद् (for °वित्). — $T_1$ M om. the ref. —(L. 55) $T_1$ भुवने (for °नं). —(L. 56) $G_{3.4}$ च (for न). $T_1$ [आ]ख्यातुं; M [आ]ज्ञातुं (for [आ]त्मानं). —(L. 57) $T_{2.3}$ $G_{1.3}$ ते (for वो). $G_2$ वर्तयिष्येहं; M कीर्तयिष्यामि (for वर्त°). —(L. 58) $T_1$ $G_2$ M [ए]व (for [अ]पि). —(L. 59) $T_1$ $G_2$ सुरा (for पुरा). $T_1$ [अ]पि (for [ए]व). $T_1$ भुवनेश्वराः (for °रम्). —(L. 60) $T_1$ समेत्य (for आश्रित्य). $G_1$ -पार्श्वे (for -पृष्ठे). M विविधाश्चक्रिरे कथाः (for the post. half). —(L. 62) $T_1$ शार्ङ्गचक्र- (for वाहश्चक्र-). M सुपर्णः पक्षिणां वरः (for the post. half). — $T_1$ om. line 65. —(L. 65) $D_{10}$ $T_{2.3}$ G $M_4$ सहर्षिभिः (for स ऋषिभिः). $T_3$ [आ]सनेन च (for महाबलः). — $G_2$ om. line 66. —(L. 68) $T_1$ महात्मानं तपस्विनं; $M_{1-3}$ °नं मनोजवं (for the post. half). — Before line 69, Madras ed. ins. ऋषयः. —(L. 69) $D_{10}$ वरं (for परं). —(L. 70) $T_1$ परमस् (for वक्तेह). —(L. 71) M [आ]ख्यातम् (for °तुम्). — Before line 72, Madras ed. ins. ब्रह्मा. Before line 73, Madras ed. ins. गरुडः. — $M_1$ om. (hapl.) lines 74–77. —(L. 74) $M_{2-4}$ प्रष्टव्याः (for °व्यं). $T_1$ व्रतवंतोनसूयवः; $M_{2.3}$ प्रवदंतोनसूयवः (for the post. half). —(L. 76) $M_{2-4}$ संदेष्टुम्, Madras ed. वै देष्टुम् (for वै प्रष्टुम्). — Before line 77, $T_1$ ins. भीष्मः; Madras ed. ins. ब्रह्मा. —(L. 77) $D_{10}$ $T_{2.3}$ G हृदि सत्तमाः; $M_{2-4}$ ह्यृषिस° (for ऋषिस°). — Before line 79, Madras ed. ins. ऋषयः. —(L. 79) M अरिंदमं (for अनामयम्). — Before line 80,

एतद्भवन्तं पृच्छामो देवोऽयं क्व कृतालयः ।
एष भक्तप्रियो देवः प्रियभक्तस्तथैव च ।
त्वं प्रियश्चास्य भक्तश्च नान्यः काश्यप विद्यते ।
सुण्वन्निव मनश्चक्षूंष्यविभाव्यतनुर्विभुः ।
अनादिमध्यनिधनो न विद्मैनं कुतो ह्यसौ ।
वेदेष्वपि च विश्वात्मा गीयते न च विद्महे ।
तत्त्वतस्तत्त्वभूतात्मा विभुर्नित्यः सनातनः ।
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ।
गुणाश्चैषां यथासंख्यं भावाभावौ तथैव च ।
तमः सत्त्वं रजश्चैव भावाश्चैव तदात्मकाः ।
मनो बुद्धिश्च तेजश्च बुद्धिगम्यानि तत्त्वतः ।
जायन्ते तात कस्माद्धि तिष्ठते तेष्वसौ विभुः ।
संचिन्त्य बहुधा बुद्ध्या नाध्यवस्यामहे परम् ।
तस्य देवस्य तत्त्वेन तन्नः शंस यथातथम् ।
एतमेव परं प्रश्नं कौतूहलसमन्विताः ।
एवं भवन्तं पृच्छामस्तन्नः शंसितुमर्हसि ।

सुपर्णः ।

स्थूलतो यस्तु भगवांस्तेनैव स्वेन हेतुना ।
त्रैलोक्यस्य तु रक्षार्थं दृश्यते रूपमास्थितः ।
मया तु महदाश्चर्यं पुरा दृष्टं सनातने ।
देवे श्रीवृक्षनिलये तच्छृणुध्वमशेषतः ।
न स शक्यो मया वेत्तुं न भवद्भिः कथंचन ।
यथा मां प्राह भगवांस्तथा तच्छ्रूयतां मम ।
मयामृतं देवतानां मिषतामृषिसत्तमाः ।
हृतं विपाट्य तद्यन्त्रं विद्राव्यामृतरक्षिणः ।
देवता विमुखीकृत्य सेन्द्राः समरुतो मृधे ।
उन्मथ्याशु गिरींश्चैव विक्षोभ्य च महोदधिम् ।
तं दृष्ट्वा मम विक्रान्तं वागुवाचाशरीरिणी ।
प्रीतोऽस्मि ते वैनतेय कर्मणानेन सुव्रत ।
अवृथा तेऽस्तु मद्वाक्यं ब्रूहि किं करवाणि ते ।
तामेवंवादिनीं वाचमहं प्रत्युक्तवांस्तदा ।
ज्ञातुमिच्छामि कस्त्वं हि ततो मे दास्यसे वरम् ।
प्रकृतिर्विकृतिर्वा त्वं देवो वा दानवोऽपि वा ।
ततो जलदगम्भीरं प्रहस्य वदतां वरः ।
उवाच वरदः प्रीतः काले त्वं माभिवेत्स्यसि ।
वाहनं भव मे साधो वरं दद्मि तवोत्तमम् ।
न ते वीर्येण सदृशः कश्चिल्लोके भविष्यति ।
पतंग पततां श्रेष्ठ न देवो नापि दानवः ।
मत्सखित्वमनुप्राप्तो दुर्धर्षश्च भविष्यसि ।
तमब्रवं देवदेवं मामेवंवादिनं परम् ।
प्रयतः प्राञ्जलिर्भूत्वा प्रणम्य शिरसा विभुम् ।
एवमेतन्महाबाहो सर्वमेतद्भविष्यति ।

---

$G_2$ ins. ऋषयः. —(L. 80) $M_{1-3}$ सततं (for वरदं). —(L. 81) $T_1$ कीदृशी त्वनुसंस्थिता (for the post. half). —(L. 82) $M_4$ पृच्छाम (for °मो). M [ऽ]सौ (for ऽयं). —(L. 85) $T_1$ प्रभुः (for विभुः). —(L. 86) $T_1$ $G_2$ M -निधनं (for °नो). $G_2$ विद्धि (for विद्म). —(L. 88) M सर्व- (for तत्त्व-). $T_1$ भुवि (for विभुर्). —(L. 90) $M_{1, 2, 4}$ [ए]व (for [ए]षां). —(L. 91) $G_{1, 3, 4}$ गुणः (for तमः). —(L. 92) M चेतश् (for तेजश्). $G_2$ -गम्यादि (for °नि). —(L. 93) $T_1$ M तस्माद् (for क°). $M_{1, 2}$ वा (for [अ]सौ). $T_1$ भुवि (for विभुः). —(L. 94) $T_2$ संहित्य (for संचिन्त्य). $G_2$ भक्त्या (for बुद्ध्या). $T_1$ नाद्य पश्यामहे परं; M नाधिगच्छामहे परं (for the post. half). — $T_1$ om. line 96. —(L. 96) M तमेव परमं प्रश्नं (for the prior half). —(L. 98) $G_4$ [ऽ]थास्तु (for यस्तु). $T_1$ M तेनैव (for [ए]व स्वेन). —(L. 99) $T_2$ आस्थितं (for °तः). —(L. 101) $M_{1-3}$ देव- (for देवे). Kumbh. ed. श्रीवत्स- (for श्रीवृक्ष-). —(L. 102) $T_1$ च (for स). $G_{1, 3}$ यथा (for मया). $G_2$ छेत्तुं; $M_3$ वक्तुं (for वेत्तुं). $M_{1-3}$ तथापरैः (for कथंचन). —(L. 104) $T_2$ अमृतं देवतानां च; $G_2$ मयामृतं च देवानां (for the prior half). —(L. 105) M तं (for तद्). Madras ed. मंत्रं (for यन्त्रं). —(L. 106) $M_4$ दैवतान् (for देवता). $M_4$ सेंद्रान् (for सेन्द्राः). — $T_1$ om. line 107. —(L. 107) $M_{1-3, 4}$ (before corr. as above) गिरिं (for गिरींश्). —(L. 108) $T_1$ तद् (for तं). — Before line 109, Madras ed. ins. अशरीरिणी वाक्. —(L. 109) $D_{10}$ $T_3$ $G_{2-4}$ तेन (for [अ]नेन). — For line 110, $T_1$ subst.:

ददामि ते वरं वीर मत्तो यदभिकाङ्क्षसि ।

— Before line 111, Madras ed. ins. सुपर्णः. —(L. 111) $M_{1-3}$ अभ्युक्तवांस् (for प्रत्युक्त°). —(L. 112) $T_2$ दास्यते (for °से). —(L. 114) $D_{10}$ $T_2$ $G_{1, 3, 4}$ गदतां (for व°). —(L. 115) M कालात् (for काले). $T_1$ मा हि वेत्स्यसे; $T_{2, 3}$ G M मां हि वेत्स्यसि. —(L. 116) $G_{1, 3}$ साधु (for साधो). — $T_1$ $M_{1-3}$ om. line 118. —(L. 119) $G_{3, 4}$ दुर्धर्ष (for °र्षश्). $G_1$ स (for च). —(L. 120) $D_{10}$ $T_1$ $G_2$ अब्रुवं (for अब्रवं). M तमहं देवदेवेशम् (for the prior half). $T_1$ om. from the post. half up to the prior half of line 121. M एवं वादिनमब्र($M_2$ °ब्रु)वं (for the post. half). —(L. 121) $G_2$ भुवि (for विभुम्). — $M_{1-3}$ om. line 122. —(L. 122) $M_4$ एतम् (for एतन्). $G_2$ $M_4$ एव (for एतन्). $T_1$ धर्म एव भविष्यति (for the

वाहनं ते भविष्यामि यथा वदति मां भवान् ।
ममापि च महाबुद्धे निश्चयं श्रूयतामिति ।
ध्वजस्तेऽहं भविष्यामि रथस्थस्य न संशयः ।
तथास्त्विति स मामुक्त्वा भूयः प्राह महामनाः ।
न ते गतिविघातोऽद्य भविष्यत्यमृतं विना ।
एवं कृत्वा तु समयं देवदेवः सनातनः ।
मामुक्त्वा साधयस्वेति यथाभिप्रायतो गतः ।
ततोऽहं कृतसंवादो तेन केनापि सत्तमाः ।
कौतूहलसमाविष्टः पितरं काश्यपं गतः ।
सोऽहं पितरमासाद्य प्रणिपत्याभिवाद्य च ।
सर्वमेतद्यथातथ्यमुक्तवान्पितुरन्तिके ।
श्रुत्वा तु भगवान्मह्यं ध्यानमेवान्वपद्यत ।
स मुहूर्तमिव ध्यात्वा मामाह वदतां वरः ।
धन्योऽस्यनुगृहीतश्च यत्त्वं तेन महात्मना ।
संवादं कृतवांस्तात गुह्येन परमात्मना ।
स्थूलदृश्यः स भगवांस्तेन तेनैव हेतुना ।
दृश्यतेऽव्यक्तरूपस्थः प्रधानं प्रभवाप्ययः ।
मया हि स महातेजा नान्ययोगसमाधिना ।
तपसोग्रेण तेजस्वी तोषितस्तपसां निधिः ।
ततो मे दर्शयामास तोषयन्निव पुत्रक ।
श्वेतपीतारुणनिभः कद्रूकपिलपिङ्गलः ।
रक्तनीलासितनिभः सहस्रोदरपाणिमान् ।
द्विसाहस्रमहावक्त्र एकाक्षः शतलोचनः ।
अनिष्पन्दा निराहाराः समानाः सूर्यतेजसा ।
तमुपासन्ति परमं गुह्यमक्षरमव्ययम् ।
समासाद्य तु तं विश्वमहं मूर्ध्ना प्रणम्य च ।
ऋग्यजुःसामभिः स्तुत्वा शरण्यं शरणं गतः ।
महामेघौघघोरेण स्वरेण जयतां वरः ।
आभाष्य पुत्र पुत्रेति इदमाह धृतं वचः ।
त्वयाभ्युदयकामेन तपश्चीर्णं महामुने ।
अमुक्तस्त्वं न मां सङ्गैरविमुक्तोऽद्य पश्यसि ।
यदा सङ्गैर्विमुक्तश्च गतमोहो गतस्पृहः ।
भविष्यसि तदा ब्रह्मन्मामनुध्यास्यसे द्विज ।
एकान्तिकीं मतिं कृत्वा मद्भक्तो मत्परायणः ।
ज्ञास्यसे मां ततो ब्रह्मन्वीतमोहश्च तत्त्वतः ।
तेन त्वं कृतसंवादः स्वतः सर्वहितैषिणा ।
विश्वरूपेण देवेन पुरुषेण महात्मना ।
तमेवाराधय क्षिप्रं तमाराध्य न सीदसि ।
सोऽहमेवं भगवता पित्रा ब्रह्मर्षिसत्तमाः ।
अनुगीतो यथान्यायं स्वमेव भवनं गतः ।

Colophon.

सुपर्णः ।

सोऽहमामन्त्र्य पितरं तद्भावगतमानसः ।
स्वमेवालयमासाद्य तमेवार्थमचिन्तयम् ।
तद्भावगतभावात्मा तद्भूतगतमानसः ।
गोविन्दं चिन्तयन्नासे शाश्वतं परमव्ययम् ।
धृतं बभूव हृदयं नारायणदिदृक्षया ।
सोऽहं वेगं समास्थाय मनोमारुतवेगवान् ।
रम्यां विशालां बदरीं गतो नारायणाश्रमम् ।
ततस्तत्र हरिं दृष्ट्वा जगतः प्रभवं विभुम् ।

post. half). — (L. 123) $T_1$ om. (hapl.) from the post. half up to the prior half of line 129. — (L. 124) Kumbh. ed. -चापि (by transp.). $D_{10}$ $G_{2,4}$ M निश्चितं ($M_{1-3}$ °तिः) (for निश्चयं). — (L. 126) $G_2$ तदा (for तथा). — (L. 127) $M_{1-3}$ अजरामरो बली लोके (hypermetric) (for the prior half). — (L. 128) $T_3$ $G_{3,4}$ उक्त्वा (for कृत्वा). $M_{1-3}$ स (for तु). — (L. 130) M तथा (for ततो). Kumbh. ed. येन (for तेन). — (L. 131) Kumbh. ed. कश्यपं (for का°). — (L. 133) M यथावृत्त($M_4$ °तत्त्व)म् (for °तथ्यम्). — (L. 136) $D_{10}$ T G $M_{2-4}$ [ऽ]सि (for ऽसि). $T_1$ [ऽ]सि (for च). $T_2$ M यस्त्वं; $G_2$ यतस् (for यत्त्वं). — (L. 139) $D_{10}$ $T_1$ $G_4$ प्रभवोऽव्ययः; $T_2$ पुरुषोऽव्ययः; $T_3$ $G_{1-3}$ प्रभवोप्ययः; $M_{1,4}$ प्रभवाव्ययः (for °प्ययः). — (L. 140) $T_1$ $G_2$ [अ]पि (for हि). — (L. 142) M मोदयन् (for तोष°). — (L. 143) M कृष्णः ($M_4$ कद्रुः) कपिल एव च (for the post. half). — (L. 144) $T_1$ $M_{1,4}$ -पाणिपात्; $M_3$ °वान् (for °मान्). — (L. 145) T $G_{1,3}$ द्विसहस्र- (for द्विसा°). — (L. 146) $T_1$ M तस्य (for सूर्य-). — (L. 147) M अक्षयम् (for °रम्). — (L. 149) $T_1$ तमेव (for शरण्यं). — (L. 151) $T_1$ माम् (submetric) (for इदम्). — (L. 152) $D_{10}$ महावने; $M_4$ महद्वने (for महामुने). — (L. 153) $G_3$ समासंगैर् (for न मां सङ्गैर्). — (L. 155) $G_2$ तथा; Kumbh. ed. सदा (for तदा). $D_{10}$ $G_1$ $M_4$ ब्रह्म (for ब्रह्मन्). $T_1$ -ध्यातवान्; $M_4$ -ध्यास्यसि (for °से). $M_{1-3}$ परं (for द्विज). $G_2$ मामनुध्यास्य तेजसा (for the post. half). — (L. 156) $T_1$ एकांतिनीं (for °तिकीं). — (L. 158) $T_1$ $M_4$ ततः; $M_{1-3}$ प्रीत्या (for स्वतः). — (L. 161) $D_{10}$ सोहं भगवता चैवं (for the prior half). — (L. 162) $T_1$ M अनुनीतो (for °गीतो). — Colophon. *Sub-parvan :* $D_{10}$ M दानधर्म. — *Adhy. name :* $G_3$ सुपर्णवचनं; $M_{1-3}$ सुपर्णवैकुंठसंवादः; $M_4$ सुपर्णवैकुंठ-संवादे वाहनपरिग्रहः. — *Adhy. no.:* $T_1$ M 40; $T_{2,3}$ G 41. — (L. 163) $G_{1,3}$ -मानसं (for °सः). — (L. 165) $M_{1,3}$ तद्भाव- (for तद्भूत-). — (L. 166) $T_1$

गोविन्दं पुण्डरीकाक्षं प्रणतः शिरसा हरिम् ।
ऋग्यजुःसामभिश्चैनं तुष्टाव परया मुदा ।
अथापश्यं सुविपुलमश्वत्थं देवसंश्रयम् ।
चतुर्द्विगुणपीनांसः शङ्खचक्रगदाधरः ।
प्रादुर्बभूव पुरुषः पीतवासाः सनातनः ।
मध्याह्नार्कप्रतीकाशस्तेजसा भासयन्दिशः ।
संस्तुतः संविदं कृत्वा व्रजेति श्रेयसे रतः ।
प्रागुदीचीं दिशं देवः प्रतस्थे पुरुषोत्तमः ।
दिशश्च विदिशश्चैव भासयन्स्वेन तेजसा ।
तमहं पुरुषं दिव्यं व्रजन्तममितौजसम् ।
अनुवव्राज वेगेन शनैर्गच्छन्तमव्ययम् ।
योजनानां सहस्राणि पष्टिमष्टौ तथा शतम् ।
तथा शतसहस्रं च शतं द्विगुणमेव च ।
स गत्वा दीर्घमध्वानमपश्यमहमद्भुतम् ।
महान्तं पावकं दीप्तमर्चिष्मन्तमनिन्धनम् ।
शतयोजनविस्तीर्णं तस्माद्विगुणमायतम् ।
विवेश स महायोगी पावकं पावकद्युतिः ।
तत्र शंभुस्तपस्तेपे महादेवः सहोमया ।
स तेन संविदं कृत्वा पावकं समतिक्रमत् ।
श्रमाभिभूतेन मया कथंचिदनुगम्यते ।
गत्वा स दीर्घमध्वानं भास्करेणावभासितम् ।
अभास्करममर्यादं विवेश सुमहत्तमः ।
अथ दृष्टिः प्रतिहता मम तत्र बभूव ह ।
यथास्वभावं भूतात्मा विवेश स महाद्युतिः ।
ततोऽहमभवं मूढो जडान्धबधिरोपमः ।
दिशश्च विदिशश्चैव न विजज्ञे तमोवृतः ।
अविजानन्नहं किंचित्तस्मिंस्तमसि संवृते ।
सुसंभ्रान्तेन मनसा व्यथां परमिकां गतः ।
सोऽहं प्रपन्नः शरणं देवदेवं सनातनम् ।
प्राञ्जलिर्मनसा भूत्वा वाक्यमेतत्तदोक्तवान् ।
भगवन्भूतभव्येश भवद्भूतकृदव्यय ।
शरणं संप्रपन्नं मां त्रातुमर्हस्यरिंदम ।
अहं तु तत्त्वजिज्ञासुः कोऽसि कस्यासि कुत्र वा ।
संप्राप्तः पदवीं देव स मां संत्रातुमर्हसि ।
आविर्भूतः पुराणात्मा मामेहीति सनातनः ।
ततोऽपरान्ततो देवो विश्वस्य गतिरात्मवान् ।
मोहयामास मां तत्र दुर्विभाव्यवपुर्विभुः ।
स्वभावमात्मनस्तत्र दर्शयन्स्वयमात्मना ।
श्रमं मे जनयामास भयं चाभयदः प्रभुः ।
खिन्न इत्येव मां मत्वा भगवानच्युतोऽच्युतः ।
शब्देनाश्वासयामास जगाहे च तमो महत् ।
अहं तु खेदानुगतः श्रमाच्चलपदश्चरन् ।
मनसा देवदेवेशं ध्यातुं समुपचक्रमे ।
तथा गतं तु मां ज्ञात्वा भगवानमितद्युतिः ।
तमः प्रणाशयामास ममानुग्रहकाङ्क्षया ।
ततः प्रनष्टे तमसि तमहं दीप्ततेजसम् ।
अपश्यं तेजसा व्याप्तं मध्याह्न इव भास्करम् ।
स्वयंप्रभांश्च पुरुषान्स्त्रियश्च परमाद्भुताः ।

चिंतयन्नासं ; $T_3$ °यामास ( for °यन्नासे ). $D_{10}$ पदम् ( for परम् ). — ( L. 167 ) $T_1$ ध्रुवं ( for धृतं ). — ( L. 172 ) $T_1$ [ए]वं संस्तुत्वा ( for [ए]नं तुष्टाव ). — ( L. 174 ) Cv -पीनांगः ( for -पीनांसः ). — ( L. 175 ) $T_1$ पुरतः ( for पुरुषः ). — ( L. 176 ) $M_3$ भावयन् ( for भास° ). — ( L. 177 ) $M_{1.3}$ तेनाहं ; $M_{2.4}$ मया स ( for संस्तुतः ). M Cv जगतः ( for व्रजेति ). — ( L. 180 ) $M_{1.3}$ देवं ( for दिव्यं ). — ( L. 181 ) $T_1$ -अनुव्रजेहं ( for °वव्राज ). — ( L. 182 ) $M_2$ पष्टिर् ( for पष्टिम् ). $G_2$ पष्टिमष्ट शतानि च ; $M_{1.3}$ पष्टिरष्टोत्तरं तथा ( for the post. half ). — ( L. 183 ) $T_2$ $G_{1.3}$ M शत- ( for शतं ). — ( L. 184 ) $D_{10}$ $M_{1.3.4}$ महद् ( for अहम् ). — ( L. 186 ) $T_1$ ततो ( for तस्माद् ). — ( L. 188 ) $G_1$ तपसो वै ( for तपस्तेपे ). $M_{1-3}$ स्वयमेव ( for महादेवः ). — $T_1$ om. line 194. — ( L. 194 ) $M_{1.4}$ यदा ( for यथा- ). $M_{2.3}$ यदा स्वभावभूतात्मा ( for the prior half ). — ( L. 195 ) $G_1$ जडांधबधिरोपमं ( for the post. half ). — ( L. 197 ) $T_1$ न विजानन् ( for [illegible] ) $G_2$ [illegible] ( for °वृते ). — ( L. 198 ) $T_2$ om. from सुसंभ्रान्तेन up to शरणं ( in line 202 ). Kumbh. ed. स ( for सु- ). — ( L. 200 ) $T_1$ G गत्वा ( for भूत्वा ). $T_1$ एवं तथा ( for एतत्तदा ). — ( L. 203 ) $G_2$ तत्त्वं तु ( for तु तत्त्व- ). — ( L. 204 ) $M_4$ स ( for सं- ). $M_4$ मा ( for मां ). $T_1$ $G_2$ त्वं त्रातुम् ; M त्वं ज्ञातुम् ( for संत्रा° ). — $M_{1-3}$ om. line 205. — ( L. 206 ) $T_3$ $G_2$ तदा ( for ततो ). $M_1$ ( *inf. lin.* ).$_{3.4}$ अतः प( $M_4$ तदा प )रं ततो देवः ( for the prior half ). $T_1$ M कृत्वात्मगतिमा( $T_1$ °रा )त्मवान् ( for the post. half ). — ( L. 207 ) $G_1$ दुर्विभास- ( for °व्य- ). $M_{1-3}$ -तनुर् ( for -वपुर् ). — ( L. 208 ) $M_{1-3}$ स्वीयम् ( for स्वयम् ). — ( L. 210 ) $G_4$ एवेति ( by transp. ). $T_1$ गत्वा ; $G_2$ उक्त्वा ( for मत्वा ). — ( L. 211 ) $G_2$ ततो ( for तमो ). — ( L. 212 ) Kumbh. ed. तमेवानु- ( for तु खेदानु- ). Kumbh. ed. श्रमालस- ( for °च्चल- ). $T_1$ M -पदश्चलन् ; $G_2$ -गतिर्व्रजन् ( for -पदश्चरन् ). — ( L. 215 ) $T_1$ महानुग्रह- ( for ममा° ). — ( L. 216 ) $D_{10}$ -चेतसं ( for -तेजसम् ). — ( L. 217 ) $T_2$ प्राप्तं ; M दीप्तं ( for व्याप्तं ). — ( L. 218 ) $T_1$ स्वयंप्रकाशं पुरुषं ( for

अपश्यमहमव्यग्रं तस्मिन्देशे सहस्रशः ।
न तत्र द्योतते सूर्यो नक्षत्राणि तथैव च ।
न तत्र चन्द्रमा भाति न वायुर्वाति पांसुलः ।
तत्र तूर्याण्यनेकानि गीतानि मधुराणि च ।
अदृश्यानि मनोज्ञानि श्रूयन्ते सर्वतोदिशम् ।
स्रवन्ति वैडूर्यलताः पद्मोत्पलझषाकुलाः ।
मुक्तासिकतवप्राश्च सरितो निर्मलोदकाः ।
अगतिस्तत्र देवानामसुराणां तथैव च ।
गन्धर्वनागयक्षाणां राक्षसानां तथैव च ।
स्वयंप्रभास्तत्र नरा दृश्यन्तेऽद्भुतदर्शनाः ।
येषां न देवतास्तुल्याः प्रभाभिर्भावितात्मनाम् ।
स च तानप्यतिक्रम्य दैवतैरपि पूजितः ।
विवेश ज्वलनं दीप्तमनिन्धनमनौपमम् ।
ज्वालाभिर्मां प्रविष्टं च ज्वलन्तं सर्वतोदिशम् ।
दैत्यदानवरक्षोभिर्दैवतैश्चापि दुःसहम् ।
ज्वालामालिनमासाद्य तमग्निमहमव्ययम् ।
अविषह्यतमं मत्वा मनसेदमचिन्तयम् ।
मया हि समरेष्वग्निरनेकेषु महाद्युतिः ।
प्रविष्टश्चापविद्धश्च न च मां दग्धवान्कचित् ।
अयं च दुःसहः शश्वत्तेजसातिहुताशनः ।
अत्यादित्यप्रकाशार्चिरनलो दीप्यते महान् ।
स तथा दह्यमानोऽपि तेजसा दीप्तवर्चसा ।
प्रपन्नः शरणं देवं शङ्खचक्रगदाधरम् ।
भक्तश्चानुगतश्चेति त्रातुमर्हसि मां विभो ।
यथा मां न दहेदग्निः सद्यो देव तथा कुरु ।
एवं विलपमानस्य ज्ञात्वा मे वचनं प्रभुः ।
मा भैरिति वचः प्राह मेघगम्भीरनिस्वनः ।
स मामाश्वास्य वचनं प्राहेदं भगवान्विभुः ।
मम त्वं विदितः सौम्य यथावत्तत्त्वदर्शने ।
ज्ञापितश्चापि यत्पित्रा तच्चापि विदितं महत् ।
वैनतेय ममाप्येवमहं वेद्यः कथंचन ।
महदेतत्स्वरूपं मे न ते वेद्यं कथंचन ।
मां हि विन्दन्ति विद्वांसो ये ज्ञाने परिनिष्ठिताः ।
निर्ममा निरहंकारा निराशीर्बन्धनायुताः ।
भवांस्तु सततं भक्तो मन्मनाः पक्षिसत्तम ।
स्थूलं मां वेत्स्यते तस्माज्जगतः कारणे स्थितम् ।

Colophon.

सुपर्णः ।

एवं दत्ताभयस्तेन ततोऽहमृषिसत्तमाः ।
नष्टखेदश्रमभयः क्षणेन ह्यभवं तदा ।
स शनैर्याति भगवान्गत्या लघुपराक्रमः ।
अहं तु सुमहावेगमास्थायानुव्रजामि तम् ।

the prior half). — (L. 219) G2 M1.4 अव्यग्रस् (for °ग्रं). T1 अपश्यं तमसा व्यग्रस् (for the prior half). T2 (also as above) समग्रतः (for सहस्रशः). — (L. 220) T1 न नक्षत्राणि यानि च (for the post. half). — T3 om. (hapl.) lines 221–226. — (L. 221) D10 वाति वायुः (by transp.). — (L. 223) G1.3 -दिशः (for -दिशम्). — (L. 224) M -तलाः (for -लताः). — (L. 225) M मुक्तापरित- (for °सिकत-). T1 ह्यापगा विमलोदकाः (for the post. half). — (L. 227) M च सर्वशः (for तथैव च). — (L. 229) Madras ed. प्रभाभिर्भासितात्मनां (for the post. half). — (L. 230) M1–3 अभ्यति- (for अप्यति-). T1 M दैवैस्तैरभिपूजितः (for the post. half). — (L. 231) T3 M अनूपमं (for अनौ°). — (L. 232) M1.4 ज्वालाभिर्मामवष्टभ्य; M2.3 °र्मां प्रविश्य (for the prior half). — (L. 233) T1 सर्वे-; M नित्यं (for दैत्य-). T1 सुदुर्लभं (for [अ]पि दुःसहम्). — (L. 234) G4 तमग्निं हव्यवाहनं (for the post. half). — (L. 237) D10 [अ]पि (for [अ]प-). — (L. 238) M त्वविषहः (for च दुःसहः). T1 नायं विषहितुं शक्यस् (for the prior half). — (L. 239) G2 M प्रत्यादित्य- (for अत्या°). T1 अविद्धो; M1–3 अनिद्धो; M4 अनिलो (for अनलो). — T1 om. line 240. — (L. 240) M [ऽ]हम् (for ऽपि). M1–3 अग्निना दीप्ततेजसा (for the post. half). — (L. 241) T1 ततोहं (for प्रपन्नः). T1 प्रपन्नो भक्तवत्सलं (for the post. half). — (L. 242) M1 भक्तं चानुगतं चेति (for the prior half). M1.2.4 मा (for मां). — (L. 243) T3 G1.3 सिद्धो (for सद्यो). G4 दयां (for तथा). — (L. 244) M श्रुत्वा (for ज्ञात्वा). G4 M1–3 विभुः (for प्रभुः). — (L. 245) G2 भैषीति (for भैरिति). — G1.3 om lines 246–248. — (L. 246) M4 वचनैः (for °नं). M4 प्रभुः (for विभुः). — Before line 247, Madras ed. ins. भगवान्. — (L. 248) M4 ते (for यत्). T1 M3.3 मम (for महत्). — (L. 249) G2 [ए]तम् (for [ए]वम्). Madras ed. वैनतेय न कस्यापि (for the prior half). G2 om. from the post. half up to the prior half of line 250. — (L. 250) G2 [अ]हं वेदं (for ते वेद्यं). — (L. 251) T1 G4 ज्ञान- (for ज्ञाने). — (L. 252) T1 M निराशी(T1 °शा)बंधना बुधाः (for the post. half). — (L. 254) M2.3 मा (for मां). M वेत्स्यसे (for °ते). — Colophon. *Sub-parvan :* D10 M दानधर्मं. — *Adhy. name :* T2 G1.3 सुपर्णवचनं; M1–3 सुपर्णवैकुंठसंवादे भगवद्दर्शनं; M4 वैकुंठसुपर्णसंवादे भगवद्दर्शनं. — *Adhy. no. :* T1 M 41; T2.3 G 42. — (L.

स गत्वा दीर्घमध्वानमाकाशममितद्युतिः ।
मनसाप्यगमं देवमात्मप्रसादादात्मतत्त्ववित् ।
अथ देवः समासाद्य मनसः सदृशं जवम् ।
मोहयित्वा च मां तत्र क्षणेनान्तरधीयत ।
तत्राम्बुधरधीरेण भोशब्देनानुनादिना ।
अयं भोऽहमिति प्राह वाक्यं वाक्यविशारदः ।
शब्दानुसारी तु ततस्तं देशमहमाव्रजम् ।
तत्रापश्यं ततश्चाहं श्रीमद्धंसयुतं सरः ।
स तत्सरः समासाद्य भगवानात्मवित्तमः ।
भोशब्दप्रतिसृष्टेन स्वरेणाप्रतिवादिना ।
विवेश देवः स्वां योनिं मामिदं चाभ्यभाषत ।
विशस्व सलिलं सौम्य सुखमत्र वसामहे ।
ततश्च प्राविशं तत्र सह तेन महात्मना ।
दृष्टवानद्भुततरं तस्मिन्सरसि भास्वताम् ।
अग्नीनामप्रणीतानामिद्धानामिन्धनैर्विना ।
दीप्तानामाज्यसिक्तानां स्थानेष्वर्चिष्मतां सदा ।
दीप्तिस्तेषामनाज्यानां प्राप्ताज्यानामिवाभवत् ।
अनिद्धानामिव सतामिद्धानामिव भास्वताम् ।
अथाहं वरदं देवं नापश्यं तत्र संगतम् ।
ततः संमोहमापन्नो विषादमगमं परम् ।
अपश्यं चाग्निहोत्राणि शतशोऽथ सहस्रशः ।
विधिना संप्रणीतानि धिष्ण्येष्वाज्यवतां तदा ।
असंमृष्टतलाश्चैव वेदीः कुसुमसंस्तृताः ।
कुशपद्मोत्पलासक्तान्कलशांश्च हिरण्मयान् ।
अग्निहोत्राणि चित्राणि शतशोऽथ सहस्रशः ।
अग्निहोत्रोपयोग्यानि यानि द्रव्याणि कानिचित् ।
तानि चात्र समृद्धानि दृष्टवानस्म्यनेकशः ।
मनोहरतमश्चात्र सुरभिः पुण्यलक्षणः ।
आज्यगन्धो मनोग्राही घ्राणचक्षुःसुखावहः ।
तेषां तत्राग्निहोत्राणामीडितानां सहस्रशः ।
समीपे त्वद्भुततममपश्यमहमव्ययम् ।
चन्द्रांशुकाशशुभ्राणां तुषारेन्दुवर्चसाम् ।
विमलादित्यभासानां स्थण्डिलानि सहस्रशः ।
दृष्टान्यग्निसमीपेषु द्युतिमन्ति महान्ति च ।
एषु चाग्निसमीपेषु शुश्राव सुपदाक्षराः ।
प्रभावान्तरितानां तु प्रस्पष्टाक्षरभाषिणाम् ।
ऋग्यजुःसामगानां च मधुराः सुस्वरा गिरः ।
सुसंमृष्टतलैस्तैस्तु बृहद्भिर्दीप्ततेजसैः ।

55) $M_{1-3}$ क्षणेन हि ( for ततोऽहम् ). — ( L. 256 ) [M]$_{1-3}$ ततोहम् ( for क्षणेन हि ). $G_2$ तथा ( for तत्र ). — $T_1$ om. line 257. — ( L. 258 ) $T_1$ ततोहं ( for अहं ). $T_3$ $G_{1,3,4}$ -भ्रजाम ( for °गि ). — ( L. 259 ) $M_{1,3}$ गत्वा महदध्वानम् ( for the prior half ). — ( L. 260 ) [..]$_4$ [अ]नमं ( for [अ]गमं ). $T_1$ देशान्; M देशम् ( for [दे]वम् ). $T_2$ [अ]थ ( for [आ]त्म- ). $T_1$ मनःसदृशवेगवान् ( for the post. half ). — $M_{1-3}$ om. line 261. — ( L. 261 ) $T_2$ $G_{3,4}$ ध्रुवं; $G_1$ तपः ( for जवम् ). — ( L. 263 ) $T_1$ न च ( for तत्र ). — ( L. 264 ) $G_1$ [..]थ ( for अयं ). $T_1$ अहं भाव इति प्राह ( for the prior [h]alf ). — ( L. 265 ) $G_2$ सं- ( for तं ). $M_4$ तस्मिन्देशेमव्रजं ( for the post. half ). — ( L. 267 ) $T_1$ ततः ( for स तत् ). — $T_1$ om. line 268. — ( L. 268 ) [T]$_2$ M स्वरेण प्रतिना( $T_2$ °वा )दिना ( for the post. [h]alf ). — ( L. 269 ) $T_2$ चाप्यभाषत ( for चाभ्य° ). — Before line 270, Madras ed. ins. भगवान्. — ( L. 270 ) $M_{1-3}$ वसावहे ( for °महे ). — Before line 271, [M]adras ed. ins. सुपर्णः. — ( 271 ) $T_{1,2}$ $G_2$ M [ऽ]हं ( for च ). $G_2$ M प्रविशंस् ( for प्राविशं ). — ( L. 272 ) [M]$_{1,2}$ अद्भुततमं ( for °तरं ). — ( L. 273 ) $T_1$ M सुप्रणीतानाम्; $T_2$ अप्रती° ( for अप्रणी° ). $G_4$ अथाग्नीनां-[..]णीतानाम् ( for the prior half ). — ( L. 274 ) [M] तदा ( for सदा ). — $T_1$ om. line 275. — ( L. [2]76 ) $D_{10}$ $T_{1,2}$ G अपि ( for इव ). — ( L. 277 ) $M_{1-3}$ संगतः ( for °तम् ). — ( L. 278 ) $G_2$ अगमत् ( for °मं ). $T_1$ वरं ( for परम् ). — ( L. 280 ) $G_1$ संप्रणीतानां; $M_{1-3}$ सुप्रणीतानि ( for सं° ). $G_2$ धिष्ण्येष्वासज्यतां तथा ( for the post. half ). — ( L. 281 ) $D_{10}$ T G वेदीं ( for वेदीः ). $D_{10}$ -संस्मृतान्; $T_1$ -संवृताः; $T_3$ $G_2$ -संस्कृतान्; $G_4$ -संश्रितान्; M -संस्कृताः ( for -संस्तृताः ). — ( L. 282 ) Kumbh. ed. कुशपद्मोत्पलासंगाः ( for the prior half ). — $D_{10}$ S om. ( hapl. ) line 283. — ( L. 284 ) $M_{1-3}$ अग्निहोत्रोपभोग्यानि; Kumbh. ed. °त्राय योग्यानि ( for the prior half ). $D_{10}$ $G_2$ कानि च ( for कानिचित् ). $T_2$ द्रव्याण्यपि च कानिचित् ( for the post. half ). — ( L. 285 ) M सुसृष्टानि ( for समृद्धानि ). — ( L. 286 ) Kumbh. ed. [अ]ग्निः ( for [अ]त्र ). — ( L. 287 ) $T_1$ घ्राणेंद्रिय- ( for घ्राणचक्षुः- ). — ( L. 288 ) $T_2$ $M_{2,3}$ एधितानां; $M_4$ इंधितानां ( for ईडि° ). — $D_{10}$ $T_1$ $G_2$ M om. ( hapl. ) lines 289–291. — ( L. 289 ) $T_1$ $G_2$ M समीपेत्यद्भुतमम् ( $T_1$ °मिदम् ) ( for the prior half ). — ( L. 290 ) $T_1$ om. from the post. half up to the prior half of line 291. — ( L. 292 ) $T_3$ इष्टानि ( for दृ° ). $T_1$ -समीपे तु ( for °पेषु ). $T_3$ om. ( hapl. ) from the post. half up to the prior half of line 293. — ( L. 293 ) $T_1$ $M_4$ तेषु ( for एषु ). $M_{1-3}$ तेषु चाद्भुतरूपेषु ( for the prior half ). $G_4$ सपदाक्षरं. — ( L. 294 ) $G_2$ प्रभावांतर्हितानां तु; $M_{1-3}$ प्रभयांतर्हितानां तु ( for the prior half ). $T_1$ प्रख्याताक्षरभाषिणां ( for the post.

पावकैः पावितात्माहमभवं लघुविक्रमः ।
ततोऽहं तेषु धिष्ण्येषु ज्वलमानेषु यज्वनाम् ।
तं देशं प्रणमित्वाथ अन्वेष्टुमुपचक्रमे ।
तान्यनेकसहस्राणि परीयंस्तु महाजवात् ।
अपश्यमानस्तं देवं ततोऽहं व्यथितोऽभवम् ।
ततस्तेष्वग्निहोत्रेषु ज्वलत्सु विमलार्चिषु ।
भानुमत्सु न पश्यामि देवदेवं सनातनम् ।
ततोऽहं तानि दीप्तानि परीय व्यथितेन्द्रियः ।
नान्तं तेषां प्रपश्यामि खेदश्च सहसाभवत् ।
विहृत्य सर्वतो दृष्टिं भयमोहसमन्वितः ।
श्रमं परममापन्नश्चिन्तयामि विचेतनः ।
कस्मिन्नु खलु वर्तामि लोके किं चैतदीदृशम् ।
ऋग्यजुःसामनिर्घोषः श्रूयते न च दृश्यते ।
न च पश्यामि तं देवं येनाहमिह चोदितः ।
एवं चिन्तासमापन्नः प्रध्यातुमुपचक्रमे ।
ततश्चिन्तयतो मह्यं मोहेनाविष्टचेतसः ।
महाञ्शब्दः प्रादुरासीत्सुभृशं मे व्यथाकरः ।
अथाहं सहसा तत्र शृणोमि विपुलध्वनिम् ।
अपश्यं च सुपर्णानां सहस्राण्ययुतानि च ।
अभ्यद्रवन्त मामेव विपुलद्युतिरंहसः ।
तेषामहं प्रभावेन सर्वथैवावरोऽभवम् ।
सोऽहं समन्ततः सर्वैः सुपर्णैरतितेजसैः ।
दृष्ट्वात्मानं परिगतं संभ्रमं परमं गतः ।
विनयावनतो भूत्वा नमश्चक्रे महात्मने ।
अनादिनिधनायैभिर्नामभिः परमात्मने ।
नारायणाय शुद्धाय शाश्वताय ध्रुवाय च ।
भूतभव्यभवेशाय शिवाय शिवमूर्तये ।
शिवयोनेः शिवाद्याय शिवपूज्यतमाय च ।
घोररूपाय महते युगान्तकरणाय च ।
विश्वाय विश्वदेवाय विश्वेशाय महात्मने ।
सहस्रोदरपादाय सहस्रनयनाय च ।
सहस्रबाहवे चैव सहस्रवदनाय च ।
शुचिश्रवाय महते ऋतुसंवत्सराय च ।
ऋग्यजुःसामवक्त्राय अथर्वशिरसे नमः ।
हृषीकेशाय कृष्णाय द्रुहिणोरुक्रमाय च ।
ब्रह्मोद्रेकाय तार्क्ष्याय वराहायैकशृङ्गिणे ।
शिपिविष्टाय सत्याय हरयेऽथ शिखण्डिने ।
हुताशोर्ध्वाय वक्त्राय रौद्रानीकाय साधवे ।
सिन्धवे सिन्धुवर्षघ्ने देवानां सिन्धवे नमः ।
गरुत्मते त्रिनेत्राय सुधामाय वृषावृषे ।

---

half ). — T1 om. lines 296–297. — ( L. 298 ) M1 तं देवं ( for ततोऽहं ). M1 om. from the post. half up to the prior half of line 299. M2.3 सुसमिद्धेषु यज्विनां ( for the post. half ). — G3 om. ( hapl. ) lines 300–311. — ( L. 300 ) Kumbh. ed. पर्यटंस्तु ( for परीयंस्तु ). T1 मनोजवात् ( for महा° ). — ( L. 302 ) T2 ज्वलद्भिर्विमलात्मसु ( for the post. half ). — ( L. 304 ) G2 परितो; M4 परीत्य ( for °य ). — ( L. 305 ) D10 नांतरेषां ( for नान्तं तेषां ). D10 T3 G1.4 Madras ed. om. from the post. half up to the prior half of line 310. — ( L. 306 ) G2 विसृज्य; M4 विवृत्य; Kumbh. ed. विसृत्य ( for विहृत्य ). — ( L. 307 ) G2 M4 ह्यचेतनः ( for वि° ). T2 चिंतयानस्त्वचेतनः ( for the post. half ). — ( L. 308 ) T1 M1.3.4 कस्मिन् ( for त° ). T2 M2 न; G2 तु ( for नु ). T2 वर्तेहं ( for वर्तामि ). T3 यत्र ( for किं च ). G2 लौकिकं चैतदीदृशं ( for the post. half ). — T1 om. line 311. — ( L. 312 ) M2–4 तथा ( for ततश्च ). T1 तथा चिंतयमानस्य ( for the prior half ). G2 -चेतसि ( for °सः ). T1 मोहसंविष्टचेतसः ( for the post. half ). — T3 om. ( hapl ) lines 313–316. — ( L. 313 ) Kumbh. ed. महाशब्दः. T1 श्रोत्रयोर् ( for सुभृशं ). — ( L. 314 ) Madras ed. तथा ( for अथ ). — After line 315, M ins. :

ते महामेघनिर्घोषास्तप्तकाञ्चनवर्चसः ।

— ( L. 316 ) M3 विमल- ( for विपुल- ). — ( L. 317 ) Madras ed. [अ]परो ( for [अ]वरो ). — ( L. 318 ) T1 समं गतैः; M समंतात्तैः ( for समन्ततः ). T2 सुपर्णैरमितौजसैः ( for the post. half ). — ( L. 319 ) M4 परिवृतं ( for °गतं ). M1–3 नष्टात्मा वै परिवृतः ( for the prior half ). — ( L. 320 ) T3 G1.3 M4 मनश्च ( for नमश्च ). — T1 om. line 324. — D10 repeats line 326 after line 331. — ( L. 326 ) T1 M2 ( also as above ) -रूपाय ( for -देवाय ). — T2 om. ( hapl. ) line 328. — ( L. 331 ) M4 द्रुहिणायोरुक्रमाय च ( hypermetric ) ( for the post. half ). — ( L. 332 ) T1.2 M बृहद्रथाय; T3 G2 ब्रह्मावर्ताय; Kumbh. ed. ब्रह्मवेगाय; Madras ed. ब्रह्मोद्रकाय ( for ब्रह्मोद्रेकाय ). — M reads lines 334–342 after line 352. — ( L. 334. ) M Kumbh. ed. हुताशायोर्ज( Kumbh. ed. °र्ध्व )वक्त्राय ( for the prior half ). T1 om. from the post. half up to the prior half of line 335. G1.3 वायवे ( for साधवे ). — ( L. 335 ) T1 M वेदानां ( for देवानां ). — ( L. 336 ) T1 ककुद्मिने; M ककुद्मते ( for गरुत्मते ). T3 सुधर्माय ( for सुधामाय ). T1 सुचक्रिणे; Kumbh. ed. वृषाकृते ( for °वृषे ).

सम्राडुग्रे संकृतये विरजे संभवे भवे ।
वृषाय वृषरूपाय विभवे भूर्भुवाय च ।
दीप्तसृष्टाय यज्ञाय स्थिराय स्थविराय च ।
अच्युताय तुषाराय वीराय च समाय च ।
जिष्णवे पुरुहूताय वसिष्ठाय वराय च ।
सत्येशाय सुरेशाय हरयेऽथ शिखण्डिने ।
बर्हिषाय वरेण्याय वसवे विश्ववेधसे ।
किरीटिने सुकेशाय वासुदेवाय शुष्मिणे ।
बृहदुक्थे सुषेणाय युग्मे दुंदुभये तथा ।
भवे सखाय विभवे भरद्वाजाभयाय च ।
भास्कराय च चन्द्राय पद्मनाभाय भूरिणे ।
पुनर्वसुभृतत्वाय जीवप्रभविषाय च ।
वषट्काराय स्वाहाय स्वधाय निधनाय च ।
ऋचे च यजुषे साम्ने त्रैलोक्यपतये नमः ।
श्रीपद्मायाजसदृशे धरणे धारणे परे ।
सौम्याय सौम्यरूपाय सौम्ये सुमनसे नमः ।
विश्वाय च सुविश्वाय विश्वरूपधराय च ।
केशवाय सुकेशाय रश्मिकेशाय भूरिणे ।
हिरण्यगर्भाय नमः सौम्याय वृषरूपिणे ।
नारायणाग्र्यवपुषे पुरुहूताय वज्रिणे ।
धर्मिणे वृषसेनाय धर्मसेनाय रोधसे ।
मुनये ज्वरमुक्ताय ज्वराधिपतये नमः ।
अनेत्राय त्रिनेत्राय पिङ्गलाय विधर्मिणे ।
तपोब्रह्मनिधानाय युगपर्यायिणे नमः ।
शरणाय शरण्याय शक्रेष्टशरणाय च ।
नमः सर्वभवेशाय भूतभव्यभवाय च ।
पाहि मां देवदेवेश कोऽप्यजोऽसि सनातनः ।
एवं गतोऽस्मि शरणं शरण्यं ब्रह्मयोनिनम् ।
स्तव्यं स्तवं स्तुतवतस्तत्तमो मे प्रणश्यतु ।
भयं च मे व्यपगतं पक्षिणोऽन्तर्हिताभवन् ।
शृणोमि च गिरं दिव्यामन्तर्धानगतां शिवाम् ।
मा भैर्गरुत्मन्दान्तोऽसि पुनः सेन्द्रा दिवौकसः ।
स्वं चैव भवनं गत्वा द्रक्ष्यसे पुत्रबान्धवान् ।
ततस्तस्मिन्क्षणेनैव सहसैव महाद्युतिः ।
प्रत्यदृश्यत तेजस्वी पुरस्तात्स समान्तिके ।
समागम्य ततस्तेन शिवेन परमात्मना ।
अपश्यं चाहमायान्तं नरनारायणाश्रमे ।
चतुर्द्विगुणविन्यासं तं च देवं सनातनम् ।
यजतस्तानृषीन्देवान्वदतो ध्यायतो मुनीन् ।
युक्तान्सिद्धान्नैष्ठिकांश्च जपतो यजतो गृहे ।

— T1 om. line 337 — (L. 337) M संस्कृतये (for संकृ°). — (L. 338) T1 मीढुषे (for विभवे). — D10 reads line 339 twice. — (L. 339) M नव- (for दीप्त-). T1 देवश्रेष्ठाय यज्ञाय (for the prior half). — (L. 340) M वीरेंद्रचमसाय च (for the post. half). — G2 om. (hapl.) line 341. — (L. 341) M2.4 वरिष्ठाय (for वसि°). T1 परिष्ठाय पराय च (for the post. half). — T1 om. line 342. — (L. 342) M1-3 सुकेशाय (for सुरे°). — (L. 343) T1 बर्हयिसे (for बर्हिषाय). T1 वसवेथ महात्मने (for the post. half). — (L. 344) T1 M सुदेवाय (for सुकेशाय). — (L. 345) T1.2 बृहदुक्थ- (for °क्थे). T1 om. from the post. half up to the prior half of line 346. T2 याने (for युग्मे). — (L. 346) M2-4 भये (for भवे). T2.3 G1.3 M2 सुखाय (for स°). M भरद्वाजे भवाय च (for the post. half). — (L. 347) D10 T2.3 G1.2.4 वरेंद्राय (for च चन्द्राय). T1 सूरिणे (for भू°). — T1 om. line 348. — (L. 349) T2 स्वाहायै स्वधायै; T3 °य स्वसाय (for °य स्वधाय). — (L. 350) T1 M [s]थ (for च). — T1 om. line 351. — (L. 351) G2 M श्रीपद्मायात्मसदृशे (for the prior half). Kumbh. ed. धरणीधारिणे परे (for the post. half). — (L. 352) Kumbh. ed. सौम्यासौम्यस्वरूपाय (for the prior half). T1 om. from the post. half up to the prior half of line 353. G3 वपुषे (for सौम्ये). — (L. 355) M1.3.4 सौम्याय विषभोजिने (for the post. half). — T1 om. (hapl.?) line 356. — (L. 357) M वर्मिणे (for ध°). — (L. 359) Some MSS. त्रिणेत्राय (for त्रिने°). M विडूर्मिणे (for विध°). — (L. 360) T1 ततो (for तपो-). — (L. 361) Kumbh. ed. भक्तेष्ट- (for श°). — (L. 363) T1 विश्वरूप; M1-3 कोप्यन्योसि (for °जोऽसि). — (L. 365) M1-3 स्तव्यं स्तवेन स्तुवतस्; M4 स्तव्यस्तवैः संस्तुवतस् (for the prior half). — (L. 367) M1-3 शुश्रुवे (for शृणोमि). — Before line 368, Madras ed. ins. भगवान्. — (L. 368) M (M4 also as above) श्रांतो (for दान्तो). T1 मा गा भयं रुक्मपक्ष न तवास्ति भयं क्वचित्. — (L. 369) Kumbh. ed. चैवं. G3 कृत्वा (for गत्वा). — Before line 370, Madras ed. ins. सुपर्णः. — (L. 370) T1 क्षणे च (for क्षणेन). — (L. 371) T1 प्रत्यक्षदृश्यस्तेजस्वी (for the prior half). — (L. 372) T1 समागतस् (for °म्य). T2 पुनस् (for ततस्). — (L. 373) M आत्मानं (for आयान्तं). T1 सहैव पुनरागम्य (for the prior half). T1 G1.3 om. (hapl.) from the post. half up to the prior half of line 378. M1-3 तस्मिन् (for नर-). — (L. 374) M -पीनांसं (M3 °गं) (for -विन्यासं). G2 देव- (for तं च). — M4 om. lines 375-378.

पुष्पपूरपरिक्षिप्तं धूपितं दीपितं हुतम् ।
वन्दितं सिक्तसंमृष्टं नरनारायणाश्रमम् ।
तदद्भुतमहं दृष्ट्वा विस्मितोऽस्मि तदानघाः ।
जगाम शिरसा देवं प्रयतेनान्तरात्मना ।
तदत्यद्भुतसंकाशं किमेतदिति चिन्तयन् ।
नाध्यगच्छं परां दिव्यां तस्य सर्वभवात्मनः ।
प्रणिपत्य सुदुर्धर्षं पुनः पुनरुदीक्ष्य च ।
शिरस्यञ्जलिमाधाय विस्मयोत्फुल्ललोचनः ।
अवोचं तमदीनार्थं श्रेष्ठानां श्रेष्ठमुत्तमम् ।
नमस्ते भगवन्देव भूतभव्यभवत्प्रभो ।
यदेतदद्भुतं देव मया दृष्टं त्वदाश्रयम् ।
अनादिमध्यपर्यन्तं किं तच्छंसितुमर्हसि ।
यदि जानासि मां भक्तं यदि वानुग्रहो मयि ।
शंस सर्वमशेषेण श्रोतव्यं यदि चेन्मया ।
स्वभावस्तव दुर्ज्ञेयः प्रादुर्भावो भवस्य च ।
भवद्भूतभविष्येश सर्वथा गहनं भवान् ।
ब्रूहि सर्वमशेषेण तदाश्चर्यं महामुने ।
किं तदत्यद्भुतं वृत्तं तेष्वग्निषु समन्ततः ।
कानि तान्यग्निहोत्राणि केषां शब्दः श्रुतो मया ।
शृण्वतां ब्रह्म सततमदृश्यानां महात्मनाम् ।
एतन्मे भगवन्कृष्ण ब्रूहि सर्वमशेषतः ।
गृणन्त्यग्निसमीपेषु के च ते ब्रह्मराशयः ।

Colophon.

भगवान् ।

मां न देवा न गन्धर्वा न पिशाचा न राक्षसाः ।
विदुस्तत्त्वेन तत्त्वस्थं सूक्ष्मात्मानमवस्थितम् ।
चतुर्धाहं विभक्तात्मा लोकानां हितकाम्यया ।
भूतभव्यभविष्यादिरनादिर्विश्वकृत्तमः ।
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ।
मनो बुद्धिश्च चेतश्च तमः सत्त्वं रजस्तथा ।
प्रकृतिर्विकृतिश्चेति विद्याविद्ये शुभाशुभे ।
मत्त एतानि जायन्ते नाहमेभ्यः कथंचन ।
स किंचिच्छ्रेयसा युक्तः श्रेष्ठभावं व्यवस्यति ।
धर्मयुक्तं च पुण्यं च सोऽहमस्मि निरामयः ।
यस्स्वभावात्मतत्त्वज्ञैः कारणैरुपलक्ष्यते ।
अनादिमध्यनिधनः सोऽन्तरात्मास्मि शाश्वतः ।
यत्तु मे परमं गुह्यं रूपं सूक्ष्मार्थदर्शिभिः ।
गृह्यते सूक्ष्मभावज्ञैः सोऽविभाव्योऽस्मि शाश्वतः ।
यत्तु मे परमं गुह्यं येन व्याप्तमिदं जगत् ।
सोऽहंगतः सर्वसत्त्वः सर्वस्य प्रभवोऽव्ययः ।
मत्तो जातानि भूतानि मया धार्यन्त्यहर्निशम् ।
मय्येव विलयं यान्ति प्रलये पन्नगाशन ।
यो मां यथा वेदयति तस्य तस्यास्मि काश्यप ।
मनोबुद्धिगतः श्रेयो विदधामि विहंगम ।
मां तु ज्ञातुं कृता बुद्धिर्भवता पक्षिसत्तम ।

— (L. 376) $D_{10}$ $T_{2.3}$ $G_4$ गृही; $M_{1-3}$ गृहीन् (for गृहे). $G_2$ यजतो जपतो गृही (for the post. half). — (L. 377) Madras ed. ह्रितं (for हुतम्). — (L. 379) $T_2$ $M_{1.3.4}$ तम( $M_{3.4}$ °द )-द्भुततमं दृष्ट्वा (for the prior half). $T_2$ M [अ]नघ (for °घाः). — (L. 380) $T_1$ -गतोस्मि; $M_{1-3}$ अगमं (for जगाम). $M_{1-3}$ प्रीयता च (for प्रयतेन). — (L. 382) $T_1$ M निष्ठां (for दिव्यां). — $T_1$ om. line 383. — (L. 384) $G_2$ आदाय (for आधाय). — (L. 385) $M_4$ प्रोवाचाहम् (for अवोचं तम्). — (L. 389) $M_4$ मा (for मां). $G_4$ [अ]प्यनुग्रहो (for वानु°). — (L. 391) $M_4$ (also as above) प्रभावस् (for स्व°). — (L. 392) $T_1$ -भविष्ये च (for °ष्येश). — (L. 394) M यत् (for किं). $T_2$ M सनातन (for समन्ततः). — (L. 395) $T_3$ तानि तानि; $M_{1-3}$ तानि कानि (by transp.). $T_{1.2}$ M तेषां (for केषां). — (L. 396) $D_{10}$ $T_1$ $G_2$ $M_{1.4}$ गृणतां (for शृण्वतां). — (L. 397) $M_{1-3}$ सततं (for भगवन्). — Colophon. *Sub-parvan :* $D_{10}$ M दानधर्म. — *Adhy. name :* $T_2$ सुपर्णर्षिसंवादे भगवद्दर्शनं; M सुपर्णवैकुंठ( $M_4$ वैकुंठसुपर्ण )संवादे नारायणस्तुतिः. — *Adhy. no. :* $T_1$ M 42; $T_{2.3}$ G 43.

— (L. 399) $T_1$ M नासुरा न च राक्षसाः (for the post. half). — (L. 400) $M_{1-3}$ सत्त्वस्थं (for त°). — (L. 402) $D_{10}$ $T_1$ अनादिर्विश्वकृत्ततः; $G_2$ °विश्वतोमुखः (for the post. half). — (L. 404) $T_1$ तेजश् (for चेतश्). — (L. 405) Kumbh. ed. [ए]व (for [इ]ति). — (L. 407) $T_1$ M यत् (for स). $T_1$ M युक्तं (for युक्तः). $T_1$ च पश्यति (for व्यवस्यति). Kumbh ed. श्रेयस्करमनुत्तमं (for the post. half). — (L. 409) $T_1$ यश्च भावात्मतत्त्वज्ञः (for the prior half). $G_3$ -मुक्ष्यते; M -लभ्यते (for -लक्ष्यते). — (L. 410) $T_2$ सोंतरास्मीति शाश्वतः (for the post. half). —$D_{10}$ $G_{1-3}$ om. (hapl.) 411–412. — (L. 411) $M_{1-3}$ सूक्ष्मं (for रूपं). $M_4$ सूक्ष्मात्म- (for °र्थ-). —(L. 412) Madras ed. स विभाव्यो (for सोऽवि°). — (L. 413) $M_{2.3}$ तत् (for यत्). $G_4$ दिव्यं; $M_{1-3}$ रूपं (for गुह्यं). — (L. 414) $T_1$ M सोहं सर्वगतः सर्वः (for the prior half). $M_{2-4}$ प्रभवाव्ययः; Madras ed. °वोप्ययः (for °वोऽव्ययः). — (L. 415) M जायंति (for जातानि). $D_{10}$ $T_{2.3}$ $G_{1.3.4}$ धार्यंतु; $T_1$ पाल्यंति (for धार्यन्ति). — (L. 416) $T_1$ M प्रलयं (for विलयं). $T_1$ सततं (for प्रलये). — (L. 417) $G_2$ तदा; M तथा (for the first तस्य).

सम्राडुग्रे संकृतये विरजे संभवे भवे ।
वृषाय वृषरूपाय विभवे भूर्भुवाय च ।
दीप्तसृष्टाय यज्ञाय स्थिराय स्थविराय च ।
अच्युताय तुषाराय वीराय च समाय च ।
जिष्णवे पुरुहूताय वसिष्ठाय वराय च ।
सत्येशाय सुरेशाय हरयेऽथ शिखण्डिने ।
बर्हिषाय वरेण्याय वसवे विश्ववेधसे ।
किरीटिने सुकेशाय वासुदेवाय शुष्मिणे ।
बृहदुक्थे सुषेणाय युग्मे दुंदुभये तथा ।
भवे सखाय विभवे भरद्वाजाभयाय च ।
भास्कराय च चन्द्राय पद्मनाभाय भूरिणे ।
पुनर्वसुभृतत्वाय जीवप्रभविषाय च ।
वषट्काराय स्वाहाय स्वधाय निधनाय च ।
ऋचे च यजुषे साम्ने त्रैलोक्यपतये नमः ।
श्रीपद्मायाजसदृशे धरणे धारणे परे ।
सौम्याय सौम्यरूपाय सौम्ये सुमनसे नमः ।
विश्वाय च सुविश्वाय विश्वरूपधराय च ।
केशवाय सुकेशाय रश्मिकेशाय भूरिणे ।
हिरण्यगर्भाय नमः सौम्याय वृषरूपिणे ।
नारायणाग्र्यवपुषे पुरुहूताय वज्रिणे ।
धर्मिणे वृषसेनाय धर्मसेनाय रोधसे ।
मुनये ज्वरमुक्ताय ज्वराधिपतये नमः ।
अनेत्राय त्रिनेत्राय पिङ्गलाय विधर्मिणे ।
तपोब्रह्मनिधानाय युगपर्यायिणे नमः ।
शरणाय शरण्याय शक्तेष्टशरणाय च ।
नमः सर्वभवेशाय भूतभव्यभवाय च ।
पाहि मां देवदेवेश कोऽप्यजोऽसि सनातनः ।
एवं गतोऽस्मि शरणं शरण्यं ब्रह्मयोनिनम् ।
स्तव्यं स्तवं स्तुतवतस्तत्तमो मे प्रणश्यतु ।
भयं च मे व्यपगतं पक्षिणोऽन्तर्हिताभवन् ।
शृणोमि च गिरं दिव्यामन्तर्धानगतां शिवाम् ।
मा भैर्गरुत्मन्दान्तोऽसि पुनः सेन्द्रा दिवौकसः ।
स्वं चैव भवनं गत्वा द्रक्ष्यसे पुत्रबान्धवान् ।
ततस्तस्मिन्क्षणेनैव सहसैव महाद्युतिः ।
प्रत्यदृश्यत तेजस्वी पुरस्तात्स समान्तिके ।
समागम्य ततस्तेन शिवेन परमात्मना ।
अपश्यं चाहमायान्तं नरनारायणाश्रमे ।
चतुर्द्विगुणविन्यासं तं च देवं सनातनम् ।
यजतस्तान्नृपीन्देवान्वदतो ध्यायतो मुनीन् ।
युक्तान्सिद्धान्नैष्ठिकांश्च जपतो यजतो गृहे ।

— $T_1$ om. line 337 — (L. 337) M संस्कृतये (for संकृ°). — (L. 338) $T_1$ मीढुषे (for विभवे). — $D_{10}$ reads line 339 twice. — (L. 339) M नव- (for दीप्त-). $T_1$ देवश्रेष्ठाय यज्ञाय (for the prior half). — (L. 340) M वीरेंद्रचमसाय च (for the post. half). — $G_2$ om. (hapl.) line 341. — (L. 341) $M_{3,4}$ वरिष्ठाय (for वसि°). $T_1$ परिष्ठाय पराय च (for the post. half). — $T_1$ om. line 342. — (L. 342) $M_{1-3}$ सुकेशाय (for सुरे°). — (L. 343) $T_1$ बर्हियसे (for बर्हिषाय). $T_1$ वसवेथ महात्मने (for the post. half). — (L. 344) $T_1$ M सुदेवाय (for सुकेशाय). — (L. 345) $T_{1,2}$ बृहदुक्थ- (for °क्थे). $T_1$ om. from the post. half up to the prior half of line 346. $T_2$ याने (for युग्मे). — (L. 346) $M_{2-4}$ भये (for भवे). $T_{2,3}$ $G_{1,3}$ $M_2$ सुखाय (for स°). M भरद्वाजे भयाय च (for the post. half). — (L. 347) $D_{10}$ $T_{2,3}$ $G_{1,3,4}$ वरेंद्राय (for च चन्द्राय). $T_1$ सूरिणे (for भू°). — $T_1$ om. line 348. — (L. 349) $T_2$ स्वाहायै स्वधायै; $T_3$ °य स्वस्थाय (for °य स्वधाय). — (L. 350) $T_1$ M [ऽ]थ (for च). — $T_1$ om. line 351. — (L. 351) $G_2$ M श्रीपद्मायात्मसदृशे (for the prior half). Kumbh. ed. धरणीधारिणे परे (for the post. half). — (L. 352) Kumbh. ed. सौम्यासौम्यस्वरूपाय (for the prior half). $T_1$ om. from the post. half up to the prior half of line 353. $G_3$ वपुषे (for सौम्ये). — (L. 355) $M_{1,3,4}$ सौम्याय विषभोजिने (for the post. half). — $T_1$ om. (hapl.?) line 356. — (L. 357) M वर्मिणे (for ध°). — (L. 359) Some MSS. त्रिणेत्राय (for त्रिने°). M विडूर्मिणे (for विध°). — (L. 360) $T_1$ ततो (for तपो-). — (L. 361) Kumbh. ed. भक्तेष्ट- (for श°). — (L. 363) $T_1$ विश्वरूप; $M_{1-3}$ कोप्यन्योसि (for °जोऽसि). — (L. 365) $M_{1-3}$ स्तव्यं स्तवेन स्तुवतस्; $M_4$ स्तव्यस्तवैः संस्तुवतस् (for the prior half). — (L. 367) $M_{1-3}$ शुश्रुवे (for शृणोमि). — Before line 368, Madras ed. ins. भगवान्. — (L. 368) M ($M_4$ also as above) श्रांतो (for दान्तो). $T_1$ मा गा भयं रुक्मपक्ष न तवास्ति भयं कचित्. — (L. 369) Kumbh. ed. चैवं. $G_2$ कृत्वा (for गत्वा). — Before line 370, Madras ed. ins. सुपर्णः. — (L. 370) $T_1$ क्षणे च (for क्षणेन). — (L. 371) $T_1$ प्रत्यक्षदृश्यस्तेजस्वी (for the prior half). — (L. 372) $T_1$ समागतस् (for °म्य). $T_2$ पुनस् (for ततस्). — (L. 373) M आत्मानं (for आयान्तं). $T_1$ सहैव पुनरागम्य (for the prior half). $T_1$ $G_{1,3}$ om. (hapl.) from the post. half up to the prior half of line 378. $M_{1-3}$ तस्मिन् (for नर-). — (L. 374) M -पीनांसं ($M_2$ °गं) (for -विन्यासं). — $M_4$ om. lines 375–378. $G_2$ देव- (for तं च).

पुष्पपूरपरिक्षिप्तं धूपितं दीपितं हुतम् ।
वन्दितं सिक्तसंमृष्टं नरनारायणाश्रमम् ।
तदद्भुतमहं दृष्ट्वा विस्मितोऽस्मि तदानघाः ।
जगाम शिरसा देवं प्रयतेनान्तरात्मना ।
तदत्यद्भुतसंकाशं किमेतदिति चिन्तयन् ।
नाध्यगच्छं परां दिव्यां तस्य सर्वभवात्मनः ।
प्रणिपत्य सुदुर्धर्षं पुनः पुनरुदीक्ष्य च ।
शिरस्यञ्जलिमाधाय विस्मयोत्फुल्ललोचनः ।
अवोचं तमदीनार्थं श्रेष्ठानां श्रेष्ठमुत्तमम् ।
नमस्ते भगवन्देव भूतभव्यभवत्प्रभो ।
यदेतदद्भुतं देव मया दृष्टं त्वदाश्रयम् ।
अनादिमध्यपर्यन्तं किं तच्छंसितुमर्हसि ।
यदि जानासि मां भक्तं यदि वानुग्रहो मयि ।
शंस सर्वमशेषेण श्रोतव्यं यदि चेन्मया ।
स्वभावस्तव दुर्ज्ञेयः प्रादुर्भावो भवस्य च ।
भवद्भूतभविष्येश सर्वथा गहनं भवान् ।
ब्रूहि सर्वमशेषेण तदाश्चर्यं महामुने ।
किं तदत्यद्भुतं वृत्तं तेष्वग्निषु समन्ततः ।
कानि तान्यग्निहोत्राणि केषां शब्दः श्रुतो मया ।
शृण्वतां ब्रह्म सततमदृश्यानां महात्मनाम् ।
एतन्मे भगवन्कृष्ण ब्रूहि सर्वमशेषतः ।
गृणन्त्यग्निसमीपेषु के च ते ब्रह्मराशयः ।

Colophon.

भगवान् ।

मां न देवा न गन्धर्वा न पिशाचा न राक्षसाः ।
विदुस्तत्त्वेन तत्त्वस्थं सूक्ष्मात्मानमवस्थितम् ।
चतुर्धाहं विभक्तात्मा लोकानां हितकाम्यया ।
भूतभव्यभविष्यादिरनादिर्विश्वकृत्तमः ।
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ।
मनो बुद्धिश्च चेतश्च तमः सत्त्वं रजस्तथा ।
प्रकृतिर्विकृतिश्चेति विद्याविद्ये शुभाशुभे ।
मत्त एतानि जायन्ते नाहमेभ्यः कथंचन ।
स किंचिच्छ्रेयसा युक्तः श्रेष्ठभावं व्यवस्यति ।
धर्मयुक्तं च पुण्यं च सोऽहमस्मि निरामयः ।
यत्स्वभावात्मतत्त्वज्ञैः कारणैरुपलक्ष्यते ।
अनादिमध्यनिधनः सोऽन्तरात्मास्मि शाश्वतः ।
यत्तु मे परमं गुह्यं रूपं सूक्ष्मार्थदर्शिभिः ।
गृह्यते सूक्ष्मभावज्ञैः सोऽविभाव्योऽस्मि शाश्वतः ।
यत्तु मे परमं गुह्यं येन व्याप्तमिदं जगत् ।
सोऽहंगतः सर्वसत्त्वः सर्वस्य प्रभवोऽव्ययः ।
मत्तो जातानि भूतानि मया धार्यन्त्यहर्निशम् ।
मय्येव विलयं यान्ति प्रलये पन्नगाशन ।
यो मां यथा वेदयति तस्य तस्यास्मि काश्यप ।
मनोबुद्धिगतः श्रेयो विदधामि विहंगम ।
मां तु ज्ञातुं कृता बुद्धिर्भवता पक्षिसत्तम ।

---

— (L. 376) $D_{10}$ $T_{2.3}$ $G_4$ गृही; $M_{1-3}$ गृहीन् (for गृहे). $G_2$ यजतो जपतो गृही (for the post. half). — (L. 377) Madras ed. हितं (for हुतम्). — (L. 379) $T_2$ $M_{1.3.4}$ तम( $M_{3.4}$ °द )-द्भुततमं दृष्ट्वा (for the prior half). $T_2$ M [अ]नघ (for °घाः). — (L. 380) $T_1$ -गतोस्मि; $M_{1-3}$ अगमं (for जगाम). $M_{1-3}$ प्रीयता च (for प्रयतेन). — (L. 382) $T_1$ M निष्ठां (for दिव्यां). — $T_1$ om. line 383. — (L. 384) $G_2$ आदाय (for आधाय). — (L. 385) $M_4$ प्रोवाचाहम् (for अवोचं तम्). — (L. 389) $M_4$ मा (for मां). $G_4$ [अ]प्यनुग्रहो (for वानु°). — (L. 391) $M_4$ (also as above) प्रभावस् (for स्व°). — (L. 392) $T_1$ -भविष्ये च (for °ष्येश). — (L. 394) M यत् (for किं). $T_1$ M सनातन (for समन्ततः). — (L. 395) $T_3$ तानि तानि; $M_{1-3}$ तानि कानि (by transp.). $T_{1.2}$ M तेषां (for केषां). — (L. 396) $D_{10}$ $T_1$ $G_2$ $M_{1.4}$ गृणतां (for शृण्वतां). — (L. 397) $M_{1-3}$ सततं (for भगवन्). — Colophon. *Sub-parvan :* $D_{10}$ M दानधर्मं. — *Adhy. name :* $T_2$ सुपर्णऋषिसंवादे भगवद्दर्शनं; M सुपर्णवैकुंठ( $M_4$ वैकुंठसुपर्ण )संवादे नारायणस्तुतिः. — *Adhy. no. :* $T_1$ M 42; $T_{2.3}$ G 43.

— (L. 399) $T_1$ M नासुरा न च राक्षसाः (for the post. half). — (L. 400) $M_{1-3}$ सत्त्वस्थं (for त°). — (L. 402) $D_{10}$ $T_1$ अनादिर्विश्वकृत्ततः; $G_2$ °र्विश्वतोमुखः (for the post. half). — (L. 404) $T_1$ तेजश् (for चेतश्). — (L. 405) Kumbh. ed. [ए]व (for [इ]ति). — (L. 407) $T_1$ M यत् (for स). $T_1$ M युक्तं (for युक्तः). $T_1$ च पश्यति (for व्यवस्यति). Kumbh ed. श्रेयस्करमनुत्तमं (for the post. half). — (L. 409) $T_1$ यश्च भावात्मतत्त्वज्ञः (for the prior half). $G_3$ -बुध्यते; M -लभ्यते (for -लक्ष्यते). — (L. 410) $T_2$ सोंतरात्मेति शाश्वतः (for the post. half). — $D_{10}$ $G_{1-3}$ om. (hapl.) 411–412. — (L. 411) $M_{1-3}$ सूक्ष्मं (for रूपं). $M_4$ सूक्ष्मात्म- (for °र्थ-). — (L. 412) Madras ed. स विभाव्यो (for सोऽवि°). — (L. 413) $M_{2.3}$ तत् (for यत्). $G_4$ दिव्यं; $M_{1-3}$ रूपं (for गुह्यं). — (L. 414) $T_1$ M सोहं सर्वगतः सर्वः (for the prior half). $M_{2-4}$ प्रभवाव्ययः; Madras ed. °वोप्ययः (for °वोऽव्ययः). — (L. 415) M जायंति (for जातानि). $D_{10}$ $T_{2.3}$ $G_{1.3.4}$ धार्यंतु; $T_1$ पाल्यंति (for धार्यन्ति). — (L. 416) $T_1$ M प्रलयं (for विलयं). $T_1$ सततं (for प्रलये). — (L. 417) $G_2$ तदा; M तथा (for the first तस्य).

शृणु योऽहं यतश्चाहं यदर्थश्चाहमुद्यतः ।
ये केचिन्नियतात्मानस्त्रेताग्निपरमार्चिताः ।
अग्निकार्यपरा नित्यं जपहोमपरायणाः ।
आत्मन्यग्नीन्समाधाय नियता नियतेन्द्रियाः ।
अनन्यमनसस्ते मां सर्वे वै समुपासते ।
यजन्तो जपयज्ञैर्मां मानसैश्च सुसंयताः ।
अग्नीनभ्युद्ययुः शश्वदग्निष्वेवाभिसंस्थिताः ।
अनन्यकार्याः शुचयो नित्यमग्निपरायणाः ।
य एवंबुद्धयो धीरास्ते मां गच्छन्ति तादृशाः ।
अकामहतसंकल्पा ज्ञाने नित्यं समाहिताः ।
आत्मन्यग्नीन्समाधाय निराहारा निराशिषः ।
विषयेषु निरारम्भा विमुक्ता ज्ञानचक्षुषः ।
अनन्यमनसो धीराः स्वभावनियमान्विताः ।
यत्तद्वियति दृष्टं तत्सरः पद्मोत्पलायुतम् ।
तत्राग्नयः संनिहिता दीप्यन्ते स्म निरिन्धनाः ।
ज्ञानामलाशयास्तस्मिन्ये च चन्द्रांशुनिर्मलाः ।
उपासीना गृणन्तोऽग्निं प्रस्पष्टाक्षरभाषिणः ।
आकाङ्क्षमाणाः शुचयस्तेष्वग्निषु विहंगम ।
ये मया भावितात्मानो मय्येवाभिरताः सदा ।
उपासते च मामेव ज्योतिर्भूता निरामयाः ।
तैर्हि तत्रैव वस्तव्यं नीरागात्मभिरच्युतैः ।
निराहारा ह्यनिष्पन्दाश्चन्द्रांशुसदृशप्रभाः ।
निर्मला निरहंकारा निरालम्बा निराशिषः ।
मद्भक्ताः सततं ते वै भक्तास्तानपि चाप्यहम् ।
चतुर्धाहं विभक्तात्मा चरामि जगतो हितः ।
लोकानां धारणार्थाय विधानं विदधामि च ।
यथावत्तदशेषेण श्रोतुमर्हति मे भवान् ।
एका मूर्तिर्निर्गुणाख्या योगं परममास्थिता ।
द्वितीया सृजते तात भूतग्रामं चराचरम् ।
सृष्टं संहरते चैका जगत्स्थावरजंगमम् ।
जातात्मनिष्ठा क्षपयन्मोहयन्निव मायया ।
क्षिपन्ती मोहयन्ती च आत्मनिष्ठा स्वमायया ।
चतुर्थी मे महामूर्तिर्जगद्वृद्धिं ददाति सा ।
रक्षते चापि नियता सोऽहमस्मि नभश्चर ।
मया सर्वमिदं व्याप्तं मयि सर्वं प्रतिष्ठितम् ।
अहं सर्वजगद्बीजं सर्वत्रगतिरव्ययः ।
यानि तान्यग्निहोत्राणि ये च चन्द्रांशुराशयः ।
गृणन्ति वेदं सततं तेष्वग्निषु विहंगम ।
क्रमेण मां समायान्ति सुखिनो ज्ञानसंयुताः ।
तेषामहं तपो दीप्तं तेजः सम्यक्समाहितम् ।
नित्यं ते मयि वर्तन्ते तेषु चाहमतन्द्रितः ।
सर्वतो मुक्तसङ्गेन मय्यनन्यसमाधिना ।
शक्यः समासादयितुमहं वै ज्ञानचक्षुषा ।
मां स्थूलदर्शनं विद्धि जगतः कार्यकारणम् ।
मत्तश्च संप्रसूतान्वै विद्धि लोकान्सदैवतान् ।
मया चापि चतुर्धात्मा विभक्तः प्राणिषु स्थितः ।
आत्मभूतो वासुदेवो ह्यनिरुद्धो मतौ स्थितः ।
संकर्षणोऽहंकारे च प्रद्युम्नो मनसि स्थितः ।

— (L. 418) $D_{10}$ $T_2$ G $M_{1-3}$ विदधाति (for °धामि). — (L. 419) $G_2$ कृत्वा (for कृता). $T_1$ मां तु ज्ञात्वा कृती बुद्धिर् (for the prior half). — (L. 420) $G_{1,3,4}$ गतश् (for यतश्). M यदर्थं (for °र्थश्). — (L. 421) $T_{1,3}$ $G_2$ M त्रेताग्निपरमा द्विजाः (for the post. half). — (L. 424) $T_2$ तेषां (for ते मां). $T_1$ यतंतः (for सर्वे वै). — (L. 425) $T_1$ जयंतो; $T_3$ यजंते (for यजन्तो). — $T_1$ om. line 426. — (L. 426) M -संश्रिताः (for -संस्थिताः). — (L. 429) $T_3$ $G_1$ $M_4$ अकामा (for °म-). M जपे (for ज्ञाने). $T_1$ समाश्रिताः (for °हिताः). — (L. 430) M निरारंभा (for °हारा). — (L. 433) $T_1$ तु; M ते (for तत्). $D_{10}$ सरः पद्मोत्पलं युतं (for the post. half). — $T_1$ om. line 434. — (L. 434) $M_{1-3}$ अत्र (for तत्र). — $T_1$ om. (hapl.) lines 436–438. — (L. 436) $T_3$ उपासते (for °सीना). Kumbh. ed. अस्पष्टाक्षरभाषिणः (for the post. half). — (L. 440) $T_1$ om. from the post. half up to the post. half of line 441. — (L. 442) $M_{1-3}$ निर्मुक्ता (for निर्मला). M निरारंभा (for °लम्बा). — $T_1$ om. line 443. — (L. 443) Kumbh. ed. भक्तांस् (for भक्तास्). — After line 443, $M_{1-3}$ read lines 456–461. — (L. 444) $T_3$ $G_{1,3}$ M हितं (for हितः). — (L. 445) M लोकसं- (for लोकानां). — (L. 446) $M_{1-3}$ यथा च (for यथावत्). $T_1$ यथावृत्तमशेषेण (for the prior half). $T_1$ इच्छति (for अर्हति). — (L. 448) $D_{10}$ चरते; $T_1$ रक्षणे (for सृजते). — $T_1$ om. lines 450–451. $M_{1-3}$ om. (hapl.) line 450. — (L. 450) Kumbh. ed. ज्ञातात्म- (for जातात्म-). Kumbh. ed. मोहयंतीव मायया (for the post. half). — (L. 451) $M_{1-3}$ क्षपयंती मोहयंती (for the prior half). — (L. 452) $T_1$ मम या; M त्वेव या (for मे महा-). — $T_1$ om. line 453. — (L. 453) Kumbh. ed. नभश्चरः (for °र). — (L. 454) $T_{2,3}$ $G_{1,3,4}$ प्राप्तं (for व्याप्तं). — (L. 455) $T_1$ सर्वस्य (for °त्र-). — $T_1$ om. (hapl.?) line 456. — (L. 456) $G_2$ -निर्मलाः (for -राशयः). — (L. 457) $T_2$ शृण्वंति (for गृणन्ति). $T_1$ ब्रह्म (for वेदं). — (L. 465) $T_2$ मायया (for मया च). $T_1$ त्रिभक्तात्मा (for चतुर्धात्मा). $T_1$ चतुर्धा प्राणिसंस्थितः (for the post. half). — $M_4$ reads lines 468–469 twice. — (L. 468) $T_1$ मे; $G_2$ च; $M_{1-3}$ त्वं (for यत्). $M_4$ (second time) यथा तदपि सम्यक्त्वं (for the prior

था च चतुर्धा यत्सम्यक्त्वं श्रोतुमर्हसि ।
ण्यगर्भः पद्माख्यो यत्र ब्रह्मा व्यजायत ।
णश्चापि संभूतः शिव इत्यवधार्यताम् ।
ात्स्कन्दः संबभूव एतत्सृष्टिचतुष्टयम् ।
दानवदर्पघ्नमेवं मां विद्धि नित्यशः ।
दानवरक्षोभिर्यदा धर्मः प्रपीड्यते ।
ाहं धर्मवृद्ध्यर्थं मूर्तिमान्भविताशुग ।
ातपरा ये तु धीरा निश्चितबुद्धयः ।
गिनो योगयुक्ताश्च ते मां पश्यन्ति नान्यथा ।
भिः संप्रयुक्तोऽहं विप्रयुक्तश्च पञ्चभिः ।
ानश्च तेष्वेवं निवृत्तश्चैव तेष्वहम् ।
विदुर्जातसंकल्पास्ते मां पश्यन्ति तादृशाः ।
वायुरापो ज्योतिश्च पृथिवी चेति पञ्चमम् ।
ात्मकोऽस्मि विज्ञेयो न चान्योऽस्मीति निश्चितम् ।
मानमतीतं च पञ्चवर्गेषु निश्चलम् ।
ब्दस्पर्शेषु रूपेषु रसगन्धेषु चाप्यहम् ।
तस्तमोभ्यामाविष्टा येषां बुद्धिरनिश्चिता ।
न पश्यन्ति मे तत्त्वं तपसा महता ह्यपि ।
ोपवासैर्न नियमैर्न व्रतैर्विविधैरपि ।
ं वा वेदितुं वापि न शक्या परमा गतिः ।
ामोहोत्थपङ्के तु निमग्नानां गतिर्हरिः ।
कान्तिनो ध्यानपरा यतिभावाद्व्रजन्ति माम् ।
त्त्वयुक्ता मतिर्येषां केवलात्मविनिश्चिता ।
ते पश्यन्ति स्वमात्मानं परमात्मानमव्ययम् ।
अहिंसा सर्वभूतेषु तेष्ववस्थितमार्जवम् ।
तेष्वेव च समाधाय सम्यगेति स मामजम् ।
यदेतत्परमं गुह्यमाख्यानं परमाद्भुतम् ।
यत्नेन तदशेषेण यथावच्छ्रोतुमर्हसि ।
ये त्वग्निहोत्रनियता जपयज्ञपरायणाः ।
ते मामुपासते शश्वद्यांस्तांस्त्वं दृष्टवानसि ।
शास्त्रदृष्टविधानज्ञा असक्ताः कचिदन्यथा ।
शक्योऽहं वेदितुं तैस्तु यन्मे परममव्ययम् ।
ये तु सांख्यं च योगं च ज्ञात्वाप्यधृतनिश्चयाः ।
न ते गच्छन्त्यकुशलाः परां गतिमनुत्तमाम् ।
तस्माज्ज्ञानेन शुद्धेन प्रसन्नात्मात्मविच्छुचिः ।
आसादयति तद्ब्रह्म यत्र गत्वा न शोचति ।
शुद्धाभिजनसंपन्नाः श्रद्धायुक्तेन चेतसा ।
मद्भक्त्या च द्विजश्रेष्ठा गच्छन्ति परमां गतिम् ।
यद्गुह्यं परमं बुद्धेरलिङ्गग्रहणं च यत् ।
तत्सूक्ष्मं गृह्यते विप्रैर्यतिभिस्तत्त्वदर्शिभिः ।
न वायुः पवते तत्र न तस्मिञ्ज्योतिषां गतिः ।
न चापः पृथिवी नैव नाकाशं न मनोगतिः ।
तस्माच्चैतानि सर्वाणि प्रजायन्ते विहंगम ।
सर्वेभ्यश्च स तेभ्यश्च प्रभवत्यमलो विभुः ।
स्थूलदर्शनमेतन्मे यद्दृष्टं भवतानघ ।
एतत्सूक्ष्मस्य च द्वारं कार्याणां कारणं त्वहम् ।

T2 इच्छसि; G1. 3 अर्हति (for °सि). M1-3. 4 d time) श्रोतुमर्हसि तत्त्वतः (for the post. half). 469) T1 पद्माक्षो (for °ख्यो). M4 (second यत्तत्पद्ममभूत्पूर्वं (for the prior half). Kumbh. ; (for यत्र) T1 प्रजायते (for व्यजायत). — (L. M4 महातत्त्व (for °णश्). G2 [अ]वधारयेत्; M र्यतां (for [अ]व°). — (L. 471) T1 शिवात्तु (hy-tric) (for शिवात्). — T1 om. line 474. — (L. Madras ed [आ]शु वै (for [आ]शुग). — (L. T3 वेदभूत- (for °व्रत-). — (L 476) M1-3 कामगाः नान्यथा). — (L. 478) T1. 2 M1. 3. 4 [ए]व (for ). — T1 om. line 479. — (L. 479) M जित-जात-). — (L. 481) M4 नान्योसीति विनिश्चितं (for ost. half). — (L. 485) T1 M न मे (for ते M1 ते (for मे). — (L. 486) G2 सोपवासैर्. reads lines 488-489 on marg. — (L. T1 महामोहार्थपंके तु; M °हमहापंक- (for the half). — (L. 489) T2 एकाकिनो (for ). M1-3 इति (for यति-). T1 याति मामेव सुमताः the post. half). — (L. 490) G1 सत्य- (for सत्त्व-). D10 G2 ह्येषां (for येषां). — (L. 491) M महात्मानः (for स्वमात्मानं). M4 मामजम् (for आत्मानम्). — (L. 492) T1 M येषु (for तेषु). T1 [उ]पास्थितम् (for [अ]व°). — After line 492, T1 ins.:

मामेव ते संप्रयान्ति शुभाचारसमन्विताः ।

— T1. 2 om. line 493. — (L. 494) T1 M आख्यातं (for °नं). — (L. 495) M यत्तोहं (for यत्नेन). M इच्छसि (for अर्हसि). — (L. 496) T1 M -निरता (for -नियता). — (L. 497) M ये (for ते). Madras ed. एतांस् (for यांस्तांस्). — (L. 498) T1 M सांख्ययोग-; Kumbh. ed. शास्त्रदृढ- (for °दृष्ट-). T1 [अ]न्यतः (for °था). — (L. 499) T1 यत्नेन परमव्ययं (for the post. half). — (L. 500) T1 [अ]प्रकृत- (for [अ]प्यधृत-). — (L. 502) D10 G2 दानेन (for ज्ञा°). M [आ]त्मवाञ् (for °विच्). — (L. 504) D10 श्रद्धाभि- (for शुद्धाभि-). — T1 om. (hapl.) line 509. — (L. 509) M [ए]व (for च). G4 [अ]पि (for [आ]पः). — (L. 510) T1 जातानि (for सर्वाणि). T1 सर्वाण्येव (for प्रजायन्ते). — T1 om. line 511. — (L. 513) M4 एतं (for एतत्).

105

शृणु योऽहं यतश्चाहं यदर्थश्चाहमुद्यतः ।
ये केचिन्नियतात्मानस्त्रेताग्निपरमार्चिताः ।
अग्निकार्यपरा नित्यं जपहोमपरायणाः ।
आत्मन्यग्नीन्समाधाय नियता नियतेन्द्रियाः ।
अनन्यमनसस्ते मां सर्वे वै समुपासते ।
यजन्तो जपयज्ञैर्मां मानसैश्च सुसंयताः ।
अग्नीनभ्युद्ययुः शश्वदग्निष्वेवाभिसंस्थिताः ।
अनन्यकार्याः शुचयो नित्यमग्निपरायणाः ।
य एवंबुद्धयो धीरास्ते मां गच्छन्ति तादृशाः ।
अकामहतसंकल्पा ज्ञाने नित्यं समाहिताः ।
आत्मन्यग्नीन्समाधाय निराहारा निराशिषः ।
विषयेषु निरारम्भा विमुक्ता ज्ञानचक्षुषः ।
अनन्यमनसो धीराः स्वभावनियमान्विताः ।
यत्तद्वियति दृष्टं तत्सरः पद्मोत्पलायुतम् ।
तत्राग्नयः संनिहिता दीप्यन्ते स्म निरिन्धनाः ।
ज्ञानामलाशयास्तस्मिन्ये च चन्द्रांशुनिर्मलाः ।
उपासीना गृणन्तोऽग्निं प्रस्पष्टाक्षरभाषिणः ।
आकाङ्क्षमाणाः शुचयस्तेष्वग्निषु विहंगम ।
ये मया भावितात्मानो मय्येवाभिरताः सदा ।
उपासते च मामेव ज्योतिर्भूता निरामयाः ।
तैर्हि तत्रैव वस्तव्यं नीरागात्मभिरच्युतैः ।
निराहारा ह्यनिष्पन्दाश्चन्द्रांशुसदृशप्रभाः ।
निर्मला निरहंकारा निरालम्बा निराशिषः ।
मद्भक्ताः सततं ते वै भक्तास्तानपि चाप्यहम् ।
चतुर्धाहं विभक्तात्मा चरामि जगतो हितः ।
लोकानां धारणार्थाय विधानं विदधामि च ।
यथावत्तदशेषेण श्रोतुमर्हति मे भवान् ।
एका मूर्तिर्निर्गुणाख्या योगं परममास्थिता ।
द्वितीया सृजते तात भूतग्रामं चराचरम् ।
सृष्टं संहरते चैका जगत्स्थावरजंगमम् ।
जातात्मनिष्ठा क्षपयन्मोहयन्निव मायया ।
क्षिपन्ती मोहयन्ती च आत्मनिष्ठा स्वमायया ।
चतुर्थी मे महामूर्तिर्जगद्वृद्धिं ददाति सा ।
रक्षते चापि नियता सोऽहमस्मि नभश्चर ।
मया सर्वमिदं व्याप्तं मयि सर्वं प्रतिष्ठितम् ।
अहं सर्वजगद्बीजं सर्वत्रगतिरव्ययः ।
यानि तान्यग्निहोत्राणि ये च चन्द्रांशुराशयः ।
गृणन्ति वेदं सततं तेष्वग्निषु विहंगम ।
क्रमेण मां समायान्ति सुखिनो ज्ञानसंयुताः ।
तेषामहं तपो दीप्तं तेजः सम्यक्समाहितम् ।
नित्यं ते मयि वर्तन्ते तेषु चाहमतन्द्रितः ।
सर्वतो मुक्तसङ्गेन मय्यनन्यसमाधिना ।
शक्यः समासादयितुमहं वै ज्ञानचक्षुषा ।
मां स्थूलदर्शनं विद्धि जगतः कार्यकारणम् ।
मत्तश्च संप्रसूतान्वै विद्धि लोकान्सदैवतान् ।
मया चापि चतुर्धात्मा विभक्तः प्राणिषु स्थितः ।
आत्मभूतो वासुदेवो ह्यनिरुद्धो मतौ स्थितः ।
संकर्षणोऽहंकारे च प्रद्युम्नो मनसि स्थितः ।

— (L. 418) $D_{10}$ $T_2$ G $M_{1-3}$ विदधाति (for °धामि). — (L. 419) $G_2$ कृत्स्ना (for कृता). $T_1$ मां तु ज्ञात्वा कृती बुद्धिर् (for the prior half). — (L. 420) $G_{1,3,4}$ गतश् (for यतश्). M यदर्थं (for °र्थश्). — (L. 421) $T_{1,3}$ $G_2$ M त्रेताग्निपरमा द्विजाः (for the post. half). — (L. 424) $T_2$ तेषां (for ते मां). $T_1$ यतंतः (for सर्वे वै). — (L. 425) $T_1$ जयंतो; $T_3$ यजंते (for यजन्तो). — $T_1$ om. line 426. — (L. 426) M -संश्रिताः (for -संस्थिताः). — (L. 429) $T_3$ $G_1$ $M_4$ अकामा (for °म-). M जपे (for ज्ञाने). $T_1$ समाश्रिताः (for °हिताः). — (L. 430) M निरारंभा (for °हारा). — (L. 433) $T_1$ तु; M ते (for तत्). $D_{10}$ सरः पद्मोत्पलं युतं (for the post. half). — $T_1$ om. line 434. — (L. 434) $M_{1-3}$ अत्र (for तत्र). — $T_1$ om. (hapl.) lines 436–438. — (L. 436) $T_3$ उपासते (for °सीना). Kumbh. ed. अस्पष्टाक्षरभाषिणः (for the post. half). — (L. 440) $T_1$ om. from the post. half up to the post. half of line 441. — (L. 442) $M_{1-3}$ निर्मुक्ता (for निर्मला). M निरारंभा (for °लम्बा). — $T_1$ om. line 443. — (L. 443) Kumbh. ed. भक्तांस् (for भक्तास्). — After line 443, $M_{1-3}$ read lines 456–461. — (L. 444) $T_3$ $G_{1,3}$ M हितं (for हितः). — (L. 445) M लोकसं- (for लोकानां). — (L. 446) $M_{1-3}$ यथा च (for यथावत्). $T_1$ यथावृत्तमशेषेण (for the prior half). $T_1$ इच्छति (for अर्हति). — (L. 448) $D_{10}$ चरते; $T_1$ रक्षणे (for सृजते). — $T_1$ om. lines 450–451. $M_{1-3}$ om. (hapl.) line 450. — (L. 450) Kumbh. ed. ज्ञातात्म- (for जातात्म-). Kumbh. ed. मोहयंतीव मायया (for the post. half). — (L. 451) $M_{1-3}$ क्षपयंती मोहयंती (for the prior half). — (L. 452) $T_1$ मम या; M त्वेव या (for मे महा-). — $T_1$ om. line 453. — (L. 453) Kumbh. ed. नभश्चरः (for °र). — (L. 454) $T_{2,3}$ $G_{1,3,4}$ प्राप्तं (for व्याप्तं). — (L. 455) $T_1$ सर्वस्य (for °त्र-). — $T_1$ om. (hapl.?) line 456. — (L. 456) $G_2$ -न्निर्मलाः (for -राशयः). — (L. 457) $T_2$ शृण्वंति (for गृणन्ति). $T_1$ ब्रह्म (for वेदं). — (L. 465) $T_2$ मायया (for मया च). $T_1$ विभक्तात्मा (for चतुर्धात्मा). $T_1$ चतुर्धा प्राणिसंस्थितः (for the post. half). — $M_4$ reads lines 468–469 twice. — (L. 468) $T_1$ मे; $G_2$ च; $M_{1-3}$ त्वं (for यत्). $M_4$ (second time) यथा तदपि सम्यक्त्वं (for the prior

अन्यथा च चतुर्धा यत्सम्यक्त्वं श्रोतुमर्हसि ।
हिरण्यगर्भः पद्माख्यो यत्र ब्रह्मा व्यजायत ।
ब्रह्मणश्चापि संभूतः शिव इत्यवधार्यताम् ।
शिवात्स्कन्दः संबभूव एतत्सृष्टिचतुष्टयम् ।
दैत्यदानवदर्पघ्नमेवं मां विद्धि नित्यशः ।
दैत्यदानवरक्षोभिर्यदा धर्मः प्रपीड्यते ।
तदाहं धर्मवृद्ध्यर्थं मूर्तिमान्भविताशुग ।
वेदव्रतपरा ये तु धीरा निश्चितबुद्धयः ।
योगिनो योगयुक्ताश्च ते मां पश्यन्ति नान्यथा ।
पञ्चभिः संप्रयुक्तोऽहं विप्रयुक्तश्च पञ्चभिः ।
वर्तमानश्च तेष्वेवं निवृत्तश्चैव तेष्वहम् ।
ये विदुर्जातसंकल्पास्ते मां पश्यन्ति तादृशाः ।
खं वायुरापो ज्योतिश्च पृथिवी चेति पञ्चमम् ।
तदात्मकोऽस्मि विज्ञेयो न चान्योऽस्मीति निश्चितम् ।
वर्तमानमतीतं च पञ्चवर्गेषु निश्चलम् ।
शब्दस्पर्शेषु रूपेषु रसगन्धेषु चाप्यहम् ।
रजस्तमोभ्यामाविष्टा येषां बुद्धिरनिश्चिता ।
ते न पश्यन्ति मे तत्त्वं तपसा महता ह्यपि ।
नोपवासैर्न नियमैर्न व्रतैर्विविधैरपि ।
द्रष्टुं वा वेदितुं वापि न शक्या परमा गतिः ।
महामोहोत्थपङ्के तु निमग्नानां गतिर्हरिः ।
एकान्तिनो ध्यानपरा यतिभावाद्व्रजन्ति माम् ।
सत्त्वयुक्ता मतिर्येषां केवलात्मविनिश्चिता ।
ते पश्यन्ति स्वमात्मानं परमात्मानमव्ययम् ।
अहिंसा सर्वभूतेषु तेष्ववस्थितमार्जवम् ।
तेष्वेव च समाधाय सम्यगेति स मामजम् ।
यदेतत्परमं गुह्यमाख्यानं परमाद्भुतम् ।
यत्नेन तदशेषेण यथावच्छ्रोतुमर्हसि ।
ये त्वग्निहोत्रनियता जपयज्ञपरायणाः ।
ते मामुपासते शश्वद्यांस्तांस्त्वं दृष्टवानसि ।
शास्त्रदृष्टविधानज्ञा असक्ताः क्वचिदन्यथा ।
शक्योऽहं वेदितुं तैस्तु यन्मे परममव्ययम् ।
ये तु सांख्यं च योगं च ज्ञात्वाप्यधृतनिश्चयाः ।
न ते गच्छन्त्यकुशलाः परां गतिमनुत्तमाम् ।
तस्माज्ज्ञानेन शुद्धेन प्रसन्नात्मात्मविच्छुचिः ।
आसादयति तद्ब्रह्म यत्र गत्वा न शोचति ।
शुद्धाभिजनसंपन्नाः श्रद्धायुक्तेन चेतसा ।
मद्भक्त्या च द्विजश्रेष्ठा गच्छन्ति परमां गतिम् ।
यद्गुह्यं परमं बुद्धेरलिङ्गग्रहणं च यत् ।
तत्सूक्ष्मं गृह्यते विप्रैर्यतिभिस्तत्त्वदर्शिभिः ।
न वायुः पवते तत्र न तस्मिञ्ज्योतिषां गतिः ।
न चापः पृथिवी नैव नाकाशं न मनोगतिः ।
तस्माच्चैतानि सर्वाणि प्रजायन्ते विहंगम ।
सर्वेभ्यश्च स तेभ्यश्च प्रभवत्यमलो विभुः ।
स्थूलदर्शनमेतन्मे यद्दृष्टं भवतानघ ।
एतत्सूक्ष्मस्य च द्वारं कार्याणां कारणं त्वहम् ।

---

half ). $T_2$ इच्छसि ; $G_{1.3}$ अर्हति ( for °सि ). $M_{1-3.4}$ ( second time ) श्रोतुमर्हसि तत्त्वतः ( for the post. half ). — ( L. 469 ) $T_1$ पद्माक्षो ( for °ख्यो ). $M_4$ ( second time ) यत्तत्पद्ममभूत्पूर्वं ( for the prior half ). Kumbh. ed. तत्र ( for यत्र ) $T_1$ प्रजायते ( for व्यजायत ). — ( L. 470 ) $M_4$ ब्रह्मतश् ( for °णश् ). $G_2$ [ अ ]वधारयेत् ; M [उ]पधार्यतां ( for [अ]व° ). — ( L. 471 ) $T_1$ शिवात्तु ( hypermetric ) ( for शिवात् ). — $T_1$ om. line 474. — ( L. 474 ) Madras ed [आ]शु वै ( for [आ]शुग ). — ( L. 475 ) $T_3$ वेदभूत- ( for °व्रत- ). — ( L 476 ) $M_{1-3}$ कामगाः ( for नान्यथा ). — ( L. 478 ) $T_{1.2}$ $M_{1.3.4}$ [ए]व ( for [ए]वं ). — $T_1$ om. line 479. — ( L. 479 ) M जित- ( for जात- ). — ( L. 481 ) $M_4$ नान्योसीति विनिश्चितं ( for the post. half ). — ( L. 485 ) $T_1$ M न मे ( for ते न ). $M_4$ ते ( for मे ). — ( L. 486 ) $G_2$ सोपवासैर्. — $M_4$ reads lines 488–489 on marg. — ( L. 488 ) $T_1$ महामोहार्थपंके तु ; M °हमहार्पंक- ( for the prior half ). — ( L. 489 ) $T_2$ एकाकिनो ( for °न्तिनो ). $M_{1-3}$ इति ( for यति- ). $T_1$ याति मामेव सुव्रताः ( for the post. half ). — ( L. 490 ) $G_1$ सत्य- ( for सत्त्व- ). $D_{10}$ $G_2$ ह्येषां ( for येषां ). — ( L. 491 ) M महात्मानः ( for स्वमात्मानं ). $M_4$ मामजम् ( for आत्मानम् ). — ( L. 492 ) $T_1$ M येषु ( for तेषु ). $T_2$ [उ]पास्थितम् ( for [अ]व° ). — After line 492, $T_1$ ins. :

मामेव ते संप्रयान्ति शुभाचारसमन्विताः ।

— $T_{1.2}$ om. line 493. — ( L. 494 ) $T_1$ M आख्यातं ( for °नं ). — ( L. 495 ) M यत्तोहं ( for यत्नेन ). M इच्छसि ( for अर्हसि ). — ( L. 496 ) $T_1$ M -निरता ( for -नियता ). — ( L. 497 ) M ये ( for ते ). Madras ed. एतांस् ( for यांस्तांस् ). — ( L. 498 ) $T_1$ M सांख्ययोग- ; Kumbh. ed. शास्त्रदृढ- ( for °दृष्ट- ). $T_1$ [अ]न्यतः ( for °था ). — ( L. 499 ) $T_1$ यत्नेन परमव्ययं ( for the post. half ). — ( L. 500 ) $T_1$ [अ]प्रकृत- ( for [अ]प्यधृत- ). — ( L. 502 ) $D_{10}$ $G_2$ दानेन ( for ज्ञा° ). M [आ]त्मवान् ( for °विच् ). — ( L. 504 ) $D_{10}$ श्रद्धाभि- ( for शुद्धाभि- ). — $T_1$ om. ( hapl. ) line 509. — ( L. 509 ) M [ए]व ( for च ). $G_4$ [अ]पि ( for [आ]पः ). — ( L. 510 ) $T_1$ जातानि ( for सर्वाणि ). $T_1$ सर्वाण्येव ( for प्रजायन्ते ). — $T_1$ om. line 511. — ( L. 513 ) $M_4$ एतं ( for एतत् ).

दृष्टो वै भवता तस्मात्सरस्यमितविक्रम ।
ब्रह्मणो यदहोरात्रं संख्यानज्ञैर्विभाव्यते ।
एष कालस्त्वया तत्र सरहस्यमुपागतः ।
मां यज्ञमाहुर्यज्ञज्ञा वेदं वेदविदो जनाः ।
मुनयश्चापि मामेव जपयज्ञं प्रचक्षते ।
वक्ता मन्ता रसयिता घ्राता द्रष्टा प्रदर्शकः ।
बोद्धा बोधयिता चाहं गन्ता श्रोता चिदात्मकः ।
मामिष्ट्वा स्वर्गमायान्ति तथा चाप्नुवते महत् ।
ज्ञात्वा मामेव चैधन्ते निःसङ्गेनान्तरात्मना ।
अहं तेजो द्विजातीनां मम तेजो द्विजातयः ।
मम यस्तेजसा देहः सोऽग्निरित्येव गम्यताम् ।
प्राणपालः शरीरेऽहं योगिनामहमीश्वरः ।
सांख्यानामिदमेवाग्रे मयि सर्वमिदं जगत् ।
धर्ममर्थं च कामं च मोक्षं चैवार्जवं जपम् ।
तमः सत्त्वं रजश्चैव कर्मजं च भवाप्ययम् ।
स तदाहं तथारूपस्त्वया दृष्टः सनातनः ।
ततस्त्वहं परतरः शक्यः कालेन वेदितुम् ।
मम यत्परमं गुह्यं शाश्वतं ध्रुवमव्ययम् ।
तदेवं परमो गुह्यो देवो नारायणो हरिः ।
न तच्छक्यं भुजंगारे वेत्तुमभ्युदयान्वितैः ।
निरारम्भनमस्कारा निराशीर्बन्धनास्तथा ।
गच्छन्ति तं महात्मानः परं ब्रह्म सनातनम् ।
स्थूलोऽहमेवं विहग त्वया दृष्टस्तथानघ ।
एतच्चापि न वेत्त्यन्यस्त्वामृते पन्नगाशन ।
मा मतिस्तव गान्नाशमेषा गतिरनुत्तमा ।
मद्भक्तो भव नित्यं त्वं ततो वेत्स्यसि मे पदम् ।
एतत्ते सर्वमाख्यातं रहस्यं दिव्यमानुषम् ।
एतच्छ्रेयः परं चैतत्पन्थानं विद्धि मोक्षिणाम् ।
एवमुक्त्वा स भगवांस्तत्रैवान्तरधीयत ।
पश्यतो मे महायोगी जगामात्मगतिर्गतिम् ।
एतदेवंविधं तस्य महिमानं महात्मनः ।
अच्युतस्याप्रमेयस्य दृष्टवानस्मि यत्पुरा ।
एतद्वः सर्वमाख्यातं चेष्टितं तस्य धीमतः ।
मयानुभूतं प्रत्यक्षं दृष्ट्वा चाद्भुतकर्मणः ।

Colophon.

ऋषयः ।

अहो श्रावितमाख्यानं भवतात्यद्भुतं महत् ।
पुण्यं यशस्यमायुष्यं स्वर्ग्यं स्वस्त्ययनं महत् ।
एतत्पवित्रं देवानामेतद्गुह्यं परंतप ।
एतज्ज्ञानवतां ज्ञेयमेषा गतिरनुत्तमा ।

Kumbh. ed. तद् ( for च ). — $M_{1-3}$ om. line 514. — (L. 515) $T_1$ दिवारात्रं; Kumbh. ed. अहोरात्र- ( for °त्रं ). Kumbh. ed. -संख्याभिज्ञैर् ( for °नज्ञैर् ). — (L. 516) $M_{1-3}$ तात ( for तत्र ). $T_1$ $M_{1-3}$ उपासितः ( for °गतः ). $M_4$ पतंग समुपासितः ( for the post. half ). — (L. 517) $T_1$ सर्वं ( for वेदं ). — (L. 518) M मानसं ( for मुनयश्च ). M ज्ञानयज्ञं ( for जप° ). — (L. 519) $T_1$ M स्प्रष्टा ( for द्रष्टा ). — (L. 520) $M_4$ तथासिता ( for चिदात्मकः ). — (L. 522) $T_1$ मोदंते; $T_2$ चैवं ते ( for चैधन्ते ). — (L. 524) M तै- ( $M_{2,3}$ ते )जसो ( for तेजसा ). $D_{10}$ $G_4$ [अ]व- ( for [ए]व ). — (L. 526) $T_1$ [अ]द्यं; M [अ]ग्यो ( for [अ]ग्रे ). $G_{1,3}$ M अहं ( for इदं ). — (L. 527) $T_1$ धर्माधर्मं ( for धर्ममर्थं ). M धर्मश्चार्थश्च कामश्च ( for the prior half ). $G_2$ परं ( for जपम् ). M मोक्षश्चैवार्जवं जपः ( for the post. half ). — After line 527, $T_1$ reads line 532, repeating it in its proper place. $T_1$ om. line 528. — (L. 528) M कर्मजं चाहमव्ययं ( for the post. half ). — (L. 529) $T_3$ $G_2$ M तथा ( for तदा ). — (L. 531) $M_{1-3}$ यत्स्यात्परं ( for यत्परमं ). $M_4$ परम् ( for ध्रुवम् ). — (L. 532) $G_2$ तदेष ( for °वं ). $D_{10}$ परमं ( for °मो ). $T_1$ ( first time ) तदेव परमं गुह्यं; M स ए( $M_4$ तदे )ष परमो देवो ( for the prior half ). M गुह्यो ( for देवो ). — (L. 533) $G_2$ ततश् ( for न तच् ). — (L. 534) $G_2$ निरालंब- ( for °रम्भ- ). — (L. 535) $T_{1,3}$ $G_{2,4}$ M महात्मानं ( for °त्मानः ). — (L. 536) $M_4$ तदा ( for तथा ). — (L. 537) $T_2$ वा ( for च ). — (L. 538) $T_2$ $G_2$ M ते ष्य( $M_{1,4}$ तेध्य )गान् ( for तव गान् ). $T_1$ मा गास्तव मतिर्नाशम् ( for the prior half ). — $T_1$ om. line 539. — (L. 539) M परं ( for पदम् ). — (L. 540) $G_2$ दिव्यम् ( for सर्वम् ). — (L. 541) $M_1$ ततश् ( for एतच् ). $G_3$ $M_2$ [ए]व ( for [ए]तत् ). $T_1$ बद्धानां विद्धि मोक्षणं ( for the post. half ). — Before line 542, Madras ed. ins. सुपर्णः. — (L. 544) $G_2$ एवम्; $M_{1-3}$ एतम् ( for एतद् ). $T_1$ महाद्युतेः ( for °त्मनः ). — (L. 546) $T_3$ एतच्च; $G_2$ तथ्यतः ( for एतद्वः ). — Colophon. *Sub-parvan :* $D_{10}$ M दानधर्म. — *Adhy name :* $D_{10}$ $T_{2,3}$ G सुपर्णवैकुंठसंवादः; $M_{1-3}$ सुपर्णवैकुंठसंवादे गुह्यकथा; $M_4$ वैकुंठसुपर्णसंवादे गुह्यकथनं. — *Adhy. no. :* $T_1$ M 43; $T_{2,3}$ G 44. — (L. 548) $M_{1-3}$ श्रोतव्यम् ( for श्रावितम् ). $T_1$ $M_{1-3}$ श्रावितं ( for [अ]त्यद्भुतं ). — $D_{10}$ reads line 549 twice. — (L. 550) $T_1$ परं ज्ञानं तथा ( for ज्ञान- वतां ). — (L. 552) $T_1$ सदा ( for कथां ). — (L. 553) $T_1$ आप्नुयात् ( for प्रा° ). M दिव्यान् ( for पुण्यान् ).

य इमां श्रावयेद्विद्वान्कथां पर्वसु पर्वसु ।
स लोकान्प्राप्नुयात्पुण्यान्देवर्षिभिरभिष्टुतान् ।
श्राद्धकाले च विप्राणां य इमां श्रावयेच्छुचिः ।
न तत्र रक्षसां भागो नासुराणां च विद्यते ।
अनसूयुर्जितक्रोधः सर्वसत्त्वहिते रतः ।
यः पठेत्सततं युक्तः स व्रजेत्तत्सलोकताम् ।
वेदान्पारयते विप्रो राजा विजयवान्भवेत् ।
वैश्यस्तु धनधान्याढ्यः शूद्रः सुखमवाप्नुयात् ।

भीष्मः ।

ततस्ते मुनयः सर्वे संपूज्य विनतासुतम् ।
स्वानेव चाश्रमाञ्जग्मुर्बभूवुः शान्तितत्पराः ।
स्थूलदर्शिभिराक्रुष्टो दुर्ज्ञेयो ह्यकृतात्मभिः ।
एषा श्रुतिर्महाराज धर्म्या धर्मभृतां वर ।
सुराणां ब्रह्मणा प्रोक्ता विस्मितानां परंतप ।
मयाप्येषा कथा तात कथिता मातुरन्तिके ।
वसुभिः सत्त्वसंपन्नैस्तवाप्येषा मयोच्यते ।
तदग्निहोत्रपरमा जपयज्ञपरायणाः ।
निराशीर्बन्धनाः सन्तः प्रयान्त्यक्षरसाम्यताम् ।
आरम्भयज्ञानुत्सृज्य जपहोमपरायणाः ।
ध्यायन्तो मनसा विष्णुं गच्छन्ति परमां गतिम् ।
तदेव परमो मोक्षो मोक्षद्वारं च भारत ।
यथा विनिश्चितात्मानो गच्छन्ति परमां गतिम् ।

Colophon.

4

After 13. 14. 84, N Kumbh. ed. ins. :

जनन्यास्तद्वचः श्रुत्वा तदाप्रभृति शत्रुहन् ।
प्राञ्जलिः प्रणतो भूत्वा इदमम्बामचोदयम् ।
कोऽयमम्ब महादेवः स कथं च प्रसीदति ।
कुत्र वा वसते देवो द्रष्टव्यो वा कथं च सः ।
तुष्यते वा कथं शर्वो रूपं वा तस्य कीदृशम् ।
कथं ज्ञेयः प्रसन्नो वा दर्शयेज्जननी मम ।
एवमुक्ता तदा कृष्ण माता मे सुतवत्सला ।
मूर्धन्याघ्राय गोविन्द सबाष्पाकुललोचना ।
प्रमार्जन्ती च गात्राणि मम वै मधुसूदन ।
धैर्यमालम्ब्य जननी इदमाह सुरोत्तम ।

अम्बा ।

दुर्विज्ञेयो महादेवो दुराराध्यो दुरन्तकः ।
दुराधर्ष्यश्च दुर्ग्राह्यो दुर्दृश्यो ह्यकृतात्मभिः ।

---

— (L. 554) $M_{1, 3, 4}$ श्रुति (for शुचिः). — (L. 556) $G_4$ -सत्य- (for -सत्त्व-). $T_1$ M -सुखे (for -हिते). — (L. 557) $G_2$ यत् (for यः). — For line 557, $T_1$ subst. :

सर्वतः सुखसंयुक्तः सर्वलोकानवाप्नुयात् ।

— (L. 558) M धारयते (for पा°). $T_1$ देवांस्तर्पयते विप्रो (for the prior half). — (L. 559) $G_2$ वैश्यस्तु धनमाप्नोति (for the prior half). — After line 559, $M_{1-3}$ ins. :

एवंप्रकारो भगवान्स्वेच्छारूपधरोऽव्ययः ।

— After the above, $M_{1, 2}$ read line 562. — (L. 561) $M_{1-3}$ स्वमाश्रमपदं जग्मुर्; $M_4$ स्वानाश्रमपदाञ्जग्मुर् (for the prior half). M चाग्नि- (for शान्ति-). — (L. 562) $T_2$ $G_{3, 4}$ -दृष्टिभिर् (for -दर्शि°). $T_1$ कृष्णोयं (for आक्रुष्टो). $T_1$ दुर्गोयं (for दुर्ज्ञेयो). — (L. 566) $D_{10}$ $T_{2, 3}$ G सर्व-; M वसु- (for सत्त्व-). $T_1$ कथाप्येषा मया श्रुता (for the post. half). — (L. 568) $T_1$ $M_4$ -सात्मतां (for -साम्यताम्). $M_{1-3}$ भवंत्यक्षरसात्मकाः (for the post. half). — (L. 570) M मनसा तमनुध्याता (for the prior half). — (L. 571) M [ए]व (for [द]व). — (L. 572) $D_{10}$ यदा (for यथा). — Colophon. *Sub-parvan* : $D_{10}$ M दानधर्म. — *Adhy. name* : $T_2$ सुपर्णकपिसंवादे भगवद्दर्शनमाहात्म्यकथनं; M कथाप्रशंसनं नाम सुपर्णवैकुंठ($M_4$ वैकुंठसुपर्ण)संवादः. — *Adhy. no.* : $T_1$ M 44; $T_{2, 3}$ G 45.

4

(L. 2) $D_{1-9}$ प्रयतो (for प्रणतो). $D_{2, 3}$ चेदम्; $D_5$ इमम् (for इदम्). $D_{4-8}$ अनोदयं (for अचो°). — (L. 3) $B_3$ अद्य; $D_1$ अस्य (for अम्ब). $B_3$ $D_{1, 8-9}$ कथं चैव ($B_3$ च स; $D_1$ देव) (for स कथं च). — (L. 4) $V_1$ अत्र (for कुत्र). $B_5$ $Dn_1, n_2$ $D_{4, 6, 7, 9, 10}$ कथंचन (for कथं च सः). — (L. 5) $D_{2, 3}$ इज्यते (for तुष्यते). $Dn_1, n_2$ तस्य च (for वा तस्य). — (L. 6) $B_1$ तस्य (for ज्ञेयः). $D_{2, 3}$ च कथं (for जननी). $D_1$ सदा (for मम). — (L. 7) $D_{2, 3}$ ततः (for तदा). $D_9$ वसु- (for सुत-). — (L. 8) $D_{1-9}$ मूर्ध्नि च (for मूर्धनि). $D_1$ गोविंदं (for °द). — (L. 9) $B_3$ $Dn_3$ $D_{2-6, 8-10}$ प्रमार्जयंती (for प्रमार्जन्ती च). — (L. 10) $V_1$ $B_{1, 2, 5}$ $Dn_1, n_2$ दैन्यम् (for धैर्यम्). $D_{4-9}$ मामाह (for जननी). $B_4$ दैन्यमालक्ष्य जननी (for the prior half). $D_{2, 3}$ चेदम् (for इदम्). $Dn_2$ सुरोत्तमं; $D_{1-3}$ नरोत्तम (for सु°). $D_{4-9}$ जननी पुरुषोत्तम (for the post. half). — (L. 11) $D_{10}$ महाबाहो (for °देवो). $B_{1, 2}$ $D_3$ दुराराधो; $B_4$ $Dn_1, n_2$ °धारो; $D_2$ °धर्षो (for °राध्यो). $B_4$ दुरन्वयः (for °न्तकः). — (L. 12) $B_{2, 4}$ दुराधर्षश्; $Dn_1, n_2$ °बाधश्; $D_5$ °राध्यश् (for °धृष्यश्). $D_2$ दुर्दर्शो हि; $D_{6-9}$ दुर्दर्शश्च (for दुर्दृश्यो हि). — (L. 13) $D_{1-8}$ दिव्यानि (for रूपाणि). $D_1$ देवदेवः पुरा किल; $D_{2, 3}$ देव-

यस्य रूपाण्यनेकानि प्रवदन्ति मनीषिणः ।
स्थानानि च विचित्राणि प्रसादाश्चाप्यनेकशः ।
को हि तत्त्वेन तद्वेद ईशस्य चरितं शुभम् ।
कृतवान्यानि रूपाणि देवदेवः पुरा किल ।
क्रीडते च यथा शर्वः प्रसीदति यथा च वै ।
हृदिस्थः सर्वभूतानां विश्वरूपो महेश्वरः ।
भक्तानामनुकम्पार्थं दर्शनं च यथाश्रुतम् ।
मुनीनां ब्रुवतां दिव्यामीशानचरितां कथाम् ।
कृतवान्यानि रूपाणि कथितानि दिवौकसैः ।
अनुग्रहार्थं विप्राणां शृणु वत्स समासतः ।
तानि ते कीर्तयिष्यामि यन्मां त्वं परिपृच्छसि ।
ब्रह्मविष्णुसुरेन्द्राणां रुद्रादित्याश्विनामपि ।
विश्वेषामपि देवानां वपुर्धारयते भवः ।
नराणां देवनारीणां तथा प्रेतपिशाचयोः ।
किरातशबराणां च जलजानामनेकशः ।
करोति भगवान्रूपमाटव्यशबराण्यपि ।
कूर्मो मत्स्यस्तथा शङ्खः प्रवालाङ्कुरभूषणः ।
यक्षराक्षससर्पाणां दैत्यदानवयोरपि ।
वपुर्धारयते देवो भूयश्च बिलवासिनाम् ।
व्याघ्रसिंहमृगाणां च तरक्ष्वृक्षपतत्रिणाम् ।
उलूकश्वशृगालानां रूपाणि कुरुतेऽपि च ।
हंसकाकमयूराणां कृकलासकसारसाम् ।
रूपाणि च बलाकानां गृध्रचक्राङ्गयोरपि ।
करोति वा स रूपाणि धारयत्यपि पर्वतम् ।
गोरूपी च महादेवो हस्त्यश्वोष्ट्रखराकृतिः ।
छागशार्दूलरूपश्च अनेकमृगरूपधृक् ।
अण्डजानां च दिव्यानां वपुर्धारयते भवः ।
दण्डी छत्री च कुण्डी च द्विजानां धारणस्तथा ।
षण्मुखो वै बहुमुखस्त्रिनेत्रो बहुशीर्षकः ।
अनेककटिपादश्च अनेकोदरवक्त्रधृक् ।
अनेकपाणिपार्श्वश्च अनेकगणसंवृतः ।
ऋषिगन्धर्वरूपश्च सिद्धचारणरूपधृक् ।
भस्मपाण्डुरगात्रश्च चन्द्रार्धकृतभूषणः ।
अनेकरावसंघुष्टश्चानेकस्तुतिसंस्तुतः ।
सर्वभूतान्तकः सर्वः सर्वलोकप्रतिष्ठितः ।
सर्वलोकान्तरात्मा च सर्वगः सर्ववाद्यपि ।

देवस्य वै किल ( for the post. half ). — ( L. 14 ) D10 पवित्राणि ( for विचि° ). — After line 14, B1-4 Dn3 D1-7, 9, 10 ins. :

अचिन्त्यस्याप्रमेयस्य स्थाणो रूपाण्यनेकशः ।

[ D1-3 स्थानं ( for स्थाणो ). ]

— ( L. 15 ) B3 तत्त्वज्ञ ( for तद्वेद ). D2, 3 महेश- ; D4-9 शिवस्य ( for ईशस्य ). — ( L. 16 ) D1 कृतवाक्यानि रूपाणि ( for the prior half ). D6, 8, 9 देवरूपः ( for °देवः ). — ( L. 17 ) V1 B1, 3, 4 Dn1, n2 D5 तथा ( for the first यथा ). Dn1 तथा ( for यथा ). D4-9 स ( for च ). — ( L. 18 ) D4-9 महाबलः ( for महेश्वरः ). — ( L. 19 ) D1 -कंपार्थी ( for °र्थं ). D3 om. ( hapl. ) from दर्शनं up to अनुग्रहार्थं ( in line 22 ). — ( L. 20 ) D4-9 वदतां ( for ब्रुवतां ). Dn1, n2 D5 दिव्यम् ( for दिव्याम् ). Dn1, n2 D5 ईशानचरितं शुभं ( D5 तथा ) ( for the post. half ). — ( L. 21 ) D4-9 कर्माणि ( for रूपाणि ). D4-9 सुरोत्तमैः ( for दिवौकसैः ). — ( L. 22 ) Dn1 समावृतः ; D5-9 °हितः ( for °सतः ). — ( L. 23 ) Dn1 मा ( for मां ). — Before line 24, some MSS. ins. अम्बा. D4 om. lines 25-26. — ( L. 25 ) D5, 6, 8, 9 विभुः ( for भवः ). — D1, 3 om. line 26. — ( L. 26 ) B1-4 Dn3 D2, 5, 8-10 चैव ( for देव- ). — ( L. 27 ) D7 अनेकधा ; D8 अशेषतः ( for अनेकशः ). — ( L. 28 ) B1 रूपाणि ( for रूपम् ). D1-10 -शबरेषु ( for °राणि ). — ( L. 29 ) D4-9 प्रवालोत्करभूषणः ( for the post. half ). — ( L. 30 ) D4, 6-9 यक्षरक्षोथ सर्पाणां ( for the prior half ). — ( L. 31 ) D1, 3 भूयश्च जलचारिणां ; D10 भूयश्चलितवासिनां ( for the post. half ). — ( L. 32 ) B1 Dn1 तरक्षर्क्ष- ; D10 तरक्ष्वर्क्ष- ( for तरक्ष्वृक्ष- ). D4-9 तरक्षमृगपक्षिणां ( for the post. half ). — D4-7, 9 om. lines 33-34. — ( L. 33 ) B4 उलूकानां ( for उलूकश्व- ). B1 वपुर्धारयते भवः ( for the post. half ). — ( L. 34 ) D1-3 हंसकंक- ( for °काक- ). D1-3 कृकिलासकसारसां ( for the post. half ). — ( L. 35 ) B2, 5 Dn3 D1, 5, 10 गृध्रचक्राह्वयोरपि ; D4, 6-8 °चक्रांकयोरपि ( for the post. half ). — ( L. 36 ) B1 D10 चापि ; D4-7, 9 चाथ ; D8 चैव ( for वा स ). D3 तारयति ( for धा° ). D7 [अ]थ ( for [अ]पि ). D1-9 पर्वतान् ( for °तम् ). — ( L. 37 ) V1 Dn1, n2 D10 गोरूपं ( for °पी ). B1, 3 D1-9 गोरूपी हरि- B1, 3 ऋक्ष )रूपी च ( for the prior half ). — ( L. 38 ) D3 तथानेकमृगाधिपः ; D6 अनेकोदरचक्रधृक् ( for the post. half ). — ( L. 39 ) D1, 3 रूपं ( for वपुर् ). B3 प्रभुः ( for भवः ). — ( L. 40 ) D2, 3 छत्री दंडी ( by transp. ). D1 दंडी कुंडी च छत्री च ; D4-9 दंडी कुंडी च मुंडी च ( for the prior half ). B1, 3-5 D10 धारणं ; Dn D4, 6-9 वा( D7-9 चा )रणस् ( for धा° ). — ( L 41 ) B2, 5 त्रिमुखो ( for त्रिनेत्रो ). D2, 3 -नेत्रकः ( for -शीर्षकः ). — ( L. 42 ) Dn3 -रत्नधृक् ; D1, 2 -चक्रधृत् ( for °धृक् ). — ( L. 43 ) B4 D7-9 -गुण- ( for -गण- ). — ( L. 44 ) V1 D1-3 -वाद्यधृक् ( D1, 2 °धृत् ; D3 °भृत् ) ; Kumbh. ed. -रूपधृत् ( for °धृक् ). — ( L. 45 ) D4 चंद्रार्क ; D5, 6, 8, 9 चंद्रार्क- ( for °र्ध- ). D1-3 -शेखरः ( for

सर्वत्र भगवाञ्ज्ञेयो हृदिस्थः सर्वदेहिनाम् ।
यो हि यं कामयेत्कामं यस्मिन्नर्थेऽर्च्यते पुनः ।
तत्सर्वं वेत्ति देवेशस्तं प्रपद्य यदीच्छसि ।
नन्दते कुप्यते चापि तथा हुंकारयत्यपि ।
चक्री शूली गदापाणिर्मुसली खड्गपट्टिशी ।
भूधरो नागमौञ्जी च नागकुण्डलकुण्डली ।
नागयज्ञोपवीती च नागचर्मोत्तरच्छदः ।
हसते गायते चैव नृत्यते सुमनोहरम् ।
वादयत्यपि वाद्यानि विचित्राणि गणैर्वृतः ।
वल्गते जृम्भते चैव रुदते रोदयत्यपि ।
उन्मत्तमत्तरूपं च भाषते चापि सुस्वरः ।
अतीव हसते रौद्रस्त्रासयन्नयनैर्जनम् ।
जागर्ति चैव स्वपिति जृम्भते च यथासुखम् ।
जपते जप्यते चैव तपते तप्यते पुनः ।
ददाति प्रतिगृह्णाति युञ्जते ध्यायतेऽपि च ।
वेदीमध्ये तथा यूपे गोष्ठमध्ये हुताशने ।
दृश्यते दृश्यते चापि बालो वृद्धो युवा तथा ।
क्रीडते ऋषिकन्याभिर्ऋषिपत्नीभिरेव च ।
ऊर्ध्वकेशो महाशेफो नग्नो विकृतलोचनः ।
गौरः श्यामस्तथा कृष्णः पाण्डुरो धूमलोहितः ।
विकृताक्षो विशालाक्षो दिग्वासाः सर्ववासकः ।
अरूपस्याद्यरूपस्य अतिरूपाद्यरूपिणः ।
अनाद्यन्तमजस्यान्तं वेत्स्यते कोऽस्य तत्त्वतः ।
हृदि प्राणो मनो जीवो योगात्मा योगसंज्ञितः ।
ध्यानं तत्परमात्मा च भावग्राह्यो महेश्वरः ।
वादको गायनश्चैव सहस्रशतलोचनः ।
एकवक्त्रो द्विवक्त्रश्च त्रिवक्त्रोऽनेकवक्त्रकः ।
तद्भक्तस्तद्गतो नित्यं तन्निष्ठस्तत्परायणः ।
भज पुत्र महादेवं ततः प्राप्स्यसि चेप्सितम् ।

---

-भूषणः ). — ( L. 46 ) D1–8 अनेकनामसंघुष्टश् ( for the prior half ). D6–10 अनेक- ( for चानेक- ). Dn3 -श्रुति- ; D7 -श्रुति- ( for -स्तुति- ). Dn1. n2 D2. 8 -संस्कृतः ( for -संस्तुतः ). — ( L. 47 ) B1. 2. 5 D1–3 शर्वः ( for सर्वः ). D3 सर्वलोके. — ( L. 48 ) B3 D10 सर्वगः सर्ववागपि ( for the post. half ). — ( L. 49 ) B1 देवो ( for ज्ञेयो ). — ( L. 50 ) V1 प्रार्थयेत् ( for काम° ). D2 कार्यं ( for कामं ). B1. 5 [s]र्थ्यते ( for ऽर्च्यते ). D2. 8 यस्मिन्नर्थे यदिच्छसि ( for the post. half ). — D3 om. ( hapl. ) line 51. — ( L. 51 ) D2 वेद ( for वेत्ति ). — ( L. 52 ) B2. 3. 5 तथा क्रीडां करोत्यपि ; D1–3 तथा किंकरयत्यपि ; D4–7. 9 पिनाकी कारयत्यपि ; D10 स क्रीडां कारयत्यपि ( for the post. half ). — ( L. 53 ) D1–8 दंड- ( for खड्ग- ). Kumbh. ed. -पट्टसी ( for -पट्टिशी ). — ( L. 54 ) D10 भूचरो ( for भूधरो ). D7 -मौंजीवान् ( for -मौञ्जी च ). — ( L. 55 ) D1. 8 -यशोत्तर- ( for -चर्मो° ). — ( L. 56 ) After the prior half of line 56, D7 reads the prior half and the post. half of line 58 ( transposed ), repeating the same in its proper place. D8 om. ( hapl. ) from the post. half up to the prior of line 58. B1 Dn1. n2 D2 च ( for सु- ). — D3 om. lines 57–59. — ( L. 57 ) B4 Dn1. n2 गणैर्युतः ; D4–6 गणान्वितः ( for गणैर्वृतः ). — ( L. 58 ) D9 om. ( hapl. ) from चैव up to जृम्भते ( in line 61 ). D7 ( second time ) एवं चेष्टां करोति सः ( for the post. half ). — ( L. 59 ) Dn3 D1. 4–8 -रूपश्च ( for -रूपं ). B1 सस्वनः ; B4 D1. 2. 4–8 सु( D8 स )स्वरं ( for सुस्वरः ). — ( L. 60 ) B5 स्वपरैर् ( for नयनैर् ). B4 Dn2 D1–7 जगत् ( for जनम् ). — ( L. 61 ) Dn3 D2. 8 तथा सुखं. — ( L. 62 ) B1 जप्यते जपते चैव तप्यते तपते पुनः. — ( L. 63 ) D1–3 युनक्ति ; D4–9 भुंजते ( for युञ्जते ). — ( L. 64 ) D7 यथा ( for तथा ). D2 गोष्ठी- ( for गोष्ठ- ). — ( L. 65 ) D4–9 स्पृश्यते ( for the second दृश्यते ). D5 तथा युवा ( by transp. ). — ( L. 66 ) D1 चापि ; D2 चर्षि- ( for the first ऋषि- ). D1. 7 -पुत्रीभिर् ( for -पत्नी° ). — ( L. 67 ) B1 Dn3 D2. 3 महाकेशो ; D4–7. 9 °नासो ( for °शेफो ). D4–9 भैरवो ( for नग्नो ). D7 रौद्रलोचनः ; D8 विकृताननः ( for °तलोचनः ). — ( L. 68 ) V1 गौरः कृष्णस्तथा श्यामः ( for the prior half ). B1. 2. 4. 5 Dn3 D1–3. 7. 10 धूम्र- ; B3 नील- ( for धूम- ). V1 पांडुरो धूम्रलोचनः ( for the post. half ). — ( L. 69 ) D2. 8 विरूपाक्षो ; D4 विशालास्यो ( for °लाक्षो ). B1 पूर्व- ( for सर्व- ). D2. 8 -वस्त्रधृत् ; D4–10 -वासधृक् ( for -वासकः ). D1 विश्वाशाः सर्ववस्त्रधृत् ( for the post. half ). — ( L. 70 ) B1 सुरूपस्य ( for अरू° ). D4–6 स- ( for [आ]द्य- ). B3 -रूपिणं. V1 D1–4. 8. 10 अतिरूपस्य रूपिणः ( for the post. half ). — ( L. 71 ) D7 अजं शांतं ( for अजस्यान्तं ). D4–9 वेत्स्यसे न स्म तत्त्वतः ( for the post. half ). — D2 om. lines 72–74. — ( L. 72 ) D1. 3 सर्व- ( for योग- ). D4–6. 8. 9 -संभवः ; D7 -संततः ( for -संज्ञितः ). — ( L. 75 ) D4–6. 9 नैक- ( for ऽनेक- ). — ( L. 76 ) D5 तद्भक्तस्य ( for तन्निष्ठस् ). — ( L. 77 ) D1–7. 9 प्राप्यसि ध्रुवमी( D4. 5 त्वमभी- ; D6 च मनी )प्सितं ; D8 प्राप्स्यसि ध्रुवमव्ययं ( for the post. half ).

## 5

After 13. 14. 99, N Kumbh. ed. ins. :

उपमन्युः ।

सदसद्व्यक्तमव्यक्तं यमाहुर्ब्रह्मवादिनः ।
नित्यमेकमनेकं च वरं तस्माद्वृणोम्यहम् ।
अनादिमध्यपर्यन्तं ज्ञानैश्वर्यमचिन्तितम् ।
आत्मानं परमं यस्माद्वरं तस्माद्वृणीमहे ।
ऐश्वर्यं सकलं यस्मादनुत्पादितमव्ययम् ।
अबीजाद्बीजसंभूतं वरं तस्माद्वृणीमहे ।
तमसः परमं ज्योतिस्तपस्तद्वृत्तिनां परम् ।
यं ज्ञात्वा नानुशोचन्ति वरं तस्माद्वृणीमहे ।
भूतभावनभावज्ञं सर्वभूताभिभावनम् ।
सर्वगं सर्वदं देवं पूजयामि पुरंदर ।
हेतुवादैर्विनिर्मुक्तं सांख्ययोगार्थदं परम् ।
यमुपासन्ति तत्त्वज्ञा वरं तस्माद्वृणीमहे ।
मघवन्मघवात्मानं यं वदन्ति सुरेश्वरम् ।
सर्वभूतगुरुं देवं वरं तस्माद्वृणीमहे ।
यः पूर्वमसृजद्देवं ब्रह्माणं लोकभावनम् ।
अण्डमाकाशमापूर्य वरं तस्माद्वृणीमहे ।
अग्निरापोऽनिलः पृथ्वी खं बुद्धिश्च मनो महान् ।
स्रष्टा चैषां भवेद्योऽन्यो ब्रूहि कः परमेश्वरात् ।
मनो मतिरहंकारस्तन्मात्राणीन्द्रियाणि च ।
ब्रूहि चैषां भवेच्छक्र कोऽन्योऽस्ति परमः शिवात् ।
स्रष्टारं भुवनस्येह वदन्तीह पितामहम् ।
आराध्य स तु देवेशमश्नुते महतीं श्रियम् ।
भगवत्युत्तमैश्वर्यं ब्रह्मविष्णुपुरोगमम् ।
विद्यते वै महादेवाद्ब्रूहि कः परमेश्वरात् ।
दैत्यदानवमुख्यानामाधिपत्यारिमर्दनात् ।
कोऽन्यः शक्नोति देवेशादृते संपादितुं सुतान् ।
दिक्कालसूर्यतेजांसि ग्रहवाय्विन्दुतारकाः ।
विद्धि त्वेते महादेवाद्ब्रूहि कः परमेश्वरात् ।

---

5

— ( L. 2 ) D7 तद् ( for च ). V1 B Dn वृणीमहे ( for वृणोम्यहम् ). — After line 2, D1 reads line 6. D2. 5. 7. 9. 10 om. ( hapl. ) lines 3–4. D4. 6 om. ( hapl. ) lines 3–6. — ( L. 3 ) B4 विचिंतितं ; D8 समन्वितं ( for अचिन्तितम् ). — ( L. 4 ) B2. 3. 5 D1. 3. 8 आनंदानां परं यस्माद् ( for the prior half ). B2 ( marg. as above ) D1. 8 वृणोम्यहं ( for वृणीमहे ). — After line 4, D10 reads line 8. B3 om. ( hapl. ) lines 5–12. — ( L. 5 ) D2 तस्माद् ( for य° ). — ( L. 6 ) D10 बीजकं ( for बीजसं- ). D5 अबीजं बीजमव्यक्तं ( for the prior half ). D1–3. 7. 9. 10 वृणोम्यहं ( for वृणीमहे ). — After line 6, D7 reads lines 13–14. — ( L. 7 ) B1. 5 D3. 4. 6. 7. 9 तपसः ( for तमसः ). B5 D10 तत्पदं ( for तपस्तद् ). D1–3 तपो यद्वृत्तिमत्परं ; D4. 6–9 उपेयं वृजिनात्परं ( for the post. half ). — D2 om. line 8. D8 om. ( hapl. ) lines 8–9. — ( L. 8 ) D4. 9 यच्च ज्ञात्वा न शोचंति ( for the prior half ). D1. 4. 7–9 वृणोम्यहं ( for वृणीमहे ). — After line 8, D1. 6. 7 read lines 15–16. D9 om. ( hapl. ) lines 9–12. — ( L. 9 ) Dn8 सर्व- ( for भूत- ). D1 -भूतज्ञं ( for -भावज्ञं ). D1. 4. 6. 7. 10 -भूताद्रि- ( D10 °धि- ) ( for °भि- ). B4 सर्वभूतविभावनं ( for the post. half ). — D5 repeats lines 10–12 after line 16. — ( L. 10 ) D10 सर्वेशं ( for सर्वगं ). D5 ( both times ) सर्वगं ( for °दं ). B4 D1–4. 6. 7 वरयामि ( for पूज° ). D10 परं तस्माद्वृणोम्यहं ( for the post. half ). — ( L. 12 ) D5 ( both times ) धर्मज्ञा ( for तत्त्वज्ञा ). D1–4. 6. 10 वृणोम्यहं ( for वृणीमहे ). — After line 12, D10 ins. :

तस्माद्वरमहं काङ्क्षे निधनं वापि कौशिक ।
गच्छ वा तिष्ठ वा शक्र यथेष्टं बलसूदन ।

— After line 12, D4 reads lines 17–18. D6. 10 om. ( hapl. ) lines 13–14. — ( L. 13 ) B1 ये ( for यं ). — ( L. 14 ) B2 D7–9 रुद्रं ; B4 बभ्रुं ; D1 भद्रं ( for देवं ). D1. 7–9 वृणोम्यहं ( for वृणीमहे ). — ( L. 15 ) V1 Dn D10 यत् ( for यः ). — D5 om. line 16. — ( L. 16 ) D6–9 अंडमाकाशवत्पूर्वं ( for the prior half ). D1–4. 6–10 वृणोम्यहं ( for वृणीमहे ). — ( L. 18 ) B1 तेषां ; D1. 2 चैवं ; D4. 6. 8. 9 एषां ( for चैषां ). — ( L. 19 ) D4–9 बुद्धिर् ( for मतिर् ). — ( L. 20 ) V1 D4–9 तेषां ; D1–3 चैवं ( for चैषां ). V1 B1 Dn परमं ( for °मः ). B4 कोन्योस्ति परमेश्वरात् ( for the post. half ). — ( L. 21 ) B1 वदंति यं ; B3 D6–9 यं वदंति ; D1–3 वदंते यं ; D4 वदंति ह ; D10 वदंते यः ( for वदन्तीह ). — ( L. 22 ) D1–3 आराध्य तं देवगुरुम् ; D10 आराध्य शक्र देवेशम् ( for the prior half ). D10 सोश्नुते ( for अ° ). V1 महतां ; D5 परमां ( for महतीं ). — ( L. 23 ) D4. 6. 10 भगवन्पुत्रमैश्वर्यं ( for the prior half ). — ( L. 24 ) D1–3 विद्यतं ( for विद्यते ). D4. 7–9 महादेवे ( for °देवाद् ). D2. 8 को ब्रूहि ( by transp. ). D6 ऋते ब्रूहि महेश्वरात् ( for the post. half ). — D6 om. lines 25–26. — ( L. 25 ) Dn3 D2. 8 आधिपत्यविमर्दनात् ( for the post. half ). — V1 om. (hapl.) lines 26–30. D3 om. lines 26–28. — ( L. 26 ) B2. 3. 5 D1. 3. 7. 10 शास्तुं दितेः ( for संपादितुं ). — ( L.

अथोत्पत्तिविनाशे वा यज्ञस्य त्रिपुरस्य वा ।
दैत्यदानवमुख्यानामाधिपत्यारिमर्दनः ।
किं चात्र बहुभिः सूक्तैर्हेतुवादैः पुरंदर ।
सहस्रनयनं दृष्ट्वा त्वामेव सुरसत्तम ।
पूजितं सिद्धगन्धर्वैर्देवैश्च ऋषिभिस्तथा ।
देवदेवप्रसादेन तत्सर्वं कुशिकोत्तम ।
अव्यक्तमुक्तकेशाय सर्वगस्येदमात्मकम् ।
चेतनाचेतनाद्येषु शक्र विद्धि महेश्वरात् ।
भुवाद्येषु महान्तेषु लोकालोकान्तरेषु च ।
द्वीपस्थानेषु मेरोश्च विभवेष्वन्तरेषु च ।
भगवन्मघवन्देवं वदन्ते तत्त्वदर्शिनः ।
यदि देवाः सुराः शक्र पश्यन्त्यन्यां भवाकृतिम् ।
किं न गच्छन्ति शरणं मर्दिताश्चासुरैः सुराः ।
अभिघातेषु देवानां सयक्षोरगरक्षसाम् ।
परस्परविनाशेषु स्वस्थानैश्वर्यदो भवः ।
अन्धकस्याथ शुम्भस्य दुंदुभेर्महिषस्य च ।
यक्षेन्द्रबलरक्षःसु निवातकवचेषु च ।
वरदानावघाताय ब्रूहि कोऽन्यो महेश्वरात् ।
सुरासुरगुरोर्वक्त्रे कस्य रेतः पुरा हुतम् ।
कस्य वान्यस्य रेतस्तद्येन हैमो गिरिः कृतः ।
दिग्वासाः कीर्त्यते कोऽन्यो लोके कश्चोर्ध्वरेतसः ।
कस्य चार्धे स्थिता कान्ता अनङ्गः केन निर्जितः ।
ब्रूहीन्द्र परमं स्थानं कस्य देवैः प्रशस्यते ।
श्मशाने कस्य क्रीडार्थं नृत्ये वा कोऽभिभाष्यते ।
कस्यैश्वर्यं समानं वा भूतैः को वापि क्रीडते ।
कस्य तुल्यबला देवगणा ऐश्वर्यदर्पिताः ।
घुष्यते ह्यचलं स्थानं कस्य त्रैलोक्यपूजितम् ।
वर्षते तपते कोऽन्यो ज्वलते तेजसा च कः ।
कस्मादोषधिसंपत्तिः को वा धारयते वसु ।
प्रकामं क्रीडते को वा त्रैलोक्ये सचराचरे ।
ज्ञानसिद्धिक्रियायोगैः सेव्यमानश्च योगिभिः ।
ऋषिगन्धर्वसिद्धैश्च विहितं कारणं परम् ।
कर्मयज्ञक्रियायोगैः सेव्यमानः सुरासुरैः ।
नित्यं कर्मफलैर्हीनं तमहं कारणं वदे ।

---

28 ) Dn1 द्विवि त्वेते ; D2 विस्मितं ते ; D4. 6 त्रियते वै ; D7–9 विद्धि ते वै ; D10 सिद्धि प्रापुर् ( for विद्धि त्वेते ). —( L. 29 ) D1–9 अथोत्पत्तौ ( for °त्ति- ). —D1–3. 10 om. line 30. —( L. 30 ) B1 -सूदनः ( for -मर्दनः ). —D4. 6–9 om. line 31. —( L. 31 ) B2. 3. 5 वा ( for च ). B3 तूक्तैर् ( for सूक्तैर् ). —( L. 32 ) B1 D1 एवं ( for एव ). B5 त्वामेव पुरुषोत्तम ( for the post. half ). —D1–3 om. ( hapl. ) lines 33–34. —( L. 35 ) D2. 3 [ए]वम् ( for [इ]दम् ). D4–7. 9 सर्वगम्यं दमात्मनां ( for the post. half ). —( L. 36 ) D1–3 चेतनाचेतनाद्यानि ( for the prior half ). D1–3 विद्धि शक्र ( by transp. ); D5 शक्ति विद्धि. D10 महेश्वरं ( for °श्वरात् ). —( L. 37 ) B1 Dn3 भूराद्येषु ( for भुवा° ). —( L. 38 ) Dn1 -स्थानं च ( for -स्थानेषु ). D6 विभवे तु ( for °वेषु ). —D4. 6 om. lines 39–47. —( L. 39 ) B3 प्रभवन् ( for भगवन् ). B4 वदंति ( for वदन्ते ). —( L. 40 ) B1 यत्र ( for यदि ). B5 पुरा ( for सुराः ). B1 D7–9 यदि देवाः ( D7 देवाश्चैव ; D9 देवाः सर्वे ) सगंधर्वाः ( for the prior half ). B3–5 Dn3 D1–3. 5. 8–10 भवाद्गतिं ; D7 च मद्गतिं ( for भवाकृतिम् ). —( L. 41 ) V1 B3 D1–3. 10 नु ( for न ). V1 B4 Dn3 D1–3. 7 अर्दिताश् ( for म° ). D1. 5. 7–9 यक्षैः ; D2 अ° ( for चा° ). —( L. 42 ) D1 अति- ; D5. 7–9 प्रति- ( for अभि- ). —( L. 43 ) D1–3 स्वस्थानैश्वर्यहेतवे ( for the post. half ). —( L. 44 ) V1 B Dn D1–10 शुक्रस्य ( for शुम्भस्य ). D7–9 दुर्मतेर् ( for दुंदुभेर् ). —( L. 45 ) D7. 9 -कवचेन ( for °चेषु ). —( L. 46 ) D1–3 शरधारावघातेषु ( for the prior half ). —( L. 48 ) D1. 6–8. 10 च ( for वा ). V1 B1 तु ( for तद् ). —( L. 49 ) D1–3 कथ्यते ( for कीर्त्यते ). D4. 6–9 लोकैः ( for कोऽन्यो ). D2 कस्याग्नि- ; D6 तस्योर्ध्वं- ( for कश्चोर्ध्व- ). D4. 6–9 कस्तस्मादूर्ध्वरेतसः ( for the post. half ). —( L. 50 ) D8 चोर्ध्वे ( for चार्धे ). D2. 3 पूजितः ; D9 निर्मितः ( for निर्जितः ). —( L 51 ) D1–3 देवेंद्र ; D4–9 देवस्य ( for देवैः प्र- ). V1 B2. 3. 5 Dn3 कस्य देवैः प्रणम्यते ( for the post. half ). —D4–7. 9 om. line 52. —( L. 52 ) D2. 3 क्रीडा च ( for क्रीडार्थं ). B4. 5 नृत्यते ; D8. 10 नृत्ते वा ( for नृत्ये वा ). B3 D8 -भाषते ( for -भाष्यते ). D1–3 नृत्यतो गीतभाषितैः ( for the post. half ). —( L. 53 ) B4 समालक्ष्य ; Dn2 °नं च ( for °नं वा ). V1 B2–5 Dn3 D1–3 भृत्यैः ( for भूतैः ). B2 क्रीडति ; D6–9 कीर्त्यते ( for क्रीडते ). —( L. 55 ) V1 पूज्यते ; Dn3 पुष्यते ; D4. 6–9 तुष्यते ( for घु° ). —( L. 56 ) Dn1 ज्वलते तेन पावकः ( for the post. half ). —( L. 57 ) B2. 3. 5 D10 चौषधि- ; Dn1 औषधि- ; D4 औषध- ( for ओषधि- ). V1 B1. 4 Dn3 कथं त्रौषधिसंपत्तिः ( for the prior half ). V1 B Dn3 D4–9 वपुः ( for वसु ). —( L. 58 ) D1–3 प्रकाशं ( for °मं ). D4–9 [ऽ]न्यस् ( for वा ). D5 त्रैलोक्यं सचराचरं ( for the post. half ). —( L. 59 ) D4 -योगैः ( for -सिद्धि- ). D5 -क्रियायां वै ( for °योगैः ). —D4. 6–9 om. lines 60–61. —( L. 60 ) Dn1. n3 D1–3. 10 विद्धि तं ; D5 विद्धि तत् ( for विहितं ). B1–4 Dn1. n2 D1–3. 5 हरे ( for परम् ). —( L. 61 ) B1 कश्च ; Dn3 कः स ; D2 यज्ञ- ( for कर्म- ). D2 -कर्म- ; D3 -यज्ञे ; D5 -ज्ञान- ( for -यज्ञ- ). B5 D1–3. 5 सेव्यमानं ( for °मानः ). —( L.

स्थूलं सूक्ष्ममनौपम्यमग्राह्यं गुणगोचरम् ।
गुणहीनं गुणाध्यक्षं परं माहेश्वरं पदम् ।
विश्वेशं कारणगुरुं लोकालोकान्तकारणम् ।
भूताभूतभविष्यच्च जनकं सर्वकारणम् ।
अक्षराक्षरमव्यक्तं विद्याविद्ये कृताकृते ।
धर्माधर्मौ यतः शक्र तमहं कारणं वदे ।
प्रत्यक्षमिह देवेन्द्र पश्य लिङ्गं भगाङ्कितम् ।
देवदेवेन रुद्रेण सृष्टिसंहारहेतुना ।
मात्रा पूर्वं ममाख्यातं कारणं लोककारणम् ।
नास्ति चेशात्परं शक्र तं प्रपद्य यदीच्छसि ।
प्रत्यक्षं ननु ते सुरेश विदितं संयोगलिङ्गोद्भवं
त्रैलोक्यं सविकारनिर्गुणगणं ब्रह्मादिरेतोद्भवम् ।
यद्ब्रह्मेन्द्रमहेन्द्रविष्णुसहिता देवाश्च दैत्यासुरा
नान्यं कामसहस्रकल्पितधियः शंसन्ति ईशात्परम् ।
तं देवं सचराचरस्य जगतो व्याख्यातवेद्योत्तमं
कामार्थी वरयामि संयतमना मोक्षाय शर्वं शिवम् ।

## 6

After 13.14.153, V1 B Dn D1.4–10 Kumbh. ed. ins.: D2.3 ins. after 13.14.153$^{ab}$ :

नमोऽस्तु रक्तवर्णाय रक्ताम्बरधराय च ।
रक्तध्वजपताकाय रक्तस्रगनुलेपिने ।
नमोऽस्तु पीतवर्णाय पीताम्बरधराय च ।
पीतध्वजपताकाय पीतस्रगनुलेपिने ।
नमोऽस्तूच्छ्रितछत्राय किरीटवरधारिणे ।
अर्धहारार्धकेयूरअर्धकुण्डलकर्णिने ।
नमः पवनवेगाय नमो देवाय वै नमः ।
सुरेन्द्राय मुनीन्द्राय महेन्द्राय नमोऽस्तु ते ।
नमः पद्मार्धमालाय उत्पलैर्मिश्रिताय च ।
अर्धचन्दनलिप्ताय अर्धस्रगनुलेपिने ।
नम आदित्यवक्त्राय आदित्यनयनाय च ।
नम आदित्यवर्णाय आदित्यप्रतिमाय च ।

62) Dn3 D4.6.7.9 नित्य- (for नित्यं). B5 पुष्प- (for °कर्म-). — (L. 63) Dn1 D4.6.7.9 स्थूल- (for स्थूलं). V1 B1 Dn3 अग्राह्यं गुणिनो वरं (for the post. half). — (L. 64) D1–3 वंद्यं (for परं). B4 परं (for पदम्). — (L. 65) Dn1 स्थित्युत्पत्तिकारणं च; D6–9 स्थित्युत्पत्तिकारणगुणं (hypermetric) (for the prior half). D2.3 कालं कालांतकारणं (for the post. half). — D2.3 om. (hapl.) line 66. — (L. 66) V1 D1 भूताभूतं; B5 भूतं भव्यं (for भूताभूत-). Dn1.n2 भूतं भव्यं भविष्यं च; D4.6.7.9 भूताभूतं भविष्यं च (for the prior half). — (L. 68) V1 Dn3 गुरुं; B5 भजे; Dn2 ब्रुवे (for वदे). — (L. 69) D4.6.7.9 देवेश (for देवेन्द्र). D2.3 भगान्वितं (for °ङ्कितम). — (L. 70) D4.6 संहारे स्थितिहेतुना; D8.9 संहारसृष्ट( D9 °ष्टि )हे° (for the post. half). — (L. 71) B3 भूतं; D7 पूर्वें (for पूर्वं). B1 D5 समाख्यातं (for ममा°). Bom. ed. Kumbh. ed. -लक्षणं (for -कारणम्). D2.3 लोककारणकारणं (for the post. half). — (L. 72) Dn2 D4.6–9 देवात्; D1–3 शर्वात्; D5 शिवात् (for चेशात्). — (L. 73) D2.3 [ऽ]मरेश (for सुरे°). — (L. 74) B5 Dn1 D7–9 -गुणं (for -गणं). — (L. 75) B2.5 Dn1.n2 D10 -हुताश-; D4.6 -सुरेंद्र- (for -महेन्द्र-). D2.4.6 दैत्याः पुरा; Bom. ed. Kumbh. ed. दैत्येश्वरा (for दैत्यासुरा). — (L. 76) Dn1.n2 D10 नान्यत् (for नान्यं). B Dn1.n2 D1–10 -छंदित- (for -कल्पित-). B2.5 भूतेशानः; Dn1.n2 D10 यस्मात्परं; D1–3 शर्वात्परं; D4.6–9 देवात्परं (for ईशात्परम्). — (L. 77) Dn1 D8.10 विदितं (for जगतो). B1.2.4 Dn1.n2 D1–3.6–10 -वेदोत्तमं (for -वेद्योत्तमम्). — (L. 78) Dn3 D2.3 कामार्थं (for °र्थी). B5 संयतमनो; Dn2 संजितमना (for संयत°). Dn1.n2 D8.10 सद्यः (for शर्वं). D4.6 भवं (for शिवम्).

6

D2.4–7.9 om. line 1. — (L. 1) D8.10 ते (for ऽस्तु). B3 शुक्लांबर- (for रक्ताम्बर-). B1 महेंद्राय नमोस्तु ते (for the post. half). — B4 om. line 2; D2.3 repeat it after line 28. — (L. 2) B1 -स्रग्गंध-; B5 -वस्त्रानु-; D4.6.9 -शृंगानु- (for -स्रगनु-). — D4–7.9 transp. lines 3 and 4. — (L. 3) D4–7.9 om. the prior half. D3 ते (for ऽस्तु). — Dn1.n2 D10 om. (hapl.) line 4. — (L. 4) D1–3 transp. the prior half and the post. half. B1.2.4 -स्रग्गंध-; B5 -वस्त्रानु- (for -स्रगनु-). — (L. 5) D2.10 सित- (for [उ]च्छ्रित-). D3 om. from the post. half up to the post. half of line 8. — (L. 6) B4 -वल्गिने; D10 -धारिणे (for -कर्णिने). — (L. 7) D9 पतग- (for पवन-). — (L. 8) B4 om.; D5 D1.2.4.6–9 नरेंद्राय; D5 महेंद्राय (for मुनीन्द्राय). D2.3 नमो देवस्तुताय च (for the post. half). — (L. 9) D2.3 चोत्पलैर् (for उ°). — (L. 10) D4.6–9 आर्द्र- (for अर्ध-). D4.6–9 B1.4.5 D10 -गंधानु-; D1–3 -चंदन- (for -स्रगनु-). D4.6–9 आर्द्रगंधानुलेपने; D5 अर्धचंद्रानुलेपने (for the post. half). — B4 D2.3.5 om. (hapl.) line 11. V1 transp. lines 11 and 12. — (L. 11) B1.3 -वर्णाय (for -वक्त्राय). — After line 11, B3 reads line 18. — (L. 12) B3.4 D4.6–9 -रूपाय (for -वर्णाय). D1–3.6–9 अनादि- (for the second आदित्य-). V1 -नयनाय

नमः सोमाय सौम्याय सौम्यवक्त्रधराय च।
सौम्यरूपाय मुख्याय सौम्यदंष्ट्राविभूषणे।
नमः श्यामाय गौराय अर्धपीतार्धपाण्डुरे।
नारीनरशरीराय स्त्रीपुंसाय नमोऽस्तु ते।
नमोऽस्तु वृषवाहाय गजेन्द्रगमनाय च।
दुर्गमाय नमस्तुभ्यमगम्यागमनाय च।
नमोऽस्तु गणगीताय गणवृन्दरताय च।
गणानुयातमार्गाय गणनित्यव्रताय च।
नमः श्वेताभ्रवर्णाय संध्यारागप्रभाय च।
अनुद्दिष्टाभिधानाय स्वरूपाय नमोऽस्तु ते।
नमो रक्ताग्रवासाय रक्तसूत्रधराय च।
रक्तमालाविचित्राय रक्ताम्बरधराय च।
मणिभूषितमूर्धाय नमश्चन्द्रार्धभूषिणे।
विचित्रमणिमूर्धाय कुसुमाष्टधराय च।
नमोऽग्निमुखनेत्राय सहस्रशशिलोचने।
अग्निरूपाय कान्ताय नमोऽस्तु गहनाय च।
खचराय नमस्तुभ्यं गोचराभिरताय च।
भूचराय भुवनाय अनन्ताय शिवाय च।
नमो दिग्वाससे नित्यमधिवाससुवाससे।
नमो जगन्निवासाय प्रतिपत्तिसुखाय च।
नित्यमुद्बद्धमुकुटे महाकेयूरधारिणे।
सर्पकण्ठोपहाराय विचित्राभरणाय च।
नमस्त्रिनेत्रनेत्राय सहस्रशतलोचने।
स्त्रीपुंसाय नपुंसाय नमः सांख्याय योगिने।
शंयोरभिस्रवन्ताय अथर्वाय नमो नमः।
नमः सर्वार्तिनाशाय नमः शोकहराय च।
नमो मेघनिनादाय बहुमायाधराय च।
बीजक्षेत्राधिपालाय स्रष्टाराय नमो नमः।
नमः सुरासुरेशाय विश्वेशाय नमो नमः।
नमः पवनवेगाय नमः पवनरूपिणे।
नमः काञ्चनमालाय गिरिमालाय वै नमः।
नमः सुरारिमालाय चण्डवेगाय वै नमः।

---

(for -प्रतिमाय). — (L. 13) B3. 4 D1–9 -वक्त्रेक्षणाय (for -वक्त्रधराय). — (L. 14) B1. 2, 4, 5 D3. 8 -विभूषिणे (for °षणे). — (L. 15) D1. 3. 5–9 श्यामार्ध- (for °य). D5 -पीताय (for -पीतार्ध-). D8 -पांडरे (for -पाण्डुरे). — (L. 16) D1. 2 नारीवर-; D5–9 नरनारी- (for नारीनर-). D1. 4–9 -पुमांसे (for -पुंसाय). — (L. 17) Dn1. n2 नमो वृषभवाहाय (for the prior half). — (L. 19) V1 D3. 4. 6. 8. 9 -पीनाय; D7 -पीठाय (for -गीताय). D2. 8 -नताय (for -रताय). — (L. 20) Kumbh. ed. गुणानु- (for गणानु-). D5 -स्तुताय (for -व्रताय). — (L. 21) B4 -युताय; D1 -व्रताय; D2. 3 -रताय (for -प्रभाय). — (L. 22) B2. 5 D1–9 अनिर्दिष्टा( D5 °र्देश्या )भिधानाय (for the prior half). B1 D2. 4 6–8 सुरूपाय; B4 D10 अरू°; D1 सरू° (for स्वरू°). B4 नमः (for ऽस्तु ते). — (L. 23) B2. 4 रक्तांग-; D10 रक्ताभ्र- (for रक्ताग्र-). — (L. 24) D1–9 -माल्य- (for -माला-). D3 रक्तमाल्य- (for रक्ताम्बर-). — (L. 25) B3 om. (hapl.) from the prior half up to the post. half of line 26. D1–7. 9. 10 -भूषणे (for -भूषिणे). — (L. 26) D4. 6–9 -माल्य- (for -मणि-). V1 कुसुमाष्टशराय च; B1 2. 5 D6–9 °माप्तशराय च; B2. 4 D5. 10 °माप्त( B3 °माष्ट-; D6 °मोप्त )शिखाय च; Dn3 D4 °माप्तधराय च; D1–3 °माप्तशिराय च (for the post. half). — After line 26, D2. 3 ins.:

शुभ्रभस्माङ्गलिप्ताय शुक्लकर्मरताय च।

— (L. 27) B2. 3. 5 -शिखि-; D1. 3. 4 -शत (for -शशि-). — D4. 6. 7. 9 om. (hapl.) lines 28–35. D5 om. lines 28–30. — (L. 28) Dn3 शांताय (for कान्ताय). D1–3 अतिकामाय भीमाय (for the prior half). B D1–3. 10 नमोऽनंगहराय च (for the post. half). — (L. 29) B Dn1 D3. 8. 10 खेचराय; D1 शेख° (for खच°). B1 गोचराति-; B5 खेचराभि-; D1–3 गोचर्याभि- (for °राभि-). — B5 om. (hapl.) lines 30–34. — (L. 30) B1 D10 भूधराय; D1–3 भूत्तर्याय (for °राय). D1–3 भुवंताय; D8. 10 भु( D10 भ )वांताय (for भुवनाय). B2. 4 भुवनाय अनंताय (for the prior half). V1 अंतकाय; B2 भूचराय; B4 भूधराय (for अनन्ताय). D1–3 अचराय चराय च (for the post. half). — (L. 31) D5 -वासानु- (for -वाससु-). — (L. 33) D2. 3. 5 -मुकुट- (for °टे). D8. 10 नित्यमुद्बद्धमुकुट- (for the prior half). D2. 3. 5 हार- (for महा-). — (L. 34) D1. 3. 10 -कंठार्थ- (for -कण्ठोप-). — V1 om. (hapl.) lines 35–38. D5 om. line 35. — (L. 36) B2 Dn1. n3 D1–9 स्त्रीपुमांस- (for स्त्रीपुंसाय). — (L. 37) B1. 3 D2. 4. 8 शंनोर्; D6. 7. 9 शंभोर् (for शंयोर्). D2. 3 अभिप्रवृत्ताय; D4–9 अति( D8 °भि )श्रवांताय (for अभिस्रवन्ताय). D1–3 [ऽ]स्तु ते (for नमः). — (L. 38) D1. 3 -हाराय (for -नाशाय). D1–3 महा- (for नमः). — B4 om. (hapl.) from the post. half of line 39 up to the prior half of line 42. — (L. 40) V1 राज- (for बीज-). V1 B2. 5 Dn -क्षेत्राभिपालाय; D3 -क्षत्राधि°; D5 -क्षेत्रादि° (for -क्षेत्राधि°). B3 सुग्रीवाय; B5 अष्टाराय; D8. 10 विष्ट° (for स्रष्टा°). D1–3 [ऽ]स्तु ते (for नमः). — After line 40, D2 reads line 46. D2 om. (hapl.) lines 41–42. — (L. 41) V1 B (B4 om.) Dn1. n3 D1. 10 सर्वसुरेशाय; D4–9 सर्वामरेशाय (for सुरासुर°). D1. 3 [ऽ]स्तु ते (for नमः). — D1. 3–6 om. (hapl.) line 42. — (L. 42) D7. 9 मनोवेगाय वै नमः (for

ब्रह्मशिरोपहर्ताय महिषघ्नाय वै नमः ।
नमः स्त्रीरूपधाराय सर्वरूपधराय च ।
नमस्त्रिपुरहर्ताय यज्ञविध्वंसनाय च ।
नमः कामाङ्गनाशाय कालदण्डधराय च ।
नमः स्कन्दविशाखाय ब्रह्मदण्डाय वै नमः ।
नमो भवाय शर्वाय विश्वरूपाय वै नमः ।
ईशानाय भगघ्नाय नमोऽस्त्वन्धकघातिने ।
नमो विश्वाय मायाय चिन्त्याचिन्त्याय वै नमः ।

## 7

After 13. 22, $D_{10}$ S Kumbh. ed. Madras ed. and Cv ins.:

युधिष्ठिरः ।
वैश्ययोन्यां समुत्पन्नाः शूद्रयोन्यां तथैव च ।
ब्रह्मर्षय इति प्रोक्ताः पुराणा द्विजसत्तमाः ।
कथमेतन्महाराज तत्त्वं शंसितुमर्हसि ।
विरुद्धमिह पश्यामि वियोनौ ब्राह्मणो भवेत् ।
भीष्मः ।
अलं कौतूहलेनात्र निबोध त्वं युधिष्ठिर ।
शुभेतरं शुभं वापि न चिन्तयितुमर्हसि ।
ईशत्वात्मन इत्येतद्गतिश्चैषां न सज्जते ।
ब्रह्मभूयांस इत्येव ऋषयः श्रुतिचोदिताः ।
निन्द्या न चैते राजेन्द्र प्रमाणं हि प्रमाणिनाम् ।
लोकोऽनुमन्यते चैतान्प्रमाणं ह्यत्र वै तपः ।
एवं महात्मभिस्तात तपोज्ञानसमन्वितैः ।
प्रवर्तितानि कार्याणि प्रमाणान्येव सत्तम ।
भार्याश्चतस्रो राजेन्द्र ब्राह्मणस्य स्वधर्मतः ।
ब्राह्मणी क्षत्रिया वैश्या शूद्रा च भरतर्षभ ।
राज्ञां तु क्षत्रिया वैश्या शूद्रा च भरतर्षभ ।
वैश्यस्य वैश्या विहिता शूद्रा च भरतर्षभ ।
शूद्रस्यैका स्मृता भार्या प्रतिलोमे तु संकरः ।
शूद्रायास्तु नरश्रेष्ठ चत्वारः पतयः स्मृताः ।
वर्णोत्तमायास्तु पतिः सवर्णस्त्वेक एव सः ।
द्वौ क्षत्रियाया विहितौ ब्राह्मणः क्षत्रियस्तथा ।
वैश्यायास्तु नरश्रेष्ठ विहिताः पतयस्त्रयः ।
सवर्णः क्षत्रियश्चैव ब्राह्मणश्च विशां पते ।
एवं विधिमनुस्मृत्य ततस्ते ऋषिभिः पुरा ।

---

the post. half). — $D_{7, 9}$ repeat line 43 after line 44. — (L. 43) $D_4$ om. from the post. half up to the post. half of line 44. $D_{1-3}$ गिरिमाल नमोस्तु ते; $D_{6, 9}$ (second time) ब्रह्मशीर्षाय ते ($D_9$ वै) नमः; $D_7$ (second time) ब्रह्मर्षये ते नमः (submetric) (for the post. half). — $B_3$ $D_8$ om. (hapl.) line 44. — (L. 44) $D_{1-3}$ चंडवेग नमोस्तु ते (for the post. half). — (L. 45) $D_4$ reads the prior half twice. $B_2$ $D_4$ (first time) ब्रह्मशीर्षाय हस्ताय ($D_4$ ते नमः); $D_{2, 3, 4}$ (second time). $_{5-10}$ °शीर्षो($D_{2, 3}$ °र्षा)पहर्त्रे च (for the prior half). $D_4$ om. from the post. half up to the post. half of line 46. $D_{8, 9}$ om. (hapl.) from the post. half up to the prior half of line 47. $D_{1-3}$ महिषघ्न नमोस्तु ते (for the post. half). — After line 45, $D_{10}$ reads line 50 repeating it in its proper place. — (L. 46) $V_1$ $B_{2, 3, 5}$ $Dn_3$ $D_7$ त्रिरूप- (for स्त्रीरूप-). Dn $D_8$ यज्ञविध्वंसनाय च (for the post. half). — $D_5$ om. (hapl.) lines 47–49. $D_2$ reads line 47 twice. — (L. 47) $D_4$ om. the prior half. $D_2$ (both times). $_{3, 7, 8}$ -हर्त्रे च (for -हर्ताय). — (L. 48) $B_3$ कालांग- (for कामाङ्ग-). $B_1$ $D_{1-3}$ काम- (for काल-). — After line 48, $D_4$ ins.:

नमः स्कन्दधराय च ।

— $D_2$ om. (hapl.) line 49. — (L. 49) $D_{1, 3, 10}$ ब्रह्मदंडधराय च (for the post. half). — $D_1$ om. (hapl.) line 50. — (L. 50) $D_5$ हराय (for भवाय). $B_5$ रुद्राय (for शर्वाय). $D_{2, 3}$ विश्वरूपधराय च (for the post. half). — (L. 51) $B_{2, 4, 5}$ $Dn_1$, $n_2$ $D_5$ भवघ्नाय (for भग°). $D_{4-7}$ तु (for ऽस्तु). $V_1$ -नाशिने (for -घातिने). — (L. 52) $D_4$ नाथाय; $D_{6-9}$ नादाय (for मायाय). $D_4$ नित्यानित्याय वै नमः (for the post. half).

7

$T_1$ om. line 3. — (L. 3) $G_2$ महाभाग (for °राज). — (L. 4) $M_{1, 2, 4}$ इव (for इह). — $G_2$ om. the ref. — $T_1$ om. line 7. — (L. 7) $G_2$ $M_{1, 2, 4}$ [ए]ति (for [ए]तद्). — (L. 8) $D_{10}$ $G_{1, 3}$ -चोदितं (for °ताः). $T_2$ M ऋषयः कुरुनंदन (for the post. half). — (L. 9) $T_1$ स्वत एव हि राजेंद्र (for the prior half). — $T_1$ om. lines 10–16. — (L. 10) M [ए]नान् (for [ए]तान्). — For lines 13–17, cf. Manu. 3. 13. — (L. 13) $M_4$ विप्रस्य (for राजेन्द्र). $M_4$ तिस्रः क्षत्रे विशां द्वयं (for the post. half). — $M_4$ om. lines 14–16. $T_3$ om. (hapl.) line 15. — (L. 15) $G_2$ राज्ञस्तु; $M_{1-3}$ क्षत्रस्य (for राज्ञां तु). — $D_{10}$ om. (hapl.) line 16. — (L. 16) $T_2$ शूद्रा चापि युधिष्ठिर (for the post. half). — $T_1$ repeats line 17 after 19. — (L. 17) $T_1$ (second time) विधानमवगच्छैनं (for the prior half). $D_{10}$ $T_{2, 3}$ $G_{1, 3, 4}$ अतिलोमात् (for °मे). $T_1$ (first time) शूद्रैव भरतर्षभ (for the post. half). — $T_1$ reads lines 19–20 (transposed) after line 23. — (L. 21) M पतयो विहितास्त्रयः (for the post. half). — $T_1$

उत्पादिता महात्मानः पुत्रा ब्रह्मर्षयः पुरा ।
पुराणाभ्यामृषिभ्यां तु मित्रेण वरुणेन च ।
वसिष्ठोऽथ तथागस्त्यो बर्हिषद्भिस्तथैव च ।
कक्षीवानार्ष्टिषेणश्च पुरुषः कक्ष एव च ।
मामतेयस्य वै पुत्रा गौतमस्यात्मजाः स्मृताः ।
वत्सप्रियश्च भगवान्स्थूलरश्मिस्तथाक्षणिः ।
गौतमस्यैव तनया ये दास्यां जनिता ह्युत ।
कपिंजलादो ब्रह्मर्षिश्चण्डाल्यामुदपद्यत ।
वैनतेयस्तथा पक्षी तुर्यायां च वसिष्ठतः ।
प्रसादाच्च वसिष्ठस्य शुल्काभ्युपगमेन च ।
अदृश्यन्त्याः पिता वैश्यो नाम्ना चित्रमुखः पुरा ।
ब्राह्मणत्वमनुप्राप्तो ब्रह्मर्षित्वं च कौरव ।
वैश्यश्चित्रमुखः कन्यां वसिष्ठतनयस्य वै ।
शुभां प्रादात्ततो जातो ब्रह्मर्षिस्तु पराशरः ।
तथैव दाशकन्यायां सत्यवत्यां महानृषिः ।
पराशरात्प्रसूतश्च व्यासो योगमयो मुनिः ।
विभण्डकस्य मृग्यां च तपोयोगात्मको मुनिः ।
ऋश्यशृङ्गः समुत्पन्नो ब्रह्मचारी महायशाः ।
शार्ङ्ग्यां च मन्दपालस्य चत्वारो ब्रह्मवादिनः ।
जाता ब्रह्मर्षयः पुण्या यैः स्तुतो हव्यवाहनः ।
द्रोणश्च स्तम्बमित्रश्च शारिसृक्कश्च बुद्धिमान् ।
जरितारिश्च विख्याताश्चत्वारः सूर्यसंनिभाः ।
महर्षेः कालवृक्षस्य शकुन्त्यामेव जज्ञिवान् ।
हिरण्यहस्तो भगवान्महर्षिः काञ्चनप्रभः ।
पावकात्तात संभूता मनसा च महर्षयः ।
पितामहस्य राजेन्द्र पुलस्त्यपुलहादयः ।
सवर्णश्चापि राजर्षिः सवर्णायामजायत ।
मृण्मय्यां भरतश्रेष्ठ आदित्येन विवस्वता ।
शाण्डिल्यश्चाग्नितो जातः काश्यपस्यात्मजः प्रभुः ।
शरद्वतः शरस्तम्बात्कृपश्च कृपया सह ।
पश्चाच्च जज्ञे राजेन्द्र सोमपस्य महात्मनः ।
रेणुश्च रेणुका चैव राममाता यशस्विनी ।
यमुनायां समुद्भूतः सोमकेन महात्मना ।
अर्कदत्तो महानृषिः प्रथितः पृथिवीतले ।
अग्नेराहवनीयाच्च द्रुपदस्येन्द्रवर्चसः ।
धृष्टद्युम्नश्च संभूतो वेद्यां कृष्णा च भारत ।
व्याघ्रयोन्यां ततो जाता वसिष्ठस्य महात्मनः ।
एकोनविंशतिः पुत्राः ख्याता व्याघ्रपदादयः ।
मन्धश्च बादलोमश्च जाबालिश्च महानृषिः ।
मन्युश्चैवोपमन्युश्च सेतुकर्णस्तथैव च ।
एते चान्ये च विख्याताः पृथिव्यां गोत्रतां गताः ।
विश्वकाशस्य राजर्षेरैक्ष्वाकोस्तु महात्मनः ।

om. (hapl.) line 23. — (L. 23) $M_4$ (*inf. lin.*) एतं (for एवं). M तैर् (for ते). $G_2$ ऋषिभिस्ते ततः पुरा (for the post. half). — $D_{10}$ om. (hapl.) line 24. — (L. 24) $T_1$ उक्ता हि ते (for उत्पादिता). $T_1$ पुरा (for पुत्रा). $T_1$ नृप; $T_2$ प्रभो; $G_2$ $M_4$ (*inf. lin.*) तथा (for पुरा). — (L. 25) $T_1$ पुराणावृषिमुख्यौ तु (for the prior half). — After line 25, $T_1$ ins.:

उत्पादितौ महात्मानावुर्वश्यां राजसत्तम ।

— (L. 26) $G_1$ वसिष्ठेन (for °ष्ठोऽथ). T G बहुभिस्तु; Kumbh. ed. बर्हिषन्यस् (for बर्हिषद्भिस्). $M_4$ (*inf. lin.*) जनितौ कलशात्पुरा (for the post. half). — (L. 27) $D_{10}$ $T_{2,3}$ $G_{3,4}$ कप (for कक्ष). — $T_1$ om. line 28. — (L. 28) $D_{10}$ $T_{2,3}$ $G_3$ (also as above).$_4$ मार्कतेयस्य (for मामते°). — (L. 29) $T_1$ वत्सर्षिश्चैव भगवान् (for the prior half). $T_1$ om. from the post. half up to the prior half of line 30. $M_4$ स्यूम- (for स्थूल-). — (L. 30) $D_{10}$ $T_{1,3}$ $G_{3,4}$ [अ]पि (for हि). — (L. 32) $T_1$ M चर्षिस् (for पक्षी). $D_{10}$ $T_{2,3}$ $G_4$ तुर्यायाश्च; $T_1$ M तुरीयायां (for तुर्यायां च). — $T_1$ om. lines 35–36. — (L. 37) $T_1$ सुतां (for शुभां). — After line 37, $T_1$ M ins.:

अदृश्यन्त्यां समुत्पन्नः पिता व्यासस्य धीमतः ।

— (L. 39) M पराशर- (for °शरात्). Madras ed. वेदमयो (for योग°). — (L. 40) $T_1$ ऋश्यशृंगो महामुनिः (for the post. half). — $T_1$ om. lines 41 and 46. — (L. 46) M शकुन्थाम्. — (L. 47) M ब्रह्मर्षिः (for महर्षिः). — $T_1$ om. lines 50–51. — (L. 50) $G_2$ सुवर्णश्; Kumbh. ed. सावर्ण्यश् (for सवर्णश्). — (L. 52) $T_{1,3}$ $G_{1,3,4}$ $M_{2,3}$ शांडिलश् (for °ल्यश्). $G_2$ शांडिल्यस्यात्मजो जातः (for the prior half). $D_{10}$ $T_{2,3}$ $G_{1,3,4}$ [अ]ग्निजः (for [आ]त्मजः). Kumbh. ed. कश्यपस्याग्रजः प्रभुः (for the post. half). — (L. 56) Kumbh. ed. यमुनायाः. $T_1$ $M_4$ अ($M_4$ सा)श्मकेन (for सोम°). — (L. 57) Kumbh. ed. अर्कदंतो (for °दत्तो). $T_3$ ऋषिः प्राज्ञः; $G_2$ महर्षिश्च; M महानासीत् (for °नृषिः). — (L. 60) M तथा (for ततो). — (L. 62) M मंडिश्चैवोदलोमश्च (for the prior half). — $T_1$ reads line 64 twice. — (L. 64) $T_1$ (second time) विख्याता विमलाश्चैते (for the prior half). $T_1$ (second time) तथोर्व्यां (for पृथिव्यां). $T_1$ (first time) पृथिव्यां योगवित्तमाः (for the post. half). — $T_1$ om. line 65. — (L. 65) $M_{1,2,4}$ विश्वगश्वस्य राजर्षेर्; Madras ed. विश्वाकाशस्य रा° (for the prior half). $G_2$ M [इ]क्ष्वाकोस्. — (L. 66) $M_{2,3}$

बालाश्वो नाम पुत्रोऽभूच्छिखां भित्त्वा विनिःसृतः ।
मान्धाता चैव राजर्षिर्युवनाश्वेन धीमता ।
स्वयं धृतोऽथ गर्भेण दिव्यास्त्रबलसंयुतः ।
गौरिकश्चापि राजर्षिश्चक्रवर्ती महायशाः ।
बाहुदायां समुत्पन्नो नद्यां राज्ञा सुबाहुना ।
भूमेश्च पुत्रो नरकः संवर्तश्चैव पुष्कलः ।
अङ्गिश्चैव महातेजा ऋषिर्गार्ग्यो ह्यजायत ।
एते चान्ये च बहवो राजन्या ब्राह्मणास्तथा ।
प्रभावेनाभिसंभूता महर्षीणां महात्मनाम् ।
नासाध्यं तपसा तेषां विद्ययात्मगुणैः परैः ।
अस्मिन्नर्थे च मनुना गीतः श्लोको नराधिप ।
धर्मं प्रणयता राजंस्तं निबोध युधिष्ठिर ।
ऋषीणां च नदीनां च साधूनां च महात्मनाम् ।
प्रभवो नाधिगन्तव्यः स्त्रीणां दुश्चरितस्य च ।
तस्मात्र चिन्ता कर्तव्या महर्षीणां समुद्भवे ।
यथा सर्वगतो ह्यग्निस्तथा तेजो महात्मसु ।

Colophon.

## 7 A

After the above, S Kumbh. ed. Madras ed. and Cv cont. : $D_{10}$ ins. after 13. 48 :

युधिष्ठिरः ।
पुत्रैः कथं महाराज पुरुषस्तारितो भवेत् ।
यावन्न लब्धवान्पुत्रमफलः पुरुषो नृप ।
भीष्मः ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
नारदेन पुरा गीतं मार्कण्डेयाय पृच्छते ।
पर्वतं नारदं चैव असितं देवलं च तम् ।
आरणेयं च रैभ्यं च एतानत्रागतान्पुरा ।
गङ्गायमुनयोर्मध्ये भोगवत्याः समागमे ।
दृष्ट्वा पूर्वं समासीनान्मार्कण्डेयोऽभ्यगच्छत ।
ऋषयस्तु मुनिं दृष्ट्वा समुत्थायोन्मुखाः स्थिताः ।
अर्चयित्वार्हतो विप्रं किं कुर्म इति चाब्रुवन् ।
मार्कण्डेयः ।
अयं समागमः सद्भिर्यत्नेनासादितो मया ।
अत्र प्राप्स्यामि धर्माणामाचारस्य च निश्चयम् ।
ऋजुः कृतयुगे धर्मस्तस्मिन्क्षीणे विमुह्यति ।
युगे युगे महर्षिभ्यो धर्ममिच्छामि वेदितुम् ।
ऋषिभिर्नारदः प्रोक्तो ब्रूहि यत्रास्य संशयः ।
धर्माधर्मेषु तत्त्वज्ञ त्वं हि च्छेत्तासि संशयान् ।
ऋषिभ्योऽनुमतं वाक्यं नियोगान्नारदोऽब्रवीत् ।
सर्वधर्मार्थतत्त्वज्ञं मार्कण्डेयं ततोऽब्रवीत् ।

---

शिलां ( for शिखां ). $T_1$ भित्त्वेक्ष्वाकुं विनिर्गतः ; $M_{1.4}$ शिलां भित्त्वा विनिर्गतः ( for the post half ). — ( L. 67 ) $D_{10}$ $T_2$ $G_{1.3.4}$ यौवनाश्वेन ( for युवना° ). — $T_1$ om. line 68. — ( L. 68 ) $D_{10}$ $G_2$ गर्गेण ( for गर्भेण ). — ( L. 69 ) Madras ed. गौरतश् ( for गौरिकश् ). — ( L. 71 ) M पुष्करः ( for पुष्कलः ). — ( L. 72 ) $T_1$ रैभ्यश् ; M अभ्यश् ( for अङ्गिश् ). $D_{10}$ गर्गो ; $T_1$ गार्ग्यां ( for गार्ग्यो ). $D_{10}$ $M_4$ [ऽ]भ्यजायत ( for ह्य° ). — ( L. 73 ) $T_1$ $G_2$ राजानो ( for राजन्या ). M राजन्शतसहस्रशः ( for the post. half). — ( L. 74 ) $M_{1-3}$ [अ]पि ( for [अ]भि- ). — M om. line 75. — ( L. 75 ) $T_1$ विद्यते ( for तपसा ). $T_1$ तपसा ( for विद्यया ). — ( L. 76 ) $M_1$ मुनिना ( for मनुना ). $G_2$ गीताः श्लोका नराधिप ( for the post. half ). — ( L. 77 ) Madras ed. प्रथयता ( for प्रण° ). — Lines 78–79 = ( var. ) 5. 35. 62. — ( L. 78 ) $M_4$ कृतात्मनां ( for महा° ). — $T_2$ om. line 81. — Colophon. *Sub-parvan* : $D_{10}$ $M_{1-3}$ दानधर्म. — *Adhy. name:* $D_{10}$ $G_4$ ऋषिजन्मकथनं ; $T_2$ भीष्मयुधिष्ठिरसंवादे मुनीनां व्यासादीनां जन्मसंस्कारकथनं ; $T_3$ $G_{1.3}$ ऋषीणां जन्मकथनं ; $M_{1-3}$ ऋषिमाहात्म्यकथनं ; $M_4$ ऋषिमाहात्मिकं. — *Adhy. no.:* $T_1$ M 49 ; $T_{2.3}$ $G_{2.4}$ 55 ; $G_{1.3}$ 50.

7A

— For lines 1–2, $D_{10}$ subst. :

कीदृशः पुत्रलाभो हि महात्मभिरुदाहृतः ।
अर्थवन्तः प्रतिबलाः संतानार्थमकुर्वतः ।
तावत्कीर्तिर्न भवति नरस्य महतोऽच्युत ।
यावन्न लब्धवान्पुत्रमपुत्रः पुरुषो भुवि ।

— $D_{10}$ om. line 4. — ( L. 5 ) $D_{10}$ $T_1$ M नारदं पर्वतं चैव ( for the prior half ). $D_{10}$ असितं चैव देवलं ( for the post. half ). — ( L. 6 ) $D_{10}$ $T_1$ आरुणेयं ( for आर° ). $D_{10}$ तीर्थयात्रागतान्पुरा ( for the post. half ). — $D_{10}$ om. lines 8–10. — ( L. 8 ) $M_4$ [ऽ]भ्यपृच्छत ( for °गच्छत ). — ( L. 9 ) $T_1$ M तं ( for तु ). — ( L. 10 ) $T_1$ तदा ; $T_2$ $G_4$ ह्यतो ; $M_{1-3}$ गतं ( for [अ]र्हतो ). — ( L. 11 ) $D_{10}$ सतां समागमो यो वै ( for the prior half). $D_{10}$ [आ]वेशितो ( for [आ]सादितो ). — ( L. 12 ) $D_{10}$ ततः ; M तत्र ( for अत्र ). $G_2$ विनिर्णयं ( for च निश्चयम् ). $D_{10}$ आचारविधिनिश्चयं ( for the post. half ). — Before line 15, Madras ed. ins. भीष्मः. — ( L. 16 ) $D_{10}$ धर्माचारेषु धर्मज्ञ ( for the prior half ). Madras ed. वि- ( for हि ). $T_1$ भेत्ता ( for च्छेत्ता ). $G_{1.3.4}$ स ; M [अ]स्य ( for [अ]सि ). $D_{10}$ [अ]संशयं ( for संशयान् ). — ( L. 17 ) Madras

दीर्घायो तपसा दीप्त वेदवेदाङ्गतत्त्ववित् ।
यत्र ते संशयो ब्रह्मन्समुत्पन्नः स उच्यताम् ।
धर्मं लोकोपकारं वा यच्चान्यच्छ्रोतुमिच्छसि ।
तदहं कथयिष्यामि ब्रूहि त्वं सुमहातपः ।

मार्कण्डेयः ।

युगे युगे व्यतीतेऽस्मिन्धर्मसेतुः प्रणश्यति ।
कथं धर्मच्छलेनाहं प्राप्नुयामिति मे मतिः ।

नारदः ।

आसीद्धर्मः पुरा विप्र चतुष्पादः कृते युगे ।
ततो ह्यधर्मः कालेन प्रसूतः किंचिदुन्नतः ।
ततस्त्रेतायुगं नाम प्रवृत्तं धर्मदूषणम् ।
तस्मिन्व्यतीते संप्राप्तं तृतीयं द्वापरं युगम् ।
तदा धर्मस्य द्वौ पादावधर्मो नाशयिष्यति ।
द्वापरे तु परिक्षीणे नन्दिके समुपस्थिते ।
लोकवृत्तं च धर्मं च उच्यमानं निबोध मे ।
चतुर्थं नन्दिकं नाम धर्मपादावशेषतः ।
ततःप्रभृति जायन्ते क्षीणप्रज्ञायुषो नराः ।
क्षीणप्राणधना लोके धर्माचारबहिष्कृताः ।

मार्कण्डेयः ।

एवं विलुलिते धर्मे लोके चाधर्मसंयुते ।
चातुर्वर्ण्यस्य नियतं हव्यकव्यं नियच्छति ।

नारदः ।

मन्त्रपूतं सदा हव्यं कव्यं चैव न नश्यति ।
प्रतिगृह्णन्ति तद्देवा दातुर्न्यायात्प्रयच्छतः ।
सत्त्वयुक्तं च दाता च सर्वान्कामानवाप्नुयात् ।
अवाप्तकामः स्वर्गे च महीयेत यथेप्सितम् ।

मार्कण्डेयः ।

चत्वारो ह्यथ ये वर्णा हव्यकव्यं प्रदास्यते ।
मन्त्रहीनमपन्यायं तेषां दत्तं क्व गच्छति ।

नारदः ।

असुरान्गच्छते दत्तं विप्रै रक्षांसि क्षत्रियैः ।
वैश्यैः प्रेतानि वै दत्तं शूद्रैर्भूतानि गच्छति ।

मार्कण्डेयः ।

अथ वर्णावरे जाताश्चातुर्वर्ण्यापदेशिनः ।
दास्यन्ति हव्यकव्यानि तेषां दत्तं क्व गच्छति ।

नारदः ।

वर्णावराणां भूतानां हव्यकव्यप्रदातॄणाम् ।

---

ed. [ऽ]नुमतो ( for °मतं ). $G_{1,3,4}$ तदा ( for ऽब्रवीत् ). — ( L. 18 ) $D_{10}$ $M_4$ -तत्त्वशो ( for °ज्ञं ). $T_2$ ततो वचः; $T_3$ $G_{1,3}$ अथाब्रवीत् ( for ततोऽब्र° ). $D_{10}$ मार्कंडेयानुशासनं ( for the post. half ). — Before line 19, some MSS. ins. नारदः. — ( L. 19 ) $D_{10}$ -दर्शन ( for -तत्त्ववित् ). — ( L. 20 ) $T_1$ [इ]ह ( for स ). $D_{10}$ मार्कंडेय तदुच्यतां ( for the post. half ). — ( L. 21 ) $G_2$ M धर्मं ( $G_2$ समं ) लोकोपचारं वा ( for the prior half ). $T_1$ $M_4$ अर्हसि ( for इच्छसि ). $D_{10}$ सर्वेपामनुमंत्र्येह सर्वशश्च महामुने. — ( L. 22 ) $D_{10}$ ततोहं; M तत्तेहं ( for तदहं ). $M_4$ स ( for सु- ). $T_1$ -समाहितः ( for -महातपः ). — ( L. 23 ) $D_{10}$ धर्ममेव ( for °सेतुः ). — ( L. 24 ) $D_{10}$ -फलं च ( for -च्छलेन ). $D_{10}$ प्राप्नुयां सुमहामुने ( for the post. half ). — ( L. 26 ) $D_{10}$ [ऽ]पि ( for हि ). $T_1$ प्रमादात्; $G_{1,3,4}$ $M_3$ प्रसीदन् ( for प्रसृतः ). $D_{10}$ यत्र धर्मो विगृह्यते ( for the post. half ). — ( L. 27 ) $T_{2,3}$ $G_{1,3}$ प्रवृद्धं; $G_4$ प्रसिद्धं ( for प्रवृत्तं ). — $D_{10}$ $G_{3,4}$ read line 28 twice. — ( L. 28 ) Kumbh. ed. अतीते ( for व्य° ). $D_{10}$ $G_{3,4}$ ( all second time ) तस्मिन्नित्यमतीते स ( for the prior half ). — $D_{10}$ repeats line 29 after line 31. — ( L. 29 ) $D_{10}$ ( second time ) $M_3$ ततो; $T_3$ यदा; $G_2$ तथा ( for तदा ). $D_{10}$ ( second time ) पादौ द्वाव् ( by transp. ). — ( L. 30 ) $T_3$ चांतिके ( for नन्दिके ). — $T_1$ om. line 31. — ( L. 31 ) $D_{10}$ लोकधर्मं च वृत्तं च प्रोच्यमानं शृणुष्व मे. — ( L. 32 ) $D_{10}$ तृतीयं ( for चतुर्थं ). $D_{10}$ नंदकं; $M_4$ नंदितं ( for °कं ). $D_{10}$ धर्मपादं हनिष्यति ( for the post. half ). — ( L. 33 ) $D_{10}$ त्रेताप्रभृति अश्यंते ( for the prior half ). — ( L. 34 ) $T_3$ $G_{1-3}$ $M_2$ -प्राणधरा ( for °धना ). $D_{10}$ नातिवर्तिष्यते लोको धर्माचारविधिः कृतः. — $D_{10}$ om. the ref. — ( L. 35 ) $T_1$ एवं लुप्यति धर्मेस्मिलँ ( for the prior half ). $T_1$ धर्मेण ( for चाधर्म- ). $D_{10}$ केवलाधर्मसंप्लवे ( for the post. half ). — ( L. 36 ) Kumbh. ed. हव्यं ( for हव्य- ). $D_{10}$ क्व दास्यति; $T_1$ क्व गच्छति ( for निय° ). Madras ed. किं चतुर्वर्णनियतं हव्यं कव्यं न नश्यति. — ( L. 37 ) $T_1$ कृतं ( for सदा ). — ( L. 38 ) M सर्वं ( for न्यायात् ). $D_{10}$ प्रतिगृह्य स्वयं देवो दातुः सर्वं प्रयच्छते. — ( L. 39 ) $T_1$ M सत्त्वयुक्तश्. $T_1$ चेत् ( for the second च ). $D_{10}$ स तदा सत्त्वसंयुक्तः सर्वकालं समश्नुते. — ( L. 40 ) $M_{1-3}$ महीयति ( for °येत ). $D_{10}$ यथासुखं ( for यथेप्सितम् ). — ( L. 41 ) $D_{10}$ [ऽ]पि हि; $M_4$ [ऽ]प्यथ ( for ह्यथ ). $T_1$ वर्णैश्चतुर्भिर्यश्चापि ( for the prior half ). $T_{2,3}$ $G_4$ हव्यं ( for हव्य- ). $D_{10}$ प्रयच्छते; Kumbh. ed. प्रदास्यति. — ( L. 42 ) $D_{10}$ अपूतं च; $T_1$ अपि न्यायं; $T_3$ अवज्ञातं; $G_{1,3,4}$ $M_3$ तु पत्न्या यत्; $G_2$ प्रपन्नाय ( for अपन्यायं ). — ( L. 44 ) $T_1$ $M_4$ प्रेतांस्तदा ( $M_4$ °था ) ( for प्रेतानि वै ). $D_{10}$ वैश्यैश्चापि पिशाचांश्च ( for the prior half ). — ( L. 45 ) $D_{10}$ चातुर्वर्णावशंसकाः; Kumbh. ed. °र्ण्योपदेशिनः ( for the post. half ). — ( L. 46 ) $D_{10}$ दत्तानि; $M_4$ दास्यंते ( for दास्यन्ति ).

नैव देवा न पितरः प्रतिगृह्णन्ति तत्स्वयम् ।
यातुधानाः पिशाचाश्च भूता ये चापि नैर्ऋताः ।
तेषां सा विहिता वृत्तिः पितृदैवतनिर्गता ।
तेषां सर्वप्रदातॄणां हव्यकव्यं समाहिताः ।
यत्प्रयच्छन्ति विधिवत्तद्वै भुञ्जन्ति देवताः ।

Colophon.

मार्कण्डेयः ।

श्रुतं वर्णावरे दत्तं हव्यं कव्यं च नारद ।
संप्रयोगे च पुत्राणां कन्यानां च ब्रवीहि मे ।

नारदः ।

कन्याप्रदानं पुत्राणां स्त्रीणां संयोगमेव च ।
आनुपूर्व्यान्मया सम्यगुच्यमानं निबोध मे ।
जातमात्रा तु दातव्या कन्यका सदृशे वरे ।
कालदत्तासु कन्यासु पिता धर्मेण युज्यते ।
यस्तु पुष्पवतीं कन्यां बान्धवो न प्रयच्छति ।
मासि मासि गते बन्धुस्तस्या भ्रौणहत्यमाप्नुते ।
यस्तु कन्यां गृहे रुन्ध्याद्ग्राम्यैर्भोगैर्विवर्जिताम् ।
अवध्यातः स कन्याया बन्धुः प्राप्नोति भ्रूणहाम् ।
दूषिता पाणिमात्रेण मृते भर्तरि दारिका ।
संस्कारं लभते नारी द्वितीये सा पुनः पतौ ।
पुनर्भूर्नाम सा कन्या सपुत्रा हव्यकव्यदा ।
अदूष्या सा प्रसूतीषु प्रजानां दारकर्मणि ।

मार्कण्डेयः ।

या तु कन्या प्रसूयेत गर्भिणी या तु वा भवेत् ।
अथ दारक्रियां भूयः सा भजेदृषिसत्तम ।

नारदः ।

तत्त्वार्थनिश्चितं शब्दं कन्यका नयतेऽग्रये ।
तस्मात्कुर्वन्ति वै भावं कुमार्यस्ता न कन्यकाः ।
ब्रह्महत्यात्रिभागेन गर्भाधानविशोधिताम् ।
गृह्णीयात्तां चतुर्भागं विशुद्धां सर्जनात्पुनः ।

मार्कण्डेयः ।

कथं कन्यासु ये जाता बन्धूनां दूषिताः सदा ।
कस्य ते हव्यकव्यानि प्रदास्यन्ति महामुने ।

नारदः ।

कन्यायास्तु पितुः पुत्राः कानीना हव्यकव्यदाः ।

—(L. 47) $T_1$ -प्रदायिनां; $T_{2,3}$ $G_{2,4}$ -प्रदं नृणां (for -प्रदातॄणाम्). —(L. 49) $M_{1-3}$ जाता (for भूता). $D_{10}$ ये चान्ये वै निशाचराः (for the post. half). —$T_1$ om. (hapl.) line 50. —(L. 50) $D_{10}$ तु; $M_1$ या (for सा). $D_{10}$ -निर्गमा (for -निर्गता). —(L. 51) $D_{10}$ हव्यकव्यस्य नारद (for the post. half). —After line 51, $D_{10}$ ins.:

ते भूतास्तर्पितास्तुष्टाः किं प्रयच्छन्ति दातॄणाम् ।
नारदः ।
यथेप्सितानि कामानि इहलोके परत्र च ।
उभे भोक्ष्यन्ति दातारस्तैर्भूतैः परमार्थितैः ।
वर्णाः सर्वे त्वसंकीर्णा हव्यकव्यस्य संहिताः ।

—(L. 52) $D_{10}$ यत्प्रदास्यंति मंत्रोक्तं (for the prior half). $D_{10}$ भोक्ष्यंति (for भुञ्जन्ति). — Colophon. *Sub-parvan*: $D_{10}$ M दानधर्म. —*Adhy. name*: $T_2$ हव्यकव्यप्रशंसा; $M_{1-3}$ मार्कंडेयनारदसंवादे मंत्रसंस्कारप्रशंस($M_1$ °दर्श)नं; $M_4$ नारदगीता. —*Adhy. no.*: $D_{10}$ 48; $T_1$ M 50; $T_{2,3}$ $G_2$ (by corr.).4 56; $G_{1,3}$ 51; $G_2$ (before corr.) 46. —(L. 53) $T_1$ वर्णांतरे; $T_2$ $G_{1,3,4}$ $M_4$ वर्णावरैर् (for °वरे). —(L. 54) $T_1$ संप्रदानं (for °योगे). $D_{10}$ संयोगं पुत्रदाराणां (for the prior half). — $T_1$ om. (hapl.) lines 55–56. —(L. 55) $D_{10}$ -प्रदाने (for °नं). —(L. 56) $D_{10}$ M सर्वम् (for सम्यग्). $D_{10}$ शृणुष्व (for निबोध). —(L. 57) $D_{10}$ प्रदेया तु (for तु दातव्या). $D_{10}$ कन्या च (for कन्यका). $M_4$ नरे (for वरे). —(L. 58) Kumbh. ed. काले (for काल-). —(L. 60) $D_{10}$ तस्याः; $T_1$ $M_4$ वंश्ये (for बन्धुस्). $G_2$ $M_{1-3}$ भ्रू($G_2$ भ्रौ)णघ्नम्. $D_{10}$ पिता भवति भ्रूणहा; $T_1$ भ्रूणहत्यां समाप्नुयात् (for the post. half). —(L. 62) $D_{10}$ अथ ध्यानात् (for अवध्यातः). $T_1$ भ्रूणतां (for °हाम्). $D_{10}$ पिता भवति भ्रूणहा (for the post. half). —(L. 63) $D_{10}$ चाति- (for पाणि-). —(L. 64) $D_{10}$ द्वितीयं (for संस्कारं). $D_{10}$ संस्कारं (for द्वितीये). $D_{10}$ प्रभो (for पतौ). —(L. 65) $D_{10}$ भार्या (for कन्या). —$T_1$ om. line 66. —(L. 66) $D_{10}$ प्रसूता हि (for प्रसूतीषु). $D_{10}$ द्विजानां (for प्रजानां). $M_{1-3}$ प्रजा नारद कर्मसु (for the post. half). — After line 66, $T_2$ reads lines 73–74, repeating them in their proper places. $G_4$ $M_{1,3}$ om. the ref. —(L. 67) $D_{10}$ कन्या च (for तु कन्या). $D_{10}$ चापि वा; $M_{1-3}$ वापि या (for या तु वा). —(L. 68) $D_{10}$ $T_1$ M कथं (for अथ). $D_{10}$ लभेद्; $M_1$ भवेद् (for भजेद्). $D_{10}$ द्विज- (for ऋषि-). — $T_1$ om. line 69. —(L. 69) $D_{10}$ दत्त्वा च विहितं शब्दं (for the prior half). $D_{10}$ $T_{2,3}$ G $M_2$ कन्यकान($D_{10}$ °ना)यनेग्रये (for the post. half). — After line 69, $D_{10}$ ins.:

यस्मिन्यस्मिन्निवासः स्याद्बन्धूनां तस्य कन्यया ।

—(L. 70) *Madras ed.* भावं याः (for वै भावं). —(L. 71) $T_1$ -वि- (for -त्रि-). $D_{10}$ -विशोधिता; $T_{2,3}$ $G_{1,3,4}$ M °तः (for °ताम्). —(L. 72) $T_1$ $M_{1,3,4}$ चतुर्भाग- (for °भागं). $D_{10}$ $T_{2,3}$ G विशुद्धोत्सर्जनात्पुनः (for the post. half). —(L. 73) $T_2$ (first time) यासु (for कथं). $D_{10}$ बंधूनां दोषतः सुताः (for the post.

अन्तर्वत्न्यास्तु यः पाणिं गृह्णीयात्स सहोढजः ।
मार्कण्डेयः ।
अथ येनाहितो गर्भः कन्यायां तत्र नारद ।
कथं पुत्रफलं तस्य भवेदेतत्प्रचक्ष्व मे ।
नारदः ।
धर्माचारेषु ते नित्यं दूषकाः कृतशोधनाः ।
बीजं च नश्यते तेषां मोघचेष्टा भवन्ति ते ।
मार्कण्डेयः ।
अथ काचिद्भवेत्कन्या क्रीता दत्ता हृतापि वा ।
कथं पुत्रकृतं तस्यास्तद्भवेदृषिसत्तम ।
नारदः ।
क्रीता दत्ता हृता चैव या कन्या पाणिवर्जिता ।
कौमारी नाम सा भार्या प्रसवेदौरसान्सुतान् ।
न पत्यर्थे शुभा प्रोक्ता तत्कर्मण्यपराजिते ।
मार्कण्डेयः ।
केन मङ्गलकृत्येषु विनियुज्यन्ति कन्यकाः ।
एतदिच्छामि विज्ञातुं तत्त्वेनेह महामुने ।
नारदः ।
नित्यं निवसते लक्ष्मीः कन्यकासु प्रतिष्ठिता ।
शोभना शुभयोग्या च पूज्या मङ्गलकर्मसु ।
आकरस्थं यथा रत्नं सर्वकामफलोपगम् ।
तथा कन्या महालक्ष्मीः सर्वलोकस्य मङ्गलम् ।
एवं कन्या परा लक्ष्मी रतिस्तोषश्च देहिनाम् ।
महाकुलानां चारित्रं वृत्तेन निकषोपलम् ।
आनयित्वा स्वकाद्वर्णात्कन्यकां यो भजेन्नरः ।
दातारं हव्यकव्यानां पुत्रकं सा प्रसूयते ।
साध्वी कुलं वर्धयति साध्वी पुष्टिर्गृहे परा ।
साध्वी लक्ष्मी रतिः साक्षात्प्रतिष्ठा संततिस्तथा ।

Colophon.

मार्कण्डेयः ।
श्रुतं बहुविधं वृत्तं कन्यकानां महामते ।
इच्छामि योषितां श्रोतुं धर्माधर्मं परिग्रहे ।
नारदः ।
अष्टौ भार्यागमा धर्म्या नराणां दारकर्मणि ।
प्रेत्येह च हिता यास्तु सपुत्रा हव्यकव्यदाः ।
साध्वी पाणिगृहीता या कौमारी पाणिवर्जिता ।
भ्रातृभार्या स्वभार्येति प्रसूयेत्पुत्रमौरसम् ।

half ). — $G_{1,3,4}$ om. the ref. — ( L. 76 ) $M_{1-3}$. गृह्णाति ( for गृह्णीयात् ). — ( L. 77 ) $D_{10}$ अथ ते विहिता गर्भास्तासु कन्यासु नारद. — ( L. 78 ) $D_{10}$ तासां ( for तस्य ). $D_{10}$ भवतीह ( for भवेदेतत् ). — ( L. 79 ) $T_1$ धर्माभावेन ( for °चारेषु ). $D_{10}$ $G_2$ ये ( for ते ). $G_2$ -शोभनाः ( for -शोधनाः ). $D_{10}$ वर्जितास्त्वतिदूषिताः ; $T_1$ दूषिताः कृतशोभनाः ; M दूषिता धर्मदूषणाः ( for the post. half ). — ( L. 80 ) $D_{10}$ मोघं कर्म फलत्यपि ( for the post. half ). — ( L. 81 ) $G_3$ क्रीडार्थं ता- ( for क्रीता दत्ता ). $D_{10}$ [अ]थ वा हृता ( for हृतापि वा ). — ( L. 82 ) $D_{10}$ -फलं तासां ; $T_1$ -फलं तस्यास् ( for -कृतं तस्यास् ). — ( L. 83 ) $D_{10}$ कन्या पाणिविवर्जिता ( for the post. half ). — ( L. 84 ) $G_2$ या ( for सा ). $M_4$ ( also as above ) कन्या ( for भार्या ). $D_{10}$ प्रसवेत्पुत्रमौरसं ( for the post half ). — $D_{10}$ om. line 85. — ( L. 85 ) $T_3$ भक्त्यर्थे ; $M_4$ पत्न्यर्थे ( for पत्यर्थे ). $T_1$ न ( for तत् ). Madras ed. [अ]पवर्जिते ( for [अ]पराजिते ). — ( L. 86 ) $D_{10}$ कथं ( for केन ). $D_{10}$ -कार्याणि ( for -कृत्येषु ). — ( L. 88 ) $D_{10}$ हि ( for नि- ). $D_{10}$ वपुष्मती ( for प्रतिष्ठिता ). — After line 88, $D_{10}$ reads line 97, repeating it in its proper place. $D_{10}$ om. line 89. — ( L. 89 ) $T_1$ M तदा ( $T_1$ $M_4$ °था ) शुभा धृतिः शोभा ; $G_2$ शोभनास्ता शुभा योग्याः ( for the prior half ). M पूजा- ( for पूज्या ). — ( L. 90 ) $D_{10}$ आगारस्थं ( for आकरस्थं ). $D_{10}$ -फलं भवेत् ; $T_1$ $M_{1-3}$ -फलोदयं ( for -फलोपगम् ). — ( L. 91 ) $D_{10}$ सदा ( for महा- ). $G_3$ reads the post. half of line 91 and the prior half of line 92 ( transposed ) twice. — Before line 92, $D_{10}$ ins. मार्कण्डेयः. — $D_{10}$ reads line 92 twice. — ( L. 92 ) $D_{10}$ ( second time ) कथं कन्या च लभते ( for the prior half ). $D_{10}$ ( second time ) प्राणिनां ( for देहिनाम् ). — ( L. 93 ) $D_{10}$ $M_4$ चरितं ; $T_1$ $M_{1-3}$ चारित्र- ( for चारित्रं ). $D_{10}$ वृत्तं च ( for वृत्तेन ). $M_{1,3,4}$ निकषोपलः. — Before line 94, $D_{10}$ *ins.* नारदः. — ( L. 94 ) $D_{10}$ अर्चयित्वा स्वकान्वर्णान्कन्यकायास्तथा नरः. — ( L. 95 ) $M_4$ प्रसूयति. — ( L. 96 ) $D_{10}$ सा च ( for the second साध्वी ). — ( L. 97 ) $D_{10}$ ( first time ) मुने सा श्रीस्ततो रक्षा ( for the prior half ). $D_{10}$ ( both times ) प्रतिष्ठा शाश्वतीः समाः ( for the post. half ). — Colophon. *Sub-parvan* : $D_{10}$ M दानधर्म. — *Adhy. name* : $T_2$ मार्कंडेयनारदसंवादे कन्यालक्षणं ; $T_3$ G कन्यालक्षणं ; $M_{1-3}$ नारदमार्कंडेयसंवादे पुत्रकन्यावि( $M_1$ °न्यासंवि )भागः ; $M_4$ नारदगीतासु कन्यावृत्तं. — *Adhy. no.* : $D_{10}$ 49 ; $T_1$ M 51 ; $T_{2,3}$ $G_{2,4}$ 57 ; $G_{1,3}$ 52. — ( L. 98 ) $D_{10}$ महामुने ( for °मते ). — ( L. 99 ) $M_{1-3}$ धर्माधर्मौ ( for °धर्मं ). $M_4$ महामते ( for परिग्रहे ). $D_{10}$ गम्यागम्यासु नारद ( for the post. half ). — ( L. 100 ) $M_1$ ( also as above ) नराणां न कलौ तथा ( for the post. half ). — ( L. 101 ) $G_2$ [इ]त ( for [इ]ह ). $T_1$ [अ]पिता ( for हिता ). $D_{10}$ प्रेत्येव च यथा व्युष्टिः ( for the prior half ). — ( L. 102 ) $D_{10}$ साक्षात् ( for साध्वी ). — ( L. 103 ) $D_{10}$ M च ( for स्व- ). $D_{10}$ सूयते ( for प्रसूयेत् ).

मार्कण्डेयः ।
त्रयो भार्यागमा ज्ञाता यत्र धर्मो न नश्यति ।
पञ्चान्याः पश्चिमा ब्रूहि भार्यास्तासां च ये सुताः ।

नारदः ।
सगोत्रभार्या क्रीता च परभार्या च कारिता ।
गतागता च या भार्या आश्रमादाहृता च या ।
एते भार्यागमाः पञ्च पुनर्भार्या भवन्ति याः ।
एता भार्या नृणां गम्यास्तत्पुत्रा हव्यकव्यदाः ।

Colophon.

मार्कण्डेयः ।
श्रुता भार्याश्च पुत्राश्च विस्तरेण महामुने ।
आश्रमस्थाः कथं नार्यो न दुष्यन्तीति ब्रूहि मे ।

नारदः ।
आश्रमस्थासु नारीषु बान्धवत्वं प्रणश्यति ।
नष्टवंश्या भवन्त्येता बन्धूनामथ भर्तृणाम् ।
परदारा मुक्तदोषास्ता नार्योऽऽश्रमसंस्थिताः ।
स्वयमीशाः स्वदेहानां काम्यास्तद्गतमानसाः ।
एवं नार्यो न दुष्यन्ति नराणां तत्प्रसूतिषु ।
धर्मपत्न्यो भवन्त्येताः सपुत्रा हव्यकव्यदाः ।

मार्कण्डेयः ।
परस्य भार्या या पूर्वं मृते भर्तरि या पुनः ।
अन्यं भजति भर्तारं ससुता असुता कथम् ।

नारदः ।
असूता वा प्रसूता वा गृहस्थानां परस्त्रियः ।
परामृष्टेति ता वर्ज्या धर्माचारेषु दूषिताः ।
न चासां हव्यकव्यानि प्रतिगृह्णन्ति देवताः ।
यस्तासु जनयेत्पुत्रान्न तैः पुत्रमवाप्नुयात् ।

मार्कण्डेयः ।
परक्षेत्रेषु यो बीजं चापल्याद्विसृजेन्नरः ।
कथं पुत्रफलं तस्य भवेत्तदृषिसत्तम ।

नारदः ।
अस्वामिके परक्षेत्रे यो नरो बीजमुत्सृजेत् ।
स्वयंवृत्तोऽऽश्रमस्थायां तद्बीजं न विनश्यति ।
परक्षेत्रेषु यो बीजं नरो दर्पात्समुत्सृजेत् ।
क्षेत्रिकस्यैव तद्बीजं न बीजी लभते फलम् ।
नातः परमधर्म्यं चाप्ययशस्यं तथोत्तरम् ।
गर्भादीनां च बहुभिस्ताश्च त्याज्याः समेष्वपि ।

मार्कण्डेयः ।
अथ ये परदारेषु पुत्रा जायन्ति नारद ।
कस्य ते बन्धुदायादा भवन्ति परमद्युते ।

नारदः ।
परदारेषु जायेते द्वौ पुत्रौ कुण्डगोलकौ ।
जीवत्यथ पतौ कुण्डो मृते भर्तरि गोलकः ।
ते च जाताः परक्षेत्रे देहिनां प्रेत्य चेह च ।

—(L. 104) $T_2$ ज्ञेयं; $T_3$ ज्ञेया; $M_4$ धर्म्या (for ज्ञाता). $M_{1-3}$ महामते (for न नश्यति). —(L. 105) $T_1$ पंचमाः (for पञ्चान्याः). $D_{10}$ पंचेमा अपरा यास्ता ब्रूहि भार्याः सुतेषु च. —(L. 106) $D_{10}$ भ्रातृभार्या च (for सगोत्रभार्या). $T_1$ प्रीता (for क्रीता). $D_{10}$ नारद (for कारिता). —(L. 107) $D_{10}$ भार्या च (for या भार्या). $D_{10}$ आश्रमस्था च या परा (for the post. half). —(L 108) $T_2$ G भार्यागताः (for °माः). —(L. 109) $D_{10}$ नृभिः (for नृणां). $D_{10}$ M कार्याः; $T_1$ अन्यास् (for गम्यास्). $D_{10}$ M सपुत्रा (for तत्पुत्रा). — Colophon om. in $M_{1-3}$. — *Adhy. name :* $T_2$ मार्कंडेयनारदसंवादे धर्माधर्मपरिग्रहलक्षणं. — *Adhy. no. :* $T_1$ $M_4$ 52; $T_{2.3}$ $G_{2.4}$ 58; $G_{1.3}$ 53. — $D_{10}$ om. (hapl.) lines 110–117. —(L. 111) Cv च या (for कथं). $G_2$ भो (for मे). $T_2$ न दूष्यंति हि न प्रभो (for the post. half). —(L. 112) $T_3$ प्रपश्यति (for प्रण°). —(L. 113) $T_1$ प्रष्टव्याश्च (for नष्टवंश्या). $G_4$ अपि (for अथ). $G_2$ भ्रातृणां (for भर्तृणाम्). $M_{1-3}$ सपुत्रा हव्यकव्यदाः (for the post. half). —(L. 114) $M_3$ परदारोक्तदोषास्ता (for the prior half). —(L. 115) $G_1$ स्वगेहानां (for स्वदे°). —(L. 118) $T_1$ सा; $G_2$ वा; M यत् (for the second या).

—(L. 119) $G_4$ चासुता; Madras ed. ह्य° (for अ°). $D_{10}$ तासु कन्यासु या च सा (for the post. half). —(L. 120) $M_{1-3}$ गृहस्थेन (for गृहस्थानां). —(L. 121) $D_{10}$ परक्षेत्रेति सा वर्ज्या (for the prior half). $D_{10}$ चोदिताः (for दूषिताः). $T_1$ धर्माचारबहिष्कृताः (for the post. half). —(L. 122) $D_{10}$ तस्या (for चासां). —(L. 123) $G_2$ न (for यस्). $D_{10}$ यस्तस्यां जनयेत्पुत्रं (for the prior half). $D_{10}$ न स पुत्रत्वमाव्रजेत्; $T_1$ $G_2$ $M_{1.2.4}$ न तैः पुत्र($M_{1.2}$ °त्रि)त्वमाप्नुयात् (for the post. half). — $D_{10}$ om. (hapl.) lines 124–131. $T_3$ $G_2$ om. (hapl.) lines 124–127. —(L. 124) Kumbh. ed. चापलाद् (for °ल्याद्). —(L. 127) $M_{1.4}$ स्वयंवृतो (for °वृत्तो). $T_1$ स्वयंवृताश्रमस्था वा (for the prior half). —(L. 129) $T_1$ ब्रह्मन् (for बीजं). $G_2$ न बीजी फलमाप्नुयात् (for the post. half). —(L. 130) $G_2$ यथोत्तरं (for त°). — $T_1$ om. line 131. —(L. 131) $G_2$ $M_4$ गर्हादिना (for गर्भादीनां). —(L. 132) $D_{10}$ ते (for ये). $D_{10}$ मानवैः (for नारद). —(L. 133) $D_{10}$ भवंति मुनिसत्तम (for the post. half). — Lines 134–137 = (var.) Manu. 3. 174–175. —(L. 134) $D_{10}$ यातौ यौ; $G_4$ जायंते (for जायेते).

दत्तानि हव्यकव्यानि नाशयन्त्यथ दातृणाम् ।
पितुर्हि नरकायैते गोलकस्तु विशेषतः ।
चण्डालतुल्यौ तज्ञौ हि परत्रेह च नश्यतः ।
मार्कण्डेयः ।
कस्य ते गर्हिताः पुत्राः पितॄणां हव्यकव्यदाः ।
यस्य क्षेत्रे प्रसूयन्ते यो वा ताञ्जनयेत्सुतान् ।
नारदः ।
क्षेत्रिकश्चैव बीजी च द्वावेतौ निरयं गतौ ।
न रक्षति हि यो दारान्परदारांश्च गच्छति ।
गर्हितास्ते नरा नित्यं धर्माचारबहिष्कृताः ।
कुण्डो भोक्ता च भोजी च कुत्सिताः पितृदैवतैः ।
मार्कण्डेयः ।
तथैते गर्हिताः पुत्रा हव्यकव्यानि नारद ।
कस्य नित्यं प्रयच्छन्ति धर्मो वा तेषु किं फलम् ।
नारदः ।
यातुधानाः पिशाचाश्च प्रतिगृह्णन्ति तैर्हुतम् ।
हव्यं कव्यं च तैर्दत्तं ये च भूता निशाचराः ।
मार्कण्डेयः ।
अथ ते राक्षसाः प्रीताः किं प्रयच्छन्ति दातृणाम् ।
किं वा धर्मफलं तेषां भवेत्तदृषिसत्तम ।
नारदः ।
न दत्तं नश्यते किंचित्सर्वभूतेषु दातृणाम् ।
प्रेत्य चेह च तां पुष्टिमुपाश्नन्ति प्रदायिनः ।
मार्कण्डेयः ।
अथ गोलककुण्डाभ्यां संततिर्या भविष्यति ।
तयोर्ये बान्धवाः केचित्प्रदास्यन्ति कथं नु तत् ।
नारदः ।
साध्वीजाताः सुतास्तेषां तां वृत्तिमनुतिष्ठताम् ।
प्रीणन्ति पितृदैवत्यं हव्यकव्यसमाहिताः ।
एवं गोलककुण्डाभ्यां ये च वर्णापदेशिनः ।
हव्यं कव्यं च शुद्धानां प्रतिगृह्णन्ति देवताः ।
Colophon.
मार्कण्डेयः ।
श्रुतं नराणां चापल्यं परस्त्रीषु प्रजायताम् ।
प्रमदानां तु चापल्ये दोषमिच्छामि वेदितुम् ।
नारदः ।
एकवर्णेऽपि दोषं तु गमनं पूर्वकालिकम् ।
धाता च समनुज्ञातो विष्णुना तत्तथाकरोत् ।

— (L. 135) $D_{10}$ [ए]व पतौ ; $T_1$ [ए]व धवे (for [अ]-थ पतौ). $D_{10}$ भवति (for भर्तरि). — $G_2$ om. line 136. — (L. 136) $T_1$ प्र- ; $M_{1-3}$ हि (for च). $D_{10}$ तौ तु जातौ परक्षेत्रे (for the prior half). $D_{10}$ प्राणिनां (for देहिनां). — (L. 137) $G_2$ तयोस्तु (for दत्तानि). $T_1$ $M_4$ प्र- (for [अ]थ). $D_{10}$ नाशयेतां प्रदायिनां ; $G_2$ नाशं दत्तानि यांति च ; $M_{1-3}$ नाशं यांति प्रदातृणां (for the post. half). — $D_{10}$ om. lines 138–139. — (L. 138) $T_1$ $G_2$ पित्रोर् (for पितुर्). $T_1$ $G_2$ M [ए]तौ (for [ए]ते). — (L. 139) Some MSS. चांडाल-. — (L. 141) $G_2$ प्रसूयंति. $D_{10}$ यस्य क्षेत्रेषु जायंते (for the prior half). $T_1$ हि ताञ्; $G_3$ वा सं- (for वा ताञ्). $D_{10}$ नरः (for सुतान्). — (L. 142) $D_{10}$ क्षेत्रकं चैव बीजं तु (for the prior half). $D_{10}$ नरकं (for निरयं). $M_4$ (*inf. lin.*) गमौ (for गतौ). — (L. 143) $D_{10}$ यो व्रजेत् (for गच्छति). — (L. 144) $T_{2,3}$ $G_4$ धर्ममार्ग- (for धर्माचार-). $D_{10}$ धर्माचारेषु साधुभिः (for the post. half). — (L. 145) $D_{10}$ $M_{1,2}$ कुंड- (for कुण्डो). $D_{10}$ भोगी (for भोजी). Madras ed. कुत्सितः. $D_{10}$ जयंति पितृदेवतां (for the post. half). — (L. 146) $D_{10}$ $T_1$ अथ ते ; $G_2$ तथा ते (for तथैते). — After line 146, $M_{1-3}$ ins. :

पितृदेवविसृष्टानि भुञ्जते ते महामुने ।

— $M_2$ om. line 147. — (L. 147) $G_1$ तस्य (for कस्य). $D_{10}$ पुष्टिं (for नित्यं). $D_{10}$ $T_1$ धर्माचारेषु किं फलं (for the post. half). — (L. 149) $M_{1,2}$ हव्य-. $M_{1-3}$ यैर् (for तैर्). — $M_1$ om. (hapl.) lines 151–152. — (L. 151) $D_{10}$ कथं दत्तं ; $G_2$ किं वा कर्म- (for किं वा धर्म-). $T_1$ भवेच्च ; $G_2$ उभयोर् ; $M_{2,3}$ भवेत (for भवेत्तद्). $D_{10}$ वै मुनि- (for तदृषि-). — (L. 152) $G_2$ दत्तं न (by transp.). — (L. 153) $D_{10}$ एव (for चेह). M व्युष्टिम् (for पुष्टिम्). $D_{10}$ प्रदायकाः (for °यिनः). — (L. 154) $D_{10}$ चातो भार्या (for संततिर्या). — (L. 155) $D_{10}$ भवेत् ; $G_{1-3}$ तु तत् (for नु तत्). — (L. 156) $T_1$ M सतां वृत्तिमनुष्ठिताः (for the post. half). $D_{10}$ सर्वे एते धर्मसुतास्तेषां वृत्तिरनुष्ठिता. — (L. 157) $T_1$ -देवास्ते (for -दैवत्यं). $D_{10}$ प्रयांति पितृदेवांश्च ; $G_2$ प्रीणयंति पितॄन्देवान् (for the prior half). $D_{10}$ -समाहितं (for °ताः). $G_2$ हव्यकव्यैः समाहितैः (for the post. half). — (L. 158) $D_{10}$ एवं कुंडगोलकाभ्यां (for the prior half). $T_1$ वंश्या (for ये च). — (L. 159) M वि- (for च). $D_{10}$ $G_2$ हव्यकव्याति($G_2$ °द्वि)शुद्धानां (for the prior half). — Colophon om. in $D_{10}$. *Sub-parvan* : M दानधर्म. — *Adhy. name* : $T_2$ मार्कंडेयनारदसंवादे कुंडगोलकदोषकथनं ; $G_{1,3}$ कुंडगोलकदोषकथनं ; M नारदगीता. — *Adhy. no.* : $T_1$ $M_4$ 53 ; $T_{2,3}$ $G_{2,4}$ 59 ; $G_{1,3}$ 54 ; $M_{1-3}$ 52. — (L. 160) $T_1$ M चापल्ये. $D_{10}$ श्रुतं परस्त्रीजातं यं यश्चैवात्र प्रसूयिता. — (L. 161) $D_{10}$ चापल्यं (for °ल्ये). $D_{10}$ एतद् (for दोषम्). — $D_{10}$ om. lines 162-163. $T_1$ M transp. lines 162–163 and

भगलिङ्गे महाप्राज्ञ पूर्वमेव प्रजापतिः ।
ससर्ज ताभ्यां संयोगमनुज्ञातश्चकार सः ।
अथ विष्णुप्रसादेन भगो दत्तवरः किल ।
तेन चैव प्रसादेन सर्वांल्लँोकानुपाश्नुते ।
तस्मात्तु पुरुषे दोषो ह्यधिको नात्र संशयः ।
विना गर्भं सवर्णेषु न त्याज्या गमनात्स्त्रियः ।
प्रायश्चित्तं यथान्यायं दण्डं कुर्यात्तु पण्डितः ।
श्वभिर्वा दशनं स्नानं सवनत्रितयं निशि ।
भूमौ च भस्मशयनं दानं भोगविवर्जितम् ।
दोषगौरवतः कालो द्रव्यगौरवमेव च ।
मर्यादा स्थापिता पूर्वमिति तीर्थान्तरं गते ।
तद्योषितां तु दीर्घायो नास्ति दोषो व्यतिक्रमे ।
भगस्तीर्थान्तरे शुद्धो विष्णोस्तु वचनादिह ।
रक्ष्याश्चैवान्यसंवादैरन्यगेहाद्विमोक्षणैः ।
आसां शुद्धौ विशेषेण कर्मणां फलमश्नुते ।
नैता वाच्या न वै वध्या न क्लेश्याः शुभमिच्छता ।
विष्णुप्रसादादित्येव भगस्तीर्थान्तरं गतः ।
मासि मासि रजस्तासां दुष्कृतान्यपकर्षति ।
स्त्रियस्तोषकरा नृणां स्त्रियस्तुष्टिप्रदाः सदा ।
पुत्रसेतुप्रतिष्ठाश्च स्त्रियो लोके महाद्युते ।

Colophon.

मार्कण्डेयः ।

श्रुतं बलं प्रभावश्च योषितां मुनिसत्तम ।
एकस्य बहुभार्यस्य धर्ममिच्छामि वेदितुम् ।

नारदः ।

बहुभार्यासु सक्तस्य नारीभोगेषु देहिनः ।
ऋतौ विमुच्यमानस्य सांनिध्ये भ्रूणहा स्मृतः ।
वृद्धां वन्ध्यां सुव्रतां च मृतापत्यामपुष्पिणीम् ।
कन्यां च बहुपुत्रां च वर्जयन्मुच्यते भयात् ।
व्याधितो बन्धनस्थो वा प्रवासेष्वथ पर्वसु ।
ऋतुकालेषु नारीणां भ्रूणहत्यां प्रमुञ्चति ।

मार्कण्डेयः ।

वेशनारीषु वै जाताः परप्रेष्यासु वा सुताः ।
कस्य ते बन्धुदायादा भवन्ति हि महामुने ।

164–165. — (L. 162) T2 G2, 4 तु; M4 (*inf. lin.*) वि- (for ऽपि). — (L. 164) T1, 3 G भगलिंगैर्. D10 G2 M महाभाग (for °प्राज्ञ). D10 आद्यकाले (for पूर्वमेव). — (L. 165) T1 मनुजांश्च (for अनुज्ञातश्). G2 अनुजज्ञे पितामहः (for the post. half). D10 पूर्वं एव तु सा राजन्संयोगेन विगर्हितं (sic). — (L. 166) D10 पुरा (for अथ). M4 जिष्णु- (for विष्णु-). D10 त्रीँल्लोकान्समुपाश्नुते (for the post. half). — (L. 167) G2 कामान् (for लोकान्). — T1 reads line 168 twice. — (L. 168) T2, 3 G1, 3, 4 [ऽ]भ्यधिको (for ह्य°). — (L. 171) Madras ed. बहिर् (for श्वभिर्). T2 M1 दर्शनं; T3 G2 दंशनं (for द°). M -त्रितये (for °यं). — (L. 172) T2, 3 G1, 3, 4 भस्मनि (for च भस्म-). T1 om. the post. half. M1, 2, 4 -विवर्जनं (for °जितम्). — (L. 173) T1 om. the post. half. T3 दिव्य- (for द्रव्य-). — (L. 174) T1 इह स्त्रीणां व्यतिक्रमे (for the post. half). — (L. 177) G2 प्रसादाद्यैर् (for [अ]न्यसंवादैर्). Madras ed. -देहाद् (for -गे°). Kumbh. ed. विचक्षणैः (for विमो°). — (L. 179) T1 ता (for [ए]ता). T1 नरैर्नार्यो (for न वै वध्या). G1, 3 शुद्धिम् (for शुभम्). — T1 om. line 180. — (L. 180) M1–3 [प्र]वं; M4 [प्र]प (for [प्र]व). M1–3 भगे (for भगस्). M1–3 गते (for गतः). — (L. 181) T2 द्युतिस्; Kumbh. ed. ऋतुस् (for रजस्). G2 चासां; M4 चैषां (for तासां). — (L. 182) G2 पुष्टि- (for तुष्टि-). — (L. 183) T1 M महामुने (for °द्युते). — For lines 167–183, D10 subst.:

मर्यादा स्थापिता नित्यं विष्णुना स्त्रीषु गर्हिता ।
न नारी दुष्यते धर्मे परपुंसावमर्दने ।
न च साधुर्विभवति यथा प्राह पितामहः ।
विष्णोस्तोषाद्भगः पूर्वमिति तीर्थान्तरं गतः ।
तन्नारीणां तु दीर्घायो नास्ति दोषो व्यतिक्रमे ।
मासि मासि रजो मुक्त्वा विशुध्यन्ते यथा शशी ।
न संतोषकरो नृणां समृद्धिं निर्वृतिरात्मभिः (?) ।
पुत्रांश्चापि प्रतिष्ठाप्य जगत्यथ प्रतिष्ठिताम् (?) ।

Colophon. *Sub-parvan :* M1–3 दानधर्म. — *Adhy. name :* T2 G2 स्त्रीप्रशंसा; G3 कुंडगोलकदोषकथनं; M2, 3 नारदगीतासु योषित्प्रभावकथनं; M4 नारदगीता. — *Adhy. no. :* T1 M4 54; T2 G2, 4 60; G1, 3 55; M1–3 53. — (L. 184) D10 योषितां वै महामुने (for the post. half). — (L. 186) Kumbh. ed. गेहिनः (for दे°). — (L. 187) G2 सांनिध्ये गर्भहिंसनं (for the post. half). D10 ऋतौ च वर्तमानस्य सांनिध्ये भ्रूणहत्यया. — (L. 188) T1 सव्रतां; T2, 3 G M4 संवृतां (for सुव्रतां). D10 व्रतिनीम् व्रतिनीं वा; M1–3 व्रतवान्प्रवसन्व्यर्थां (for the prior half). T1 मृतपुत्राम् (for मृतापत्याम्). D10 च पुष्पिणीं (for अपु°). — (L. 190) G2 व्यथितो (for व्याधितो). D10 सवनस्थो (for बन्धनस्थो). G3 M प्रवासी वा (for °सेषु). T1 [अ]पि (for [अ]थ). D10 प्रवासी वा व्रती तथा (for the post. half). — (L. 191) G4 -काले तु (for -कालेषु). D10 भ्रूणहत्या प्रमुच्यते (for the post. half). — (L. 192) T3 G3, 4 M2, 3 -जातीषु (for -नारीषु). D10 T1, 3 M1–3 ये; G2 M4 वा (for वै). D10 ये (for वा). — G3

नारदः ।
पण्यस्त्रीषु प्रसूता ये यस्य स्त्री तस्य ते सुताः ।
क्रयाच्च कृत्रिमाः पुत्राः प्रदानाच्चैव दत्त्रिमाः ।
मार्कण्डेयः ।
पण्यनारीष्वनियतः पुंसोऽर्थो वर्तते ध्रुवम् ।
अत्र चाहितगर्भायाः कस्य पुत्रं वदन्ति तम् ।
नारदः ।
तीर्थभूतासु नारीषु ज्ञायते योऽभिगच्छति ।
ऋतौ तस्य भवेद्गर्भो यं वा नारी न शङ्कते ।
मार्कण्डेयः ।
नराणां त्यजतां भार्यां कामक्रोधाद्गुणान्विताम् ।
अप्रसूतां प्रसूतां वा तेषां पृच्छामि निष्कृतिम् ।
नारदः ।
अपापां त्यजमानस्य साध्वीं मत्यैवमादितः ।
आत्मवंशः स्वधर्मो वा त्यजतो निष्कृतिर्न तु ।
यो नरस्त्यजते भार्यां पुष्पिणीमप्रसूतिकाम् ।
स नष्टवंशः पितृभिर्युक्तस्त्यज्येत दैवतैः ।
भार्यामपत्यसंजातां प्रसूतां पुत्रपौत्रिणीम् ।
पुत्रदारपरित्यागी न संप्राप्नोति निष्कृतिम् ।
एवं हि भार्यां त्यजतां नराणां नास्ति निष्कृतिः ।
नार्हन्ति प्रमदास्त्यक्तुं पुत्रपौत्रप्रतिष्ठिताः ।

मार्कण्डेयः ।
कीदृशीं संत्यजन्भार्यां नरो दोषैर्न लिप्यते ।
एतदिच्छामि तत्त्वेन विज्ञातुमृषिसत्तम ।
नारदः ।
मोक्षधर्मस्थितानां तु अन्योन्यमनुजानताम् ।
भार्यापतीनां मुक्तानामधर्मो न विधीयते ।
अन्यसङ्गां गतापत्यां शूद्रगां परगामिनीम् ।
परीक्ष्य त्यजमानानां नराणां नास्ति पातकम् ।
पातकेऽपि तु भर्तव्यौ द्वौ तु माता पिता तथा ।
मार्कण्डेयः ।
भार्यायां व्यभिचारिण्यां नरस्य त्यजतो वृथा ।
कथं धर्मोऽप्यधर्मो वा भवतीह महामते ।
नारदः ।
अनृतेऽपि हि सत्ये वा यो नारीं दूषितां त्यजेत् ।
अरक्षमाणः स्वां भार्यां नरो भवति भ्रूणहा ।
अपत्यहेतोर्या नारी भर्तारमतिलङ्घयेत् ।
लोलेन्द्रियेति सा रक्ष्या न संत्याज्या कथंचन ।
नद्यश्च नार्यश्च समस्वभावा
नैताः प्रदुष्यन्ति नरावगाढाः ।
स्रोतांसि नद्या वहते निपातं
नारी रजोभिः पुनरेति शौचम् ।

---

om. the ref. — (L. 194) D10 परस्त्रीषु प्रजाता ये (for the prior half). T2 वै (for ते). — (L. 195) D10 क्रयिणः (for कृत्रिमाः). M1-3 प्रोक्ताः (for पुत्राः). D10 प्रदायिनः (for [ए]व दत्त्रिमाः). — D10 om. (hapl.) lines 196-199. — (L. 197) M -गर्भायां (for °याः). T1 गर्भिण्यां चैव तस्यां तु (for the prior half). G2 M4 गर्भं (for पुत्रं). M1-3 कस्य गर्भो भवेत्तु सः (for the post. half). — (L. 198) T1 G2 M4 जायते (for ज्ञा°). T2, 3 G3, 4 हि (for ऽभि-). — (L. 200) T2, 3 G कामक्रोध- (for °धाद्). D10 कामक्रोधसमन्वितां (for the post. half). — (L. 202) T1 अपापां त्यजतो मोहान्निष्कृतिर्नोपलभ्यते. — T1 om. line 203. — (L. 203) Madras ed. स्वधर्मं तु (for °र्मो वा). Madras ed. त्यजतां (for °तो). D10 यो धर्मः प्रतिपन्नानां निष्कृतिर्नैव दृश्यते; M आत्मवंशं हि त्यजतो निष्कृतिर्नोपलभ्यते. — (L. 205) T1 G1 M त्यक्तम् (for युक्तम्). T1 त्यजति (for त्यज्येत). — (L. 206) D10 भार्यामपापां त्यजतः (for the prior half). — (L. 207) D10 हि; G2 स (for सं-). — G2 om. (hapl.) line 208. — (L. 209) G2 प्रमदां (for °दास्). D10 न सार्हति महाभागा (for the prior half). G2 पुत्रिणीमप्यपुत्रिणीं (for the post. half). — (L. 210) G2 त्यजतो (for संत्यजन्). D10 कीदृशीं त्यजमानोऽथ (for the prior half). D10 पापैर् (for दोषैर्). — (L. 212) D10 G2 M मोक्षधर्मे. — (L. 214) T1 M कन्यासूं विगतापत्यां; G2 अन्यप्रसूतां पतितां (for the prior half). T1 G2 M शूद्रगा(M2 भगिनी)मपकारिणीं (for the post. half). — For lines 213-214, D10 subst.:

भार्यां पतिविनिर्मुक्तां विचरन्तीं च कामतः ।
अबीजां वन्ध्यकासूं च मृतापत्यां च भामिनीम् ।

— (L. 215) D10 बलेन (for परीक्ष्य). — D10 M om. line 216. — (L. 216) G2 वि- (for the first तु). G2 द्वौ मातापितराविति (for the post. half). — (L. 218) D10 अथ (for कथं). D10 M महामुने (for °मते). — For line 218, G2 subst.:

प्रायश्चित्ते तदाभ्यासे धर्मो वाधर्म एव वा ।

— (L. 219) M वाथ (for ऽपि हि). D10 अनृतेप्यथ वा सत्ये; T1 अनृतेनापि सत्ये वा; G2 °ते वाथ वा सत्ये (for the prior half). T1 विसृष्टां (for यो नारीं). — (L. 220) T1 G2 तां (for स्वां). D10 त्यक्त्वा; T2, 3 ततो (for नरो). — (L. 221) D10 अभि- (for अति-). — (L. 222) M1-3 सं- (for सा). D10 सा (for सं-). G3 M कदाचन (for कथं°). — (L. 223) T1 G2 -प्रभावा (for -स्वभावा). — (L. 224) Kumbh. ed. प्रमुंचंति (for प्रदुष्यन्ति). D10 न ताः प्रदुष्यंति नरो-

एवं नार्यो न दुष्यन्ति व्यभिचारेऽपि भर्तृणाम् ।
मासि मासि भवेत्त्यागस्ततः शुद्धा भवन्त्युत ।
मार्कण्डेयः ।
कानि तीर्थानि भगवन्नृणां देहाश्रितानि वै ।
तानि वै शंस भगवन्याथातथ्येन पृच्छतः ।
सर्वतीर्थेषु तीर्थज्ञ किं तीर्थं परमं नृणाम् ।
यत्रोपस्पृश्य पूतात्मा नरो भवति नित्यशः ।
नारदः ।
देवर्षिपितृतीर्थानि ब्राह्मं मध्येऽथ वैष्णवम् ।
नृणां तीर्थानि पञ्चाहुः पाणौ संनिहितानि वै ।
आद्यतीर्थं तु तीर्थानां वैष्णवो भाग उच्यते ।
यत्रोपस्पृश्य वर्णानां चतुर्णां वर्धते कुलम् ।
पितृदैवतकार्याणि वर्धन्ते प्रेत्य चेह च ।
मार्कण्डेयः ।
नराणां कामवृत्तानां या नार्यो निरवग्रहाः ।
यासामभिग्रहो नास्ति ता मे कथय नारद ।
नारदः ।
वागुर्वेश्या नटी गोपी तान्तुकी तुन्नवायिकी ।
नारी किराती शवरी नर्तकी चानभिग्रहा ।
मार्कण्डेयः ।
एतासु जाता नारीषु सर्ववर्णेषु ये सुताः ।
तेषु के बन्धुदायादा भवन्ति ऋषिसत्तम ।
नारदः ।
य एताः परिगृह्णन्ति तेषामेव हि ते सुताः ।
सर्वत्र तु प्रवृत्तासु बीजं नश्यति देहिनाम् ।
मार्कण्डेयः ।
सर्वस्त्रीषु प्रवृत्ताश्च साधुवेदविवर्जिताः ।
मानवाः काण्डपृष्ठाश्च वेदमन्त्रबहिष्कृताः ।
नियुक्ता हव्यकव्येषु तेषां दत्तं कथं भवेत् ।
नारदः ।
नार्हन्ति हव्यकव्यानि सावित्रीवर्जिता द्विजाः ।
व्रात्येष्वन्नप्रदानं तद्यथा शूद्रेषु वै तथा ।
मार्कण्डेयः ।
धर्मेष्वधिकृतानां तु नराणां मुह्यते मनः ।
कथं तु विघ्नो भवति एतदिच्छामि वेदितुम् ।
नारदः ।
अर्थाश्च नार्यश्च समानमेत-
च्छ्रेयांसि पुंसामिह मोहयन्ति ।
रतिप्रमोदात्प्रमदा हरन्ति
भोगैर्धनं चाप्युपहन्ति धर्मान् ।
हव्यं कव्यं च धर्मात्मा सर्वं तच्छ्रोत्रियोऽर्हति ।
दत्तं हि श्रोत्रिये साधौ ज्वलिताग्नाविवाहुतिः ।

---

पगूढाः. — (L. 225) $D_{10}$ स्रोतो हि नद्या व्यपनोति शौचं; $T_1$ स्रोतांसि नद्यः प्रवहंति सर्वे; $T_{2,3}$ G °सि नद्योपहतेः प्रपातं. — (L. 226) T G नार्यो (for नारी). $G_2$ शुद्धिं (for शौचम्). — (L. 227) $D_{10}$ भार्या (for नार्यो). $D_{10}$ व्यभिचारेण (for °रेऽपि). — $D_{10}$ om. lines 228–230. — (L. 228) Kumbh. ed. रागस् (for त्यागस्). — $T_2$ om. (hapl.) from the post. half of line 229 up to the prior half of line 230. — (L. 230) M मे (for वै). $T_1$ विप्रेंद्र; $M_4$ तीर्थानि (for भगवन्). — (L. 231) Kumbh. ed. सर्वज्ञ (for तीर्थज्ञ). $D_{10}$ तीर्थं परमकं नृणां (for the post. half). — (L. 232) $T_{2,3}$ $G_{1,3,4}$ पूतो यो (for पूतात्मा). $D_{10}$ तद्वद (for नित्यशः). — $G_2$ om. the ref. — (L. 233) $T_1$ अपि (for मध्ये). — (L. 234) $M_4$ पाणि- (for पाणौ). — (L. 235) $G_2$ M आद्यं तु तीर्थं तीर्थानां (for the prior half). $D_{10}$ अयं तु सर्वतीर्थानां विष्णोस्तीर्थमनुत्तमं. — (L. 236) $T_1$ चतुर्णां विंदते फलं (for the post. half). — (L. 237) $D_{10}$ सिद्धिर्वा सर्वकार्याणां (for the prior half). $D_{10}$ वर्धते; $G_2$ वर्तते (for वर्धन्ते). — $G_2$ नारदः (for मार्कण्डेयः). — (L. 238) M नारीणां (for नराणां). $D_{10}$ यास्ता नार्यो विगर्हिताः; $T_1$ या नार्यस्त्वनभिग्रहाः; M या नार्यो निराभिग्रहाः (for the post. half). — (L. 239) $D_{10}$ च नि- (for अभि-). $T_2$ $G_{2,4}$ तां (for ता). $D_{10}$ त्वमेतद्वक्तुमर्हसि (for the post. half). — $G_{1-3}$ $M_4$ om. the ref. — (L. 240) $D_{10}$ शुचिर्यथा नदी गोपी; $T_1$ वेश्या नटी गोपिका च (for the prior half). M तुन्नवायिका (for °यिकी). $T_1$ घटी वै तुन्नवायिनी (for the post. half). — (L. 241) $G_2$ $M_{1-3}$ दैवी (for नारी). $T_1$ रजकी (for नर्तकी). $G_{1-3}$ [अ]नवग्रहा (for °भिग्रहा). $D_{10}$ सैरंध्री शबरी चैव नर्तकी मानविग्रहा. — (L. 243) $T_1$ $G_3$ M केषु; $G_2$ केषां (for तेषु). $D_{10}$ $T_1$ $G_2$ M ते (for के). — (L. 244) $D_{10}$ भार्या भवेयुर्येषां तास् (for the prior half). — (L. 245) $M_{1-3}$ च (for तु). $D_{10}$ चापत्येन प्रवृत्तानां (for the prior half). $D_{10}$ वै नृणां (for देहिनाम्). — $D_{10}$ om. line 246. $T_1$ om. (hapl.) line 247. — (L. 247) $D_{10}$ -शास्त्र- (for -मन्त्र-). — After line 247, $M_4$ reads the post. half of line 248, repeating it in its proper place. — (L. 248) $D_{10}$ भोज्यंते हव्यकव्यानि (for the prior half). $M_4$ (second time) तेषु (for तेषां). $D_{10}$ तथाविधं (for कथं भवेत्). — (L. 249) $D_{10}$ नष्टसावित्रिका द्विजाः (for the post. half). — (L. 250) $M_{1-3}$ यत्र (for [अ]न्न-). $D_{10}$ प्रेत्य चेह प्रदातव्यं दत्त्वा शूद्रेषु चैव ह. — (L. 251) M [अ]भिरतानां (for [अ]धिकृ°). $D_{10}$ धर्मेष्वनभिरतानां तु (hypermetric) (for the prior half). — (L. 252) Madras ed. विघ्नं (for विघ्नो). — $G_2$ om. the ref. $D_{10}$ om. lines 253–256.

मार्कण्डेयः ।

श्रोत्रियाणां कुले जाता वेदार्थविदितात्मनाम् ।
हित्वा कस्मात्त्रयीं विद्यां वार्तां वृत्तिमुपाश्रिताः ।

नारदः ।

चातुर्वर्ण्यं पुरा न्यस्तं सुविद्वत्सु द्विजातिषु ।
तस्माद्वर्णैः संविभज्या वृत्तिः संकरवर्जिता ।
ये चान्ये श्रोत्रियाज्जाताः संस्कृताः पुत्रगृध्नुभिः ।
पूर्वनिर्वाणनिर्वृत्तां जातां वृत्तिमुपाश्रिताः ।

मार्कण्डेयः ।

असंस्कृताः श्रोत्रियजाः संस्कृता ज्ञानिनः कथम् ।

नारदः ।

असंस्कारो वैदिकश्च न मान्यः श्रोत्रियात्मजः ।
शुद्धान्वयः श्रोत्रियस्तु स विद्वद्भिः समोऽन्यथा ।
अनधीयानपुत्राश्च वेदसंस्कारवर्जिताः ।
तस्मात्ते वेदविज्ञापि विप्राः श्रुतिनिकारिणः ।
ब्रह्मराशौ पुरा सृष्टा वेदसंस्कारसंस्कृताः ।
तस्मात्तेष्वेव ते जाताः साधवः कुलधारिणः ।

मार्कण्डेयः ।

स्वयं क्रीतासु प्रेष्यासु प्रसूयन्ते तु ये नराः ।
कस्य नार्यः सुताश्चैव भवन्ति ऋषिसत्तम ।

नारदः ।

स्वदारास्वां यो नरो मोहात्प्रसूयेत स पापकृत् ।
इहापि निन्दितः प्रेत्य अपत्यं प्रेष्यतां नयेत् ।
सा तस्य भार्या पुत्रा ये हव्यकव्यप्रदास्तु ते ।
तस्या ये बान्धवाः केचिद्विपक्षाः प्रेष्यतां गताः ।
सर्वे तस्यास्तु संबन्धान्मुच्यन्ते प्रेष्यकर्मसु ।
एतत्ते कथितं सर्वं यदभिव्याहृतं त्वया ।
अथ वा संशयः कश्चिद्भूयः संप्रष्टुमर्हसि ।

—(L. 253) $T_{2,3}$ $G_4$ अर्थोर्थ- (for अर्थाश्च). —(L. 255) $T_1$ नरं (for रति-). —(L. 256) $T_1$ धनैश् (for धनं). —(L. 257) $D_{10}$ $T_1$ M यत्किंचित् (for धर्मात्मा). $D_{10}$ तत्सर्वं (by transp.); $G_3$ विनीतः. —(L. 258) $M_{1-3}$ तच् (for हि). $D_{10}$ श्रेष्ठं (for साधो). $G_2$ M ज्वलितेश्चाच् (for °ताश्चाद्). —$D_{10}$ transp. lines 259 and 260. —(L. 259) $D_{10}$ श्रोत्रियस्य कुले जातं वेदार्थे विदितात्मनः. —(L. 260) $D_{10}$ $M_3$ तस्मात् (for क°). —(L. 261) $D_{10}$ ग्रस्तं (for न्यस्तं). $T_1$ धर्मवित्सु (for सुविद्वत्सु). $D_{10}$ सा सा जातिर्द्विजातिना (for the post. half). —(L. 262) $T_1$ संविभक्ता (for °भज्या). — Before line 263, $T_{2,3}$ G ins. मार्कण्डेयः. —(L. 263) $D_{10}$ श्रोत्रिये (for °याज्). $D_{10}$ $T_1$ $G_3$ M -गृद्धिभिः (for -गृध्नुभिः). — T G Madras ed. om. line 264. —(L. 264) $M_4$ -निर्वृत्तास् (for °त्तां). M तां तां (for जातां). $D_{10}$ वृत्तिं ते समुपाश्रिताः (for the post. half). — After line 264, $D_{10}$ ins. :

मार्कण्डेयः ।

मरुतः केन विख्याताः साध्याः केन महामुने ।
एतदिच्छामि तत्त्वेन विज्ञातुमृषिसत्तम ।

नारदः ।

कश्यपस्य सुताः सप्त दिव्या जातास्तरस्विनः ।
मारुतास्ते च विख्याता व्याप्य लोकत्रयं स्थिताः ।
इन्द्रेण सप्तधा भिन्नो दित्या गर्भोऽनुरूपतः ।
इन्द्रेण मा रुदेत्युक्त्वा तदैतेषां मरुत्वता ।
तस्मात्तद्गर्भादिन्द्रेण सह लोहितबिन्दुभिः ।
निःसृतास्तत्र ये साध्या देवा इन्द्रपुरोगमाः ।
आवहः प्रवहः प्राणो विवहः संवहस्तथा ।
उद्वहश्च तथोदानः सप्तैते मारुतोत्तमाः ।
सहस्रशश्च ते सर्वे भ्रातरः साध्यमारुताः ।
मातुर्नियोगादिन्द्रेण सहाया राज्यधारिणः ।

— $T_{2,3}$ G om. the ref. $D_{10}$ om. lines 265–267. —(L. 265) $T_1$ M ज्ञानिजाः (for °नः). —(L. 266) $G_2$ असंस्कृता वैदिकाश्च (for the prior half). $T_1$ नमस्यः; Kumbh. ed. Madras ed. स मान्यः (for न मान्यः). —(L. 267) $M_1$ शुद्धान्वये. $T_1$ कृतः (for ऽन्यथा). — After line 267, $G_2$ ins. :

वृषलावृषलानीं च त्यक्त्वा संस्कारसंयुताः ।

— Before line 268, $M_4$ ins. नारदः. — $G_2$ om. (hapl.) lines 268–270. —(L. 268) $D_{10}$ अनधीनाः कुपुत्राश्च; $T_3$ $G_{1,3,4}$ अनधीयानधीयांश्च (for the prior half). —(L. 269) $D_{10}$ तस्मात्ते तदविज्ञाता विश्रुताश्च हि कारणात्. — Before line 270, $D_{10}$ ins. नारदः. —(L. 270) $D_{10}$ ब्रह्मणा ये (for ब्रह्मराशौ). —(L. 271) $G_2$ $M_4$ एतेषु (for तेष्वेव). $G_2$ ये (for ते). $D_{10}$ तस्मिन्देशे तु ये ज्ञाताः (for the prior half). —(L. 272) $G_{1,3}$ स्वसंस्कृतासु प्रेष्यासु (for the prior half). —(L. 273) $T_1$ वा ते (for नार्यः). $G_2$ $M_{1-3}$ मुनि- (for ऋषि-). —(L. 275) $M_{1-3}$ निंद्यते (for निन्दितः). $M_{2,3}$ [अ]प्यवश्यं (for अपत्यं). $T_1$ परलोकेपि हीयते (for the post. half). —(L. 276) T तस्यां जातास्तु पुत्रा ये (for the prior half). —(L. 277) $D_{10}$ विपन्नाः (for विपक्षाः). —(L. 278) $M_{1-3}$ तस्याः सर्वे (by transp.). $D_{10}$ तस्याः संबंधतः सर्वे (for the prior half). $T_1$ M -कर्मणः (for -कर्मसु). —(L. 279) $G_2$ इह (for अभि-). —(L. 280) $M_{2,3}$ त्वं (for सं-). $D_{10}$ यत्र ते संशयो जातः किं भूयः श्रोतुमिच्छसि. — $T_1$ om. lines 281–282 (with the ref.). — $T_1$ om. the ref. —(L. 283) $T_1$ मुनिभिर् (for ऋषि°). — $T_1$ om. line 284. —(L. 284) $M_{1,2,4}$

मार्कण्डेयः ।

अमिथ्यादर्शनो लोके नारदः सर्वकोविदः ।
प्रत्यक्षदर्शी लोकानां स्वयंभूरिव सत्तमः ।

भीष्मः ।

इति संभाष्य ऋषिभिर्मार्कण्डेयो महातपाः ।
नारदं चापि सत्कृत्य तेन चैवाभिसत्कृतः ।
आमन्त्रयित्वा ऋषिभिः प्रययावाश्रमं मुनिः ।
ऋषयश्चापि तीर्थानां परिचर्यां प्रचक्रमुः ।
सुक्षेत्रबीजसंस्कारविशुद्धो ब्रह्मचर्यया ।
नित्यनैमित्तिकात्स्नातो मनःशुद्ध्या च शुध्यति ।

Colophon.

## 8

After 13. 32, $V_1$ B Dn $D_{5.8.10}$ ins. :

युधिष्ठिरः ।

पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
त्वत्तोऽहं श्रोतुमिच्छामि धर्मं भरतसत्तम ।
शरणागतं ये रक्षन्ति भूतग्रामं चतुर्विधम् ।
किं तस्य भरतश्रेष्ठ फलं भवति तत्त्वतः ।

भीष्मः ।

इदं शृणु महाराज धर्मपुत्र महायशः ।
इतिहासं पुरावृत्तं शरणार्थं महाफलम् ।
प्रपात्यमानः श्येनेन कपोतः प्रियदर्शनः ।
वृषदर्भं महाभागं नरेन्द्रं शरणं गतः ।
स तं दृष्ट्वा विशुद्धात्मा त्रासादङ्कमुपागतम् ।
आश्वास्याश्वसिहीत्याह न तेऽस्ति भयमण्डज ।
भयं ते सुमहत्कस्मात्कुत्र किं वा कृतं त्वया ।
येन त्वमिह संप्राप्तो विसंज्ञो भ्रान्तचेतनः ।
नवनीलोत्पलापीड चारुवर्ण सुदर्शन ।
दाडिमाशोकपुष्पाक्ष मा त्रसस्वाभयं तव ।
मत्सकाशमनुप्राप्तं न त्वां कश्चित्समुत्सहेत् ।
मनसा ग्रहणं कर्तुं रक्षाध्यक्षपुरस्कृतम् ।
काशिराज्यं तवाद्येदं त्वदर्थं जीवितं तथा ।
त्यजेयं भव विश्रब्धः कपोत न भयं तव ।

श्येनः ।

ममैतद्विहितं भक्ष्यं न राजंस्त्रातुमर्हसि ।
अतिक्रान्तं च प्राप्तं च प्रयत्नाच्चोपपादितम् ।
मांसं च रुधिरं चास्य मज्जा मेदश्च मे हितम् ।
परितोषकरो ह्येष मम मास्याग्रतो भव ।
तृष्णा मे बाधतेऽत्युग्रा क्षुधा निर्दहतीव माम् ।
मुञ्चैनं न हि शक्ष्यामि राजन्मन्दयितुं क्षुधाम् ।
मया ह्यनुसृतो ह्येष मत्पक्षनखविक्षतः ।
किंचिदुच्छ्वासनिःश्वासं न राजन्गोप्तुमर्हसि ।
यदि स्वविषये राजन्प्रभुस्त्वं रक्षणे नृणाम् ।

---

संपूज्य ( for सत्कृत्य ). — ( L. 285 ) $T_1$ च मुनीन्; $G_2$ $M_{1.2}$ [अ]थ ( $M_{1.2}$ च ) ऋषीन् ( for ऋषिभिः ). $M_3$ चाश्रमं ( for आ° ). — For lines 284-285, $D_{10}$ subst. :

न मिथ्याचक्षते लोके नारदो धर्मदर्शनः ।
यत्र तेऽहं प्रवक्ष्यामि प्रातः श्रोष्यामि गम्यताम् ।
नारदस्य वचः श्रुत्वा सर्वधर्मार्थदर्शिनः ।
नारदश्च ऋषींश्चैव सर्वे तमभिवाद्य च ।
प्रातः कृतोपदेशश्च मार्कण्डेयाय विस्मितः ।
मुनीनामन्त्र्य स मुनिमार्कण्डेयं पुनः पुनः ।
प्रस्थितो मनसा प्रीतः कृतकृत्यस्तपोधनः ।

— $D_{10}$ om. lines 286–288. — ( L. 286 ) $T_1$ $G_2$ $M_{1.2.4}$ प्रचक्रिरे ( for °क्रमुः ). — $T_1$ $M_{1.2}$ om. lines 287–288. — ( L. 287 ) $M_4$ सुक्षेत्रबीजे संस्कारस् ( for the prior half ). $G_2$ $M_4$ तच्छुद्धो ( for -विशुद्धो ). — $M_3$ om. line 288. — ( L. 288 ) $M_4$ [अ]पि ( for च ). $G_2$ $M_4$ सिध्यति ( for शु° ). — Colophon. *Sub-parvan :* $D_{10}$ M दानधर्म. — *Adhy. name :* $D_{10}$ मार्कंडेयपृच्छा ; $T_2$ मार्कंडेयनारदसंवादे स्त्रीसंकरवर्णसंस्कारश्राद्धपुत्रानिरूपणं ; $T_3$ $G_{1.3.4}$ मार्कंडेयनारदसंवादः ; $M_{1-3}$ मार्कंडेयनिवर्तनं ; $M_4$ नारदमार्कंडेयसंवादः. — *Adhy. no. :* $D_{10}$ 51; $T_1$ $G_3$ $M_4$ 55; $T_{2.3}$ $G_{2.4}$ 61; $G_1$ 56; $M_{1-3}$ 54.

### 8

The episode of Śibi Auśīnara's having saved the life of a pigeon pursued by a hawk occurs in the *Mahābhārata*, in several contexts; *vide*, 3. 130. 19–131. 30 and 3. App. I, No. 21. 5.

( L. 1 ) $B_4$ सर्वशास्त्रभृतां वर ( for the post. half ). — ( L. 2 ) $D_5$ सर्वं ( for धर्मं ). — ( L. 3 ) Prior half hypermetric. $B_{1-4}$ $D_{8.10}$ रक्षति यो ( for ये रक्षन्ति). — ( L. 4 ) $B_1$ तद्वद ( for तत्त्वतः ). — ( L. 5 ) $B_{2-4}$ महाभाग ; $Dn_{1.n2}$ °प्राज्ञ ( for °राज ). — ( L. 11 ) $B_1$ अत्र ( for कुत्र ). — ( L. 15 ) $D_{10}$ समुत्सृजेत् ( for °त्सहेत् ). — ( L. 17 ) $V_1$ तदर्थेति ; $B_{1.2.4.5}$ $Dn_3$ $D_5$ तदर्थेदं ; $Dn_{1.n2}$ तदर्थैव ( for तवाद्येदं ). — ( L. 19 ) $B_4$ अर्हति ( for °सि ). — ( L. 22 ) $B_1$ च ( for मा ). — ( L. 24 ) $B_{1.3.4}$ शक्यामि ( for शक्ष्यामि ). $V_1$ $B_{1.2}$ $D_5$ मंदायितुं ; $B_4$ मोच° ; $B_5$ धार° ( for मन्द° ). — $D_{10}$ om. line 25. — ( L. 25 ) $Dn_{1.n2}$ स्वनुसृतो ( for ह्यनु° ). — ( L. 28 ) $B_3$ खगस्य च ( for खेचरस्य ). $V_1$ B Dn $D_5$ अथोत्तम ( for अथो मम ). — ( L. 29 ) $D_{8.10}$ मित्रेषु ( for भृत्येषु ).

खेचरस्य तृषार्तस्य न त्वं प्रभुरथो मम ।
यदि वैरिपु भृत्येपु स्वजनव्यवहारयोः ।
विषयेष्विन्द्रियाणां च आकाशे मा पराक्रम ।
प्रभुत्वं हि पराक्रम्य सम्यक्पक्षहरेपु ते ।
यदि त्वमिह धर्मार्थी मामपि द्रष्टुमर्हसि ।
भीष्मः ।
श्रुत्वा श्येनस्य तद्वाक्यं राजर्पिर्विस्मयं गतः ।
संभाव्य चैनं तद्वाक्यं तदर्थी प्रत्यभाषत ।
गोवृषो वा वराहो वा मृगो वा महिषोऽपि वा ।
त्वदर्थमद्य क्रियतां क्षुधाप्रशमनाय ते ।
शरणागतं न त्यजेयमिति मे व्रतमाहितम् ।
न मुञ्चति ममाङ्गानि द्विजोऽयं पश्य वै द्विज ।
श्येनः ।
न वराहं न चोक्षाणं न चान्यान्विविधान्द्विजान् ।
भक्षयामि महाराज किमन्नाद्येन तेन मे ।
यस्तु मे विहितो भक्षः स्वयं देवैः सनातनः ।
श्येनाः कपोतान्खादन्ति स्थितिरेपा सनातनी ।
उशीनर कपोते तु यदि स्नेहस्तवानघ ।
ततस्त्वं मे प्रयच्छाद्य स्वमांसं तुलया धृतम् ।
राजा ।
महाननुग्रहो मेऽद्य यस्त्वमेवमिहात्थ माम् ।
बाढमेवं करिष्यामीत्युक्त्वासौ राजसत्तमः ।
उत्कृत्योत्कृत्य मांसानि तुलया समतोलयत् ।
अन्तःपुरे ततस्तस्य स्त्रियो रत्नविभूषिताः ।
हाहाभूता विनिष्क्रान्ताः श्रुत्वा परमदुःखिताः ।
तासां रुदितशब्देन मन्त्रिभृत्यजनस्य च ।
बभूव सुमहान्नादो मेघगम्भीरनिस्वनः ।
निरुद्धं गगनं सर्वं शुभ्रं मेघैः समन्ततः ।
मही प्रचलिता चासीत्तस्य सत्येन कर्मणा ।
स राजा पार्श्वतश्चैव बाहुभ्यामूरुतश्च यत् ।
तानि मांसानि संछिद्य तुलां पूरयते शनैः ।
तथापि न समस्तेन कपोतेन बभूव ह ।
अस्थिभूतो यदा राजा निर्मांसो रुधिरस्रवः ।
तुलां ततः समारूढः स्वं मांसक्षयमुत्सृजन् ।
ततः सेन्द्रास्त्रयो लोकास्तं नरेन्द्रमुपस्थिताः ।
भेर्यश्चाकाशगैस्तत्र वादिता देवदुंदुभिः ।
अमृतेनावसिक्तश्च वृषदर्भो नरेश्वरः ।
दिव्यैश्च सुसुखैर्माल्यैरभिवृष्टः पुनः पुनः ।
देवगन्धर्वसंघातैरप्सरोभिश्च सर्वतः ।
नृत्तश्चैवोपगीतश्च पितामह इव प्रभुः ।
हेमप्रासादसंबाधं मणिकाञ्चनतोरणम् ।
स वैदूर्यमणिस्तम्भं विमानं समधिष्ठितः ।
स राजर्षिर्गतः स्वर्गं कर्मणा तेन शाश्वतम् ।
शरणागतेषु चैवं त्वं कुरु सर्वं युधिष्ठिर ।
भक्तानामनुरक्तानामाश्रितानां च रक्षिता ।
दयावान्सर्वभूतेषु परत्र सुखमेधते ।
साधुवृत्तो हि यो राजा सद्वृत्तमनुतिष्ठति ।
किं न प्राप्तं भवेत्तेन स्वव्याजेनेह कर्मणा ।
स राजर्षिर्विशुद्धात्मा धीरः सत्यपराक्रमः ।
काशीनामीश्वरः ख्यातस्त्रिपु लोकेपु कर्मणा ।
योऽप्यन्यः कारयेदेवं शरणागतरक्षणम् ।
सोऽपि गच्छेत तामेव गतिं भरतसत्तम ।
इदं वृत्तं हि राजर्षेर्वृषदर्भस्य कीर्तयन् ।
पूतात्मा वै भवेल्लोके शृणुयाद्यश्च नित्यशः ।

Colophon.

— (L. 30) B1 Dn3 D5 विषये तु (for °येषु). — (L. 32) B1 D5 अपि (for इह). D10 धर्मार्थे (for °र्थी). — (L. 34) V1 B Dn3 D8.10 संसाध्य; D5 संपाद्य (for संभाव्य). V1 B Dn2 D6.10 तदर्थे (Dn2 °र्थं) (for तदर्थी). — Before line 35, V1 B Dn D6.8.10 ins. राजोवाच. — (L. 37) Prior half hypermetric. — (L. 39) B1-4 D8.10 मृगान् (for द्विजान्). — (L. 41) B Dn D5 भक्ष्यः. — (L. 42) V1 B Dn3 D5 पुरातनी (for सना°). — (L. 43) B1 om. from कपोते up to त्वं मे (in line 44). B2.4 D3.10 न (for तु). — (L. 45) B3 एव विहाय (for एवमिहात्थ). — (L. 47) D5 तुलयामास तोलयन् (for the post. half). — (L. 50) D5 रुदन- (for रुदित-). B1 मंत्रिणां स्व- (for मन्त्रिभृत्य-). — (L. 58) ✻ Cn: मांसक्षयं मांसालयं शरीरम्। ✻ — (L. 62) B1 कुसुमैर् (for सुसुखैर्). D8.10 अभिवर्षन्पुरंदरः (for the post. half). — (L. 63) D10 -संतानैर् (for -संघातैर्). V1 B Dn3 D6.8.10 सर्वशः (for °तः). — (L. 64) B1 नृत्यैश् (for नृत्तश्). — (L. 66) Dn3 वैडूर्य- (for वैदूर्य-). D10 वैडूर्यविपणिस्तंभं (for the prior half). — (L. 68) Prior half hypermetric. B1-4 D8.10 रक्षां (for सर्वं). — (L. 72) D10 स्वकीयेन (for स्वव्याजेन). — D5 om. (hapl.) lines 73-74. — (L. 75) B1 -पालनं (for -रक्षणम्). — (L. 77) B2.3.5 Dn1.n2 D5.8.10 राजर्षे. — (L. 78) B3 कृतार्थो (for पूतात्मा). D10 चापि (for यश्च). — Colophon. *Parvan name:* B1-4 Dn3 शांति. — *Sub-parvan:* V1 B Dn D6.8.10 दानधर्म. — *Adhy. name:* V1 B Dn D5.8.10 श्येनकपोतीयं. — *Adhy. no.:* V1 32; D6.10 31.

## 9

After 13. 80, D10 S Kumbh. ed. Madras ed. and Cv ins. :—

युधिष्ठिरः

सुराणामसुराणां च भूतानां च पितामह ।
प्रभुः स्रष्टा च भगवान्मुनिभिः स्तूयते विभुः ।
तस्योपरि कथं ह्येष गोलोकः स्थानतां गतः ।
संशयो मे महानेष तन्मे व्याख्यातुमर्हसि ।

भीष्मः ।

मनोवाग्बुद्धयस्तावदेकस्थाः कुरुसत्तम ।
ततो मे शृणु कार्त्स्न्येन गोमहाभाग्यमुत्तमम् ।
पुण्यं यशस्यमायुष्यं तथा स्वस्त्ययनं महत् ।
कीर्तिर्विहरतां लोके गवां योगेषु भक्तिमान् ।
श्रूयते हि पुराणेषु महर्षीणां महात्मनाम् ।
संस्थाने सर्वलोकानां देवानां चापि संभवे ।
देवतार्थेऽमृतार्थे च यज्ञार्थे चैव भारत ।
सुरभिर्नाम विख्याता रोहिणी कामरूपिणी ।
संकल्प्य मनसा पूर्वं रोहिणी ह्यमृतानना ।
घोरं तपः समास्थाय निर्मिता विश्वकर्मणा ।
पुरुषं चासृजद्भूयस्तेजसा तपसा च ह ।
देदीप्यमानं वपुषा समिद्धमिव पावकम् ।
सोऽपश्यद्दिव्यरूपां तां सुरभिं रोहिणीं तदा ।
दृष्ट्वैव चातिविमनाः सोऽभवत्काममोहितः ।
तं कामार्तमथो ज्ञात्वा स्वयंभूर्लोकभावनः ।
मार्तो भव तथा चैष भगवानभ्यभाषत ।
ततः स भगवांस्तत्र मार्ताण्ड इति विश्रुतः ।
चकार नाम तं दृष्ट्वा तस्यार्तीभावमुत्तमम् ।
सोऽददाद्भगवांस्तस्मै मार्ताण्डाय महात्मने ।
सुरूपां सुरभिं कन्यां तपस्तेजोमयीं शुभाम् ।
यथा मयैष चोद्भूतस्त्वं चैवेषा च रोहिणी ।
मैथुनं गतवन्तौ च तथा चोत्पत्स्यति प्रजा ।
प्रजा भविष्यते पुण्या पवित्रं परमं च वाम् ।
न चाप्यगम्यागमनाद्दोषं प्राप्स्यसि कर्हिचित् ।
त्वत्प्रजासंभवं क्षीरं भविष्यति परं हविः ।
यज्ञेषु चाज्यभागानां त्वत्प्रजामूलजो विधिः ।
प्रजाशुश्रूषवश्चैव ये भविष्यन्ति रोहिणि ।
तव तेनैव पुण्येन गोलोकं यान्तु मानवाः ।
इदं पवित्रं परममृषभं नाम कर्हिचित् ।
यद्वै ज्ञात्वा द्विजा लोके मोक्ष्यन्ते योनिसंकरात् ।
एतत्क्रियाः प्रपत्स्यन्ते मन्त्रब्राह्मणसंस्कृताः ।
देवतानां पितॄणां च हव्यकव्यपुरोगमाः ।
तत एतेन पुण्येन प्रजास्तव तु रोहिणि ।
ऊर्ध्वं ममापि लोकस्य वत्स्यन्ते निरुपद्रवाः ।
भद्रं तेभ्यश्च भद्रं ते ये प्रजासु भवन्ति वै ।
युगंधराश्च ते पुत्राः सन्तु लोकस्य धारणे ।
यान्यान्कामयसे लोकांस्तांल्लोकाननुयास्यसि ।
सर्वदेवगणाश्चैव तव यास्यन्ति पुत्रताम् ।
तव स्तनसमुद्भूतं पिबन्तोऽमृतमुत्तमम् ।
एवमेतान्वरान्सर्वानगृह्णात्सुरभिस्तदा ।
ब्रुवतः सर्वलोकेशान्निर्वृतिं चागमत्पराम् ।
सृष्ट्वा प्रजाश्च विपुला लोकसंधारणाय वै ।
ब्रह्मणा समनुज्ञाता सुरभिर्लोकमाविशत् ।
एवं वरप्रदानेन स्वयंभोरेव भारत ।
उपरिष्टाद्गवां लोकं प्रोक्तं ते सर्वमादितः ।

Colophon.

---

9

(L. 1) T1 नराणां (for भूतानां). —(L. 2) G2 स्रष्ट्रा (for स्रष्टा). T2 त्रायते (for स्तू°). D10 T3 G2. 4 भुवि (for विभुः). —(L. 3) D10 T2 G4 लोकश्च (for गोलोकः). —(L. 6) T1 गवां भाग्यमनुत्तमं; T2 गोमाहात्म्यमनुत्तमं (for the post. half). — T1 om. line 8. —(L. 8) G1. 3 श्रेष्ठेषु; Kumbh. ed. यो गोषु (for योगेषु). —(L. 9) D10 T2. 3 G2. 4 शुश्रूयते (for श्रूयते हि). G3 पुराणे हि (for °णेषु). T1 ऋषीणां च (for महर्षीणां). — T1 om. 11. —(L. 11) G1. 3 वेदार्थे च (for देवतार्थे). —(L. 12) G4 नामभिः (for नाम वि°). —(L. 13) T1 सर्वं (for पूर्वं). T2 [अ]मृताशना (for °नना). —(L. 16) T1 पुरुषं (for वपुषा). —(L. 17) T2. 3 G1 दृष्ट- (for दिव्य-). — T1 om. lines 20-22. —(L. 20) G2 यथा (for तथा). —(L. 23) Madras ed. स ददौ (for सोऽददाद्). — T1 om. line 25. —(L. 25) M1-3 [ए]षा चैव (for [ए]वैषा च). —(L. 26) T1 प्रजार्थममितप्रभौ; M1-3 तथावां धास्यति प्रजाः (for the post. half). —(L. 30) T1 -मूलको (for °जो). — T1 M4 read lines 31-32 after line 38. —(L. 32) G4 गोलोकान्. G1. 3 यांति (for यान्तु). — After line 33, T1 reads line 40. T3 om. line 34. — M1-3 ins. after line 34 : T1 M4 after line 40 :

ऋषिभिर्निखिलं लोके वक्ष्यते धर्ममुत्तमम् ।

— After line 34, M4 reads line 40. —(L. 35) T1 G1. 3 प्रवर्तते; T2 प्रपद्यते (for °त्स्यन्ते). G1. 3 मंत्राः (for मन्त्र-). — T1 om. lines 39, 41-46. —(L. 44) Madras ed. राजन् (for सर्वान्). D10 T3 G2 तथा (for तदा). — T1 transp. lines 47 and 48. —(L. 49)

युधिष्ठिरः ।
सुरभेः काः प्रजाः पूर्वं मार्ताण्डादभवन्पुरा ।
एतन्मे शंस तत्त्वेन गोषु मे प्रीयते मनः ।
भीष्मः ।
शृणु नामानि दिव्यानि गोमातॄणां विशेषतः ।
याभिर्व्याप्तास्त्रयो लोकाः कल्याणाभिर्जनाधिप ।
सुरभ्यः प्रथमोद्भूता याश्च स्युः प्रथमाः प्रजाः ।
मयोच्यमानाः शृणु ताः प्राप्स्यसे विपुलं यशः ।
तप्त्वा तपो घोरतपाः सुरभिर्दीप्ततेजसी ।
सुषुवेकादश सुतान्रुद्रा ये छन्दसि स्तुताः ।
अजैकपादहिर्बुध्न्यस्त्र्यम्बकश्च महायशाः ।
वृषाकपिश्च शंभुश्च कपाली रैवतस्तथा ।
हरश्च बहुरूपश्च उग्र उग्रोऽथ वीर्यवान् ।
तस्य चैवात्मजः श्रीमान्विश्वरूपो महायशाः ।
एकादशैते कथिता रुद्रास्ते नाम नामतः ।
महात्मानो महायोगास्तेजोयुक्ता महाबलाः ।
एते वरिष्ठजन्मानो देवानां ब्रह्मवादिनाम् ।
विप्राणां प्रकृतिर्लोके एत एव हि विश्रुताः ।
एत एकादश प्रोक्ता रुद्रास्त्रिभुवनेश्वराः ।
शतं त्वेतत्समाख्यातं शतरुद्रं महात्मनाम् ।
सुषुवे प्रथमां कन्यां सुरभिः पृथिवीं तदा ।
विश्वकामदुघा धेनुर्या धारयति देहिनः ।
सुतं गोब्राह्मणं राजन्नेकमित्यभिधीयते ।
गोब्राह्मणस्य जननी सुरभिः परिकीर्त्यते ।
सृष्ट्वा तु प्रथमं रुद्रान्वरदान्ब्रह्मसंभवान् ।
पश्चात्प्रभुं ग्रहपतिं सुषुवे लोकसंमतम् ।
सोमराजानममृतं यज्ञसर्वस्वमुत्तमम् ।
ओषधीनां रसानां च देवानां जीवितस्य च ।
ततः श्रियं च मेधां च कीर्तिं देवीं सरस्वतीम् ।
चतस्रः सुषुवे कन्या योगेषु नियताः स्थिताः ।
एताः सृष्ट्वा प्रजा एषा सुरभिः कामरूपिणी ।
सुषुवे चरमं भूयो दिव्या गोमातरः शुभाः ।
पुण्यां मायां मधुश्च्योतां शिवां शीघ्रां सरिद्वराम् ।
हिरण्यवर्णां सुभगां गव्यां पृथ्वीं कुथावतीम् ।
अङ्गावतीं घृतवतीं दधिक्षीरपयोवतीम् ।
अमोघां सुरसां सत्यां रेवतीं मारुतीं रसाम् ।
अजां च सिकतां चैव शुद्धधूमामधारिणीम् ।
जीवां प्राणवतीं धन्यां शुद्धां धेनुं धनावहाम् ।
इन्द्रामृद्धिं च शान्तिं च शान्तपापां सरिद्वराम् ।
चत्वारिंशतमेकां च धन्यास्ता दिवि पूजिताः ।
भूयो जज्ञे सुरभ्याश्च श्रीमांश्चन्द्रांशुसप्रभः ।
वृषो दक्ष इति ख्यातः कण्ठे मणितलप्रभः ।
स्रग्वी ककुद्मान्द्युतिमान्मृणालसदृशप्रभः ।
सुरभ्यनुमते दत्तो ध्वजो माहेश्वरस्तु सः ।
सुरभ्यः कामरूपिण्यो गावः पुण्यार्थमुत्तमाः ।
आदित्येभ्यो वसुभ्यश्च विश्वेभ्यश्च ददुर्वरान् ।
सुरभिस्तु तपस्तप्त्वा सुषुवे गास्ततः पुनः ।
या दत्ता लोकपालानामिन्द्रादीनां युधिष्ठिर ।
सुदृतां कपिलां चैव रोहिणीं च यशस्विनीम् ।
सर्वकामदुघां चैव मरुतां कामरूपिणीम् ।

D10 T3 G2, 4 लोकः; T2 लोकाः (for लोकं). D10 T2, 3 G2, 4 प्रोक्तास् (for प्रोक्तं). — Colophon. *Sub-parvan*: D10 M1–3 दानधर्म. — *Adhy. name*: T2 गोमाहात्म्ये सुरभिसृष्टिप्रकारः; M1–3 गोमहाभाग्ये वरलाभः. — *Adhy. no.*: T1 M 110; T2, 3 G2, 4 117; G1, 3 111. — (L. 51) T1 [ऽ]नघ (for मनः). — T1 om. lines 52–53. — (L. 56) T1 घोररूपा; G2 °तरा (for °तपाः). T1 G1, 3 -तेजसः (for °सी). G2 सुरभिर्लोकपावनी (for the post. half). — (L. 57) T1 रुद्रान् (for रुद्रा). — (L. 58) T1 महातपाः (for °यशाः). — (L. 60) M1–3 रुद्र (for उग्र). — (L. 62) M4 प्रथिता (for क°). M तात (for नाम). — (L. 64) T3 वेदानां (for देवानां). — T1 om. line 65. — (L. 66) T1 M4 येकादश. — T1 om. line 67. — (L. 68) T2, 3 G2 तथा (for तदा). — T1 om. line 70. — (L. 72) D10 T3 G2 दृष्ट्वा (for सृष्ट्वा). D10 T3 G2 रुद्र- (for ब्रह्म-). — (L. 73) D10 T2, 3 G2 प्रभुद् (for प्रभुं). — (L. 74) M सोमं (for सोम-). — T1 om. line 75. — (L. 78) M1–3 देवी (for एषा). — (L. 79) D10 T2 G2, 4 परमं (for च°). — (L. 80) T3 G2 M अंबां (for मायां). T1 पुण्यामंबां मधुमतीं (for the prior half). — (L. 81) Kumbh. ed. -गर्भां (for -वर्णां). T1, 3 M भवां पृथ्वीं कुलायनीं (for the post. half). — (L. 84) D10 नामिकां; T1 हरसां (for सिकतां). T1 G1, 3 M4 शुचिधूम्राम्; G2 शुचिधूमाम् (for शुद्ध°). T3 अहारिणीं (for अधारिणीम्). M1–3 शुचिधूमामधारुणीं (for the post. half). — (L. 85) G1, 3 M जन्यां (for धन्यां). — (L. 86) T1 शांभवीयां (for शान्तपापां). — (L. 87) T1 कन्यास् (for ध°). — (L. 88) T1 तु (for च). T2 -संनिभः (for -सप्रभः). — T1 om. (hapl.?) lines 90–91. — (L. 90) G2 धृतिमान्; M4 मति° (for द्युति°). — (L. 91) M सुरभ्यानुमतो दत्तो (for the prior half). — (L. 92) M1–3 -चारिण्यो (for -रूपिण्यो). Kumbh. ed. उत्कटाः (for उत्तमाः). — (L. 94) M1–3 [ऽ]न्याः प्रजाः; M4 [ऽ]न्यास्ततः (for गास्ततः). T1 सुषुवेन्याः पुनः सुताः (for the post. half).

गावो सृष्टदुघा ह्येताश्चतस्रोऽमृतसंस्कृताः ।
यासां भूत्वा पुरा वत्साः पिबन्त्यमृतमुत्तमम् ।
सुष्टुतां देवराजाय वासवाय महात्मने ।
कपिलां धर्मराजाय वरुणाय च रोहिणीम् ।
सर्वकामदुघां धेनुं राज्ञे वैश्रवणाय च ।
इत्येता लोकमहिता विश्रुताः सुरभेः प्रजाः ।
एतासां प्रजया पूर्णा पृथिवी मुनिपुंगव ।
गोभ्यः प्रभवते सर्वं यत्किंचिदिह शोभनम् ।
सुरभ्यपत्यमित्येतन्नामतस्तेऽनुपूर्वशः ।
कीर्तितं ब्रूहि राजेन्द्र किं भूयः कथयामि ते ।

Colophon.

युधिष्ठिरः ।

सुरभ्यास्तु तदा देव्याः कीर्तिर्लक्ष्मीः सरस्वती ।
मेधा च प्रवरा देवी याश्चतस्रोऽभिविश्रुताः ।
पृथग्गोभ्यः किमेताः स्युरुताहो गोषु संश्रिताः ।
देवाः के वाश्रिता गोषु तन्मे ब्रूहि पितामह ।

भीष्मः ।

यं देवं संश्रिता गावस्तं देवं देवसंज्ञितम् ।
यद्यद्देवाश्रितं दैवं तत्तद्दैवं द्विजा विदुः ।
सर्वेषामेव देवानां पूर्वं किल समुद्भवे ।
अमृतार्थे सुरपतिः सुरभिं समुपस्थितः ।

इन्द्रः ।

इच्छेयममृतं दत्तं त्वया देवि रसाधिकम् ।
त्वत्प्रसादाच्छिवं मह्यममरत्वं भवेदिति ।

सुरभिः ।

वत्सो भूत्वा सुरपते पिबस्व प्रस्नवं मम ।
ततोऽमरत्वमपि तत्स्थानमैन्द्रमवाप्स्यसि ।
न च ते वृत्रहन्युद्धे व्यथारिभ्यो भविष्यति ।
बलार्थमात्मनः शक्र प्रस्नवं पिब मे विभो ।

भीष्मः ।

ततोऽधयत्स्तनं तस्याः सुरभ्याः सुरसत्तमः ।
अमरत्वं सुरूपत्वं बलं च पदमुत्तमम् ।
पुरंदरोऽमृतं पीत्वा प्रहृष्टः समुपस्थितः ।
पुत्रोऽहं तव भद्रं ते ब्रूहि किं करवाणि ते ।

सुरभिः ।

कृतं पुत्र त्वया सर्वमुपयाहि त्रिविष्टपम् ।
पालयस्व सुरान्सर्वाञ्जहि ये सुरशत्रवः ।
न च गोब्राह्मणेऽवज्ञा कार्या ते शान्तिमिच्छता ।
गोब्राह्मणस्य निःश्वासः शोषयेदपि देवताः ।
गोब्राह्मणप्रियो नित्यं स्वस्तिशब्दमुदाहरन् ।
पृथिव्यामन्तरिक्षे च नाकपृष्ठे च विक्रमेत् ।
यच्च तेऽन्यद्भवेत्कृत्यं तन्मे ब्रूयाः समासतः ।
तत्ते सर्वं करिष्यामि सत्येनैतद्ब्रवीमि ते ।

इन्द्रः ।

इच्छेयं गोषु नियतं वस्तुं देवि ब्रवीमि ते ।
एभिः सुरगणैः सार्धं ममानुग्रहमाचर ।

सुरभिः ।

गवां शरीरं प्रत्यक्षमेतत्कौशिक लक्षये ।

---

—(L. 96) $G_2$ सुस्थितां (for सुष्टुतां). $G_2$ पयस्विनीं (for यश°). —(L. 97) $M_4$ -दुहां (for -दुघां). $M_{1-3}$ मधुरां (for मरुतां). —$T_1$ om. lines 98–99. —(L. 98) $T_{2,3}$ G $M_4$ -दुहा (for -दुघा). $T_3$ $G_2$ $M_{1,3}$ -संस्तुताः (for -संस्कृताः). $D_{10}$ ताश्चतस्रोमृताः सुताः; $T_2$ याश्चतस्रोमृतास्तु याः; Kumbh. ed. ताश्चतस्रोत्र संस्तुताः (for the post. half). —(L. 102) $M_4$ -कामदुहां (for °घां). $T_2$ (also as above) चैव (for धेनुं). —(L. 103) $T_1$ -विख्याता; $G_2$ -महता (for -महिता). —$T_1$ om. line 106. —(L. 106) $G_{1,3}$ $M_2$ तु (for ऽनु-). —(L. 107) $T_1$ माहात्म्यं कीर्तितं त्वेतत् (for the prior half). —Colophon. *Sub-parvan:* $D_{10}$ $M_1$ दानधर्म. —*Adhy. name:* $T_2$ गोदानप्रकरणे सुरभिसृष्टिप्रकारकथनं; $T_3$ $G_2$ सुरभिसृष्टिः; $M_{1-3}$ गोमाहाभाग्ये सुरभ्यपत्यसंकीर्तनं. —*Adhy. no.:* $T_1$ 101; $T_{2,3}$ $G_{2,4}$ 118; $G_{1,3}$ 112; $M_{1-3}$ 111; $M_4$ 110. —(L. 108) $T_1$ $M_{1-3}$ सुता (for तदा). —(L. 109) $T_1$ प्रथिता (for प्रवरा). $D_{10}$ $G_{2,4}$ भुवि; $T_1$ [ऽ]पि वि-; $T_2$ [ऽ]थ वि-; $T_3$ $G_{1,3}$ $M_4$ हि वि- (for ऽभि वि-). —(L. 111) $M_{1-3}$ किमाश्रिता (for के वाश्रिता). —(L. 112) $M_{1-3}$ संश्रितं (for °ता). $T_2$ भावस् (for गा°). $M_4$ -संश्रितं (for -संज्ञितम्). $T_1$ स देवो देवसंज्ञितः; $T_2$ $M_{1-3}$ तद्देवं दै(M1 दे)वसंश्रि($T_2$ °ज्ञि)तं (for the post. half). —$T_1$ om. line 113. —(L. 113) $D_{10}$ $G_2$ $M_{1,3}$ दैवाश्रितं (for दे°). —(L. 115) $M_{1-3}$ सुरभिं समुपाश्रितः (for the post. half). —$T_3$ om. the ref. —(L. 117) $T_1$ चिरं (for शिवं). —(L. 118) $D_{10}$ प्रस्रवं (for प्रस्नवं). —(L. 119) $T_1$ अपि च; $G_2$ अमृतं (for अपि तत्). —(L. 120) $T_1$ दैन्यं जातु (for व्यथारिभ्यो). —(L. 121) $D_{10}$ प्रस्रवं (for प्रस्नवं). —(L. 122) $T_2$ $G_{1,3}$ [ऽ]पिबत् (for ऽधयत्). —(L. 123) $T_1$ $G_{1-3}$ अमृतत्वं (for अमरत्वं). $T_{1,2}$ [अ]भवद् (for पदम्). M अमरत्वं बलं सम्यगैश्वर्यं च पदोत्तमं. —(L. 124) M लब्ध्वा (for पीत्वा). —(L. 125) $M_{1-3}$ अस्मि (for तव). —(L. 127) $G_4$ वै (for ये). $T_1$ जयस्व सुरवैरिणः (for the post. half). —(L. 128) $M_{1-3}$ हि (for च). $G_4$ न कार्या (for कार्या ते). —$T_1$ om. (hapl.) line 129. $T_1$ om. 131.

यो यत्रोत्सहते वस्तुं स तत्र वसतां सुरः ।
सर्वं पवित्रं परमं गवां गात्रं सुपूजितम् ।
तथा कुरुष्व भद्रं ते यथा त्वं शक्र मन्यसे ।

भीष्मः ।

तस्यास्तद्वचनं श्रुत्वा सुरभ्याः सुरसत्तमः ।
सह सर्वैः सुरगणैरभजत्सौरभीं प्रजाम् ।
शृङ्गे वक्त्रे च जिह्वायां देवराजः समाविशत् ।
सर्वच्छिद्रेषु पवनः पादेषु मरुतां गणाः ।
ककुदं सर्वगो रुद्रः कुक्षौ चैव हुताशनः ।
सरस्वती स्तनेष्वध्या श्रीः पुरीषे जगत्प्रिया ।
मूत्रे कीर्तिः सुमहती मेधा पयसि शाश्वती ।
वक्त्रे सोमश्च वै देवो हृदये भगवान्यमः ।
धर्मः पुच्छे क्रिया लोम्नि भास्करश्चक्षुषी श्रितः ।
सिद्धाः संधिषु सिद्धिश्च तपस्तेजश्च वेष्टने ।
एवं सर्वे सुरगणा नियता गात्रवर्त्मसु ।
महती देवता गावो ब्राह्मणैः परिसंस्कृताः ।
तामाश्रयन्ति सहिता देवा हि प्रभविष्णवः ।
किमन्यत्सर्वकामेन न विदध्याद्भवान्प्रियम् ।
भावतः परया भक्त्या पूजयस्व नरेश्वर ।
गावस्तु परमं लोके पवित्रं पावनं हविः ।
निपात्य भक्षितः स्वर्गाद्भार्गवः फेनपः किल ।
स च प्राणान्पुनर्लब्ध्वा ततो गोलोकमाश्रितः ।

Colophon.

## 9A

D10 S Kumbh. ed. Madras ed. and Cv cont.:

युधिष्ठिरः ।

कः फेनपेति नाम्नासौ कथं वा भक्षितः पुरा ।
मृत उज्जीवितः कस्मात्कथं गोलोकमाश्रितः ।
विरुद्धे मानुषे लोके तथा समयवर्त्मसु ।
ऋते दैवं हि दुष्प्रापं मानुषेषु विशेषतः ।
संशयो मे महानत्र तन्मे व्याख्यातुमर्हसि ।

भीष्मः ।

श्रूयते भार्गवे वंशे सुमित्रो नाम भारत ।
वेदाध्ययनसंपन्नो विपुले तपसि स्थितः ।
वानप्रस्थाश्रमे युक्तः स्वकर्मनिरतः सदा ।
विनयाचारतत्त्वज्ञः सर्वधर्मार्थकोविदः ।
यत्तस्त्रिषवणस्नायी संध्योपासनतत्परः ।
अग्निहोत्ररतः क्षान्तो जपञ्जुह्वच्च नित्यदा ।
पितॄन्देवांश्च नियतमतिथींश्चैव पूजयन् ।

---

— (L. 132) G2 ब्रूहि (for ब्रूयाः). — (L. 136) G2 लक्ष्यते (for लक्ष्ये). — T1 om. the ref. T1 om. line 141. — (L. 143) T1 शृंगं वक्त्रं च जिह्वां च (for the prior half). — After line 143, T1 ins.:

उरःस्थितो गवां ब्रह्मा शिरःस्थाने सदाशिवः ।
शृङ्गमूले स्वयं शक्रः शृङ्गाग्रे च जनार्दनः ।

— (L. 144) T1 G1.3 M ककुदे. G1.3 वामकुक्षौ (for कुक्षौ चैव). — (L. 146) T1 च गंगा च (for सुमहती). T1 रक्ते शीतांशुरेव च (for the post. half). — T1 om. line 147. — (L. 147) Madras ed. कंठे (for वक्त्रे). M2.3 भवः; M4 भगः (for यमः). — (L. 148) T1 स्थितः; T2 स्मृतः (for श्रितः). — After line 148, T1 ins.:

ऋषयो रोमकूपेषु पादाङ्गुलीषु गुह्यकाः ।

— (L. 149) G1.3 M वेष्टते (for वे°). T1 सिद्धा अस्थिषु सर्वत्र विश्वेदेवाश्च वेष्टने. — (L. 150) G2 भर्तृ- (for गात्र-). — (L. 151) T1 -कीर्तिताः; G1.3.4 M -संस्तुताः (for -संस्कृताः). — (L. 152) G1.3 M गावः श्रयंति सहिता (for the prior half). — T1 om. line 153. — (L. 153) M -भावेन (for -कामेन). Kumbh. ed. किमन्यं सर्वभावेन विदध्याद्भगवान्प्रियं. — (L. 154) T1 गावः परमया भक्त्या (for the prior half). — (L. 155) T1 विदुः (for हविः). — M4 reads line 156 twice. — (L. 156) T1 निहत्य भक्षितो गोभिः; Cv निपात्य भर्जितः स्वर्गो (for the prior half). T3 Cv भार्गवं (for °वः). M4 (second time) फेनपं. — (L. 157) D10 T2.3 G3.4 ततो लोकं समाश्रितः (for the post. half). — Colophon. *Sub-parvan*: D10 दानधर्म. — *Adhy. name*: T2 गोदानप्रकरणे गोशरीरे सर्वदेवतास्थितिकरणं; M1-3 गोप्रशंसा. — *Adhy. no.*: T1 M 112; T2.3 G2.4 119; T3 G1.3 113.

9A

(L. 1) T1 फेनपः किल नाम्नासौ (for the prior half). — (L. 2) T1 आस्थितः (for आश्रितः). — T1 om. (hapl.?) lines 3-4. — (L. 3) T3 विरुद्धो (for °द्धे). — (L. 4) M मानुषेण (for °षु). — (L. 6) T1 M भार्गवः (for भारत). — T1 om. from the post. half of line 7 up to the prior half of line 8. — (L. 8) T1 स्वधर्म- (for स्वकर्म-). — T1 om. lines 9-10. — (L. 10) T2 नित्यं; G2 एकस्; Kumbh. ed. यत्नात् (for यत्तस्). — (L. 11) M1-3 -परः (for -रतः). G2 जपशीलश् (for जपञ्जुह्वच्). — (L. 12) Kumbh. ed. पितृदेवांश्. T1 पितृदेवार्चनपरो; T2 पितृंश्च देवान्नियतम् (for the prior half). D10 G4 स; T1 [अ]पि; T2.3 G2 सु- (for [ए]व). — T1 om. (hapl.) line 13.

प्राणसंधारणार्थं च यत्किंचिदुपहारयन् ।
गिरिश्विशिखरो नाम यतः प्रभवते नदी ।
कुलहेति पुराणेषु विश्रुता रुद्रनिर्मिता ।
तस्यास्तीरे समे देशे पुष्पमालासमाकुले ।
वन्यौषधिद्रुमोपेते नानापक्षिमृगायुते ।
व्यपेतदंशमशके ध्वाङ्क्षगृध्रैरसेविते ।
कृष्णदर्भतृणप्राये सुरम्ये ज्योतिरश्मिनि ।
सर्वोन्नतैः समैः श्यामैर्याज्ञीयैस्तरुभिर्वृते ।
तत्राश्रमपदं पुण्यं भृगूणामभवत्पुरा ।
उवास तत्र नियतः सुमित्रो नाम भार्गवः ।
यथोद्दिष्टेन पूर्वेषां भृगूणां साधुवर्त्मनाम् ।
तस्मा आङ्गिरसः कश्चिद्ददौ गां शर्करीं शुभाम् ।
वर्षासु पश्चिमे मासि पौर्णमास्यां शुचिव्रतः ।
स तां लब्ध्वा धर्मशीलश्चिन्तयामास तत्परः ।
सुमित्रः परया भक्त्या जननीमिव मातरम् ।
तेन संधुक्ष्यमाणा सा रोहिणी कामचारिणी ।
विवृद्धिमगमच्छ्रेष्ठा प्राणतश्च सुदर्शना ।
सिराविमुक्तपार्श्वान्ता विपुलां कान्तिमुद्वहत् ।
श्यामपार्श्वान्तपृष्ठान्ता सुरभिर्मधुपिङ्गला ।
बृहती सूक्ष्मरोमान्ता रूपोदग्रा तनुत्वचा ।
कृष्णपुच्छा श्वेतवक्त्रा समवृत्तपयोधरा ।
पृष्ठोन्नता पूर्वनता शङ्कुकर्णी सुलोचना ।
दीर्घजिह्वा ह्रस्वशृङ्गी संपूर्णदशनान्तरा ।
मांसाधिकगलान्ता सा प्रसन्ना शुभदर्शना ।
नित्यं शमयुता स्निग्धा संपूर्णोदात्तनिस्वना ।
प्राजापत्यैर्गवां नित्यं प्रशस्तैर्लक्षणैर्युता ।
यौवनस्थेव वनिता शुशुभे रूपशोभया ।
वृषेणोपगता सा तु कल्या मधुरदर्शना ।
मिथुनं जनयामास तुल्यरूपमिवात्मनः ।
संवर्धयामास स तां सवत्सां भार्गवो ऋषिः ।
तयोः प्रजाधिसंसर्गात्सहस्रं च गवामभूत् ।
गवां जातिसहस्राणि संभूतानि परस्परम् ।
ऋषभाणां च राजेन्द्र नैवान्तः प्रतिदृश्यते ।
तैराश्रमपदं रम्यमरण्यं चैव सर्वशः ।
समाकुलं समभवन्मेघैरिव नभःस्थलम् ।
कानिचित्पद्मवर्णानि किंशुकाभानि कानिचित् ।
रुक्मवर्णानि चान्यानि चन्द्रांशुसदृशानि च ।
तथा राजतवर्णानि कानिचिल्लोहितानि वै ।
नीललोहितताम्राणि कृष्णानि कपिलानि च ।
नानारागविचित्राणि यूथानि बहुलानि च ।
न च क्षीरं घृतं स्नेहाद्वत्सानामुपजीवति ।
भार्गवः केवलं चासीद्गवां प्राणायने रतः ।
तथा शुश्रूषतस्तस्य गवां हितमवेक्षतः ।
व्यतीयात्सुमहान्कालो वत्सोच्छिष्टेन वर्ततः ।
क्षुत्पिपासापरिश्रान्तः सततं प्रस्नवं गवाम् ।
वत्सैरुच्छिष्टमुदितं बहुक्षीरतया बहु ।
पीतवांस्तेन नामास्य फेनपेत्यभिविश्रुतम् ।
गौतमस्याभिनिष्पन्नमेवं नाम युधिष्ठिर ।

Colophon.

—(L. 13) $T_{2}$ प्राणसंरक्षणार्थं च (for the prior half). —(L. 14) $G_{3}$ यत्र (for यतः). —(L. 15) $G_{2}$ कुलभेदि; Kumbh. ed. °जेति (for °हेति). —(L. 16) $G_{1,3}$ पुष्पपुंज-; M °मूल- (for °माला-). $T_{1,2}$ पुष्पमूलफलाकुले (for the post. half). —$T_{1}$ om. lines 17–18. —(L 17) $T_{2}$ वनौषधि-; $T_{3}$ $G_{1,3}$ M धान्यौ° (for वन्यौ°). $M_{1-3}$ -समायुते (for -मृगा°). —(L. 18) $T_{2}$ ध्वांक्षगृध्रोपसेविते (for the post. half). —(L. 19) $T_{1}$ om. the post. half and the prior half of line 20. $D_{10}$ $T_{2,3}$ $G_{4}$ $M_{1-3}$ सुरम्य- (for °म्ये). —(L. 20) $D_{10}$ $T_{3}$ $G_{1,3}$ M सर्वोन्नते समे श्यामे (for the prior half). —(L. 22) $T_{1}$ पार्थिव (for भार्गवः). —$T_{1}$ om. line 23. —(L. 23) $D_{10}$ $T_{2}$ -वर्त्मना (for °नाम्). —(L. 25) $T_{1}$ M मासे (for मासि). —(L. 26) $T_{2}$ धर्मशीलां (for °शीलश्). —(L. 28) Kumbh. ed. -रूपिणी (for -चारिणी). —(L. 29) $T_{1}$ चापि (for श्रेष्ठा). $T_{1}$ om. from the post. half up to the prior half of line 31. $G_{3}$ M प्रमाणं (for प्राणतश्). —(L. 31) $G_{2}$ वाम- (for श्याम-). $D_{10}$ $G_{4}$ -पृष्ठा च; $T_{2}$ -पृष्ठा सा (for -पृष्ठान्ता). Some MSS. -पिंगळा. —$T_{1}$ om. line 35 and om. (hapl.) lines 37–40. —(L. 38) $D_{10}$ $T_{2,3}$ $G_{2}$ प्रशातैर् (for प्रशस्तैर्). —(L. 40) Madras ed. कला मधुरशोभना (for the post. half). —(L. 41) $T_{1}$ अपत्यं (for मिथुनं). —(L. 42) $D_{10}$ $T_{1}$ मुनिः (for ऋषिः). —$T_{1}$ om. line 43. —(L. 44) $T_{1}$ शत-; M तानि (for जाति-). —(L. 45) $G_{1,3}$ परि- (for प्रति-). —(L. 46) $G_{4}$ पुण्यम् (for रम्यम्). —(L. 50) $T_{1}$ $G_{4}$ च (for वै). —$T_{1}$ om. (hapl.) lines 51–52. $M_{4}$ om. (hapl.) line 52. —(L. 52) $D_{10}$ $T_{2,3}$ $G_{4}$ यूथानि कुलयूथप (for the post. half). —(L. 53) $G_{2}$ तत् (for च). $D_{10}$ $G_{2,4}$ सुतं- (for घृतं). —(L. 55) $T_{1}$ सुखम् (for हितम्). —$T_{1}$ om. line 57. —(L. 57) $D_{10}$ प्रसवं (for प्रस्नवं). —(L. 58) $T_{1}$ वत्सोच्छिष्टं तथा फेनं (for the prior half). —(L. 60) $M_{2}$ (*inf. lin.*) भार्गवस्य (for गौतमस्य). $G_{1,3,4}$ $M_{4}$ एतन् (for एवं). —Colophon. *Sub-parvan :*

भीष्मः ।
कदाचित्कामरूपिण्यो गावः स्त्रीवेषमास्थिताः ।
ह्रदे क्रीडन्ति संहृष्टा गायन्त्यः पुण्यलक्षणाः ।
ददृशुस्तस्य गावो वै विस्मयोत्फुल्ललोचनाः ।
ऊचुश्च का यूयमिति स्त्रियो मानुषया गिरा ।
स्त्रियः ।
गाव एव वयं सर्वाः कर्मभिः शोभनैर्युताः ।
सर्वाः स्त्रीवेषधारिण्यो यथाकामं चरामहे ।
गावः ।
गवां गावः परं दैवं गवां गावः परा गतिः ।
कथयध्वमिहास्माकं केन वः सुकृतां गतिः ।
स्त्रियः ।
अस्माकं हविषा देवा ब्राह्मणास्तर्पितास्तथा ।
कव्येन पितरश्चैव हव्येनाग्निश्च तर्पितः ।
प्रजया च तथास्माकं कृषिरभ्युद्धृता सदा ।
शकटैश्चापि संयुक्ता दशवाहशतेन वै ।
तदेतैः सुकृतैः स्फीतैर्वयं याश्चैव नः प्रजाः ।
गोलोकमनुसंप्राप्ता यः परः कामगोचरः ।
यूयं तु सर्वा रोहिण्यः सप्रजाः सहपुंगवाः ।
अधोगामिन्य इत्येव पश्यामो दिव्यचक्षुषा ।
गावः ।
एवं गवां परं दैवं गाव एव परायणम् ।
स्वपक्ष्यास्तारणीया वः शरणाय गता वयम् ।
किमस्माभिः करणीयं वर्तितव्यं कथंचन ।
प्राप्नुयाम च गोलोकं भवाम न च गर्हिताः ।
स्त्रियः ।
वर्तते रन्तिदेवस्य सत्रं वर्षसहस्रकम् ।
तत्र तस्य नृपस्याशु पशुत्वमुपगच्छत ।
ततस्तस्योपयोगेन पशुत्वे यज्ञसंस्कृताः ।
गोलोकान्प्राप्स्यथ शुभांस्तेन पुण्येन संयुताः ।
भीष्मः ।
एतत्तासां वचः श्रुत्वा गवां संहृष्टमानसाः ।
गमनाय मनश्चक्रुरौत्सुक्यं चागमन्परम् ।
न हि नो भार्गवो दाता पशुत्वेनोपयोजनम् ।
यज्ञस्तस्य नरेन्द्रस्य वर्तते धर्मतस्तथा ।
वयं न चाननुज्ञाताः शक्ता गन्तुं कथंचन ।
अवोचन्नथ तत्रत्या भार्गवो वध्यतामयम् ।
एतत्सर्वा रोचयत न हि शक्यमतोऽन्यथा ।
लोकान्प्राप्तुं सहास्माभिर्निश्चयः क्रियतामयम् ।
न तु तासां समेतानां काचिद्धोरेण चक्षुषा ।
शक्नोति भार्गवं द्रष्टुं सत्कृतेनोपसंयुता ।
अथ पद्मसवर्णाभा भास्करांशुसमप्रभाः ।
जपालोहितताम्राक्ष्यो निर्मांसकठिनाननाः ।
रोहिण्यः कपिलाः प्राहुः सर्वासां वै समक्षतः ।
मेघस्तनितनिर्घोषास्तेजोभिरभिरञ्जिताः ।
वयं हि तं वधिष्यामः सुमित्रं नात्र संशयः ।
सुकृतं पृष्ठतः कृत्वा किं नः श्रेयो विधास्यथ ।
गावः ।
कपिलाः सर्ववर्णेषु प्रधानत्वमवाप्स्यथ ।
गवां शतफलाच्चैकां दत्त्वा फलमवाप्स्यति ।
भीष्मः ।
एतद्गवां वचः श्रुत्वा कपिला हृष्टमानसाः ।
चक्रुः सर्वा भार्गवस्य सुमित्रस्य वधे मतिम् ।
Colophon.

$D_{10}$ $M_{1-3}$ दानधर्मे. — *Adhy. name:* $T_2$ गोमाहात्म्ये फेनपसुमित्रचरित्रकथनं ; $M_{1-3}$ फेनपनिर्वचनं. — *Adhy. no.:* $T_1$ M 113; $T_{2.3}$ $G_{2.4}$ 120; $G_{1.3}$ 114. — (L. 61) $D_{10}$ $T_{2.3}$ $M_1$ आश्रिताः (for आस्थिताः). — (L. 63) $G_{1.3}$ $M_{1-3}$ ता गावो (for गावो वै). $T_1$ $M_4$ ता दृष्ट्वा ($M_4$ दृष्ट्वा तु) तस्य ता गावो (for the prior half). — (L. 65) Kumbh. ed. सर्व- (for सर्वाः). $T_1$ वृताः (for युताः). — (L. 66) $T_1$ तथा (for सर्वाः). $D_{10}$ $G_{1.3}$ लोकाननु- (for यथाकामं). — (L. 68) $G_2$ कथयस्व (for °ध्वम्). $T_1$ $G_{1.3}$ M सुकृता (for °तां). — (L. 69) $T_1$ $G_{1-3}$ M तर्पिता ब्राह्मणास्तथा ($T_1$ $G_{1.3}$ °णाः सदा) (for the post. half). — (L. 71) M सदा (for तथा). $T_1$ तथा (for सदा). — (L. 72) $M_{1-3}$ शकटाद्यु (for °टैश्च). $M_{1-3}$ दशभार- (for °वाह-). — (L. 73) $G_2$ सर्वे (for वयं). — (L. 74) $D_{10}$ $T_2$ परं (for परः). — (L. 75) $D_{10}$ $T_3$ $G_1$ $M_4$ सर्व- (for सर्वा). — (L. 78) $D_{10}$ G $M_{2.4}$ स्वपक्षास् (for °क्ष्यास्). — (L. 81) $M_{1-3}$ -सहस्रिकं (for °स्रकम्). — (L. 82) $G_{1.3}$ $M_2$ तत्र (for तस्य). — (L. 84) $G_{1.3}$ सुव्रताः ; $G_4$ संयताः (for संयुताः). — (L. 86) $T_1$ $G_{1.3.4}$ मतिं (for मनश्च). — (L. 90) $G_{1.3}$ अवोचंत च (for °चन्नथ). $T_1$ तत्रान्या (for तत्रत्या). — $T_1$ om. lines 93–94. — (L. 95) $D_{10}$ $T_3$ $G_{2.4}$ -सुवर्णाभा (for -स°). $D_{10}$ $T_{2.3}$ $G_4$ भास्करेण (for °रांशु-). — (L. 96) $T_1$ निर्मांसकठिनत्वचः (for the post. half). — (L. 97) $T_2$ पिंगळाः (for कपिलाः). — $T_1$ om. line 98. Before line 99, MSS. ins. कपिला ऊचुः. — (L. 100) $T_1$ $G_3$ विधास्यति (for °स्यथ). — (L. 102) $M_{1-3}$ शतफलं (for °फलाच्च). $T_2$ $G_{1.3}$ अवाप्स्यथ ; $G_2$ असंशयः ; $G_3$ (also) अवाप्स्यसि (for °ति). — Colophon. *Sub-parvan:* $D_{10}$ $M_{1-3}$ दानधर्मे. — *Adhy. name:* $T_2$ गोमाहात्म्ये सुमित्रचरित्रं ; $M_{1-3}$ कपिलाप्राधान्यकथनं. — *Adhy. no.:* $T_1$ M 114; $T_{2.3}$

भीष्मः ।

यास्तु गोमातरस्तस्य कामचारिण्य आगताः ।
समीपं हि सुमित्रस्य कृतज्ञाः समुपस्थिताः ।
अभिप्रशस्य चैवाहुस्तमृषिं पुण्यदर्शनाः ।
गोलोकादागता वेद ऋषे गोमातरो वयम् ।
सुप्रीताः स्म वरं गृह्ण यमिच्छसि महामुने ।
यद्धि गोषु परां बुद्धिं कृतवानसि नित्यदा ।

सुमित्रः ।

प्रीतोऽस्म्यनुगृहीतोऽस्मि यन्मां गोमातरः शुभाः ।
सुप्रीतमनसः सर्वास्तिष्ठन्ते च वरप्रदाः ।
भवेद्गोष्वेव मे भक्तिर्यथैवाद्य तथा सदा ।
गोघ्नाश्चैवावसीदन्तु नरा ब्रह्मद्विषश्च ये ।

गोमातरः ।

एवमेतदृषिश्रेष्ठ हितं वदसि नः प्रियम् ।
एहि गच्छ सहास्माभिर्गोलोकमृषिसत्तम ।

सुमित्रः ।

यूयमिष्टां गतिं यान्तु न ह्यहं गन्तुमुत्सहे ।
इमा गावः समुत्सृज्य तपस्विन्यो मम प्रियाः ।

भीष्मः ।

तास्तु तस्य वचः श्रुत्वा कपिलानां सुदारुणम् ।
निन्युस्तमृषिमुत्क्षिप्य भार्गवं नभ उद्वहन् ।
कलेवरं तु तत्रैव तस्य संन्यस्य मातरः ।
निष्कृष्य करणं योगादनयन्भार्गवस्य वै ।
सर्वं चास्य तदाचख्युः कपिलानां विचेष्टितम् ।
यदर्थं हरणं गोभिर्गोलोकं लोकमातरः ।
ततस्तु कपिलास्तत्र तस्य दृष्ट्वा कलेवरम् ।
यथाप्रतिज्ञं शृङ्गैश्च खुरैश्चाप्यवचूर्णयन् ।
ततः संछिद्य बहुधा भार्गवं नृपसत्तम ।
ययुर्यत्रेतरा गावस्तच्च सर्वं न्यवेदयन् ।
अथ गोमातृभिः शप्तास्ता गावः पृथिवीचराः ।
अमेध्यवदनाः क्षिप्रं भवध्वं ब्रह्मघातकाः ।
एवं कृतज्ञा गावो हि यथा गोमातरो नृप ।
ऋषिश्च प्राप्तवाँल्लोकं गावश्च परिमोक्षिताः ।

Colophon.

भीष्मः ।

ता गावो रन्तिदेवस्य गत्वा यज्ञं मनीषिणः ।
आत्मानं ज्ञापयामासुर्महर्षीणां समक्षतः ।
रन्तिदेवस्ततो राजा प्रयतः प्राञ्जलिः शुचिः ।
उवाच गावः प्रणतः किमागमनमित्यपि ।

गावः ।

इच्छामस्तव राजेन्द्र सत्रेऽस्मिन्विनियोजनम् ।
पशुत्वमुपसंप्राप्तुं प्रसादं कर्तुमर्हसि ।

रन्तिदेवः ।

नास्मि शक्तो गवां घातं कर्तुं शतसहस्रशः ।
घातयित्वा त्वहं युष्मान्कथमात्मानमुद्धरे ।
यः पशुत्वेन संयोज्य युष्मान्स्वर्गं नयेदिह ।
आत्मानं चैव तपसा गावः समुपगम्यताम् ।

गावः ।

अस्माकं तारणे युक्तो धर्मात्मा तपसि स्थितः ।
श्रुतोऽस्माभिर्भवान्राजंस्ततस्तु स्वयमागताः ।

रन्तिदेवः ।

मम सत्रे पशुत्वं वो यद्येवं हि मनीषितम् ।
समयेनाहमेतेन जुहुयां वो हुताशने ।
कदाचिद्यदि वः काचिदकामा विनियुज्यते ।
तदा समाप्तिः सत्रस्य गवां स्यादिति नैष्ठिकी ।

गावः ।

एवमस्तु महाराज यथा त्वं प्रब्रवीषि नः ।
अकामाः स्युर्यदा गावस्तदा सत्रं समाप्यताम् ।

भीष्मः ।

ततः प्रवृत्ते गोसत्रे रन्तिदेवस्य धीमतः ।
गोसहस्राण्यहरहर्नियुज्यन्ते शमितृभिः ।
एवं बहूनि वर्षाणि व्यतीतानि नराधिप ।

---

$G_{2,4}$ 121; $G_{1,3}$ 115. — Before line 108, Madras ed. ins. गोमातरः. — (L. 108) $M_{1-3}$ विद्धि; Madras ed. वेत्थ (for वेद). $M_{1-3}$ मुने; Kumbh. ed. वृष- (for ऋषे). — (L. 109) $G_{1,3}$ सु- (for स). $G_3$ यद् (for यम्). $T_1$ महामते (for °मुने). — (L. 110) $M_{1,3}$ भक्तिं (for बुद्धिं). — (L. 111) $T_{3,4}$ G M च (for the second ऽस्मि). — (L. 113) M [ए]व सा (for सदा). — (L. 116) $T_1$ $G_{1,3}$ एभिर् (for एहि). $T_2$ om. (hapl.) from the post. half of line 119 up to the prior half of line 123. — (L. 121) $T_1$ तस्य (for तत्र). $T_1$ तदा (for तस्य). — (L. 124) $M_{1-3}$ गोलोके (for °कं). — (L. 126) Kumbh. ed. तथाप्रतिशं. — $T_1$ om. (hapl.) lines 127–128. — (L. 132) $T_3$ $M_4$ लोकान् (for लोकं). — Colophon. *Sub-parvan :* $D_{10}$ $M_{1-3}$ दानधर्म. — *Adhy. name :* $T_2$ गोमाहात्म्ये सुमित्रचरित्रे सुमित्रगोलोकप्राप्तिः. — *Adhy. no. :* $T_1$ M 115; $T_{2,3}$ $G_{2,4}$ 122; $G_{1,3}$ 116. — (L. 137) $D_{10}$ $T_{2,3}$ $G_{1,4}$ इच्छाम (for °मस्). — (L. 138) $T_3$ पशुत्वमपि संप्राप्तं (for the prior half). — $T_1$ om. lines 141–142 and 145. — (L. 145) $M_{1-3}$ समीहितं (for मनीषितम्). — (L. 146) $T_1$ M एकेन (for एतेन). — (L. 148) $G_2$ नैष्ठिकं (for °की). — (L. 151) $T_1$

गवां वै वध्यमानानां न चान्तः प्रत्यदृश्यत ।
गवां चर्मसहस्रैस्तु राशयः पर्वतोपमाः ।
बभूवुः कुरुशार्दूल बहुधा मेघसंनिभाः ।
मेदःक्लेदवहा चैव प्रावर्तत महानदी ।
अद्यापि भुवि विख्याता नदी चर्मण्वती शुभा ।
ततः कदाचित्स्वं वत्सं गौरुपामन्त्र्य दुःखिता ।
एहि वत्स स्तनं पाहि मा त्वं पश्चात्क्षुधार्दितः ।
तप्स्यसे विमना दुःखं घातितायां मयि ध्रुवम् ।
एते ह्यायान्ति चण्डालाः सशस्त्रा मां जिघांसवः ।
अथ शुश्राव तां वाणीं मानुषीं समुदाहृताम् ।
रन्तिदेवो महाराज ततस्तां समवारयत् ।
स्थापयामास गोसत्रमथ तं पार्थिवर्षभ ।
सत्रोत्सृष्टाः परित्यक्ता गावोऽन्याः समुपाश्रिताः ।
यास्तस्य राज्ञो निहता गावो यज्ञे महात्मनः ।
ता गोलोकमुपाजग्मुः प्रोक्षिता ब्रह्मवादिभिः ।
रन्तिदेवोऽपि राजर्षिरिष्ट्वा यज्ञं यथाविधि ।
ततः सख्यं सुरपतेस्त्रिदिवं चाक्षयं ययौ ।
फेनपो दिवि गोलोके मुमुदे शाश्वतीः समाः ।
अवशिष्टाश्च या गावस्ता बभूवुर्वनेचराः ।
फेनपाख्यानमेतत्ते गवां माहात्म्यमेव च ।
कथितं पावनं पुण्यं कृष्णद्वैपायनेरितम् ।
नारायणोऽपि भगवान्दृष्ट्वा गोषु परं यशः ।
शुश्रूषां परमां चक्रे भक्तिं च भरतर्षभ ।
तस्मात्त्वमपि राजेन्द्र गा वै पूजय भारत ।
द्विजेभ्यश्चैव सततं प्रयच्छ कुरुसत्तम ।

Colophon.

9B

$D_{10}$ S Kumbh. ed Madras ed. and $C_v$ cont. :

युधिष्ठिरः ।

पवित्राणां पवित्रं यच्छ्रेष्ठं लोकेषु पूजितम् ।
महाव्रतं महाभाग तन्मे ब्रूहि पितामह ।

भीष्मः ।

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
पितुः पुत्रस्य संवादं व्यासस्य च शुकस्य च ।
ऋषीणामुत्तमं कृष्णं भावितात्मानमच्युतम् ।
पारंपर्यविशेषज्ञं सर्वशास्त्रार्थकोविदम् ।
कृतशौचः शुकस्तत्र कृतजप्यः कृताह्निकः ।
परं नियममास्थाय परं धर्ममुपाश्रितः ।
प्रणम्य शिरसा व्यासं सूक्ष्मतत्त्वार्थदर्शिनम् ।
शुकः पप्रच्छ वै प्रश्नं दानधर्मकुतूहलः ।
बहुचित्राणि दानानि बहुशः शंससे मुने ।
महार्थं पावनं पुण्यं किंस्विद्दानं महाफलम् ।
केन दुर्गाणि तरति केन लोकानवाप्नुते ।
केन वा महदाप्नोति इह लोके परत्र च ।
के वा यज्ञस्य वोढारः केषु यज्ञः प्रतिष्ठितः ।
किं च यज्ञस्य यज्ञत्वं किं च यज्ञस्य भेषजम् ।
यज्ञानामुत्तमं किं च तद्भवान्प्रब्रवीतु मे ।
स तस्मै भजमानाय जातकौतूहलाय च ।
व्यासो व्रतविधिं प्राह गवामिदमनुत्तमम् ।
धन्यं यशस्यमायुष्यं लोके श्रुतिसुखावहम् ।
यत्पवित्रं पवित्राणां मङ्गलानां च मङ्गलम् ।
सर्वपापप्रशमनं तत्समासेन मे शृणु ।
यदिदं तिष्ठते लोके जगत्स्थावरजंगमम् ।

M ततः प्रवृत्तं गोसत्रं ( for the prior half). — Before line 160, Madras ed. ins. गौः. — ( L. 160 ) T $M_3$ पुत्र ( for वत्स ). $G_{1-3}$ वत्स ( for पश्चात् ). — ( L. 161 ) $T_3$ $M_{1-3}$ दुःखाद् ( for दुःखं ). — ( L. 162 ) $G_1$ चांडालाः. — Before line 163, Madras ed. ins. भीष्मः. $T_2$ om. the post. half of line 163 and the prior half of line 164. — ( L. 164 ) $G_4$ महाराजस्. — ( L. 168 ) $G_1$ M नाक- ( for ता गो- ). $T_1$ सुहुता ; $G_2$ तैः प्रोक्ता ( for प्रोक्षिता ). — Before line 171, Madras ed. ins. वैशंपायनः. — ( L. 171 ) $G_4$ मोदते ( for मुमुदे ). — $T_1$ om. lines 175–176. — ( L. 175 ) $D_{10}$ वरं ( for परं ). — ( L. 177 ) $T_1$ गाः संपूजय नित्यदा ( for the post. half ). — Colophon. *Sub-parvan* : $D_{10}$ $M_{1-3}$ दानधर्म. — *Adhy. name* : $T_2$ गोमाहात्म्ये रंतिदेवचरित्रकथनं ; $M_{1-3}$ गोमाहात्म्ये भार्गवोपाख्यानं ; $M_4$ गोमाहात्म्यं. — *Adhy. no.* : $T_1$ M 116 ; $T_{2.3}$ $G_{2.4}$ 123 ; $G_{1.3}$ 117.

9B

$T_1$ om. lines 7–8. — ( L. 8 ) $T_1$ इव स्थितं ; $M_1$ अवस्थितः ; $M_{2.3}$ इव स्थितः ( for उपाश्रितः ). — ( L. 10 ) $M_{1.3}$ सुतः ( for शुकः ). $D_{10}$ $T_2$ $G_{2.4}$ -कुतूहलं. — $T_1$ om. line 11. — ( L. 12 ) $T_1$ परमं ( for महार्थं ). $T_1$ महत्फलं ( for महाफलम् ). — ( L. 13 ) $M_{1-3}$ तरते ( for °ति ). $T_1$ $G_4$ $M_1$ लोकम् ; $C_v$ दुर्गान् ( for लोकान् ). $G_{1.3}$ $M_4$ केन लोकमवाप्नुयात् ( for the post. half ). — $T_1$ om. lines 14–15. Before line 18, Madras ed. ins. भीष्मः. $T_1$ om. lines 18–19. Before line 20, $T_{1.2}$ ins. व्यासः. — After line 21, $T_1$ ins. :

गाव एव परं लोके गाव एव परं धनम् ।

— $T_1$ om. lines 22–24. — ( L. 23 ) $G_{1.3}$ यदिदं त्रिषु लोकेषु ( for the prior half ). — ( L. 24 ) M गावः प्राप्य

गावस्ताः प्राप्य तिष्ठन्ति गोलोके पुण्यदर्शनाः ।
मातरः सर्वभूतानां विश्वस्य जगतश्च ह ।
रुद्राणामथ साध्यानां गाव एव तु मातरः ।
रुद्राणां मातरो ह्येता आदित्यानां स्वसा स्मृताः ।
वसूनां च दुहितृभ्यस्ता ब्रह्मसंतानमूलजाः ।
यासामधिपतिः पूषा मरुतो वालबन्धनाः ।
ऐश्वर्यं वरुणो राजा विश्वेदेवाः समाश्रिताः ।
य एवं वेद ता गावो मातरो देवपूजिताः ।
स विप्रो ब्रह्मलोकाय गवां लोकाय वा ध्रुवः ।
गावस्तु नावमन्येत कर्मणा मनसा गिरा ।
गवां स्थानं परं लोके प्रार्थयेद्यः परां गतिम् ।
न पद्भ्यां ताडयेद्गावो न दण्डेन न मुष्टिना ।
इमां विद्यामुपाश्रित्य पावनीं ब्रह्मनिर्मिताम् ।
मातॄणामनुपाते च न गोमध्ये न गोव्रजे ।
नरो मूत्रपुरीषस्य दृष्ट्वा कुर्याद्विसर्जनम् ।
शुद्धाश्चन्दनशीताङ्ग्यश्चन्द्ररश्मिसमप्रभाः ।
सौम्याः सुरभ्यः सुभगा गावो गुग्गुलुगन्धयः ।
सर्वे देवाविशन्गावः समुद्रमिव सिन्धवः ।
दिवं चैवान्तरिक्षं च गवां व्युष्टिं समश्नुते ।
दधिना जुहुयादग्निं दधिना स्वस्ति वाचयेत् ।
दधि दद्याच्च प्राशेत गवां व्युष्टिं समश्नुते ।
घृतेन जुहुयादग्निं घृतेन स्वस्ति वाचयेत् ।
घृतमालभ्य प्राश्नीयाद्गवां व्युष्टिं समश्नुते ।
गावः संजीवना यास्तु गावो दानमनुत्तमम् ।
ताः पुण्यगोपाः सुफला भजमानं भजन्तु माम् ।
येन देवाः पवित्रेण स्वर्गलोकमितो गताः ।
तत्पवित्रं पवित्राणां मम मूर्ध्नि प्रतिष्ठितम् ।
वीणामृदङ्गपणवा गवां गात्रं प्रतिष्ठिताः ।
क्रीडारतिविहारार्थं त्रिषु लोकेषु वर्तते ।
न तत्र देवा वर्तन्ते नाग्निहोत्राणि जुह्वति ।
न यज्ञैरिज्यते चात्र यत्र गौर्वै न दुह्यते ।
क्षीरं दधि घृतं यासां रसानामुत्तमो रसः ।
अमृतप्रभवा गावस्त्रैलोक्यं येन जीवति ।
इडामाहूय धेनुं च सवत्सां यज्ञमातरम् ।
उपाह्वयन्ति यं विप्रा गावो यज्ञहविष्कृताः ।
या मेध्या प्रथमं कर्म इयं धेनुः सरस्वती ।
पौर्णमासेन वत्सेन कामं कामगुणान्विता ।
यत्र सर्वमिदं प्रोतं यत्किंचिज्जंगमं जगत् ।
सा गौर्वै प्रथमा पुण्या सर्वभूतहिते रता ।
धारणाः पावनाः पुण्या भावना भूतभावनाः ।
गावो मामभिरक्षन्तु इह लोके परत्र च ।
एष यज्ञः सहोपाङ्ग एष यज्ञः सनातनः ।
वेदाः सहोपनिषदो गवां रूपे प्रतिष्ठिताः ।
एतत्तात मया प्रोक्तं गवामिह परं मतम् ।
सर्वतः श्रावयेन्नित्यं प्रयतो ब्रह्मसंसदि ।
श्रुत्वा लभेत ताँल्लोकान्ये मया परिकीर्तिताः ।
श्रावयित्वापि प्रीतात्मा लोकांस्तान्प्रतिपद्यते ।
धेनुमेकां सदा दद्यादहन्यहनि पावनीम् ।

द्विजश्रेष्ठ ; Kumbh. ed. गावस्तत्प्राप्य तिष्ठंते ( for the prior half ). T G लोके पुण्यस्य दर्शनात् ; M तेनैताः ( M4 तिष्ठंते ) पुण्यदर्शनाः ( for the post. half ). — ( L. 25 ) T1 तथा ( for च ह ). — ( L. 26 ) T1 G3 अपि ; M4 एव ; Kumbh. ed. इह ( for अथ ). T1 वसूनामपि मातरः ( for the post. half ). — ( L. 27 ) Kumbh. ed. ह्यादित्यानां ( for आ° ). — ( L. 29 ) G4 मूल- ( for वाल- ). — (L. 31) G2 om. (hapl.) from the post. half up to the prior half of line 35. T1 G4 M1–3 लोक- ( for देव- ). — ( L. 32 ) G4 M ध्रुवं ( for ध्रुवः ). — ( L. 34 ) T1 M4 गावस्तात ; M1 गवां दानं ( for गवां स्थानं ). — ( L. 35 ) D10 T गा वै ( for गावो ). — ( L. 37 ) T2 अनुयाने च ; Kumbh. ed. अन्ववाये च ; Madras ed. अनुपातेन ( for °पाते च ). T1 गवां वा न च पार्श्वे तु ( for the prior half ). — ( L. 39 ) D10 T2.3 -शीताढ्याश् ; T1 -शीताश्च ( for -शीताङ्ग्यश् ). — ( L. 40 ) M4 गुल्गुल- ; Kumbh. ed. गुग्गुल- ( for गुग्गुलु- ). — ( L. 41 ) T1 गा वै ( for गावः ). — T1 om. lines 42–44. — ( L. 42 ) M4 पुष्टिं ( for व्युष्टिं ). — ( L. 44 ) T3 पुष्टिं ( for व्युष्टिं ). — ( L. 46 ) G2 घृतकूलं घृपाश्नीयाद् ( for the prior half ). T1 G1.3 M तथाश्नुते ( for सम° ). — ( L. 47 ) T1 गवां ( for गावो ). — ( L. 48 ) G1.3 पुण्यगावः ( for °गोपाः ). M1–3 सुभगा ( for सुफला ). — ( L. 49 ) T1.3 G3 M ययुः ( for गताः ). — T1 om. lines 51–52. — ( L. 51 ) M -पणवं ( for -पणवा ). G4 गात्रे ; Madras ed. मंत्र- ( for गात्रं ). — ( L. 55 ) G2 चासां ( for यासां ). — T1 om. lines 57–58. — ( L. 57 ) Kumbh. ed. इमाम् ( for इडाम् ). — ( L. 58 ) Madras ed. यज्ञे ( for विप्रा ). Kumbh. ed. -हविष्कृतं ( for °ताः ). — ( L. 59 ) T2 G1–3 कामं ( for कर्म ). T1 गौर्मेध्या प्रथमं कीर्णा ; M4 या मेध्याः परमं कीर्णा ( for the prior half ). — T1 om. line 60. — ( L. 61 ) M4 यच्च ( for यत्र ). T2 M4 च यत ( for जगत् ). — T1 om. line 62. — ( L. 62 ) M वै गौः ( by transp. ). — ( L. 63 ) T1 M1–3 भुवने ; G2 पावना ( for भा° ). — ( L. 64 ) T2 om. from मभिरक्षन्तु up to सर्वतः ( in line 68 ). — ( L. 65 ) T1 सर्वे यज्ञाः सहोपांगाः ( for the prior half ). D10 ह्येष ( for एष ). T1 स्विष्टाश्चैव सदक्षिणाः ( for the post. half ). — ( L. 67 )

तत्तथा प्राप्नुयाद्विप्रः पठन्वै गोमतीं सदा ।
अथ धेनुर्न विद्येत तिलधेनुमनुत्तमाम् ।
दद्याद्धोमतिकल्पेन तां धेनुं सर्वपावनीम् ।
आह्निकं गोमतीं नित्यं यः पठेत सदा नरः ।
सर्वपापात्प्रमुच्येत प्रयतात्मा य आचरेत् ।
घृतं वा नित्यमालभ्य प्राश्य वा गोमतीं जपेत् ।
स्नात्वा वा गोकरीषेण पठन्पापात्प्रमुच्यते ।
मनसा गोमतीं जप्येद्धोमत्या नित्यमाह्निकम् ।
न त्वेव दिवसं कुर्याद्व्यर्थं गोमतिपाठकः ।
गोमतीं जपमाना हि देवा देवत्वमाप्नुवन् ।
ऋषित्वमृषयश्चापि गोमत्या सर्वमाप्नुवन् ।
बद्धो बन्धात्प्रमुच्येत कृच्छ्रान्मुच्येत संकटात् ।
गोमतीं सेवते यस्तु लभते प्रियसंगमम् ।
एतत्पवित्रं कार्त्स्न्येन एतद्व्रतमनुत्तमम् ।
एतत्तु पृथिवीपाल पावनं शृण्वतां सदा ।
पुत्रकामाश्च ये केचिद्धनकामाश्च मानवाः ।
अध्वाने चोरवैरिभ्यो मुच्यते गोमतीं पठन् ।
पूर्ववैरानुबन्धेषु रणे चाप्याततायिनः ।
लभते जयमेवाशु सदा गोमतिपाठकः ।

Colophon.

शुकः ।

क्षत्रियाश्चैव शूद्राश्च मन्त्रहीनाश्च ये द्विजाः ।
कपिलामुपजीवन्ति कथमेतत्पितर्भवेत् ।

व्यासः ।

क्षत्रियाश्चैव शूद्राश्च मन्त्रहीनाश्च ये द्विजाः ।
कपिलामुपजीवन्ति तेषां वक्ष्यामि निर्णयम् ।
कपिलास्तूत्तमा लोके गोषु चैवोत्तमा मताः ।
तासां दाता लभेत्स्वर्गं विधिना यश्च सेवते ।
स्पृशेत कपिलां यस्तु दण्डेन चरणेन वा ।
स तेन स्पर्शमात्रेण नरकायोपपद्यते ।
मन्त्रेण युञ्ज्यात्कपिलां मन्त्रेणैव प्रमुच्यते ।
मन्त्रहीनं तु यो युञ्ज्यात्कृमियोनौ प्रसूयते ।
प्रहारहतमर्माङ्गा दुःखेन च जडीकृता ।
पदानि यावद्गच्छेत तावल्लोकान्कृमिर्भवेत् ।
यावच्च विन्दवस्तस्याः शोणितस्य क्षितिं गताः ।
तावद्वर्षसहस्राणि नरकं प्रतिपद्यते ।
मन्त्रेण युञ्ज्यात्कपिलां मन्त्रेण विनियोजयेत् ।
मन्त्रहीनैरनुयुतो मज्जयेत्तमसि प्रभो ।
कपिलां येऽपि जीवन्ति बुद्धिमोहान्विता नराः ।
तेऽपि वर्षसहस्राणि पतन्ति नरके नृप ।
अथ न्यायेन ये विप्राः कपिलामुपयुञ्जते ।
तस्मिँल्लोके प्रमोदन्ते लोकाश्चैषामनामयाः ।
विधिना ये न कुर्वन्ति शूद्रांस्तानुपधारय ।

Colophon.

G2 एतं ( for एतत् ). — ( L. 68 ) Madras ed. सर्वमाश्रावयेन्नित्यं ( for the prior half ). G1.3 -संनिधौ ( for -संसदि ). — T1 om. line 69. — ( L. 69 ) T2.3 सर्वान् ( for लोकान् ). — ( L. 70 ) T1 श्रावयित्वा गवां लोकान्पूतात्मा प्रतिपद्यते. — ( L. 71 ) G2 एनां ( for एकां ). — ( L. 72 ) T1 फले ( for तथा ). — ( L. 73 ) M1-3 विन्देत ( for विद्येत ). — ( L. 75 ) T1 पूतात्मा ( for आह्निकं ). — ( L. 76 ) T1 G1.3 M सर्वपापैः ( for °पात् ). M4 वि- ( for प्र- ). T1 गवां लोके महीयते ( for the post. half ). — ( L. 77 ) T2 घृतं वा दधि वा नित्यं ( for the prior half ). — T1 om. lines 79-80. T2 om. ( hapl. ) from the post. half of line 79 up to the prior half of line 82. D10 om. ( hapl. ) line 82. — ( L. 82 ) T1 M [ए]व ( for [अ]पि ). — ( L. 83 ) T1 वि- ( for प्र- ). — ( L. 86 ) T1 एतच्च भूमिपालानां ; M1 एतत्पृथिविपालानां ( for the prior half ). — T1 om. lines 88-89. — ( L 90 ) D10 T2 G2 लभेत ( for लभते ). T1 लभंते सर्वमेवाशु ( for the prior half ). — Colophon. *Sub-parvan* : D10 M1-3 दानधर्म. — *Adhy. name* : D10 T3 G2.4 गोमतीमाहात्म्यं ; T2 गोमाहात्म्ये गोदानप्रकरणे गोमतीस्तोत्रमहिमानं. — *Adhy. no.* : T1 M 117 ; T2.3 G2.4 124 ; G1.3 118. — T1 om. ( hapl. ) lines 91-92. — ( L. 92 ) T3 om. ( hapl. ) from the post. half up to the prior half of line 94. M1-3 महामते ( for पितर्भवेत् ). G2 कथमेतद्विधं भवेत् ( for the post. half ). — ( L. 93 ) M1-3 हीनाश् ( for शूद्राश् ). — ( L. 97 ) T1 M स्पृशेत्तु ( for °त ). — ( L. 100 ) T1 प्रजायते ; Madras ed. हि जायते ( for प्रसूयते ). — T1 om. line 101. — ( L. 102 ) D10 T2.3 G2.4 यानि ( for यावद् ). — ( L. 103 ) Kumbh. ed. यावंतो ( for यावच्च ). G4 व्रजेत् ( for गताः ). — ( L. 104 ) T1 तिर्यग्योनिषु सेवते ; G3 पतंति नरके नृप ; M तिर्यग्योनिं निषेवते ( for the post. half ). — T1 om. lines 105-106. G3 om. lines 105-108. — ( L. 105 ) M4 -युज्यते ( for -योजयेत् ). — ( L. 106 ) G2 अनुगतो ( for °युतो ). — ( L. 107 ) T1 बुद्धिहीना नराः क्वचित् ( for the post. half ). — ( L. 108 ) T1 ध्रुवं ; G1 सदा ( for नृप ). G4 नरकं प्रतिपद्यते ( for the post. half ). — ( L. 109 ) T2 G4 अन्यथा येन ये विप्राः ( for the prior half ). T1 -भुंजते ; M4 -सेवते ( for -युञ्जते ). — ( L. 110 ) T1 तासां ; T3 G1.3 M1.2.4 तेस्मिँल् ( for तस्मिँल् ). G1.3.4 काले ( for लोके ). G1-3 M4 हि ( for च ). T1 सनातनाः ( for अनामयाः ). — ( L. 111 ) M1-3 न्यायेन ( for विधिना ). — Colophon. *Sub-*

शुकः ।
नानावर्णैरुपेतानां गवां किं मुनिसत्तम ।
कपिलाः सर्ववर्णेषु वरिष्ठत्वमवाप्नुवन् ।

व्यासः ।
शृणु पुत्र यथा गोषु वरिष्ठाः कपिलाः स्मृताः ।
कपिलत्वं च संप्राप्ताः पूज्याश्च सततं नृषु ।
अग्निः पुरापचक्राम देवेभ्य इति नः श्रुतम् ।
देवेभ्यो मां छादयत शरण्याः शरणं गतम् ।
ऊचुस्ताः सहितास्तत्र स्वागतं तव पावक ।
इह गुप्तस्त्वमस्माभिर्न देवैरुपलप्स्यसे ।
अथ देवा विचिन्वन्तः पावकं परिचक्रमुः ।
गोषु गुप्तं च विज्ञाय ताः क्षिप्रमुपतस्थिरे ।
युष्मासु निवसत्यग्निरिति गाः समचूचुदन् ।
प्रकाशयतां हुतवहो लोकान्न च्छेत्तुमर्हथ ।
एवमस्त्वित्यनुज्ञाय पावकं समदर्शयन् ।
अधिगम्य पावकं तुष्टास्ते देवाः सद्य एव तु ।
अग्निं प्रचोदयामासुः क्रियतां गोष्वनुग्रहः ।
गवां तु यासां गात्रेषु पावकः समवस्थितः ।
कपिलत्वमनुप्राप्ताः सर्वश्रेष्ठत्वमेव च ।
महाफलत्वं लोके च ददौ तासां हुताशनः ।
तस्माद्धि सर्ववर्णानां कपिलां गां प्रदापय ।
श्रोत्रियाय प्रशान्ताय प्रयतायाग्निहोत्रिणे ।
यावन्ति रोमाणि भवन्ति धेन्वा
युगानि तावन्ति पुनाति दातॄन् ।
प्रतिग्रहीतॄंश्च पुनाति दत्ता
शिष्टे तु गौर्वै प्रतिपादनेन ।

Colophon.

शुकः ।
केन वर्णविभागेन विज्ञेया कपिला भवेत् ।
कति वा लक्षणान्यस्या दृष्टानि मुनिभिः पुरा ।

व्यासः ।
शृणु तात यथा गोषु विज्ञेया कपिला भवेत् ।
नेत्रयोः शृङ्गयोश्चैव खुरेषु वृषणेषु च ।
कर्णतो घ्राणतश्चापि षड्विधाः कपिलाः स्मृताः ।
एतेषां लक्षणानां तु यद्येकमपि दृश्यते ।
कपिलां तां विजानीयादेवमाहुर्मनीषिणः ।
आग्नेयी नेत्रकपिला खुरैर्माहेश्वरी भवेत् ।
ग्रीवायां वैष्णवी ज्ञेया पूष्णो घ्राणादजायत ।
कर्णतस्तु वसन्तेन स्वयोनिमभिजायते ।
गायत्र्याश्च वृषणयोरुत्पत्तिः षड्गुणा स्मृता ।
एवं गावश्च विप्राश्च गायत्री सत्यमेव च ।
वसन्तश्च सुपर्णश्च एकतः समजायत ।
नेत्रयोः कपिलां यस्तु वाहयेत दुहेत वा ।
स पापकर्मा नरके प्रतिष्ठां प्रतिपद्यते ।
नरकाद्विप्रमुक्तस्तु तिर्यग्योनिं निषेवते ।
यदा लभेत मानुष्यं जात्यन्धो जायते नरः ।
शृङ्गयोः कपिलां यस्तु वाहयेत दुहेत वा ।
तिर्यग्योनिं स लभते जायमानः पुनः पुनः ।

---

*parvan :* D10 M1–3 दानधर्मः. — *Adhy. name :* T2 गोमाहात्म्ये कपिलामाहात्म्यं. — *Adhy. no. :* T1 M 118 ; T2, 3 G2, 4 125; G1, 3 119. — Before line 112, G2 reads lines 136–139 repeating them in their places. — (L. 112) T1 M1 हि (for किं). — (L. 117) T1, 2 G2, 3 M1, 2 शरण्या शरणागतं (for the post. half). — (L. 119) T1 यथा लीनस् (for इह गुप्तस्). — (L. 121) T1 तं गोषु गुप्तं विज्ञाय (for the prior half). — (L. 122) T1 ताः (for गाः). — (L. 123) T1 लोकान्गच्छेयुरुत्तमान् (for the post. half). — (L. 125) Prior half hypermetric. T1, 3 दृष्ट्वा (for तुष्टास्). G1, 3 M1 सर्वे (for सद्य). — (L. 127) D10 पावकः समुपस्थितः (for the post. half). — (L. 128) M1–3 च सं- (for अनु-). G2 -ज्येष्ठत्वम् (for -श्रे°). T1 G1, 3 M ताः सर्वाः श्रैष्ठ्यमेव च (for the post. half). — (L. 130) T2 तस्माद्धि सर्वथा राजन् (for the prior half). T1 कपिला ह्युत्तमाः स्मृताः (for the post. half). — After line 131, T1 ins. :

ददस्व कपिलां तात यदिच्छसि महत्फलम् ।

— (L. 133) T2 युनानि (for युगानि). — (L. 135) T1 G1, 3 M2, 4 शिष्टेषु (for शिष्टे तु). G1 M1–3 -पाद्यमाना ; M4 -पूज्यमाना (for -पादनेन). — Colophon. *Sub-parvan :* D10 M1–3 दानधर्म. — *Adhy. name :* T2 गोमाहात्म्ये व्यासशुकसंवादे कपिलामाहात्म्यं. — *Adhy. no. :* T1 M 119 ; T2, 3 G2, 4 126 ; G1 121 ; G3 120. — (L. 136) M1, 3, 4 -विकारेण (for -विभागेन). — (L. 139) M [अ]पि (for [ए]व). — (L. 140) M कर्णयोर् (for कर्णतो). G1, 3 [ए]व (for [अ]पि). — M1 om. lines 142–145. — (L. 144) G1, 3 शृंगयोर् (for ग्रीवायां). — T1 om. line 145. T2 om. (hapl.) lines 145–148. — (L. 145) Madras ed. वर्णतस् (for क°). — G1 om. (hapl.) lines 146–148. — (L 146) T1 शृंगयोः कपिलाः स्मृताः (for the post. half). — T1 om. lines 147–148. — (L. 147) Cv गायंति (for गावश्च). — (L. 149) Cv नेत्रयोः कपिलायास्तु (for the prior half). M2 वाहयीत (for °येत). M1, 3, 4 वाहयेद्दापयीत वा (for the post. half). — After line 150, T1 reads the prior half of line 153 and repeats line 150. — (L. 152) G1

खुरेषु कपिलां यस्तु वाहयेत दुहेत वा ।
तमस्यपारे मज्जेत धनहीनो नराधमः ।
कपिलां वालधानेषु वाहयेत दुहेत वा ।
निराश्रयः सदा चैव जायते यदि चेत्कृमिः ।
वर्णेन कपिलां यस्तु जानन्नप्युपजीवति ।
सहस्रशः कृमिर्भूत्वा मानुष्यं प्राप्नुयादथ ।
चण्डालः पापकर्मा वा जायते स नराधमः ।
घ्राणेन कपिलां यस्तु प्रमादादुपजीवति ।
सोऽपि वर्षसहस्राणि तिर्यग्योनौ प्रजायते ।
व्याधिग्रस्तो जडो रोगी भवेन्मानुष्यमागतः ।
मधुसर्पिःसुगन्धास्तु कपिलाः शाश्वतः स्मृताः ।
एताः समुपजीवेत सोऽपि तिर्यक्षु जायते ।
स्थावरत्वमनुप्राप्तो यदि मानुष्यतां लभेत् ।
अल्पायुः स भवेज्जातो हीनवर्णकुलोद्भवः ।
ये तु पापा ह्यसूयन्ते कपिलां वाहयन्ति च ।
निरयेषु प्रतिष्ठन्ते यावदाभूतसंप्लवम् ।

Colophon.

10

After 13. 98, D10 S Kumbh. ed. Madras ed. and Cv ins.:

युधिष्ठिरः ।
शूद्राणामिह शुश्रूषा नित्यमेवानुवर्णिता ।
कैः कारणैः कतिविधा शुश्रूषा समुदाहृता ।
के च शुश्रूषया लोका विहिता भरतर्षभ ।
शूद्राणां भरतश्रेष्ठ ब्रूहि मे धर्मलक्षणम् ।
भीष्मः ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
शूद्राणामनुकम्पार्थं यदुक्तं ब्रह्मवादिना ।
वृद्धः पराशरः प्राह धर्मं शुभ्रमनामयम् ।
अनुग्रहार्थं वर्णानां शौचाचारसमन्वितम् ।
धर्मोपदेशमखिलं यथावदनुपूर्वशः ।
शिष्यानध्यापयामास शास्त्रमर्थवदर्थवित् ।
क्षान्तेन्द्रियेण मानेन शुचिनाचापलेन वै ।
अदुर्बलेन धीरेण नोत्तरोत्तरवादिना ।
अलुब्धेनानृशंसेन ऋजुना ब्रह्मवादिना ।
चारित्रतत्परेणैव सर्वभूतहितात्मना ।
अरयः षड्विजेतव्या नित्यं स्वं देहमाश्रिताः ।
कामक्रोधौ च लोभश्च मानमोहौ मदस्तथा ।
विधिना धृतिमास्थाय शुश्रूषुरनहंकृतः ।
वर्णत्रयस्यानुमतो यथाशक्ति यथाबलम् ।
कर्मणा मनसा वाचा चक्षुषा च चतुर्विधम् ।
आस्थाय नियमं धीमाञ्शान्तो दान्तो जितेन्द्रियः ।
रक्षोयक्षजनद्वेषी शेषान्नकृतभोजनः ।
वर्णत्रयान्मधु यथा भ्रमरो धर्ममाचरेत् ।
यदि शूद्रस्तपः कुर्याद्विदृष्टेन कर्मणा ।

यथा (for यदा). G1.3 M4 लभति; M1–3 भवति (for लभेत). — (L. 153) M4 om. from the post. half up to the post. half of line 157. M1–3 वाहयीत (for °येत). — T1 om. line 154. M1 om. (hapl.) lines 154–155. G2 M2.3 om. (hapl.) 154–157. M4 om. from the prior half of line 154 up to the prior half of line 159. — (L. 157) G1.3 M1 -धाने तु (for -धानेषु). T1 ग्रीवायां कपिलां यस्तु (for the prior half). — (L. 159) T2 G1.3 कर्णेन (for व°). T2 -जीवते (for °ति). — (L. 160) Kumbh. ed. शुनिर् (for कृमिर्). — (L. 161) M1.4 चंडालाः. D10 T2.3 G2.4 -योनिश्च (for -कर्मा वा). — (L. 163) T1 तिर्यग्योनिसहस्राणि लभते नात्र संशयः. — T1 om. lines 164–168. M1–3 om. (hapl.) lines 164–166. — (L. 164) T2 भवेद् (for जडो). G1.3 M4 वापि (for रोगी). — (L. 166) T एताः समुपसेवेत (for the prior half). — (L. 167) M1.3.4 अनुप्राप्य (for °प्तो). M1–3 भजेत् (for लभेत्). — (L. 168) M1–3 आर्तो (for जातो). — (L. 169) M4 [अ]भ्यसूयंते (for ह्यसू°). — Colophon. *Sub-parvan* : D10 M1–3 दानधर्म. — *Adhy. name* : T2 कपिलावर्णविभागः. — *Adhy. no.* : T1 M 120; T2.3 G2.4 127; G1.3 121.

10

(L. 2) T1 कारणैः कैः (by transp.). — (L. 7) T1 M शुभम् (for शुभ्रम्). — (L. 9) T1 M अतुलं (for अखिलं). — (L. 10) G2.3 अर्थवत् (for °वित्). T1 G1.4 शास्त्रमर्थविदर्थवत् (for the post. half). — T1 om. lines 11–12. Before line 11, Madras ed. ins. पराशरः. — (L. 11) T3 M दांतेन (for मानेन). — (L. 12) D10 G2.4 अबलेन च; T2 दुर्बलेन च (for अदुर्बलेन). T3 शांतेनोत्तरवादिना (for the post. half). — (L. 13) T1 सत्य- (for ब्रह्म-). — (L. 14) T1.3 चारित्राचरणेनैव (for the prior half). — (L. 15) T1 नित्यं धर्मपरेण वै (for the post. half). — T1 om. lines 16–18. — (L. 16) T3 G1.3.4 कामः क्रोधश्च (for कामक्रोधौ). M मोहमानौ भयं तथा (for the post. half). — (L. 19) T3 M मनसा कर्मणा वाचा (for the prior half). — (L. 20) D10 T1.2 G नियमान्

इह चास्य परिक्लेशः प्रेत्य चास्याशुभा गतिः ।
अधर्म्यमयशस्यं च तपः शूद्रे प्रतिष्ठितम् ।
अमार्गेण तपस्तप्त्वा म्लेच्छेषु फलमश्नुते ।
अन्यथा वर्तमानो हि न शूद्रो धर्ममर्हति ।
अमार्गेण प्रयातानां प्रत्यक्षादुपलभ्यते ।
चातुर्वर्ण्यव्यपेतानां जातिमूर्तिपरिग्रहः ।
तथा ते हि शकाश्चीनाः काम्भोजाः पारदास्तथा ।
शबराः पह्लवाश्चैव तुषारयवनास्तथा ।
दार्वाश्च दरदाश्चैव उज्जिहानास्तथेतराः ।
वेणाश्च कङ्कणाश्चैव सिंहला मद्रकास्तथा ।
किष्किन्धकाः पुलिन्दाश्च कह्वाश्चान्ध्राः सनीरगाः ।
गन्धिका द्रमिडाश्चैव बर्बराश्चूचुकास्तथा ।
किराताः पार्वतेयाश्च कोलाश्चोलाः सखाषकाः ।
आरुकाश्चैव दोहाश्च याश्चान्या म्लेच्छजातयः ।
विकृता विकृताचारा दृश्यन्ते क्रूरबुद्धयः ।
अमार्गेणाश्रिता धर्मं ततो जात्यन्तरं गताः ।
अमार्गोपार्जितस्यैतत्तपसो विदितं फलम् ।
न नश्यति कृतं कर्म शुभं वा यदि वाशुभम् ।
अत्राप्येते वसु प्राप्य विकर्मतपसार्जितम् ।
पाषण्डानर्चयिष्यन्ति धर्मकामा वृथाश्रमाः ।
एवं चतुर्णां वर्णानामाश्रमाणां च पार्थिव ।
विपरीतं वर्तमाना म्लेच्छा जायन्त्यबुद्धयः ।
अध्यायधनिनो विप्राः क्षत्रियाणां बलं धनम् ।
वणिक्कृषिश्च वैश्यानां शूद्राणां परिचारिका ।
व्युच्छेदात्तस्य धर्मस्य निरयायोपपद्यते ।
ततो म्लेच्छा भवन्त्येते निर्घृणा धर्मवर्जिताः ।
पुनश्च निरयस्तेषां तिर्यग्योनिश्च शाश्वती ।
ये तु सत्पथमास्थाय वर्णाश्रमकृतं पुरा ।
सर्वान्विमार्गानुत्सृज्य स्वधर्मपथमाश्रिताः ।
सर्वभूतदयावन्तो दैवतद्विजपूजकाः ।
शास्त्रदृष्टेन विधिना श्रद्धया जितमन्यवः ।
तेषां विधिं प्रवक्ष्यामि यथावदनुपूर्वशः ।
उपादानविधिं कृत्स्नं शुश्रूषाधिगमं तथा ।
शिष्टोपनयनं चैव मन्त्राणि विविधानि च ।
तथा शिष्यपरीक्षां च शास्त्रप्रामाण्यदर्शनात् ।
प्रवक्ष्यामि यथातत्त्वं यथावदनुपूर्वशः ।
शौचकृत्यस्य शौचार्थान्सर्वानेव विशेषतः ।
महाशौचप्रभृतयो दृष्टास्तत्त्वार्थदर्शिभिः ।
तत्रापि शूद्रो भिक्षूणामिदं शेषं च कल्पयेत् ।
भिक्षुभिः सुकृतप्रज्ञैः केवलं धर्ममाश्रितैः ।
सम्यग्दर्शनसंपन्नैर्गताध्वनि हितार्थिभिः ।
अवकाशमिमं मेध्यं निर्मितं कामवीरुधम् ।

(for °मं). — $T_1$ om. line 21. — (L. 21) $T_3$ नित्यं दक्षजनान्वेषी; $G_{1.3}$ M चौक्षश्चौक्षजनान्वेषी; Cv श्चौपट्टश्चौपट्ट चमान्वेषी (for the prior half). — (L. 22) Cv ·त्रयं (for ·त्रयान्). $T_3$ $G_4$ आचरन् (for °रेत्). — (L. 23) $T_1$ विधि· (for वेद·). — (L. 24) $T_1$ [अ]त्र (for the second [अ]स्य). — (L. 25) $D_{10}$ $T_3$ $G_2$ अधर्मम् (for °र्म्यम्). $T_{1.3}$ M प्रकाल्पितं (for प्रतिष्ठितम्). — (L. 26) $D_{10}$ $T_2$ $G_{2.4}$ अमार्गेषु (for °ण). $T_1$ कृत्वा (for तप्त्वा). — (L. 27) $T_1$ $M_{1-3}$ [ऽ]पि (for हि). — $T_1$ om. lines 28–29. — (L. 29) $D_{10}$ $T_2$ G जात· (for जाति·). $T_3$ ·मुक्त· (for ·मूर्ति·). — (L. 30) $T_1$ भवंति ते; M तथा तेपि (for तथा ते हि). — (L. 31) $M_4$ पह्लवाश् (for पह्ल°). — $T_1$ om. line 32. — (L. 32) $T_3$ [अ]पराः (for [इ]तराः). M औजिहानास्तुत्रास्तथा (for the post. half). — (L. 33) $T_2$ कंवळाश्; M तंकणाश् (for कङ्क°). — (L. 34) $G_{1.3.4}$ कण्वाश् (for कह्वाश्). M सनीपराः (for °रगाः). — For lines 33–34, $T_1$ subst.:

दङ्कणाश्च पुलिन्दाश्च पुण्ड्राः पौण्ड्राः सधीवराः ।
सिंहका मद्रकाश्चैव बर्बराश्च सनाल्वाः ।

— $T_1$ om. line 35. — (L. 35) M गंडिका (for गन्धिका). $T_3$ बर्बराश्च सचूचुकाः (for the post. half). — (L. 36) $D_{10}$ $T_1$ M पर्वतीयाश् (for पार्वते°). $T_3$ पार्वतीयाश्च काशाश्च (for the prior half). $D_{10}$ कालाश्; $T_2$ $G_4$ कोळाश्; $G_3$ काशाश्; M कासाश् (for कोलाश्). $D_{10}$ चोपाः; $T_2$ $G_{2-4}$ M चोळाः (for चोलाः). $T_1$ $G_1$ काशाश्चोलाः सहोल($G_1$ °वाष्ट)काः; $T_3$ किराताश्चोळकाः शकाः (for the post. half). — (L. 37) M आरुहाश् (for °काश्). $T_1$ उज्जिहानाश्च स्ववांश्च; $T_3$ करुकाश्च विदेहाश्च (for the prior half). — $T_1$ reads line 38 after line 41 — (L. 38) $M_4$ विकृतं (for °ता). $T_1$ $G_{1.3.4}$ विकृता विकृताकारा (for the prior half). $T_3$ कृत· (for क्रूर·). — (L. 40) $T_1$ [इ]ह (for [ए]तत्). $T_3$ M विमार्गोपार्जितस्यैतत् (for the prior half). — (L. 42) M सुखं (for वसु). — (L. 45) $T_1$ विपरीतेन वृत्तेन (for the prior half). — (L. 46) $T_3$ M स्वाध्याय· (for अ°). — $T_3$ om. line 47. $T_1$ om. lines 48–53. — (L. 48) M अस्य (for तस्य). $T_3$ विच्छेदादस्य धर्मस्य (for the prior half). — (L. 52) Kumbh. ed. ·विधिम् (for ·पथम्). — (L. 53) $T_{2.3}$ दैवतं (for °त·). $G_4$ ·पूर्वकाः (for ·पूजकाः). — (L. 54) $T_2$ श्रद्धावि· (for श्रद्धया). — (L. 55) $T_3$ सिद्धिं (for विधिं). — (L. 56) $T_1$ शुश्रूषाधिगतं तथा; $T_2$ °भिगमं तथा (for the post. half). — (L. 57) $D_{10}$ $T_2$ G $M_{1-3}$ तंत्राणि (for मन्त्राणि). — (L. 58) $D_{10}$ $T_2$ G ·परीक्षा (for °क्षां). — (L. 60) $T_3$ पूर्वार्थान् (for शौचा°). M शौचं हि सर्वकृत्यार्थं (for the prior half). M सर्वेषां च

निर्जनं संवृतं बुद्ध्वा नियतात्मा जितेन्द्रियः ।
सजलं भाजनं स्थाप्य मृत्तिकां च परीक्षिताम् ।
परीक्ष्य भूमिं मूत्रार्थी तत आसीत वाग्यतः ।
उदङ्मुखो दिवा कुर्याद्रात्रौ चेद्दक्षिणामुखः ।
अन्तर्हितायां भूमौ तु अन्तर्हितशिरास्तथा ।
असमाप्ते तथा शौचे न वाचं किंचिदीरयेत् ।
कृतकृत्यस्तथाचम्य गच्छन्नोदीरयेद्वचः ।
शौचार्थमुपविष्टस्तु मृद्भाजनपुरस्कृतः ।
स्थाप्यं कमण्डलुं गृह्य पार्श्वोरुभ्यामथान्तरे ।
शौचं कुर्याच्छनैर्वीरो बुद्धिपूर्वमसंकरम् ।
पाणिना शुद्धमुदकं संगृह्य विधिपूर्वकम् ।
विप्रुषश्च यथा न स्युर्यथा चोरू न संस्पृशेत् ।
अपाने मृत्तिकास्तिस्रः प्रदेयास्त्वनुपूर्वशः ।
हस्ताभ्यां च तथा विप्रो हस्तं हस्तेन संस्पृशेत् ।
अपाने नव देयाः स्युरिति वृद्धानुशासनम् ।
मृत्तिका दीयमाना हि शोधयेद्देशमञ्जसा ।
तस्मात्पाणितले देया मृत्तिकास्तु पुनः पुनः ।
बुद्धिपूर्वं प्रयत्नेन यथा नैव स्पृशेत्स्फिजौ ।
यथा घातो हि न भवेत्क्लेदजः परिधानके ।
तथा गुदं प्रमार्जेत शौचार्थं तु पुनः पुनः ।
प्रतिपादं ततस्त्यक्त्वा शौचमुत्थाय कारयेत् ।
सव्ये द्वादश देयाः स्युस्तिस्रस्तिस्रः पुनः पुनः ।
देयाः कूर्परके हस्ते पृष्ठबन्धे पुनः पुनः ।
तथैवादर्शके दद्याच्चतस्रस्तूभयोरपि ।
उभयोर्हस्तयोरेकं सप्त सप्त प्रदापयेत् ।
ततोऽन्यां मृत्तिकां गृह्य कार्यं शौचं पुनस्तयोः ।
हस्तयोरेवमेतद्धि महाशौचं विधीयते ।
ततोऽन्यथा न कुर्वीत विधिरेष सनातनः ।
उपस्थे मूत्रशौचस्य अत ऊर्ध्वं विधीयते ।
अतोऽन्यथा तु यः कुर्यात्प्रायश्चित्तीयते तु सः ।
मलोपहतचेलस्य द्विगुणं तु विधीयते ।
सहपादमथोरुभ्यां हस्तशौचमसंशयम् ।
अवधीरयमाणस्य संदेह उपजायते ।
यथा यथा विशुध्येत तत्तथा तदुपक्रमे ।
सकर्दमं तु वर्षासु गृहमाविश्य संकटम् ।
हस्तयोर्मृत्तिकास्तिस्रः पादयोः षट् प्रदापयेत् ।
कामं दत्त्वा गुदे दद्यात्तिस्रः पञ्चथवा तथैव च ।
हस्तशौचं प्रकर्तव्यं मूत्रशौचविधेस्तथा ।
मूत्रशौचे तथा हस्तौ पादाभ्यां चानुपूर्वशः ।
नैष्ठिके स्थानशौचे तु महाशौचं विधीयते ।
क्षारोषराभ्यां वस्त्रस्य कुर्याच्छौचं मृदा सह ।
लेपगन्धापनयनममेध्यस्य विधीयते ।
स्नानशाट्यां मृदस्तिस्रो हस्ताभ्यां चानुपूर्वशः ।
शौचं प्रयत्नतः कृत्वा कम्पयानः समुद्धरेत् ।

; for सर्वानेव ). — $T_1$ $M_4$ om. line 62. — ( L. 62 ) $G_{1.3}$ शेषेण ( for शेषं च ). $M_{1.2}$ मृदं देशं च कल्पयेत् ( for the post. half ). — After line 62, $M_{1-3}$ read line 70 repeating it in its proper place. — ( L. 63 ) $T_1$ $G_{1.3}$ च ; $T_3$ M हि ( for तु- ). — ( L. 64 ) $T_1$ शृणु वक्ष्यामि पार्थिव ( for the post. half ). — ( L. 65 ) $T_{1.2}$ $G_{1.3}$ $M_{1.2}$ इदं ( for इमं ). — ( L. 66 ) $D_{10}$ निर्जितं ( for निर्जनं ). $M_1$ नियमात्मा ( for °तात्मा ). — ( L. 67 ) $G_{1.3}$ सकलं ( for सजलं ). Madras ed. शुभ्रं ( for स्थाप्य ). — ( L. 70 ) $T_3$ अंतर्हिताया भूमेस्तु ( for the prior half ). — ( L. 71 ) $T_1$ M कांचिद् ( for किंचिद् ). — $T_1$ om. line 72. — ( L. 73 ) $T_1$ उपतिष्ठेत ( for °विष्टस्तु ). — After line 73, $M_{1-3}$ ins. :

मूत्रशौचं पुरस्कृत्य शौचं कुर्याच्छनैर्मृदा ।

— ( L. 74 ) $T_2$ स्थितं ; Cv सर्वं ( for स्थाप्यं ). $G_2$ ह्यत्र ( for गृह्य ). $M_4$ तथा ( for अथ ). Cv पार्श्वे दिग्भ्यामथांतरं ( for the post. half ). — ( L. 75 ) $T_{1.3}$ $M_{1-3}$ धीरो ( for वीरो ). — $T_1$ om. line 79–86. — ( L. 79 ) M तदा ( for तथा ). $M_{2.3}$ न ( for सं- ). — ( L. 81 ) $G_1$ देहम् ( for देशम् ). $G_{1.3}$ अंभसा ( for अञ्जसा ). $T_3$ M कोपयेद्दोपमार्शसं ( for the post. half ). — ( L. 84 ) $T_3$ M यथोद्घातो ( for यथा घातो ). — ( L. 85 ) $M_{1-3}$ यथा ( for तथा ). $D_{10}$ प्रसर्जेत ( for प्रमा° ). $T_3$ M शनैः शनैः ( for पुनः पुनः ). — ( L. 88 ) $G_4$ पृष्ठे ( for पृष्ठ- ). — ( L. 89 ) Cv तथैव दशके त्वधं ( for the prior half ). — ( L. 90 ) Cv सर्वांस्तत्र प्रभावयेत् ( for the post. half ). — $G_2$ om. ( hapl. ) lines 93–96. $M_4$ om. ( hapl. ) lines 93–105. — ( L. 93 ) $M_{1-3}$ अतो ( for ततो ). — ( L. 94 ) $M_{1-3}$ अयं विधिः ( for विधीयते ). — $T_1$ om. line 95. — ( L. 95 ) $M_{1.2}$ ततो ( for अतो ). — ( L. 96 ) $G_{1.3.4}$ $M_{1-3}$ -गात्रस्य ( for -चेलस्य ). Cv मलोपहतता चेत्स्याद् ( for the prior half ). $G_{1.3}$ तद् ( for तु ). — ( L. 97 ) $T_1$ हस्ते शौचमतःपरं ( for the post. half ). — $T_1$ om. line 98. — ( L. 99 ) $T_1$ $G_{1.3}$ यस्य ( for the second यथा ). $T_1$ तत्तथा शौचमाचरेत् ( for the post. half ). — $T_1$ om. lines 100–103. — ( L. 100 ) Cv सकर्दमा शुभार्द्रासु ( for the prior half ). — ( L. 102 ) $T_3$ $G_3$ कामं दद्याद् ; Cv वामे कृत्वा ( for कामं दत्त्वा ). — ( L. 103 ) $G_{1.3.4}$ तदा ( for तथा ). — ( L. 105 ) $T_2$ स्नान- ( for स्थान- ). $T_1$ -काले ( for -शौचे ). — ( L. 107 ) $T_1$ पूति- ( for लेप- ). — $T_1$ om. line 108. — ( L. 108 ) $D_{10}$ $T_2$ $G_{1-3}$ -शाट्या ( for -शाट्यां ). — ( L. 109 )

इह चास्य परिक्लेशः प्रेत्य चास्याशुभा गतिः ।
अधर्म्यमयशस्यं च तपः शूद्रे प्रतिष्ठितम् ।
अमार्गेण तपस्तप्त्वा म्लेच्छेषु फलमश्नुते ।
अन्यथा वर्तमानो हि न शूद्रो धर्ममर्हति ।
अमार्गेण प्रयातानां प्रत्यक्षादुपलभ्यते ।
चातुर्वर्ण्यव्यपेतानां जातिमूर्तिपरिग्रहः ।
तथा ते हि शकाश्चीनाः काम्भोजाः पारदास्तथा ।
शबराः पह्लवाश्चैव तुषारयवनास्तथा ।
दार्वाश्च दरदाश्चैव उज्जिहानास्तथेतराः ।
वेणाश्च कङ्कणाश्चैव सिंहला मद्रकास्तथा ।
किष्किन्धकाः पुलिन्दाश्च कह्लाश्चान्ध्राः सनीरगाः ।
गन्धिका द्रमिडाश्चैव बर्बराश्चूचुकास्तथा ।
किराताः पार्वतेयाश्च कोलाश्चोलाः सखापकाः ।
भारुकाश्चैव दोहाश्च याश्चान्या म्लेच्छजातयः ।
विकृता विकृताचारा दृश्यन्ते क्रूरबुद्धयः ।
अमार्गेणाश्रिता धर्मं ततो जात्यन्तरं गताः ।
अमार्गोपार्जितस्यैतत्तपसो विदितं फलम् ।
न नश्यति कृतं कर्म शुभं वा यदि वाशुभम् ।
अत्राप्येते वसु प्राप्य विकर्मतपसार्जितम् ।
पाषण्डानर्चयिष्यन्ति धर्मकामा वृथाश्रमाः ।
एवं चतुर्णां वर्णानामाश्रमाणां च पार्थिव ।
विपरीतं वर्तमाना म्लेच्छा जायन्त्यबुद्धयः ।
अध्यायधनिनो विप्राः क्षत्रियाणां बलं धनम् ।
वणिक्कृषिश्च वैश्यानां शूद्राणां परिचारिका ।
व्युच्छेदात्तस्य धर्मस्य निरयायोपपद्यते ।
ततो म्लेच्छा भवन्त्येते निर्घृणा धर्मवर्जिताः ।
पुनश्च निरयस्तेषां तिर्यग्योनिश्च शाश्वती ।
ये तु सत्पथमास्थाय वर्णाश्रमकृतं पुरा ।
सर्वान्विमार्गानुत्सृज्य स्वधर्मपथमाश्रिताः ।
सर्वभूतदयावन्तो दैवतद्विजपूजकाः ।
शास्त्रदृष्टेन विधिना श्रद्धया जितमन्यवः ।
तेषां विधिं प्रवक्ष्यामि यथावदनुपूर्वशः ।
उपादानविधिं कृत्स्नं शुश्रूषाधिगमं तथा ।
शिष्टोपनयनं चैव मन्त्राणि विविधानि च ।
तथा शिष्यपरीक्षां च शास्त्रप्रामाण्यदर्शनात् ।
प्रवक्ष्यामि यथातत्त्वं यथावदनुपूर्वशः ।
शौचकृत्यस्य शौचार्थान्सर्वानेव विशेषतः ।
महाशौचप्रभृतयो दृष्टास्तत्त्वार्थदर्शिभिः ।
तत्रापि शूद्रो भिक्षूणामिदं शेषं च कल्पयेत् ।
भिक्षुभिः सुकृतप्रज्ञैः केवलं धर्ममाश्रितैः ।
सम्यग्दर्शनसंपन्नैर्गताध्वनि हितार्थिभिः ।
अवकाशमिमं मेध्यं निर्मितं कामवीरुधम् ।

---

(for °मं). — T1 om. line 21. — (L. 21) T3 नित्यं दक्षजनान्वेषी; G1.3 M चौक्षश्चौक्षजनान्वेषी; Cv श्चैपद्रवैपद्र चमान्वेषी (for the prior half). — (L. 22) Cv -त्रयं (for -त्रयान्). T3 G1 आचरन् (for °रेत्). — (L. 23) T1 विधि- (for वेद-). — (L. 24) T1 [अ]त्र (for the second [अ]स्य). — (L. 25) D10 T3 G2 अधर्मम् (for °र्म्यम्). T1.3 M प्रकल्पितं (for प्रतिष्ठितम्). — (L. 26) D10 T2 G2.4 अमार्गेषु (for °ण). T1 कृत्वा (for तप्त्वा). — (L. 27) T1 M1-3 [ऽ]पि (for हि). — T1 om. lines 28–29. — (L. 29) D10 T2 G जात- (for जाति-). T3 -मुक्त- (for -मूर्ति-). — (L. 30) T1 भवंति ते; M तथा तेपि (for तथा ते हि). — (L. 31) M4 पह्लवाश् (for पह्ल°). — T1 om. line 32. — (L. 32) T3 [अ]पराः (for [इ]तराः). M औजिह्वानास्तुखास्तथा (for the post. half). — (L. 33) T2 कंबळाश्; M तंकणाश् (for कङ्क°). — (L. 34) G1.3.4 कण्वाश् (for कह्लाश्). M सनीपराः (for °रगाः). — For lines 33–34, T1 subst.:

ढङ्कणाश्च पुलिन्दाश्च पुण्ड्राः पौण्ड्राः सर्बावराः ।
सिंहका मद्रकाश्चैव बर्बराश्च सनालवाः ।

— T1 om. line 35. — (L. 35) M गंडिका (for गन्धिका). T3 बर्बराश्च सचूचुकाः (for the post. half). — (L. 36) D10 T1 M पर्वतीयाश् (for पार्वते°). T3 पार्वतीयाश्च काशाश्च (for the prior half). D10 कालाश्; T2 G4 कोळाश्; G3 काशाश्; M कासाश् (for कोलाश्). D10 चोपाः; T2 G2–4 M चोळाः (for चोलाः). T1 G1 काशाश्चोलाः सहोल(G1 °वाष्ट)काः; T3 किराताश्चोळकाः शकाः (for the post. half). — (L. 37) M आरुहाश् (for °काश्). T1 उज्जिहानाश्च सर्वाश्च; T3 करुकाश्च विदेहाश्च (for the prior half). — T1 reads line 38 after line 41. — (L. 38) M4 विकृतं (for °ता). T1 G1.3.4 विकृता विकृताकारा (for the prior half). T3 कृत- (for क्रूर-). — (L. 40) T1 [इ]ह (for [ए]तत्). T3 M विमार्गोपार्जितस्यैतत् (for the prior half). — (L. 42) M सुखं (for वसु). — (L. 45) T1 विपरीतेन वृत्तेन (for the prior half). — (L. 46) T3 M स्वाध्याय- (for अ°). — T3 om. line 47. T1 om. lines 48–53. — (L. 48) M अस्य (for तस्य). T3 विच्छेदादस्य धर्मस्य (for the prior half). — (L. 52) Kumbh. ed. -विधिन् (for -पथम्). — (L. 53) T2.3 दैवतं (for °त-). G4 -पूर्वकाः (for -पूजकाः). — (L. 54) T2 श्रद्धावि- (for श्रद्धया). — (L. 55) T3 सिद्धिं (for विधिं). — (L. 56) T1 शुश्रूषाधिगतं तथा; T3 °धिगमं तथा (for the post. half). — (L. 57) M1-3 तंत्राणि (for मन्त्राणि). — (L. 58) D10 T2 G -परीक्षा (for °क्षां). — (L. 60) T3 पूर्वार्थान् (for शौचा°). M शौचं हि [illegible] (for the prior half). M सर्वेषां न

[

निर्जनं संवृतं बुद्ध्वा नियतात्मा जितेन्द्रियः ।
सजलं भाजनं स्थाप्य मृत्तिकां च परीक्षिताम् ।
परीक्ष्य भूमिं मूत्रार्थी तत आसीत वाग्यतः ।
उदङ्मुखो दिवा कुर्याद्रात्रौ चेद्दक्षिणामुखः ।
अन्तर्हितायां भूमौ तु अन्तर्हितशिरास्तथा ।
असमाप्ते तथा शौचे न वाचं किंचिदीरयेत् ।
कृतकृत्यस्तथाचम्य गच्छन्नोदीरयेद्वचः ।
शौचार्थमुपविष्टस्तु मृद्भाजनपुरस्कृतः ।
स्थाप्यं कमण्डलुं गृह्य पार्श्वोरुभ्यामथान्तरे ।
शौचं कुर्याच्छनैर्वीरो बुद्धिपूर्वमसंकरम् ।
पाणिना शुद्धमुदकं संगृह्य विधिपूर्वकम् ।
विप्रुषश्च यथा न स्युर्यथा चोरू न संस्पृशेत् ।
अपाने मृत्तिकास्तिस्रः प्रदेयास्त्वनुपूर्वशः ।
हस्ताभ्यां च तथा विप्रो हस्तं हस्तेन संस्पृशेत् ।
अपाने नव देयाः स्युरिति वृद्धानुशासनम् ।
मृत्तिका दीयमाना हि शोधयेद्देशमञ्जसा ।
तस्मात्पाणितले देया मृत्तिकास्तु पुनः पुनः ।
बुद्धिपूर्वं प्रयत्नेन यथा नैव स्पृशेत्स्फिजौ ।
यथा घातो हि न भवेत्क्लेदजः परिधानके ।
तथा गुदं प्रमार्जेत शौचार्थं तु पुनः पुनः ।
प्रतिपादं ततस्त्यक्त्वा शौचमुत्थाय कारयेत् ।
सव्ये द्वादश देयाः स्युस्तिस्रस्तिस्रः पुनः पुनः ।
देयाः कूर्परके हस्ते पृष्ठबन्धे पुनः पुनः ।
तथैवादर्शके दद्याद्यतस्त्वस्तूभयोरपि ।
उभयोर्हस्तयोरेकं सप्त सप्त प्रदापयेत् ।
ततोऽन्यां मृत्तिकां गृह्य कार्यं शौचं पुनस्तयोः ।
हस्तयोरेवमेतद्धि महाशौचं विधीयते ।
ततोऽन्यथा न कुर्वीत विधिरेष सनातनः ।
उपस्थे मूत्रशौचस्य अत ऊर्ध्वं विधीयते ।
अतोऽन्यथा तु यः कुर्यात्प्रायश्चित्तीयते तु सः ।
मलोपहतचेलस्य द्विगुणं तु विधीयते ।
सहपादमथोरुभ्यां हस्तशौचमसंशयम् ।
अवधीरयमाणस्य संदेह उपजायते ।
यथा यथा विशुध्येत तत्तथा तदुपक्रमे ।
सकर्दमं तु वर्षासु गृहमाविश्य संकटम् ।
हस्तयोर्मृत्तिकास्तिस्रः पादयोः षट् प्रदापयेत् ।
कामं दत्त्वा गुदे दद्यात्तिस्रः पद्भ्यां तथैव च ।
हस्तशौचं प्रकर्तव्यं मूत्रशौचविधेस्तथा ।
मूत्रशौचे तथा हस्तौ पादाभ्यां चानुपूर्वशः ।
नैष्ठिके स्थानशौचे तु महाशौचं विधीयते ।
क्षारौपराभ्यां वस्त्रस्य कुर्याच्छौचं मृदा सह ।
लेपगन्धापनयनममेध्यस्य विधीयते ।
स्नानशाट्यां मृदस्तिस्रो हस्ताभ्यां चानुपूर्वशः ।
शौचं प्रयत्नतः कृत्वा कम्पयानः समुद्धरेत् ।

---

(for सर्वानेव). — T1 M4 om. line 62. — (L. 62) G1.3 शेषेण (for शेषं च). M1.2 मृदं देशं च करयेत् (for the post. half). — After line 62, M1–3 read line 70 repeating it in its proper place. — (L. 63) T1 G1.3 च; T3 M हि (for सु-). — (L. 64) T1 शृणु वक्ष्यामि पार्थिव (for the post. half). — (L. 65) T1.2 G1.3 M1.4 इदं (for इमं). — (L. 66) D10 निर्जितं (for निर्जनं). M1 नियमात्मा (for °तात्मा). — (L. 67) G1.3 सकलं (for सजलं). Madras ed. शुभ्रं (for स्थाप्य). — (L. 70) T3 अंतर्हिताया भूमेस्तु (for the prior half). — (L. 71) T1 M कांचिद् (for किंचिद्). — T1 om. line 72. — (L. 73) T1 उपतिष्ठेत (for °विष्टस्तु). — After line 73, M1–3 ins.:

मूत्रशौचं पुरस्कृत्य शौचं कुर्याच्छनैर्मृदा ।

— (L. 74) T1 स्थितं; Cv सर्वे (for स्थाप्यं). G2 ह्यत्र (for गृह्य). M4 तथा (for अथ). Cv पार्श्वे दिग्भ्यामवांतरं (for the post. half). — (L. 75) T1.3 M1–3 धीरो (for वीरो). — T1 om. line 79–86. — (L. 79) M तदा (for तथा). M2.3 न (for सं-). — (L. 81) G2 देहम् (for देशम्). G1.3 अंभसा (for अञ्जसा). T3 M कोपयेद्दोपमार्शसं (for the post. half). — (L. 84) T3 M यथोद्घातो (for यथा घातो). — (L. 85) M1–3 यथा (for तथा). D10 प्रसर्जेत (for प्रमा°). T3 M शनैः शनैः (for पुनः पुनः). — (L. 88) G4 पृष्ठे (for पृष्ठ-). — (L. 89) Cv तथैव दशके स्वर्थे (for the prior half). — (L. 90) Cv सर्वास्तत्र प्रभावयेत् (for the post. half). — G2 om. (hapl.) lines 93–96. M4 om. (hapl.) lines 93–105. — (L. 93) M1–3 अतो (for ततो). — (L. 94) M1–3 अयं विधिः (for विधीयते). — T1 om. line 95. — (L. 95) M1.2 ततो (for अतो). — (L. 96) G1.3.4 M1–3 -गात्रस्य (for -चेलस्य). Cv मलोपहतता चेत्स्याद् (for the prior half). G1.3 तद् (for तु). — (L. 97) T1 हस्ते शौचमतःपरं (for the post. half). — T1 om. line 98. — (L. 99) T1 G1.3 यस्य (for the second यथा). T1 तत्तथा शौचमाचरेत् (for the post. half). — T1 om. lines 100–103. — (L. 100) Cv सकर्दमा शुभार्द्रासु (for the prior half). — (L. 102) T3 G3 कामं दद्याद्; Cv वामे कृत्वा (for कामं दत्त्वा). — (L. 103) G1.3.4 तदा (for तथा). — (L. 105) T2 स्नान- (for स्थान-). T1 -काले (for -शौचे). — (L. 107) T1 पूति- (for लेप-). — T1 om. line 108. — (L. 108) D10 T2 G1–3 -शाट्या (for -शाट्यां). — (L. 109)

इह चास्य परिक्लेशः प्रेत्य चास्याशुभा गतिः ।
अधर्म्यमयशस्यं च तपः शूद्रे प्रतिष्ठितम् ।
अमार्गेण तपस्तप्त्वा म्लेच्छेषु फलमश्नुते ।
अन्यथा वर्तमानो हि न शूद्रो धर्ममर्हति ।
अमार्गेण प्रयातानां प्रत्यक्षादुपलभ्यते ।
चातुर्वर्ण्यव्यपेतानां जातिमूर्तिपरिग्रहः ।
तथा ते हि शकाश्चीनाः काम्भोजाः पारदास्तथा ।
शबराः पह्लवाश्चैव तुषारयवनास्तथा ।
दार्वाश्च दरदाश्चैव उज्जिहानास्तथेतराः ।
वेणाश्च कङ्कणाश्चैव सिंहला मद्रकास्तथा ।
किष्किन्धकाः पुलिन्दाश्च कह्लाश्चान्ध्राः सनीरगाः ।
गन्धिका द्रमिडाश्चैव बर्बराश्चूचुकास्तथा ।
किराताः पार्वतेयाश्च कोलाश्चोलाः सखापकाः ।
आरुकाश्चैव दोहाश्च याश्चान्या म्लेच्छजातयः ।
विकृता विकृताचारा दृश्यन्ते क्रूरबुद्धयः ।
अमार्गेणाश्रिता धर्मं ततो जात्यन्तरं गताः ।
अमार्गोपार्जितस्यैतत्तपसो विदितं फलम् ।
न नश्यति कृतं कर्म शुभं वा यदि वाशुभम् ।
अत्राप्येते वसु प्राप्य विकर्मतपसार्जितम् ।
पाषण्डानर्चयिष्यन्ति धर्मकामा वृथाश्रमाः ।
एवं चतुर्णां वर्णानामाश्रमाणां च पार्थिव ।
विपरीतं वर्तमाना म्लेच्छा जायन्त्यबुद्धयः ।
अध्यायधनिनो विप्राः क्षत्रियाणां बलं धनम् ।
वणिक्कृषिश्च वैश्यानां शूद्राणां परिचारिका ।
व्युच्छेदात्तस्य धर्मस्य निरयायोपपद्यते ।
ततो म्लेच्छा भवन्त्येते निर्घृणा धर्मवर्जिताः ।
पुनश्च निरयस्तेषां तिर्यग्योनिश्च शाश्वती ।
ये तु सत्पथमास्थाय वर्णाश्रमकृतं पुरा ।
सर्वान्विमार्गानुत्सृज्य स्वधर्मपथमाश्रिताः ।
सर्वभूतदयावन्तो दैवतद्विजपूजकाः ।
शास्त्रदृष्टेन विधिना श्रद्धया जितमन्यवः ।
तेषां विधिं प्रवक्ष्यामि यथावदनुपूर्वशः ।
उपादानविधिं कृत्स्नं शुश्रूषाधिगमं तथा ।
शिष्टोपनयनं चैव मन्त्राणि विविधानि च ।
तथा शिष्यपरीक्षां च शास्त्रप्रामाण्यदर्शनात् ।
प्रवक्ष्यामि यथातत्त्वं यथावदनुपूर्वशः ।
शौचकृत्यस्य शौचार्थान्सर्वानेव विशेषतः ।
महाशौचप्रभृतयो दृष्टास्तत्त्वार्थदर्शिभिः ।
तत्रापि शूद्रो भिक्षूणामिदं शेषं च कल्पयेत् ।
भिक्षुभिः सुकृतप्रज्ञैः केवलं धर्ममाश्रितैः ।
सम्यग्दर्शनसंपन्नैर्गताध्वनि हिताथिभिः ।
अवकाशमिमं मेध्यं निर्मितं कामवीरुधम् ।

(for °मं). — T1 om. line 21. — (L. 21) T3 नित्यं दक्षजनान्वेषी; G1.3 M चौक्षश्चौक्षजनान्वेषी; Cv श्रौपट्टवौपट्ट चमान्वेषी (for the prior half). — (L. 22) Cv -त्रयं (for -त्रयान्). T3 G4 आचरन् (for °रेत्). —(L. 23) T1 विधि- (for वेद-). —(L. 24) T1 [अ]त्र (for the second [अ]स्य). —(L. 25) D10 T3 G2 अधर्मम् (for °र्म्यम्). T1.3 M प्रकाल्पितं (for प्रतिष्ठितम्). —(L. 26) D10 T2 G2.4 अमार्गेषु (for °ण). T1 कृत्वा (for तप्त्वा). — (L. 27) T1 M1-3 [ऽ]पि (for हि). — T1 om. lines 28-29. — (L. 29) D10 T2 G जात- (for जाति-). T3 -मुक्त- (for -मूर्ति-). —(L. 30) T1 भवंति ते; M तथा तेपि (for तथा ते हि). — (L. 31) M4 पह्लवाश् (for पह्ल°). — T1 om. line 32. —(L. 32) T3 [अ]पराः (for [इ]तराः). M औजिहानास्तुखास्तथा (for the post. half). — (L. 33) T2 कंवळाश्; M तंकणाश् (for कङ्क°). — (L. 34) G1.3.4 कण्वाश् (for कह्लाश्). M सनीपराः (for °रगाः). — For lines 33-34, T1 *subst.* :

दङ्कणाश्च पुलिन्दाश्च पुण्ड्राः पौण्ड्राः सधीवराः ।
सिंहका मद्रकाश्चैव बर्बराश्च सनालवाः ।

— T1 om. line 35. — (L. 35) M गंडिका (for गन्धिका). T3 बर्बराश्च सचूचुकाः (for the post. half). — (L. 36) D10 T1 M पर्वतीयाश् (for पार्वते°). T3 पार्वतीयाश्च काशाश्च (for the prior half). D10 कालाश्; T2 G4 कोळाश्; G3 काशाश्; M कासाश् (for कोलाश्). D10 चोपाः; T2 G2-4 M चोळाः (for चोलाः). T1 G1 काशाश्चोलाः सहोल(G1 °वाष्ट)काः; T3 किराताश्चोळकाः शकाः (for the post. half). — (L. 37) M आरुहाश् (for °काश्). T1 उज्जिहानाश्च खर्वाश्च; T3 करुकाश्च विदेहाश्च (for the prior half). — T1 reads line 38 after line 41 — (L. 38) M4 विकृतं (for °ता). T1 G1.3.4 विकृता विकृताकारा (for the prior half). T3 कृत- (for क्रूर-). — (L. 40) T1 [इ]ह (for [ए]तत्). T3 M विमार्गोपार्जितस्यैतत् (for the prior half). — (L. 42) M सुखं (for वसु). — (L. 45) T1 विपरीतेन वृत्तेन (for the prior half). — (L. 46) T3 M स्वाध्याय- (for अ°). — T3 om. line 47. T1 om. lines 48–53. — (L. 48) M अस्य (for तस्य). T3 विच्छेदादस्य धर्मस्य (for the prior half). — (L. 52) Kumbh. ed. -विधिम् (for -पथम्). — (L. 53) T2.3 दैवतं (for °त-). G4 -पूर्वकाः (for -पूजकाः). — (L. 54) T2 श्रद्धावि- (for श्रद्धया). — (L. 55) T3 सिद्धिं (for विधिं). — (L. 56) T1 शुश्रूषाधिगतं तथा; T2 °भिगमं तथा (for the post. half). — (L. 57) M1-3 तंत्राणि (for मन्त्राणि). — (L. 58) D10 T2 G -परीक्षा (for °क्षां). — (L. 60) T3 पूर्वांगान् (for शौचार्°). M शौचं हि संकृत्यार्थं (for the prior half). M सर्वेषां च

निर्जनं संवृतं बुद्ध्वा नियतात्मा जितेन्द्रियः ।
सजलं भाजनं स्थाप्य मृत्तिकां च परीक्षिताम् ।
परीक्ष्य भूमिं मूत्रार्थी तत आसीत वाग्यतः ।
उदङ्मुखो दिवा कुर्याद्रात्रौ चेद्दक्षिणामुखः ।
अन्तर्हितायां भूमौ तु अन्तर्हितशिरास्तथा ।
असमाप्ते तथा शौचे न वाचं किंचिदीरयेत् ।
कृतकृत्यस्तथाचम्य गच्छन्नोदीरयेद्वचः ।
शौचार्थमुपविष्टस्तु मृद्भाजनपुरस्कृतः ।
स्थाप्यं कमण्डलुं गृह्य पार्श्वोरुभ्यामथान्तरे ।
शौचं कुर्याच्छनैर्वीरो बुद्धिपूर्वमसंकरम् ।
पाणिना शुद्धमुदकं संगृह्य विधिपूर्वकम् ।
विप्रुषश्च यथा न स्युर्यथा चोरू न संस्पृशेत् ।
अपाने मृत्तिकास्तिस्रः प्रदेयास्त्वनुपूर्वशः ।
हस्ताभ्यां च तथा विप्रो हस्तं हस्तेन संस्पृशेत् ।
अपाने नव देयाः स्युरिति वृद्धानुशासनम् ।
मृत्तिका दीयमाना हि शोधयेद्देशमञ्जसा ।
तस्मात्पाणितले देया मृत्तिकास्तु पुनः पुनः ।
बुद्धिपूर्वं प्रयत्नेन यथा नैव स्पृशेत्स्फिजौ ।
यथा घातो हि न भवेत्क्लेदजः परिधानके ।
तथा गुदं प्रमार्जेत शौचार्थं तु पुनः पुनः ।
प्रतिपादं ततस्त्यक्त्वा शौचमुत्थाय कारयेत् ।
सव्ये द्वादश देयाः स्युस्तिस्रस्तिस्रः पुनः पुनः ।
देयाः कूर्परके हस्ते पृष्ठबन्धे पुनः पुनः ।
तथैवादर्शके दद्याच्चतस्रस्तूभयोरपि ।
उभयोर्हस्तयोरेकं सप्त सप्त प्रदापयेत् ।
ततोऽन्यां मृत्तिकां गृह्य कार्यं शौचं पुनस्तयोः ।
हस्तयोरेवमेतद्धि महाशौचं विधीयते ।
ततोऽन्यथा न कुर्वीत विधिरेष सनातनः ।
उपस्थे मूत्रशौचस्य अत ऊर्ध्वं विधीयते ।
अतोऽन्यथा तु यः कुर्यात्प्रायश्चित्तीयते तु सः ।
मलोपहतचेलस्य द्विगुणं तु विधीयते ।
सहपादमथोरुभ्यां हस्तशौचमसंशयम् ।
अवधीरयमाणस्य संदेह उपजायते ।
यथा यथा विशुध्येत तत्तथा तदुपक्रमे ।
सकर्दमं तु वर्षासु गृहमाविश्य संकटम् ।
हस्तयोर्मृत्तिकास्तिस्रः पादयोः षट् प्रदापयेत् ।
कामं दत्त्वा गुदे दद्यात्तिस्रः पद्भ्यां तथैव च ।
हस्तशौचं प्रकर्तव्यं मूत्रशौचविधेस्तथा ।
मूत्रशौचे तथा हस्तौ पादाभ्यां चानुपूर्वशः ।
नैष्ठिके स्थानशौचे तु महाशौचं विधीयते ।
क्षारौपराभ्यां वस्त्रस्य कुर्याच्छौचं मृदा सह ।
लेपगन्धापनयनममेध्यस्य विधीयते ।
स्नानशाट्यां मृदस्तिस्रो हस्ताभ्यां चानुपूर्वशः ।
शौचं प्रयत्नतः कृत्वा कम्पयानः समुद्धरेत् ।

---

(for सर्वानेव). — $T_1$ $M_4$ om. line 62. — (L. 62) $G_{1.3}$ शेषेण (for शेषं च). $M_{1.2}$ मूर्द्ं देशं च कल्पयेत् (for the post. half). — After line 62, $M_{1-3}$ read line 70 repeating it in its proper place. — (L. 63) $T_1$ $G_{1.3}$ च; $T_3$ M हि (for सु-). — (L. 64) $T_1$ शृणु वक्ष्यामि पार्थिव (for the post. half). — (L. 65) $T_{1.2}$ $G_{1.3}$ $M_{1.4}$ इदं (for इमं). — (L. 66) $D_{10}$ निर्जितं (for निर्जनं). $M_1$ नियमात्मा (for °तात्मा). — (L. 67) $G_{1.3}$ सकलं (for सजलं). Madras ed. शुभ्रं (for स्थाप्य). — (L. 70) $T_3$ अंतर्हिताया भूमेस्तु (for the prior half). — (L. 71) $T_1$ M कांचिद् (for किंचिद्). — $T_1$ om. line 72. — (L. 73) $T_1$ उपतिष्ठेत (for °विष्टस्तु). — After line 73, $M_{1-3}$ ins.:

मूत्रशौचं पुरस्कृत्य शौचं कुर्याच्छनैर्मृदा ।

— (L. 74) $T_1$ स्थितं; Cv सर्वं (for स्थाप्यं). $G_2$ ह्यत्र (for गृह्य). $M_4$ तथा (for अथ). Cv पार्श्वे दिग्भ्यामवांतरं (for the post. half). — (L. 75) $T_{1.3}$ $M_{1-3}$ धीरो (for वीरो). — $T_1$ om. line 79–86. — (L. 79) M तदा (for तथा). $M_{2.3}$ न (for सं-). — (L. 81) $G_2$ देहम् (for देशम्). $G_{1.3}$ अंभसा (for अञ्जसा). $T_3$ M कोपयेद्दोपमार्शसं (for the post. half). — (L. 84) $T_3$ M यथोद्धातो (for यथा घातो). — (L. 85) $M_{1-3}$ यथा (for तथा). $D_{10}$ प्रसर्जेत (for प्रमा°). $T_3$ M शनैः शनैः (for पुनः पुनः). — (L. 88) $G_4$ पृष्ठे (for पृष्ठ-). — (L. 89) Cv तथैव दशके त्वर्धे (for the prior half). — (L. 90) Cv सर्वास्तत्र प्रभावयेत् (for the post. half). — $G_2$ om. (hapl.) lines 93–96. $M_4$ om. (hapl.) lines 93–105. — (L. 93) $M_{1-3}$ अतो (for ततो). — (L. 94) $M_{1-3}$ अयं विधिः (for विधीयते). — $T_1$ om. line 95. — (L. 95) $M_{1.2}$ ततो (for अतो). — (L. 96) $G_{1.3.4}$ $M_{1-3}$ -गात्रस्य (for -चेलस्य). Cv मलोपहतता चेत्स्याद् (for the prior half). $G_{1.3}$ तद् (for तु). — (L. 97) $T_1$ हस्ते शौचमतःपरं (for the post. half). — $T_1$ om. line 98. — (L. 99) $T_1$ $G_{1.3}$ यस्य (for the second यथा). $T_1$ तत्तथा शौचमाचरेत् (for the post. half). — $T_1$ om. lines 100–103. — (L. 100) Cv सकर्दमा शुभार्द्रासु (for the prior half). — (L. 102) $T_3$ $G_3$ कामं दद्याद्; Cv वामे कृत्वा (for कामं दत्त्वा). — (L. 103) $G_{1.3.4}$ तदा (for तथा). — (L. 105) $T_2$ स्नान- (for स्थान-). $T_1$ -काले (for -शौचे). — (L. 107) $T_1$ पूति- (for लेप-). — $T_1$ om. line 108. — (L. 108) $D_{10}$ $T_2$ $G_{1-3}$ -शाट्या (for -शाट्यां). — (L. 109)

देयाश्चतस्रस्तिस्रो वा द्विर्वाप्येका तथापदि ।
कालमासाद्य देशं च शौचस्य गुरुलाघवम् ।
विधिनानेन शौचं तु नित्यं कुर्यादतन्द्रितः ।
अविप्रेक्षन्नसंभ्रान्तः पादौ प्रक्षाल्य तत्परः ।
अप्रक्षालितपादस्तु पाणिमा मणिबन्धनात् ।
अधस्तादुपरिष्टाच्च ततः पाणिमुपस्पृशेत् ।
मनोगतास्तु निःशब्दा निःशब्दं त्रिरपः पिबेत् ।
द्विर्मुखं परिमृज्याच्च खानि चोपस्पृशेद्बुधः ।
ऋग्वेदं तेन प्रीणाति प्रथमं यः पिबेदपः ।
द्वितीयं तु यजुर्वेदं तृतीयं साम एव च ।
मृज्यते प्रथमं तेन अथर्वा प्रीतिमाप्नुयात् ।
द्वितीयेनेतिहासं च पुराणस्मृतिदेवताः ।
यच्चक्षुषि समाधत्ते तेनादित्यं तु प्रीणयेत् ।
प्रीणाति वायुं घ्राणं च दिशश्चाप्यथ श्रोत्रयोः ।
ब्रह्माणं तेन प्रीणाति यन्मूर्धनि समापयेत् ।
समुत्क्षिपति चापोर्ध्वमाकाशं तेन प्रीणयेत् ।
प्रीणाति विष्णुं पद्भ्यां तु सलिलं वै समादधत् ।
प्राङ्मुखोदङ्मुखो वापि अन्तर्जानुरुपस्पृशेत् ।
सर्वत्र विधिरित्येष भोजनादिषु नित्यशः ।
अन्नेषु दन्तलग्नेषु उच्छिष्टः पुनराचमेत् ।
विधिरेष समुद्दिष्टः शौचे चाभ्युक्षणं स्मृतम् ।
शूद्रस्यैष विधिर्दृष्टो गृहान्निष्क्रमतः सतः ।
नित्यं त्वलुप्तशौचेन वर्तितव्यं कृतात्मना ।
यशस्कामेन भिक्षुभ्यः शूद्रेणात्महितार्थिना ।

Colophon.

**पराशरः ।**

क्षत्रा आरम्भयज्ञास्तु वीर्ययज्ञा विशः स्मृताः ।
शूद्राः परिचरायज्ञा जपयज्ञास्तु ब्राह्मणाः ।
शुश्रूषाजीविनः शूद्रा वैश्या विपणिजीविनः ।
अनिष्टनिग्रहाः क्षत्रा विप्राः स्वाध्यायजीविनः ।
तपसा शोभते विप्रो राजन्यः पालनादिभिः ।
आतिथ्येन तथा वैश्यः शूद्रो दास्येन शोभते ।
यतात्मना तु शूद्रेण शुश्रूषा नित्यमेव च ।
कर्तव्या त्रिषु वर्णेषु प्रायेणाश्रमवासिषु ।
अशक्तेन त्रिवर्गस्य सेव्या ह्याश्रमवासिनः ।
यथाशक्त्यं यथाप्रज्ञं यथाधर्मं यथाश्रुतम् ।
विशेषेणैव कर्तव्या शुश्रूषा भिक्षुकाश्रमे ।
आश्रमाणां तु सर्वेषां चतुर्णां भिक्षुकाश्रमम् ।
प्रधानमिति वर्ण्यन्ते शिष्टाः शास्त्रविनिश्चये ।
यच्चोपदिश्यते शिष्टैः श्रुतिस्मृतिविधानतः ।
तथा स्थेयमशक्तेन स धर्म इति निश्चितः ।
अतोऽन्यथा तु कुर्वाणः श्रेयो नाप्नोति मानवः ।
तस्माद्भिक्षुषु शूद्रेण कार्यमात्महितं सदा ।
इह यत्कुरुते श्रेयस्तत्प्रेत्य समुपाश्नुते ।
तच्चानसूयता कार्यं कर्तव्यं यद्धि मन्यते ।
असूयता कृतस्येह फलं दुःखादवाप्यते ।

Kumbh. ed. कंपमानः ( for °यानः ). — $T_1$ om. line 110. — ( L. 110 ) $T_3$ तथाविधि ( for तथापदि ). — ( L. 112 ) $T_3$ तेन ( for [अ]नेन ). $G_{1,3}$ नित्यं कुर्युरतंद्रिताः ( for the post. half ). — ( L. 114 ) $M_{1-3}$ सुप्रक्षालित- ( for अप्र° ). $T_2$ -पादं ( for -पादस् ). $T_1$ M पाणिना पाणि( $T_1$ °द )बंधनात्; $T_2$ पाणिक्रमणबंधनात् ( for the post. half ). — ( L. 116 ) M च त्र्यपः ( for त्रिरपः ). — ( L. 117 ) $T_3$ द्विजः ( for बुधः ). — ( L. 120 ) $T_{1,3}$ स्पृश्यते ( for मृज्यते ). — ( L. 121 ) T $M_4$ [इ]तिहासश् ( for °हासं ). $M_{1-3}$ द्वितीयं सेतिहासाश्च ( for the prior half ). — ( L. 124 ) $T_2$ यच्च मूर्ध्नि ( for यन्मूर्धनि ). $T_3$ समालभेत् ( for °पयेत् ). — ( L. 125 ) M यदुत्क्षिपति ( for समुत्क्षि° ). $T_{1,3}$ यदुत्क्षिपति चाप्यूर्ध्वम् ( for the prior half ). — ( L. 126 ) $D_{10}$ $T_{1,3}$ $G_{1,3,4}$ $M_4$ विष्णुः ( for विष्णुं ). — $T_1$ om. lines 129-130. — ( L. 130 ) $T_2$ $G_{1,3}$ शौचे वा; $T_3$ शौचे हि; M शौचेषु ( for शौचे च ). — ( L. 131 ) $G_1$ ततः ( for सतः ). — ( L. 132 ) $T_{1,3}$ M कृतात्मसु ( for °त्मना ). — ( L. 133 ) $T_1$ -हिता- त्मना; $T_3$ $M_{1-3}$ -हितैषिणा ( for -हितार्थिना ). — Colophon. *Sub-parvan* : $D_{10}$ $M_{1-3}$ दानधर्म. — *Adhy. name* : $T_2$ शूद्रधर्मविधिसकलवर्णधर्मविधिः; $G_4$ शूद्रविधिः. — *Adhy. no.* : $D_{10}$ 106; $T_1$ $M_4$ 139; $T_{2,3}$ $G_{2,4}$ 146; $G_{1,3}$ $M_1$ 140; $M_{2,3}$ 141. — ( L. 134 ) $T_1$ $G_{1,3}$ M क्षत्रस्यारंभयज्ञस्तु ( for the prior half ). $T_3$ $G_{1,3}$ M हविर्यज्ञो विशां तथा ( for the post. half ). — ( L. 135 ) $G_{1,3,4}$ शूद्रः ( for शूद्राः ). $D_{10}$ परिचार-; $T_1$ °चर्या- ( for °चरा- ). $M_{1-3}$ परिचारयज्ञाः शूद्रास्तु ( for the prior half ). — ( L. 136 ) $D_{10}$ $T_2$ $M_{1-3}$ विपण- ( for विपणि- ). — $D_{10}$ $T_{1,2}$ om. ( hapl. ) line 137. — ( L. 137 ) $T_3$ क्षत्रं ( for क्षत्रा ). M अनिष्टनिग्रहात्क्षत्रं ( for the prior half ). — ( L. 138 ) $T_2$ तपः सं- ( for तपसा ). M राजन्यः पालनादपि ( for the post. half ). — ( L. 139 ) $M_{2,3}$ दाक्ष्येण ( for दास्येन ). — ( L. 143 ) Madras ed. त्रिवर्णस्य ( for °र्गस्य ). $T_1$ $G_{1,3}$ च ( for हि ). $T_1$ -वासिषु ( for °नः ). — ( L. 143 ) $T_{1,3}$ $M_4$ -शक्त्या; $G_{1,3}$ $M_{1-3}$ -शक्ति ( for -शक्यं ). — ( L. 144 ) Madras ed. शुश्रूषा भिक्षुकाश्रमं ( for the post. half ). — ( L. 146 ) T $G_{1,3}$ M मन्यंते ( for वर्ण्यन्ते ). — $T_1$ om. lines 147–156. — ( L. 148 ) $M_{1-3}$ निश्चयः ( for निश्चितः ). — ( L. 153 ) $G_{2,4}$ तु तस्य ( for कृतस्य ).

प्रियवादी जितक्रोधो वीततन्द्रिरमत्सरः ।
क्षमावाञ्शीलसंपन्नः सत्यधर्मपरायणः ।
आपद्भावेन कुर्याद्धि शुश्रूषां भिक्षुकाश्रमे ।
अयं मे परमो धर्मस्त्वनेनेमं सुदुष्करम् ।
संसारसागरं घोरं तरिष्यामि न संशयः ।
विभयो देहमुत्सृज्य यास्यामि परमां गतिम् ।
नातः परं ममाप्यन्य एष धर्मः सनातनः ।
एवं संचिन्त्य मनसा शूद्रो बुद्धिसमाधिना ।
कुर्यादविमना नित्यं शुश्रूषाधर्ममुत्तमम् ।
शुश्रूषानियमेनेह भाव्यं शिष्टाशिना सदा ।
शमान्वितेन दान्तेन कार्याकार्यविदा सदा ।
सर्वकार्येषु कृत्यानि कृतान्येव तु दर्शयेत् ।
यथा प्रियो भवेद्भिक्षुस्तथा कार्यं प्रसाधयेत् ।
यदकल्पं भवेद्भिक्षोर्न तत्कार्यं समाचरेत् ।
यदाश्रमस्याविरुद्धं धर्ममात्राभिसंहितम् ।
तत्कार्यमविचारेण नित्यमेव शुभार्थिना ।
मनसा कर्मणा वाचा नित्यमेव प्रसादयेत् ।
स्थातव्यं तिष्ठमानेषु गच्छमानाननुव्रजेत् ।
आसीनेष्वासितव्यं च नित्यमेवानुवर्तता ।
धर्मलब्धेन स्नेहेन पादौ संपीडयेत्सदा ।
उद्वर्तनादींश्च तथा कुर्यादप्रतिचोदितः ।
नैशकार्याणि कृत्वा तु नित्यं चैवानुचोदितः ।
यथाविधिरुपस्पृश्य संन्यस्य जलभाजनम् ।
भिक्षूणां निलयं गत्वा प्रणम्य विधिपूर्वकम् ।
ब्रह्मपूर्वान्गुरूंस्तत्र प्रणम्य नियतेन्द्रियः ।
तथाचार्यपुरोगाणामनुकुर्यान्नमस्क्रियाम् ।
स्वधर्मचारिणां चापि सुखं पृष्ट्वाभिवाद्य च ।
यो भवेत्पूर्वसंसिद्धस्तुल्यधर्मा भवेत्सदा ।
तस्मै प्रणामः कर्तव्यो नेतरेषु कदाचन ।
अनुक्त्वा तेषु चोत्थाय नित्यमेव यतव्रतः ।
संमार्जनमथो कृत्वा कृत्वा चाप्युपलेपनम् ।
ततः पुष्पबलिं दद्यात्पुष्पाण्यादाय धर्मतः ।
निष्क्रम्यावसथात्तूर्णमन्यत्कर्म समाचरेत् ।
यथोपघातो न भवेत्स्वाध्यायेऽऽश्रमिणां तथा ।
उपघातं तु कुर्वाण एनसा संप्रयुज्यते ।
तथात्मा प्रणिधातव्यो यथा ते प्रीतिमाप्नुयुः ।
परिचारकोऽहं वर्णानां त्रयाणां धर्मतः स्मृतः ।
किमुताश्रमवृद्धानां यथालब्धोपजीविनाम् ।
भिक्षूणां गतरागाणां केवलं ज्ञानदर्शिनाम् ।
विशेषेण मया कार्या शुश्रूषा नियतात्मना ।
तेषां प्रसादात्तपसा प्राप्स्यामीष्टां शुभां गतिम् ।
एवमेतद्विनिश्चित्य यदि सेवेत भिक्षुकान् ।
विधिना स्वोपदिष्टेन प्राप्नोति परमां गतिम् ।

Colophon.

— (L. 154) $G_2$ वितंद्री वीतमत्सरः; Kumbh. ed. वीततंद्रीरमत्सरः (for the post. half). — (L. 156) $G_3$ भिक्षुराश्रमे (for भिक्षुका°). — (L. 157) $T_1$ नः (for मे). $T_{1,2}$ $M_{1,2,4}$ अनेनैव (for त्वनेनेमं). $T_1$ M सुदुस्तरं (for सुदुष्करम्). — (L. 159) $T_{1,3}$ निर्भयो (for विभयो). — (L. 160) $T_3$ [अ]स्ति (for [अ]पि). $M_{1-3}$ [अ]न्यद्; $M_4$ [अ]द्य (for [अ]न्य). — (L. 162) $M_{1-3}$ शुश्रूषां (for शुश्रूषा-). — (L. 163) $G_2$ $M_{1-3}$ नियतेन (for °मेन). $T_1$ भाव्या (for भाव्यं). $T_1$ तथा (for सदा). — $D_{10}$ reads line 164 twice. — (L. 164) $T_1$ सता (for सदा). — (L. 165) $T_3$ M नि- (for तु). — (L. 166) $T_3$ $G_{1,3}$ प्रीतो (for प्रियो). — (L. 167) $T_3$ यदकार्यं (for °कल्पं). — (L. 168) $T_{2,3}$ $G_4$ यथा (for यदा). — (L. 172) G M नीचम् (for नित्यम्). — $T_1$ om. line 173. — (L. 173) $D_{10}$ $G_2$ -लुब्धेन; $M_2$ (*sup. lin.*) -वर्द्धेन (for -लब्धेन). $T_3$ $M_4$ संप्रदिह्येत (for संपीडयेत्). $M_{1-3}$ पादान्संप्रदिह्येत्सदा (for the post. half). — (L. 174) $G_2$ सदा (for तथा). $T_1$ उद्वर्तनं पादयोश्च (for the prior half). — (L. 175) Kumbh. ed. नैज- (for नैश-). $T_1$ कुर्याच्च (for कृत्वा तु). $T_1$ अप्रति- (for चैवानु-). — $T_1$ om. line 176. — (L. 178) $G_2$ -पूर्वं (for -पूर्वान्). $T_1$ प्रणमेन् (for °म्य). — (L. 179) $T_2$ यथा (for तथा). — (L. 180) $M_4$ -चारिणश् (for °णां). — (L. 181) $T_{1,3}$ $G_1$ -धर्मो; Kumbh. ed. -कर्मा (for -धर्मा). — (L. 182) $T_{1,3}$ $G_{1,3}$ M [इ]तरेषां (for °रेषु). $T_1$ कथंचन. — (L. 184) $T_3$ $G_4$ गत्वा (for the second कृत्वा). $T_1$ [अ]व- (for [उ]प-). — (L. 185) $T_3$ M कुर्यात् (for दद्यात्). $T_1$ ततः पुष्पफलादीनि (for the prior half). $T_1$ सर्वाणि (for पुष्पाणि). — (L. 186) $T_1$ कामं (for कर्म). — $T_1$ om. lines 187–188. — (L. 190) Prior half hypermetric. $T_2$ धर्माणां; $T_3$ कर्माणां (for वर्णानां). $T_2$ वर्णतः (for धर्मतः). $T_1$ त्रयाणामपि धर्मतः (for the post. half). — (L. 191) $G_2$ -वर्णानां (for -वृद्धानां). — (L. 192) $T_3$ -पापानां; M -पाराणां (for -रागाणां). — (L. 194) $M_{1-3}$ लप्स्यामि (for प्रा°). $T_3$ गतिं शुभां (by transp.). — (L. 196) $T_1$ यथोपदिष्टविधिना; $T_3$ M विधिना यथोपदिष्टेन (hypermetric) (for the prior half). — Colophon. *Sub-parvan:* $D_{10}$ $M_{1-3}$ दानधर्म. — *Adhy. name:* $T_2$ शूद्रधर्मोक्तिः. — *Adhy. no.:* $T_1$ 140; $T_{2,3}$ $G_{2,4}$ 147; $G_{1,3}$ $M_{1,4}$ 141; $M_{2,3}$ 142. — Madras ed. om. the ref. — For line 198, $T_1$ subst.:

इष्टां गतिं स संसर्गादचिरेण न संशयः ।

— $G_1$ om. line 199–202. — (L. 200) $G_4$ प्र- (for

पराशरः ।

न तथा संप्रदानेन नोपवासादिभिस्तथा ।
इष्टां गतिमवाप्नोति यथा शुश्रूषकर्मणा ।
यादृशेन तु तोयेन शुद्धिं प्रकुरुते नरः ।
तादृग्भवति तद्धौतमुदकस्य स्वभावतः ।
शूद्रोऽप्येतेन मार्गेण यादृशं सेवते जनम् ।
तादृग्भवति संसर्गादचिरेण न संशयः ।
तस्मात्प्रयत्नतः सेव्या भिक्षवो नियतात्मना ।
उदकग्रहणाद्येन स्नपनोद्वर्तनैस्तथा ।
अध्वना कर्शितानां च व्याधितानां तथैव च ।
शुश्रूषां नियतं कुर्यात्तेषामापदि यत्नतः ।
दर्भाजिनान्यवेक्षेत भैक्षभाजनमेव च ।
यथाकामं च कार्याणि सर्वाण्येवोपसाधयेत् ।
प्रायश्चित्तं यथा न स्यात्तथा सर्वं समाचरेत् ।
व्याधितानां तु प्रयतश्चैलप्रक्षालनादिभिः ।
प्रतिकर्मक्रिया कार्या भेषजानयनैस्तथा ।
पिंषणालेपनं चूर्णं कषायमथ साधनम् ।
नान्यस्य प्रतिचारेषु सुखार्थमुपपादयेत् ।
भिक्षाटनोऽभिगच्छेत भिषजश्च विपश्चितः ।
ततो विनिष्क्रयार्थानि द्रव्याणि समुपार्जयेत् ।
यश्च प्रीतमना दद्यादाद्याद्भेषजं नरः ।
अश्रद्धया हि दत्तानि तान्यभोज्यानि भिक्षुभिः ।
श्रद्धया यदुपादत्तं श्रद्धया चोपपादितम् ।
तस्योपभोगाद्धर्मः स्याद्व्याधिभिश्च निवर्त्यते ।
आ देहपतनादेवं शुश्रूषार्थमतन्द्रितैः ।
न त्वेव धर्ममुत्सृज्य कुर्यात्तेषां प्रतिक्रियाम् ।
स्वभावतो हि द्वंद्वानि विप्रयान्त्युपयान्ति च ।
स्वभावतः सर्वभावा भवन्ति न भवन्ति च ।
सागरस्योर्मिसदृशा विज्ञातव्या गुणात्मकाः ।
विद्यादेवं हि यो धीमांस्तत्त्ववित्तत्त्वदर्शनः ।
न स लिप्येत पापेन पद्मपत्रमिवाम्भसा ।

Colophon.

पराशरः ।

एवं प्रयतितव्यं हि शुश्रूषार्थमतन्द्रितैः ।
सर्वाभिरुपसेवाभिस्तुष्यन्ति यतयो यथा ।
नापराध्येत भिक्षोस्तु न चैनमवधीरयेत् ।
उत्तरं च न संदद्यात्क्रुद्धं चैव प्रसादयेत् ।
श्रेय एवाभिधातव्यं कर्तव्यं च प्रहृष्टवत् ।
तूष्णींभावेन वै तत्र न क्रुद्धमभिसंवदेत् ।
नाददीत परस्वानि न गृह्णीयादयाचितम् ।
लब्धालब्धेन जीवेत तथैव परितोषयेत् ।
कोपिनं तु न याचेत ज्ञानविद्वेषकारितः ।
स्थावरेषु दयां कुर्याज्जंगमेषु च प्राणिषु ।
यथात्मनि तथान्येषु समां दृष्टिं निपातयेत् ।
सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।
संपश्यमानो विचरन्ब्रह्मभूयाय कल्पते ।
हिंसां वा यदि वाहिंसां न कुर्यादात्मकारणात् ।

स्व- ). —( L. 201 ) $M_{1-3}$ सेवते यादृशं जनं ( for the post. half ). —( L. 202 ) $T_1$ अपरेण ( for अचि° ). — $T_1$ om. line 204. —( L. 204 ) $M_{1-3}$ स्नापनोद्वर्तनेन च ( for the post. half ). —( L. 205 ) $T_3$ व्यथितानां ( for व्याधि° ). —( L. 207 ) $T_1$ उदभाजनमीक्षेत ; $T_3$ M उदभाजनान्यवेक्षेत ( for the prior half ). $T_1$ भिक्षा- ( for भैक्ष- ). —( L. 208 ) $T_{1.3}$ $M_{1-3}$ यथाकालं ( for °कामं ). $T_1$ $M_{1-3}$ -पादयेत् ( for -साध° ). —( L. 209 ) $M_4$ पूर्वं ( for सर्वं ). —( L. 210 ) Kumbh. ed. भिक्षूणां ( for प्रयतश् ). M चेलप्रक्षाळणादि च ( for the post. half ). $T_1$ प्रयतो व्याधितानां तु पादप्रक्षालनादि च. — $T_1$ om. lines 212–213. —( L. 212 ) $D_{10}$ $G_4$ कापायम् ( for क° ). —( L. 213 ) $T_2$ $M_{1.3}$ तान्यस्य ( for नान्यस्य ). $M_{1-3}$ प्रतिकारेषु ( for प्रतिचा° ). —( L. 215 ) $T_2$ ततोपि नियमार्थानि ( for the prior half ). —( L. 216 ) $T_1$ प्रद- द्याद् ( for आदद्याद् ). —( L. 217 ) $T_3$ [अ]भि- ( for हि ). $G_3$ [अ]भोक्ष्याणि ( for °ज्यानि ). — $T_1$ om. lines 218–219. —( L. 218 ) $T_3$ M श्रद्धापूताद् ( for श्रद्धया यद् ). $G_{1.3}$ सोप- ( for चोप- ). —( L. 219 ) M व्याधिश्च विनि- वर्तते ( for the post. half ). —( L. 220 ) $T_1$ देहं ( for एवं ). —( L. 221 ) $G_{1.3}$ M [ए]व ; Kumbh. ed. [ए]वं ( for [ए]व ). —( L. 222 ) $T_1$ $M_{1-3}$ [ऽ]पि ( for हि ). $M_{1-3}$ विनयंति ( for विप्रयान्ति ). — $D_{10}$ $G_4$ om. ( hapl. ) line 223. —( L. 225 ) $T_{1.3}$ $G_2$ ( also as above ) $M_{1.2.4}$ तत्त्वदर्शनं ( for °दर्शनः ). $T_2$ तं विदुस्तत्त्वदर्शिनं ( for the post. half ). —( L. 226 ) $T_1$ M लिप्यति ( for लिप्येत ). — Colophon. *Sub-parvan :* $D_{10}$ $M_{1-3}$ दानधर्म. —*Adhy. name :* $T_2$ दानप्रकरणे शूद्रधर्मशुश्रूषाप्रशंसा ; $G_{1.3}$ शूद्रधर्मे शुश्रूषाप्रशंसा. — *Adhy. no. :* $T_1$ $M_4$ 141 ; $T_{2.3}$ $G_{2.4}$ 148 ; $G_{1.3}$ $M_1$ 142 ; $M_{2.3}$ 143. —( L. 227 ) $T_2$ G M अतंद्रितः ( M °णा ) ( for °द्रितैः ). —( L. 229 ) Madras ed. [ए]वम् ( for [ए]नम् ). —( L. 230 ) $M_{1-3}$ नैव ( for च न ). $T_1$ [ए]नं ( for [ए]व ). —( L. 231 ) $T_1$ -संधाय ( for -धातव्यं ). $T_1$ दातव्यं ; $T_3$ M वक्तव्यं ( for कर्तव्यं ). — $T_1$ om. line 232. —( L. 234 ) $T_3$ M -चेषयेत् ( for -तो° ). — $T_1$ om. line 235. —( L. 235 ) $T_3$ M न तु ( by transp. ). $T_3$ ये च विद्वेषकारिणः ; M याञ्चा विद्वेषकारिका ( for the post. half ). —( L. 236 ) $T_2$ जंतुषु ( for प्राणिषु ). —( L. 237 ) $G_2$ तथा ( for यथा ). — $T_1$ —( L. 239 ) $D_{10}$ $T_2$ $G_2$ व्यचरन् ( for वि° ).

यत्रेतरो भवेन्नित्यं दोषं तत्र न कारयेत् ।
एवं स मुच्यते दोषात्परानाश्रित्य वर्तयन् ।
आत्माश्रयेण दोषेण लिप्यते ह्यल्पबुद्धिमान् ।
जरायुजाण्डजाश्चैव उद्भिज्जाः स्वेदजाश्च ये ।
अवध्याः सर्व एवैते बुधैः समनुवर्णिताः ।
निश्चयार्थं विबुद्धानां प्रायश्चित्तं विधीयते ।
हिंसा यथान्या विहिता तथा दोषं प्रयोजयेत् ।
यथोपदिष्टं गुरुणा शिष्यस्य चरतो विधिम् ।
न हि लोभः प्रभवति हिंसा वापि तदात्मिका ।
शास्त्रदर्शनमेतद्धि विहितं विश्वयोनिना ।
यश्चैतदेवं मन्येत शूद्रो ह्यपि च बुद्धिमान् ।
कृतं कृतवतां गच्छेत्किं पुनर्यो निषेवते ।
न शूद्रः पतते कश्चिन्न च संस्कारमर्हति ।
नास्याधिकारो धर्मेऽस्ति न धर्मात्प्रतिषेधनम् ।
अनुग्रहार्थं मनुना सर्ववर्णेषु वर्णितम् ।
यदापवादस्तु भवेत्स्त्रीकृतः परिचारके ।
अभ्रावकाशशयनं तस्य संवत्सरं स्मृतम् ।
तेन तस्य भवेच्छान्तिस्ततो भूयोऽप्युपाव्रजेत् ।
सवर्णाया भवेदेतद्धीनायास्त्वर्धमर्हति ।
वर्षत्रयं तु वैश्यायाः क्षत्रियायास्तु षट् समाः ।
ब्राह्मण्या तु समेतस्य समा द्वादश कीर्तिताः ।
कटाग्निना वा दग्धव्यस्तस्मिन्नेव क्षणे भवेत् ।
शिश्नावपातनाद्वापि विशुद्धिं समवाप्नुयात् ।
अनस्थिबन्धमेकं तु यदि प्राणैर्वियोजयेत् ।
उपोष्यैकाहमादद्यात्प्राणायामांस्तु द्वादश ।
त्रिः स्नानमुदके कृत्वा तस्मात्पापात्प्रमुच्यते ।
अस्थिबन्धेषु द्विगुणं प्रायश्चित्तं विधीयते ।
अनेन विधिना वापि स्थावरेषु न संशयः ।
कायेन पद्भ्यां हस्ताभ्यामपराधात्तु मुच्यते ।
अदुष्टं क्षपयेद्यस्तु सर्ववर्णेषु वाचयेत् ।
तस्याप्यष्टगुणं विद्यात्प्रायश्चित्तं तदेव तु ।
चतुर्गुणं कर्मकृते द्विगुणं वाक्प्रदूषिते ।
कृत्वा तु मानसं पापं तथैवैकगुणं स्मृतम् ।
तस्मादेतानि सर्वाणि विदित्वा न समाचरेत् ।
सर्वभूतहितार्थं हि कुशलानि समाचरेत् ।
एवं समाहितमनाः सेवते यदि सत्तमान् ।
तद्वृत्तिस्तत्समाचारस्तन्मनास्तत्परायणः ।
नाभिनन्देत मरणं नाभिनन्देत जीवितम् ।
कालमेव प्रतीक्षेत निर्वेशं भृतको यथा ।
एवं प्रवर्तमानस्तु विनीतः प्रयतात्मवान् ।
निर्णयं पुण्यपापाभ्यामचिरेणोपगच्छति ।

Colophon.

पराशरः ।

शुश्रूषानिरतो नित्यमरिष्टान्युपलक्षयेत् ।
त्रैवार्षिकं द्विवार्षिकं वा वार्षिकं वा समुत्थितम् ।
षाण्मासिकं मासिकं वा सप्तरात्रिकमेव वा ।
सर्वांस्तदर्थान्वा विद्यात्तेषां चिह्नानि लक्षयेत् ।
पुरुषं हिरण्मयं यस्तु तिष्ठन्तं दक्षिणामुखम् ।

om. line 241. — (L. 241) $T_2$ यतोधीनो (for यत्रेतरो). — (L. 243) $D_{10}$ $T_3$ $G_{2,4}$ दृश्यते (for लिप्यते). $G_3$ स्वल्प- (for ह्यल्प-). — (L. 244) $D_{10}$ $G_{1,3}$ जीवाः स-; $T_3$ $M_{1-3}$ जीवाः सं- (for उद्भिज्जाः). $T_1$ तथा (for च ये). — (L. 245) $T_2$ M सर्वथैव; $G_3$ सर्वमेव (for सर्व एव). — $T_1$ om. line 247. — (L. 247) $T_3$ [अ]थ; M च (for [अ]न्या). $D_{10}$ $T_2$ G $M_4$ यथा (for तथा). — (L. 249) $G_4$ च (for वा). — (L. 251) $D_{10}$ $G_4$ [ए]व (for [ए]वं). $T_3$ स शूद्रो ह्यपि बुद्धिमान् (for the post. half). — (L. 252) $T_2$ $M_{1-3}$ कृतवता (for °वतां). — $G_1$ om. lines 255–256. — (L. 256) $T_{1,3}$ $G_3$ $M_2$ यथोपघातम्; Cv यदोपघातं (for यदापवादस्). — (L. 257) $G_1$ Cv अन्यावकाश-; $G_3$ अस्याव° (for अभ्राव°). — (L. 258) $T_1$ न च (for ततो). $T_3$ हि (for ऽपि). — (L. 259) $G_2$ दीनायास् (for ही°). $T_3$ $G_2$ अर्धम् (for त्वर्धम्). — (L. 260) $T_3$ $G_{1,3}$ क्षत्रियायां (for °यायाम्). — (L. 263) $G_{1,3}$ च (for वा). $T_1$ शिश्नावपातमात्रेण (for the prior half). — $T_1$ om. lines 264–269. — (L. 264) $D_{10}$ $T_2$ G -कांडम् (for -बन्धम्). $T_2$ एतत (for एकं). — (L. 268) $T_2$ $G_{1-3}$ M च (for वा). — (L. 270) $T_1$ भारत; Kumbh. ed. यश्चरेत् (for वाचयेत्). — (L. 271) $T_3$ तथैव तु; $G_4$ विधीयते (for तदेव तु). — (L. 272) $T_1$ चात्र (for वाक्प्र-). — (L. 273) $T_3$ $G_4$ मनसा (for मानसं). — (L. 274) $D_{10}$ $T_2$ G विदितानि (for °त्वा न). $T_1$ विदित्वा सम्यगाचरेत् (for the post. half). — $T_1$ om. (hapl.) line 275. — (L. 275) $M_4$ वा (for हि). $G_{1,3}$ कुशलेन (for °लानि). — (L. 276) $G_{1,3}$ सत्तमः (for सत्तमान्). $T_1$ शूद्रः सेवेत सत्तमान् (for the post. half). — (L. 278) $M_{1-3}$ -नंदंश्च (for -नन्देत). $M_{1-3}$ -नंदंश्च (for -नन्देत). — (L. 279) $T_1$ M निर्देशं (for निर्वेशं). — (L. 281) $T_1$ निश्चयं (for निर्णयं). M [अ]धि- (for [उ]प-). — Colophon. *Sub-parvan* : $D_{10}$ $M_{1-3}$ दानधर्म. — *Adhy. no.* : $T_1$ $M_1$ 142; $T_{2,3}$ $G_{2,4}$ 149; $G_{1,3}$ $M_4$ 143; $M_{2,3}$ 144. — (L. 283) Prior half *hypermetric*. $T_2$ वार्षिकं समुपस्थितं (for the post. half). — (L. 284) $G_{1,3,4}$ वा मासं (for मासिकं). Kumbh. ed. and Madras ed.

लक्षयेदुत्तरेणैव मृत्युस्त्रैवार्षिको भवेत् ।
शुद्धमण्डलमादित्यमरश्मिं संप्रपश्यतः ।
संवत्सरद्वयेनैव तस्य मृत्युं समादिशेत् ।
ज्योत्स्नायामात्मनश्छायां सच्छिद्रां यः प्रपश्यति ।
मृत्युं संवत्सरेणैव जानीयात्स विचक्षणः ।
विशिरस्कां यदा छायां पश्येत्पुरुष आत्मनः ।
जानीयादात्मनो मृत्युं षण्मासेनेह बुद्धिमान् ।
कर्णौ पिधाय हस्ताभ्यां शब्दं न शृणुते यदि ।
जानीयादात्मनो मृत्युं मासेनैव विचक्षणः ।
शवगन्धमुपाघ्राति अन्यद्वा सुरभिं नरः ।
देवतायतनस्थो वै सप्तरात्रेण मृत्युभाक् ।
कर्णनासापनयनं दन्तदृष्टिविरागता ।
लुप्तसंज्ञं हि करणं सद्यो मृत्युं समादिशेत् ।
एवमेषामरिष्टानां पश्येदन्यतमं यदि ।
न तं कालं परीक्षेत यथारिष्टं प्रकल्पितम् ।
अभ्याशेन तु कालस्य गच्छेत पुलिनं शुचि ।
तत्र प्राणान्प्रमुञ्चेत तमीशानमनुस्मरन् ।
ततोऽन्यं देहमासाद्य गान्धर्वं स्थानमाप्नुयात् ।
तत्रस्थो वसते विंशत्पद्मानि स महाद्युतिः ।
गन्धर्वैश्चित्रसेनाद्यैः सहितः सत्कृतस्तथा ।
नीलवैडूर्यवर्णेन विमानेनावभासयन् ।
नभःस्थलमदीनात्मा सार्धमप्सरसां गणैः ।
छन्दकामानुसारी च तत्र तत्र महीयते ।
मोदतेऽमरतुल्यात्मा सदामरगणैः सह ।
पतितश्च क्षये काले क्षणेन विमलद्युतिः ।
वैश्यस्य बहुवित्तस्य कुलेऽग्र्ये बहुगोधने ।
अवाप्य तत्र वै जन्म स पूतो दैवकर्मणा ।
छन्दसा जागतेनैव प्राप्तोपनयनं ततः ।
क्षौमवस्त्रोपकरणं द्विजत्वं समवाप्य तु ।
अधीयमानो वेदार्थान्गुरुशुश्रूषणे रतः ।
ब्रह्मचारी जितक्रोधस्तपस्वी जायते ततः ।
अधीत्य दक्षिणां दत्त्वा गुरवे विधिपूर्वकम् ।
कृतदारः समुपैति गृहस्थव्रतमुत्तमम् ।
ददाति यजते चैव यज्ञैर्विपुलदक्षिणैः ।
अग्निहोत्रमुपासन्वै जुह्वच्चैव यथाविधि ।
धर्मं संचिनुते नित्यं मृदुगामी जितेन्द्रियः ।
स कालपरिणामात्तु मृत्युना संप्रयुज्यते ।
संस्कृतश्चाग्निहोत्रेण कृतपात्रोपधानवान् ।
संस्कृतो देहमुत्सृज्य मरुद्भिरुपपद्यते ।
मरुद्भिः सहितश्चापि तुल्यतेजा महाद्युतिः ।
बालार्कसमवर्णेन विमानेन विराजता ।
सुखं चरति तत्रस्थो गन्धर्वाप्सरसां गणैः ।
विरजोम्बरसंवीतस्तप्तकाञ्चनभूषणः ।
छन्दकामानुसारी च द्विगुणं कालमावसेत् ।
संनिवर्तेत कालेन स्थानात्तस्मात्परिच्युतः ।
अवितृप्तविहारार्थो दिव्यभोगान्विहाय तु ।

साप्त- ( for सप्त- ). —( L. 285 ) $T_1$ सर्वं तदर्धं वा विद्यात्; $M_{1-3}$ अर्वाक्तदर्धमथ वा ( for the prior half ). —( L. 286 ) Prior half hypermetric. —( L. 288 ) $G_{1.3}$ -पश्यतः ( for -पश्यतः ). —( L. 289 ) $T_1$ समुद्धरेत्; $T_3$ M समुद्दिशेत् ( for समादि° ). —( L. 290 ) $T_1$ स्वतनु- ( for आत्मनश् ). $T_3$ छिद्रायां यो हि पश्यति ( for the post. half ). —( L. 291 ) $T_{1.3}$ विजानीयाद् ( for जानीयात्स ). — $T_{1.3}$ om. ( hapl. ) lines 293–294. —( L. 294 ) $M_{1-3}$ शब्दं नैव शृणोति चेत् ( for the post. half ). —( L. 295 ) $T_{1.3}$ $G_{1.3}$ M [इ]ह ( for [ए]व ). —( L. 296 ) $T_1$ उपाघ्राते ( for °घ्राति ). —( L. 298 ) $T_1$ $M_{1-3}$ कर्णनासापगमनं ( for the prior half ). $T_1$ -विराजिता ( for °गता ). Madras ed. दंतदृष्टिरिवागता ( for the post. half ). —( L. 299 ) $T_1$ लुप्तविज्ञानलावण्यं ( for the prior half ). $G_4$ सद्यो मरणमादिशेत् ( for the post. half ). —( L. 300 ) $T_3$ $M_4$ अनिष्टानां ( for अरि° ). —( L. 301 ) $M_{1-3}$ प्रतीक्षेत ( for परी° ). $T_3$ ततः कालं प्रतीक्षेत ( for the prior half ). $T_3$ यथाकालं; $M_3$ °दिष्टं ( for °रिष्टं ). —( L. 303 ) $T_1$ $G_{1.3.4}$ ततः ( for तत्र ). $T_3$ तं हरिं मनसा स्मरन् ( for the post. half ). —( L. 305 ) $T_1$ मोदते ( for वसते ). $G_4$ सु- ( for स ). —( L. 306 ) $T_1$ सदा ( for तथा ). —( L. 307 ) $M_{1-3}$ दिव्य- ( for नील- ). $T_1$ [अ]वभासते; $G_4$ विभासयन् ( for [अ]वभा° ). — $T_1$ om. line 308. —( L. 309 ) $M_{1.2}$ छंदकामानुचारी च ( for the prior half ). — $T_1$ om. 310. —( L. 310 ) $T_3$ $G_{1.3}$ M मोदति ( for °ते ). —( L. 311 ) $M_{1-3}$ तस्य ( for काले ). —( L. 313 ) $G_{1.3}$ सं- ( for स ). — $T_1$ om. line 315. $M_3$ om. ( hapl. ) lines 315–317. —( L. 319 ) $T_3$ तमुपैति ( for समु° ). $T_3$ गार्हस्थ्यं ( for गृहस्थ- ). $M_{1-3}$ गृहस्थाश्रममुत्तमं ( for the post. half ). —( L. 320 ) Madras ed. विमल- ( for विपुल- ). —( L. 322 ) M ऋतु- ( for मृदु- ). — $T_1$ reads line 324 after 330. $T_1$ reads line 325 twice. —( L. 325 ) M संस्कृते ( for °तो ). —( L. 327 ) $T_{1.3}$ M विराजते ( for °जता ). —( L. 330 ) $G_3$ $M_4$ स ( for च ). $T_1$ तत्र तत्र महीयते ( for the post. half ). —( L. 331 ) $T_1$ स निवर्तेत्तु; $M_{1-3}$ स विहृत्य च ( for संनिवर्तेत ). $T_2$ $G_{2.4}$ स्थानादस्मात्; $M_{1-3}$ तस्मात्स्थानात् ( by transp. ). — $T_1$ om. line 332. —( L. 332 ) $T_3$ -विहीनार्थो ( for -विहारार्थो ). $T_3$ $M_4$ दिव्यान् ( for दिव्य- ). $M_{1-3}$ दिव्यान्भोगान्विधाय तु ( for the post. half ). —( L. 333 ) $D_{10}$ $G_{1.2.4}$ सं- ( for स ). $G_4$

स जायते नृपकुले गजाश्वरथसंकुले ।
पार्थिवीं श्रियमापन्नः श्रीमान्धर्मपतिर्यथा ।
जन्मप्रभृति संस्कारं चौलोपनयनानि च ।
प्राप्य राजकुले तत्र यथावद्विधिपूर्वकम् ।
छन्दसा त्रैष्टुभेनेह द्विजत्वमुपनीयते ।
अधीत्य वेदमखिलं धनुर्वेदं च मुख्यशः ।
समावृत्तस्ततः पित्रा यौवराज्येऽभिषिच्यते ।
कृतदारक्रियः श्रीमान्राज्यं संप्राप्य धर्मतः ।
प्रजाः पालयते सम्यक् षड्भागकृतसंविधिः ।
यज्ञैर्बहुभिरीजानः सम्यगाप्तार्थदक्षिणैः ।
प्रशासति महीं श्रीमान्राज्यमिन्द्रसमद्युतिः ।
स्वधर्मनिरतो नित्यं पुत्रपौत्रसहायवान् ।
कालस्य वशमापन्नः प्राणांस्त्यजति संयुगे ।
देवराजस्य भवनमिन्द्रलोकमवाप्नुते ।
संपूज्यमानस्त्रिदशैर्विचचार यथासुखम् ।
राजर्षिभिः पुण्यकृद्भिर्यथा देवपतिस्तथा ।
तैः स्तूयते बन्दिभिस्तु नानावाद्यैः प्रबोध्यते ।
दिव्यजाम्बूनदमयं भ्राजमानं समन्ततः ।
वराप्सरोभिः संपूर्णं देवगन्धर्वसेवितम् ।
यानमारुह्य विचरेद्यथा शक्रः शचीपतिः ।
स तत्र वसते षष्टिं पद्मानीह मुदान्वितः ।
सर्वाँल्लोकाननुचरन्महर्द्धिरवभासयन् ।
अथ पुण्यक्षयात्तस्मात्स्थाप्यते भुवि भारत ।
जायते च द्विजकुले वेदवेदाङ्गपारगे ।

Colophon.

पराशरः ।

ततः श्रुतिसमापन्नः संस्कृतश्च यथाविधि ।
चौलोपनयनं तस्य यथावत्क्रियते द्विजैः ।
ततोऽष्टमे स वर्षे तु व्रतोपनयनादिभिः ।
क्रियाभिर्विधिदृष्टाभिर्ब्रह्मत्वमुपनीयते ।
गायत्रेण च्छन्दसा तु संस्कृतश्चरितव्रतः ।
अधीयमानो मेधावी शुद्धात्मा नियतव्रतः ।
अचिरेणैव कालेन साङ्गान्वेदानवाप्नुते ।
समावृत्तः स धर्मात्मा समावृत्तक्रियस्तथा ।
याजनाध्यापनरतः कुशले कर्मणि स्थितः ।
अग्निहोत्रपरो नित्यं देवतातिथिपूजकः ।
यजते विविधैर्यज्ञैर्जपयज्ञैस्तथैव च ।
न्यायागतधनान्वेषी न्यायवृत्तस्तपोधनः ।
सर्वभूतहितश्चैव सर्वशास्त्रविशारदः ।
स्वदारपरितुष्टात्मा ऋतुगामी जितेन्द्रियः ।
परापवादविरतः सत्यव्रतपरः सदा ।
स कालपरिणामात्तु संयुक्तः कालधर्मणा ।
संस्कृतश्चाग्निहोत्रेण यथावद्विधिपूर्वकम् ।
सोमलोकमवाप्नोति देहन्यासान्न संशयः ।
तत्र सोमप्रभैर्देवैरग्निष्वात्तैश्च भास्वरैः ।
तथा बर्हिषदैश्चैव देवैराङ्गिरसैरपि ।
विश्वेभिश्चैव देवैश्च तथा ब्रह्मर्षिभिः पुनः ।
देवर्षिभिश्चाप्रतिमैस्तथैवाप्सरसां गणैः ।
साध्यैः सिद्धैश्च सततं सत्कृतस्तत्र मोदते ।
जातरूपमयं दिव्यमर्कतुल्यं मनोजवम् ।
देवगन्धर्वसंकीर्णं विमानमधिरोहति ।
सौम्यरूपा मनःकान्तास्तप्तकाञ्चनभूषणाः ।
सोमकन्या विमानस्थं रमयन्ति मुदान्विताः ।
स तत्र रमते प्रीतः सह देवैः सहर्षिभिः ।

---

रथाश्वगजसंकुले ( for the post. half ). — ( L. 334 ) $T_3$ M धन- ( for धर्म- ). — ( L. 338 ) $T_1$ वेदान् ( for वेदम् ). $M_{1-3}$ कृत्स्नशः ( for मुख्यशः ). — ( L. 339 ) $T_1$ om. the prior half. $M_{1-3}$ तत्र ( for यौव- ). — ( L. 341 ) $M_{1-3}$ सद्भाव- ( for षड्भाग- ). — ( L. 342 ) $T_3$ आस्थित- ( for आप्तार्थ- ). — $M_{1,2}$ om. line 346. — ( L. 346 ) $T_1$ अवाप्य च ( for °प्नुते ). — ( L. 347 ) $G_2$ सु- ( for सं- ). Kumbh. ed. त्रिदिवैर् ( for त्रिदशैर् ). $T_1$ विचरेच्च ( for °चार ). — ( L. 349 ) $T_2$ M तोष्टूयते ( for तैः स्तू° ). $T_{1,3}$ स्तूयते वंदिभिश्चापि ( $T_3$ °नित्यं ) ( for the prior half ). $T_{1,3}$ $G_{1,3}$ $M_4$ तु ; $M_{1-3}$ च ( for प्र- ). — ( L. 350 ) M दिव्यं ( for दिव्य- ). — ( L. 351 ) $G_{1,3}$ संपूज्यं ( for संपूर्णं ). $T_3$ M -शोभितं ( for -सेवितम् ). — ( L. 353 ) $M_{1-3}$ मुदायुतः ( for °न्वितः ). — $T_1$ om. line 354. — ( L. 355 ) $T_1$ पतितो ( for स्थाप्यते ). — ( L. 356 ) $T_{1,3}$ $G_{1,3}$ M -पारगः ( for °गे ). — Colophon. *Sub-parvan :* $D_{10}$ $M_{1-3}$ दानधर्म. — *Adhy. name :* $T_2$ $G_{1,3}$ क्षत्रियाचारप्रभवः. — *Adhy. no. :* $T_1$ $M_4$ 143 ; $T_{2,3}$ $G_{2,4}$ 150 ; $G_{1,3}$ $M_1$ 144 ; $M_{2,3}$ 145. — ( L. 357 ) $G_{3,4}$ -समुत्पन्नः ( for -समापन्नः ). M ततः श्रुतसमाम्नायैः ( for the prior half ). — $T_1$ om. line 358. — ( L. 359 ) $M_{1-3}$ च ( for स ). $T_1$ अष्टमेनैव वर्षेण ; $T_3$ अष्टमेष्वथ वर्षे तु ( for the prior half ). $T_1$ कृतोपनयनस्तथा ( for the post. half ). — ( L. 360 ) $T_1$ समुपाश्नुते ( for उपनीयते ). — $T_1$ om. ( hapl. ) line 362. — ( L. 362 ) G च ( for नि- ). $T_3$ $M_4$ विशुद्धात्मा यतव्रतः ( for the post. half ). — $T_1$ om. line 364. — ( L. 368 ) $T_3$ -धनाजीवी ; $G_4$ -नयान्वेषी ( for -धना° ). — ( L. 372 ) $G_4$ -परिपाकात् ( for °णामात् ). $D_{10}$ $G_{2,4}$ संयुतः ( for संयुक्तः ). — ( L. 377 ) $T_3$ M देवेभिस् ( for देवैश्च ). $T_2$ तत्र ( for तथा ). $T_1$ सदा ( for पुनः ). — ( L. 378 ) $T_{1,3}$ $G_4$ $M_{1-3}$ च ( for [ए]व ). — ( L 385 ) $G_{1,3}$ सर्वाँल्लोकाननुचरन् ( for

लोकान्सर्वाननुचरन्दीप्ततेजा मनोजवः ।
सभां कामजवीं चापि नित्यमेवाभिगच्छति ।
सर्वलोकेश्वरस्तृषिं नमस्कृत्य पितामहम् ।
परमेष्ठिरनन्तश्रीर्लोकानां प्रभवाप्ययः ।
यतः सर्वाः प्रवर्तन्ते सर्गप्रलयविक्रियाः ।
स तत्र वर्तते श्रीमान्द्विशतं द्विजसत्तमः ।
अथ कालक्षयात्तस्मात्स्थानादावर्तते पुनः ।
जातिधर्मांस्तथा सर्वान्सर्गादावर्तनानि च ।
अशाश्वतमिदं सर्वमिति चिन्त्योपलभ्य च ।
शाश्वतं दिव्यमचलमदीनमपुनर्भवम् ।
आस्थास्यत्यभयं नित्यं यत्रावृत्तिर्न विद्यते ।
यत्र गत्वा न म्रियते जन्म चापि न विद्यते ।
गर्भक्लेशा मया प्राप्ता जायता च पुनः पुनः ।
कायक्लेशाश्च विविधा द्वंद्वानि विविधानि च ।
शीतोष्णसुखदुःखानि ईर्ष्याद्वेषकृतानि च ।
तत्रतत्रोपभुक्तानि न क्वचिच्छाश्वती स्थितिः ।
एवं स निश्चयं कृत्वा निर्मुच्य ग्रहबन्धनात् ।
छित्त्वा भार्यामयं पाशं तथैवापत्यसंभवम् ।
यतिधर्ममुपाश्रित्य गुरुशुश्रूषणे रतः ।
अचिरेणैव कालेन श्रेयः समधिगच्छति ।
योगशास्त्रं च सांख्यं च विदित्वा सोऽर्थतत्त्वतः ।
अनुज्ञातश्च गुरुणा यथाशास्त्रमवस्थितः ।
पुण्यतीर्थानुसेवी च नदीनां पुलिनाश्रयः ।
शून्यागारनिकेतश्च वनवृक्षगुहाशयः ।
अरण्यानुचरो नित्यं देवारण्यनिकेतनः ।
एकरात्रं द्विरात्रं वा न क्वचित्सज्जते द्विजः ।
शीर्णपर्णपुटे चापि व्यहे चरति भिक्षुकः ।
न भोगार्थमनुप्रेत्य यात्रामात्रं समश्नुते ।
धर्मलब्धं समश्नाति न कामात्किंचिदश्नुते ।
युगमात्रदृगध्वानं क्रोशादूर्ध्वं न गच्छति ।
समो मानावमानाभ्यां समलोष्टाश्मकाञ्चनः ।
सर्वभूताभयकरस्तथैवाभयदक्षिणः ।
निर्द्वंद्वो निर्नमस्कारो निरानन्दपरिग्रहः ।
निर्ममो निरहंकारः सर्वभूतनिराश्रयः ।
परिसंख्यानतत्त्वज्ञस्तदा सत्यरतः सदा ।
ऊर्ध्वं नाधो न तिर्यक्च न किंचिदभिकामयेत् ।
एवं हि रममाणस्तु यतिधर्मं यथाविधि ।
कालस्य परिमाणात्तु यथा पक्वफलं तथा ।
स विसृज्य स्वकं देहं प्रविशेद्ब्रह्म शाश्वतम् ।
निरामयमनाद्यन्तं गुणसौम्यमचेतनम् ।
निरक्षरमबीजं च निरिन्द्रियमजं तथा ।
अजय्यमक्षयं यत्तदभेद्यं सूक्ष्ममेव च ।
निर्गुणं च प्रकृतिमन्निर्विकारं च सर्वशः ।
भूतभव्यभविष्यस्य कालस्य परमेश्वरम् ।
अव्यक्तं पुरुषं क्षेत्रमानन्त्याय प्रपद्यते ।

Colophon.

पराशरः ।

एवं स भिक्षुर्निर्वाणं प्राप्नुयाद्दग्धकिल्बिषः ।
इहस्थो देहमुत्सृज्य नीडं शकुनिवद्यथा ।

the prior half). — (L. 386) M1-3 कामगमां (for °जवीं). — T1 om. line 387. — (L. 387) T3 G1. 3 M नमस्कर्तुं (for °स्कृत्य). — (L. 390) T1. 3 G1. 3. 4 M वसते (for वर्तते). — (L. 392) T3 -मात्रांस् (for -धर्मांस्). — (L. 393) T1 चिंतयित्वा (for इति चिन्त्य). — (L. 394) T1. 3 M धर्मम् (for दिव्यम्). — (L. 396) T3 तत्र (for यत्र): — (L. 397) M2. 3 [अ]वाप्ता (for प्राप्ता). — (L. 400) T1 गतिः (for स्थितिः). — (L. 404) T2 G2 समभि- (for समधि-). — (L. 405) T1 -सांख्यं (for -शास्त्रं). G1. 3 -तत्त्ववित् (for -तत्त्वतः). — T1 om. (hapl.) line 408. — (L. 408) M1-3 -गुहाश्रयः (for °शयः). T2 M4 वृक्षागारगुहाश्र(M4 °श)यः (for the post. half). — (L. 409) T1 देवागार- (for °रण्य-). — (L. 410) T2 यतिः (for द्विजः). — T1 om. lines 411-412. — (L. 411) D10 T2 G2. 4 -पुटे वा; Kumbh. ed. -भुगेव (for -पुटे च). Kumbh. and Madras ed. वने (for व्यहे). — (L. 413) M1. 3 कामं (for कामात्). — T1 om. line 414. — (L. 414) M4 युगमात्रदृष्टिरध्वानं (hypermetric) (for the prior half). — (L. 416) M2. 3 सर्वभूताभयरतस् (for the prior half). — (L. 418) G4 -हिताश्रयः (for -निरा°). — T1 om. line 419. — (L. 419) D10 G1-3 सदा; T2. 3 M तथा (for तदा). G तथा (for सदा). — (L. 420) T1. 3 M नोर्ध्वं (for ऊर्ध्वं). M1-3 नावाङ् (for नाधो). T3 अपि (for अभि-). M3 -कारयेत् (for -काम°). — (L. 421) T1. 3 M वि(M3 सं)-चरमाणस् (for हि रम°). — (L. 423) D10 T2 G स वि-(G1. 3 संवि)भज्य; T1 स विसर्ज्य (for स विसृज्य). — (L. 424) T3 G1. 3 M -साम्यम् (for -सौम्यम्). T1 गुणसाम्यमनामयं (for the post. half). — (L. 426) T2 अक्षय्यम्; Madras ed. अक्षरम् (for अजय्यम्). T3 अक्षरं (for अक्षयं). T1 अजेयमक्षयं यच्च (for the prior half). T1 ह्यभेद्यं (for अ°). — (L. 429) T3 M4 अव्यक्त- (for °क्तं). G3 प्रकल्पते (for प्रपद्यते). — Colophon. *Sub-parvan :* D10 M1-3 दानधर्म. — *Adhy. name :* T2 श्रीपराशरोक्तौ आश्रमधर्मः; M1-3 यतिधर्मकथनं. — *Adhy. no. :* T1 M4 144; T2. 3 G2. 4 151; G1. 3 M1 145;

सत्पथालम्बनादेव शूद्रः प्राप्नोति सद्गतिम् ।
ब्रह्मणः स्थानमचलं स्थानात्स्थानमवाप्नुयात् ।
यथा खनन्खनित्रेण जाङ्गले वारि विन्दति ।
अनिर्वेदात्ततः स्थानमीप्सितं प्रतिपद्यते ।
सैषा गतिरनाद्यन्ता सर्वैरप्युपधारिता ।
तस्माच्छूद्रैरनिर्वेदाच्छ्रद्दधानैस्तु नित्यदा ।
वर्तितव्यं यथाशक्त्या यथा प्रोक्तं मनीषिभिः ।
यत्करोति तदश्नाति शुभं वा यदि वाशुभम् ।
नाकृतं भुज्यते कर्म न कृतं नश्यते फलम् ।
तथा शुभसमाचारः शुभमेवाप्नुते फलम् ।
तथाशुभसमाचारो ह्यशुभं समवाप्नुते ।
तथा शुभसमाचारो ह्यशुभानि विवर्जयेत् ।
शुभान्येव समादद्याद्य इच्छेद्भूतिमात्मनः ।
भूतिश्च नान्यतः शक्या शूद्राणामिति निश्चयः ।
ऋते यतीनां शुश्रूषामिति सन्तो व्यवस्थिताः ।
तस्मादागमसंपन्नो भवेत्सुनियतेन्द्रियः ।
शक्यते ह्यागमादेव गतिं प्राप्तुमनामयाम् ।
परा चैषां गतिर्दृष्टा यामन्वेषन्ति साधवः ।
यत्रामृतत्वं लभते त्यक्त्वा दुःखमनन्तकम् ।
इमं हि धर्ममास्थाय येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्याश्च शूद्राश्च प्राप्नुयुः परमां गतिम् ।
किं पुनर्ब्राह्मणो विद्वान्क्षत्रियो वा बहुश्रुतः ।
न चाप्यक्षीणपापस्य ज्ञानं भवति देहिनः ।
ज्ञानोपलब्धिर्भवति कृतकृत्यो यदा भवेत् ।
उपलभ्य तु विज्ञानं ज्ञानं वाप्यनसूयकः ।
तथैव वर्तेद्गुरुषु भूयांसं वा समाहितः ।
अथावमन्येत गुरुं तथा तेषु प्रवर्तते ।
व्यर्थमस्य श्रुतं भवति ज्ञानमज्ञानतां व्रजेत् ।
गतिं चाप्यशुभां गच्छेन्निरयाय न संशयः ।
प्रक्षीयते तस्य पुण्यं ज्ञानमस्य विरुध्यते ।
अदृष्टपूर्वकल्याणो यथा दृष्ट्वा विधिं नरः ।
उत्सेकान्मोहमापद्य तत्त्वज्ञानमवाप्तवान् ।
एवमेव हि नोत्सेकः कर्तव्यो ज्ञानसंभवः ।
फलं ज्ञानस्य हि शमः प्रशमाय यतेत्सदा ।
उपशान्तेन दान्तेन क्षमायुक्तेन सर्वदा ।
शुश्रूषा प्रतिपत्तव्या नित्यमेवानसूयता ।
धृत्या शिश्नोदरं रक्षेत्पाणिपादं च चक्षुषा ।
इन्द्रियार्थांश्च मनसा मनो बुद्धौ समादधेत् ।
धृत्यासीत ततो गत्वा शुद्धदेशं सुसंवृतम् ।
लब्ध्वासनं यथादृष्टं विधिपूर्वं समाचरेत् ।
ज्ञानयुक्तस्तथा देवं हृदिस्थमुपलक्षयेत् ।
आदीप्यमानं वपुषा विधूममनलं यथा ।
रश्मिमन्तमिवादित्यं वैद्युताग्निमिवाम्बरे ।
संस्थितं हृदये पश्येदीशं शाश्वतमव्ययम् ।

M2, 3 146. — G2 om. the ref. — (L. 430) T1 निर्याणं (for निर्वाणं). — (L. 431) T3 M1, 2, 4 नीळं (for नीडं). — (L. 432) G4 सत्पथापालनादेव (for the prior half). — (L. 434) T3 विंदते (for विन्दति). — (L. 435) T3 G1, 3, 4 तथा (for ततः). — (L. 436) G1, 3 सर्वा (for सैषा). T1 M पूर्वैर् (for सर्वैर्). — (L. 437) T3 M नित्यशः (for °दा). — (L. 438) G4 यथाशक्यं; M1-3 °शक्ति (for °शक्त्या). M1-3 महर्षिभिः (for मनीषिभिः). — (L. 439) M1-3 यद् (for तद्). — T3 om. (hapl.) line 441. — (L. 441) T1, 2 G1, 3 M शुभकर्म- (for तथा शुभ-). T2 -सदाचारः; M4 -फला° (for -समा°). G4 [अ]श्नुते (for [आ]प्नुते). —T1 M4 om. (hapl.) line 442. — (L. 442) M1 यथा (for तथा). T3 ह्यशुभं समवाप्नुयात् (for the post. half). — (L. 445) T1 नान्यथा (for °तः). — (L. 448) M गतिः (M4 °तिं) प्राप्तुमनामया (for the post. half). — (L. 449) Kumbh. ed. वरा (for परा). — (L. 450) T2 G3-5 M4 अनंतरं (for अनन्तकम्). — (L. 451) T3 -निश्चयाः (for -योनयः). — (L. 452) D10 तथा शूद्राः (for च शूद्राश्च). — (L. 456) Cv. त्रिभिर् (for तु वि-). — (L. 457) T1 सदा (for तथा). T1 नावमन्येत तान्पुनः (for the post. half). — (L. 458) D10 यदा; T1, 2 G यथा; M4 तथा (for अथ). T1 om. the post. half. — (L. 459) Prior half hypermetric. T1 om. the post. half. — (L. 460) G3 [अ]स्य (for [अ]पि). G4 विंदेन् (for गच्छेन्). — (L. 461) T1 M यशः प्रक्षीयते तस्य (for the prior half). M1-3 प्रसिध्यते (for विरु°). — T1 om. line 462. — (L. 462) D10 -पूर्वं (for -पूर्व-). M4 विधिर् (for विधिं). M1-3 यथादृष्टविधिर्नरः (for the post. half). — (L. 463) T2 अवाप्नुयात्; Madras ed. न चाप्नुयात् (for अवाप्तवान्). T1 नोत्सेको हि कथंचन (for the post. half). — T1 om. line 464. — (L. 465) T3 शमं (for शमः). — (L. 466) T3 एवं (for उप-). M समायुक्तेन (for क्षमा°). — (L. 467) T3 M -कर्तव्या (for -पत्तव्या). — (L. 468) T1 M1-3 पाणिपादौ (for °पादं). — (L. 469) D10 T2 G2 मनसि (for मनसा). — T1 om. lines 470-473. — (L. 470) M4 प्रीत्या (for धृत्या). M1, 2 (*sup. lin.* as above), 3 शुद्धं दृष्ट्वा विधिं नरः; M4 शुश्रूषायजनं गतः (for the post. half). — (L. 472) M1-3 -कल्पयेत् (for -लक्ष°). — (L. 473) T3 G1, 3 M दीप्यमानं स्ववपुषा (for the prior half). — (L. 475) T1 M1-3 हृदि सं-; G2 हृदयं (for °ये). T3 M भजं (for

इत्युक्ते चासीनो भगवाननन्तरूपो रुद्रस्तं प्रोवाच-भगवानपि ध्यानमावर्तयति । इत्युक्ते चाह भगवान्सनत्कुमारस्तथेति ॥

तथेत्युक्तश्च प्रोवाच भगवाञ्शंकरस्तदा ।
परावरज्ञं सर्वस्य त्रैलोक्यस्य महामुनिम् ।
किं वा ध्यानेन द्रष्टव्यं यद्भवाननुपश्यति ।
यच्च ध्यात्वा न शोचन्ति यतयस्तत्त्वदर्शिनः ।
कथय त्वमिमं देवं देहिनां यतिसत्तम ।
यच्च तत्पुरुषं शुद्धमित्युक्तं योगसांख्ययोः ।
किमध्यात्माधिभूतं च तथा चाप्यधिदैवतम् ।
कालसंख्या च का देव द्रष्टव्या तस्य ब्रह्मणः ।
संख्या संख्यादनस्यैव या प्रोक्ता परमर्षिभिः ।
शास्त्रदृष्टेन मार्गेण यथावद्यतिसत्तम ।
यच्च तत्पुरुषं शुद्धं प्रबुद्धमजरं ध्रुवम् ।
बुध्यमानाप्रबुद्धाभ्यां विद्यावेद्यं तथैव च ।
विमोक्षं त्रिविधं चैव ब्रूहि मोक्षविदां वर ।
परिसंख्यां च सांख्यानां ध्यानं योगेषु चार्थवत् ।
एकत्वदर्शनं चैव तथा नानात्वदर्शनम् ।
अरिष्टानि च तत्त्वेन तथैवोत्क्रमणानि च ।
दैवतानि च सर्वाणि निखिलेनानुपूर्वशः ।
यान्याश्रितानि देहेषु देहिनां यतिसत्तम ।
सर्वमेतद्यथातत्त्वमाख्याहि मुनिसत्तम ।
श्रेष्ठो भवान्हि सर्वेषां ब्रह्मज्ञानामनिन्दित ।
चतुर्थस्त्वं त्रयाणां तु ये गताः परमां गतिम् ।
ज्ञानेन च प्राकृतेन निर्मुक्तो मृत्युबन्धनात् ।
वयं तु वैकृतं मार्गमाश्रिता वै क्षरं सदा ।
परमुत्सृज्य पन्थानममृताक्षरमेव तु ।
न्यूने पथि निमग्नास्तु ऐश्वर्येऽष्टगुणे तथा ।
महिमानं प्रगृह्येमं विचरामो यथासुखम् ।
न चैतत्सुखमत्यन्तं न्यूनमेतदनन्तरम् ।
मूर्तिमत्परमेतत्स्यात्त्विदमेवं सुसत्तम ।
पुनः पुनश्च पतनं मूर्तिमत्युपदिश्यते ।
न पुनर्मृत्युरित्यन्यं निर्मुक्तानां तु मूर्तितः ।
मृत्युदोषास्त्वनन्ता वै उत्पद्यन्ते कृतात्मनाम् ।
मर्त्येषु नाकपृष्ठेषु निरयेषु महामुने ।
तत्र मज्जन्ति पुरुषाः सुखदुःखेन चेष्टिताः ।
सुखदुःखव्यपेतं च यदाहुरमृतं पदम् ।
तदहं श्रोतुमिच्छामि यथावच्छ्रुतिदर्शनात् ।

सनत्कुमारः ।

यदुक्तं भवता वाक्यं तत्त्वसंज्ञेति देहिनाम् ।
चतुर्विंशतिमेवात्र केचिदाहुर्मनीषिणः ।
केचिदाहुस्त्रयोविंशं यथाश्रुतिनिदर्शनात् ।
वयं तु पञ्चविंशं वै तदधिष्ठानसंज्ञितम् ।
तत्त्वं समधिमन्यामः सर्वतन्त्रप्रलापनात् ।
अव्ययश्चैव वै व्यक्तावुभावपि पिनाकधृक् ।

— (L. 14) $D_{10}$ उप- (for अनु-). — (L. 16) $G_3$ इदं (for इमं). $G_4$ देव (for देवं). — (L. 17) $T_1$ यत्र (for यच्च). $D_{10}$ सिद्धम् (for शुद्धम्). — (L. 18) $D_{10}$ $T_3$ $G_{2,4}$ वा; $T_1$ $M_{1-3}$ [ए]व (for the second च). $M_4$ किं तथैवाधिदैवतं (for the post. half). — (L. 19) $T_1$ $G_4$ M दृष्टाव्यक्तस्य ब्रह्मणः (for the post. half). — $T_1$ om. lines 20–21. — (L. 20) $T_3$ सांख्यसंख्यादयश्चैव; $G_4$ संख्यामसंख्यां तस्यैव (for the prior half). —(L. 22) $T_1$ येर्चयिष्यंति पुरुषं (for the prior half). —(L. 23) $T_1$ बुध्यमानाप्रबुद्धांश्च; $T_2$ $G_{3,4}$ °मानप्रबुद्धाभ्यां (for the prior half). $T_1$ $M_{1-3}$ विद्याविधे; $T_2$ $M_4$ °विधं (for °वेद्यं). — (L. 24) $T_1$ विमोहं (for °क्षं). — $T_1$ om. line 25. — (L. 25) Kumbh. ed. परिसांख्यं (for °संख्यां). $T_3$ चार्थावित् (for °वत्). —(L. 27) $D_{10}$ $T_{2,3}$ $G_2$ अनिष्टानि (for अरि°). $G_4$ अनिष्टानिष्टतत्त्वेन (for the prior half). — (L. 29) $T_2$ यथाज्ञातानि देवेषु (for the prior half). — $T_3$ om. (hapl.) line 30. — (L. 30) $G_4$ व्याख्याहि (for आ°). — (L. 31) Kumbh. ed. अनिंदितः (for °त). — (L. 33) $G_4$ निर्मुक्ता (for °क्तो). — (L. 34) $T_1$ प्राकृतं (for वै°). $M_4$ अक्षरं (for वै क्षरं). $T_1$ आश्रिता मुनिसत्तम (for the post. half). — $T_1$ om. line 35. — (L. 35) $M_3$ वरम् (for परम्). — (L. 36) $G_4$ ध्याने (for न्यूने). $T_1$ स्थिताः; $T_2$ M मताः (for तथा). — $T_1$ om. line 37. — (L. 38) $G_1$ असं- शयं (for अनन्तरम्). — $T_1$ om. lines 39–40. — (L. 39) $G_{1,3,4}$ इदम् (for त्विदम्). $G_4$ M सुखं मम (for सुसत्तम). — (L. 40) $M_{1-3}$ मूर्तिरिति (for °मति). — (L. 41) $T_1$ M [उ]क्तं (for [अ]न्यं). $M_4$ कीर्तितः (for मू°). — (L. 42) $T_1$ ये (for वै). — After line 42, $T_1$ M ins.:

इष्टानिष्टकृता एव त्रिषु स्थानेषु देहिनाम् ।

— (L. 43) $T_1$ M -पृष्ठे च (for -पृष्ठेषु). — (L. 44) $T_1$ सज्जंति (for म°). — (L. 45) $T_1$ M तु (for च). $T_1$ परमं (for अमृतं). $D_{10}$ फलं; $T_3$ $M_{1,2}$ (also as above).$_{3,4}$ परं (for पदम्). — $T_3$ om. lines 47–50. —(L. 49) Madras ed. -निदर्शनं. — (L. 50) $T_1$ $M_{1-3}$ तदधिष्ठानसंज्ञितं (for the post. half). — (L. 51) $T_{2,3}$ $G_4$ सर्वं तत्र (for सर्वतन्त्र-). $T_1$ सर्वश्रुतिनिदर्शनात् (for the post. half). — (L. 52) $T_2$ अव्ययं (for °यश्च). $T_3$ $M_{1,3,4}$ [ए]व (for [ए]व). $G_3$ अव्ययं नैव वै व्यक्तात् (for the prior half). $T_1$ $G_{2,3}$ पिनाकधृत्. — (L. 53) $T_3$

सह चैव विना चैव तावन्योन्यं प्रतिष्ठितौ ।
हिरण्मयीं प्रविश्यैष मूर्तिं मूर्तिमतां वर ।
चकार पुरुषस्तात विकारपुरुषावुभौ ।
अव्यक्तादेक एवैष महानात्मा प्रसूयते ।
अहंकारेण लोकांश्च व्याप्य चाहंकृतेन वै ।
विना सर्वं तदव्यक्तादभिमन्यस्व शूलधृक् ।
भूतसर्गमहंकारात्तृतीयं विद्धि वै क्रमात् ।
अहंकाराच्च भूतेषु चतुर्थं विद्धि वैकृतम् ।
अहंकाराच्च जातानि युगपद्विबुधेश्वर ।
सविशेषाणि भूतानि पञ्च प्राहुर्मनीषिणः ।
चतुर्विंशात्तु वै प्रोक्तात्पञ्चविंशोऽधितिष्ठति ।
एते सर्गा मया प्रोक्ताश्चत्वारः प्राकृतास्त्विह ।
अहंकाराच्च जातानि युगपद्विबुधेश्वर ।
अहंकाराच्च भूतेषु विविधार्थं व्यजायत ।
इन्द्रियैर्युगपत्तत्त्वैः सोऽनित्यश्च समीक्ष्यते ।
मरुत्त्वं सत्त्वसर्गश्च तुष्टिः सिद्धिस्तथैव च ।
वैकृतानि प्रवक्ष्यामि शृणु तानि महामते ।
एषा तत्त्वचतुर्विंशन्मया शास्त्रानुमानतः ।
वर्णिता तव देवेश पञ्चविंशसमन्विता ।
पञ्चमोऽनुग्रहश्चैव नवैते प्राकृतैः सह ।
ऐन्द्रेऽप्यहमथाप्यन्यन्ममात्मनि च भास्वरः ।
यच्च देहमयं किंचिद्त्रिषु लोकेषु विद्यते ।
सर्वत्रैवाभिमन्तव्यं त्वया त्रिपुरसूदन ।
अन्यथा ये तु पश्यन्ति ते न पश्यन्ति ब्रह्मज ।
एतदव्यक्तविषयं पञ्चविंशसमन्वितम् ।
अनेन कारणेनैव तत्त्वमाहुर्मनीषिणः ।
विकारमात्रमेतत्तु तत्त्वमाचक्षते परम् ।
निस्तत्त्वश्चैव देवेश बोद्धव्यं तु न बुध्यते ।
यदि बुध्येत्परं बुद्धं बुध्यमानः सुरर्षभ ।
प्रबुद्धो ह्यभिमन्येत योऽयं नाहमिति प्रभो ।

Colophon.

सनत्कुमारः ।

तत्त्वसंख्या श्रुता चैषा येषां ब्रह्मविदां वर ।
सर्गसंख्या मया प्रोक्ता नवानामनुपूर्वशः ।
प्रवक्ष्यामि तु तेऽध्यात्ममधिभूताधिदैवतम् ।
नैतद्युक्तैर्वेदविद्भिर्गृहस्थै-
र्मान्यैरेभिस्तपसा वाभिपन्नैः ।
यत्नेन दृष्टं परमात्मतत्त्वं
तत्त्वेन प्राप्यं तु यथोक्तमेतत् ।
परं परेभ्यस्त्वमृतार्थतत्त्वं
स्वभावसत्त्वस्थमनीशमीशम् ।
कैवल्यतां प्राप्य महासुरोत्तम
तवैतदाख्यामि मुनीन्द्र वृत्त्या ।
रहस्यमेवाप्यदवाप्य दिव्यं
पवित्रपूतस्तव मृत्युजालम् ।
पृथ्वीमिमां यद्यपि रत्नपूर्णां
दद्यान्न देयं त्वपरीक्षिताय ।
नाश्रद्दधानाय न चान्यबुद्धे-

प्रतिष्ठितं ( for °तौ ). — ( L. 58 ) $T_1$ $G_3$ शूलधृत् ; $T_2$ $M_4$ °भृत् ( for °धृक् ). — $T_{1,3}$ om. ( hapl. ) lines 61–64. $M_4$ om. line 61. — ( L. 61 ) $T_1$ $G_2$ भूतानि ( for जा° ). $D_{10}$ $G_2$ विविधेश्वर ( for विबुधे° ). — M om. ( hapl. ) line 65. — ( L. 65 ) $T_1$ अहंकाराधिभूतानि ( for the prior half). $D_{10}$ $T_3$ $G_2$ विविधेश्वर ( for विबु° ). — ( L. 66 ) $D_{10}$ जातेषु ( for भू° ). $D_{10}$ $T_2$ $G_2$ विविधार्थो ; $T_1$ $G_4$ M विषयार्थे ( for विविधार्थं ). — $T_1$ om. line 68. — ( L. 68 ) $G_3$ ममत्वं तुष्टिसर्गश्च ; M मुक्तत्वं वक्ति सर्गश्च ( for the prior half ). $G_2$ चतुःसिद्धिस् ( for तुष्टिः सिद्धिस् ). — $M_{1,3,4}$ om. line 69. — ( L. 70 ) $M_{1-3}$ तत्र ( for तत्त्व- ). $D_{10}$ $G_4$ -सारतः ( for -मानतः ). $T_1$ पंचविंशत्समन्विता ( for the post. half ). — ( L. 71 ) $T_1$ मया शास्त्रानुमानतः ( for the post. half ). — $T_1$ om. lines 72–75. $M_{1-3}$ om. line 72. — ( L. 73 ) Madras ed. भास्वरं ( for °रः ). — ( L. 76 ) $M_1$ [ऽ]नु- ( for तु ). $G_1$ $M_{1-3}$ transp. ते and न. $G_1$ ब्रह्म वै ( for ब्रह्मज ). — ( L. 79 ) Kumbh. ed. एतं ( for एतत् ). M परे ( for परम् ).

$T_1$ तत्त्वमाचक्ष्यते परे ( for the post. half ). — ( L. 80 ) $M_{1-3}$ तु ( for च ). T $M_4$ निस्तत्त्वं चैव देवेश ( for the prior half ). $T_1$ न तु ( by transp. ). — ( L. 81 ) $G_2$ बुद्धिं ( for बुद्धं ). $T_1$ यदि बुद्धेः परतरं ( for the prior half ). — ( L. 82 ) M सोऽहम् ( for ना° ). — Colophon om. in $M_{1-3}$. *Sub-parvan* : $D_{10}$ दानधर्म. — *Adhy. name* : $D_{10}$ सनत्कुमारशंकरसंवादः ; $T_2$ अध्यात्मविद्याप्रकरणे सनत्कुमाररुद्रसंवादः ; $T_3$ $G_2$ सनत्कुमारसंवादः ; $G_3$ सनत्कुमाररुद्रसंवादः. — *Adhy. no.* : $T_1$ $M_4$ 159 ; $T_{2,3}$ $G_{2,4}$ 166 ; $G_1$ 100 ; $G_3$ 160. — ( L. 83 ) $T_1$ यथा ; $M_4$ मया ( for श्रुता ). $T_1$ तव ( for येषां ). — After line 83, $M_{1-3}$ read lines 102–120. — ( L. 84 ) $T_1$ यथार्थेनानुपूर्वशः ( for the post. half ). — $M_{1-3}$ om. line 85. — ( L. 85 ) $T_1$ तथा ; $T_2$ च ते ; $T_3$ कृते ( for तु ते ). — ( L. 88 ) $T_2$ $M_4$ यत्तेन ( for यत्नेन ). $T_1$ यत्तेन शक्यं परमार्थतत्त्वं. — ( L. 89 ) $M_4$ प्राप्तं ( for प्राप्यं ). $T_1$ द्रष्टुं पुराणेषु यथोक्तमेतत्. — $T_1$ om. lines 90–95. — ( L. 91 ) $G_{2,4}$ -तत्त्वस्थम् ( for -सत्त्वस्थम् ). — ( L. 92 ) $D_{10}$ $T_{2,3}$ -सुरोक्तं ; $M_{1-3}$ -सुरेशात् ; $M_4$

इत्युक्ते चासीनो भगवाननन्तरूपो रुद्रस्तं प्रोवाच–भगवानपि ध्यानमावर्तयति । इत्युक्ते चाह भगवान्सनत्कुमारस्तथेति ॥

तथेत्युक्तश्च प्रोवाच भगवाञ्शंकरस्तदा ।
परावरज्ञं सर्वस्य त्रैलोक्यस्य महामुनिम् ।
किं वा ध्यानेन द्रष्टव्यं यद्भवाननुपश्यति ।
यच्च ध्यात्वा न शोचन्ति यतयस्तत्त्वदर्शिनः ।
कथय त्वमिमं देवं देहिनां यतिसत्तम ।
यच्च तत्पुरुषं शुद्धमित्युक्तं योगसांख्ययोः ।
किमध्यात्माधिभूतं च तथा चाप्यधिदैवतम् ।
कालसंख्या च का देव द्रष्टव्या तस्य ब्रह्मणः ।
संख्या संख्यादनस्यैव या प्रोक्ता परमर्षिभिः ।
शास्त्रदृष्टेन मार्गेण यथावद्यतिसत्तम ।
यच्च तत्पुरुषं शुद्धं प्रबुद्धमजरं ध्रुवम् ।
बुध्यमानाप्रबुद्धाभ्यां विद्यावेद्यं तथैव च ।
विमोक्षं त्रिविधं चैव ब्रूहि मोक्षविदां वर ।
परिसंख्यां च सांख्यानां ध्यानं योगेषु चार्थवत् ।
एकत्वदर्शनं चैव तथा नानात्वदर्शनम् ।
अरिष्टानि च तत्त्वेन तथैवोत्क्रमणानि च ।
दैवतानि च सर्वाणि निखिलेनानुपूर्वशः ।
यान्याश्रितानि देहेषु देहिनां यतिसत्तम ।
सर्वमेतद्यथातत्त्वमाख्याहि मुनिसत्तम ।
श्रेष्ठो भवान्हि सर्वेषां ब्रह्मज्ञानामनिन्दित ।
चतुर्थस्त्वं त्रयाणां तु ये गताः परमां गतिम् ।
ज्ञानेन च प्राकृतेन निर्मुक्तो मृत्युबन्धनात् ।
वयं तु वैकृतं मार्गमाश्रिता वै क्षरं सदा ।
परमुत्सृज्य पन्थानममृताक्षरमेव तु ।
न्यूने पथि निमग्नास्तु ऐश्वर्येऽष्टगुणे तथा ।
महिमानं प्रगृह्येमं विचरामो यथासुखम् ।
न चैतत्सुखमत्यन्तं न्यूनमेतदनन्तरम् ।
मूर्तिमत्परमेतत्स्यात्त्विदमेवं सुसत्तम ।
पुनः पुनश्च पतनं मूर्तिमत्युपदिश्यते ।
न पुनर्मृत्युरित्यन्यं निर्मुक्तानां तु मूर्तितः ।
मृत्युदोषास्त्वनन्ता वै उत्पद्यन्ते कृतात्मनाम् ।
मर्त्येषु नाकपृष्ठेषु निरयेषु महामुने ।
तत्र मज्जन्ति पुरुषाः सुखदुःखेन चेष्टिताः ।
सुखदुःखव्यपेतं च यदाहुरमृतं पदम् ।
तदहं श्रोतुमिच्छामि यथावच्छ्रुतिदर्शनात् ।

सनत्कुमारः ।

यदुक्तं भवता वाक्यं तत्त्वसंज्ञेति देहिनाम् ।
चतुर्विंशतिमेवात्र केचिदाहुर्मनीषिणः ।
केचिदाहुस्त्रयोविंशं यथाश्रुतिनिदर्शनात् ।
वयं तु पञ्चविंशं वै तदधिष्ठानसंज्ञितम् ।
तत्त्वं समधिमन्यामः सर्वतन्त्रप्रलापनात् ।
अव्ययश्चैव वै व्यक्तावुभावपि पिनाकधृक् ।

—(L. 14) $D_{10}$ उप- (for अनु-). —(L. 16) $G_3$ इदं (for इमं). $G_4$ देव (for देवं). —(L. 17) $T_1$ यत्र (for यच्च). $D_{10}$ सिद्धम् (for शुद्धम्). —(L. 18) $D_{10}$ $T_3$ $G_{2,4}$ वा; $T_1$ $M_{1-3}$ [ए]व (for the second च). $M_4$ किं तथैवाधिदैवतं (for the post. half). —(L. 19) $T_1$ $G_4$ M दृष्टाव्यक्तस्य ब्रह्मणः (for the post. half). —$T_1$ om. lines 20–21. —(L. 20) $T_3$ सांख्यसंख्यादयश्चैव; $G_4$ संख्यामसंख्यां तस्यैव (for the prior half). —(L. 22) $T_1$ येर्चयिष्यंति पुरुषं (for the prior half). —(L. 23) $T_1$ बुध्यमानाप्रबुद्धांश्च; $T_2$ $G_{3,4}$ °मानप्रबुद्धाभ्यां (for the prior half). $T_1$ $M_{1-3}$ विद्याविद्ये; $T_2$ $M_4$ °विद्यं (for °वेद्यं). —(L. 24) $T_1$ विमोहं (for °क्षं). —$T_1$ om. line 25. —(L. 25) Kumbh. ed. परिसांख्यं (for °संख्यां). $T_3$ चार्थवित् (for °वत्). —(L. 27) $D_{10}$ $T_{2,3}$ $G_2$ अनिष्टानि (for अरि°). $G_4$ अनिष्टानिष्टतत्त्वेन (for the prior half). —(L. 29) $T_2$ यथाज्ञातानि देवेषु (for the prior half). —$T_3$ om. (hapl.) line 30. —(L. 30) $G_4$ व्याख्याहि (for आ°). —(L. 31) Kumbh. ed. अनिंदितः (for °त). —(L. 33) $G_4$ निर्मुक्ता (for °क्तो). —(L. 34) $T_1$ प्राकृतं (for वै°). $M_4$ अक्षरं (for वै क्षरं). $T_1$ आश्रिता मुनिसत्तम (for the post. half). —$T_1$ om. line 35. —(L. 35) $M_3$ वरम् (for परम्). —(L. 36) $G_4$ ध्याने (for न्यूने). $T_1$ स्थिताः; $T_2$ M मताः (for तथा). —$T_1$ om. line 37. —(L. 38) $G_1$ असंशयं (for अनन्तरम्). —$T_1$ om. lines 39–40. —(L. 39) $G_{1,3,4}$ इदम् (for त्विदम्). $G_4$ M सुखं मम (for सुसत्तम). —(L. 40) $M_{1-3}$ मूर्तिरिति (for °माति). —(L. 41) $T_1$ M [उ]क्तं (for [अ]न्यं). $M_4$ कीर्तितः (for मू°). —(L. 42) $T_1$ ये (for वै). —After line 42, $T_1$ M ins.:

इष्टानिष्टकृता एव त्रिषु स्थानेषु देहिनाम् ।

—(L. 43) $T_1$ M -पृष्ठे च (for -पृष्ठेषु). —(L. 44) $T_1$ सज्जंति (for म°). —(L. 45) $T_1$ M तु (for च). $T_1$ परमं (for अमृतं). $D_{10}$ फलं; $T_3$ $M_{1,2}$ (also as above).$_{3,4}$ परं (for पदम्). —$T_3$ om. lines 47–50. —(L. 49) Madras ed. -निदर्शनं. —(L. 50) $T_1$ $M_{1-3}$ तदधिष्ठातृसंज्ञितं (for the post. half). —(L. 51) $T_{2,3}$ $G_4$ सर्वं तत्र (for सर्वतन्त्र-). $T_1$ सर्वश्रुतिनिदर्शनात् (for the post. half). —(L. 52) $T_3$ अव्ययं (for °यश्). $T_3$ $M_{1,3,4}$ [ए]व (for [ए]व). $G_3$ अव्ययं चैव वै व्यक्तात् (for the prior half). $T_1$ $G_{2,4}$ पिनाकधृत्. —(L. 53) $T_3$

सह चैव विना चैव तावन्योन्यं प्रतिष्ठितौ ।
हिरण्मयीं प्रविश्यैव मूर्तिं मूर्तिमतां वर ।
चकार पुरुषस्तात विकारपुरुषावुभौ ।
अव्यक्तादेक एवैष महानात्मा प्रसूयते ।
अहंकारेण लोकांश्च व्याप्य चाहंकृतेन वै ।
विना सर्वं तदव्यक्तादभिमन्यस्व शूलधृक् ।
भूतसर्गमहंकारात्तृतीयं विद्धि वै क्रमात् ।
अहंकाराच्च भूतेषु चतुर्थं विद्धि वैकृतम् ।
अहंकाराच्च जातानि युगपद्विबुधेश्वर ।
सविशेषाणि भूतानि पञ्च प्राहुर्मनीषिणः ।
चतुर्विंशात्तु वै प्रोक्तात्पञ्चविंशोऽधितिष्ठति ।
एते सर्गा मया प्रोक्ताश्चत्वारः प्राकृतास्त्विह ।
अहंकाराच्च जातानि युगपद्विबुधेश्वर ।
अहंकाराच्च भूतेषु विविधार्थं व्यजायत ।
इन्द्रियैर्युगपत्सर्वैः सोऽनित्यश्च समीक्ष्यते ।
मरुत्त्वं सत्त्वसर्गश्च तुष्टिः सिद्धिस्तथैव च ।
वैकृतानि प्रवक्ष्यामि शृणु तानि महामते ।
एषा तत्त्वचतुर्विंशन्मया शास्त्रानुमानतः ।
वर्णिता तव देवेश पञ्चविंशसमन्विता ।
पञ्चमोऽनुग्रहश्चैव नवैते प्राकृतैः सह ।
ऐन्द्रेऽप्यहमथाप्यन्यन्ममात्मनि च भास्वरः ।
यच्च देहमयं किंचिन्त्रिषु लोकेषु विद्यते ।
सर्वत्रैवाभिमन्तव्यं त्वया त्रिपुरसूदन ।
अन्यथा ये तु पश्यन्ति ते न पश्यन्ति ब्रह्मज ।
एतदव्यक्तविषयं पञ्चविंशसमन्वितम् ।
अनेन कारणेनैव तत्त्वमाहुर्मनीषिणः ।
विकारमात्रमेतत्तु तत्त्वमाचक्षते परम् ।
निस्तत्त्वश्चैष देवेश बोद्धव्यं तु न बुध्यते ।
यदि बुध्येत्परं बुद्धं बुध्यमानः सुरर्षभ ।
प्रबुद्धो ह्यभिमन्येत योऽयं नाहमिति प्रभो ।

Colophon.

सनत्कुमारः ।

तत्त्वसंख्या श्रुता चैषा येषां ब्रह्मविदां वर ।
सर्गसंख्या मया प्रोक्ता नवानामनुपूर्वशः ।
प्रवक्ष्यामि तु तेऽध्यात्ममधिभूताधिदैवतम् ।
नैतद्युक्तैर्वेदविद्भिर्गृहस्थै-
र्मान्यैरेभिस्तपसा वाभिपन्नैः ।
यत्नेन दृष्टं परमात्मतत्त्वं
तत्त्वेन प्राप्यं तु यथोक्तमेतत् ।
परं परेभ्यस्त्वमृतार्थतत्त्वं
स्वभावसत्त्वस्थमनीशमीशम् ।
कैवल्यतां प्राप्य महासुरोत्तम
तवैतदाख्यामि मुनीन्द्र वृत्त्या ।
रहस्यमेवान्यदवाप्य दिव्यं
पवित्रपूतस्तव मृत्युजालम् ।
पृथ्वीमिमां यद्यपि रत्नपूर्णां
दद्यान्न देयं त्वपरीक्षिताय ।
नाश्रद्दधानाय न चान्यबुद्धे-

प्रतिष्ठितं ( for °तौ ). — ( L. 58 ) T1 G3 शूलभृत्; T2 M4 °भृत् ( for °धृक् ). — T1.3 om. ( hapl. ) lines 61–64. M4 om. line 61. — ( L. 61 ) T1 G2 भूतानि ( for जा° ). D10 G2 विविधेश्वर ( for विबुधे° ). — M om. ( hapl. ) line 65. — ( L. 65 ) T1 अहंकाराधिभूतानि ( for the prior half ). D10 T3 G2 विविधेश्वर ( for विबु° ). — ( L. 66 ) D10 जातेषु ( for भू° ). D10 T2 G2 विविधार्थो; T1 G4 M विषयार्थे ( for विविधार्थं ). — T1 om. line 68. — ( L. 68 ) G3 ममत्वं तुष्टिसर्गश्च; M मुक्तत्वं वक्ति सर्गश्च ( for the prior half ). G2 चतुःसिद्धिस् ( for तुष्टिः सिद्धिस् ). — M1.3.4 om. line 69. — ( L. 70 ) M1–3 तत्र ( for तत्त्व- ). D10 G4 -सारतः ( for -मानतः ). T1 पंचविंशतसमन्विता ( for the post. half ). — ( L. 71 ) T1 मया शास्त्रानुमानतः ( for the post. half ). — T1 om. lines 72–75. M1–3 om. line 72. — ( L. 73 ) Madras ed. भास्वरं ( for °रः ). — ( L. 76 ) M4 [ऽ]नु- ( for तु ). G1 M1–3 transp. ते and न. G1 ब्रह्म वै ( for ब्रह्मज ). — ( L. 79 ) Kumbh. ed. एतं ( for एतत् ). M परे ( for परम् ). T1 तत्त्वमाचक्ष्यते परे ( for the post. half ). — ( L. 80 ) M1–3 तु ( for च ). T M4 निस्तत्त्वं चैव देवेश ( for the prior half ). T1 न तु ( by transp. ). — ( L. 81 ) G2 बुद्धिं ( for बुद्धं ). T1 यदि बुद्धेः परतरं ( for the prior half ). — ( L. 82 ) M सोऽहम् ( for ना° ). — Colophon om. in M1–3. *Sub-parvan* : D10 दानधर्म. — *Adhy. name* : D10 सनत्कुमारशंकरसंवादः; T2 अध्यात्मविद्याप्रकरणे सनत्कुमाररुद्रसंवादः; T3 G2 सनत्कुमारसंवादः; G3 सनत्कुमाररुद्रसंवादः. — *Adhy. no.* : T1 M4 159; T2.3 G2.4 166; G1 100; G3 160. — ( L. 83 ) T1 यथा; M4 मया ( for श्रुता ). T1 तव ( for येषां ). — After line 83, M1–3 read lines 102–120. — ( L. 84 ) T1 यथार्थेनानुपूर्वशः ( for the post. half ). — M1–3 om. line 85. — ( L. 85 ) T1 तथा; T2 च ते; T3 कृते ( for तु ते ). — ( L. 88 ) T2 M4 यत्तेन ( for यत्नेन ). T1 यत्तेन शक्यं परमार्थतत्त्वं. — ( L. 89 ) M4 प्राप्तं ( for प्राप्यं ). T1 द्रष्टुं पुराणेषु यथोक्तमेतत्. — T1 om. lines 90–95. — ( L. 91 ) G2.4 -तत्त्वस्थम् ( for -सत्त्वस्थम् ). — ( L. 92 ) D10 T2.3 -सुरोक्तं; M1–3 -सुरेशात्; M4

111

नाज्ञानयुक्ताय न विस्मिताय ।
स्वाध्याययुक्ताय गुणान्विताय
प्रदेयमेतन्नियतेन्द्रियाय ।
संक्षेपं चाप्यथैतेषां तत्त्वानां वृषभध्वज ।
अनुलोमानुजातानां प्रतिलोमं प्रलीयताम् ।
प्रवक्ष्यामि तमध्यात्मं साधिभूताधिदैवतम् ।
यथांशुजालमर्कस्य तथैतत्प्रवदन्ति वै ।
संक्षीणे ब्रह्मदिवसे जगज्जलधिमाविशेत् ।
प्रलीयते जले भूमिर्जलमग्नौ प्रलीयते ।
लीयतेऽग्निस्तथा वायौ वायुराकाश एव तु ।
मनसि प्रलीयते खं तु मनोऽहंकार एव च ।
अहंकारस्तथा तस्मिन्महति प्रविलीयते ।
महानव्यक्त इत्याहुस्तदेकत्वं प्रचक्षते ।
अव्यक्तस्य महादेव प्रलयं विद्धि ब्रह्मणि ।
एवमस्यासकृत्क्रीडामाहुस्तत्त्वविदो जनाः ।
अध्यात्ममधिभूतं च तथैवाप्यधिदैवतम् ।
यथावदुदितं शास्त्रं योगे तु सुमहात्मभिः ।
तथैव चेह सांख्ये तु परिसंख्यात्मचिन्तकैः ।
प्रपञ्चितार्थमेतावन्महादेव महात्मभिः ।
ब्रह्मेति विद्यादध्यात्मं पुरुषं चाधिदैवतम् ।
प्रभवं सर्वभूतानां रक्षणं तत्र कर्म च ।
अध्यात्मं प्राणमित्याहुः क्रतुमप्यधिदैवतम् ।
रथं च यज्ञवाहोऽत्र कर्माहंकार एव च ।
अध्यात्मं तु मनो विद्याच्चन्द्रमाश्चाधिदैवतम् ।
दैवं च प्रभवश्चैव कर्म व्याहृतयस्तथा ।
विद्यात्तु श्रोत्रमध्यात्ममाकाशमधिदैवतम् ।
सर्वभावाभिधानार्थं शब्दः कर्म सदा स्मृतम् ।
त्वगध्यात्ममथो विद्याद्वायुरत्राधिदैवतम् ।
संनिपातय विज्ञानं सर्वकर्म च तत्र ह ।
अध्यात्मं चक्षुरित्याहुर्भास्करोऽत्राधिदैवतम् ।
ज्ञापनं सर्ववर्णानां रूपं कर्म सदा स्मृतम् ।
जिह्वेति विद्यादध्यात्ममापश्चात्राधिदैवतम् ।
पायुरध्यात्ममित्याहुर्यथावद्यतिसत्तमाः ।
विसर्गमधिभूतं च मित्रं चाप्यधिदैवतम् ।
उपस्थोऽध्यात्ममित्याहुर्देवदेव पिनाकधृक् ।
अनुभावोऽधिभूतं तु दैवतं च प्रजापतिः ।

-शता ( for -सुरोत्तम ). — ( L. 93 ) T2 M4 प्रीत्या ; ‑3 भक्त्या ( for धृत्या ). — ( L. 95 ) G4 -भूतस् ( for स् ). M त्यज ( for तव ). — ( L. 98 ) T1 M द्ये ( for -बुद्धेर् ). — ( L. 99 ) T1 न ज्ञानमुक्ताय न स्मिताय. — ( L. 101 ) T2 G2.3 एवं नि- ; T3 एतानि or एतन्नि- ). — After line 101, M1-3 ins. an dl. colophon. — *Adhy. name* : M1-3 सनत्कुमार-संवादः. — *Adhy. no.* : M1-3 160. — After this lophon, M1-3 ins. सनत्कुमारः followed by lines 4-481, and lines 145-443. — ( L. 102 ) G3 [अ]र्थं तेषां or [अ]थैतेषां ). — ( L. 103 ) T2 -लोमानां ( for -जातानां ). 10 G2 प्रतीयतां ( for प्रलीयताम् ). — T1 om. line 104. ( L. 104 ) T2.3 तव ; G4 तद् ; M तु ते ( for तम् ). 1.2 -दैवकं ( for °तम् ). — ( L. 105 ) T1 G1.3 M1-3 ]व ( for [ए]तत् ). — ( L. 107 ) G3 प्रलीयन्ते ( for e second °यते ). — ( L 109 ) Prior half hyper-metric. — ( L. 112 ) M1-3 अव्यक्तं तत् ( for °क्तस्य ). - T1 om. line 113. D10 G2 om. lines 115-119. om. ( hapl. ) lines 115-120. — ( L. 115 ) M शास्त्रे for शास्त्रं ). T1 -महामते ; M4 °त्मनि ( for °त्मभिः ). - ( L. 116 ) T1 तथैव चोक्तं सांख्येषु ( for the prior alf ). T1 -च्यर्यात्म- ( for -संख्यात्म- ). T2 G1.2.4 -चिन्तनैः for -चिन्तकैः ). — ( L. 117 ) T1 एवैतत् ( for एतावत् ). - ( L. 118 ) T2 पुरुषाद् ( for °षं च ). — M3 om. hapl. ) lines 119-121. — ( L. 119 ) D10 T2 G4 द्वं ( for प्रभवं ). T1 कारणं ; M1.3 क्षरणं ( for रक्षणं ).

— ( L. 120 ) T1 M1.2 प्राण ( for प्राणम् ). M4 क्रमम् ( for क्रतुम् ). — ( L. 121 ) G1.3 M1.2.4 रथश् ( for रथं ). M1 कर्ता ( for कर्म ). D10 T1.2 [अ]हंकारम् ( for °कार ). — ( L. 122 ) T1 मनसो ( for तु मनो ). — ( L. 123 ) T2 प्रभवं ( for °वश् ). T1 सदश्च यज्ञवाहोऽत्र ( for the prior half ). T1 M4 स्मृताः ( for तथा ). — ( L. 124 ) M1-3 विद्याम ( for °त्तु ). — D10 T2 G2 om. ( hapl. ) lines 125-127. T1 om. ( hapl. ) line 125. — ( L. 125 ) M1-3 सर्वभावाभिधानार्थः ; M4 °विधानार्थं ( for the prior half ). M1-3 तथा ( for सदा ). M4 स्मृतः ( for स्मृतम् ). — T1 om. ( hapl. ) lines 127-129. — ( L. 127 ) T2 संनिपाताय ; M °तस्य ( for °तय ). M सर्गं ( for सर्व- ). — ( L. 129 ) T3 G1.3 रूप- ( for रूपं ). M1-3 ततः ( for सदा ). — After line 130, T1 G4 M ins. :

जीवनं सर्वभूतानां रसः कर्म ततः स्मृतम् ।
विद्यात्तु घ्राणमध्यात्मं भूमिरत्राधिदैवतम् ।
तत्र कर्म च गन्धः स्याद्विज्ञेयो भूमिसंभवः ।
हस्तावध्यात्ममित्याहुर्ब्राह्मणास्तत्त्वदर्शिनः ।
कर्तव्यमधिभूतं तु इन्द्रस्त्वत्राधिदैवतम् ।

[ ( L. 1 ) T1 तथा स्मृतं ; M1-3 ततः स्मृतः ; M4 च संस्मृतः ( for ततः स्मृतम् ). — After line 1, T1 reads line 126. T1 om. ( hapl. ) line 2. — ( L. 3 ) T1 संसिद्धिः ( for गन्धः स्याद् ). T1 भूनि- ( for भूमि- ). ]

— After the above, G4 reads lines 136-137. — ( L. 131 ) T1.2 G1 M1-3 वायुर् ( for पायुर् ). — ( L. 132 ) T1 मित्रश्चापि ; M1-3 मित्रश्चैव ( for मित्रं चापि ). — ( L.

पादावध्यात्ममित्याहुस्त्रिशूलाङ्क मनीषिणः ।
गन्तव्यमधिभूतं तु विष्णुस्तत्राधिदैवतम् ।
वागध्यात्मं तथैवाहुः पिनाकिंस्तत्त्वदर्शिनः ।
वक्तव्यमधिभूतं तु वह्निस्तत्राधिदैवतम् ।
एतदध्यात्ममतुलं साधिभूताधिदैवतम् ।
मया तु वर्णितं सम्यग्देहिनाममरर्षभ ।
एतत्कीटपतंगे च श्वपाके शुनि हस्तिनि ।
पुत्रिकादंशमशके ब्राह्मणे गवि पार्थिवे ।
सर्वमेव हि द्रष्टव्यमन्यथा मा विचिन्तय ।
अतोऽन्यथा ये पश्यन्ति न सम्यक्तेषु दर्शनम् ।
देवदानवगन्धर्वयक्षराक्षसकिंनराः ।
यन्न जानन्ति को ह्येष कुतो वा भगवानिति ।
ओमित्येकाक्षरं ब्रह्म यत्तत्सदसतः परम् ।
अनादिमध्यपर्यन्तं कूटस्थमचलं ध्रुवम् ।
योगेश्वरं पद्मनाभं विष्णुं जिष्णुं जगत्पतिम् ।
अनादिनिधनं देवं देवदेवं सनातनम् ।
अप्रमेयमविज्ञेयं हरिं नारायणं प्रभुम् ।
कृताञ्जलिः शुचिर्भूत्वा प्रणम्य प्रयतोऽर्चयेत् ।
अनाद्यन्तं परं ब्रह्म न देवा ऋषयो विदुः ।
एकोऽयं वेद भगवांस्त्राता नारायणो हरिः ।
नारायणादृषिगणास्ततः सिद्धा महोरगाः ।
देवा देवर्षयश्चैव यं विदुर्दुःखभेषजम् ।
यमाहुर्विजितक्लेशं यस्मिंश्च विहिताः प्रजाः ।
यस्मिँल्लोकाः स्फुरन्तीमे जाले शकुनयो यथा ।
सप्तर्षयो मनः सप्त सांख्यास्तु मुनिदर्शनात् ।
सप्तर्षयश्चेन्द्रियाणि पञ्च बुद्धीन्द्रियाणि च ।
श्रोत्रयोश्च दिशः प्राहुर्मनसि त्वथ चन्द्रमाः ।

मनः षष्ठं बुद्धिः सप्तमी ह्यात्मनि स्थापितानि, शरीरेषु नात्मनि ।
[162] तस्य हि कारणानि भवन्ति । सर्वाण्यपि सर्वकर्मसु वा
विषयेषु वा युञ्जन्ति यथात्मनि स्वानि कर्माणि प्रवृत्तानि। सप्त-
स्वपि विषयाणां व्यापकानि । [163] तान्येव स्वपतो भूतग्राम-
स्याजमात्मानं देवलोकस्थानसंमितं देहान्तरगामिनं मुमुक्षुं वायु-
प्रविशन्ति सूक्ष्माणि प्रलीयन्ते । [164] मोक्षकाले तमेकं न
कश्चिद्वेत्ति स्वापरम् । [165] एवं प्रविष्टेषु भूतेषु को जागर्ती-
त्युच्यते । निद्राप्रसुप्तेषु वात्र जाग्रत्स्वप्नशीलोऽत्र सदने च देव-
द्योतनो भगवांश्चात्र क्षेत्रज्ञो बुद्धिर्वा । स हि सुप्तस्यापि स्वप्न-

133 ) $G_2$ तपसो ( for उपस्थो ). $D_{10}$ $T_1$ पिनाकधृत्. — ( L. 134 ) $D_{10}$ $G_2$ [ऽ]ति- ( for ऽधि- ). — ( L. 135 ) $M_4$ ब्राह्मणास्तत्त्वदर्शिनः ( for the post. half ). — ( L. 136 ) $M_4$ कर्तव्यम् ( for गन्तव्यम् ). — ( L. 138 ) $D_{10}$ $T_2$ अव्यक्तम् ( for वक्तव्यम् ). $G_1$ अत्र ( for तत्र ). — $T_{2,3}$ om. ( hapl. ) line 139. — ( L. 139 ) $G_2$ एकम् ( for एतद् ). M अखिलं ( for अतुलं ). $T_1$ अधि- ( for साधि- ). — ( L. 140 ) $T_1$ सर्वं ( for सम्यग् ). — $T_1$ om. line 142. — ( L. 142 ) Some MSS. पुत्तिका- ( for पुत्रिका- ). — ( L. 143 ) $T_1$ M सम्यग् ( for सर्वम् ). $M_{2,3}$ एवं ( for एव ). $T_1$ om. from the post. half up to the prior half of line 148. $T_3$ विचारय ( for विचिन्तय ). — ( L. 144 ) Some MSS. अथो ( for अतो ). — ( L. 145 ) $M_4$ -गुह्यकाः ( for -किंनराः ). — ( L. 146 ) $D_{10}$ वेत्ति ( for ह्येष ). — ( L. 150 ) $T_2$ अनादिमध्यनिधनं ( for the prior half ). — ( L. 151 ) $T_3$ हरिर्. — ( L. 152 ) $D_{10}$ $G_2$ प्रणतो ( for प्रयतो ). $D_{10}$ $T_{2,3}$ $G_{2,4}$ [ऽ]र्चयेत् ( for °येत् ). — ( L. 153 ) $T_1$ $G_{1,3,4}$ M नर्षयो ( for ऋ° ). — $T_1$ om. line 154. — ( L. 154 ) $M_{1-3}$ तद् ( for ऽयं ). M धाता ( for त्राता ). $M_{1-3}$ स्वयं ( for हरिः ). — ( L. 155 ) $T_1$ M तथा ( for ततः ). — ( L. 156 ) $T_1$ ये ; $M_{1-3}$ तद् ( for यं ). — ( L. 157 ) $T_1$ $G_{1,3}$ M विगत- ; $G_4$ विहित- ( for विजित- ). $T_1$ निहिताः ; $T_2$ $G_2$ विजिताः ( for विहिताः ). — ( L. 158 ) $D_{10}$ लोके ( for लोकाः ). $M_{1-3}$ [ए]ते ( for [इ]मे ). — ( L. 159 ) $T_1$ सप्त नगाः ( for मनः सप्त ). — ( L. 160 ) $T_1$ पंचेंद्रियाणि च तथा ; M सप्तर्षय इंद्रियाणि च ( hypermetric ) ( for the prior half ). M सप्त पंचेंद्रियाणि च ( for the post. half ). — $T_1$ M repeat line 161 after line 182. — ( L. 161 ) $T_1$ ( second time ) चाहुर् ( for प्राहुर् ). $T_1$ ( second time ) [अ]थ च ( for त्वथ ). — ( L. 162 ) $T_1$ सप्तमेत्येतानि ; $T_3$ सप्तमीत्येतानि ; $G_1$ damaged ; $G_3$ सप्तम्यात्मनि ; $G_4$ °मी ह्येतानि ; $M_1$ च सप्तमी एतानि ( for सप्तमी ह्यात्मनि ). $M_4$ सप्तमीत्येतानि समापितानि. $T_1$ $G_{1,3}$ M शरीरे ( for °रेषु ). $D_{10}$ $T_2$ G नात्मनि परमात्मनि ; $M_4$ आत्मनि परमात्मनि च ( for नात्मनि ). — ( L. 163 ) $T_1$ तानि कर्माणि ; M तानि कारणानि ( for कारणानि ). M सप्तकर्मसु ( for सर्व° ). $T_1$ om. from यथात्मनि up to विषयाणां ( in line 163 ). $G_{1,3}$ यथात्मनश् ( for °त्मनि ). $D_{10}$ $T_2$ $G_2$ स्वात्मनि ( $T_2$ °नि वा ) ; $G_{1,3}$ चान्य- ( for स्वानि ). $M_{1-3}$ अत आत्मानं च नान्यकर्माणि ; $M_4$ अथात्मनश्च नान्यकर्माणि. $G_2$ om. ; Kumbh. ed. व्यापकत्वानि ( for °कानि ). — ( L. 164 ) $T_1$ M om. देव. $T_1$ -संभवं ( for -संमितं ). $D_{10}$ $G_2$ मुमुक्षुर् ; $T_2$ मुमुक्षवो ; $M_{1,2}$ मुक्तं ( for मुमुक्षुं ). $T_2$ न प्र- ( for वायु- ). $G_2$ लीयंते ; $M_{1-3}$ विलीयंते ; some MSS. प्रलीयंते वा ( for प्रलीयन्ते ). — ( L. 165 ) $D_{10}$ $G_2$ तमेतन् ; $T_1$ M तदेतन् ; $G_4$ तमेवं ( for तमेकं ). $G_3$ न च ( for न ). $T_2$ नापरं ; $G_1$ $M_{1-3}$ स्वापं ; $M_4$ om. ; Kumbh. ed. स्वपरं ( for स्वा° ). — ( L. 166 ) $T_1$ $M_{1-3}$ om. एवं. $T_2$ पृष्ठेषु ( for प्रविष्टेषु ). $D_{10}$ $G_1$ लोको ( for को ). $M_{1-3}$ om. इति. $T_3$ वामुत्र ; $M_{1-3}$ द्वावत्र ( for

दर्शनानि पश्यति । [166] अप्रतिबुद्धेषु लोकेषु स एव प्रति-
बुध्यते । [167] स एष प्राज्ञः । अथ तैजसः कायाग्निः । स हि
सुप्तस्यात्मा वा । अविदुषो वाप्रतिबुध्यमानस्यान्नं पचतीत्यन्तेऽव-
तिष्ठते । एतदात्मानमधिकृत्यानुज्ञातमिति । [168]

Colophon.

सनत्कुमारः ।

प्रभवश्चाप्ययस्तात वर्णितस्तेऽनुपूर्वशः ।
तथाध्यात्माधिभूतं च तथैवात्राधिदैवतम् ।
निखिलेन तु वक्ष्यामि दैवतानीह देहिनाम् ।
यान्याश्रितानि देहेषु यानि पृच्छसि शंकर ।
वाच्यग्निस्त्वथ जिह्वायां सोमः प्राणे तु मारुतः ।
रूपे चाप्यथ नक्षत्रं जिह्वायां चाप एव तु ।
नाभ्यां समुद्रश्च विभुर्नखरोम तथैव च ।
वनस्पतिवनौषध्यस्त्वङ्गेषु मरुतस्तथा ।
संवत्सराः पर्वसु च आकाशे दैवमानुषे ।
उदाने विद्युदभवद्व्याने पर्जन्य एव च ।
स्तनयोरेव चाकाशं बले चेन्द्रस्तथाभवत् ।
मतावप्यथ चेशानस्त्वपाने रुद्र एव च ।
गन्धर्वाप्सरसो व्याने सत्ये मित्रश्च शंकर ।
प्रज्ञायां वरुणश्चैव चक्षुष्यादित्य एव च ।
शरीरे पृथिवी चैव पादयोर्विष्णुरेव च ।
पायौ मित्रस्तथोपस्थे प्रजापतिररिंदम ।
मूर्ध्नि चैव दिशः प्रादुर्बुद्धौ ब्रह्मा प्रतिष्ठितः ।
बुध्यमानोऽऽत्मनिष्ठः स्यादधिष्ठाता तु शंकर ।
अबुद्धश्चाभवत्तस्माद्बुध्यमानान्न संशयः ।
आभ्यामन्यः परो बुद्धो वेदवादेषु शंकर ।
यदाश्रितानि देहेषु दैवतानि पृथक्पृथक् ।
योऽग्नये यजते नित्यमात्मयाजी समाहितः ।
य एवमनुपश्येत दैवतानि समाहितः ।
सोऽत्र योगी भवत्येव य एवमनुपश्यति ।
स सर्वयज्ञयाजिभ्यो ह्यात्मयाजी विशिष्यते ।
मुखे जुहोति यो नित्यं कृत्स्नं विश्वमिदं जगत् ।
सोऽऽत्मविल्लोच्यते तज्ज्ञैर्महादेव महात्मभिः ।
सर्वेभ्यः परमेभ्यो वै दैवतेभ्यो ह्यात्मयाजिना ।
गन्तव्यं परमाकाङ्क्षन्परमेव विचिन्तयन् ।
यथा संक्रमते देहाद्देही त्रिपुरसूदन ।
तथास्य स्थानमाख्यास्ये पृथक्त्वेनेह शंकर ।
पादाभ्यां वैष्णवं स्थानमाप्नोति विनियोजनात् ।

वात्र ). T1 om.; G1.3 सीदंतौ ( for सदने ). T1 om.; M देवो द्योतमानो ( M4 द्योतनो ) ( for देवद्योतनो ). T1 om. भगवांश्चात्र. T1 क्षेत्रज्ञोक्षर एव च. Kumbh. ed. अभि- ( for स हि ). T1 [अ]धि- ( for [अ]पि ). T3 पश्यंति ( for पश्यति ). — ( L. 167 ) T2 मोक्षेषु तेषु; M4 तेषु लाभेषु ( for लोकेषु ). M1-3 अप्रतिबुद्धविषयलाभेषु तेषु. M एष ( for एव ). — ( L. 168 ) D10 G2 तैजसं ( for °सः ). M4 सुप्तः स्याद् ( for सुप्तस्यात्मा ). D10 T3 G पचतीत्यंते ( G2 °त्यन्ते )वतिष्ठति ( G2 °ते ); T1 पचन्नवतिष्ठते; M1-3 पचन्नेव तिष्ठति; M4 °त्येव तिष्ठति. G2 अनुज्ञानम् ( for °तम् ). M1-3 om. इति. — Colophon. *Sub-parvan :* D10 दानधर्म. — *Adhy. name :* M1-3 सनत्कुमाररुद्रसंवादः. — *Adhy. no. :* T1 M4 160; T2.3 G2.4 167; G1.3 M1 161; M2.3 162. — ( L. 169 ) M3 चैव ( for तात ). — T1 om. line 170. — ( L. 170 ) G3 तत्र ( for the second तथा ). — ( L. 171 ) T1 च; M तु; Kumbh. ed. ह ( for [इ]ह ). — ( L. 172 ) T2.3 G1 [आ]श्रितेषु ( for °तानि ). T1 देहिनां चात्र शंकर ( for the post. half ). — After line 172, T1 ins.:

दैवतानि शृणुष्वाद्य यानि पृच्छसि शूलधृक् ।

— After line 173, T1 M read lines 178-182. — ( L. 174 ) T1 M3 तु ( for the second च ). G1 om. the post. half of line 175 and the prior half of line 176. — ( L. 177 ) M1-3 [अ]प्याकाशे ( for आकाशे ). T3 M1 देव- ( for दैव- ). — ( L. 179 ) T2 आकाशं; T3 चाकारं ( for °शं ). T1.3 G1.3.4 जले ( for बले ). T3 M1-3 चंद्रस् ( for चेन्द्रस् ). Kumbh. ed. [ए]व च ( for [अ]भवत् ). — ( L. 180 ) T3 मनसा; Madras ed. समाने ( for मताव् ). — ( L. 181 ) T1 M4 प्राणे ( for व्याने ). M1-3 सत्त्वे ( for सत्ये ). — T1 om. lines 183-188. — ( L. 185 ) M1-3 वै प्रभवं ( for चैव दिशः ). — ( L. 187 ) M1-3 [अ]परस् ( for [अ]भवत् ). M4 प्रबुद्धश्चापरस्तस्माद् ( for the prior half ). — ( L. 189 ) T1 समाश्रितानि ( for यदाश्रि° ). — T1 om. line 190. — ( L. 190 ) T3 जायते ( for यजते ). G1.3 योऽग्निं याजयते नित्यम्; G4 M4 यो नियोजयते नित्यम्; M1-3 यो हि योजयते नित्यम् ( for the prior half ) — T1 om. line 192. — ( L. 192 ) D10 M4 स ( for य ). — ( L. 193 ) T1 -याजी च; G1.3 M4 -याजी स्याद् ( for -याजिभ्यो ). T1 G1.3 M4 आत्मयाजी. T2 [अ]व- ( for वि- ). — ( L. 194 ) T1 मुखेषु ( hypermetric ); T2.3 G4 स्वमुखे ( hypermetric ) ( for मुखे ). — For lines 193-195, M1-3 subst.:

सोऽत्र योगी जुहोत्येव सोमवित्स्वमुखे जगत् ।

— T1 om. lines 196-197. — ( L. 196 ) Post. half hypermetric. — ( L. 197 ) M [अ]नु-; Kumbh. ed. च ( for वि- ). — ( L. 198 ) T1 यदा ( for यथा ). — ( L. 199 ) T1 अथ ( for तथा ). M स्थानानि ( for

पायुना मित्रमाप्नोति उपस्थेन प्रजापतिम् ।
नाभ्या च वारुणं स्थानं स्तनाभ्यां तु भुवो लभेत् ।
बाहुभ्यां वासवं स्थानं श्रोत्राभ्यामाप्नुयाद्दिशः ।
आदित्यं चक्षुषा स्थानं मूर्ध्ना ब्रह्मण एव च ।
अथ मूर्धसु यः प्राणान्धारयेत समाहितः ।
बुद्ध्या मानमवाप्नोति द्रव्यावस्थं न संशयः ।
अव्यक्तात्परमं शुद्धमप्रमेयमनामयम् ।
तमाहुः परमं नित्यं यद्यदाप्नोति बुद्धिमान् ।
बुध्यमानाप्रबुद्धाभ्यां स बुद्ध इति पठ्यते ।
बुध्यमानमबुद्धश्च नित्यमेवानुपश्यति ।
विकारपुरुषस्त्वेष बुध्यमान इति स्मृतः ।
पञ्चविंशतितत्त्वं तन्नोच्यते तत्र संशयः ।
स एष प्रकृतिस्थत्वात्तस्थुरित्युपदिश्यते ।
महानात्मा महादेव महानत्राधितिष्ठति ।
अधिष्ठानादधिष्ठाता प्रोच्यते शास्त्रदर्शनात् ।
एष चेतयते देव मोहजालमबुद्धिमान् ।
अव्यक्तस्यैव साधर्म्यमेतदाहुर्मनीषिणः ।
सोऽहं सोऽहमतो नित्यादज्ञानादिति मन्यते ।
यदि बुध्यति चैवायं मन्येयमिति भास्करः ।
न प्रबुद्धो न वर्तेत पानीयं मत्स्यको यथा ।
देवता निखिलैनैताः प्रोक्तास्त्रिभुवनेश्वर ।
योगकृत्यं तु तावन्मे त्वं निबोधानुपूर्वशः ।
शून्यागारेष्वरण्येषु सागरे वा गुहासु वा ।
विष्टम्भयित्वा त्रीन्दण्डानवाप्नोति ह्यद्वयो भवेत् ।
प्राङ्मुखोदङ्मुखो वापि तथा पश्चान्मुखोऽपि वा ।
दक्षिणावदनो वापि बद्ध्वा विधिवदासनम् ।
स्वस्तिकेनोपसंविष्टः कायमुन्नाम्य भास्वरम् ।
यथोपदिष्टं गुरुणा तथा तद्ब्रह्म धारयेत् ।
लघ्वाहारो यतो दान्तस्त्रिकालपरिवर्जकः ।
मूत्रोत्सर्गपुरीषाभ्यामाहारे च समाहितः ।
शेषकालं तु युञ्जीत मनसा सुसमाहितः ।
इन्द्रियाणीन्द्रियार्थेभ्यो मनसा विनिवर्तयेत् ।
मनस्यैव संगृह्य बुद्ध्या बुद्धिमतां वर ।
विधावमानं धैर्येण विस्फुरन्तमितस्ततः ।
निरुध्य सर्वसंकल्पांस्ततो वै स्थिरतां व्रजेत् ।
एकाग्रस्तद्विजानीयात्सर्वं गुह्यतमं परम् ।
निवातस्थ इवालोलो यथा दीपोऽतिदीप्यते ।
ऊर्ध्वमेव न तिर्यक्च तथैव भ्राम्यते मनः ।
हृदिस्थस्तिष्ठते योऽसौ तथैवाभिमुखो यदा ।
मनो भवति देवेश पाषाणमिव निश्चलम् ।
स निर्जने विनिर्घोषे सघोषे चावसञ्जने ।
युक्तो यो न विकम्पेत योगी योगविधिः श्रुतः ।
ततः पश्यति तद्ब्रह्म ज्वलदात्मनि संस्थितम् ।
विद्युदम्बुधरे यद्वत्तद्वदेकसनाश्रयम् ।
तमस्यगाधे तिष्ठन्तं निस्तमस्कमचेतनम् ।
चेतयानमचेतं च दीप्यमानं स्वतेजसा ।

स्थानम्). $G_2$ om. (hapl.) from the post. half of line 200 up to the prior half of line 203. — (L. 201) $M_{1-3}$ ह्युपस्थेन. — (L. 202) $D_{10}$ T $G_{1,3,4}$ $M_4$ नाभ्यां (for नाभ्या). $T_1$ भवेत् (for लभेत्). — (L. 203) $T_2$ $G_3$ वासव- (for °वं). $T_1$ om. (hapl.) the post. half and the prior half of line 204. — (L. 205) $M_{1-3}$ मूर्धनि (for °सु). $M_{1-3}$ प्राणं (for प्राणान्). $M_{1-3}$ धारयेत्सु- (for °येत). — (L. 206) $M_{1,3,4}$ द्रव्यावस्थान् (for °स्थं). — (L. 209) $T_1$ कथ्यते (for पठ्यते). — (L. 211) $T_3$ [इ]ह (for [ए]व). — (L. 212) $T_1$ $M_{1-3}$ पंचविंशतिमं तत्त्वं; $G_3$ °तिकं तत्त्वं; $M_4$ °तितत्त्वानि (for the prior half). $D_{10}$ $G_2$ तन्न; Madras ed. नात्र (for तत्र). M प्रोच्यते तत्त्वसंश्रयात् (for the post. half). — (L. 213) $T_2$ स एष प्रकृतिस्थत्वं (for the prior half). — $T_1$ om. line 214. — (L. 216) $M_{1-3}$ देहं (for देव). $T_2$ -कालम् (for -जालम्). — (L. 218) $D_{10}$ $T_1$ $G_2$ $M_{1-3}$ यो (for the first सो). $M_4$ [ऽ]यम् (for the second ऽहम्). $M_1$ इतो (for अतो). $T_1$ ज्ञानाद् (for नित्याद्). — (L. 219) $T_1$ $G_{1,3,4}$ $M_4$ अन्योयम्; $M_{1-3}$ अन्योऽदम् (for मन्येयम्). — (L. 220) $D_{10}$ $T_{2,3}$ $G_{2,4}$ $M_{1-3}$ [ऽ]नु- (for the second न). — (L. 222) $D_{10}$ विबोध (for नि°). — (L. 223) M [अ]रण्ये वा (for °ण्येषु). $T_1$ शून्यागारे अरण्ये वा (for the prior half). — $T_1$ om. line 224. — (L. 224) $G_4$ $M_{1-3}$ त्रिदंडान् (for त्रीन्दण्डान्). $D_{10}$ $T_3$ अवाप्नोत्यथ योगवित्; $G_{1,3}$ °प्नोति च योगवित्; $G_{2,4}$ °प्नो-.ह्यत्र योगवित् (for the post. half). — (L. 226) $D_{10}$ दक्षिणाभिमुखो वापि; $T_2$ °विमुखो वापि (for the prior half). — (L. 227) $T_{1,3}$ $G_{1,3}$ उन्नम्य (for उन्नाम्य). — (L. 228) $D_{10}$ $G_2$ साधयेत् (for धार°). — $G_2$ om. lines 230–234. $T_1$ om. line 234. — (L. 234) $M_{1-3}$ विष्फु($M_2$ °स्फु)रद्धै समंततः (for the post. half). — (L. 235) $M_4$ स्थिरज्जां (for °तां). — $T_1$ om. line 236. — (L. 236) $G_{1,3}$ $M_1$ तं (for तद्). — (L. 237) $D_{10}$ निपातस्थ (for निवा°). — (L. 239) $D_{10}$ $G_2$ हादि सं- (for हृदिस्थस्). $G_{1,3}$ तस्यैव; $M_{1-3}$ स तदा (for तथैव). — (L. 240) $T_1$ $M_4$ पाषाण (for °णम्). $T_2$ $G_{1,3}$ निश्चलः. — $T_1$ om. line 241. — (L. 242) $T_1$ $M_4$ तदा (for यो न). $T_1$ श्रुतं (for श्रुतः). — (L. 243) $D_{10}$ $G_2$ बलाद् (for ज्वलद्). $T_1$ संश्रितं (for संस्थितम्). — $T_1$ om.

दर्शनानि पश्यति । [166] अप्रतिबुद्धेषु लोकेषु स एव प्रति-
बुध्यते । [167] स एष प्राज्ञः । अथ तैजसः कायाग्निः । स हि
सुप्तस्यात्मा वा । अविदुषो वाप्रतिबुध्यमानस्यान्नं पचतीत्यन्तेऽव-
तिष्ठते । एतदात्मानमधिकृत्यानुज्ञातमिति । [168]

Colophon.

सनत्कुमारः ।

प्रभवश्चाप्ययस्तात वर्णितस्तेऽनुपूर्वशः ।
तथाध्यात्माधिभूतं च तथैवात्राधिदैवतम् ।
निखिलेन तु वक्ष्यामि दैवतानीह देहिनाम् ।
यान्याश्रितानि देहेषु यानि पृच्छसि शंकर ।
वाच्यग्निस्त्वथ जिह्वायां सोमः प्राणे तु मारुतः ।
रूपे चाप्यथ नक्षत्रं जिह्वायां चाप एव तु ।
नाभ्यां समुद्रश्च विभुर्नखरोम तथैव च ।
वनस्पतिवनौषध्यस्त्वङ्गेषु मरुतस्तथा ।
संवत्सराः पर्वसु च आकाशे दैवमानुषे ।
उदाने विद्युदभवद्व्याने पर्जन्य एव च ।
स्तनयोरेव चाकाशं बले चेन्द्रस्तथाभवत् ।
मतावप्यथ चेशानस्त्वपाने रुद्र एव च ।
गन्धर्वाप्सरसो व्याने सत्ये मित्रश्च शंकर ।
प्रज्ञायां वरुणश्चैव चक्षुष्यादित्य एव च ।
शरीरे पृथिवी चैव पादयोर्विष्णुरेव च ।
पायौ मित्रस्तथोपस्थे प्रजापतिररिंदम ।
मूर्ध्नि चैव दिशः प्रादुर्बुद्धौ ब्रह्मा प्रतिष्ठितः ।
बुध्यमानोऽऽत्मनिष्ठः स्यादधिष्ठाता तु शंकर ।
अबुद्धश्चाभवत्तस्माद्बुध्यमानान्न संशयः ।
आभ्यामन्यः परो बुद्धो वेदवादेषु शंकर ।
यदाश्रितानि देहेषु दैवतानि पृथक्पृथक् ।
योऽग्नये यजते नित्यमात्मयाजी समाहितः ।
य एवमनुपश्येत दैवतानि समाहितः ।
सोऽत्र योगी भवत्येव य एवमनुपश्यति ।
स सर्वयज्ञयाजिभ्यो ह्यात्मयाजी विशिष्यते ।
मुखे जुहोति यो नित्यं कृत्स्नं विश्वमिदं जगत् ।
सोऽऽत्मवित्प्रोच्यते तज्ज्ञैर्महादेव महात्मभिः ।
सर्वेभ्यः परमेभ्यो वै दैवतेभ्यो ह्यात्मयाजिना ।
गन्तव्यं परमाकाङ्क्षन्परमेव विचिन्तयन् ।
यथा संक्रमते देहाद्देही त्रिपुरसूदन ।
तथास्य स्थानमाख्यास्ये पृथक्त्वेनेह शंकर ।
पादाभ्यां वैष्णवं स्थानमाप्नोति विनियोजनात् ।

---

वात्र ). $T_1$ om.; $G_{1,3}$ सीदंतौ ( for सदने ). $T_1$ om.; M देवो द्योतमानो ( $M_4$ द्योतनो ) ( for देवद्योतनो ). $T_1$ om. भगवांश्चात्र. $T_1$ क्षेत्रज्ञोक्षर एव च. Kumbh. ed. अभि- ( for स हि ). $T_1$ [अ]धि- ( for [अ]पि ). $T_3$ पश्यंति ( for पश्यति ). — ( L. 167 ) $T_2$ मोक्षेषु तेषु; $M_4$ तेषु लाभेषु ( for लोकेषु ). $M_{1-3}$ अप्रतिबुद्धविषयलाभेषु तेषु. M एष ( for एव ). — ( L. 168 ) $D_{10}$ $G_2$ तैजसं ( for °सः ). $M_4$ सुप्तः स्याद् ( for सुप्तस्यात्मा ). $D_{10}$ $T_3$ G पचतीत्यंते( $G_2$ °त्यन्ते )वतिष्ठति ( $G_2$ °ते ); $T_1$ पचन्नवतिष्ठते; $M_{1-3}$ पचन्नेव तिष्ठति; $M_4$ °त्येव तिष्ठति. $G_2$ अनुशानम् ( for °तम् ). $M_{1-3}$ om. इति. — Colophon. *Sub-parvan* : $D_{10}$ दानधर्म. — *Adhy. name* : $M_{1-3}$ सनत्कुमाररुद्रसंवादः. — *Adhy. no.* : $T_1$ $M_4$ 160; $T_{2,3}$ $G_{2,4}$ 167; $G_{1,3}$ $M_1$ 161; $M_{2,3}$ 162. — ( L. 169 ) $M_3$ चैव ( for तात ). — $T_1$ om. line 170. — ( L. 170 ) $G_3$ तत्र ( for the second तथा ). — ( L. 171 ) $T_1$ च; M तु; Kumbh. ed. ह ( for [इ]ह ). — ( L. 172 ) $T_{2,3}$ $G_1$ [आ]श्रितेषु ( for °तानि ). $T_1$ देहिनां चात्र शंकर ( for the post. half ). — After line 172, $T_1$ ins. :

दैवतानि शृणुष्वाद्य यानि पृच्छसि शूलधृक् ।

— After line 173, $T_1$ M read lines 178–182. — ( L. 174 ) $T_1$ $M_3$ तु ( for the second च ). $G_1$ om. the post. half of line 175 and the prior half of line 176. — ( L. 177 ) $M_{1-3}$ [अ]प्याकाशे ( for आकाशे ). $T_3$ $M_4$ देव- ( for दैव- ). — ( L. 179 ) $T_2$ आकाशं; $T_3$ चाकारं ( for °शं ). $T_{1,3}$ $G_{1,3,4}$ जले ( for बले ). $T_2$ $M_{1-3}$ चंद्रस् ( for चेन्द्रस् ). Kumbh. ed. [ए]व च ( for [अ]भवत् ). — ( L. 180 ) $T_3$ मनसा; Madras ed. समाने ( for मताव् ). — ( L. 181 ) $T_1$ $M_4$ घ्राणे ( for व्याने ). $M_{1-3}$ सत्त्वे ( for सत्ये ). — $T_1$ om. lines 183–188. — ( L. 185 ) $M_{1-3}$ वै प्रभवं ( for चैव दिशः ). — ( L. 187 ) $M_{1-3}$ [अ]परस् ( for [अ]भवत् ). $M_4$ प्रबुद्धश्चापरस्तस्माद् ( for the prior half ). — ( L. 189 ) $T_1$ समाश्रितानि ( for यदाश्रि° ). — $T_1$ om. line 190. — ( L. 190 ) $T_3$ जायते ( for यजते ). $G_{1,3}$ योग्निं याजयते नित्यम्; $G_4$ $M_4$ यो नियोजयते नित्यम्; $M_{1-3}$ यो हि योजयते नित्यम् ( for the prior half ) — $T_1$ om. line 192. — ( L. 192 ) $D_{10}$ $M_4$ स ( for य ). — ( L. 193 ) $T_1$ -याजी च; $G_{1,3}$ $M_4$ -याजी स्याद् ( for -याजिभ्यो ). $T_1$ $G_{1,3}$ $M_4$ आत्मयाजी. $T_2$ [अ]व- ( for वि- ). — ( L. 194 ) $T_1$ मुखेषु ( hypermetric ); $T_{2,3}$ $G_4$ स्वमुखे ( hypermetric ) ( for मुखे ). — For lines 193–195, $M_{1-3}$ subst. :

सोऽत्र योगी जुहोत्येव सोमवित्स्वमुखे जगत् ।

— $T_1$ om. lines 196–197. — ( L. 196 ) Post. half hypermetric. — ( L. 197 ) M [अ]नु-; Kumbh. ed. च ( for वि- ). — ( L. 198 ) $T_1$ यदा ( for यथा ). — ( L. 199 ) $T_1$ अथ ( for तथा ). M स्थानानि ( for

पायुना मित्रमाप्नोति उपस्थेन प्रजापतिम् ।
नाभ्या च वारुणं स्थानं स्तनाभ्यां तु भुवो लभेत् ।
बाहुभ्यां वासवं स्थानं श्रोत्राभ्यामाप्नुयाद्दिशः ।
आदित्यं चक्षुषा स्थानं मूर्ध्ना ब्रह्मण एव च ।
अथ मूर्धसु यः प्राणान्धारयेत समाहितः ।
बुद्ध्या मानमवाप्नोति द्रव्यावस्थं न संशयः ।
अव्यक्तात्परमं शुद्धमप्रमेयमनामयम् ।
तमाहुः परमं नित्यं यद्यदाप्नोति बुद्धिमान् ।
बुध्यमानाप्रबुद्धाभ्यां स बुद्ध इति पठ्यते ।
बुध्यमानमबुद्धश्च नित्यमेवानुपश्यति ।
विकारपुरुषस्त्वेष बुध्यमान इति स्मृतः ।
पञ्चविंशतितत्त्वं तत्प्रोच्यते तत्र संशयः ।
स एष प्रकृतिस्थत्वात्तस्थुरित्युपदिश्यते ।
महानात्मा महादेव महानत्राधितिष्ठति ।
अधिष्ठानादधिष्ठाता प्रोच्यते शास्त्रदर्शनात् ।
एष चेतयते देव मोहजालमबुद्धिमान् ।
अव्यक्तस्यैव साधर्म्यमेतदाहुर्मनीषिणः ।
सोऽहं सोऽहमतो नित्यादज्ञानादिति मन्यते ।
यदि बुध्यति चैवायं मन्येयमिति भास्वरः ।
न प्रबुद्धो न वर्तेत पानीयं मत्स्यको यथा ।
देवता निखिलेनैताः प्रोक्तास्त्रिभुवनेश्वर ।
योगकृत्यं तु तावन्मे त्वं निबोधानुपूर्वशः ।
शून्यागारेष्वरण्येषु सागरे वा गुहासु वा ।
विष्टम्भयित्वा त्रीन्दण्डानवाप्नो ह्यद्वयो भवेत् ।
प्राङ्मुखोदङ्मुखो वापि तथा पश्चान्मुखोऽपि वा ।
दक्षिणावदनो वापि बद्ध्वा विधिवदासनम् ।
स्वस्तिकेनोपसंविष्टः कायमुन्नाम्य भास्वरम् ।
यथोपदिष्टं गुरुणा तथा तद्ब्रह्म धारयेत् ।
लघ्वाहारो यतो दान्तस्त्रिकालपरिवर्जकः ।
मूत्रोत्सर्गपुरीषाभ्यामाहारे च समाहितः ।
शेषकालं तु युञ्जीत मनसा सुसमाहितः ।
इन्द्रियाणीन्द्रियार्थेभ्यो मनसा विनिवर्तयेत् ।
मनस्तथैव संगृह्य बुद्ध्या बुद्धिमतां वर ।
विधावमानं धैर्येण विस्फुरन्तमितस्ततः ।
निरुध्य सर्वसंकल्पांस्ततो वै स्थिरतां व्रजेत् ।
एकाग्रस्तद्विजानीयात्सर्वं गुह्यतमं परम् ।
निवातस्थ इवालोलो यथा दीपोऽतिदीप्यते ।
ऊर्ध्वमेव न तिर्यक्च तथैव भ्राम्यते मनः ।
हृदिस्थस्तिष्ठते योऽसौ तथैवाभिमुखो यदा ।
मनो भवति देवेश पाषाणमिव निश्चलम् ।
स निर्जने विनिर्घोषे सघोषे चावसज्जने ।
युक्तो यो न विकम्पेत योगी योगविधिः श्रुतः ।
ततः पश्यति तद्ब्रह्म ज्वलदात्मनि संस्थितम् ।
विद्युदम्बुधरे यद्वत्तद्वदेकमनाश्रयम् ।
तमस्यगाधे तिष्ठन्तं निस्तमस्कमचेतनम् ।
चेतयानमचेतं च दीप्यमानं स्वतेजसा ।

स्थानम् ). $G_2$ om. ( hapl. ) from the post. half of line 200 up to the prior half of line 203. — ( L. 201 ) $M_{1-3}$ ह्युपस्थेन. — ( L. 202 ) $D_{10}$ T $G_{1.2.4}$ $M_4$ नाभ्यां ( for नाभ्या ). $T_1$ भवेत् ( for लभेत् ). — ( L. 203 ) $T_2$ $G_3$ वासव- ( for °वं ). $T_1$ om. ( hapl. ) the post. half and the prior half of line 204. — ( L. 205 ) $M_{1-3}$ मूर्धनि ( for °सु ). $M_{1-3}$ प्राणं ( for प्राणान् ). $M_{1-3}$ धारयेत्सु- ( for °येत ). — ( L. 206 ) $M_{1.3.4}$ द्रव्यावस्थान् ( for °स्थं ). — ( L. 209 ) $T_1$ कथ्यते ( for पठ्यते ). — ( L. 211 ) $T_3$ [इ]ह ( for [ए]ष ). — ( L. 212 ) $T_1$ $M_{1-3}$ पंचविंशतिमं तत्त्वं ; $G_3$ °तिकं तत्त्वं ; $M_4$ °तितत्त्वानि ( for the prior half ). $D_{10}$ $G_2$ तत्र ; Madras ed. नात्र ( for तत्र ). M प्रोच्यते तत्त्वसंश्रयात् ( for the post. half ). — ( L. 213 ) $T_2$ स एष प्रकृतिस्थत्वं ( for the prior half ). — $T_1$ om. line 214. — ( L. 216 ) $M_{1-3}$ देहं ( for देव ). $T_2$ -कालम् ( for -जालम् ). — ( L. 218 ) $D_{10}$ $T_1$ $G_2$ $M_{1-3}$ यो ( for the first सो ). $M_4$ [ऽ]यम् ( for the second ऽहम् ). $M_1$ इतो ( for अतो ). $T_1$ ज्ञानाद् ( for नित्याद् ). — ( L. 219 ) $T_1$ $G_{1.3.4}$ $M_4$ अन्येयम् ; $M_{1-3}$ अन्योहम् ( for मन्येयम् ). — ( L. 220 ) $D_{10}$ $T_{2.3}$ $G_{2.4}$ $M_{1-3}$ [ऽ]नु- ( for the second न ). — ( L. 222 ) $D_{10}$ विबोध ( for नि° ). — ( L. 223 ) M [अ]रण्ये वा ( for °ण्येषु ). $T_1$ शून्यागारे अरण्ये वा ( for the prior half ). — $T_1$ om. line 224. — ( L. 224 ) $G_4$ $M_{1-3}$ त्रिदंडान् ( for त्रीन्दण्डान् ). $D_{10}$ $T_3$ अवाप्नो- प्यथ योगवित् ; $G_{1.3}$ °प्नोति च योगवित् ; $G_{2.4}$ °प्नो-ऽत्र योगवित् ( for the post. half ). — ( L. 226 ) $D_{10}$ दाक्षिणा- भिमुखो वापि ; $T_2$ °विमुखो वापि ( for the prior half ). — ( L. 227 ) $T_{1.3}$ $G_{1.3}$ उन्नम्य ( for उन्नाम्य ). — ( L. 228 ) $D_{10}$ $G_2$ साधयेत् ( for धार° ). — $G_2$ om. lines 230–234. $T_1$ om. line 234. — ( L. 234 ) $M_{1-3}$ विष्फु( $M_2$ °स्फु )रद्वै समंततः ( for the post. half ). — ( L. 235 ) $M_4$ स्थिरजां ( for °तां ). — $T_1$ om. line 236. — ( L. 236 ) $G_{1.3}$ $M_4$ तं ( for तद् ). — ( L. 237 ) $D_{10}$ निपातस्थ ( for निवा° ). — ( L. 239 ) $D_{10}$ $G_2$ हृदि सं- ( for हृदि- स्थस् ). $G_{1.3}$ तस्यैव ; $M_{1-3}$ स तदा ( for तथैव ). — ( L. 240 ) $T_1$ $M_4$ पाषाण ( for °णम् ). $T_2$ $G_{1.3}$ निश्चल:. — $T_1$ om. line 241. — ( L. 242 ) $T_1$ $M_4$ तदा ( for न ). $T_1$ श्रुतं ( for श्रुतः ). — ( L. 243 ) $D_{10}$ $G_2$ ज्वल... ( for ज्वलद् ). $T_1$ संश्रितं ( for संस्थितम् ). — $T_1$ om...

अङ्गुष्ठपर्वमात्रं तन्नैःश्रेयसमनिन्दितम् ।
महन्मूलमनन्तं च स्वतन्त्रं विगतज्वरम् ।
ज्योतिषां ज्योतिषं देवं विष्णुमत्यन्तनिर्मलम् ।
नारायणमणीयांसमीश्वराणामधीश्वरम् ।
विश्वतः परमं नित्यं विश्वं नारायणं प्रभुम् ।
अविज्ञाय निमज्जन्ति लोकाः संसारसागरे ।
यं दृष्ट्वा यतयस्तात न शोचन्ति गतज्वराः ।
जन्ममृत्युभयान्मुक्तास्तीर्णाः संसारसागरम् ।
अणिमा लघिमा भूमा प्राप्तिः प्राकाम्यमेव च ।
ईशित्वं च वशित्वं च यत्रकामावसायिता ।
एतदष्टगुणं योगं योगानामभितः स्मृतम् ।
दृष्ट्वात्मानं निरात्मानमप्रमेयं सनातनम् ।
ते विशन्ति शरीराणि योगेनानेन भास्वरम् ।
दैत्यदेवमनुष्याणां बलेन बलवत्तमाः ।
एतत्तत्त्वमनाद्यन्तं यन्नवानुपृच्छति ।
नित्यं वयमुपास्यामो योगधर्मं सनातनम् ।
योगधर्मान्न धर्मोऽस्ति गरीयान्सुरसत्तम ।
एतद्धर्मं हि धर्माणामपुनर्भवसंस्कृतम् ।
तत्त्वतः परमस्तीति केचिदाहुर्मनीषिणः ।
केचिदाहुः परं नास्ति ये ज्ञानफलमाश्रिताः ।
ज्ञानस्थः पुरुषस्त्वेष विकृतः स्वेन वर्णितः ।
यं ध्यानेनानुपश्यन्ति नित्यं योगपरायणाः ।
तमेव पुरुषं देवं केचिदेव महेश्वर ।
नित्यमन्यतमाः प्राहुर्ज्ञानं परमकं स्मृतम् ।
ज्ञानमेव विनिर्मुक्ताः सांख्या गच्छन्ति केवलम् ।
चिन्ताध्यात्मनि चान्यत्र योगाः परमबुद्धयः ।
उक्तमेतावदेतत्ते योगदर्शनमुत्तमम् ।
सांख्यज्ञानं प्रवक्ष्यामि परिसंख्यानिदर्शनम् ।

Colophon.

सनत्कुमारः ।

इन्द्रियेभ्यो मनः पूर्वमहंकारस्ततः परम् ।
अहंकारात्परा बुद्धिर्बुद्धेः परतरं महत् ।
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
एतावदेतत्सांख्यानां दर्शनं देवसत्तम ।
अव्यक्तं बुद्ध्यहंकारौ महाभूतानि पञ्च च ।
मनस्तथा विशेषाश्च दश चैवेन्द्रियाणि च ।
एषा तत्त्वचतुर्विंशन्महापुरुषसंमिता ।
बुध्यमानेन देवेश चेतनेन महात्मना ।
संयोगमेतयोर्नित्यमाहुरव्यक्तपुंसयोः ।
एकत्वं च बहुत्वं च सर्गप्रलयकोटिशः ।
तमःसंज्ञितमेतद्धि प्रवदन्ति त्रिशूलधृक् ।
समुत्पाद्य यथाव्यक्ताज्जीवा यान्ति पुनः पुनः ।
आदिरेष महानात्मा गुणानामिति नः प्रभो ।
गुणस्थत्वाद्गुणं त्वेममाहुरव्यक्तलक्षणम् ।
एतेनाध्युषितो व्यक्तस्त्रिगुणं चेतयत्यथ ।
अचेतनप्रकृत्यैष न चान्यमनुबुध्यते ।
बुध्यमानो ह्यहंकारी नित्यं मानाप्रबोधनात् ।
विमलस्य विशुद्धस्य नीरुजस्य महात्मनः ।

line 245. — (L. 245) $M_{1-3}$ सचेतनं (for अचे°). — (L. 246) $T_1$ M अचेतश्च (for °तं). — (L. 247) $T_1$ $G_{1,3,4}$ M निःश्रेयसम् (for नैःश्रे°). — $T_1$ M om. lines 249–252. — (L. 249) $T_3$ ज्योतिषो (for °षां). — (L. 251) $G_{1,3}$ हरिं (for प्रभुम्). — $T_1$ om. lines 255–256. — (L. 255) $G_{1,3}$ M महिमा (hypermetric) (for भूमा). — (L. 257) $T_1$ अणिमाद्यष्टयोगं च; $M_{1-3}$ एवमष्टगुणो योगो (for the prior half). Madras ed. आहितं (for अभितः). $T_1$ $G_3$ $M_4$ स्थितं; $M_{1-3}$ स्थितः (for स्मृतम्). $T_2$ योगानामभिसंस्कृतः (for the post. half). — $G_{1,3}$ om. (hapl.) lines 259–262. — (L. 259) $T_1$ भास्वता (for °रम्). — (L. 260) $T_3$ देवदैत्य- (for दैत्यदेव-). $T_1$ बलवत्तराः (for °माः). — $T_1$ om. lines 264–265. — (L. 264) $G_{1,3}$ -संस्मृतं; M -संस्तुतं (for -संस्कृतम्). — (L. 266) $D_{10}$ $G_4$ तु विशानम्; $T_{1,3}$ M ज्ञानबलम्; $T_2$ $G_2$ सांख्यज्ञानम् (for ज्ञानफलम्). — (L. 267) $G_4$ $M_{1-3}$ तेनु- (for स्वेन). — (L. 268) $T_3$ $G_3$ $M_4$ यद्; Kumbh. ed. ये (for यं). — (L. 269) $T_1$ $M_{1-3}$ केचित् (for देवं). — $T_1$ om. line 270. — (L. 270) $T_3$ केचिद् (for नित्यम्). $G_1$ तु परमं; $G_3$ परमसं- (for °मकं). — $T_1$ om. line 272. — (L. 272) $G_4$ चिताध्यानेन; $M_{1-3}$ °त्मेन (for °त्मानि). — (L. 273) $T_2$ $G_{1,3}$ युक्तम् (for उ°). — (L. 274) $G_4$ सांख्यं (for सांख्य-). Kumbh. ed. -विदर्शनं (for -नि°). — Colophon. *Sub-parvan* : $D_{10}$ दानधर्म. — *Adhy. name* : $D_{10}$ सनत्कुमारशंकरसंवादः; M सनत्कुमाररुद्रसंवादः. — *Adhy. no.* : $T_1$ $G_3$ $M_1$ 162; $T_{2,3}$ $G_{2,4}$ 168; $G_1$ $M_4$ 161; $M_{2,3}$ 163. — (L. 278) $T_1$ $G_4$ एव (for एतत्). — (L. 279) $T_1$ अव्यक्तबुद्ध्यहंकारा (for the prior half). — (L. 284) $T_1$ -कोटितः (for °शः). — (L. 285) $T_1$ त्रिशूलधृत्; $G_2$ °भृत् (for °धृक्). — (L. 286) $T_2$ यदा (for यथा). — (L. 288) $T_3$ गुणत्वेन; $G_{1,3}$ गुणं चैनम् (for गुणं त्वेनम्). — (L. 289) $T_1$ M [अ]धिष्ठितो (for [अ]ध्युषितो). — (L. 290) Kumbh. ed. and Madras ed. अचेतनः प्रकृत्येषु (for the prior half). — $T_1$ om. line 293. — (L. 293) $T_2$ विमलो दानशीलः स्याद् (for the prior half). — (L. 294) $T_{1,3}$ सर्व- (for सत्त्व-). — $T_1$ om. lines 295–298. — (L. 296) $T_3$ भूत्वा ताभ्याम् (submetric) (for ताभ्यामुभाभ्याम्).

विमलोदारशीलः स्याद्बुध्यमानाप्रबुद्धयोः ।
द्रष्टा भवत्यभोक्ता च सत्त्वमूर्तिश्च निर्गुणः ।
बुध्यमानाप्रबुद्धाभ्यामन्य एव तु निर्गुणः ।
उपेक्षकः शुचिस्ताभ्यामुभाभ्यामयुतस्तथा ।
बुध्यमानो न बुध्येत बुद्धमेवं सनातनम् ।
स एव बुद्धेरव्यक्तस्वभावत्वादचेतनः ।
सोऽहमेव न मेऽन्योऽस्ति य एवमभिमन्यते ।
न मन्यते ममान्योऽस्ति येन चेतोऽस्त्यचेतनः ।
एवमेवाभिमन्येत बुध्यमानोऽप्यनात्मवान् ।
अहमेव न मेऽन्योऽस्ति न प्रबुद्धवशानुगः ।
अव्यक्तस्थो गुणानेष नित्यमेवाभिमन्यते ।
तेनाधिष्ठिततत्त्वज्ञैर्महद्भिरभिधीयते ।
अहंकारेण संयुक्तस्ततस्तमभिमन्यते ।
क्षेत्रं प्रविश्य दुर्बुद्धिर्बुध्यमानो ह्यनात्मवान् ।
अहमेव सृजत्यन्यं द्वितीयं लोकसारथिः ।
सर्वभावैरहंकारैस्तृतीयं सर्गसंज्ञितम् ।
ततो भूतान्यहंकारमहंकारो मनोऽसृजत् ।
सर्वज्ञोतस्त्यभिमुखं संप्रावर्तत बुद्धिमान् ।
तथैव यज्ञे भूतेषु विषयार्थी पुनः पुनः ।
इन्द्रियैः सह शूलाङ्क पञ्चपञ्चभिरेव च ।
मनो वेद न चात्मानमहंकारं प्रजापतिः ।
न वेद वाप्यहंकारो बुद्धिं बुद्धिमतां वर ।
एवमेते महाभाग नेतरे नयवादिनः ।
अहंकारेण संयुक्तः स्रोतस्यभिमुखः सदा ।
एवमेष विकारात्मा महापुरुषसंज्ञकः ।
प्रतनोति जगत्कृत्स्नं पुनराददतेऽसकृत् ।
संसक्तत्वाज्जगत्कृत्स्नमव्यक्तस्य हृदि स्थितम् ।
संविशद्रजनीं कृत्स्नां निशान्ते दिवसागमे ।
पुनरात्मा विजयते बहवो निर्गुणास्तथा ।
अज्ञानेन समायुक्तः सोऽव्यक्तेन तमोत्मना ।
यदि ह्येषो नु मन्येत ममास्ति परतोऽपरः ।
स पुनः पुनरात्मानं न कुर्यादाक्षिपेत च ।
एतमव्यक्तविषयं सूक्ष्मं मन्येत बुद्धिमान् ।
पञ्चविंशं महादेव महापुरुषवैकृतम् ।
प्रबुद्धो बुद्धवानेतत्सृजमानमबुद्धवान् ।
गुणान्पुनश्च तानेव सोऽऽत्मनात्मनि निक्षिपेत् ।
अव्यक्तस्य वशीभूतो सोऽज्ञानस्य तमोत्मनः ।
बुध्यमानो ह्यबुद्धस्य बुद्धस्तदनुमुज्यते ।
उपेक्षकः शुचिर्व्यग्रः सोऽलिङ्गः सोऽव्रणोऽमलः ।
पार्श्वेशो भगवानास्ते बुद्धः शुद्धो निरामयः ।
अव्यक्तादिं विशेषान्तमेतद्द्वैधा वदन्त्युत ।
एतैरेव विहीनं तु केचिदाहुर्मनीषिणः ।
निस्सत्त्वं बुध्यमानास्तु केचिदाहुर्महामते ।
केचिदाहुर्महात्मानस्तत्त्वसंज्ञितमेव तु ।
तत्त्वस्य श्रवणादेनं तत्त्वमेव वदन्ति वै ।
तत्त्वसंश्रयणाच्चैव सत्त्ववन्तं महेश्वर ।
एवमेष विकारात्मा बुध्यमानो महाभुज ।
अव्यक्तो भवते व्यक्तौ सत्त्वं सत्त्वं तथा गुणौ ।
विद्या च भवतेऽविद्या भवते ब्रह्मसंज्ञितम् ।
य एवमनुबुध्यन्ते योगसांख्याश्च तत्त्वतः ।

—(L. 298) $G_4$ ततः प्रबुध्येद्व्यक्तः; M कुत एव बुध्येदव्यक्तं (hypermetric) (for the prior half). —$T_1$ $G_3$ om. (hapl.) lines 299–300. $G_1$ om. lines 299–301. $T_3$ om. (hapl.) the post. half of line 299 and the prior half of line 300. —(L. 302) $G_1$ सोहम् (for अहम्). $M_{1-3}$ प्रभुत्व- (for प्रबुद्ध-). —(L. 305) $G_{1,3}$ तद् (for तम्). $G_4$ -धीयते (for -मन्यते). —(L. 306) $M_4$ [ऽ]पि (for हि). —(L. 307) M एकः (for एव). $T_1$ अप्रबुद्धवशानुगः (for the post. half). —(L. 308) $G_3$ om. (hapl.) the post. half and the prior half of line 309. $T_3$ $M_{1-3}$ -संज्ञकं (for -संज्ञितम्). $T_1$ $M_4$ तृतीयः सर्गसंज्ञितः ($M_4$ °कः) (for the post. half). —(L. 310) $D_{10}$ $T_{2,3}$ G तस्य (for सर्व-). —$T_1$ om. line 313. —(L. 315) $G_4$ एव; $M_{1-3}$ एतन् (for एते). $T_3$ महाभागा (for °ग). $T_1$ $M_4$ नेतरेतरवा($M_4$ °वे)दिनः; $M_{1-3}$ °रे तत्त्ववेदिनः (for the post. half). —(L. 316) $D_{10}$ $G_{2,4}$ तदा; T तथा (for सदा). —(L. 318) $T_3$ $M_{1-3}$ स सत् (for ऽसकृत्).

—(L. 319) $D_{10}$ $T_2$ $G_{2,4}$ संयुक्तत्वाज्; $G_{1,3}$ ससंश° (for संसक्त°). —$T_1$ om. lines 320–324. —(L. 321) M विसृजते (for विजयते). —(L. 323) $M_{1-3}$ [ऽ]भि-; $M_4$ हि (for नु). —(L. 324) $M_4$ न कुर्यादाक्षिपेत्काचित् (for the post. half). —(L. 325) $D_{10}$ $T_1$ $M_4$ एवम्; $G_{1-3}$ $M_3$ एतद् (for एतम्). —(L. 327) $T_1$ बुद्धिमान (for बुद्धवान्). $T_1$ -अबुद्धिमान् (for °द्धवान्). —(L. 328) $T_1$ स्वकान् (for च तान्). —(L. 329) $G_{1-3}$ यो (for सो). —(L. 330) $D_{10}$ (*inf. lin.* as above) $T_3$ $M_2$ -बुध्यते (for -मुज्यते). —$T_1$ om. line 331. —(L. 331) M व्यभ्रः (for व्यग्रः). —(L. 332) $T_1$ M [अं]तो (for [आ]स्ते). $T_3$ शुद्धबुद्धो (for बुद्धः शुद्धो). —(L. 333) $T_1$ एतद्वै व्याप्तमित्युत (for the post. half). —$T_1$ om. line 335. —(L. 336) $T_1$ M यतात्मानस् (for महा°). $M_{1-3}$ -संश्रितम् (for -संज्ञि°). —(L. 337) $T_1$ M तत्त्वसंश्रयणादेनं ($T_1$ °व) (for the prior half) —$T_1$ om. line 338. —(L. 338) $G_{1,3}$ सत्त्व- (for तत्त्व-). $G_4$ एव (for चैव). —(L. 339) $T_2$ $G_4$ विद्य-

तेऽव्यक्तं शंकरागाढं मुञ्चन्ते शास्त्रबुद्धयः ।
तेषामेवं तु वदतां शास्त्रार्थे सूक्ष्मदर्शिनाम् ।
बुद्धिर्विस्तीर्यते सर्वं तैलबिन्दुरिवाम्भसि ।
विद्या तु सर्वविद्यानामवबोध इति स्मृतः ।
येन विद्यामविद्यां च विन्दन्ति यतिसत्तमाः ।
सैषा त्रयी परा विद्या चतुर्थ्यान्वीक्षिकी स्मृता ।
यां बुध्यमानो बुध्येत बुद्ध्यात्मनि समं गतः ।
अप्रबुद्धमथाव्यक्तमविद्यासंज्ञकं स्मृतम् ।
विमोहनं तु शोकेन केवलेन समन्वितम् ।
एतद्बुद्ध्वा भवेद्बुद्धः किमन्यद्बुद्धलक्षणम् ।
ये त्वेतन्नावबुध्यन्ते ते प्रबुद्धवशानुगाः ।
ते पुनः पुनरव्यक्ताज्जनिष्यन्त्यबुधात्मनः ।
तमेव तुलयिष्यन्ति अबुद्धवशवर्तिनः ।
ये चाप्यन्ये तन्मनसस्तेऽप्येतत्फलभागिनः ।
विदित्वैतं न शोचन्ति योगोपेतार्थदर्शिनः ।
स्वातन्त्र्यं प्रतिलप्स्यन्ते केवलत्वं च भास्वरम् ।
अज्ञानबन्धनान्मुक्तास्तीर्णाः संसारबन्धनात् ।
अज्ञानसागरं घोरमगाधं तमसंज्ञकम् ।
यत्र मज्जन्ति भूतानि पुनः पुनररिंदम ।
एषा विद्या तथाविद्या कथिता ते मयार्थतः ।
यस्मिन्देयं च नो ग्राह्यं सांख्याः सांख्यं तथैव च ।
तथा चैकत्वनानात्वमक्षरं क्षरमेव च ।
निगदिष्यामि देवेश विमोक्षं त्रिविधं च ते ।
बुध्यमानाप्रबुद्धाभ्यामबुद्धस्य प्रपञ्चनम् ।
भूय एव निबोध त्वं देवानां देवसत्तम ।
यच्च किंचिच्छ्रुतं न स्याद्दृष्टं नैव च किंचन ।
तच्च ते संप्रवक्ष्यामि एकाग्रः शृणु तत्परः ।

Colophon.

सनत्कुमारः ।

अरिष्टानि प्रवक्ष्यामि तत्त्वेन शृणु तद्भवान् ।
मध्य उत्तरतस्तात दक्षिणामुखनिष्ठितम् ।
विद्युत्संस्थानपुरुषं यदि पश्येत मानवः ।
वर्षत्रयेण जानीयाद्देहन्यासमुपस्थितम् ।
एतत्फलमरिष्टस्य शंकराहुर्मनीषिणः ।
शुद्धमण्डलमादित्यमरश्मिमथ पश्यतः ।
वर्षार्धकेन जानीयाद्देहन्यासमुपस्थितम् ।
छिद्रां चन्द्रमसश्छायां पादावप्यनुपश्यतः ।
संवत्सरेण जानीयाद्देहन्यासमुपस्थितम् ।
कनीनिकायामशिरः पुरुषं यदि पश्यति ।
जानीयात्षट्सु मासेषु देहन्यासमुपस्थितम् ।
कर्णौ पिधाय हस्ताभ्यां शब्दं न शृणुयाद्यदि ।
विजानीयात्तु मासेन देहन्यासमुपस्थितम् ।

मानो ( for बुध्य° ). T1 महामते ( for °भुज ). — T1 om. lines 340-341. — ( L. 340 ) G1 सत्यं ; M तत्त्वं ( for the first सत्त्वं ). — ( L. 341 ) G1.3 भवेत्तु ; M अन्यत्तु ( for the second भवते ). — ( L. 342 ) T1 -बुध्यंति ( for -बुध्यन्ते ). T1 M योगाः ( for योग- ). — ( L. 343 ) T2.3 G2.4 [अ]गाधं ( for °ढं ). T1 प्रवदंति मनीषिणः ( for the post. half ). — ( L. 344 ) G2 एतं ; Kumbh. ed. एतत् ( for एवं ). T3 सूक्ष्मार्थं शास्त्रदर्शिनां ( for the post. half ). — T1 om. line 345. — ( L. 345 ) M1–3 शश्वत् ( for सर्वं ). — ( L. 347 ) T1 भजंति ; M1–3 वदंति ( for विन्दन्ति ). — ( L. 349 ) T1 बुद्ध्या तु स ; M बुद्धा तु न ( for बुद्ध्यात्मनि ). — ( L. 350 ) T2 G4 -संज्ञिकं ( for -संज्ञकं ). G2 गुरुं ( for स्मृतम् ). — ( L. 351 ) Kumbh. ed. विमोहितं ( for °हनं ). G2 समन्वितः. — T1 om. lines 353–356. — ( L. 353 ) T3 ते बुद्धवशगानुगाः ( for the post. half ). — ( L. 355 ) T2 M1–3 ह्यबुद्ध- ; Kumbh. ed. अबुद्धि- ( for °द्ध- ). — ( L. 356 ) G1.3 [अ]नेन ( for [अ]न्ये तन् ). — ( L. 357 ) T1 [ए]वं ; Kumbh. ed. [ए]नं ( for [ए]तं ). T2 पश्यंति ( for शोचन्ति ). T1 योगतत्त्वार्थदर्शिनः ( for the post. half ). — T1 om. line 358. — ( L. 359 ) T1 -सागरं ; M -सागरात् ( for -बन्धनात् ). — T1 om. line 360. — ( L. 360 ) D10 M4 -संज्ञितं ; T2.3 -संज्ञिकं ( for -संज्ञकम् ). M1–3 केवलं तमसांज्ञितं ( for the post. half ). — ( L. 362 ) T1 परा प्रोक्ता ( for तथाविद्या ). D10 मयार्थितः ; G1 M1–3 यथार्थतः ( for मया° ). — ( L. 363 ) T1 यथा चेदं ( for यस्मिन्देयं ). D10 T2.3 G2.4 ग्राह्याः ( for ग्राह्यं ). — ( L. 364 ) M1 यथा ( for तथा ). T2 -नानार्थम् ( for °त्वम् ). T3 अक्षर- ( for °रं ). — ( L. 365 ) D10 T2 G2.4 निगमिष्यामि देवेश ( for the prior half ). T1 समोक्षं त्रिदशाधिप ( for the post. half ). — ( L. 366 ) T1 प्रपंचितं ( for प्रपञ्चनम् ). — ( L. 368 ) T3 यं ( for यच् ). G2 तस्य ( for न स्याद् ). D10 नैव न ; G1–3 चैव न ( for नैव च ). T3 G4 दृष्टं चै( G4 नै )व कथंचन ( for the post. half ). — ( L. 369 ) G1.3 सर्वं ( for ते सं- ). — Colophon. *Sub-parvan :* D10 दानधर्म. — *Adhy. name :* M1–3 सनत्कुमाररुद्रसंवादः. — *Adhy. no. :* T1 M4 162 ; T2.3 G2.4 169 ; G1.3 M1 163 ; M2.3 164. — ( L. 370 ) G2 अनिष्टानि ( for अरि° ). M4 सत्येन ( for तत्त्वेन ). T1 वै ( for तद् ). — ( L. 371 ) T1 -सुस्थितं ( for -निष्ठितम् ). — ( L. 373 ) T1 -त्रये तु ( for -त्रयेण ). — T1 repeats line 374 after line 376. — ( L. 375 ) M4 अरश्मिकमपश्यतः ( for the post. half ). — M4 om. ( hapl. ) lines 377–382. — ( L. 377 ) T1 रात्रौ समनुपश्यतः ( for the post. half ). — ( L. 379 ) T1 अपरं ; M1 अशिरं ( for अशिरः ). — ( L. 381 ) G4 हस्तेन ( for हस्ताभ्यां ). — ( L. 382 ) M1–3 जानीयात्स ( for विजानी-

विस्रगन्धमुपाघ्राति सुरभिं प्राप्य भास्वरम् ।
देवतायतनस्थोऽपि सप्तरात्रेण मृत्युभाक् ।
सर्वाङ्गधारणावस्थां धारयेत समाहितः ।
यथा स मृत्युं जयति नान्यथेह महेश्वर ।
यदि जीवितुमिच्छेत चिरकालं महामुने ।
अथ नेच्छेच्चिरं कालं त्यजेदात्मानमात्मना ।
केवलं चिन्तयानस्तु निष्कलं स निरामयम् ।
अथ तं निर्विकारं तु प्रकृतेः परमं शुचिः ।
पुरुषं तेन साधर्म्यं देहन्यासमुपाश्नुयात् ।
जाग्रतो हि मयोक्तानि तवारिष्टानि तत्त्वतः ।
धारणाश्चैव सर्वाङ्गे मृत्युं जीयात्सुरर्षभ ।
एकत्वदर्शनं भूयो नानात्वं च निबोध मे ।
अक्षरं च क्षरं चैव चतुष्टयविधानतः ।
अव्यक्तादीनि तत्त्वानि सर्वाण्येव महाद्युते ।
आहुश्चतुर्विंशतिमं विकारं पुरुषान्वितम् ।
एकत्वदर्शनं चैव नानात्वेनावरं स्मृतम् ।
पञ्चविंशतिवर्गः स्यादपवर्गोऽजरामरः ।
स निर्विकारः पुरुषस्तत्त्वेनैवोपदिश्यते ।
स एव पञ्चविंशस्तु विकारः पुरुषः स्मृतः ।
यद्येष निर्विकारः स्यात्तत्त्वं न तु भवेद्भव ।
विकारा विद्यमानास्तु तत्त्वसंज्ञक उच्यते ।
यद्येषोऽव्यक्ततां नैति व्यतिरेकान्न संशयः ।
तथा भवति निस्तत्त्वस्तथा सत्त्वस्तथा गुणः ।
विकारगुणसंत्यागात्प्रकृत्यन्यत्वतः शुचिः ।
तदा नानात्वतामेति सर्गहीनोऽपवर्गभाक् ।
बोध्यमानः प्रबुध्येत समो भवति बुद्धिमान् ।
अक्षरश्च भवत्येष यथा वा च्युतवान्क्षणात् ।
अव्यक्ता व्यक्तिरुक्ता स्यान्निर्गुणस्य गुणाकरात् ।
एतदेकत्वनानात्वमक्षरः क्षर एव च ।
व्याख्यातं तव शूलाङ्क तथारिष्टानि चैव हि ।
विमोक्षलक्षणं शेषं तदपीह ब्रवीमि ते ।
यं ज्ञात्वा यतयः प्राप्ताः केवलत्वमनामयम् ।
सांख्याश्चाप्यथ योगाश्च दग्धपङ्का गतज्वराः ।
अमूर्तित्वमनुप्राप्ता निर्गुणा निर्भया भव ।
विपाप्मानो महादेव मुक्ताः संसारसागरात् ।
सरणे प्रजनादाने गुणानां प्रकृतिः सदा ।
परा प्रमत्ता सततमेतावत्कार्यकारणम् ।
असच्चैव च सच्चैव कुरुते स पुनः पुनः ।
चैतन्येन पुराणेन चेतनाचेतनात्परः ।
यस्तु चेतयते चेतो मनसा चैकबुद्धिकम् ।
स नैव सन्न चैवासत्सदसन्न च संस्मृतः ।
व्यतिरिक्तश्च शुद्धश्च सोऽन्यश्चाप्रकृतिस्तथा ।
उपेक्षकश्च प्रकृतेर्विकारपुरुषः स्मृतः ।
विकारपुरुषेणैषा संयुक्ता सृजते जगत् ।
पुनराददते चैव गुणानामन्यथात्मनि ।
मत्स्योदकात्स संज्ञातः प्रकृतेरेव कर्मणः ।

यात्). — (L. 383) $G_{1.3}$ आम-; Madras ed. शव- (for विस्र-). — (L. 384) $T_1$ हि (for ऽपि). — $T_1$ om. lines 385–389. — (L. 385) $D_{10}$ $G_4$ सर्वसाधारणांस्तात; $T_2$ सर्वांगधारणांशस्तां; $T_3$ M °गधारणास्ता($M_4$ °णास्ता)त (for the prior half). — (L. 386) $M_{1-3}$ तथा (for यथा). — (L. 387) $G_4$ महामते (for °मुने). — (L. 389) $M_3$ केवलश् (for °लं). — (L. 390) $T_1$ $M_{1-3}$ शुचि (for शुचिः). — (L. 391) $G_{2-4}$ $M_4$ देह- (for तेन). — (L. 392) $T_1$ तथा; $G_{1-3}$ मया (for तव). — (L. 394) $M_4$ निबोधत (for °ध मे). — (L. 396) $T_1$ अव्यक्तादेव भूतानि; $G_4$ °नि त्र तत्त्वानि (for the prior half). — $T_1$ om. (hapl.) line 398. — (L. 398) $T_2$ चैतन्; $T_3$ $G_4$ त्वेतं; $M_{1-3}$ त्वेतन् (for चैव). $G_2$ [अ]परं (for [अ]वरं). $G_4$ $M_{1-3}$ नानात्वमप($G_4$ °व)रं स्मृतं (for the post. half). — (L. 399) $T_1$ M -सर्गः (for -वर्गः). $G_2$ अपवर्गं; $G_4$ अजरत्वे (for अपवर्गो). — (L. 400) $D_{10}$ $T_1$ $G_{2.4}$ निर्विकार- (for °रः). — (L. 401) $T_1$ M पंचविंशस्तु देवेश (for the prior half). — (L. 403) Kumbh. ed. विकारा विद्यमानस्तु (for the prior half). $G_{1.3}$ $M_4$ -संज्ञिक; Kumbh. ed. -संज्ञकम् (for -संज्ञक). — $T_1$ om. line 404. — (L. 405) $T_1$ यथा; $G_2$ $M_4$ तदा (for तथा). $G_3$ $M_{1.2}$ (*sup. lin.*) निस्तत्त्वं. $T_3$ M सत्त्वं (for सत्त्वस्). $T_2$ गुणाः (for गुणः). $T_1$ तदा भवति निर्गुणः (for the post. half). — (L. 406) $T_1$ प्रकृत्या निर्गुणः शुचिः (for the post. half). — (L. 407) $T_{1.3}$ तथा (for तदा). $T_1$ वर्ग- (for सर्ग-). — (L. 409) $T_3$ क्षरात् (for क्षणात्). — $T_1$ om. lines 410–414. — (L. 410) $M_{1-3}$ अव्यक्ताद् (for °क्ता). $T_2$ व्यतिरिक्ता (for व्यक्तिरुक्ता). — (L. 411) $G_{1-3}$ अक्षर- (for °रः). M क्षरम् (for क्षर). — (L. 414) $D_{10}$ $G_4$ सं-; $T_3$ $M_{1-3}$ यद् (for यं). $G_{1-3}$ मुनयः (for यतयः). $T_3$ प्राहुः; M प्रापुः (for प्राप्ताः). — (L. 417) $T_2$ महात्मानो (for विपाप्मानो). — (L. 418) $T_1$ M धारणे (for सरणे). — (L. 419) $T_1$ परप्रयुक्ता सततं (for the prior half). — (L. 422) $T_1$ मनसा वै स बुद्धिमान् (for the post. half). — (L. 424) $T_1$ च ह (for तथा). M सोन्यश्चाप्राकृतश्च ह (for the post. half). — (L. 425) $T_2$ विकारः (for °र-). $T_1$ M तु सः (for स्मृतः). — (L. 426) $T_1$ जनयेज् (for सृजते). — (L. 427) $G_1$ गुणानामन्यथात्मनः (for the post. half).

तद्वत्क्षेत्रसहस्राणि स एव प्रकरिष्यति ।
क्षेत्रप्रलयतज्ज्ञस्तु क्षेत्रज्ञ इति चोच्यते ।
संयोगो नित्य इत्याहुर्ये जनास्तत्त्वदर्शिनः ।
एवमेष ह्यसत्सच्च विकारपुरुषः स्मृतः ।
विकारापद्यमानं तु विकृतिं प्रवदन्ति नः ।
यदा त्वेष विकारस्य प्रकृतानीति मन्यते ।
तदा विकारतामेति विकारान्यत्वतां व्रजेत् ।
प्रकृत्या च विकारैश्च व्यतिरिक्तो यदा भवेत् ।
शुचि यत्परमं शुद्धं प्रतिबुद्धं सनातनम् ।
अयुक्तं निष्कलं शुद्धमव्ययाजरमव्रणम् ।
समेत्य तेन शुद्धेन बुध्यमानः स भास्वरः ।
विमोक्षं भजते व्यक्तादप्रबुद्धादचेतनात् ।
उदुम्बराद्वा मशकः प्रलयान्निर्गतो यथा ।
तथाव्यक्तस्य संत्यागान्निर्ममः पञ्चविंशकः ।
यथा पुष्करपर्णस्थो जलबिन्दुर्न संश्लिपेत् ।
तथैवाव्यक्तविषये न लिप्येत्पञ्चविंशकः ।
आकाश इव निःसङ्गस्तथासङ्गस्तथा वरः ।
पञ्चविंशतिमो शुद्धो बुद्धेन समतां गतः ।
एतद्धि प्रकृतं ज्ञानं तत्त्वतश्च समुत्थितम् ।
पूर्वजेभ्यस्तथोत्पन्नं ब्रह्मजेभ्यस्ततोऽनघ ।
आदिसर्गो महाबाहो तामसेनावृतं परम् ।
प्रविष्टावयवं देवममेयमजरामरम् ।
सनकः सनन्दनश्चैव तृतीयश्च सनातनः ।
ते विदुः परमं धर्ममव्ययं व्ययधर्षणम् ।
अव्यक्तात्परमात्सूक्ष्मादव्रणान्मूर्तिसंज्ञकात् ।
क्षेत्रज्ञो भगवानास्ते नारायणपरायणः ।
अस्माकं सहजातानामुत्पन्नं ज्ञानमुत्तमम् ।
एते हि मूर्तिमन्तो वै लोकान्प्रविचरामहे ।
पुनः पुनः प्रजाता वै तत्र तत्र पिनाकधृक् ।
द्वंद्वैर्विरज्यमानस्य ज्ञानमुत्पन्नमुत्तमम् ।
कपिलान्मूलआचार्यात्तत्त्वबुद्धिविनिश्चयम् ।
योगसांख्यमवाप्तं मे कार्त्स्न्येन मुनिसत्तमात् ।
तेन संबोधिताः शिष्या बहवस्तत्त्वदर्शिनः ।
तद्बुद्धा बहवः शिष्या मयाप्येतन्निदर्शिताः ।
जन्ममृत्युहरं तथ्यं ज्ञानं ज्ञेयं सनातनम् ।
यज्ज्ञात्वा नानुशोचन्ति तत्त्वज्ञानान्निरिन्द्रियाः ।
शुद्धबीजमलाश्चैव विपङ्का वै निरक्षराः ।
स्वतन्त्रास्ते स्वतन्त्रेण संमिता निष्कलाः स्मृताः ।

— (L. 429) T1 अत्र; G1. 3 M तत्र (for तद्वत्). — (L. 430) T2 -संज्ञस्तु; G4 -तत्त्वज्ञः; Madras ed. -विज्ञस्तु (for -तज्ज्ञस्तु). — T1 om. line 432. — (L. 433) T1 G1 M1-3 विकृतं (for °तिं). T1 वै; T3 M ह (for नः). — T1 om. lines 434-435. — (L. 434) T3 M विकाराणि (for °रस्य). — (L. 436) T1 G1. 3. 4 ह्यतिरिक्तो (for व्य°). T1 G2 यथा; M4 सदा (for यदा). — (L. 437) T1 निष्कलं च; M4 शुद्धं बुद्धं (for प्रतिबुद्धं). — T1 om. lines 438-439. — (L. 438) G1. 3 अव्ययं चाजरामरं (for the post. half). — M ins. after line 438: T1 after line 437:

अतीन्द्रियमबीजं च जन्ममृत्युतमोनुदम् ।

— (L. 439) T2 सत्यमेतेन शुद्धेन बुध्यमानस्त्वभूत्पुरः. — (L. 440) D10 G4 बुद्धाद् (for व्यक्ताद्). — (L. 441) M1-3 वै (for वा). G2 क्रमशः (for मशकः). D10 T1. 3 G4 M3 प्रलयं (for °यान्). — T1 om. line 442. — (L. 442) M (all second time) [प]वाव्यक्त- (for [अ]व्यक्तस्य). T3 M1-3 (last three both times) निर्मलः (for °मः). — After line 442, M ins.:

उदकं वा यथा मत्स्य उत्सृज्याप्नोति निर्मलः ।

— After the above, M repeats line 442. After the repetition, M1-3 read lines 83-84 (transposed) and om. line 444. — (L. 444) T2 G1. 3 लिंपेत् (for लिप्येत्). — (L. 445) T3 इति (for इव). D10 G3. 4 M1. 2. 4 परः (for वरः). — (L. 446) T1 शुद्धो (for बुद्धो). T1 सह सं- (for समतां). — (L. 447) T1 M3. 4 प्राकृतं (for प्र°). — (L. 448) T1 तथा मम; Kumbh. ed. तथानघ (for ततोऽनघ). — T1 om. lines 449-450. — (L. 449) M आदिसर्गे (for °र्गो). M1-3 [आ]मृतं (for [आ]वृतं). — (L. 450) M प्रविष्टास्तेऽव्ययं देवम् (for the prior half). — After line 450, T1 reads lines 455. — (L. 451) Prior half hypermetric. — (L. 452) T1 M ब्रह्म (for धर्मम्). D10 T1 M व्ययमव्ययधर्मिणं (D10 °र्पणं) (for the post. half). — T1 om. lines 453-454. — (L. 455) M1-3 अस्माकं सहजानां तु ज्ञानमुत्पन्नमुत्तमं. — G2 om. (hapl.) lines 456-458. — (L. 456) T1 -चरंत्युत (for -चरामहे). — (L. 457) T1 प्रजायंते; M1-3 °ताश्च (for °ता वै). D10 T1 पिनाकधृत् (for °धृक्). — (L. 458) T3 द्वंद्वैर्विरममाणस्य (for the prior half). T1 नारायणपरायणः (for the post. half). — (L 459) M1-3 मूलम् (for मूल-). T1 अस्माकं ज्ञानमुत्पन्नम् (for the prior half). D10 T2 G4 -विनिश्चयः (for °श्चयम्). T1 आचार्यात्कपिलादिह; M1-3 तत्त्वज्ञानविनिश्चितं (for the post. half). — (L. 460) M1-3 सांख्ययोगम्; M4 योगं सांख्यम् (for योगसांख्यम्). G2 वै (for मे). — T1 om. lines 462-463. — (L. 462) D10 T2 G2. 4 तद्बुद्ध्या (for °द्धा). G1. 3. 4 निदर्शितं (for °ताः). — (L. 464) M4 [अ]भि- (for [अ]नु-). — T1 om. lines 465-470. — (L. 465) G3 [अ]पि (for [ए]व). — (L. 466) G4 संमता; M

शाश्वताश्चाव्ययाश्चैव तमोग्राह्याश्च भास्वराः ।
विपाप्मानस्तथा सर्वे सत्त्वस्थाश्चापि निर्व्रणाः ।
विमुक्ताः केवलाश्चैव वीतमोहभयास्तथा ।
अमूर्तास्ते महाभाग सर्वे च विगतज्वराः ।
हिरण्यनाभस्त्रिशिरास्तथा प्रह्लादभास्करौ ।
वसुर्विश्वावसुश्चैव सार्धं पञ्चशिखस्तथा ।
गार्ग्योऽथासुरिरावन्त्यो गौतमोऽव्रत एव च ।
कात्यायनोऽथ नमुचिर्हरिश्च दमनश्च ह ।
एते चान्ये च बहवस्तत्त्वमेवोपदर्शिताः ।
केचिन्मुक्ताः स्थिताः केचिच्छन्दतश्चापरे मृताः ।
दर्शितास्त्रिविधं बन्धं विमोक्षं त्रिविधं तथा ।
अज्ञानं चैव रागश्च संयोगं प्राकृतं तथा ।
एतेभ्यो बन्धनं प्रोक्तं विमोक्षमपि मे शृणु ।
परितस्तावता सम्यक्संबन्धो यावता कृतः ।
कृत्स्नक्षयपरित्यागाद्विमोक्ष इति नः श्रुतिः ।
निवृत्तः सर्वसङ्गेभ्यः केवलः पुरुषोऽमलः ।

भीष्मः ।

इत्येवमुक्त्वा भगवानीश्वराय महात्मने ।
सनत्कुमारः प्रययावाकाशं समुपाश्रितः ।

Colophon.

12

V1 B Dn D1–7. 9. 10 ins. after 13. 111 : D8 after 13. 110 :

युधिष्ठिरः ।

सर्वेषामुपवासानां यच्छ्रेयः सुमहत्फलम् ।
यच्चाप्यसंशयं लोके तन्मे त्वं वक्तुमर्हसि ।

भीष्मः ।

शृणु राजन्यथा गीतं स्वयमेव स्वयंभुवा ।
यत्कृत्वा निर्वृतो भूयात्पुरुषो नात्र संशयः ।
द्वादश्यां मार्गशीर्षे तु अहोरात्रेण केशवम् ।
अर्च्याश्वमेधमाप्नोति दुष्कृतं चास्य नश्यति ।
तथैव पौषमासे तु पूज्य नारायणेति च ।
वाजपेयमवाप्नोति सिद्धिं च परमां व्रजेत् ।
अहोरात्रेण द्वादश्यां माघमासे तु माधवम् ।
राजसूयमवाप्नोति कुलं चैव समुद्धरेत् ।
तथैव फाल्गुने मासि गोविन्देति च पूजयेत् ।
अतिरात्रमवाप्नोति सोमलोकं च गच्छति ।
अहोरात्रेण द्वादश्यां चैत्रे विष्णुरिति स्मरन् ।
पौण्डरीकमवाप्नोति देवलोकं च गच्छति ।
वैशाखमासे द्वादश्यां पूजयन्मधुसूदनम् ।
अग्निष्टोममवाप्नोति सोमलोकं च गच्छति ।
अहोरात्रेण द्वादश्यां ज्येष्ठे मासि त्रिविक्रमम् ।
गवामयमवाप्नोति अप्सरोभिश्च मोदते ।
आषाढे मासि द्वादश्यां वामनेति च पूजयेत् ।

---

समेता ( for संमिता ). — ( L. 467 ) T2 निष्कलाश् ( for चाव्ययाश् ). — ( L. 468 ) T2 G1 M4 निर्घृणाः ( for निर्व्रणाः ). — ( L. 470 ) T2. 3 महाभागा ( for °ग ). M1–3 ते ( for च ). — ( L. 471 ) T2 तदा ( for तथा ). — ( L. 473 ) G4 गर्गो ( for गार्ग्यो ). — ( L. 474 ) T1 मनुजश् ( for दमनश् ). — ( L. 475 ) G4 M1. 3 तथ्यम् ( for तत्त्वम् ). T1 तत्त्वस्यैवोपदर्शिनः ; G1. 3 तथ्यमेवोपपादिताः ( for the post. half ). — ( L. 476 ) M4 तथा ( for स्थिताः ). — T3 om. line 477. — ( L. 478 ) M1–3 संयोगः प्राकृतस्तथा ( for the post. half ). — ( L. 479 ) G1. 3 भूतेभ्यो ( for ए° ). — ( L. 481 ) D10 G4 सकृत ( for कृत्स्न- ). — G1–3 om. the ref. — ( L. 483 ) T1 प्रययौ ( for भगवान् ). T1 शंकराय ( for ईश्व° ). — G2 om. line 484. — ( L. 484 ) T1 भगवान् ( for प्रययाव् ). — Colophon. *Sub-parvan :* D10 दानधर्म. — *Adhy. name :* D10 सनत्कुमारशंकरसंवादः ; T2. 3 G2 M2–4 सनत्कुमाररुद्रसंवादः ; M1 सनत्कुमारसंवादः. — *Adhy. no. :* T1 M4 163 ; T2. 3 G2. 4 170 ; G1. 3 M1 164 ; M2. 3 165.

12

D8 om. the ref. — ( L. 5 ) B5 केवलं ( for केशवम् ). — ( L. 6 ) B2. 5 Dn D5. 10 प्राप्नोति ( for आ° ). — ( L. 8 ) V1 राजसूयम् ( for वाजपे° ). B3 देवलोकं च गच्छति ( for the post. half ). — ( L. 9 ) V1 माघे ( for माघ- ). — ( L. 11 ) V1 B Dn1 D5. 8. 10 पूजयन् ( for °येत् ). — ( L. 14 ) B1. 4 पुंडरीकम् ( for पौण्ड° ). — ( L. 15 ) B2. 3 -मासि ( for -मासे ). D8 पूजयेन् ( for °यन् ). — ( L. 16 ) D10 om. ( hapl. ) from the post. half up to the prior half of line 18. B5 स ( for च ). — ( L. 18 ) Bom. ed. गवां मेधम् ( for गवामयम् ). — ( L. 19 ) V1 B Dn1. n3 D5. 10 पूजयन् ( for °येत् ). — ( L. 24 ) B5 हि च ( by transp. ) ; Dn2 [ए]व हि ; D8 [ऽ]पि च. V1 पूतात्मा भवतेति च ; B3 °त्मा भवतीति ह ( for the post. half ). — After the prior half of line 28, Dn2 ins. :

जायते च क्षितौ नृपः ।
द्वादश्यां स्वस्तिकैरर्च्य पद्मनाभेति नित्यशः ।
विष्णुलोकमवाप्नोति.

नरमेधमवाप्नोति पुण्यं च लभते महत् ।
अहोरात्रेण द्वादश्यां श्रावणे मासि श्रीधरम् ।
पञ्चयज्ञानवाप्नोति विमानस्थः स मोदते ।
तथा भाद्रपदे मासि हृषीकेशेति पूजयन् ।
सौत्रामणिमवाप्नोति पूतात्मा भवते च हि ।
द्वादश्यामाश्विने मासि पद्मनाभेति चार्चयन् ।
गोसहस्रफलं पुण्यं प्राप्नुयान्नात्र संशयः ।
द्वादश्यां कार्त्तिके मासि पूज्य दामोदरेति च ।
गवां यज्ञमवाप्नोति पुमान्स्त्री वा न संशयः ।
अभ्यर्च्य पुण्डरीकाक्षमेवं संवत्सरं तु यः ।
जातिस्मरत्वं प्राप्नोति विन्द्याद्बहु सुवर्णकम् ।
अहन्यहनि तद्भावमुपेन्द्रं योऽधिगच्छति ।
समाप्ते भोजयेद्विप्रानथ वा दापयेद्घृतम् ।
अतःपरं नोपवासो भवतीति विनिश्चयः ।
उवाच भगवान्विष्णुः स्वयमेव पुरातनम् ।

Colophon.

## 12A

$V_1$ $B_{2.4.5}$ Dn $D_{5.10}$ cont. : $D_8$ ins. after **13. 111 :**

वैशंपायनः ।

शरतल्पगतं भीष्मं वृद्धं कुरुपितामहम् ।
उपगम्य महाप्राज्ञः पर्यपृच्छद्युधिष्ठिरः ।

युधिष्ठिरः ।

ज्ञानं रूपं च सौभाग्यं प्रियत्वं च कथं भवेत् ।
धर्मार्थकामसंयुक्तः सुखभागी कथं भवेत् ।

भीष्मः ।

मार्गशीर्षस्य मासस्य चन्द्रे मूलेन संयुते ।
पादौ मूलेन राजेन्द्र जङ्घायामथ रोहिणीम् ।
अश्विन्यां सक्थिनी चैव ऊरू चाषाढयोस्तथा ।
गुह्यं तु फाल्गुनी विद्यात्कृत्तिका कटिकास्तथा ।
नाभिं भाद्रपदे विद्याद्रेवत्यामक्षिमण्डलम् ।
पृष्ठमेव धनिष्ठासु अनुराधोत्तरास्तथा ।
बाहुभ्यां तु विशाखासु हस्तौ हस्तेषु निर्दिशेत् ।
पुनर्वस्वङ्गुली राजन्नाश्लेषासु नखास्तथा ।
ग्रीवा ज्येष्ठा च राजेन्द्र श्रवणेन तु कर्णयोः ।
मुखं पुष्येण राजेन्द्र दन्तोष्ठौ स्वातिरुच्यते ।
हस्तं शतभिषां चैव मघां चैवाथ नासिकाम् ।
नेत्रे मृगशिरो विद्याल्ललाटं मित्रमेव तु ।
भरण्यां तु शिरो विद्यात्केशानार्द्रां नराधिप ।
समाप्ते तु घृतं दद्याद्ब्राह्मणे वेदपारगे ।
सुभगो दर्शनीयश्च ज्ञानी भोगी च जायते ।

---

— $D_8$ om. lines 29–30. — (L. 29) $V_1$ $B_8$ अभ्यर्चेत् ; $B_5$ $Dn_3$ °र्च्येत् ; $Dn_1$ अर्चयन् ; $Dn_2$ $D_6$ अर्चयेत् ( for अभ्यर्च्य ). — (L. 30) $V_1$ $B_{1.4}$ $Dn_3$ चाप्नोति ( for प्रा° ). — ( L. 31 ) $B_3$ सद्भावम् ( for त° ). — ( L. 32 ) $B_5$ भोजने ( for °येद् ). $B_8$ तथा चाहारयेद्घृतं ( for the post. half ). — ( L. 33 ) $D_{5.10}$ विपाश्चिता ( for विनिश्चयः ). — ( L. 34 ) $B_8$ पुरातनः ( for °नम ). — Colophon. *Parvan name :* $B_{1-4}$ $Dn_3$ शांति. — *Sub-parvan :* $V_1$ $B_{1-3.5}$ Dn $D_{5.8.10}$ दानधर्म. — *Adhy. name :* $V_1$ विष्णोर्नामद्वादशकं ; $B_1$ $Dn_1$ $D_3$ विष्णोर्द्वादशनाम ; $B_{2.4}$ विष्णोर्द्वादशनामकं ; $B_{3.5}$ $Dn_2$ विष्णोर्द्वादशकं ; $Dn_3$ द्वादशनामकं. — *Adhy. no. :* $V_1$ 109 ; $B_5$ 99 ; $D_{10}$ 116 ; $Dn_1$ 107.

12 A

( L. 1 ) $B_{4.5}$ $D_{5.10}$ कुरुवृद्धं ( for वृद्धं कुरु- ). — ( L. 2 ) $B_4$ उपागम्य ( for उप° ). — ( L. 3 ) $D_{5.10}$ ज्ञान- ( for ज्ञानं ). $V_1$ $B_{2.4}$ Dn अंगानां ( $B_{2.4}$ विज्ञानं ) रूप- सौभाग्यं ; $B_5$ विज्ञानं रूपसंपन्नं ( for the prior half ). $Dn_1$ प्रियं चैव ( for प्रियत्वं च ). $B_2$ भवेत्कथं ( by transp. ). — ( L. 6 ) $B_2$ जंघाभ्याम् ( for °याम् ). $V_1$ $Dn_3$ रोहिण्यां जंघयोस्तथा ; $B_{4.5}$ जंघाभ्यामथ रोहिणी ( for the post. half ). — $Dn_3$ om. ( hapl. ) line 7. — ( L. 8 ) $V_1$ $Dn_3$ च ( $Dn_3$ तु ) फल्गुनीं. $B_5$ [अ]श्विन्यां ( for विद्यात् ). $B_{2.4}$ गुह्यं च फल्गुनाश्विभ्यां ; $D_{5.10}$ गुह्यं तु फल्गुनी चैव ( for the prior half ). $V_1$ $Dn_{1.n3}$ कृत्तिका कटिमे( $Dn_3$ °रे )व च ; $B_{2.4.5}$ $D_5$ कृत्तिकां कटिकां तथा ( for the post. half ). — ( L. 9 ) $B_{2.4.5}$ $D_{5.10}$ पादौ ( $B_2$ °श्वौ ) भाद्रपदं विद्याद् ( $D_{5.10}$ चैव ) ( for the prior half ). — ( L. 10 ) $V_1$ $B_{2.4.5}$ $Dn_3$ अनुराधोदरं तथा ( for the post. half ). — ( L. 11 ) $V_1$ $Dn_3$ बाहू चैव ( for बाहुभ्यां तु ). $Dn_3$ हस्तेन ( for °षु ). — ( L. 12 ) $B_4$ आश्लेषास्तु मघास्तथा ; $B_5$ °षां तु मघां तथा ( for the post. half ). — ( L. 13 ) $B_{2.4.5}$ $D_{5.10}$ ज्येष्ठे ( for ज्येष्ठा ). — ( L. 14 ) $Dn_{1.n2}$ दानेन ; $D_{5.10}$ च तथा ( for राजेन्द्र ). $B_{2.4}$ दंतौष्ठं ; $B_5$ दंतोष्ठं ( for °ष्ठौ ). $V_1$ $Dn_3$ दंतौ( $Dn_3$ °तो )ष्ठं स्वातिमेव च ( for the post. half ). — ( L. 15 ) $B_{2.4.5}$ $D_{5.10}$ विद्यान् ( for चैव ). $Dn_1$ हस्तेनांशं शतभिषा ; $Dn_2$ हस्तेन शतकं विद्यान् ( for the prior half ). $D_{5.10}$ मघा चैवाथ नासिका ( for the post. half ). — ( L. 16 ) $V_1$ $B_{2.4.5}$ $Dn_{1.n2}$ $D_{5.10}$ ललाटे ( for °टं ). — ( L. 17 ) $D_{5.10}$ भरण्यास् ( for °ण्यां ). $B_5$ $Dn_2$ $D_{5.10}$ आर्द्रां ( for आर्द्रो ). $V_1$ $Dn_3$ केशानार्द्रासु भारत ( for the post. half ). — ( L.

जायते परिपूर्णाङ्गः पौर्णमास्यामिवोडुराट् ।

Colophon.

## 13

After 13. 124, $D_{10}$ S Kumbh. ed. Madras ed. and Cv ins.:

युधिष्ठिरः ।

यज्ज्ञेयं परमं कृत्यमनुष्ठेयं महात्मभिः ।
सारं मे सर्वशास्त्राणां वक्तुमर्हस्यनुग्रहात् ।

भीष्मः ।

श्रूयतामिदमत्यन्तं गूढं संसारमोचनम् ।
श्रोतव्यं च त्वया सम्यग्ज्ञातव्यं च विशां पते ।
पुण्डरीकः पुरा विप्रः पुण्यतीर्थे जपान्वितः ।
नारदं परिपप्रच्छ श्रेयो योगपरं मुनिम् ।
नारदश्चाब्रवीदेनं ब्रह्मणोक्तं महात्मना ।
शृणुष्वावहितस्तात ज्ञानयोगमनुत्तमम् ।
अप्रभूतं प्रभूतार्थं वेदशास्त्रार्थसारकम् ।
यः परः प्रकृतेः प्रोक्तः पुरुषः पञ्चविंशकः ।
स एव सर्वभूतात्मा नर इत्यभिधीयते ।
नराज्जातानि तत्त्वानि नाराणीति ततो विदुः ।
तान्येव चायनं तस्य तेन नारायणः स्मृतः ।
नारायणाज्जगत्सर्वं सर्गकाले प्रजायते ।
तस्मिन्नेव पुनस्तच्च प्रलये संप्रलीयते ।
नारायणः परं ब्रह्म तत्त्वं नारायणः परः ।
परादपि परश्चासौ तस्मान्नास्ति परात्परम् ।
वासुदेवं तथा विष्णुमात्मानं च तथा विदुः ।
संज्ञाभेदैः स एवैकः सर्वशास्त्राभिसंस्कृतः ।
आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ।
तस्मात्त्वं गहनान्सर्वांस्त्यक्त्वा शास्त्रार्थविस्तरान् ।
अनन्यचेता ध्यायस्व नारायणमजं विभुम् ।
मुहूर्तमपि यो ध्यायेन्नारायणमतन्द्रितः ।
सोऽपि तद्गतिमाप्नोति किं पुनस्तत्परायणः ।
नमो नारायणायेति यो वेद ब्रह्म शाश्वतम् ।
अन्तकाले जपन्नेति तद्विष्णोः परमं पदम् ।
श्रवणान्मननाच्चैव गीतिस्तुत्यर्चनादिभिः ।
आराध्यं सर्वदा ब्रह्म पुरुषेण हितैषिणा ।
लिप्यते न स पापेन नारायणपरायणः ।
पुनाति सकलं लोकं सहस्रांशुरिवोदितः ।
ब्रह्मचारी गृहस्थोऽपि वानप्रस्थोऽथ भिक्षुकः ।
केशवाराधनं हित्वा नैव याति परां गतिम् ।
जन्मान्तरसहस्रेषु दुर्लभा तद्गता मतिः ।
तद्भक्तवत्सलं देवं समाराधय सुव्रत ।
नारदेनैवमुक्तस्तु स विप्रोऽभ्यर्चयद्धरिम् ।
स्वप्नेऽपि पुण्डरीकाक्षं शङ्खचक्रगदाधरम् ।
किरीटकुण्डलधरं लसच्छ्रीवत्सकौस्तुभम् ।
तं दृष्ट्वा देवदेवेशं प्राणमत्संभ्रमान्वितः ।
अथ कालेन महता तथा प्रत्यक्षतां गतः ।
संस्तुतः स्तुतिभिर्वेदैर्देवगन्धर्वकिंनरैः ।
अथ तेनैव भगवानात्मलोकमधोक्षजः ।

18) $V_1$ $Dn_8$ समाप्तौ च (for °प्ते तु). — (L. 19) $B_{2,4,5}$ $Dn_1$, $n_2$ $D_{5,10}$ ज्ञानभाग्यथ ($B_{2,4}$ °गश्च) जायते (for the post. half). — (L. 20) $D_{5,10}$ पूर्णांगः पूर्णमास्यां वै (for the prior half). $B_{2,4,5}$ $Dn_1$, $n_2$ पौर्णमास्येव चंद्रमाः; $D_{5,10}$ भवेदिति च चंद्रमाः (for the post. half). — Colophon om. in $B_{2,4}$. — *Parvan name*: $Dn_3$ शांति. — *Sub-parvan*: $V_1$ $B_6$ Dn $D_{5,10}$ दानधर्म. — *Adhy. name*: $V_1$ $B_5$ $Dn_2$, $n_8$ अंगविधिः; $Dn_1$ अत्रिरागविधिः. — *Adhy. no.*: $V_1$ 110; $B_5$ 100; $Dn_1$ 108; $D_{10}$ 116.

13

— (L. 1) $T_1$ M यच्छ्रेयः (for यज्ज्ञेयं). — (L. 3) $T_1$ आख्यानं; $T_3$ अत्यर्थं (for °न्तं). — (L. 5) $T_1$ $G_4$ जलाप्लुतः (for जपान्वितः). — (L. 6) $D_{10}$ $G_2$ हि परमं; M योगिवरं (for योगपरं). $T_1$ श्रेयो योगपरायणः (for the post. half). — (L. 7) $T_1$ M अथात्मनः (for महात्मना). — (L. 8) $T_2$ -यज्ञम् (for -योगम्). — (L. 9) M अल्पग्रंथं (for अप्रभूतं). $D_{10}$ $T_2$ -सागरं (for -सारकम्). — $G_3$ om. from the post. half of line 10 up to the prior half of line 14. — (L. 12) $G_4$ तु (for [इ]ति). — (L. 13) $T_1$ अयनं (for चा°). — (L. 15) $T_1$ तत्र (for तच्च). — (L. 17) $T_2$ पुनश्च (for परश्च). $G_2$ परः (for परम्). — (L. 19) $D_{10}$ $M_2$ -संस्तुतः (for -संस्कृतः). — (L. 21) $M_4$ सुनिश्चित्य (for °ष्पन्नं); $T_2$ $M_4$ ध्यायेन्नारायणं सदा (for the post. half). — (L. 22) $T_2$ सर्वं (for सर्वांस्). — (L. 25) $T_{1,3}$ $G_3$ M सद्गतिम् (for त°). $M_3$ तत्परायणं (for °णः). $T_2$ किं पुनस्तत्परो जनः (for the post. half). — (L. 26) $M_2$ (*inf. lin.* as above) वदेद् (for वेद). — (L. 29) $G_2$ $M_{1-3}$ आराध्यः (for °ध्यं). — (L. 30) $G_3$ -परं पुमान् (for -परायणः). — (L. 31) $T_1$ M पुनाति लोकं सकलं (for the prior half). — (L. 33) $D_{10}$ न याति परमां गतिं (for the post. half). — Before line 36, $T_1$ $G_4$ ins. भीष्मः. — (L. 41) $T_2$ संस्कृतः (for संस्तुतः). — (L. 43) $T_2$ $G_{1,3,4}$ योग- (for योगि-). — (L. 46) $T_1$ अमर-

गतः संपूजितः सर्वैः स योगिनिलयो हरिः ।
तस्मात्त्वमपि राजेन्द्र तद्भक्तस्तत्परायणः ।
अर्चयित्वा यथायोगं भजस्व पुरुषोत्तमम् ।
अजरममरमेकं ध्येयमाद्यन्तशून्यं
सगुणमगुणमाद्यं स्थूलमत्यन्तसूक्ष्मम् ।
निरुपममुपमेयं योगिविज्ञानगम्यं
त्रिभुवनगुरुमीशं त्वं प्रपद्यस्व विष्णुम् ।

Colophon.

## 14

$V_1$ B Dn $D_{6-8}$ ins. after 13. 125 : $D_{4.5}$ Cv after 13. 151 : $D_9$ after 13. 151. 39[ab] :

युधिष्ठिरः ।

जन्म मानुष्यकं प्राप्य कर्मक्षेत्रं सुदुर्लभम् ।
श्रेयोर्थिना दरिद्रेण किं कर्तव्यं पितामह ।
दानानामुत्तमं यच्च देयं यच्च यथा यथा ।
मान्यान्पूज्यांश्च गाङ्गेय रहस्यं वक्तुमर्हसि ।

वैशंपायनः ।

एवं पृष्टो नरेन्द्रेण पाण्डवेन यशस्विना ।
धर्माणां परमं गुह्यं भीष्मः प्रोवाच पार्थिवम् ।

भीष्मः ।

शृणुष्वावहितो राजन्धर्मगुह्यानि भारत ।
यथा हि भगवान्व्यासः पुरा कथितवान्मयि ।
देवगुह्यमिदं राजन्यमेनाक्लिष्टकर्मणा ।
नियमस्थेन युक्तेन तपसो महतः फलम् ।
येन यः प्रीयते देवः प्रीयन्ते पितरस्तथा ।
ऋषयः प्रमथाः श्रीश्च चित्रगुप्तो दिशां गजाः ।
ऋषिधर्मः स्मृतो यत्र सरहस्यो महाफलः ।
महादानफलं चैव सर्वयज्ञफलं तथा ।
यश्चैतदेवं जानीयाज्ज्ञात्वा वा कुरुतेऽनघ ।
स दोषो दोषवांश्चेह तैर्गुणैः सह युज्यते ।
दशसूनासमं चक्रं दशचक्रसमो ध्वजः ।
दशध्वजसमा वेश्या दशवेश्यासमो नृपः ।
अर्धेनैतानि सर्वाणि नृपतिः कथ्यतेऽधिकः ।
त्रिवर्गसहितं शास्त्रं पवित्रं पुण्यलक्षणम् ।
धर्मव्याकरणं पुण्यं रहस्यश्रवणं महत् ।
श्रोतव्यं धर्मसंयुक्तं विहितं त्रिदशैः स्वयम् ।
पितॄणां यत्र गुह्यानि प्रोच्यन्ते श्राद्धकर्मणि ।
देवतानां च सर्वेषां रहस्यं कथ्यतेऽखिलम् ।
ऋषिधर्मः स्मृतो यत्र सरहस्यो महाफलः ।
महायज्ञफलं चैव सर्वदानफलं तथा ।
ये पठन्ति सदा मर्त्या येषां चैवोपतिष्ठति ।
श्रुत्वा च फलमाचष्टे स्वयं नारायणः प्रभुः ।
गवां फलं तीर्थफलं यज्ञानां चैव यत्फलम् ।
एतत्फलमवाप्नोति यो नरोऽतिथिपूजकः ।
श्रोतारः श्रद्दधानाश्च येषां शुद्धं च मानसम् ।
तेषां व्यक्तं जिता लोकाः श्रद्दधानेन साधुना ।
मुच्यते किल्बिषाच्चैव न स पापेन लिप्यते ।
धर्मं च लभते नित्यं प्रेत्यलोकगतो नरः ।

---

मजरम् ( by transp. ). — ( L. 48 ) $D_{10}$ $T_2$ G योग- ( for योगि- ). — After line 49, $T_1$ ins. :

यस्मिन्नभिन्नमपि भिन्नमिवावभाति
लोकत्रयं जलशशाङ्कवदप्रमेयम् ।
तस्मान्नरेन्द्र तव विप्रतिपत्तिमुक्ता
नारायणे भवतु भक्तिरमुक्तभावा ।

— Colophon. *Sub-parvan :* $D_{10}$ दानधर्म. — *Adhy. name :* T $G_{1.2}$ $M_4$ पुंडरीकनारदसंवादः. — *Adhy. no. :* $D_{10}$ $T_{2.3}$ $G_{2.4}$ 183 ; $T_1$ 175 ; $G_{1.3}$ $M_1$ 177 ; $M_{2.3}$ 178 ; $M_4$ 176.

14

The portion of the text from line 1 up to the end of line 155 is lost in $D_9$ on missing folios. $B_{1.3}$ $Dn_1$ om. lines 1–2. — ( L. 1 ) $B_{2.5}$ $Dn_3$ जन्ममायुष्यमासाद्य (sic); $B_4$ जन्ममासाद्यमायुष्यं ( sic ) ( for the prior half ). — ( L. 2 ) $B_3$ द्विजेंद्रेण ( for दरिद्रेण ). $Dn_3$ यत् ( for किं ). — ( L. 3 ) $D_5$ तथा ( for the second यथा ). — ( L. 4 ) $B_{1.3}$ अर्च्यांन् ( for मान्यान् ). — $D_8$ om. the ref. — ( L. 8 ) $B_1$ $D_8$ मे ( for हि ). $B_1$ तदा ; $B_{3.5}$ $D_8$ तथा ( for मयि ). — After line 8, $D_8$ reads lines 20–24. $V_1$ $B_1$ om. lines 9–16. — ( L. 14 ) $B_3$ $D_8$ महायज्ञ- ( for °दान- ). $B_3$ $D_8$ सर्वदान- ( for °यज्ञ- ). — ( L. 16 ) $B_4$ $Dn_{2.3}$ स दोषवांश्चेह भवेद् (for the prior half). $Dn_2$ संप्र- ( for सह ). $B_{3-5}$ $Dn_3$ गुणैश्च समयुज्यत ( *for the post. half* ). — Lines 17–18 = ( var. ) Manu. 4. 85. — ( L. 17 ) $D_8$ चक्री ( for चक्रं ). $D_8$ दशचाक्रिसमो ध्वजी ( for the post. half ). — ( L. 18 ) $Dn_2$ -ध्वजसमो. — ( L. 19 ) $V_1$ B $Dn_3$ रूपतः कश्चरेत कः ( for the post. half ). — ( L. 20 ) $B_{3.4}$ -संहितं ( for -स° ). — ( L. 21 ) $V_1$ $B_1$ $D_8$ रहस्यं ( for °स्य- ). — ( L. 22 ) $B_5$ समं ( for स्वयम् ). — ( L. 27 ) $Dn_3$ तेषां ( for येषां ). $B_3$ -तिष्ठते ( for °ति ). — ( L. 28 ) $D_8$ आचष्ट ( for °ष्टे ). — ( L. 32 ) $B_1$ वृत्तिं ( for व्यक्तं ). — ( L. 33 ) $V_1$ $B_{1.3.4}$ $Dn_3$ $D_8$ च ( for स ). — ( L. 36 ) $B_1$ प्रत्यभाषत ( for पर्यं° ). — ( L. 38 ) $B_3$

कस्यचित्त्वथ कालस्य देवदूतो यदृच्छया ।
स्थितो ह्यन्तर्हितो भूत्वा पर्यभाषत वासवम् ।
यौ तौ कामगुणोपेतावश्विनौ भिषजां वरौ ।
आज्ञयाहं तयोः प्राप्तः सनरान्पितृदेवतान् ।
कस्माद्धि मैथुनं श्राद्धे दातुर्भोक्तुश्च वर्जितम् ।
किमर्थं च त्रयः पिण्डाः प्रविभक्ताः पृथक्पृथक् ।
प्रथमः कस्य दातव्यो मध्यमः क्व च गच्छति ।
उत्तरश्च स्मृतः कस्य एतदिच्छामि वेदितुम् ।
श्रद्दधानेन दूतेन भाषितं धर्मसंहितम् ।
पूर्वस्थास्त्रिदशाः सर्वे पितरः पूज्य खेचरम् ।

पितरः ।

स्वागतं तेऽस्तु भद्रं ते श्रूयतां खेचरोत्तम ।
गूढार्थः परमः प्रश्नो भवता समुदीरितः ।
श्राद्धं दत्त्वा च भुक्त्वा च पुरुषो यः स्त्रियं व्रजेत् ।
पितरस्तस्य तं मासं तस्मिन्रेतसि शेरते ।
प्रविभागं तु पिण्डानां प्रवक्ष्याम्यनुपूर्वशः ।
पिण्डो ह्यधस्ताद्गच्छंस्तु अप आविश्य भावयेत् ।
पिण्डं तु मध्यमं तत्र पत्नी त्वेका समश्नुते ।
पिण्डस्तृतीयो यस्तेषां तं दद्याज्जातवेदसि ।
एष श्राद्धविधिः प्रोक्तो यथा धर्मो न लुप्यते ।
पितरस्तस्य तुष्यन्ति प्रहृष्टमनसः सदा ।
प्रजा विवर्धते चास्य अक्षयं चोपतिष्ठति ।

देवदूतः ।

आनुपूर्व्येण पिण्डानां प्रविभागः पृथक्पृथक् ।
पितॄणां त्रिषु सर्वेषां निरुक्तं कथितं त्वया ।
एकः समुद्धृतः पिण्डो ह्यधस्तात्कस्य गच्छति ।

---

. सुरराट् ( for सनरान् ). $B_1$ सनरानपि दैवतान् ( for the post. half ). — For lines 1–38, $D_{4-7}$ subst. :

युधिष्ठिरः ।

बहु पृष्टोऽसि मे तात बाल्यभावे पिता यथा ।
क्षमस्व कुरुशार्दूल विकलः प्रतिभासि मे ।
विश्रम्य धीमते कर्म प्रश्नं प्रश्नविदां वर ।
ब्रूहि सत्यं पुनर्भीष्म यदि सत्यं नु मन्यसे ।
श्राद्धदानादिसंक्षेपं सरहस्यं विधानतः ।
यच्च यस्य यथेष्टं वै दानं देवस्य पूर्ववत् ।
तत्तद्वद यथा श्रुत्वा करिष्येऽहमसंशयम् ।

भीष्मः ।

शृणु पुत्र वचो मह्यं सत्यमेतद्धि निश्चितम् ।
हृत्स्थं मम रहस्यं हि देवानामपि चैव ह ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
मार्कण्डेयादयो राजंस्तेषां चापि श्रुतं मया ।
देवलोके महापुण्या सुधर्मा नाम वै सभा ।
तत्र ब्रह्मादयो देवा अमावास्यां समागताः ।
ईश्वरो लोकपालाश्च पितरोऽथ बृहस्पतिः ।
सिद्धाश्च ऋषयश्चैव गन्धर्वाप्सरसस्तथा ।
स्कन्दश्च चित्रगुप्तश्च उमारुन्धतिरेव च ।
विश्वेदेवगणा राजन्यतयश्च तथापरे ।
समेता वसवश्चैव सूर्याचन्द्रमसौ तथा ।
नद्यश्च याः पुण्यजला ये चान्येऽपि जलाशयाः ।
पृथिव्यां यानि तीर्थानि आसमुद्रसरांसि च ।
गन्धर्वयक्षरक्षांसि पिशाचानां च ये गणाः ।
तथा भूतगणाश्चैव सकिंनरमहोरगाः ।
एतेऽन्ये च समागम्य मेरुपृष्ठे दिवौकसः ।
तेषां समुपविष्टानां कथा दिव्याः प्रवर्तिताः ।
कथायां तत्र राजेन्द्र देवदूतः प्रभञ्जनः ।
उवाच वाग्मी स तदा तत्कालसदृशं वचः ।

देवदूतः ।

पूज्यन्ते चाथ पितरोऽमावास्यायां सदैव हि ।
कस्मात्त्रयीधर्मपरैर्गृहस्थैः फलकाङ्क्षिभिः ।

[ ( L. 1 ) $D_4$ पृच्छसि ( for पृष्टोऽसि ). $D_4$ यथापि वा ; $D_6$ यथा पिता ( by transp. ). — ( L. 5 ) $D_5$ -संक्षेपात् ( for °पं ). — ( L. 6 ) $D_7$ यस्य यच्च ( by transp. ). — ( L. 7 ) $D_4$ न संशयः ( for असंशयम् ). — ( L. 9 ) $D_5$ हि ( for ह ). — ( L. 19 ) $D_4$ वाप्यः ( for च, याः ). — ( L. 21 ) $D_{4,5}$ -नागाश्च ( for -रक्षांसि ). — ( L. 27 ) $D_5$ वा ( for च ). ]

— ( L 39 ) $D_{4-7}$ दाता भोक्ता च वर्जयेत् ( for the post. half ). — ( L. 41 ) $D_{4-7}$ अधस्ताद्दी( $D_5$ प्रथमो दी )यते कस्य मध्यमः कस्य दीयते. — ( L. 42 ) $D_7$ उत्तमश् ( for °रश्च ). — $D_{4,6,7}$ om. lines 43–44. — ( L. 43 ) $B_{1,4}$ ( marg. as above ). $_5$ भूतेन ( for दू° ). $D_8$ भाषितं धर्मसुत्तमं ( for the post. half ). — ( L. 45 ) $D_{4-7}$ च ( for ऽस्तु ). — ( L. 46 ) $D_{6,7}$ भवता समुदाहृतः ( for the post. half ). — ( L. 47 ) $D_8$ कृत्वा ( for दत्त्वा ). $D_{4,6,7}$ पुरुषो ( for भुक्त्वा च ). $D_6$ om. from व्रजेत् up to शेरते ( in line 48 ). $D_{4,6,7}$ यत्स्वयं मैथुनं व्रजेत् ( for the post. half ). — $D_4$ om. line 48. — For line 48, $D_{6,7}$ subst. :

भवन्ति पितरस्तस्य तं मासं रेतभोजनाः ।
पितृदेवाह्नरात्री द्वे वर्जयेत्तत्र मैथुनम् ।

— ( L. 50 ) $D_8$ तारयेत् ( for भाव° ). — $D_{4,6,7}$ om. ( hapl. ) line 51. — ( L. 52 ) $D_{4,6,7}$ यस्तु उत्तमार्पिंडो हि ( for the prior half ). $B_1$ $D_7$ तद् ( for तं ). — ( L. 53 ) $D_{4-7}$ श्राद्धं ( for धर्मो ). — ( L. 54 ) $D_{4-7}$ पितरश्चास्य प्रीयंते गृह्णंति च यथाकृते. — ( L. 55 ) $D_{5-7}$ प्रजा चास्य विवर्धेत ( for the prior half ). $B_{3,5}$ -तिष्ठते ; $D_{4-7}$ -पद्यते ( for -तिष्ठति ). — ( L. 56 ) $D_{4,6,7}$ भगवन्नानुपूर्व्येण ; $D_5$

कं वा प्रीणयते देवं कथं तारयते पितॄन् ।
मध्यमं तु तदा पत्नी भुङ्क्तेऽनुज्ञातमेव हि ।
किमर्थं पितरस्तस्य कव्यमेव च भुञ्जते ।
अत्र यस्त्वन्तिमः पिण्डो गच्छते जातवेदसम् ।
भवते का गतिस्तस्य कं वा समनुगच्छति ।
एतदिच्छाम्यहं श्रोतुं पिण्डेषु त्रिषु या गतिः ।
फलं वृत्तिं च मार्गं च यश्चैनं प्रतिपद्यते ।
पितरः ।
सुमहानेष प्रश्नो वै यस्त्वया समुदीरितः ।
रहस्यमद्भुतं चापि पृष्टाः स्म गगनेचर ।
एतदेव प्रशंसन्ति देवाश्च मुनयस्तथा ।
तेऽप्येवं नाभिजानन्ति पितृकार्यविनिश्चयम् ।
वर्जयित्वा महात्मानं चिरजीविनमुत्तमम् ।
पितृभक्तस्तु यो विप्रो वरलब्धो महायशाः ।
त्रयाणामपि पिण्डानां श्रुत्वा भगवतो गतिम् ।
देवदूतेन यः पृष्टः श्राद्धस्य विधिनिश्चयः ।
गतिस्त्रयाणां पिण्डानां शृणुष्वावहितो मम ।
अपो गच्छति यो ह्यत्र शशिनं ह्येष प्रीणयेत् ।
शशी प्रीणयते देवान्पितॄंश्चैव महामते ।
भुङ्क्ते तु पत्नी यं चैषामनुज्ञाता तु मध्यमम् ।
पुत्रकामाय पुत्रं तु प्रयच्छन्ति पितामहाः ।
हव्यवाहे तु यः पिण्डो दीयते तन्निबोध मे ।
पितरस्तेन तृप्यन्ति प्रीताः कामान्दिशन्ति च
एतत्ते कथितं सर्वं त्रिषु पिण्डेषु या गतिः ।
ऋत्विग्यो यजमानस्य पितृत्वमनुगच्छति ।
तस्मिन्नहनि मन्यन्ते परिहार्यं हि मैथुनम् ।
शुचिना तु सदा श्राद्धं भोक्तव्यं खेचरोत्तम ।
ये मया कथिता दोषास्ते तथा स्युर्न चान्यथा ।

---

पिंडानामानुपूर्व्येण ( for the prior half ). D8 विभागस्तु ( for प्रविभागः ). — ( L. 57 ) D8 हि वः ( for त्वया ). — For lines 57–58, D4–7 subst. :

पिण्डेषु परिपृच्छामि निरुक्तं कथयस्व मे ।
यदेतद्दीयते आप (sic) अधस्तात्तस्य किं फलम् ।

— D6. 7 om. line 59. — ( L. 59 ) B1 कथं ( for कं वा ). — ( L. 60 ) B2 तु यदा ; D5–7 चापि यत् ( for तु तदा ). B1 ह्यर्थजातं बुभुक्षति ; D5–7 अनुज्ञापिंडमश्नुते ( for the post. half ). — D6 om. lines 61–63. D7 om. line 61. — ( L. 61 ) V1 Dn2, n3 D8 तत्र ( for तस्य ). B1 तु ; B2. 3 प्र- ( for च ). — For lines 62–63, D5. 7 subst. :

यस्तु चोत्तमपिण्डो हि दीयते जातवेदसि ।
का गतिर्भगवंस्तस्य को वा तं समुपाश्नुते ।

D5. 7 cont. : D4. 6 ins. after line 63 :

कतरः प्रीणयेद्देवान्कतरः पितृतृप्तिदः ।
मातामहस्य कतरः कतरः प्रपितामहान् ।

— ( L. 64 ) D4. 5 त्रिषु पिंडेषु या गतिः ( for the post. half ). — After line 64, D4–7 ins. :

अनुरूपमिदं सर्वं भवेद्वै खेचरोत्तम ।
महागुह्यमिमं प्रश्नं प्रष्टा स गगनेचरः ।
शृणुष्वैतद्वचो मह्यं शृणु पिण्डेषु या गतिः ।

[ Before line 1, D6 ins पितरः. D5 reads line 3 after line 78. ]

— D4 om. (hapl.) lines 65–72. D5 om. lines 65–67. — ( L. 65 ) B2 Dn3 वृत्तं ( for वृत्तिं ). B3 यथैनं प्रतिगृह्यते ( for the post. half ). — ( L. 66 ) V1 D3 वै प्रश्नो ( by transp. ). — ( L. 68 ) B1 ऋषयश्च तपोधनाः ( for the post. half ). — ( L. 69 ) B1 चैनं न ( for [ए]वं नाभि- ). B3 तपोधना न जानंति ( for the prior half ). — After line 71, B4. 5 ins. :

स्वयंभुप्रतिमो धीरो मार्कण्डेयस्तपोधनः ।
पितॄणां हि मनुष्याणां लोकानां च स विन्दति ।

— D5 om. ( hapl. ) from the post. half of line 72 up to the prior half of line 74. — D4 om. lines 73–74. — ( L. 73 ) V1 B1–5 यत् ( for यः ). B3 पृष्टं ( for पृष्टः ). — B3 om. line 74. — ( L. 74 ) B1 [ऽ]नघ ; Kumbh. ed. नृप ( for मम ). — ( L. 76 ) D4–7 पितॄंश्चापि महायशाः ( for the post. half ). — For line 77, D4–7 subst. :

यदेतद्भुञ्जते पत्नी अनुज्ञापिण्डमुत्तमम् ।

D4–7 cont. :

उद्धरन्ति कुलं तेन प्रीतास्तस्य पितामहाः ।
एकेन तेन पिण्डेन प्रीतिं गच्छन्ति शाश्वतीम् ।
[ After line 1, D5 reads lines 79–80. ]

— D6. 7 om. lines 78–80. — ( L. 78 ) B1 प्रयच्छति पितामहः ( for the post. half ). — D4 om. lines 79–80. — ( L. 79 ) D8 निबोधत ( for °ध मे ). — ( L. 80 ) B1. 4 तुष्यंति ; D5 प्रीयंति ( for तृप्यन्ति ). B1 कामं ( for कामान् ). — After line 81, D4–7 ins. :

भुञ्जाने यजमाने तु वदामो दोषविस्तरम् ।
[ D4 om. the post. half. ]

— D5 repeats lines 82–83 after line 84. — ( L. 82 ) D4 om. the prior half. Dn2 D5 ( second time ) ऋत्विग्भ्यो ; D5 ( first time ) भुंजाने ; D6. 7 भुंजानो ; D8 ऋत्विक्षु ( for °ग्यो ). V1 B1. 2. 4 Dn3 D4. 5 ( both times ). 6–8 उप- ( for अनु- ). — For line 83, D4. 5 ( first time ). 6. 7 subst. :

तस्मात्स्नातः शुचिः क्षान्तः श्राद्धं भुञ्जीत वै द्विजः ।
प्रजा विवर्धते चास्य यश्चैवं संप्रयच्छति ।
ततो विद्युत्प्रभो नाम ऋषिराह महातपाः ।
आदित्यतेजसा तस्य तुल्यं रूपं प्रकाशते ।
स च धर्मरहस्यानि श्रुत्वा शक्रमथाब्रवीत् ।
तिर्यग्योनिगतान्सत्त्वान्मर्त्या हिंसन्ति मोहिताः ।
कीटान्पिपीलिकान्सर्पान्मेषान्समृगपक्षिणः ।
किल्बिषं सुबहु प्राप्ताः किंस्विदेषां प्रतिक्रिया ।
ततो देवगणाः सर्वे ऋषयश्च तपोधनाः ।
पितरश्च महाभागाः पूजयन्ति स्म तं मुनिम् ।

शक्रः ।

कुरुक्षेत्रं गयां गङ्गां प्रभासं पुष्कराणि च ।
एतानि मनसा ध्यात्वा अवगाहेत्ततो जलम् ।
तथा मुच्यति पापेन राहुणा चन्द्रमा यथा ।
त्र्यहं स्नातः स भवति निराहारश्च वर्तते ।
स्पृशते यो गवां पृष्ठं वालधिं च नमस्यति ।
ततो विद्युत्प्रभो वाक्यमभ्यभाषत वासवम् ।
अयं सूक्ष्मतरो धर्मस्तं निबोध शतक्रतो ।
घृष्टो वटकषायेण अनुलिप्तः प्रियङ्गुणा ।
क्षीरेण षष्टिकान्भुक्त्वा सर्वपापैः प्रमुच्यते ।
श्रूयतां चापरं गुह्यं रहस्यमृषिचिन्तितम् ।
श्रुतं मे भाषमाणस्य स्थाणोः स्थाने बृहस्पतेः ।
रुद्रेण सह देवेश तन्निबोध शचीपते ।
पर्वतारोहणं कृत्वा एकपादो विभावसुम् ।
निरीक्षेत निराहार ऊर्ध्वबाहुः कृताञ्जलिः ।
तपसा महता युक्त उपवासफलं लभेत् ।
रश्मिभिस्तापितोऽर्कस्य सर्वपापमपोहति ।
ग्रीष्मकालेऽथ वा शीते एवं पापमपोहति ।
ततः पापात्प्रमुक्तस्य द्युतिर्भवति शाश्वती ।
तेजसा सूर्यवद्दीप्तो भ्राजते सोमवत्पुनः ।
मध्ये त्रिदशवर्गस्य देवराजः शतक्रतुः ।
उवाच मधुरं वाक्यं बृहस्पतिमनुत्तमम् ।
धर्मगुह्यं तु भगवान्मानुषाणां सुखावहम् ।
सरहस्याश्च ये दोषास्तान्यथावदुदीरय ।

बृहस्पतिः ।

प्रतिमेहन्ति ये सूर्यमनिलं द्विषते च ये ।

---

तस्मात्प्रतिग्रहस्त्वन्यः परिहार्योऽन्नमश्नुता ।
[ $D_{4.5}$ तस्य ( for त्वन्यः ). ]

— ( L. 84 ) $B_4$ तु तदा ; $B_5$ [अ]पि तदा ; $D_{4-7}$ सर्वथा ( for तु सदा ). $D_5$ श्राद्धे ( for श्राद्धं ). $D_5$ भोजनं ( for भोक्तव्यं ). — ( L. 85 ) $B_{1.3}$ ते तथा नान्यथा भवेत् ( for the post. half ). $D_{4-7}$ ये यथा कीर्तिता दोषास्ते तथा नात्र संशयः. — After line 85, $D_{4.6.7}$ ins. an addl. colophon. *Sub-parvan :* $D_{6.7}$ दानधर्म. — *Adhy. name :* $D_{4.6.7}$ देवरहस्यानि. — $D_{4.6.7}$ om. lines 86–114. — ( L. 86 ) $B_3$ श्राद्धमुप- ( for क्षान्तः श्राद्धं ). — ( L. 87 ) $V_1$ $Dn_3$ [ए]नं ( for [ए]वं ). — ( L. 88 ) $Dn_2$ $D_5$ तथा ( for ततो ). — ( L. 89 ) $D_5$ तुल्यं ( for तस्य ). $D_8$ transp. तस्य and तुल्यं. $D_5$ रूपं तस्य प्रकाशते ( for the post. half ). — ( L. 90 ) $D_5$ एवं ( for स च ). — ( L. 92 ) $D_8$ च ( for स- ). — For lines 91–92, $D_5$ subst. :

तिर्यग्योनिगताः सर्वे मर्त्याः सन्ति विमोहिताः ।
कीटाः पिपीलिकाः सर्पा मेषाः समृगपक्षिणः ।

— ( L. 97 ) $B_{1.2}$ ( marg. as above ) गत्वा ( for ध्यात्वा ). $D_5$ -रोहेत् ( for -गाहेत् ). $Dn_3$ तु भोजनं ( for ततो जलम् ). — ( L. 98 ) $B_1$ मुच्येत ( for मुच्यति ). — ( L. 100 ) $D_5$ वालधिं न नमस्यते ( for the post. half ). — ( L. 101 ) $B_1$ अथामापत ; $B_5$ प्रत्यभा° ( for अभ्यभा° ). — ( L. 103 ) $V_1$ अवलिप्तः ( for अनु° ). — ( L. 106 ) $Dn_2$ श्रुतं सं- ; $D_8$ श्रुतयो ( for श्रुतं मे ). — ( L. 107 ) $B_{2.3}$ शतक्रतो ( for शचीपते ). — ( L. 111 ) $B_{1.3}$ तापितः सूर्यरश्मिभिः ( for the prior half ). — ( L. 112 ) $B_{1.3.4}$ हिम- ( for ग्रीष्म- ). $D_5$ [ऽ]थ शीतेन ; $D_8$ तथा शीते ( for ऽथ वा शीते ). $D_5$ ये च पापं व्यपोहति ( for the post. half ). — ( L. 113 ) $V_1$ शापात् ( for पा° ). — ( L. 114 ) $Dn_3$ सूर्यवत्तेजसा दीप्तो ( for the prior half ). — After line 114, $D_5$ ins. an addl. colophon. — *Adhy. name :* देवरहस्यं. — Before line 115, $D_{4-7}$ ins. भीष्मः. — For line 115, $D_{6-7}$ subst. :

सर्वदेवैः समासीनमृषिमध्ये शतक्रतुः ।
[ $D_{6.7}$ देवैः सह ( for सर्वदेवैः ). ]

— ( L. 116 ) $D_{4-7}$ बृहत्तेजा बृहस्पतिः ( for the post. half ). — Before line 117, $D_{4.5}$ ins. धर्मः. — ( L. 117 ) $V_1$ $B_{1-3}$ $Dn_2$ मनुष्या( $B_1$ °षा )णां ( for मानुषाणां ). $D_{4-7}$ धर्मगुह्यानि सर्वाणि सरहस्यानि तत्त्वतः. — ( L. 118 ) $D_5$ तद् ( for तान् ). $D_{6.7}$ श्रोतुमिच्छामि भगवंस्तानि मे वक्तुमर्हसि. — After the ref., $D_{4-7}$ ins. :

व्यक्तं भूतार्थसंयुक्तं निरुक्तं पापनाशनम् ।
शृणुष्व वलभित्सर्वमेतेषां दोषविस्तरम् ।

— $D_{4.6.7}$ om. lines 119–120. — ( L. 119 ) $B_1$ यः ( for ये ). — ( L. 120 ) $B_1$ हव्यवाहस्य दीप्तस्य ( for the prior half ). $Dn_3$ जुह्वते. — $D_{4.7}$ read and $D_5$ repeats lines 121–122 after the substitution for line 131. — ( L. 121 ) $B_3$ वालं च सा ( for वालवत्सां ). $D_4$ धेनुं च ( for ये धेनुं ). $D_{6.7}$ दुह्यते. $D_4$ -कर्मणः ( for

हव्यवाहे प्रदीप्ते च समिधं ये न जुह्वति ।
बालवत्सां च ये धेनुं दुहन्ति क्षीरकारणात् ।
तेषां दोषान्प्रवक्ष्यामि तान्निबोध शचीपते ।
भानुमाननिलश्चैव हव्यवाहश्च वासव ।
लोकानां मातरश्चैव गावः सृष्टाः स्वयंभुवा ।
लोकांस्तारयितुं शक्ता मर्त्येष्वेतेषु देवताः ।
सर्वे भवन्तः शृण्वन्तु एकैकं धर्मनिश्चयम् ।
वर्षाणि षडशीतिं तु दुर्वृत्ताः कुलपांसनाः ।
स्त्रियः सर्वाश्च दुर्वृत्ताः प्रतिमेहन्ति या रविम् ।
अनिलद्वेषिणः शक्र गर्भस्था च्यवते प्रजा ।
हव्यवाहस्य दीप्तस्य समिधं ये न जुह्वति ।
अग्निकार्येषु वै तेषां हव्यं नाश्नाति पावकः ।
क्षीरं तु बालवत्सानां ये पिबन्तीह मानवाः ।
न तेषां क्षीरपाः केचिज्जायन्ते कुलवर्धनाः ।
प्रजाक्षयेण युज्यन्ते कुलवंशक्षयेण च ।
एवमेतत्पुरा दृष्टं कुलवृद्धैर्द्विजातिभिः ।
तस्माद्वर्ज्यानि वर्ज्यानि कार्यं कार्यं च नित्यशः ।
भूतिकामेन मर्त्येन सत्यमेतद्ब्रवीमि ते ।
ततः सर्वे महाभागा देवताः समरुद्गणाः ।
ऋषयश्च महाभागाः पृच्छन्ति स्म पितॄंस्ततः ।
पितरः केन तुष्यन्ति मर्त्यानामल्पचेतसाम् ।
अक्षयं च कथं दानं भवेच्चैवौर्ध्वदेहिकम् ।
आनृण्यं वा कथं मर्त्या गच्छेयुः केन कर्मणा ।
एतदिच्छामहे श्रोतुं परं कौतूहलं हि नः ।

पितरः ।

न्यायतो वै महाभागाः संशयः समुदाहृतः ।
श्रूयतां येन तुष्यामो मर्त्यानां साधुकर्मणाम् ।
नीलषण्डप्रमोक्षेण अमावास्यां तिलोदकैः ।
वर्षासु दीपकैश्चैव पितॄणामनृणो भवेत् ।
अक्षयं निर्व्यलीकं च दानमेतन्महाफलम् ।
अस्माकं परितोषश्च अक्षयः परिकीर्त्यते ।
श्रद्दधानाश्च ये मर्त्या आहरिष्यन्ति संततिम् ।
दुर्गात्ते तारयिष्यन्ति नरकात्प्रपितामहान् ।
पितॄणां भाषितं श्रुत्वा हृष्टरोमा तपोधनः ।

-कारणात्). — (L. 122) D5 (first time) विशां पते (for शचीपते). D4. 5 (second time). 6. 7 एकचित्तः शृणुष्व तान् (D4. 5 तत्) (for the post. half). — (L. 123) B1–8 हव्यवाट्चैव वासव; D4 °वाहं च वासवः (for the post. half). — (L. 124) D4–7 याश्च (for चैव). D4–7 transp. गावः and सृष्टाः. — After line 124, D5 reads lines 129–130. — D4. 6. 7 ins. after line 124: D6 after line 130:

दुर्वृत्तकलिजन्मानो भूयिष्ठमिह ये नराः ।

[D5 प्रतिमेहंति ये नराः (for the post. half).]

— D4. 5 om. lines 125–127. — (L. 125) Dn2 लोकानां (hypermetric) (for लोकांस्). — (L. 126) B6 कर्म- (for धर्म-). — D6. 7 om. line 127. — (L. 128) D4–7 transp. सर्वाः and च. Dn1 ये (for या). — After line 128, D6. 7 read the substitution for line 131. — (L. 129) B5 मुच्यते (for च्यवते). — (L. 131) B1. 2 D8 चैतेषां; B6 नैतेषु (for वै तेषां). B5 [आ]प्नोति (for [अ]श्नाति). — For line 131, D4–7 subst. (D6. 7 reading it after line 128):

अग्निहोत्रेषु सर्वेषु हविर्नाश्नन्ति पावकाः ।

— (L. 132) D4–7 ये क्षीरं (for क्षीरं तु). Dn2 -वृद्धानां (for -वत्सानां). D4–7 पिबंते दुष्टचा(D4 °का)रिणः (for the post. half). — (L. 133) D5. 6 भवंते; D7 भवंति (for जायन्ते). — (L. 134) D5 वर्तंते (for युज्यन्ते). — After line 134, D4–7 ins.:

पतिसंगमकाले च कन्याविघ्नं करोति यः ।
अपुंस्त्वं लभते सोऽपि जायमानः पुनः पुनः ।
एतानि वर्जयेद्यस्तु श्रद्दधानो जितेन्द्रियः ।
कामपुत्रार्थभागी स वर्धते तु दिने दिने ।
एवमुक्तः सुरेन्द्रस्तु आचार्येण महात्मना ।
प्रत्यगृह्णाद्वचस्तस्य विबुधैः प्रतिपूजितम् ।

— D4–7 om. lines 135–137. — (L. 135) D8 वृत्तं (for दृष्टं). — (L. 139) B1 D4–7 महात्मानः (for °भागाः). B2 पृच्छंते (for पृच्छन्ति). B5 मम (for ततः). D4–7 सयक्षोरगराक्षसाः (for the post. half). — (L. 140) D5–7 -मेधसां (for -चेतसाम्). — (L. 141) D4–7 वा (for च). D4–7 निर्वाप्यं च (D7 वा) (for भवेच्चैव). — (L. 142) B2. 3 अनृणा (for आनृण्यं). B2 भवेयुः; D6. 7 गच्छंति (for गच्छेयुः). D5 केन गच्छंति कर्मणा (for the post. half). — (L. 143) B1 D4. 6. 7 इच्छाम्यहं (for °महे). B2. 3 मे (for नः). — (L. 144) D8 तत्सर्वं (for संशयः). Dn2. n3 समुदाहृताः. D6. 7 संशयाः समुदाहृताः (for the post. half). — (L. 146) D5 अमायां तु (for अमावास्यां). — (L. 147) D4–7 वर्षासु दीपदानेन (for the prior half). — After line 147, D8 ins.:

एवमेतत्समुद्दिष्टं लभते फलमुत्तमम् ।

— (L. 148) B1. 3 फलं महत्; D5–7 सुरोत्तमाः (for महाफलम्). D4 दानमेवं सुरोत्तम (for the post. half). — (L. 149) D4–7 [अ]प्य(D4. 5 अ)क्षयं च भविष्यति (for the post. half). — (L. 150) D4 [अ]स्ति तं; D5 [अ]स्ति मे; D6. 7 त्विमे (for च ये). D4–7 प्रकरिष्यंति ये सदा (for the post. half). — (L. 151) D3 दुर्गति (for दुर्गात्ते). D4–7 पितॄन्पितामहांस्ते तु (D4. 5 °स्तेस्तु) तारयंति दशाव(D4 °प)रान्. — (L. 153) D4 -गात्रो; D5–7 -गात्रो (for

वृद्धगार्ग्यो महातेजास्तानेवं वाक्यमब्रवीत् ।
के गुणा नीलषण्डस्य प्रमुक्तस्य तपोधनाः ।
वर्षासु दीपदानेन तथैव च तिलोदकैः ।

पितरः ।

नीलषण्डस्य लाङ्गूलं तोयमभ्युद्धरेद्यदि ।
षाष्टिं वर्षसहस्राणि पितरस्तेन तर्पिताः ।
यस्तु शृङ्गगतं पङ्कं कूलादुद्धृत्य तिष्ठति ।
पितरस्तेन गच्छन्ति सोमलोकमसंशयम् ।
वर्षासु दीपदानेन शशिवच्छोभते नरः ।
तमोरूपं न तस्यास्ति दीपकं यः प्रयच्छति ।
अमावास्यां तु ये मर्त्याः प्रयच्छन्ति तिलोदकम् ।
पात्रमौदुम्बरं गृह्य मधुमिश्रं तपोधन ।
कृतं भवति तैः श्राद्धं सरहस्यं यथार्थवत् ।
हृष्टपुष्टमनास्तेषां प्रजा भवति नित्यदा ।
कुलवंशस्य वृद्धिस्तु पिण्डदस्य फलं भवेत् ।
श्रद्दधानस्तु यः कुर्यात्पितॄणामनृणो भवेत् ।
एवमेष समुद्दिष्टः श्राद्धकालक्रमस्तथा ।
विधिः पात्रं फलं चैव यथावदनुकीर्तितम् ।

Colophon.

भीष्मः ।

केन ते च भवेत्प्रीतिः कथं तुष्टिं तु गच्छसि ।
इति पृष्टः सुरेन्द्रेण प्रोवाच हरिरव्ययः ।
ब्राह्मणानां परीवादो मम विद्वेषणं महत् ।
ब्राह्मणैः पूजितैर्नित्यं पूजितोऽहं न संशयः ।

---

-गार्ग्यो ). $D_{4-7}$ पितॄन्वाक्यमथाब्रवीत् ( for the post. half ). — Before line 154, $D_{4.5.7}$ ins. गर्गः; $D_6$ गार्ग्यः. — (L. 154) $D_{4.5}$ ये ( for के ). $B_3$ विमुक्तस्य; $D_8$ प्रयु° ( for प्रमु° ). $D_{1-7}$ विसृष्टस्य महायशाः ( for the post. half ). — (L. 155) $B_{1-3}$ -दाने च ( for -दानेन ). $D_{4-7}$ वर्षासु दीपकं चैव यश्च दं( $D_5$ पश्चाच-; $D_7$ यस्य द)द्यात्तिलोदकं. — After line 155, $D_{4-7}$ ins. :

प्रत्येकमिह सर्वेषां श्रोतुमिच्छामहे वयम् ।
कारणं कारणं चैव उपचारं च तत्त्वतः ।
पितरः ।
नीलषण्डप्रमोक्षेण वर्धते तु महाफलम् ।
स्वर्गकामश्च विपुलः सर्वकामप्रदस्तदा ।

— $D_9$ resumes. $D_{6.7}$ om. the ref. — (L. 156) $B_1$ तु यत्; $D_{4-7.9}$ यतः ( for यदि ). — (L. 157) $Dn_3$ षष्टि- ( for षष्टिं ). — For line 158, $D_{6.7.9}$ subst. :

योऽस्य शृङ्गगतः पङ्कः कूलमावृत्य तिष्ठति ।

— (L. 159) $D_{4-6.9}$ तृप्यंति; $D_7$ तुष्यंति ( for गच्छन्ति ). $D_{4-7.9}$ सोमलोके यथेप्सितं ( $D_4$ °तः ) ( for the post. half ). — After line 159, $D_{4-7.9}$ ins. :

यथास्य ककुदे पङ्कस्तेन चन्दनरूपिताः ।
पितरो देवलोकस्था मोदन्ते विगतज्वराः ।
तृप्तास्तृप्तिं प्रयच्छन्ति सर्वकामांश्च तस्य वै ।
लोकांश्च विपुलान्पुण्यान्नीलषण्डप्रमोक्षणे ।

[ (L. 1) $D_{4.9}$ -भूषिताः ( for -रू° ). — (L. 4) $D_{4.5}$ नीलशं( $D_5$ °षं )डप्रमोक्षणं ( $D_5$ °णात् ) ( for the post. half ). ]

— (L. 160) $B_1$ सोमवच् ( for शशि° ). $D_{4-7.9}$ वर्षासु दीपकं नित्यं यो ददाति नरोत्तम. — After line 160, $D_{4-7.9}$ ins. :

न पश्यति तमो घोरं शशिवद्द्योतते च सः ।
नीलरश्मिप्रभाभिस्तु पितरस्तस्य तर्पिताः ।
तिलोदकं पितृभ्यस्तु यो ददाति दिने दिने ।
मर्त्यलोके च स्वर्गे च पितृभिः सोऽभिपूज्यते ।
नित्यं दीपप्रदो मर्त्यो नित्यं च शुभलक्षणः ।
सूर्यरश्मिप्रभे लोके पितृभिः सह मोदते ।
देवगोष्ठद्विजावासे चत्वरे वा प्रतिश्रये ।
ददाति दीपकं यो वै स गच्छेल्लोकमुत्तमम् ।
अप्सरोगणसंघुष्टो विमानेन महाद्युतिः ।
पितरः सोमलोकस्थास्तस्य प्रीता भवन्ति हि ।
विचरेद्दीपको वीरो द्योतयन्वै दिशो दश ।
धर्षयन्ति न भूतानि पिशाचा न च राक्षसाः ।
एवं तु पितृभिः प्रोक्ते विष्णुं पृच्छन्ति देवताः ।
येन तुष्यामि मर्त्यानां यस्य धर्मः सनातनः ।
यच्च कुर्वन्नरो नित्यं लभते लोकमुत्तमम् ।
तद्गुह्यं सरहस्यं च तत्सर्वं वक्तुमर्हसि ।

[ After line 1, $D_5$ reads line 161. — (L. 11) $D_4$ दिशः ( for दश ). — After line 12, $D_5$ reads lines 162–169. $D_4$ reads lines 13–16 after line 169. — (L. 13) $D_{4.5}$ च ( for तु ). — (L. 14) $D_{4.5}$ तुष्यसि ( for तुष्यामि ). $D_4$ यश्च ( for यस्य ). — (L. 15) $D_{4.5}$ यत् ( for च ). ]

— $D_{6.7.9}$ om. lines 161–172. — (L. 164) $V_1$ यथार्थतः. — (L. 165) $Dn_3$ सत्फला ( for नित्यदा ). — (L. 169) $B_{1.2}$ ( marg. as above ). $_3$ पात्रं पात्र- ( for विधिः पात्रं ). $B_1$ ( marg. as above ) फलदं च ( for फलं चैव ). — Colophon. — *Parvan name* : B शांति. — *Sub-parvan* : $V_1$ $B_{1-3}$ Dn दानधर्म. — *Adhy. name* : $Dn_3$ पितृरहस्यं. — *Adhy. no.* : $V_1$ 125; $B_5$ 115; $Dn_1$ 123. — $D_4$ om. the ref. $D_{4.5}$ om. lines 170–171. — (L. 171) $Dn_1$. $n_2$ ईश्वरः ( for अव्ययः ). — Before line 172, $B_3$ ins. हरिः. — (L. 172) $Dn_2$ भवेत् ( for महत् ). $D_{4-7.9}$ मम विद्वे-

नित्याभिवाद्या विप्रेन्द्रा भुक्त्वा पादौ तथात्मनः ।
तेषां तुष्यामि मर्त्यानां यश्चक्रे च बलिं हरेत् ।
वामनं ब्राह्मणं दृष्ट्वा वराहं च जलोत्थितम् ।
उद्धृतां धरणीं चैव मूर्ध्ना धारयते तु यः ।
न तेषामशुभं किंचित्कल्मषं चोपपद्यते ।
अश्वत्थं रोचनां गां च पूजयेद्यो नरः सदा ।
पूजितं च जगत्तेन सदेवासुरमानुषम् ।
तेन रूपेण तेषां च पूजां गृह्णामि तत्त्वतः ।
पूजा ममैषा नास्त्यन्या यावल्लोकाः प्रतिष्ठिताः ।
अन्यथा हि वृथा मर्त्याः पूजयन्त्यल्पबुद्धयः ।
नाहं तत्प्रतिगृह्णामि न सा तुष्टिकरी मम ।

इन्द्रः ।

चक्रं पादौ वराहं च ब्राह्मणं चापि वामनम् ।
उद्धृतां धरणीं चैव किमर्थं त्वं प्रशंससि ।
भवान्सृजति भूतानि भवान्संहरति प्रजाः ।
प्रकृतिः सर्वभूतानां समर्त्यानां सनातनी ।

भीष्मः ।

संप्रहस्य ततो विष्णुरिदं वचनमब्रवीत् ।
चक्रेण निहता दैत्याः पद्भ्यां क्रान्ता वसुंधरा ।
वाराहं रूपमास्थाय उद्धृता च वसुंधरा ।
वामनं रूपमास्थाय जितो राजा मया बलिः ।
परितुष्टो भवाम्येवं मानुषाणां महात्मनाम् ।
तन्मां ये पूजयिष्यन्ति नास्ति तेषां पराभवः ।
अपि वा ब्राह्मणं दृष्ट्वा ब्रह्मचारिणमागतम् ।
ब्राह्मणायाहुतिं दत्त्वा अमृतं तस्य भोजनम् ।
ऐन्द्रीं संध्यामुपासित्वा आदित्याभिमुखः स्थितः ।
सर्वतीर्थेषु स स्नातो मुच्यते सर्वकिल्बिषैः ।
एतद्वः कथितं गुह्यमखिलेन तपोधनाः ।

---

षणो भवेत् ( for the post. half ). — After line 173, D1–7, 9 ins. :

ब्राह्मणान्द्विषते ये वै तमो घोरं सुदारुणम् ।
पूजनं च द्विजेन्द्राणां स्वर्गमार्गप्रदर्शनम् ।

[ ( L. 2 ) D5, 7 -प्रदर्शकं ( for °नम् ). ]

— D4 om. lines 174–176. — ( L. 174 ) D5–7, 9 नित्यभोज्याश्च सर्वशः ( for the post. half ). — ( L. 175 ) D6, 7, 9 सर्वेषां ( for मर्त्यानां ). D5–7, 9 गृहे यस्य ( for यश्चक्रे च ). — ( L. 176 ) D6–7, 9 ब्राह्मणं वामनं चैव ( for the prior half ). D4, 6 om. the post. half and the prior half of line 177. — After line 176, D7, 9 ins. :

प्रणम्य शिरसा नित्यं पादौ गृह्णन्ति ये नराः ।

— ( L. 177 ) D5, 7, 9 उद्धृतां च महीं दृष्ट्वा ( for the prior half ). — After line 177, D1–7, 9 ins. :

मद्भक्तास्ते नरा नित्यं मम पूजानुकारिणः ।
पूर्णं कुम्भं च मद्यं च वर्धमानं गुरुं नृपम् ।
वन्दते वृषभं चैव गजेन्द्रं च मदोत्कटम् ।
उद्यन्तं भास्करं चैव उदयन्तं निशाकरम् ।
जलौघं च विवर्धन्तं वन्दते शिरसा तदा ।
यस्त्वेवं कुरुते नित्यं श्रद्दधानोऽनसूयकः ।
स विस्मयकरो लोके पितॄणां परमप्रियः ।

[ ( L. 2 ) D4, 5 पूर्ण- ( for पूर्णं ). — ( L. 4 ) D5 दृष्ट्वा ( for चैव ). — ( L. 5 ) D5 जलौघमिव वर्धते ( for the prior half ). D5, 6, 9 सदा ( for तदा ). ]

— ( L. 178 ) B1, 3, 5 Dn3 कलुषं ( for कल्मषं ). — For line 178, D1–7, 9 subst. :

न तस्य चाशुभं किंचित्किल्बिषं वा प्रदृश्यते ।
[ D6, 9 हि ( for च ). ]

— B4 ins. after line 197 : B5 after line 178 :

ब्रह्महत्यासमं पापं सर्वमेव व्यपोहति ।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वापि कदाचन ।

[ After line 1, B4 ins. :

तस्मादैन्द्रीं दिशं तिष्ठन्सर्वपापं व्यपोहति ।]

— After the above, B4 repeats line 1 followed by lines 2–4 and B5 repeats lines 1–4 of the star passage after line 200. — D4, 6, 7, 9 om. line 179. — ( L. 180 ) B3 -मानवं ( for -मानुषम् ). — ( L. 181 ) V1 B4, 5 Dn2, n3 स्वेन ( for तेन ). D1–7, 9 स्वेन रूपेण तस्याहं ( for the prior half ). D4, 6, 9 सर्वशः; D5, 7 नित्यशः ( for तत्त्वतः ). — ( L. 182 ) B1 नान्यस्य; D1–7, 9 परमा ( for नास्त्यन्या ). V1 B2 ( marg. ), 4, 5 Dn2, n3 D8 यथा ( for यावल् ). — D1–7, 9 om. lines 183–202. — ( L. 187 ) V1 भजति ( for स° ). B2 संहरते. — After line 187, B4, 5 ins. :

कर्मणामप्रयुक्तानां नैव विघ्नः कदाचन ।

— ( L. 188 ) B2 मर्त्यानां च ( for समर्त्यानां ). — After line 188, B4, 5 ins. :

सुराणामसुराणां च त्वमेवैकः परायणम् ।
तद्ब्रूहि वदतां श्रेष्ठ सर्वमेतद्यथातथम् ।

[ ( L. 2 ) B4 यथायथं ( for °तथम् ). ]

After the ref., B4, 5 ins. :

तेषां तद्वचनं श्रुत्वा देवर्षिपितृभाषितम् ।

— ( L. 189 ) B1 संप्रहृष्य ( for °हस्य ). — ( L. 191 ) D8 आश्रित्य ( for आस्थाय ). B1 उद्धृता धरणी मम; Bom. ed. हिरण्याक्षो निपातितः ( for the post. half ). — After line 192, B4, 5 ins. :

क्रमता चापि त्रैलोक्यं पदक्रान्ता वसुंधरा ।

— ( L. 196 ) V1 B2, 3 ब्राह्मणाय्याहुतिं दत्त्वा ( for the prior half ). — After line 196, B4, 5 ins. :

यदि भास्करसंयुक्तं सलिलं मुञ्चते नरः ।

संशयं पृच्छमानानां किं भूयः कथयाम्यहम् ।
बलदेवः ।
श्रूयतां परमं गुह्यं मानुषाणां सुखावहम् ।
अजानन्तो यदबुधाः क्लिश्यन्ते भूतपीडिताः ।
कल्य उत्थाय यो मर्त्यः स्पृशेद्गां वै घृतं दधि ।
सर्षपं च प्रियङ्गुं च कल्मषात्प्रतिमुच्यते ।
भूतानि चैव सर्वाणि अग्रतः पृष्ठतोऽपि वा ।
उच्छिष्टं वापि च्छिद्रेषु वर्जयन्ति तपोधनाः ।
देवाः ।
प्रगृह्यौदुम्बरं पात्रं तोयपूर्णमुदङ्मुखः ।
उपवासं तु गृह्णीयाद्यद्वा संकल्पयेद्व्रतम् ।
देवतास्तस्य तुष्यन्ति कामिकं चापि सिध्यति ।
अन्यथा हि वृथा मर्त्याः कुर्वते स्वल्पबुद्धयः ।
उपवासे बलौ चापि ताम्रपात्रं विशिष्यते ।

---

— (L. 197) D8 उपासीत (for °सिरवा). — After line 197, B4. 5 ins. :

तज्जलं संप्रतिच्छेद्य ऊर्ध्वबाहुः कृताञ्जलिः ।

— B5 om. line 198. — (L. 198) Dn3 सर्वे (for सर्व-). — B1. 4 repeat lines 199–200 after the next star passage. — (L. 199) B1. 4 (both both times) निखिलेन. — (L. 200) B1. 4 (both both times) वः (for [अ]हम्). — B1. 4 ins. after line 200 : B5 cont. after the above star passage :

बलदेवः ।
शृणुध्वं चापरं वाक्यं सर्व एव समागताः ।
यत्कृत्वा विप्रराजन्या वैश्या वा लोभमोहिताः ।
पतन्ति नरके घोरे तिर्यग्योनिगतेषु च ।
मुनीनामाश्रमं गत्वा मुक्तः प्रव्रजितो द्विजः ।
क्षत्रियो यदि वा वैश्यो मोक्षं प्राप्य महाफलम् ।
मोहात्तु प्रव्रजेद्यो वै धर्मसेतुमतिक्रमन् ।
चाण्डालीं गच्छते योनिं दिव्यं वर्षशतं हि सः ।
स प्रव्रज्यानिवृत्तश्च वृथाप्रव्रजितश्च सः ।
उभावेतावसंभाव्यौ मिथ्यावादी च यो नरः ।
नैते हव्येषु कव्येषु प्रशस्ता नैव शान्तिषु ।
असुरानाच्छते कव्यं यथैते नैक्षकाभवन् ।
प्रतिगृह्य तु लोभेन कष्टात्कष्टतरं व्रजेत् ।
नैते जहति नरकं कल्पान्ते ये कदाचन ।
मोक्षधर्मं समाश्रित्य नैव कार्यं विपश्चिता ।
इदं चाप्यपरं गुह्यं शृणुध्वं संहिताः सुराः ।
अपेतः सर्वधर्मेभ्यो धर्मतः शाश्वतस्तथा ।
ब्राह्मणो नार्हते पूजां न च संसत्सु भोजनम् ।
भुक्त्वा लोभेन वै दातुरात्मनश्च न संशयः ।
हन्ति जातानजातांश्च यश्चैवाप्यनुमन्यते ।
ब्राह्मण्यं हि महल्लोके सृष्टं धात्रा हितार्थिना ।
तल्लब्ध्वा धारयेद्यत्नाद्दैवं सिद्धिरवाप्यते ।
ब्राह्मणान्येऽवमन्यन्ते ते वै ज्ञेया नराधमाः ।

Colophon.

[ B1. 5 om. the ref. —(L. 1) B1. 5 (both first time) पापं (for वाक्यं). B1 य एवात्र (for सर्व एव). —(L. 3) B1 4. 5 (both times) तिर्यग्योनिमथापि वा (B5 [second time] च) (for the post. half). —(L. 4) B4. 5 (second time) कृच्छ्रगतो (for प्रव्रजितो). —(L. 6) B1. 4 च (for तु). —(L. 8) B4 प्रव्रज्याया-; B5 संव्रज्याथ (for स प्रव्रज्या-). B5 यथा (for वृथा). —(L. 15) B4 विबुधाः (for संहिताः). — Colophon. *Parvan name :* B1. 4. 5 शांति. — *Sub-parvan :* B1. 4. 5 दानधर्म. — *Adhy. name :* B1. 4. 5 विष्णुरहस्यं. — *Adhy. no. :* B4 126; B5 116. ]

— B6 देवल (for बलदेव). — V1 om. lines 202–206. — Before line 203, D4–7 ins. बलभद्रः. — D6. 7 read lines 203–206 after line 278. —(L. 203) B Dn2. n3 D8 कल्यम्; D4–6 काल्यम्; D7 कालम् (for कल्य). B5 वै गां (by transp.); D4–6 गां वा. B1–3 D4–7 मधु (for दधि). —(L. 204) D4–7 किल्बिषेण स मु( D5 °पात्स प्रमु )च्यते (for the post. half). —(L. 205) D4–7 न च हिंसंति भूतानि पुरस्तात्पृष्ठतोपि वा. — After line 205, D4–7. 9 ins. :

अभिरूपा महात्मानस्ते नराः स्वर्गगामिनः ।
अथ देवगणाः सर्वे सहिताः समरुद्गणैः ।
पृच्छन्ति धर्मगुह्यानि महादेवीं श्रियं सतीम् ।

[ (L. 2) D8 समरुद्गणाः. ]

— After the above, D4–7. 9 read lines 217–288. — D4–7 om. line 206. D3. 7. 8 om. the ref. —(L. 213) D8 ह्यफलं (for [अ]ल्पफलं). D4. 5 लभेत् (for भवेत्). — After line 214, D4–7. 9 ins. :

पितरश्च महाभागा अक्षयं चोपपद्यते ।
नास्ति नाशः कृते पुण्ये नास्ति नाशस्त्वहिंसया ।
नास्ति सत्यस्य नाशो वै नास्ति नाशः शुभाशुभे ।
अक्षयं दुष्कृतं नित्यं सुकृतं नित्यमव्ययम् ।
शुभाशुभकृतं पुण्यं परत्रैवोपभुज्यते ।
लाभालाभौ सुखं दुःखं जीवितं मरणं तथा ।
कालः पुरुषमभ्येति नास्ति काले क्षयोदयौ ।

Colophon.

भीष्मः ।
विष्णोस्तु वचनं श्रुत्वा देवताः प्रतिनन्द्य च ।
बलभद्रं सुसंहृष्टाः पर्यपृच्छन्त धर्मिणः ।

[ (L. 2) D4 [अ]संशयः (for [अ]हिंसया). —(L. 3) D5 [ऽ]स्ति (for वै). — Colophon. *Sub-parvan :* D4–7. 9 दानधर्म. ]

बलिर्भिक्षा तथार्घ्यं च पितॄणां च तिलोदकम् ।
ताम्रपात्रेण दातव्यमन्यथाल्पफलं भवेत् ।
गुह्यमेतत्समुद्दिष्टं यथा तुष्यन्ति देवताः ।
धर्मः ।
राजपौरुषिके विप्रे घाण्टिके परिचारके ।
गोरक्षके वाणिजके तथा कारुकुशीलवे ।
मित्रद्रुह्यनधीयाने यश्च स्याद्वृषलीपतिः ।
एतेषु दैवं पित्र्यं वा न देयं स्यात्कथंचन ।
पिण्डदास्तस्य हीयन्ते न च प्रीणाति वै पितॄन् ।
अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते ।

— After the above, D4.5 read 203–205. —(L. 215) D5 चारके परचारके; D6 पंढिके विप्रजीविके (for the post. half). — D4.6.7.9 om. lines 216–217. — (L. 217) D5 -द्रुहे (for -द्रुहि). — (L. 218) Dn2 पैत्र्यं (for पित्र्यं). V1 वा (for स्यात्). D4.5 दत्तं नाश्नंति देवताः (for the post. half). — After line 218, D4–7.9 ins. :

इदं चैव परं गुह्यं नराणामल्पमेधसाम् ।
श्राद्धकाले यथा श्राद्धं लुप्यते तन्निबोधत ।
[ (L. 1) D5 [अ]परं ( for परं ). ]

— D4–7.9 om. line 219. — (L. 219) B8 न च प्रीणंति देवताः (for the post. half). — For lines 221–224, D4–7.9 subst. :

पितरस्तस्य नश्यन्ति अग्नयश्च महायशाः ।
निराशो यस्य गच्छेत अतिथिर्यस्य दुर्मनाः ।
भ्रूणहत्या कृता तेन अशुभा पापकर्मिणा ।
पितॄणामतिथिर्यस्य व्रजेत्तदिह नार्चितः ।
[ (L. 1) D5 ह्यग्नयश् (for अ°). — (L. 3) D4.5 अशुभं पापकर्मिणां (for the post. half). ]

D4–7.9 cont. :

तस्यायं च परश्चैव लोको नास्ति दुरात्मनः ।
अयं चैव परो धर्मः शुचिस्मयकरो महान् ।
ये सदा मां न पश्यन्ति प्रविशन्ति हुताशनम् ।
याचकाः सलिलं वापि पुनः पुनरभीक्ष्णशः ।
जलं च प्रविशेद्यस्तु स तु मां नोपसर्पति ।
ये च पुण्यावकाशेषु पुण्यक्षेत्रेषु मानवाः ।
हरिश्चन्द्रे परिश्चन्द्रे प्रभासेऽमरकण्टके ।
कुरुक्षेत्रे पुष्करे च तथा तुङ्गारपर्वते ।
अन्येषु च यथान्यायं साधयन्तीह कार्पिकाः ।
गोग्रहे स्त्रीग्रहे वापि राष्ट्रोपक्रमणेऽपि वा ।
धर्मयुद्धेषु राज्ञा वा ये नराभिमुखा हताः ।
अपरावर्तिनः शूरा आह्वयन्तः परस्परम् ।
ते न पश्यन्ति मां धीरा गच्छन्ति परमां गतिम् ।
चतुर्दशीमष्टमीं च उभयोः पक्षयोरपि ।
उपवासपरो नित्यं नियतो नियतेन्द्रियः ।
पूर्णे संवत्सरे चैव कुर्याद्ब्राह्मणतर्पणम् ।
मधुपर्कतिलांश्चैव दत्त्वा मां नोपसर्पति ।
भीष्मः ।
धर्मराजवचः श्रुत्वा सर्वे ते विबुधेश्वराः ।
यक्षराजं धनपतिं पृच्छन्ति सुरसत्तमाः ।
दानमेतत्कथं देयं कथं दत्तं महाफलम् ।
एतद्वै सर्वमाख्याहि यथावदनुपूर्वशः ।
धनदः ।
विशुद्धहृदयो भूत्वा योऽन्नं दद्याद्द्विजातये ।
धर्मद्वारविधिं तस्य प्रवक्ष्यामि यथातथम् ।
दूरादभ्यागतं पात्रं वृत्तिहीनं क्षुधान्वितम् ।
दरिद्रं व्याधितं दीनं कुटुम्बकरकार्शितम् ।
श्रोत्रियं यज्ञशीलं च सर्वज्ञं छिन्नसंशयम् ।
कामादिभिः परित्यक्तं परं पदमुपासकम् ।
बाल्याहिताग्निं स्थविरं वेदाध्ययनतत्परम् ।
ब्रह्मचारी गृहस्थो वा पात्रमेवंविधं विदुः ।
एभ्यो दत्तमनन्तं हि सत्त्वयुक्तेन चेतसा ।
भीष्मः ।
धनेश्वरवचः श्रुत्वा सर्वे देवाः सवासवाः ।
वरुणं नोदयन्तीह ब्रूहि त्वं स्वमनीषितम् ।
वरुणः ।
अल्पं वा बहु वा तोयं निर्मले निचये नराः ।
अवगाह्य पिबन्ते च पवित्रमिति मन्यते ।
विशुद्धचेतसा युक्तास्तेषां पुष्टिं ददाम्यहम् ।
जलाशयानां कर्तारः सर्वभूताभयप्रदाः ।
नित्यं प्रवाहतोयानि नोपरुन्धन्ति सेतुभिः ।
नोत्सृजन्ति पुरीषाणि मूत्राणि ष्ठीवनानि च ।
नित्यं तोयप्रदातारस्तेषां पुष्टिं ददाम्यहम् ।
वरुणस्य वचः श्रुत्वा वज्रपाणिं शतक्रतुम् ।
पृच्छन्ति धर्मगुह्यानि क्रमेण विबुधेश्वराः ।
इन्द्रः ।
ऐन्द्रीं संध्यामुपासीत आदित्याभिमुखस्थितः ।
सर्वतीर्थेषु च स्नातो मुच्यते सर्वकिल्बिषैः ।
अथ सर्वे महाभागा मरुतश्च यशोन्विताः ।
अश्विनौ रूपसंपन्नौ क्रमेण परिपृच्छतः ।
अश्विनौ ।
अश्विनीपौर्णमास्यां तु पुष्पमाल्यानुलेपनः ।
यो ददातीह विप्रेभ्यः स आवां प्रीणयेत हि ।
क्षीरासनोपवासेन उपवासेन यो निशि ।
तां रात्रिं समतिक्रम्य कुर्याद्ब्राह्मणभोजनम् ।
सर्पिर्भावसो दद्याद्दक्षिणां च द्विजातये ।
तस्य धान्यं धनं चैव पुत्राश्चैव गुणान्विताः ।
अभिरूपं च रूपं च जीवितं च महोदयम् ।
सौख्यं च सततं मुख्यं कामभोगांश्च पुष्कलान् ।
वीतरागः सुसंहृष्टो गन्धमाल्यं मुनीजनम् ।

पितरस्तस्य देवाश्च अग्नयश्च तथैव हि ।
निराशाः प्रतिगच्छन्ति अतिथेरप्रतिग्रहात् ।
स्त्रीघ्नैर्गोघ्नैः कृतघ्नैश्च ब्रह्मघ्नैर्गुरुतल्पगैः ।
तुल्यदोषो भवत्येभिर्यस्यातिथिरनर्चितः ।

अग्निः ।

पादमुद्यम्य यो मर्त्यः स्पृशेद्गाश्च सुदुर्मतिः ।
ब्राह्मणं वा महाभागं दीप्यमानं तथानलम् ।
तस्य दोषान्प्रवक्ष्यामि तच्छृणुध्वं समाहिताः ।
दिवं स्पृशत्यशब्दोऽस्य त्रस्यन्ति पितरश्च वै ।
वैमनस्यं च देवानां कृतं भवति पुष्कलम् ।
पावकश्च महातेजा हव्यं न प्रतिगृह्णति ।
आजन्मनां शतं चैव नरके पच्यते तु सः ।
निष्कृतिं च न तस्यापि अनुमन्यन्ति कर्हिचित् ।
तस्माद्गावो न पादेन स्प्रष्टव्या वै कदाचन ।
ब्राह्मणश्च महातेजा दीप्यमानस्तथानलः ।
श्रद्दधानेन मर्त्येन आत्मनो हितमिच्छता ।
एते दोषा मया प्रोक्तास्त्रिषु यः पादमुत्सृजेत् ।

विश्वामित्रः ।

श्रूयतां परमं गुह्यं रहस्यं धर्मसंहितम् ।
परमान्नेन यो दद्यात्पितृणामौपहारिकम् ।

---

देवताः पितरश्चैव क्रमेण समरुद्गणाः ।
ऋषयो धर्मगुह्यानि पृच्छन्ति सुसमाहिताः ।
इच्छाम ऋषिभिः सर्वैः पृथक्कारेण भाषितुम् ।
धर्माधर्मकृतं सर्वमृषीणां संप्रवर्तनम् ।
एतच्छ्रुत्वा सुरेन्द्राणां श्लक्ष्णाक्षरपदं वचः ।
ब्रुवन्ति ऋषयः सर्वे परिपृष्टाः शुभाशुभम् ।

वसिष्ठः ।

आस्तिकाः सुव्रता धीराः सत्यसंधा जितेन्द्रियाः ।
देवलोके महीयन्ते श्रद्दधानाश्च ये नराः ।
स्वागतं तेति भाषन्तः सदा वनगतास्तथा ।
अर्चयन्ति यथाशक्त्या ते नराः स्वर्गगामिनः ।

विश्वामित्रः ।

श्रूयतां मे परं गुह्यं पवित्रं धर्मसंहितम् ।
दानं संवत्सरस्यैकं यथा बहुफलं भवेत् ।
परमान्नेन यो दद्यात्पितृणामनुमासिकम् ।
गजच्छायां तु पूर्वायां कुतुपे दक्षिणामुखः ।
मासि प्रौष्ठपदे यस्तु मघास्योऽन्नं यथेच्छकम् ।
श्रूयतां तस्य दानस्य यादृशो गुणविस्तरः ।
त्रयोदश समास्तेन पितरस्तस्य तर्पिताः ।
प्रयच्छन्ति परां पुष्टिं सर्वकामपुरस्कृताः ।
एतेनैव तु योगेन वस्त्रासनमुपानहौ ।
यो ददाति मघाश्राद्धं भोजनं च किमिच्छकम् ।
द्विर्द्वादशसमास्तस्यां पितरस्तस्य तर्पिताः ।
सर्वकामान्प्रयच्छन्ति परत्र च शुभां गतिम् ।

[ (L. 1) D5 [अ]पि (for [ए]व). — (L. 6) D6.7.9 सिद्ध- (for पुण्य-). — D4 om. lines 8-9. D7 reads lines 15–17 on marg. — (L. 16) D6.7 पूर्ण- (for पूर्णे). — (L. 22) D6.7 दत्तं (for दद्याद्). — (L. 23) D4.6.9 यथा तथा (for यथातथम्). — (L. 26) D5 क्रतुशीलं; D6.7.9 ऋजु° (for यज्ञ°). — (L. 29) D6.7.9 ब्रह्मचारिं गृहस्थं वा (for the prior half). — (L. 33) D4.6.7.9 दूषयंति च ये नराः (for the post. half). — (L. 35) D4 तुष्टिं (for पुष्टिं). — (L. 44) D4.6.9 महायशाः (for यशोन्विताः). — (L. 46) D5 अश्विन्यां (for °नी-). D6.7.9 आश्विनीं पूर्णमास्यां तु (for the prior half). — D9 om. from the post. half of line 47 up to the prior half of line 51. — (L. 61) D7.9 यतेंद्रियाः (for जि°). — Lines 65, 68-70 = (var.) lines 237–241. — (L. 71) D4.6.9 तेन (for तस्य). — D4 om. (hapl.) lines 72–75. — (L. 74) D7 यथेच्छकं (for किमि°). — (L. 75) D6.7.9 तेन (for तस्य). — (L. 76) D5 परां (for शुभां). ]

— (L. 225) D4 भर्तुः (for मर्त्यः). D9 om. (hapl.) from स्पृशेद् up to दिवं (in line 228). D3 गां (for गाश्). D4–7 स्पृशेद्गावो महायशाः (sic) (for the post. half). — (L. 226) Dn3 यथानलं; D4–7 च पावकं (for तथानलम्). — (L. 227) D6 om. from दोषान् up to दिवं स्पृ (in line 228). D4.5.7 दारुणान्क्रूरकर्मणः (for the post. half). — After line 227, D4.5.7 ins.:

तन्निबोधत मे सर्वे महाभागाः सुरोत्तमाः ।

— (L. 228) D4–7.9 धिक्शब्दः (for [अ]शब्दोऽस्य). D4–7.9 पितरो विभ्रमंति च (for the post. half). — (L. 229) D4–7.9 तेन वै (for पुष्कलम्). — (L. 230) D4.6.7.9 महाज्वालो (for °तेजा). D4–7.9 हविर्न प्रतिगृह्णते (for the post. half). — (L. 231) D8 शतेन (for शतं च). D4–7.9 नरके घोरदर्शने (for the post. half). — After line 231, D4–7.9 ins.:

पच्यते क्रूरकर्मा वै जायमानः पुनः पुनः ।
धृष्टायां नानुविन्दन्ति पितरः सह दैवतैः ।

— D4–7.9 om. line 232. — (L. 233) D4–7.9 स्प्रष्टव्या लोकमातरः (for the post. half). — After line 233, D4–7.9 ins.:

दोषाश्च विविधा दृष्टा ये श्रुता विबुधां गणैः ।
[ D4 ये श्रुता विबुधागताः (for the post. half). ]

— After the above, D4–7.9 read lines 317–335. — D4–7.9 om. lines 234–276. V1 B1 Dn1 D8 om.

गजच्छायायां पूर्वस्यां कुतुपे दक्षिणामुखः ।
यदा भाद्रपदे मासि भवते बहुले मघा ।
श्रूयतां तस्य दानस्य यादृशो गुणविस्तरः ।
कृतं तेन महच्छ्राद्धं वर्षाणीह त्रयोदश ।

गावः ।

बहुले समङ्गे ह्यकुतोभये च
क्षेमे च संख्येव हि भूयसी च ।
यथा पुरा ब्रह्मपुरे सवत्सा
शतक्रतोर्वज्रधरस्य यज्ञे ।
भूयश्च या विष्णुपदे स्थिता या
विभावसोश्चापि पथे स्थिता या ।
देवाश्च सर्वे सह नारदेन
प्रकुर्वते सर्वसहेति नाम ।
मन्त्रेणैतेनाभिवन्देत यो वै
विमुच्यते पापकृतेन कर्मणा ।
लोकानवाप्नोति पुरंदरस्य
गवां फलं चन्द्रमसो द्युतिं च ।
एतं हि मन्त्रं त्रिदशाभिजुष्टं
पठेत यः पर्वसु गोष्ठमध्ये ।
न तस्य पापं न भयं न शोकः
सहस्रनेत्रस्य च याति लोकम् ।

भीष्मः ।

अथ सप्त महाभागा ऋषयो लोकविश्रुताः ।
वसिष्ठप्रमुखाः सर्वे ब्रह्माणं पद्मसंभवम् ।
प्रदक्षिणमभिक्रम्य सर्वे प्राञ्जलयः स्थिताः ।
उवाच वचनं तेषां वसिष्ठो ब्रह्मवित्तमः ।
सर्वप्राणिहितं प्रश्नं ब्रह्मक्षेत्रे विशेषतः ।
द्रव्यहीनाः कथं मर्त्या दरिद्राः साधुवृत्तयः ।
प्राप्नुवन्तीह यज्ञस्य फलं केनेह कर्मणा ।
एतच्छ्रुत्वा वचस्तेषां ब्रह्मा वचनमब्रवीत् ।
अहो प्रश्नो महाभागा गूढार्थः परमः शुभः ।
सूक्ष्मः श्रेयांश्च मर्त्यानां भवद्भिः समुदाहृतः ।
श्रूयतां सर्वमाख्यास्ये निखिलेन तपोधनाः ।
यथा यज्ञफलं मर्त्यो लभते नात्र संशयः ।
पौषमासस्य शुक्ले वै यदा युज्येत रोहिणी ।
तेन नक्षत्रयोगेन आकाशशयनो भवेत् ।
एकवस्त्रः शुचिः स्नातः श्रद्दधानः समाहितः ।
सोमस्य रश्मयः पीत्वा महायज्ञफलं लभेत् ।
एतद्वः परमं गुह्यं कथितं द्विजसत्तमाः ।
यन्मां भवन्तः पृच्छन्ति सूक्ष्मतत्त्वार्थदर्शिनः ।

Colophon.

विभावसुः ।

सलिलस्याञ्जलिं पूर्णमक्षताश्च घृतोत्तराः ।
सोमस्योत्तिष्ठमानस्य तज्जलं चाक्षतांश्च तान् ।
स्थितो ह्यभिमुखो मर्त्यः पौर्णमास्यां बलिं हरेत् ।
अग्निकार्यं कृतं तेन हुताश्चास्याग्नयस्त्रयः ।

---

line 236. — (L. 240) Dn2 भवने (for °ते). — (L. 243) D8 [अ]कुतोभयं (for °ये). — (L. 245) D8 [अ]वसत्सा (for सवत्सा). — (L. 247) B1 वै (for the second या). — (L. 248) B1.3 Dn3 D8 पथि; B4 पदे (for पथे). — (L. 251) V1 मंत्रैर्घृतेन (for मन्त्रेणैतेन). V1 B Dn3 D8 [अ]भिवंदे(B5 °रमे)त (for °वन्देत). — (L. 256) B1 D8 गोषु (for गोष्ठ-). — (L. 260) V1 ब्राह्मणं (for ब्रह्माणं). — (L. 261) V1 B3.4 D8 अतिक्रम्य (for अभि°). — (L. 264) B8 Dn1.n2 -वर्तिनः (for -वृत्तयः). — (L. 265) B2.3 Dn1.n2 च (for [इ]ह). — After line 265, D8 ins.:

एतन्मे ब्रूहि तत्त्वेन यथावत्परिपृच्छते ।

— B5 om. lines 267–270. — (L. 270) V1 B1.3 D8 मर्त्या (for मर्त्यो). V1 B1.3 D8 लभंते. — B3–5 ins. after line 276: B1 before line 277:

श्रूयतां चापरं गुह्यं महाक्षत्रसुखावहम् ।
पूर्वं स्नात्वा यथान्यायं प्राणायामं समाचरेत् ।
सहस्रगुणितं कृत्वा सावित्रीं वेदमातरम् ।
सायं प्रातर्जपन्विप्रो यमलोकमवाप्नुयात् ।

[(L. 1) B1.5 परमं (for चापरं).]

— Colophon. — *Parvan name*: B1–4 D8 शांति. — *Sub-parvan*: V1 B Dn1.n2 दानधर्म. — *Adhy. name*: V1 B1.2.4.5 Dn D8 देवरहस्यं. — *Adhy. no.*: V1 126; B5 116; Dn1 124. — D4.5 भानुः (for विभावसुः). — After the ref., D4–7.9 ins.:

संशृणुध्वं भवन्तो वै यन्मां पृच्छथ तत्त्वतः ।

— (L. 277) D6.7.9 पूर्णाम् (for पूर्णम्). D4 घृतोत्तमाः; D6.7.9 घृतोत्तरां (for °राः). — (L. 278) D4–7.9 उद(D4 °दि)तश्चैव पूर्वेण (for the prior half). B3 तज्जलं चाक्षयं शुभं; D4–7.9 तज्जलं तांश्च अक्षतान् (for the post. half). — After line 278, D4–7.9 ins.:

विक्षिपेत्सुमनास्तत्र श्रद्दधानस्तु मानवः ।

— (L. 279) D4–7.9 तत्र (for मर्त्यः). D4–7.9 श्रद्धायुक्तो (for पौर्णमास्यां). — (L. 280) Dn3 [अ]पि (for [अ]स्य). D4–7.9 सुप्रीतोहं कृतस्तेन अग्नयश्च त्रयो हुताः. — After line 280, D4–7.9 ins.:

ये च धर्माश्रिता लोके वयोवृद्धा महाव्रताः ।
तेषां धर्मफलं साधु धर्मेषु सुमहत्फलम् ।

वनस्पतिं च यो हन्यादमावास्याममबुद्धिमान् ।
अपि ह्येकेन पत्रेण लिप्यते ब्रह्महत्यया ।
दन्तकाष्ठं तु यः खादेदमावास्याममबुद्धिमान् ।
हिंसितश्चन्द्रमास्तेन पितरश्चोद्विजन्ति च ।
हव्यं न तस्य देवाश्च प्रतिगृह्णन्ति पर्वसु ।
कुप्यन्ते पितरश्चास्य कुले वंशोऽस्य हीयते ।

श्रीः ।

प्रकीर्णं भाजनं यत्र पानभाण्डमथासनम् ।
योषितश्चैव हन्यन्ते कश्मलोपहते गृहे ।
देवताः पितरश्चैव उत्सवे पर्वणीषु वा ।
निराशाः प्रतिगच्छन्ति कश्मलोपहताद्गृहात् ।

अङ्गिराः ।

यस्तु संवत्सरं पूर्णं दद्याद्दीपं करञ्जके ।
सुवर्चलामूलहस्तः प्रजा तस्य विवर्धते ।

गार्ग्यः ।

आतिथ्यं सततं कुर्याद्दीपं दद्यात्प्रतिश्रये ।
वर्जयानो दिवास्वप्नं न च मांसानि भक्षयेत् ।
गोब्राह्मणं न हिंस्याच्च पुष्कराणि च कीर्तयेत् ।
एष श्रेष्ठतमो धर्मः सरहस्यो महाफलः ।
अपि क्रतुशतैरिष्ट्वा क्षयं गच्छति तद्धविः ।

— ( L. 281 ) D4.9 हिंसति यो ; D6.7 हिंसयति ( for च यो हन्याद् ). D5.7 ह्यमावास्याम्. — D4-7.9 om. ( hapl. ) lines 282–283. — ( L. 282 ) B2.3 भ्रूण- ( for ब्रह्म- ). — ( L. 284 ) B3 [उ]द्वहंति ( for [उ]द्विजन्ति ). — For line 284, D4-7.9 subst. :

सोमस्तु हिंसितस्तेन नास्य तुष्यन्ति देवताः ।

— ( L. 285 ) D9 om. from न तस्य up to हीयते ( in line 286 ). D4-7 हव्यं च देवतास्तस्य नानुगृह्णंति सर्वशः ( D4 °तः ). — ( L. 286 ) B2.3 कुप्यंति. B3 तस्य ( for चास्य ). B1 देव- ; Dn2 D8 कुल- ( for कुले ). D4-7 पितरश्चैव हन्यंते ( D4 :कव्यं वै ) कुलवंशश्च हीयते. — D4-7 ins. after line 286 : D9 after हव्यं ( in line 285 ):

राहोश्चागमकाले तु चन्द्रादित्यौ नमस्यति ।
तस्य व्युष्टिं ददामोऽस्य हृदयेन नमस्यतः ।
दक्षिणाभिमुखो रात्रावुत्तराभिमुखो दिवा ।
नरः प्रस्रवते यस्तु तस्य व्युष्टिं ददाम्यहम् ।
भाषितं रविणा श्रुत्वा शीतरश्मिं महाद्युतिम् ।
पृच्छन्ति हि रहस्यानि श्रोतुकामा दिवौकसः ।

सोमः ।

अविद्यो वा सविद्यो वा न वेदयति यस्तु माम् ।
अपि पर्याप्तविद्यो वा नरके वसते तु सः ।
देवकार्येषु नास्तिक्यो दुराचारो विनश्यति ।
न च पुत्रपशूंस्तस्य स्थावरो नरको ध्रुवः ।
यथाक्रममुपासित्वा सर्वदैवमुपासते ।
पृच्छमानाः क्रमेणाग्निमर्चयन्ति सुरोत्तमाः ।

[ D4 om. lines 2–4. ]

— D4 श्रियः ( for श्रीः ). — ( L. 287 ) Dn1 भिन्न- ( for पान- ). D4-7.9 भस्मभांडयुतं गृहं ( for the post. half ). — ( L. 288 ) D4-7.9 हन्यंते योषितश्चैव ( for the prior half ). — After line 288, D4-7.9 ins. :

नाग्निकं न बलिर्यत्र नोपवासो न शौचता ।
मया त्यक्तं गृहं तत्तु शीघ्रं प्रविशते कलिः
पापैश्छन्ने गृहे तस्मिन्विनायकशतैर्युते ।
अपि वर्षशतस्यान्ते भोजनं नैव विद्यते ।
पुंश्चली गृहिणी यत्र न च शौचसमन्विता ।
तद्गृहं सर्वपापैस्तु ग्रस्तं नैव सुखं भवेत् ।
शिष्टाचारो नरो यत्र नित्यं शौचसमन्वितः ।
योषितोऽलंकृता यत्र तत्राहं भवने रता ।
प्रतिश्रुत्य श्रियो वाक्यमभिनन्द्य पुनः पुनः ।
अर्कं विभावसुं देवा नोदयन्ति समाहिताः ।
यत्तु गुह्यं रहस्यं तु धर्मं प्रेत्येह चाक्षयम् ।
मर्त्यानां श्रद्दधानानां तद्ब्रूहि सुमहामने ।

[ ( L. 2 ) D4 तत्र ; D5 यत्तु ( for तत्तु ). D6.7.9 क्षिप्रं ( for शीघ्रं ). — D5 om. lines 6–8. D4 om. line 9. ]

— D4-7.9 om. lines 289–290. — ( L. 289 ) B2 [अ]पि ( for वा ). — ( L. 290 ) B1.3 D8 तस्य ( for प्रति- ). — ( L. 291 ) B2 दीपान् ( for दीपं ). D4-7.9 करंजे दीपकं ददौ ( for the post. half ). — ( L. 292 ) D4-7.9 अक्षतैश्चार्चयेन्नित्यं ( for the prior half ). B3 D4.6.7.9 प्रजास् ( for प्रजा ). — After line 292, D4-7.9 ins. :

गौतमः ।

पूजयेन्निम्नगा यश्च स्रोतः प्रतिमुखागतम् ।
यस्तस्य यानं वहति गुणाढ्या वदते महान् ।

[ L. 1 ) D5 यत्र ( for यश्च ). ]

— After the above, D4-7.9 read lines 306–316. — After the ref., D4-7.9 ins. :

अहो बहुविधो धर्मः सरहस्यो मनीषिणाम् ।
धर्मगुह्यमिदं पुण्यं मनुष्याणां सुखावहम् ।
शृणुध्वं गदतः सर्वे यथा धर्मो न हीयते ।

— D4-7.9 read line 293 after line 295. — ( L. 293 ) D4-7.9 आतिथ्यं च यथाशक्त्या दद्याद्दीपकमाश्रये ( D6.7 °मथाश्रये ). — D4-7.9 om. line 294. — ( L. 294 ) Bom. ed. -स्वापं ( for -स्वप्नं ). — ( L. 295 ) D4-7.9 हिंसेत ( for हिंस्याच्च ). D4-7.9 सर्वावस्थमनिंदितं ( for the

114

न तु क्षीयन्ति ते धर्माः श्रद्दधानैः प्रयोजिताः ।
इदं च परमं गुह्यं सरहस्यं निबोधत ।
श्राद्धकल्पे च दैवे च तैर्थिके पर्वणीषु च ।
रजस्वला च या नारी श्वित्रिकापुत्रिका च या ।
एताभिश्चक्षुषा दृष्टं हविर्नाश्नन्ति देवताः ।
पितरश्च न तुष्यन्ति वर्षाण्यस्य त्रयोदश ।
शुक्लवासाः शुचिर्भूत्वा ब्राह्मणान्स्वस्ति वाचयेत् ।
कीर्तयेद्भारतं चैव तथा स्यादक्षयं हविः ।

धौम्यः ।

भिन्नभाण्डं च खट्वां च कुक्कुटं शुनकं तथा ।
अप्रशस्तानि सर्वाणि यश्च वृक्षो गृहेरुहः ।
भिन्नभाण्डे कलिं प्राहुः खट्वायां तु धनक्षयः ।
कुक्कुटे शुनके चैव हविर्नाश्नन्ति देवताः ।
वृक्षमूले ध्रुवं सत्त्वं तस्माद्वृक्षं न रोपयेत् ।

जमदग्निः ।

यो यजेदश्वमेधेन वाजपेयशतेन ह ।
अवाक्शिरा वा लम्बेत सत्रं वा स्फीतमाहरेत् ।
न चास्य हृदयं शुद्धं नरकं स ध्रुवं व्रजेत् ।
तुल्यं यज्ञश्च सत्यं च हृदयस्य च शुद्धता ।
शुद्धेन मनसा दत्त्वा सक्तुप्रस्थं द्विजातये ।
ब्रह्मलोकमनुप्राप्तः पर्याप्तं तन्निदर्शनम् ।

Colophon.

post. half). — (L. 296) D1–7, 9 पुण्य- (for श्रेष्ठ-). D1–7, 9 मनुष्याणां सुखावहः (for the post. half). — Dn2 D1–7, 9 om. lines 297–298. — (L. 299) D1–7, 9 [ए]व परं (for परमं). — (L. 300) B6 [अ]पि (for the third च). D1–7, 9 श्रद्दधानस्य यज्ञेषु पर्वणीषु तिथीषु च. — (L. 301) B1 पूतिका; D1–7, 9 पूतिला (for [अ]पुत्रिका). — (L. 302) D1–7, 9 स्पृष्टं चाप्युपहन्यते (for the post. half). — After line 302, D1–7, 9 ins.:

न तद्देवानुगृह्णन्ति हतं भवति तद्धविः ।

— (L. 303) Dn1 [अ]पि (for [अ]स्य). D1–7, 9 पितरस्तु न चाश्नंति वर्षाणि तु (D1 न वर्षाणि; D7 वर्षाणि च) चतुर्दश. — After line 303, D4–7, 9 ins.:

वृथा भवति तच्छ्राद्धं तस्मादेतास्तु वर्जयेत् ।

— (L. 304) B8 शुद्ध- (for शुक्ल-). D1–7, 9 स्नातो (for भूत्वा). — (L. 305) D1–7, 9 [अ]पि (for [ए]व). — After line 305, D1–7, 9 ins.:

एवमक्षयतां याति अन्यथा सममेव हि ।
सूकरो यन्निरीक्षेत यन्निरीक्षेत कुक्कुटः ।
यच्छ्वा वै हि निरीक्षेत यच्चैव वृषलीपतिः ।
न देवास्तत्तु भुञ्जन्ति पितरो वा कदाचन ।
न च सुप्लावितं विप्रा हतं भवति तद्धविः ।
येऽऽश्रमेषु निषेवन्ति सेवितानि मनीषिभिः ।
शान्तिं गच्छन्ति ते वीरा ईप्सितांश्च मनोरथान् ।
न कुर्वन्ति यथोक्तानि श्रियस्तेषु मनोरमाः ।
दाम्भिनो लिङ्गिनः क्रूरा व्रजन्ति नरकं हि ते ।
ततो देवगणाः सर्वे ऋषयश्च परंतपाः ।
पितरश्च महात्मानो वृद्धगर्गेण भाषितम् ।
श्रुत्वा प्रीतमनोभिस्ते सर्व एव समाहिताः ।

[(L. 2) D1 निरीक्षेत्तु (for the second °क्षेत).]

— *After the above*, D1–7, 9 read lines 368–394.

— (L. 306) B1 खट्वांगं (for खट्वां च). D8 कुक्कुटं च शुनस्तथा (for the post. half). D1–7, 9 भिन्नं भांडं तथा खट्वां कुक्कुटं श्वानमेव च. — (L. 307) B1 सुप्रशस्तानि. D1–7, 9 चत्वारि (for सर्वाणि). D1–7, 9 ये च वृक्षाः फलैर्विना (for the post. half). — After line 307, D1–7, 9 ins.:

गृहद्वारे गृहे वाथ स्थापयेन्न विचक्षणः ।

— (L. 308) D4, 5 -भांडं (for -भाण्डे). D1–7, 9 वाहन- (for तु धन-). — (L. 309) B2, 5 Dn8 शुनि वा (for शुनके). D1–7, 9 श्वाने वै कुक्कुटे चैव (for the prior half). — (L. 310) V1 सेवयेत् (for रोप°). D1–7, 9 तस्मात्तत्परिवर्जयेत् (for the post. half). — After line 310, D1–7, 9 ins.:

श्रद्दधानेन मर्त्येन वर्जनीयानि नित्यशः ।

— (L. 311) D1–7, 9 अग्निष्टोमेन वा यजेत् (for the post. half). — (L. 312) D5–7, 9 [अ]व- (for वा). D4 अर्वाक्शिरा विलंबेत (for the prior half). — (L. 313) B1 चान्य-; Dn1 यस्य (for चास्य). D1–7, 9 हृदयं वाप्यशुद्धस्य (D6, 7, 9 °द्धं स्यात्) (for the prior half). V1 चाकाशं (for नरकं). D1–7, 9 शाश्वतं (for स ध्रुवं). — (L. 314) D1–7, 9 अल्पं (D6, 7, 9 तुल्यं) सत्यं च यज्ञैश्च यस्य शु(D6, 7 सि)द्धं मनो भवेत्. — (L. 315) D1–7, 9 दत्त्वा शुद्धेन मनसा (for the prior half). — (L. 316) D4 ब्रह्मलोके (for °कम्). D1–7, 9 महत्प्राप्य (for अनुप्राप्तः). Dn2 पर्याप्ति (for °प्तं). — After line 316, D1–7, 9 *ins.*:

पर्वतः ।

प्रातः प्रभाते संध्यायामुपगृह्य तु पिप्पलम् ।
तिलपात्रं च यो दद्यान्मुच्यते सर्वकिल्बिषैः ।
गन्धान्मूत्रपुरीषेण पयसा च घृतेन च ।
आह्निकं यः प्रकुर्वीत दध्ना चापि सुसंस्कृतम् ।
गां चैव यः स्पृशेन्नित्यं प्रासमुष्टिं प्रयच्छति ।
निस्तरेत्सततात्रेण प्रवृद्धमपि किल्बिषम् ।

वायुः ।

किंचिद्धर्मं प्रवक्ष्यामि मानुषाणां सुखावहम् ।
सरहस्याश्च ये दोषास्तान्शृणुध्वं समाहिताः ।
अग्निकार्यं च कर्तव्यं परमान्नेन भोजनम् ।
दीपकश्चापि कर्तव्यः पितॄणां सतिलोदकः ।
एतेन विधिना मर्त्यः श्रद्दधानः समाहितः ।
चतुरो वार्षिकान्मासान्यो ददाति तिलोदकम् ।
भोजनं च यथाशक्त्या ब्राह्मणे वेदपारगे ।
पशुबन्धशतस्येह फलं प्राप्नोति पुष्कलम् ।
इदं चैवापरं गुह्यमप्रशस्तं निबोधत ।
अग्नेस्तु वृषलो नेता हविर्मूढाश्च योषितः ।
मन्यते धर्म एवेति स चाधर्मेण लिप्यते ।
अग्नयस्तस्य कुप्यन्ति शूद्रयोनिं स गच्छति ।
पितरश्च न तुष्यन्ति सह देवैर्विशेषतः ।
प्रायश्चित्तं तु यत्तत्र सुव्रतस्तन्निबोध मे ।
यत्कृत्वा तु नरः सम्यक्सुखी भवति विज्वरः ।
गवां मूत्रपुरीषेण पयसा च घृतेन च ।
अग्निकार्यं त्र्यहं कुर्यान्निराहारः समाहितः ।

कश्यपः ।

यः पशून्हन्ति वै पापः परत्र हन्यते तु सः ।
ददते पशवो यस्तु तस्य लोके महोदयः ।
यस्तु भुक्तवतां धीरो मेदिनीं परिमार्जयेत् ।
श्रद्दधानो भवेन्मर्त्यः सुखसौभाग्यभाग्भवेत् ।
दीर्घमायुर्वयोऽग्र्यं च यशश्च विपुलं भुवि ।
उत्तमां च गतिं लोके तुष्टिं पुष्टिं गुणोदयम् ।
अयं चैव परो धर्मो गुह्यार्थो लोकविश्रुतः ।
यो ददाति हि वै मर्त्यः कन्यां भूषणभूषिताम् ।
तस्याक्षयो भवेल्लोकः शाश्वतः शुभलक्षणः ।
स्वर्गे च लभते वासं सर्वकामपुरस्कृतम् ।
अकृत्वा मूर्ध्नि तोयं यः संक्रमेण तु यो व्रजेत् ।
लङ्घिता देवतास्तेन सलिलं लङ्घितं तदा ।
अक्षेषु न च सज्जेत न च जल्पेत भोजने ।
भुञ्जेद्योऽन्नं शयानश्च रमते तत्र पाप्मना ।
शयनासने न तिष्ठेत ऊर्ध्वपादो नरः सदा ।
अमङ्गल्यमपुष्टीकं वपुस्तेजःप्रणाशकम् ।
पुरस्तात्स्नातमात्रस्य गच्छमानस्य वा पथि ।
मुण्डभग्नशिरोग्रीवः श्रियो ह्यपि श्रियं हरेत् ।
अधौतपादः स्वपिति रात्रौ च दधिभोजनम् ।
श्रद्दधानो न कुर्वीत कलिद्वारं हि तद्भवेत् ।

[ (L. 2) $D_{4}$ तु (for च). — (L. 4) $D_{4}$ च यः (for यः प्र-). $D_{6,9}$ दधिना च (for दध्ना चापि). — (L. 5) $D_{4,6,9}$ तु (for यः). — (L. 12) $D_{6,7,9}$ तुष्टिपुष्टि-. — (L. 17) $D_{7}$ च (for तु). $D_{9}$ जयेत् (for व्रजेत्). — (L. 18) $D_{4}$ तास्ते (for तेन). — (L. 19) $D_{6,7}$ तु (for the second च). $D_{4,6}$ सज्जेत; $D_{7}$ जल्पेत्तु (for जल्पेत). — (L. 20) $D_{7}$ भजेद् (for भुञ्जेद्). — (L. 21) Prior half hypermetric. — (L. 22) $D_{7}$ -प्रणाशनं (for °शकम्). — (L. 23) $D_{6}$ पुरतः (for पुरस्तात्). ]

— After the above, $D_{4-7,9}$ read lines 338–365. — (L. 317) $B_{1-3}$ कंचिद् (for किं°). $D_{4-7,9}$ मनुष्याणां (for मानुषाणां). — (L. 318) $D_{4-7,9}$ धर्मांस् (for दोषान्). $D_{4}$ तान्शृणुध्व समाहितः (for the post. half). — (L. 319) $D_{4-7,9}$ निन्गशः (for भोजनम्). — (L. 320) $D_{6,7,9}$ [उ]प- (for [अ]पि). $B_{1,3}$ $D_{4}$ दीपकश्चोपहर्तव्यः; $D_{6}$ सदीपश्चोपकर्तव्यः (for the prior half.). — (L. 321) $D_{6,7}$ अनेन (for एतेन). $D_{4-7,9}$ बलिं हरेत् (for समाहितः). — (L. 322) $D_{4-7,9}$ चत्वारो (for चतुरो). — After line 322, $B_{6}$ ins.:

पितॄणां नियतश्राद्धे दीपकाश्च यथाविधि ।

— $B_{6}$ reads line 323 twice. — (L. 323) $D_{6}$ यथाशक्ति (for °क्त्या). $D_{4}$ ब्राह्मणैर्वेदपारगैः (for the post. half). — (L. 324) $D_{4-7}$ -शतं तेन (for -शतस्येह). $D_{9}$ पशुर्बंधशतं तेन (for the prior half). $D_{4-7,9}$ यष्टं भवति शाश्वतं (for the post. half). — (L. 325) $D_{4-7,9}$ परमं (for [ए]वापरं). $D_{4-7,9}$ प्रशस्तं मे (for अप्रशस्तं). $D_{8}$ द्विजोत्तम (for निबोधत). — After line 325, $D_{6,7}$ ins.:

द्विजानामल्पबुद्धीनां परलोके सुखावहम् ।
मुच्यमानं तु वृषभं ददतो गां द्विजातये ।
नैवमित्याह यः पापो दोषांस्तस्य निबोधत ।

[ (L. 1) $D_{6}$ परलोक- (for °के). — (L. 3) $D_{7}$ यत् (for यः). ]

$D_{4-7,9}$ om. lines 326–327. — (L. 326) $B_{5}$ देवताः (for योषितः). — (L. 327) $D_{8}$ [इ]ह (for [इ]ति). — (L. 328) $D_{4}$ तुष्यंति; $D_{5}$ रुष्यंति; $D_{6,7,9}$ तुष्यंते (for कुप्यन्ति). $B_{1,2}$ च (for स). $D_{4-7,9}$ शूद्रयोनौ प्रजायते (for the post. half). — (L. 329) $D_{8}$ न संशयः (for विशेषतः). $D_{4-7,9}$ देवा नाश्नंति तद्धविः (for the post. half). — After line 329, $D_{4-7,9}$ ins.:

एते दोषा महान्तस्य मूढस्य तु भवन्ति वै ।

— (L. 330) $D_{4,6,7,9}$ प्रायश्चित्तं प्रवक्ष्यामि दोषाणां तस्य शोधनं. — (L. 331) $D_{4,6,7,9}$ यथा मुच्यति दोषैस्तु (for the prior half). $D_{4-7,9}$ न चाधर्मेण लिप्यते (for the post. half). — (L. 332) $D_{4}$ मूत्रे (for मूत्र-). — After line 332, $D_{4-7,9}$ ins.:

दध्ना चैव यथान्यायमेकैकेन त्र्यहं त्र्यहम् ।
एकैकं प्राशतो नित्यं त्र्यहं त्वनशनो भवेत् ।

[ $D_{4}$ om. line 2. — (L. 2) $D_{7,9}$ अनशनो (for त्व°). ]

ततः संवत्सरे पूर्णे प्रतिगृह्णन्ति देवताः ।
हृष्यन्ति पितरश्चास्य श्राद्धकाल उपस्थिते ।
एष ह्यधर्मो धर्मश्च रहस्यः संप्रकीर्तितः ।
मर्त्यानां स्वर्गकामानां प्रेत्य स्वर्गसुखावहः ।

Colophon.

लोमशः ।

परदारेषु ये सक्ता अकृत्वा दारसंग्रहम् ।
निराशाः पितरस्तेषां श्राद्धकाले भवन्ति वै ।
परदाररतिर्यः स्याद्यश्च वन्ध्यामुपासते ।
ब्रह्मस्वं हरते यश्च समदोषा भवन्ति ते ।
असंभाष्या भवन्त्येते पितॄणां नात्र संशयः ।
देवताः पितरश्चैषां नाभिनन्दन्ति तद्धविः ।
तस्मात्परस्य वै दारांस्त्यजेद्वन्ध्यां च योषितम् ।
ब्रह्मस्वं हि न हर्तव्यमात्मनो हितमिच्छता ।
श्रूयतां चापरं गुह्यं रहस्यं धर्मसंहितम् ।
श्रद्दधानेन कर्तव्यं गुरूणां वचनं सदा ।
द्वादश्यां पौर्णमास्यां च मासि मासि घृताक्षतम् ।
ब्राह्मणेभ्यः प्रयच्छेत तस्य पुण्यं निबोधत ।
सोमश्च वर्धते तेन समुद्रश्च महोदधिः ।
अश्वमेधचतुर्भागं फलं सृजति वासवः ।

---

— (L. 333) D4–7. 9 अग्निकार्यं सदा कार्यमेकैकेन त्र्यहं त्र्यहं (D4 परं). — After line 333, D4–7. 9 ins. :

एतेन विधिना युक्तो गते मासे तु द्वादशे ।

[ D7 अनेन (for एतेन). D5 अनेन विधिना यस्तु (for the prior half). ]

— (L. 334) D4–7. 9 हविर् (for प्रति-). — (L. 335) D4–7. 9 पितरश्चैव संहृष्टाः (for the prior half). — After line 335, D4–7. 9 ins. :

हव्यकव्यानि गृह्णन्ति विधिवत्सह दैवतैः ।
व्यपेतकलुषश्चापि श्रीश्चैव भजते नरम् ।
इदं चैव परं गुह्यं सदा यश इति स्मृतम् ।
दैवतेभ्योपहारांस्तु यो ददाति नरोत्तमः ।
गन्धानुलेपनं पुष्पं प्रदीपं गीतवादिनम् ।
जप्यं च शुचिना राजन्प्रतिगृह्णन्ति देवताः ।
शङ्खतूर्यनिनादैश्च उभे संध्ये तु यो नरः ।
स्वगृहे कुरुते शान्तिं तुष्यन्ते तस्य देवताः ।
नित्योपहारं देवेभ्यः प्रयच्छेत समाहितः ।
एषा शान्तिः परा नृणामेतत्परममङ्गलम् ।
परमं पावनानां च वर्धनानां च वर्धनम् ।
आज्यं धूपश्च दीपश्च तथा तूर्यस्य निस्वनः ।
अक्षयं स्वर्गमार्गं च दर्शयन्ति महोदयम् ।
संध्याउपासनं नित्यं अग्निकार्यं परं हि यत् ।
सर्वदोषहरं नृणां सर्वपापविनाशनम् ।
कृत्वा तु देवकार्याणि य उभे कुसुमोदके ।
विक्षिपेन्मम नाम्ना वै तस्य तुष्टिं ददाम्यहम् ।
अनलस्य वचः श्रुत्वा अभिनन्द्य पुनः पुनः ।
धर्मराजं तु तत्त्वेन परिपृच्छन्ति देवताः ।
ब्राह्मणाः के न भोक्तारः पितृकार्ये महात्मनः ।

[ (L. 3) D4 परो गृह्यं (for परं गुह्यं). — (L. 5) D5 -वाद्यकं; D7 -वादिकं (for °नम्). — D4 om. (hapl.) lines 7–8. D5 om. lines 7–9. — (L. 9) D7 यः प्रयच्छेत् (for प्रयच्छेत). — (L. 12) D4. 6. 9 आपो; D7 आज्य- (for आज्यं). — (L. 14) D4 अग्निकार्यहितं यतः (for the post. half). — (L. 16) D5 उभौ (for उभे). — (L. 17) D4 ते (for [अ]हम्). — D4 om. line 20. ]

— After the above, D4–7. 9 read lines 215 and 218. — (L. 336) B2. 8 D8 सरहस्यः (for रहस्यः सं-). — Colophon om. in D4. 7. 9. — *Parvan name :* B1–4 Dn3 शांति. — *Sub-parvan :* V1 B1. 3. 5 Dn1. n2 D8 दानधर्म. — *Adhy. name :* B1. 2. 4. 5 वायुरहस्यं; Dn3 देवरहस्यं. — *Adhy no. :* V1 128; Dn1 125. — D4–7. 9 नारदः (for लोमशः). — (L. 338) D4–7. 9 सक्ता ये (by transp.) After the prior half, D4–7. 9 read the post. half of line 340 and lines 341–342. — (L. 339) D4–7. 9 उपस्थिते (for भवन्ति वै). — (L. 340) D4–7. 9 om. the prior half. Dn3 परदारे (for °दार-). B2 Dn1. n3 च (for स्याद्). D4–7. 9 ये (for यश्). — (L. 341) D4–7. 9 ब्रह्मस्वानां च हर्तारः समं तत्र न (D4. 6. 9 °ममेतन्न) संशयः. — (L. 342) D4–7. 9 त्रयोपि ते (D9 ये) ह्यसंभाष्याः (for the prior half). D4. 5 तु न; D7 च न (for नात्र). — After line 342, B5 ins. :

स्नातकानां च विप्राणां ये वसन्तस्तपोधनाः ।
पितरो द्रष्टुमन्येन नार्हन्ति स्म कदाचन ।

— (L. 343) D4–7. 9 देवताश्च न तुष्यंति पूजिता ह्यपि पर्वणि. — (L. 344) D4. 6. 9 दाराणि; D5. 7 दारा हि (for वै दारांस्). — (L. 345) D4 न, च; D6. 7. 9 च न (for हि न). D4–7. 9 श्रद्धधानेन सर्वदा (D4. 9 °था) (for the post. half). — (L. 347) V1 B Dn1. n3 D8 यथा; Dn2 तथा (for सदा). — (L. 348) D4–7. 9 द्वादशीं पूर्णमासीं च (for the prior half). D5–7. 9 घृताक्षतान् (for °तम्). — For lines 349–350, D4–7. 9 subst. :

ब्राह्मणाय प्रयच्छन्ति तस्य पुण्यफलं शृणु ।
यथा समुद्रः सोमश्च क्षीणो (वृद्धो?) भवति पर्वणि ।
एवमस्य प्रदातारो वर्धन्तीह नरा भुवि ।

[ (L. 3) D5 तस्य (for अस्य). D4 वर्धयंति (for वर्धन्तीह). ]

दानेनैतेन तेजस्वी वीर्यवांश्च भवेन्नरः ।
प्रीतश्च भगवान्सोम इष्टान्कामान्प्रयच्छति ।
श्रूयतां चापरो धर्मः सरहस्यो महाफलः ।
इमं कलियुगं प्राप्य मनुष्याणां सुखावहः ।
कल्यमुत्थाय यो मर्त्यः स्नातः शुक्लेन वाससा ।
तिलपात्रं प्रयच्छेत ब्राह्मणेभ्यः समाहितः ।
तिलोदकं च यो दद्यात्पितॄणां मधुना सह ।
दीपकं कृसरं चैव श्रूयतां तस्य तत्फलम् ।
तिलपात्रे फलं प्राह भगवान्पाकशासनः ।
गोप्रदानं च यः कुर्याद्भूमिदानं च शाश्वतम् ।
अग्निष्टोमं च यो यज्ञं यजेत बहुदक्षिणम् ।
तिलपात्रं सहैतेन समं मन्यन्ति देवताः ।
तिलोदकं सदा श्राद्धे मन्यन्ते पितरोऽक्षयम् ।
दीपे च कृसरे चैव तुष्यन्तेऽस्य पितामहाः ।
स्वर्गे च पितृलोके च पितृदेवाभिपूजितम् ।
एवमेतन्मयोद्दिष्टमृषिदृष्टं पुरातनम् ।

Colophon.

भीष्मः ।

ततस्त्वृषिगणाः सर्वे पितरश्च सदेवताः ।
अरुन्धतीं तपोवृद्धामपृच्छन्त समाहिताः ।
समानशीलां वीर्येण वसिष्ठस्य महात्मनः ।
त्वत्तो धर्मरहस्यानि श्रोतुमिच्छामहे वयम् ।
यत्ते गुह्यतमं भद्रे तत्प्रभाषितुमर्हसि ।

अरुन्धती ।

तपोवृद्धिर्मया प्राप्ता भवतां स्मरणेन वै ।
भवतां च प्रसादेन धर्मान्वक्ष्यामि शाश्वतान् ।
सगुह्यान्सरहस्यांश्च ताञ्शृणुध्वमशेषतः ।
श्रद्दधाने प्रयोक्तव्या यस्य शुद्धं तथा मनः ।
अश्रद्दधानो मानी च ब्रह्महा गुरुतल्पगः ।
असंभाष्या हि चत्वारो नैषां धर्मं प्रकाशयेत् ।

---

— (L. 351) $Dn_3$ $D_8$ -चतुर्भाग- (for °भागं). $D_{4,5}$ फलं विंदंति मानवाः; $D_{6,7,9}$ फलं विंदति मानवः (for the post. half). — After line 351, $D_{4-7,9}$ ins. :

अगस्त्यः ।

देवद्रव्यविनाशेन ब्रह्मस्वहरणेन च ।
कुलान्यकुलतां यान्ति धर्मस्यातिक्रमेण तु ।
मा ददस्वेति यो ब्रूयाद्गोरग्निब्राह्मणेषु च ।
तिर्यग्योनिशतं गत्वा चण्डालेषु प्रजायते ।
मानुषं लोकमासाद्य परलोकसुखावहम् ।

[(L. 1) $D_9$ -विनाशे च (for °शेन). — (L. 5) $D_4$ -सुखावहे. ]

— $D_{4-7,9}$ om. lines 352–353. — (L. 352) $B_{2,3}$ [अ]पि जायते (for भवेन्नरः). — (L. 354) $D_{4-7,9}$ श्रूयतां धर्मसर्वस्वं रहस्यं सुम(Dr तु म)हत्फलं. — $D_{4-7,9}$ om. line 355. — (L. 355) $B_3$ $Dn_1$ इदं (for इमं). $B_2$ मानुषाणां (for मनुष्याणां). $B_{1,3}$ $Dn_{2,n3}$ सुखावहं. —(L. 356) $D_5$ काल्यमु°, $D_{6,7,9}$ काल्यम्, $D_8$ कल्यं (for कल्यम्). $D_{4-7,9}$ स्नातो वै शुक्लवासभृत् ($D_4$ °ससा) (for the post. half). — (L. 357) $D_{4-7,9}$ ब्राह्मणे वेदपारगे (for the post. half). — $D_4$ om. from the post. half of line 358 up to the prior half of line 361. —(L. 359) $D_{5-7,9}$ तस्य पुण्यफलं शृणु (for the post. half). —$D_{5-7,9}$ om. line 360. — (L. 362) $D_{4-7,9}$ यजते वा सदाक्षिणं (for the post. half). — (L. 363) $B_6$ सहितेन (for सहै°). $D_{4-7,9}$ तिलपात्रसहस्रं च ($D_7$ तु) (for the prior half). $B_2$ (marg.) सममन्यंत देवताः; $B_3$ सम्यक्पश्यंति दे° (for the post. half). — (L. 364) $D_{4-7,9}$ च ($D_5$ तु) यः कुर्याद् (for सदा श्राद्धे). $D_{4-7,9}$ अश्नंति (for मन्यन्ते). — (L. 365) $D_4$ दीपकेन प्रकाशं च; $D_5$ दीपकेन कृशरया; $D_{6,7,9}$ दीपकेन कृशर्यां च (for the prior half). $B_6$ तुष्यंति (for तुष्यन्ते). $D_{4-7,9}$ तु-($D_5$ हृ)ष्यंति च हसंति च (for the post. half). —After line 365, $D_{4-7,9}$ ins. :

तिलपात्रेण वै श्राद्धं कृतं भवति शाश्वतम् ।
तिलोदकं पितॄणां तु यो ददाति दिने दिने ।
मर्त्यलोके च पितृभिः सोऽत्यर्थं पूज्यते सदा ।

[(L. 3) $D_8$ [ऽ]पि (for च). $D_5$ [ऽ]प्यर्थं (for ऽत्यर्थं).]

— $D_{4-7,9}$ om. lines 366–367. — (L. 367) $Dn_2$ पूर्वम् (for एवम्). $V_1$ $B_4$ -जुष्टं (for -दृष्टं). — Colophon. — *Parvan name.*: $B_{1,3,4}$ $Dn_3$ शांति. — *Sub-parvan*: $V_1$ $B_{1,2-6}$ $Dn_{1,n2}$ दानधर्म. — *Adhy. name*: $V_1$ 129; $B_6$ 120; $Dn_1$ 126. — $D_{4-7,9}$ om. line 368. — (L. 368) $D_8$ पितृगणाः (for त्वृषि°). — (L. 369) $D_{4-7,9}$ परिपृच्छंति धर्मिणः. $D_8$ समानव्रतचारिणीं (for the post. half). — After line 369, $B_{1,2,6}$ $D_{4-7,9}$ ins. :

भवत्यनितपोवृद्धा समानव्रतचारिणी ।

[$B_2$ अरुंधती ; $D_{4-7,9}$ सततं त्वं (for भवत्यति-).]

— $Dn_{1,n2}$ om. lines 370–372. — (L. 370) $B_{4,5}$ वृत्तेन (for वीर्येण). — For line 370, $D_{4-7,9}$ subst. :

समानसारा वीर्येण देवतैश्च न संशयः ।

— (L. 371) $D_{4-7,9}$ तव (for त्वत्तो). — For line 372, $D_{4-7,9}$ subst. :

यत्ते गुह्यं रहस्यं च धर्मं प्रेत्येह चाक्षयम् ।
सर्वदेवैः समं प्राप्तां तन्नो ब्रूहि यथातथम् ।

— (L. 373) $D_{4-7,9}$ युष्माकं वै प्रसादजा (for the post. half). — (L. 374) $D_{4-7,9}$ युष्मदेव ($D_5$ युष्माकं हि)

अहन्यहनि यो दद्यात्कपिलां द्वादशीः समाः ।
मासि मासि च सत्रेण यो यजेत सदा नरः ।
गवां शतसहस्रं च यो दद्याज्ज्येष्ठपुष्करे ।
न तद्धर्मफलं तुल्यमतिथिर्यस्य तुष्यति ।
श्रूयतां चापरो धर्मो मनुष्याणां सुखावहः ।
श्रद्दधानेन कर्तव्यः सरहस्यो महाफलः ।
कल्यमुत्थाय गोमध्ये गृह्य दर्भान्सहोदकान् ।
निषिञ्चेत गवां शृङ्गे मस्तकेन च तज्जलम् ।
प्रतीच्छेत निराहारस्तस्य धर्मफलं शृणु ।
श्रूयन्ते यानि तीर्थानि त्रिषु लोकेषु कानिचित् ।
सिद्धचारणजुष्टानि सेवितानि महर्षिभिः ।
अभिषेकः समस्तेषां गवां शृङ्गोदकस्य च ।
साधु साध्विति चोद्दिष्टं दैवतैः पितृभिस्तथा ।
भूतैश्चैव सुसंहृष्टैः पूजिता साप्यरुन्धती ।

पितामहः ।

अहो धर्मो महाभागे सरहस्य उदाहृतः ।

---

प्रसादेन धर्मे वक्ष्यामि ये गुणाः. — (L. 375) D4–7. 9 सुगुह्यान्. D4–7. 9 समाहिताः (for अशेषतः). — (L. 376) B8 प्रयोक्तव्यं (for °व्या). D4–7. 9 श्रद्दधानः प्रमत्तेषु नित्यं श्रेयस्करा हि ये. — (L. 377) D4–7. 9 आश्रिते यः (D9 °तेषु) प्रहर्ता च (for the prior half). — (L. 378) D4–7. 9 नरा ह्येते (for हि चत्वारो). B8 धर्मान् (for धर्मं). D4–7. 9 धर्मस्तेषां हि लुप्यते (for the post. half). — (L. 380) D4. 6. 9 यो यजेद्दक्षिणावता; D5. 7 ये यज्ञे दाक्षिणान्विताः (for the post. half). — (L. 381) D4–7. 9 गोसहस्रं च यो दद्यात् (for the prior half). D4–7. 9 कार्तिक्यां (for यो दद्याज्). — (L. 382) B1 च (for तद्). D4–7. 9 तत्तु धर्मफलं तस्य (for the prior half). — (L. 383) D4–7. 9 इदं (D5 कर्म) चैव परं गुह्यं (for the prior half). — (L. 384) D4–7. 9 श्रूयतां धर्मसंग्रहः (for the post. half). — (L. 385) D4–7. 9 काल्य(D4 °ल)मुत्थाय यो मर्त्यो (for the prior half). — (L. 386) D4–7. 9 गवां शृंगेभिषेचेत (for the prior half.). — (L. 387) D4. 6. 9 प्रतीच्छेच्च; D5 यं प्रतीच्छेन् (for प्रतीच्छेत). D4–7. 9 पुण्यफलं (for धर्म°). B2 (marg. as above). 8 तस्य धर्मं निबोधत (for the post. half). — (L. 388) D4–7. 9 यानि तीर्थानि श्रूयंते (for the prior half). D4–7. 9 कृत्स्नशः (for कानिचित्). — (L. 389) D4–7. 9 मनीषिभिः (for महर्षिभिः). — (L. 390) D4–7. 9 तेषु (for तेषां). — After line 390, D4–7. 9 ins.:

अयं वै परमो धर्मो विनीतानां प्रशस्यते ।
सर्वपापहरः श्रीमान्परलोकसुखावहः ।
न व्रतं नोपवासस्तु न दानं न तपो महत् ।
स्त्रीणां धर्मो भवेन्नान्यो भर्तृशुश्रूषणात्परः ।
यो ददाति महादानं धनधान्यमनुत्तमम् ।
भर्तृविप्रियकारिण्या तद्वृथा नरको ध्रुवः ।

[(L. 2) D9 परलोके (for °क-). — (L. 6) D6. 9 भर्तुर् (for भर्तृ-).]

— For line 392, D4–7. 9 subst.:

ऋषिभिश्चैव सर्वैस्तु वृद्धगर्गादिभिः सह ।

D4–7. 9 om. the ref. — (L. 394) D4–7. 9 भद्रं ते (for ते धन्ये). — After line 394, D4–7. 9 ins.:

ततो देवा महाभागा ऋषयश्चापि धर्मिणः ।
पृच्छन्ति धर्मगुह्यानि वसूनथ पितृन्गणान् ।

वसवः ।

देवताभिगमे धूपं दत्त्वा प्रज्वलितेऽनले ।
तं वन्देच्छिरसा यस्तु तस्य पुष्टिप्रदा वयम् ।
नारायणं वर्धमानाद्रवां वा वृद्धिमन्तिकात् ।
यस्तु संप्रस्थितः पश्येत्कुर्यात्तस्य प्रदक्षिणम् ।
तस्य सा सफला यात्रा सर्वकामफलप्रदा ।
धर्मोऽस्य विपुलो मुख्यो जीवितं च महोदयम् ।
यत्र वा तत्र वा सर्वं हतं वाप्यभिनन्द्य च ।
संस्कारयेच्च विधिवत्तस्य धर्मो महान्भवेत् ।
यः सर्पं हनते क्रूरः परत्र हन्यते तु सः ।
भ्रूणहत्याकृतं पापं तस्य वै भवते ध्रुवम् ।
भ्रूणहापि कुमारीं वा पन्नगीं वापि यो हनेत् ।
समो दोषस्तु संभाष्यो नरकं यात्यसौ नरः ।
वसूनां वचनं श्रुत्वा पितरो मुनिभिः सह ।
क्रमेण धर्मगुह्यानि रुद्रान्पृच्छन्ति देवताः ।

रुद्राः ।

आह्निकस्यावसाने तु गवां पादोपसेचनम् ।
तत्तस्य हरते पापं सलिलं मूर्ध्नि पातितम् ।
मृत्तिकां गृह्य यः स्नायान्नद्यास्तूभयकूलतः ।
तस्य सर्वाणि पापानि भवन्ति निहतानि वै ।
शुचिः स्नात्वा नरो यस्तु शुक्लवस्त्रधरः सदा ।
रोचनाकृतमङ्गल्यः श्वेतमाल्यानुलेपनः ।
स हि सर्वाणि पापानि कश्मलान्यशुभानि च ।
निहत्य वपुषा युक्तः हस्त्रूणां हरते वपुः ।
विशुद्धकल्मषश्चापि यक्षलोकमनुव्रजेत् ।
स तत्र तेजसा युक्तो यक्षराजेन पूज्यते ।

Colophon.

भीष्मः ।

रुद्राणां वचनं श्रुत्वा परितुष्टा महर्षयः ।
आदित्यास्तमपृच्छन्त तत्रैव समरुद्गणैः ।
यस्य दैवमनायत्तं ब्राह्मणैः सह विग्रहः ।
निष्फलं जीवितं तस्य अधर्मेण च युज्यते ।
सन्ति देवाश्च सन्तश्च ब्राह्मणाः शौचमेव च ।

वरं ददामि ते धन्ये तपस्ते वर्धतां सदा ।

यमः ।

रमणीया कथा दिव्या युष्मत्तो या मया श्रुता ।
श्रूयतां चित्रगुप्तस्य भाषितं मम च प्रियम् ।
रहस्यं धर्मसंयुक्तं शक्यं श्रोतुं महर्षिभिः ।
श्रद्दधानेन मर्त्येन आत्मनो हितमिच्छता ।
न हि पुण्यं तथा पापं कृतं किंचिद्विनश्यति ।
पर्वकाले च यत्किंचिदादित्यं चाधितिष्ठति ।
प्रेतलोकं गते मर्त्ये तत्तत्सर्वं विभावसुः ।
प्रतिजानाति पुण्यात्मा तच्च तत्रोपयुज्यते ।
किंचिद्धर्मं प्रवक्ष्यामि चित्रगुप्तमतं शुभम् ।
पानीयं चैव दीपं च दातव्यं सततं तथा ।
उपानहौ च च्छत्रं च कपिला च यथातथम् ।
पुष्करे कपिला देया ब्राह्मणे वेदपारगे ।

---

अस्ति धर्मश्च सत्यं च दानं च विधिवत्सदा ।
वेदाः सत्यं स्मृतिः सत्यं यस्यैतत्तु मतं सदा ।
श्रद्दधानः स मनुजः स्वर्गलोके महीयते ।
आदित्यानां वचः श्रुत्वा सर्वे समभिनन्द्य च
तत्रैव विबुधाः सर्वे पृष्टवन्तः पितामहम् ।

पितामहः ।

देवतानामृषीणां च पितॄणां मातृभिः सह ।
आदित्यरुद्रसाध्यानां वसूनां च सुरोत्तमाः ।

[ (L. 3) $D_{4}$ गत्वा प्रज्वलनेन वै (for the post. half). —(L. 4) $D_{5.7}$ तद् (for तं). — (L. 9) $D_{8.9}$ तं हतं चाभिनंद्य च; $D_{7}$ हतं तं चाभिनंद्य च (for the post. half). — (L. 11) $D_{5}$ हन्यते स परत्र ह (for the post. half). — (L. 12) $D_{5.7}$ [ए]व च भवेद् (for वै भवते). — (L. 14) $D_{8.7}$ संभाव्यो (for °भ्यो). —(L. 17) $D_{8.7.9}$ गवां पादावसेचनं (for the post. half). — $D_{5}$ om. lines 18–19. — Colophon. *Sub-parvan:* $D_{5-7.9}$ दानधर्मं. — *Adhy. name :* $D_{4-7.9}$ देवरहस्यं. — (L. 31) $D_{4}$ om. the prior half. $D_{4}$ reads from the post half up to the post. half of line 34 after the prior half of line 397. — (L. 32) $D_{4}$ अस्ति धर्मस्य शौचस्य (for the prior half). — (L. 35) $D_{5}$ सर्वें (for सर्वे). — (L. 38) $D_{5}$ आदित्यानां च रुद्राणां (for the prior half). ]

$D_{4-7.9}$ om. the ref. — (L. 395) $B_{1.3}$ $D_{n3}$ रमणीयाः. $B_{1.3}$ $D_{n3}$ मया श्रुताः; $D_{8}$ श्रुता मया (by transp.). $D_{4-7.9}$ श्रुता युष्माभिरव्ययाः (for the post. half). — (L. 396) $D_{5-7.9}$ च मम (by transp.). — $D_{4-7.9}$ transp. lines 397 and 398. — (L. 397) $D_{5-7.9}$ शक्यमाचरितुं नरैः (for the post. half). — (L. 398) $D_{4-7.9}$ परलोकसुखावहं (for the post. half). — After line 398, $D_{4-7.9}$ ins.:

पितामहवचः श्रुत्वा चित्रगुप्तो महायशाः ।
देवताः प्रणतो भूत्वा भाषते धर्मसंहितम् ।

— (L. 400) $D_{n3}$ [उ]प- (for [अ]धि-). — (L. 401) $V_{1}$ $B_{4}$ $D_{n3}$ प्रेतलोक-; $B_{2.3}$ $D_{n2}$ °के (for °कं). $D_{4-6.9}$ प्रेतलोकगतस्यापि (for the prior half). $D_{4-7.9}$ पुण्यपापैर् (for तत्तत्सर्वं). — (L. 402) $D_{n3}$ तत्र (for तच्च). $D_{4-7.9}$ प्रजानाति हि ($D_{4}$ सुप्रजानां हि; $D_{5}$ प्रजानामिह) तत्सर्वं तत्रैव ह्युपभुंजति. — After line 402 $D_{4-7.9}$ ins. :

इहैव यत्कृतं कर्म यथाकालमुपस्थितम् ।
सहस्रसंमितं तत्तु तत्र तस्योपतिष्ठति ।
पर्यायः सर्वभूतेषु मन्तव्यः कालपर्ययात् ।
तत्र शीतं तथैवोष्णं कण्टका नरके बहु ।

[ (L. 1) $D_{5}$ चैव (for [ए]व यत्). $D_{4}$ इहैव तत्कृतं कार्यं (for the prior half). — (L. 2) $D_{7}$ तं (for तत्). $D_{4}$ -तिष्ठते (for °ति). ]

— After the above, $D_{4-7.9}$ read lines 412–413. — $D_{4-7.9}$ om. line 403. — After line 405, $D_{4-7.9}$ ins. :

अग्निहोत्रं च पुण्याख्यं यत्र कौतूहलं हि नः ।
तेषु दानेषु यो धर्मस्तं भवान्वक्तुमर्हति ।
पृथक्कारेण सर्वेषां श्रोतुमिच्छाम तत्त्वतः ।

चित्रगुप्तः ।

तेषु दानेषु ये धर्मास्ताञ्शृणुध्वं समाहिताः ।
श्रद्दधानेषु मर्त्येषु प्रेत्यलोके सुखावहम् ।
नित्यार्जवा ये विनये रताश्च
स्वाध्याययज्ञादिपथे निविष्टाः ।
नित्यप्रदानोद्धरणेषु युक्ता
यमस्य वक्त्रं न समीक्षते नराः ।
अवनितलगमनादिव्यनगां रम्यचित्रसंवीताम् ।
वैतरणीं नाम नदीं सुखेन गच्छन्ति वै मनुजाः ।
प्रियंवदा नित्यमनोविशुद्धा
ये तेषु वेत्रग्रहपङ्कगूढाः ।
सा एव भूयस्त्वतिदुर्विगाहा
कर्मानुरूपा भवतीह पुंसाम् ।
प्रायेण हिंसाभिरताः कृतघ्ना
मित्रद्रुहो नैकृतिकाः शठाश्च ।
ये कूटमानेषु रता मनुष्या-
स्ते पूयशोणितवहाः प्रतरन्ति सर्वे ।
ये धर्मशीला व्रतिनो मनुष्याः
पुण्योदकाः शीतजला हि तेषाम् ।
पिबन्ति ते वै सलिलं हि तत्र

अग्निहोत्रं च यत्नेन सर्वशः प्रतिपालयेत् ।
अयं चैवापरो धर्मश्चित्रगुप्तेन भाषितः ।
फलमस्य पृथक्त्वेन श्रोतुमर्हन्ति सत्तमाः ।
प्रलयं सर्वभूतैश्च गन्तव्यं कालपर्ययात् ।
तत्र दुर्गमनुप्राप्ताः क्षुत्तृष्णापरिपीडिताः ।
दह्यमाना विपच्यन्ते न तत्रास्ति पलायनम् ।
अन्धकारं तमो घोरं प्रविशन्त्यल्पबुद्धयः ।
तत्र धर्मं प्रवक्ष्यामि येन दुर्गाणि संतरेत् ।
अल्पव्ययं महार्थं च प्रेत्य चैव सुखोदयम् ।
पानीयस्य गुणा दिव्याः प्रेतलोके विशेषतः ।
तत्र पुण्योदका नाम नदी तेषां विधीयते ।
अक्षयं सलिलं तत्र शीतलं ह्यमृतोपमम् ।
स तत्र तोयं पिबति पानीयं यः प्रयच्छति ।
प्रदीपस्य प्रदानेन श्रूयतां गुणविस्तरः ।
तमोन्धकारं नियतं दीपदो न प्रपश्यति ।
प्रभां चास्य प्रयच्छन्ति सोमभास्करपावकाः ।
देवताश्चास्य मन्यन्ते विमलाः सर्वतोदिशः ।
द्योतते च यथादित्यः प्रेतलोकगतो नरः ।
तस्माद्दीपः प्रदातव्यः पानीयं च विशेषतः ।
कपिलां ये प्रयच्छन्ति ब्राह्मणे वेदपारगे ।
पुष्करे च विशेषेण श्रूयतां तस्य यत्फलम् ।
गोशतं सवृषं तेन दत्तं भवति शाश्वतम् ।
पापं कर्म च यत्किंचिद्ब्रह्महत्यासमं भवेत् ।
शोधयेत्कपिला ह्येका प्रदत्तं गोशतं यथा ।

---

यश्चापि तोयस्य हि संप्रदाता ।
तत्र पुण्योदका नाम नदी ह्यमृतवाहिनी ।
अक्षयं ह्यमृतं तत्र पीयते मानवोत्तमैः ।
तत्र तोयकृतैः कार्यैः स तृप्तो नरोत्तमः ।
देवतास्तस्य सुप्रीताः प्रयच्छन्ति महोदयम् ।
स्वर्गलोकं च विपुलं सर्वकामपुरस्कृतम् ।
तत्रैव दीयमानस्य श्रूयतां गुणविस्तरः ।
देवतायतने नित्यं द्विजावासे प्रतिश्रये ।
आकाशे चत्वरे वापि यः प्रयच्छति दीपकम् ।
तस्य सोमश्च सूर्यश्च ह्यग्नयश्च प्रभां ददुः ।
देवताश्चानुमन्यन्ते विमलाः सर्वतोदिशः ।
सोमसूर्याग्नितप्ताभ्यां दीपदाश्चोत्तमाः शुभाः ।
प्रदीपयन्ति तं देशं यत्र यत्र स गच्छति ।
दिव्यहंसप्रयुक्तेन विमानेन स गच्छति ।
अप्सरोगणसंवीते स्वर्गलोके महीयते ।

[(L. 1) D4 अग्निहोत्रे च पुण्यानां (for the prior half). — (L. 2) D4 ये धर्मास् (for यो धर्मस्). — (L. 3) D4.5 इच्छामि (for °म). — (L. 10) D5 -संचित्रां (for -संवीताम्). — (L. 14) D5 -दुर्विगाह्या (for °गाहा). — (L. 22) D4 ये (for ते). — D4 om. line 24. — (L. 26) D4 यः सं-; D5 सुसं- (for यः स). — D4 om. from the post. half of line 33 up to the prior half of line 35. — (L. 37) D4 -संकीर्णे (for -संवीते).]

After the above, D4-7.9 read lines 426-434. D5-7.9 om. line 406. — (L. 407) B1 परि (for प्रति-). D5-7.9 कृच्छ्रेष्वप्यनुपालयेत् (for the post. half). — After line 407, D4-7.9 ins.:

अग्नयोऽप्यनुगच्छन्ति परलोकगतं नरम् ।
तारयन्ति च दुर्गेषु अग्नयो नात्र संशयः ।
देवताश्चोपतिष्ठन्ति अग्निहोत्रेषु जुह्वताम् ।

[D4 om. line 1. — (L. 2) D5 ह्यग्नयो (for अ°). — (L. 3) D5 ह्यग्नि- (for अग्नि-).]

— After the above, D4-7.9 read lines 436-439. D4-7.9 om. lines 408-411. — (L. 409) B8 पृथक्चैव (for °क्त्वेन). — (L. 410) B8 -भूतेन (for -भूतैश्च). — (L. 412) D4 कृत एवं परां गतिं; D5-7.9 कृत एव परा गतिः (for the post. half). — After line 413, D4-7.9 ins.:

तत्र धर्ममिमं पुण्यं युक्तदानमहोदयम् ।
हृद्या यस्य प्रपा ग्रीष्मे शीततोयाः सुसंस्कृताः ।
अशून्या न च संश्लिष्टाः सुसंमृष्टोपलेपनाः ।
अनेकवस्तुसंयुक्तास्तस्य पुण्यफलं शृणु ।
हरशीर्षच्युता दिव्या सलिलाढ्या विभूषिता ।
त्रिलोकसहिता देवी सा वै नित्यं विधीयते ।
तच्छ्रुत्वा पितरः सर्वे ऋषयश्च सुरैः सह ।
प्रत्यूचुस्तं महात्मानं चित्रगुप्तं महामतिम् ।
अहो बहुविधो धर्मो यस्त्वया समुदाहृतः ।

[(L. 8) D7 ते (for तं).]

— D4-7.9 om. lines 414-425. — (L. 416) Some MSS. प्रेत्यलोके (for प्रेत°). — (L. 420) D8 दीपस्य वै प्रदाने त्र (for the prior half). — (L. 421) Dn3 दीपदानां प्रणश्यति (for the post. half). — (L. 422) B4 सोमपावकभास्कराः (for the post. half). — (L. 423) Dn2 [अ]नु- (for [अ]स्य). B3 विमलाः सर्वदेवताः (for the post. half). — (L. 424) Dn2 तथा (for यथा). Dn3 प्रेत्य- (for प्रेत-). D3 -गते (for -गतो). — D4 om. (hapl.) lines 426-432. — (L. 426) D5-7.9 कपिलां यः प्रयच्छेत (for the prior half). — (L. 427) D5-7.9 पुष्करेषु (for °रे च). D5-7.9 फलं तस्येह शृणवथ (for the post. half). — (L. 430) B5 प्रदातुं गोशतं तथा (for the post. half). — For lines 429-430, D5-7.9 subst.:

मुच्यते पापकं कर्म ब्रह्महत्यादृते कृतम् ।
विधिवत्कपिलां दत्त्वा शोधयेत्सर्वकिल्बिषात्

तस्मात्तु कपिला देया कौमुद्यां ज्येष्ठपुष्करे ।
न तेषां विषमं किंचिन्न दुःखं न च कण्टकाः ।
उपानहौ च यो दद्यात्पात्रभूते द्विजोत्तमे ।
छत्रदाने सुखां छायां लभते परलोकगः ।
न हि दत्तस्य दानस्य नाशोऽस्तीह कदाचन ।
चित्रगुप्तमतं श्रुत्वा हृष्टरोमा विभावसुः ।
उवाच देवताः सर्वाः पितॄंश्चैव महाद्युतिः ।
श्रुतं हि चित्रगुप्तस्य धर्मगुह्यं महात्मनः ।
श्रद्दधानाश्च ये मर्त्या ब्राह्मणेषु महात्मसु ।
दानमेतत्प्रयच्छन्ति न तेषां विद्यते भयम् ।
धर्मदोषास्त्विमे पञ्च येषां नास्तीह निष्कृतिः ।
असंभाष्या अनाचारा वर्जनीया नराधमाः ।
ब्रह्महा चैव गोघ्नश्च परदाररतश्च यः ।
अश्रद्दधानश्च नरः स्त्रियं यश्चोपजीवति ।
प्रेतलोकगता ह्येते नरके पापकर्मिणः ।
पच्यन्ते वै यथा मीनाः पूयशोणितभोजनाः ।
असंभाष्याः पितॄणां च देवानां चैव पञ्च ते ।
स्नातकानां च विप्राणां ये चान्ये च तपोधनाः ।

Colophon.

भीष्मः ।

ततः सर्वे महाभागा देवाश्च पितरश्च ह ।
ऋषयश्च महाभागाः प्रमथान्वाक्यमब्रुवन् ।

विशुद्धकल्मषः सोऽपि स्वर्गलोके महीयते ।

— D4–7. 9 om. line 431. D4–7. 9 transp. lines 432 and 433. — (L. 432) D4–7. 9 न तस्य चाशुभं किंचिन् (for the prior half). D4–7. 9 शूलं (for दुःखं). — (L. 433) D4–7. 9 तु (for च). B2 (marg. as above) द्विजातये (for द्विजोत्तमे). D4–7. 9 स्नातकाय द्विजाय वै (D4. 5 °तये) (for the post. half). — After line 433, D4–7. 9 ins. :

महारूपाणि यानानि उपागच्छन्ति तं नरम् ।
कामभोगाश्च विपुला निर्वाणं चोत्तमं परम् ।

[ (L. 1) D8. 9 om. from the post. half up to the post. half of line 2. D4 उपगच्छंति ये नराः (for the post. half). ]

— (L. 434) D4–7. 9 छत्रदानैर्न दह्यंति परलोकगता नराः. — After line 434, D5–7. 9 ins. :

अन्नदानकृतच्छाया उपागच्छन्ति शाश्वतम् ।

— After the above, D4–7. 9 read line 407. D4–7. 9 om. line 435. — (L. 435) B5 न शोचंति (for नाशोऽस्तीह). — (L. 436) D4–7. 9 -वचः (for -मतं). Dn8 कृष्णलोमा (for हृष्टरोमा). D4–7. 9 हृष्टपुष्टास्तपोधनाः (for the post. half). — (L. 437) D4–7. 9 सममूचुस्तदा सर्वे पितृभिः सहिताः सुराः. — (L. 438) V1 B2–5 Dn8 D8 श्रुतं वश्; B1 Dn3 श्रुतं च; D4–7. 9 श्रूयतां (for श्रुतं हि). — After line 438, D4–7. 9 ins. :

नृणां श्रेयस्करं नित्यं परवाक्यं सुखावहम् ।

[ D4 दिव्यं (for नित्यं). ]

— (L. 439) D4–7. 9 श्रद्धाना नरा (D5 नरे) ये तु ब्राह्मणेभ्यो मनीषिणः. — After line 439, D4–7. 9 ins. :

एवमेतत्प्रशंसन्ति चित्रगुप्तमतं तु ये ।
ते प्राप्नुवन्ति विपुलं फलं प्रेत्यगता नराः ।
ऊर्जितं च शुभं तत्र उपभोक्ष्यन्ति मानवाः ।
लोकपालास्तदा सर्वे चत्वारो विष्णुना सह ।
पूजयन्तः सुरश्रेष्ठाश्चित्रगुप्तं महामतिम् ।
साधु निष्कल्मषो धर्मो सरहस्य उदाहृतः ।
व्यक्तः सूक्ष्मश्च श्रेष्ठश्च प्रेत्यलोके न संशयः ।
तच्छ्रुत्वा लोकपालानां भाषितं विष्णुना सह ।
चित्रगुप्तस्ततो वाक्यं प्राञ्जलिः प्रत्यभाषत ।
कर्मदोषास्त्विमे पञ्च येषां नास्तीह निष्कृतिः ।
ब्राह्मणान्द्विषते यस्तु गुरुदारांश्च यो व्रजेत् ।
राष्ट्रे कृशश्च यो मर्त्यो भवेद्दुर्भिक्षकाङ्क्षि वै ।
स्त्रियो ये चोपजीवन्ति अश्रद्धेयश्च पञ्चमः ।
एते निष्क्रान्तधर्माणो नीचाचारा दुरात्मनः ।
पच्यमाना यथा मीनाः पूयशोणितभोजनाः ।
निष्कृतिं नाधिगच्छन्ति जायमानाः पुनः पुनः ।
दुष्कृतं ते तु विस्तारमुपभुञ्जन्ति पावकम् ।
नित्यमेव त्वसंभाष्याः पितॄणां सह दैवतैः ।
स्नातकानां तु विप्राणां साधूनां च महात्मनाम् ।
चित्रगुप्तस्य तच्छ्रुत्वा भाषितं बहुविस्तरम् ।
सुप्रीतमनसो देवाः स्वयंभुसहितास्तदा ।
प्रतिगृह्णन्ति ते धर्मं चित्रगुप्तमतं शुभम् ।

Colophon.

[ (L. 1) D7 यं (for ये). — (L. 4) D4. 6. 9 चत्वरे (for चत्वारो). — (L. 7) D8. 7. 9 प्रेतलोके (for प्रेत्य°). — (L. 14) D4. 6. 7. 9 निराचारा (for नीचा°). — D4 om. (hapl.) lines 15–16. — (L. 17) D5 पातकं; D8 पाचकं (for पावकम्). — (L. 18) D4. 6. 9 असंभाष्याः. — Colophon. *Sub-parvan* : D5–7. 9 दानधर्म. — *Adhy. name* : D4–7. 9 देवरहस्यं. ]

— D4–7. 9 om. lines 440–448. — (L. 445) V1 सर्वे (for ह्येते). B5 -कर्मणा (for -कर्मिणः). — (L. 446) Dn8 प्रोच्यंते (for पच्यन्ते). — (L. 448) D8 [S]पि चान्ये (for चान्ये च). — Colophon. — *Parvan name* : B1. 3. 4 Dn3 शांति. — *Sub-parvan* : V1 B1. 3–5 Dn1. n2 दानधर्म. — *Adhy. name* : V1 B1. 3. 4. 5 Dn1. n8 D8 चित्रगुप्तरहस्यानि. — *Adhy. no.* : V1 130; B5 121; Dn1 127. — (L. 449) D4–7. 9 ततः सुरगणाः

भवन्तो वै महाभागा अपरोक्षनिशाचराः ।
उच्छिष्टानशुचीन्क्षुद्रान्कथं हिंसथ मानवान् ।
के च स्मृताः प्रतीघाता येन मर्त्यान्न हिंसथ ।
रक्षोघ्नानि च कानि स्युर्यैर्गृहेषु प्रणश्यथ ।
श्रोतुमिच्छाम युष्माकं सर्वमेतन्निशाचराः ।

प्रमथाः ।

मैथुनेन सदोच्छिष्टाः कृते चैवाधरोत्तरे ।
मोहान्मांसानि खादेथ वृक्षमूले च यः स्वपेत् ।
आमिषं शीर्षतो यस्य पादतो यश्च संविशेत् ।
तत उच्छिष्टकाः सर्वे बहुच्छिद्राश्च मानवाः ।
उदके चाप्यमेध्यानि श्लेष्माणं च प्रमुञ्चति ।
एते भक्ष्याश्च वध्याश्च मानुषा नात्र संशयः ।
एवंशीलसमाचारान्धर्षयामो हि मानवान् ।
श्रूयतां च प्रतीघातान्यैर्न शक्नुम हिंसितुम् ।
गोरोचनासमालम्भो वचाहस्तश्च यो भवेत् ।
घृताक्षतं च यो दद्यान्मस्तके तत्परायणः ।
ये च मांसं न खादन्ति तान्न शक्नुम हिंसितुम् ।
यस्य चाग्निर्गृहे नित्यं दिवा रात्रौ च दीप्यते ।
तरक्षोश्चर्म दंष्ट्राश्च तथैव गिरिकच्छपः ।
आज्यधूमो बिडालश्च च्छागः कृष्णोऽथ पिङ्गलः ।
येषामेतानि तिष्ठन्ति गृहेषु गृहमेधिनाम् ।
तान्यधृष्याण्यगाराणि पिशिताशैः सुदारुणैः ।
लोकानस्मद्विधा ये च विचरन्ति यथासुखम् ।
तस्मादेतानि गेहेषु रक्षोघ्नानि विशां पते ।
एतद्वः कथितं सर्वं यत्र वः संशयो महान् ।

Colophon.

सर्वे पितरो मुनयस्तथा. — (L. 450) V1 पितरश् (for ऋषयश्). D4–7. 9 स्वयंभुवा सह विभो (for the prior half). — (L. 451) D4–7. 9 भवंतो हि महात्मानो (for the prior half). V1 ह्यपरोक्ष-; D4–7. 9 अप्रमेया (for अपरोक्ष-). — After line 451, D4–7. 9 ins. :

पृच्छाम सरहस्यानि धर्मगुह्यानि तत्त्वतः ।

— (L. 452) D4–7. 9 उच्छिष्टे वाथ च्छिद्रे वा (for the prior half). D4–7. 9 ये तु (for कथं). — (L. 454) B1 गृहे च (for गृहेषु). — For lines 453–455, D4–7. 9 subst. :

मानुषाणां च ये दोषा वध्यावध्याश्च यादृशाः ।
प्रतिघातं च युष्माकं तत्त्वमाख्यातुमर्हथ ।

— After the ref., D4–7. 9 ins. :

सर्वमेतत्प्रवक्ष्याम यथा हिंसाम मानुषान् ।
यथोच्छिष्टांश्च छिद्रेषु वध्यावध्याश्च यादृशाः ।
रक्षोघ्नानि च सर्वाणि दुराधर्षाश्च ये नराः ।
प्रतिघातश्च योऽस्माकं श्रूयताममरोत्तमाः ।

— (L. 456) D4–7. 9 उच्छिष्टो मैथुने यस्तु प्रकुर्वीताधरोत्तरं. — (L. 457) D4–7. 9 यश्च भक्षयते मांसं (for the prior half). D8 न च (for च यः). D6. 9 शयेत् (for स्वपेत्). — (L. 458) D4–7. 9 शयानस्य सुरोत्तमाः (for the post. half). — After line 458, D4–7. 9 ins. :

शयने चैव संध्यायां तथा शेते चतुष्पथे ।
देवगोष्ठे शुचिस्थाने अस्तमेति च भास्करे ।

— (L. 460) D4–7. 9 उदके मेध्यमूत्रे वा (for the prior half). D4. 6. 9 श्लेष्मं चापि; D5. 7 श्लेष्माणं वा (for °णं च). B1. 5 वि- (for प्र-). — B5 ins. after line 460 :

देवागारे च यस्तिष्ठेदस्तं याते दिवाकरे ।

While D4–7. 9 ins. after line 460 :

खादमानश्च यो गच्छेच्छोणितार्द्रश्च यो भवेत् ।
सूतिका चापि या नारी तैलाभ्यक्तश्च यो नरः ।

[(L. 2) D4 भवेत् (for नरः).]

— (L. 461) D4–7. 9 मनुष्याः शौचवर्जिताः (for the post. half). — (L. 462) D4–7. 9 भक्षयामो (D6. 9 °म) नराधमान् (for the post. half). — After line 462, D4–7. 9 ins. :

अनुच्छिष्टाश्च ये नित्यं ये नित्यं कृतमङ्गलाः ।
भूतैरन्यैः पिशाचैर्वा दुराधर्षा हि ते सदा ।

[(L. 1) D6. 7. 9 अनुच्छिद्रा ह्यच्छिद्राश्च (for the prior half). — (L. 2) D7 च (for वा).]

— (L. 463) B4. 5 हि (for च). D4–7. 9 गृहेभ्यो मंगलैः शुभैः (for the post. half). — D4–7. 9 om. (hapl.) lines 464–466. — (L. 464) Dn2 एवं तया (for गोरोचना-). B2 -समालब्धो; D5 °रब्धो (for °लम्भो). — (L. 467) D4–7. 9 यस्याग्निः सततं गेहे (for the prior half). — After line 469, D4–7. 9 ins. :

यत्रैतानि सदा गेहे न तं शक्ताः स्म हिंसितुम् ।
नैषा लङ्घयितुं शक्या मर्यादा लोकविश्रुता ।
स्थापिता विबुधैः पूर्वं युष्माभिर्धर्मरक्षिभिः ।

[(L. 1) D4 ते; D6 तु (for तं).]

— D4–7. 9 om. lines 470–472. — (L. 472) V1 B D8 महासुखाः; Dn2. n3 यथासुखाः (for °खम्). — (L. 473) D4–7. 9 निवासयेत् (for विशां पते). — (L. 474) D4–7. 9 एतेषु (for एतद्वः). D4–7. 9 मा भूद्वः संशयोऽत्र तु (for the post. half). — Colophon. — *Parvan name* : B1–4 Dn2 शांति. — *Sub-parvan* : V1 B1. 3–5 Dn1. n2 D8 दानधर्म. — *Adhy. name* : V1 B Dn D8 प्रमथानां रहस्यानि. — *Adhy. no.* : V1 131; B1

भीष्मः ।

ततः पद्मप्रतीकाशः पद्मोद्भूतः पितामहः ।
उवाच वचनं देवान्वासवं च शचीपतिम् ।
अयं महाबलो नागो रसातलचरो बली ।
तेजस्वी रेणुको नाम महासत्त्वपराक्रमः ।
अतितेजस्विनः सर्वे महावीर्या महागजाः ।
धारयन्ति महीं कृत्स्नां सशैलवनकाननाम् ।
भवद्भिः समनुज्ञातो रेणुकस्तान्महागजान् ।
धर्मगुह्यानि सर्वाणि गत्वा पृच्छतु तत्र वै ।
पितामहवचः श्रुत्वा ते देवा रेणुकं तदा ।
प्रेषयामासुरव्यग्रा यत्र ते धरणीधराः ।

रेणुकः ।

अनुज्ञातोऽस्मि देवैश्च पितृभिश्च महाबलाः ।
धर्मगुह्यानि युष्माकं श्रोतुमिच्छामि तत्त्वतः ।
कथयध्वं महाभागा यद्वस्तत्त्वं मनीषितम् ।

दिग्गजाः ।

कार्त्तिके मासि चाश्लेषा बहुलस्याष्टमी शिवा ।
तेन नक्षत्रयोगेन यो ददाति गुडौदनम् ।
इमं मन्त्रं जपञ्श्राद्धे यताहारो ह्यकोपनः ।
बलदेवप्रभृतयो ये नागा बलवत्तराः ।
अनन्ता ह्यक्षया नित्यं भोगिनः सुमहाबलाः ।
तेषां कुलोद्भवा ये च महाभूता भुजंगमाः ।
ते मे बलिं प्रयच्छन्तु बलतेजोभिवृद्धये ।
यदा नारायणः श्रीमानुज्जहार वसुंधराम् ।
तद्बलं तस्य देवस्य धरामुद्धरतस्तथा ।
एवमुक्त्वा बलिं तत्र वल्मीके तु निवेदयेत् ।
गजेन्द्रकुसुमाकीर्णं नीलवस्त्रानुलेपनम् ।
निर्वपेत्तं तु वल्मीके अस्तं याते दिवाकरे ।
एवं तुष्टास्ततः सर्वे अधस्ताद्भारपीडिता ।
श्रमं तं नावबुध्यामो धारयन्तो वसुंधराम् ।

---

122; $Dn_1$ 128. — *Śloka no.* : $Dn_2$ 14. — $D_{1-7.9}$ om. the ref. — (L. 475) $D_{1-7.9}$ प्रमथैरेवमुक्तस्तु (for the prior half). $D_{1-7}$ पद्मगर्भः (for पद्मोद्भूतः). — (L. 476) $D_{1-7.9}$ विष्णोः प्रोवाच वचनं वासवश्च शचीपतिः. — (L. 477) $D_{1-7.9}$ -तलोत्थितः (for -चरो बली). — (L. 478) $D_{1-7.9}$ दिशागजसदानुगः (for the post. half). — (L. 479) $B_3$ दिशां (for महा-). $D_{1-7.9}$ ये च सर्वे महावीर्या महाकाया दिशां गजाः. — (L. 480) $D_{1-7.9}$ सर्वां (for कृत्स्नां). — For lines 481–484, $D_{1-7.9}$ subst. :

तानपृच्छत्ततो नागान्रेणुको वै दिशां गजान् ।
धर्मगुह्यानि तेषां च तं वयं नोदयामहे ।
विष्णोः शक्रवचः श्रुत्वा ते वै देवगणास्तदा ।
ऊचुः सर्वे वदस्वेति रेणुकं नागसत्तमम् ।
दिशां गजानां ये धर्माः श्रोतुमिच्छामहे वयम् ।
बाढमित्येव सो नागः प्राञ्जलिः प्रत्यभाषत ।
गच्छामि युष्मद्वचनाद्रसातलतलं सुराः ।
भवतां च प्रसादेन समेष्यामि दिशां गजैः ।
सरहस्याश्च ये धर्माः कथयिष्यन्ति मे सुराः ।

भीष्मः ।

ततो रसातलं प्राप्तो रेणुकस्तान्दिशां गजान् ।
उवाच वचनं श्रीमान्महातेजा महीधरान् ।

[(L. 3) $D_7$ तथा (for तदा).]

— (L. 485) $V_1$ अनुज्ञातैश्च (for °तोऽस्मि). — After line 485, $D_{1-7.9}$ ins. :

एभिश्च समहाभागैर्वृद्धगर्गादिभिः स्वयम् ।

— (L. 486) $D_{4.5}$ नान्यथा; $D_{6.7.9}$ चान्यथा (for तत्त्वतः). — After line 486, $D_{1-7.9}$ ins. :

रेणुकेन तथा वृत्तं नागानां समुदाहृतम् ।
धर्मं प्रति कथास्तत्र नागानां परिवर्धिताः ।
विमृश्याथ ततः सर्वे धर्माधर्मविनिश्चयम् ।
प्रत्यूचू रेणुकं सर्वे शृणु धर्मविनिश्चयम् ।
ब्राह्मणः क्षत्रियो वापि वैश्यः शूद्रोऽपि चोरगः ।

[(L. 5) $D_5$ चानघ (for चोरगः).]

— $D_{1-7.9}$ om. line 487. $D_{1-7.9}$ om. the ref. — (L. 488) $B_3$ मिता; $B_{4.5}$ शुभा; $D_{4.5}$ ध्रुवं (for शिवा). — $D_{1-7.9}$ om. lines 490–497. — (L. 490) $B_2$ नित्यं (for श्राद्धे). — (L. 491) $V_1$ $B_{1.4}$ $Dn_{2.n3}$ नागा ये (by transp.). — $Dn_1$ om. line 493. — (L. 493) $V_1$ B $Dn_{2.n3}$ कुलान्वया (for कुलोद्भवा). — (L. 494) $V_1$ B $D_8$ प्रतीच्छंतु (for प्रय°). $B_{3.4}$ -तेजोवि-; $B_5$ -तेजोति- (for -तेजोऽभि-). — (L. 496) $B_2$ (marg. as above) $_5$ तदा (for तथा). $B_3$ धरामुद्धरतस्तदा (for the post. half). — $B_3$ om. lines 498–501. — (L. 498) $D_{1-7.9}$ -कुसुमाकीर्णैर्. $D_{1-7.9}$ -लेपनैः (for °नम्). — (L. 499) $D_8$ तत् (for तं). $B_3$ निर्वपेत च वल्मीके (for the prior half). $V_1$ ह्यस्तं (for अस्तं). $D_{1-7.9}$ वल्मीके वाथ ($D_5$ °पि) तद्देयं गच्छत्यस्तं दिवाकरे. — (L. 500) $D_{1-7.9}$ तेन दृष्टा वयं सर्वे (for the prior half). $D_{1-7.9}$ धरणी- (for अधस्ताद्). — (L. 501) $D_7$ श्रमं ततो न बुध्याम (for the prior half). $D_{1-7.9}$ महीमिमां (for वसुंधराम्). — (L. 502) $D_{4.5}$ एतं (for एवं). $Dn_1$ सर्वे; $Dn_2$ सर्व (for धर्म). $D_{4.5}$ यत्र गच्छंति मानवाः; $D_{6.7.9}$ यः प्रयच्छति मानवः (for the post. half). — For lines 503–505, $D_{1-7.9}$ subst. :

आतिथ्यं कृतमस्माकं यावल्लोकाः प्रतिष्ठिताः ।
यस्तु संवत्सरं पूर्णमेतद्दानं प्रयच्छति ।

एवं मन्यामहे धर्मं भारार्तां निरपेक्षिणः ।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा यद्युपोषितः ।
एवं संवत्सरं कृत्वा दानं बहुफलं लभेत् ।
वल्मीके बलिमादाय तन्नो बहुफलं मतम् ।
ये च नागा महावीर्यास्त्रिषु लोकेषु कृत्स्नशः ।
कृतातिथ्या भवेयुस्ते शतं वर्षाणि तत्त्वतः ।
दिग्गजानां च तच्छ्रुत्वा देवताः पितरस्तथा ।
ऋषयश्च महाभागाः पूजयन्ति स्म रेणुकम् ।

Colophon.

महेश्वरः ।

सारमुद्धृत्य युष्माभिः साधु धर्म उदाहृतः ।
धर्मगुह्यमिदं मत्तः शृणुध्वं सर्व एव ह ।
येषां धर्माश्रिता बुद्धिः श्रद्दधानाश्च ये नराः ।
तेषां स्यादुपदेष्टव्यः सरहस्यो महाफलः ।
निरुद्विग्नस्तु यो दद्यान्मासमेकं गवाह्निकम् ।
एकभक्तं तथाश्नीयाच्छ्रूयतां तस्य यत्फलम् ।
इमा गावो महाभागाः पवित्रं परमं स्मृताः ।
त्रीन्लोकान्धारयन्ति स्म सदेवासुरमानुषान् ।
तासु चैव महापुण्यं शुश्रूषा च महाफलम् ।
अहन्यहनि धर्मेण युज्यते वा गवाह्निके ।
मया ह्येता ह्यनुज्ञाताः पूर्वमासन्कृते युगे ।
ततोऽहमनुनीतो वै ब्रह्मणा पद्मयोनिना ।
तस्माद्व्रजस्थानगतस्तिष्ठत्युपरि मे वृषः ।
रमेऽहं सह गोभिश्च तस्मात्पूज्याः सदैव ताः ।
महाप्रभावा वरदा वरान्दद्युरुपासिताः ।
ता गावोऽस्यानुमन्यन्ते सर्वकर्मसु यत्फलम् ।
तस्य तत्र चतुर्भागो यो ददाति गवाह्निकम् ।

Colophon.

---

कार्त्तिकं मासमस्माकं श्रद्दधानः समाहितः ।
निर्वाप्यं परमं तेन दत्तं भवति शाश्वतम् ।

— (L. 504) Dn1. n3 एतत् (for एवं). B1. 3 Dn1 भवेत् (for लभेत्). — (L. 505) Dn1 महत् (for मतम्). — (L. 506) D7 om. लोकेषु. D4–7. 9 विश्रुताः (for कृत्स्नशः). — (L. 507) D4–7. 9 त्रिंशद्वर्षाणि रेणुक (for the post. half). — After line 507, D4–7. 9 ins. :

एकेनैव तु दानेन मनुजः सुखभाग्भवेत् ।
प्राप्नोति विपुलं स्वर्गं सर्वकामांश्च पुष्कलान् ।

— For lines 508–509, D4–7. 9 subst. :

दिशां गजानां तद्वाक्यं श्रुत्वा श्रावयतो गजः ।
देवतानां पितॄणां च श्रुत्वा प्रीता भवंस्तदा ।
विबुधाः पितृभिः सार्धं पूजयित्वेदमब्रुवन् ।
एवमेतद्यथार्थ त्वमुरग सत्यमस्तु तत् ।

[(L. 2) D4 तथा (for तदा). — (L. 4) D6. 7. 9 यथार्थत्वम् (for °र्थ त्वम्).]

— Colophon. — *Parvan name :* B1. 3. 4 शांति. — *Sub-parvan :* V1 B1. 3. 5 Dn D4–9 दानधर्म. — *Adhy. name :* V1 B1. 2. 4. 5 Dn D8 दिग्गजानां रहस्यानि; D4. 5. 7. 9 देवरहस्यं; D6 वेदरहस्यं. — *Adhy. no. :* V1 133; B5 123; Dn1 129. — *Śloka no. :* Dn1. n3 18. — Before the ref., D4–7. 9 ins. :

स्कन्दस्य वचनं श्रुत्वा पितरः सह दैवतैः ।
पृच्छन्ति धर्मगुह्यानि महादेवमुमापतिम् ।

— (L. 510) D4–7. 9 सारभूतास्त्विमे धर्माः सरहस्यानुचिंतिताः. — (L. 511) D4. 7 इमं (for इदं). D4–7. 9 पुण्यं; D8 यत्नः (for मत्तः). V1 च; B1–3 Dn2. n3 हि (for ह). D4–7. 9 तच्छृणुध्वं समाहिताः (for the post. half). — D4–7. 9 om. lines 512–513. — (L. 512) B2 (marg. as above) विद्याश्रिता (for धर्मा°). B2 (marg. as above). 8 सर्वशः (for ये नराः). — (L. 515) V1 एकभुक्तं (for °भक्तं). D4–7. 9 एकभक्तेन चाश्नीयात्तस्य पुण्यफलं त्विदं (D4 °लान्वितः). — (L. 516) D4–7. 9 महादोग्ध्रीः (for °भागाः). D4–7. 9 पवित्रा लोकमातरः (for the post. half). — (L. 517) D4–7. 9 धारयंति च त्रीँल्लो(D5. 7 त्रयो लो)कान् (for the prior half). — After line 517, D4–7. 9 ins. :

गावस्तेषां प्रयच्छन्ति सर्वधर्मेषु यत्फलम् ।
गच्छते च गवां लोकं न पुण्यं न च पातकम् ।

[(L. 2) D4. 6. 9 हि (for the second च).]

— D4–7. 9 om. (hapl.) lines 518–526. — (L. 518) B4. 5 तथा (for महा-). — (L. 519) Bom. ed. गवाह्निकः (for °के). — (L. 524) Dn1. n2 वरं (for वरान्). — After line 524, V B Dn2. n3 D8 ins. :

अवन्दिताश्च हिंसेयुस्तस्मात्पूज्यतमा मताः ।

[B5 अपूजिताश्च (for अवन्दि°). B1. 5 स्मृताः (for मताः).]

— (L. 525) B2. 3 -धर्मेषु (for -कर्मसु). — (L. 526) B3 तत्र तस्य (by transp.); Dn3 तस्य तस्य. — Colophon. — *Parvan name :* B1. 3. 4 शांति. — *Sub-parvan :* V1 B3–5 दानधर्म. — *Adhy. name :* V1 B1. 2. 4. 5 महादेवरहस्यानि. — *Śloka no. :* Dn1. n2 9. — Before the ref., D4–7. 9 ins. :

ततः सूर्यप्रतीकाशं रक्तपद्मसमप्रभम् ।
शांकरं नोदयामासुः कार्त्तिकेयं महाद्युतिम् ।
ततः शक्तिधरः श्रीमान्धर्मगुह्यमिदं जगौ ।
सारभूतास्त्विमे धर्मा भवद्भिर्यं उदाहृताः ।

स्कन्दः ।

ममाप्यनुमतो धर्मस्तं शृणुध्वं समाहिताः ।
नीलषण्डस्य शृङ्गाभ्यां गृहीत्वा मृत्तिकां तु यः ।
अभिषेकं त्र्यहं कुर्यात्तस्य धर्मं निबोधत ।
शोधयेदशुभं सर्वमाधिपत्यं परत्र च ।
यावच्च जायते मर्त्यस्तावच्छूरो भविष्यति ।
इदं चाप्यपरं गुह्यं सरहस्यं निबोधत ।
प्रगृह्यौदुम्बरं पात्रं पक्वान्नं मधुना सह ।
सोमस्योत्तिष्ठमानस्य पौर्णमास्यां बलिं हरेत् ।
तस्य धर्मफलं नित्यं श्रद्दधाना निबोधत ।
साध्या रुद्रास्तथादित्या विश्वेदेवास्तथाश्विनौ ।
मरुतो वसवश्चैव प्रतिगृह्णन्ति तं बलिम् ।
सोमश्च वर्धते तेन समुद्रश्च महोदधिः ।
एष धर्मो मयोद्दिष्टः सरहस्यः सुखावहः ।

विष्णुः ।

धर्मगुह्यानि सर्वाणि देवतानां महात्मनाम् ।
ऋषीणां चैव गुह्यानि यः पठेदाह्निकं सदा ।
शृणुयाद्वानसूयुर्यः श्रद्दधानः समाहितः ।
नास्य विघ्नः प्रभवति भयं चास्य न विद्यते ।
ये च धर्माः शुभाः पुण्याः सरहस्या उदाहृताः ।
तेषां धर्मफलं तस्य यः पठेत जितेन्द्रियः ।
नास्य पापं प्रभवति न च पापेन लिप्यते ।

— ( L. 527 ) $D_{4-7.9}$ ममा( $D_4$ तम )प्यनुमतान्धर्मास् ( for the prior half ). $D_{5-7.9}$ तान् ( for तं ). $D_4$ शृणुध्वं सुसमाहिताः ( for the post. half ). — After line 527, $D_{4-7.9}$ ins. :

आषाढे शुक्लषष्ठ्यां तु रश्मिपूतां प्लुतोदकाम् ।

— ( L. 528 ) $D_{4-7.9}$ गोवृषस्य विषाणाभ्यां मृत्तिकां गृह्य यो नरः. — After line 528, $D_{4-7.9}$ ins. :

प्रकुर्वीताभिषेकं तु तस्य पापं प्रणश्यति ।

— ( L. 529 ) $D_{4-7.9}$ तस्य पुण्यफलं महत् ( for the post. half ). — $B_5$ om. ( hapl. ) 530–532. — ( L. 530 ) $B_2$ ( marg. as above ). 3 च विंदति ( for परत्र च ). $D_{4-7.9}$ शोधयेत्पापकं कर्म इहलोके परत्र च. — ( L. 531 ) $D_{4-7.9}$ यावज्जीवति मर्त्यः स तावद्ख्याताति चंद्रवत्. — $D_{4.6.7.9}$ om. line 532. $D_5$ om. 532–534. — ( L. 532 ) $D_8$ [ए]व् ( for [अ]पि ). — ( L. 533 ) $D_{6.7.9}$ गृह्य च ( for प्रगृह्य ). $D_{4-7.9}$ यावकं ( for पक्वान्नं ). — After line 533, $D_{4.6.7.9}$ ins. :

श्वेतानि चैव पुष्पाणि साक्षतानि घृतं दधि ।

— ( L. 534 ) $D_{4.6.7.9}$ उदयं तस्य सोमस्य ( for the prior half ). — ( L. 535 ) $D_{4-7.9}$ दिव्यं ( for नित्यं ). $D_{4-7.9}$ श्रद्धानस्य वै सुराः ( for the post. half ). — For lines 536–537, $D_{4-7.9}$ subst. :

आदित्या वसवो रुद्रा अश्विनौ समरुद्गणाः ।
लोकपालाश्च वायुश्च हुताशः शक्र एव च ।

— After line 538, $D_{4-7.9}$ ins. :

सुप्रीताश्च प्रयच्छन्ति यथेप्सितमरिंदमाः ।
शाश्वतं नाकपृष्ठे च वासं सर्वे विमत्सराः ।
चक्षुष्मतां तु मर्त्यास्ते मृतानां सोम एव च ।
सौम्यतां च ततो यान्ति पौर्णमास्यां तु चन्द्रमाः ।
यच्चास्य दुष्कृतं किंचित्तत्सर्वं व्यपकर्षति ।
पुष्टिं च विपुलां दद्यात्परितुष्टो महोदधिः ।

— $D_{4-7.9}$ om. line 539. $D_{4-7.9}$ om. the ref. — ( L. 540 ) $D_{4-7.9}$ देवतानां च गुह्यानि पितॄणां मातृभिः सह. — ( L. 541 ) $D_{4.7.9}$ ऋषीणां प्रमथानां च ( for the prior half ). — $D_5$ om. lines 542–543. — ( L. 542 ) $D_{4.6.7.9}$ श्रद्धानः ( for [अ]नसूयुर्यः ). $D_4$ om. from the post. half up to the prior half of line 544. $D_{6.7.9}$ om. 543. — ( L. 545 ) $D_{4-7.9}$ तथा ( for तेषां ). $D_5$ यः पठेद्द्विजितेंद्रियः ( for the post. half ). — After line 545, $D_{4-7.9}$ ins. :

नैव पापानि चाप्नोति इहलोके परत्र च ।
यत्फलं लभते मर्त्यस्तत्फलं चापि शृण्वतः ।
यथा क्रतुशतैरिष्टं यथा दानं च पुष्करे ।
ब्राह्मणेषु च प्रीतेषु तत्फलं शाश्वतं ध्रुवम् ।
यच्च दुश्चरितं किंचित्पितृभिः पूर्वजैः कृतम् ।
तच्च शोधयते सर्वं वियोनिं न च गच्छति ।
धर्मवृद्धिं च वै देवास्तस्य कुर्युर्मया सह ।
विचरध्वं यथोत्साहमृषयः पितरस्तथा ।
श्रद्धानः पठेद्यस्तु शृणुयाद्वा समाहितः ।
अपुत्रो लभते पुत्रानन्धो लभति चक्षुषी ।
अविद्यो लभते विद्यां ब्राह्मणो वेदपारगः ।
दरिद्रो लभते ह्यर्थाञ्शिल्पं लभति शिल्पितः ।
वणिग्वै लभते लाभं बद्धो मुच्येत बन्धनात् ।
व्याधितो मुच्यते रोगात्कामार्थी काममाप्नुयात् ।
युद्धे जयं च लभते मृतो लभति सद्गतिम् ।

भीष्मः ।

इत्युक्तो लोकनाथेन शंकरेण महात्मना ।
विबुधाः पितरश्चैव ऋषयः समरुद्गणाः ।
एवमस्तु विभो शर्व कृतोऽस्माकमनुग्रहः ।
यस्त्विमं शृणुयान्नित्यं पठेद्वापि समाहितः ।
वयमप्यालयान्सर्वे गच्छामोऽन्धकसूदन ।

Colophon.

[ ( L. 1 ) $D_{4.6.9}$ च ( for [ए]व ). — ( L. 3 ) $D_8$ यथा क्रतुभिरिष्टं च ( for the prior half ). — ( L. 12 )

एवं मन्यामहे धर्मं भारार्ता निरपेक्षिणः ।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा यद्युपोषितः ।
एवं संवत्सरं कृत्वा दानं बहुफलं लभेत् ।
वल्मीके बलिमादाय तन्नो बहुफलं मतम् ।
ये च नागा महावीर्यास्त्रिषु लोकेषु कृत्स्नशः ।
कृतातिथ्या भवेयुस्ते शतं वर्षाणि तत्त्वतः ।
दिग्गजानां च तच्छ्रुत्वा देवताः पितरस्तथा ।
ऋषयश्च महाभागाः पूजयन्ति स्म रेणुकम् ।

Colophon.

महेश्वरः ।

सारमुद्धृत्य युष्माभिः साधु धर्म उदाहृतः ।
धर्मगुह्यमिदं मत्तः शृणुध्वं सर्व एव ह ।
येषां धर्माश्रिता बुद्धिः श्रद्दधानाश्च ये नराः ।
तेषां स्यादुपदेष्टव्यः सरहस्यो महाफलः ।
निरुद्विग्नस्तु यो दद्यान्मासमेकं गवाह्निकम् ।
एकभक्तं तथाश्नीयाच्छ्रूयतां तस्य यत्फलम् ।
इमा गावो महाभागाः पवित्रं परमं स्मृताः ।
त्रीन्लोकान्धारयन्ति स्म सदेवासुरमानुषान् ।
तासु चैव महापुण्यं शुश्रूषा च महाफलम् ।
अहन्यहनि धर्मेण युज्यते वा गवाह्निके ।
मया ह्येता ह्यनुज्ञाताः पूर्वमासन्कृते युगे ।
ततोऽहमनुनीतो वै ब्रह्मणा पद्मयोनिना ।
तस्माद्व्रजस्थानगतस्तिष्ठत्युपरि मे वृषः ।
रमेऽहं सह गोभिश्च तस्मात्पूज्याः सदैव ताः ।
महाप्रभावा वरदा वरान्दद्युरुपासिताः ।
ता गावोऽस्यानुमन्यन्ते सर्वकर्मसु यत्फलम् ।
तस्य तत्र चतुर्भागो यो ददाति गवाह्निकम् ।

Colophon.

---

कार्त्तिकं मासमस्माकं श्रद्दधानः समाहितः ।
निर्वाप्यं परमं तेन दत्तं भवति शाश्वतम् ।

— (L. 504) Dn1. n3 एतत् (for एवं). B1. 3 Dn1 भवेत् (for लभेत्). — (L. 505) Dn1 महत् (for मतम्). — (L. 506) D7 om. लोकेषु. D4–7. 9 विश्रुताः (for कृत्स्नशः). — (L. 507) D4–7. 9 त्रिंशद्वर्षाणि रेणुक (for the post. half). — After line 507, D4–7. 9 ins. :

एकेनैव तु दानेन मनुजः सुखभाग्भवेत् ।
प्राप्नोति विपुलं स्वर्गं सर्वकामांश्च पुष्कलान् ।

— For lines 508–509, D4–7. 9 subst. :

दिशां गजानां तद्वाक्यं श्रुत्वा श्रावयतो गजः ।
देवतानां पितॄणां च श्रुत्वा प्रीता भवंस्तदा ।
विबुधाः पितृभिः सार्धं पूजयित्वेदमब्रुवन् ।
एवमेतद्यथात्थ त्वमुरग सत्यमस्तु तत् ।

[ (L. 2) D4 तथा (for तदा). — (L. 4) D6. 7. 9 यथार्थंत्वम् (for °त्थ त्वम्). ]

— Colophon. — *Parvan name* : B1. 3. 4 शांति. — *Sub-parvan* : V1 B1. 3. 5 Dn D4–9 दानधर्म. — *Adhy. name* : V1 B1. 2. 4. 5 Dn D8 दिग्गजानां रहस्यानि; D4. 6. 7. 9 देवरहस्यं; D5 वेदरहस्यं. — *Adhy. no.* : V1 133; B5 123; Dn1 129. — *Śloka no.* : Dn1. n2 18. — Before the ref., D4–7. 9 ins. :

स्कन्दस्य वचनं श्रुत्वा पितरः सह दैवतैः ।
पृच्छन्ति धर्मगुह्यानि महादेवमुमापतिम् ।

— (L. 510) D4–7. 9 सारभूतास्त्विमे धर्माः सरहस्यानुर्चितिताः. — (L. 511) D4. 7 इमं (for इदं). D4–7. 9 पुण्यं; D8 यत्नः (for मत्तः). V1 च; B1–3 Dn2. n3 हि (for ह). D4–7. 9 तच्छृणुध्वं समाहिताः (for the post. half). — D4–7. 9 om. lines 512–513. — (L. 512) B2 (marg. as above) विद्याश्रिता (for धर्मा°). B2 (marg. as above). 3 सर्वशः (for ये नराः). — (L. 515) V1 एकभुक्तं (for °भक्तं). D4–7. 9 एकभक्तेन चाश्नीयात्तस्य पुण्यफलं त्विदं (D4 °लान्वितः). — (L. 516) D4–7. 9 महादोग्ध्रीः (for °भागाः). D4–7. 9 पवित्रा लोकमातरः (for the post. half). — (L. 517) D4–7. 9 धारयंति च त्रीँल्लो(D6. 7 त्रयो लो)कान् (for the prior half). — After line 517, D4–7. 9 ins. :

गावस्तेषां प्रयच्छन्ति सर्वधर्मेषु यत्फलम् ।
गच्छते च गवां लोकं न पुण्यं न च पातकम् ।

[ (L. 2) D4. 6. 9 हि (for the second च). ]

— D4–7. 9 om. (hapl.) lines 518–526. — (L. 518) B4. 5 तथा (for महा-). — (L. 519) Bom. ed. गवाह्निकः (for °के). — (L. 524) Dn1. n2 वरं (for वरान्). — After line 524, V B Dn2. n3 D8 ins. :

अवन्दिताश्च हिंसेयुस्तस्मात्पूज्यतमा मताः ।

[ B5 अपूजिताश्च (for अवन्दि°). B4. 5. स्मृताः (for मताः). ]

— (L. 525) B2. 3 -धर्मेषु (for -कर्मसु). — (L. 526) B2 तत्र तस्य (by transp.); Dn3 तस्य तस्य. — Colophon. — *Parvan name* : B1. 3. 4 शांति. — *Sub-parvan* : V1 B3–5 दानधर्म. — *Adhy. name* : V1 B1. 2. 4. 5 महादेवरहस्यानि. — *Śloka no.* : Dn1. n2 9. — Before the ref., D4–7. 9 ins. :

ततः सूर्यप्रतीकाशं रक्तपद्मसमप्रभम् ।
शांकरं नोदयामासुः कार्त्तिकेयं महाद्युतिम् ।
ततः शक्तिधरः श्रीमान्धर्मगुह्यमिदं जगौ ।
सारभूतास्त्विमे धर्मा भवद्भिर्य उदाहृताः ।

स्कन्दः ।
ममाप्यनुमतो धर्मस्तं शृणुध्वं समाहिताः ।
नीलषण्डस्य शृङ्गाभ्यां गृहीत्वा मृत्तिकां तु यः ।
अभिषेकं त्र्यहं कुर्यात्तस्य धर्मं निबोधत ।
शोधयेदशुभं सर्वमाधिपत्यं परत्र च ।
यावच्च जायते मर्त्यस्तावच्छूरो भविष्यति ।
इदं चाप्यपरं गुह्यं सरहस्यं निबोधत ।
प्रगृह्यौदुम्बरं पात्रं पक्वान्नं मधुना सह ।
सोमस्योत्तिष्ठमानस्य पौर्णमास्यां बलिं हरेत् ।
तस्य धर्मफलं नित्यं श्रद्दधाना निबोधत ।
साध्या रुद्रास्तथादित्या विश्वेदेवास्तथाश्विनौ ।
मरुतो वसवश्चैव प्रतिगृह्णन्ति तं बलिम् ।
सोमश्च वर्धते तेन समुद्रश्च महोदधिः ।
एष धर्मो मयोद्दिष्टः सरहस्यः सुखावहः ।
विष्णुः ।
धर्मगुह्यानि सर्वाणि देवतानां महात्मनाम् ।
ऋषीणां चैव गुह्यानि यः पठेदाह्निकं सदा ।
शृणुयाद्वानसूयुर्यः श्रद्दधानः समाहितः ।
नास्य विघ्नः प्रभवति भयं चास्य न विद्यते ।
ये च धर्माः शुभाः पुण्याः सरहस्या उदाहृताः ।
तेषां धर्मफलं तस्य यः पठेत जितेन्द्रियः ।
नास्य पापं प्रभवति न च पापेन लिप्यते ।

---

— (L. 527) D1–7. 9 ममा( D4 तम )प्यनुमतान्धर्मांस् ( for the prior half ). D5–7. 9 तान् ( for तं ). D4 शृणुध्वं सुसमाहिताः ( for the post. half ). — After line 527, D1–7. 9 ins. :

आषाढे शुक्लपक्षे तु रश्मिपूतां प्लुतोदकाम् ।

— (L. 528) D1–7. 9 गोवृषस्य विषाणाभ्यां मृत्तिकां गृह्य यो नरः. — After line 528, D1–7. 9 ins. :

प्रकुर्वीताभिषेकं तु तस्य पापं प्रणश्यति ।

— (L. 529) D1–7. 9 तस्य पुण्यफलं महत् ( for the post. half ). — B5 om. ( hapl. ) 530–532. — (L. 530) B2 ( marg. as above ). 8 च विंदति ( for परत्र च ). D1–7. 9 शोधयेत्पापकं कर्म इहलोके परत्र च. — (L. 531) D1–7. 9 यावज्जीवति मर्त्यः स तावद्दयातति चंद्रवत्. — D4. 6. 7. 9 om. line 532. D5 om. 532–534. — (L. 532) D3 [ए]व् ( for [अ]पि ). — (L. 533) D6. 7. 9 गृह्य च ( for प्रगृह्य ). D1–7. 9 यावकं ( for पक्वान्नं ). — After line 533, D4. 6. 7. 9 ins. :

श्वेतानि चैव पुष्पाणि साक्षतानि घृतं दधि ।

— (L. 534) D4. 6. 7. 9 उदयं तस्य सोमस्य ( for the prior half ). — (L. 535) D1–7. 9 दिव्यं ( for नित्यं ). D1–7. 9 श्रद्दधानस्य वै सुराः ( for the post. half ). — For lines 536–537, D1–7. 9 subst. :

आदित्या वसवो रुद्रा अश्विनौ समरुद्गणाः ।
लोकपालाश्च वायुश्च हुताशः शक्र एव च ।

— After line 538, D1–7. 9 ins. :

सुप्रीताश्च प्रयच्छन्ति यथेप्सितमरिंदमाः ।
शाश्वतं नाकपृष्ठे च वासं सर्वे विमत्सराः ।
चक्षुष्मत्तां तु मर्त्यास्ते मृतानां सोम एव च ।
सौम्यत्तां च ततो यान्ति पौर्णमास्यां तु चन्द्रमाः ।
यच्चास्य दुष्कृतं किंचित्तत्सर्वं व्यपकर्षति ।
पुष्टिं च विपुलां दद्यात्परितुष्टो महोदधिः ।

— D1–7. 9 om. line 539. D1–7. 9 om. the ref. — (L. 540) D1–7. 9 देवतानां च गुह्यानि पितॄणां मातृभिः सह. — (L. 541) D1. 7. 9 ऋषीणां प्रमथानां च ( for the prior half ). — D5 om. lines 542–543. — (L. 542) D1. 6. 7. 9 श्रद्धानः ( for [अ]नसूयुर्यः ). D4 om. from the post. half up to the prior half of line 544. D6. 7. 9 om. 543. — (L. 545) D1–7. 9 तथा ( for तेषां ). D5 यः पठेद्विजितेंद्रियः ( for the post. half ). — After line 545, D1–7. 9 ins. :

नैव पापानि चाप्नोति इहलोके परत्र च ।
यत्फलं लभते मर्त्यस्तत्फलं चापि शृण्वतः ।
यथा क्रतुशतैरिष्टं यथा दानं च पुष्करे ।
ब्राह्मणेषु च प्रीतेषु तत्फलं शाश्वतं ध्रुवम् ।
यच्च दुश्चरितं किंचित्पितृभिः पूर्वजैः कृतम् ।
तच्च शोधयते सर्वं वियोनिं न च गच्छति ।
धर्मवृद्धिं च वै देवास्तस्य कुर्युर्मया सह ।
विचरध्वं यथोत्साहमृषयः पितरस्तथा ।
श्रद्दधानः पठेद्यस्तु शृणुयाद्वा समाहितः ।
अपुत्रो लभते पुत्रानन्धो लभति चक्षुषी ।
अविद्यो लभते विद्यां ब्राह्मणो वेदपारगः ।
दरिद्रो लभते ह्यर्थाञ्शिल्पं लभति शिल्पितः ।
वणिग्वै लभते लाभं बद्धो मुच्येत बन्धनात् ।
व्याधितो मुच्यते रोगात्कामार्थी काममाप्नुयात् ।
युद्धे जयं च लभते मृतो लभति सद्गतिम् ।
भीष्मः ।
इत्युक्तो लोकनाथेन शंकरेण महात्मना ।
विबुधाः पितरश्चैव ऋषयः समरुद्गणाः ।
एवमस्तु विभो शर्व कृतोऽस्माकमनुग्रहः ।
यस्त्विमं शृणुयान्नित्यं पठेद्वापि समाहितः ।
वयमप्यालयान्सर्वे गच्छामोऽन्धकसूदन ।

Colophon.

[ (L. 1) D4. 6. 9 च ( for [ए]व ). — (L. 3) D5 यथा क्रतुभिरिष्टं च ( for the prior half ). — (L. 12)

पठेद्वा श्रावयेद्वापि श्रुत्वा वा लभते फलम् ।
भुञ्जते पितरो देवा हव्यं कव्यमथाक्षयम् ।
श्रावयंश्चापि विप्रेन्द्रान्पर्वसु प्रयतो नरः ।
ऋषीणां देवतानां च पितॄणां चैव नित्यदा ।
भवत्यभिमतः श्रीमान्धर्मेषु प्रयतः सदा ।
कृत्वापि पापकं कर्म महापातकवर्जितम् ।
रहस्यधर्मं श्रुत्वेमं सर्वपापैः प्रमुच्यते ।

भीष्मः ।

एतद्धर्मरहस्यं वै देवतानां नराधिप ।
व्यासोद्दिष्टं मया प्रोक्तं सर्वदेवनमस्कृतम् ।
पृथिवी रत्नसंपूर्णा ज्ञानं चेदमनुत्तमम् ।
इदमेव ततः श्राव्यमिति मन्येत धर्मवित् ।
नाश्रद्दधानाय न नास्तिकाय
न नष्टधर्माय न निर्गुणाय ।
न हेतुदुष्टाय गुरुद्विषे वा
नानात्मभूताय निवेद्यमेतत् ।

Colophon.

## 14A

$V_1$ B Dn $D_{1,2,4-9}$ Cv cont. :

युधिष्ठिरः ।

के भोज्या ब्राह्मणस्येह के भोज्याः क्षत्रियस्य ह ।
तथा वैश्यस्य के भोज्याः के च शूद्रस्य भारत ।

भीष्मः ।

ब्राह्मणा ब्राह्मणस्येह भोज्या ये चैव क्षत्रियाः ।
वैश्याश्चापि तथा भोज्याः शूद्राश्च परिवर्जिताः ।
ब्राह्मणाः क्षत्रिया वैश्या भोज्या वै क्षत्रियस्य ह ।
वर्जनीयास्तु वै शूद्राः सर्वभक्ष्या विकर्मिणः ।
वैश्यास्तु भोज्या विप्राणां क्षत्रियाणां तथैव च ।
नित्याग्नयो विविक्ताश्च चातुर्मास्यरताश्च ये ।
शूद्राणामथ यो भुङ्क्ते स भुङ्क्ते पृथिवीमलम् ।
मलं नृणां स पिबति मलं भुङ्क्ते जनस्य च ।
शूद्राणां यस्तथा भुङ्क्ते स भुङ्क्ते पृथिवीमलम् ।
पृथिवीमलमश्नन्ति ये द्विजाः शूद्रभोजिनः ।
शूद्रस्य कर्मनिष्ठायां विकर्मस्थोऽपि पच्यते ।
ब्राह्मणः क्षत्रियो वैश्यो विकर्मस्थश्च पच्यते ।
स्वाध्यायनिरता विप्रास्तथा स्वस्त्ययने नृणाम् ।
रक्षणे क्षत्रियं प्राहुर्वैश्यं पुष्ट्यर्थमेव च ।
करोति कर्म यद्वैश्यस्तद्गत्वा ह्युपजीवति ।
कृषिगोरक्ष्यवाणिज्यमकुत्सा वैश्यकर्मणि ।
शूद्रकर्म तु यः कुर्यादवहाय स्वकर्म च ।
स विज्ञेयो यथा शूद्रो न च भोज्यः कदाचन ।
चिकित्सकः काण्डपृष्ठः पुराध्यक्षः पुरोहितः ।
सांवत्सरो वृथाध्यायी सर्वे ते शूद्रसंमिताः ।
शूद्रकर्मस्वथैतेषु यो भुङ्क्ते निरपत्रपः ।
अभोज्यभोजनं भुक्त्वा भयं प्राप्नोति दारुणम् ।

---

$D_5$ शिल्पगः ( for शिल्पितः ). — ( L. 13 ) $D_4$ वणिजो ( for °ग्वै ). $D_{6,9}$ लभंते वाणिजो लाभं ( for the prior half ). — ( L. 14 ) $D_5$ रोगी ( for रोगात् ). — ( L. 15 ) $D_{5,6,9}$ मर्त्यलोके च सद्गतिं ( for the post. half ). — ( L. 17 ) $D_5$ ऋषयश् ( for पितरश् ). $D_5$ पितरः ( for ऋषयः ). — Colophon. *Sub-parvan* : $D_{5,6,9}$ दानधर्म. — *Adhy. name* : $D_{5-7,9}$ देवरहस्यानि. ] :

— $D_{4-7,9}$ om. lines 546–561. — ( L. 547 ) $B_5$ पठित्वा ( for पठेद्वा ). $B_8$ $Dn_2$ $D_8$ श्रावयित्वा ( for °येद्वा ). $V_1$ $B_{1,2}$ $Dn_3$ पठित्वा श्रावयित्वापि ( for the prior half ). — ( L. 548 ) $B_3$ $Dn_3$ तथा ( for अथ ). — ( L. 550 ) $B_{3,8}$ नित्यशः ( for °दा ). — ( L. 559 ) $B_{1-3}$ निर्घृणाय ( for निर्गु° ). — ( L. 560 ) $V_1$ $B_4$ $Dn_3$ न ; $B_{1,2}$ च ( for वा ). — After line 561, $D_8$ ins. :

देयं त्विदं श्रद्दधानाय पुण्यं
गुणान्विते धर्मपराय चैव ।
हेत्वर्थयुक्ताय गुरूक्तकारिणे
महात्मभूताय निवेद्यमेतत् ।

— Colophon. — *Parvan name* : $B_{1-4}$ शांति. — *Sub-parvan* : $V_1$ B $Dn_{1,n2}$ $D_8$ दानधर्म. — *Adhy. name* : $V_1$ B Dn $D_8$ सर्व( $Dn_3$ सर्वदेव )रहस्यानि. — *Adhy. no.* : $V_1$ 135 ; $B_5$ 125 ; $Dn_1$ 130. — *Śloka no.* : $Dn_1$ 16 ; $Dn_2$ 17.

14 A

$D_{4,6,9}$ om. line 1. — ( L. 1 ) $V_1$ $B_{1-3,5}$ $Dn_8$
$D_{5,8}$ च ( for ह ). — ( L. 2 ) $Dn_1$ om. ( hapl. ) from
the post. half up to the prior half of line 4. Bom.
ed. के शूद्रस्य च भारत ( for the post. half ). — ( L.
3 ) $B_1$ वै च ( for चैव ). $D_5$ ब्राह्मणस्येह भोज्या ये भोज्याश्च
क्षत्रियस्य च. — ( L. 5 ) $B_{3,5}$ $D_{5,8}$ च; $Dn_3$ हि ( for
ह ). — ( L. 6 ) $V_1$ च ( for तु ). — $D_5$ om. lines
8–12. — ( L. 9 ) $D_8$ अपि ( for अथ ). — $B_3$ om.
line 12. — ( L. 13 ) $B_{1,4}$ $D_8$ हि ( for ऽपि ). — ( L.
14 ) $B_5$ ब्राह्मणाः. $B_{3,6}$ वैश्या. $B_{3,5}$ विकर्मस्थाश्च. $D_{5,8}$ हि
( for च ). — ( L. 17 ) $V_1$ $B_{1,2}$ ( marg. as above ). $_{4,5}$
दत्त्वा ( for गत्वा ). $Dn_2$ [अ]भ्युप- ( for ह्युप° ). $Dn_{1,n2}$
तद्दत्त्वाभ्युपजीवति ( for the post. half ). — ( L. 18 )
$B_{1,4,5}$ -गोरक्ष-. $B_3$ कृषिवाणिज्यगोरक्षम् ( for the prior
half ). — ( L. 19 ) $D_5$ अपहाय ( for अव° ). — ( L. 23 )
$D_8$ वृथाध्यायी ( for °ध्यायी ). — ( L. 24 ) $D_5$ आप्नोति ( for
प्रा° ). — $D_5$ om. lines 28–30. — ( L. 29 ) $V_1$ भगंतः

कुलं वीर्यं च तेजश्च तिर्यग्योनित्वमेव च ।
स प्रयाति यथा श्वा वै निष्क्रियो धर्मवर्जितः ।
भुङ्क्ते चिकित्सकस्यान्नं तदन्नं च पुरीषवत् ।
पुंश्चल्यन्नं च मूत्रं स्यात्कारुकान्नं च शोणितम् ।
विद्योपजीविनोऽन्नं च यो भुङ्क्ते साधुसंमतः ।
तदप्यन्नं यथा शौद्रं तत्साधुः परिवर्जयेत् ।
वचनीयस्य यो भुङ्क्ते तमाहुः शोणितं ह्रदम् ।
पिशुनं भोजनं भुङ्क्ते ब्रह्महत्यासमं विदुः ।
असत्कृतमवज्ञातं न भोक्तव्यं कदाचन ।
व्याधिं कुलक्षयं चैव क्षिप्रं प्राप्नोति ब्राह्मणः ।
नगरीरक्षिणो भुङ्क्ते श्वपचप्रवणो भवेत् ।
गोघ्ने च ब्राह्मणघ्ने च सुरापे गुरुतल्पगे ।
भुक्त्वान्नं जायते विप्रो रक्षसां कुलवर्धनः ।
न्यासापहारिणो भुक्त्वा कृतघ्ने क्लीबवर्तिनि ।
जायते शबरावासे मध्यदेशबहिष्कृते ।
अभोज्याश्चैव भोज्याश्च मया प्रोक्ता यथाविधि ।
किमन्यदद्य कौन्तेय मत्तस्त्वं श्रोतुमिच्छसि ।

Colophon.

युधिष्ठिरः ।

उक्तास्तु भवता भोज्यास्तथाभोज्याश्च सर्वशः ।
अत्र मे प्रश्नसंदेहस्तन्मे वद पितामह ।
ब्राह्मणानां विशेषेण हव्यकव्यप्रतिग्रहे ।
नानाविधेषु भोज्येषु प्रायश्चित्तानि शंस मे ।

भीष्मः ।

हन्त वक्ष्यामि ते राजन्ब्राह्मणानां महात्मनाम् ।
प्रतिग्रहेषु भोज्ये च मुच्यते येन पाप्मनः ।
घृतप्रतिग्रहे चैव सावित्री समिदाहुतिः ।
तिलप्रतिग्रहे चैव सममेतद्युधिष्ठिर ।
मांसप्रतिग्रहे चैव मधुनो लवणस्य च ।
आदित्योदयनं स्थित्वा पूतो भवति ब्राह्मणः ।
काञ्चनं प्रतिगृह्याथ जपमानो गुरुश्रुतिम् ।
कृष्णायसं च त्रिवृतं धारयन्मुच्यते द्विजः ।
एवं प्रतिगृहीतेऽथ धने वस्त्रे तथा स्त्रियाम् ।
एवमेव नरश्रेष्ठ सुवर्णस्य प्रतिग्रहे ।
अन्नप्रतिग्रहे चैव पायसेक्षुरसे तथा ।
इक्षुतैलपवित्राणां त्रिसंध्येऽप्सु निमज्जनम् ।
व्रीहौ पुष्पे फले चैव जले पिष्टमये तथा ।
यावके दधिदुग्धे च सावित्रीं शतशोऽन्विताम् ।
उपानहौ च वस्त्रं च प्रतिगृह्यौर्ध्वदेहिकम् ।
जपेच्छतं समायुक्तस्तेन मुच्येत पाप्मना ।
क्षेत्रप्रतिग्रहे चैव ग्रहसूतकयोस्तथा ।
त्रीणि रात्राण्युपोषित्वा तेन पाप्मा विमुच्यते ।
कृष्णपक्षे तु यः श्राद्धं पितृणामश्नुते द्विजः ।
अन्नमेतदहोरात्रात्पूतो भवति ब्राह्मणः ।
न च संध्यामुपासीत न च जप्यं प्रवर्तयेत् ।
न संकिरेत्तदन्नं च तथा पूयेत ब्राह्मणः ।
इत्यर्थमपराह्णे तु पितृणां श्राद्धमुच्यते ।
यथोक्तानां यदश्नीयुर्ब्राह्मणाः पूर्वकेतिताः ।
मृतकस्य तृतीयाहे ब्राह्मणो योऽन्नमश्नुते ।
स त्रिवेलं समुन्मज्य द्वादशाहेन शुध्यति ।
द्वादशाहे व्यतीते तु कृतशौचो विशेषतः ।
ब्राह्मणेभ्यो हविर्दत्त्वा मुच्यते तेन पाप्मना ।
मृतस्य दशरात्रेण प्रायश्चित्तानि दापयेत् ।
सावित्रीं रैवतीमिष्टिं कूष्माण्डमघमर्षणम् ।
मृतकस्य त्रिरात्रे यः समुद्दिष्टे समश्नुते ।
सस त्रिषवणं स्नात्वा पूतो भवति ब्राह्मणः ।
सिद्धिमाप्नोति विपुलामापदं चैव नाप्नुयात् ।
यस्तु शूद्रैः सहाश्नीयाद्ब्राह्मणोऽप्येकभोजने ।

(for -संमतः). —(L. 32) B2–5 पिशुनान्नं च (B4 तु) यो भुंक्ते (for the prior half). —(L. 33) D5 अविज्ञातं (for अव°). —(L. 34) D8 मानवः (for ब्राह्मणः). —(L. 35) V1 B D5. 8 नगरारक्षणे भुंक्ते (for the prior half). —(L. 36) B Dn3 D5. 8 ब्रह्महणे (for ब्राह्मणघ्ने). —(L. 37) D5 मर्त्यो (for विप्रो). —(L. 41) D5 अर्हसि (for इच्छसि). — Colophon. — *Parvan name* : B1. 2. 4 Dn3 शांति. — *Sub-parvan* : V1 B Dn D8 दानधर्म. — *Adhy. name* : V1 B1. 2. 4. 5 Dn1. n2 D8 भोज्याभोज्यान्नं (B1 °ज्यज्ञानं); Dn3 भोज्यान्नं. — *Adhy. no.* : V1 135; B5 126; Dn1 132. — *Śloka no.* : Dn1. n2 21. —(L. 43) V1 B2 ब्रूहि (for वद). —(L. 47) V1 B1. 4. 5 Dn3 D8 -ग्रहे च (for -ग्रहेषु). —(L. 52) Dn3 यजमानो (for जप°). B3 -स्मृतिं (for -श्रुतिम्). —(L. 53.) B5 त्रिविधं; Bom. ed. विवृतं (for त्रि°). —(L. 54) B2 च (for ऽथ). D8 याने (for धने). —(L. 60) Bom. ed. च्छत्रं (for वस्त्रं). B3 Dn3 -देहिके (for °कम्). —(L. 63) B1 पापाद् (for पाप्मा). —(L. 64) B3 यच् (for यः). —(L. 66) B1–3. 5 जाप्यं (for जप्यं). —(L. 67) D5 न संकिरन्न दत्तं च (for the prior half). Dn3 ततः (for तथा). —(L. 69) B1 समश्नीयुर् (for यद°). — Dn3 reads lines 70–72 twice. —(L. 71) V1 B मुच्यते (for शुध्यति). —(L. 75) V1 B4 Dn1. n2 इष्टं (for इष्टिं). —(L. 77) B1 Dn3 स च; B5 स वा (for सस). V1 सावित्रीसवनं स्नात्वा; B3–4 स त्रिषवणं स्नात्वा (for the prior half). —(L. 78) V1 [अ]पि (for [ए]व). Dn3 ना (for न). —(L. 79) B3. 5 समश्नीयाद् (for सहाश्नी°). B3. 5 D1 [ऽ]प

अशौचं विधिवत्तस्य शौचमात्रं विधीयते ।
यस्तु वैश्यैः सहाश्नीयाद्ब्राह्मणोऽप्येकभोजने ।
स वै त्रिरात्रं दीक्षित्वा मुच्यते तेन कर्मणा ।
क्षत्रियैः सह योऽश्नीयाद्ब्राह्मणोऽप्येकभोजने ।
आप्लुतः सह वासोभिस्तेन मुच्येत पाप्मना ।
शूद्रस्य तु कुलं हन्ति वैश्यस्य पशुबान्धवान् ।
क्षत्रियस्य श्रियं हन्ति ब्राह्मणस्य सुवर्चसम् ।
प्रायश्चित्तं च शान्तिं च जुहुयात्तेन मुच्यते ।
सावित्रीं रैवतीमिष्टिं कूष्माण्डमघमर्षणम् ।
अथोच्छिष्टमथान्योन्यं संप्राशेन्नात्र संशयः ।
रोचना विरजा रात्रिर्मङ्गलालम्भनानि च ।

Colophon.

## 14 B

V1 B Dn D1. 2. 4–9 Cv cont. :

युधिष्ठिरः ।

दानेन वर्ततेत्याह तपसा चैव भारत ।
तदेतन्मे मनोदुःखं व्यपोह त्वं पितामह ।
किंस्वित्पृथिव्यां ह्येतन्मे भवाञ्शंसितुमर्हति ।

भीष्मः ।

शृणु यैर्धर्मनिरतैस्तपसा भावितात्मभिः ।
लोका ह्यसंशयं प्राप्ता दानपुण्यरतैर्नृपैः ।
सत्कृतश्च तथात्रेयः शिष्येभ्यो ब्रह्म निर्गुणम् ।
उपदिश्य सदा राजन्गतो लोकाननुत्तमान् ।
शिबिरौशीनरः प्राणान्प्रियस्य तनयस्य च ।
ब्राह्मणार्थमुपाकृत्य नाकपृष्ठमितो गतः ।
प्रतर्दनः काशिपतिः प्रदाय तनयं स्वकम् ।
ब्राह्मणायातुलां कीर्तिमिह चामुत्र चाश्नुते ।
रन्तिदेवश्च सांकृत्यो वसिष्ठाय महात्मने ।
अर्घ्यं प्रदाय विधिवल्लेभे लोकाननुत्तमान् ।
दिव्यं शतशलाकं च यज्ञार्थं काञ्चनं शुभम् ।
छत्रं देवावृधो दत्त्वा ब्राह्मणायास्थितो दिवम् ।
भगवानम्बरीषश्च ब्राह्मणायामितौजसे ।
प्रदाय सकलं राष्ट्रं सुरलोकमवाप्तवान् ।
सावित्रः कुण्डलं दिव्यं यानं च जनमेजयः ।
ब्राह्मणाय च गा दत्त्वा गतो लोकाननुत्तमान् ।
वृषादर्भिश्च राजर्षी रत्नानि विविधानि च ।
रम्यांश्चावसथान्दत्त्वा द्विजेभ्यो दिवमागमत् ।
निमी राष्ट्रं च वैदार्भिः कन्यां दत्त्वा महात्मने ।
अगस्त्याय गतः स्वर्गं सपुत्रपशुबान्धवः ।
जामदग्न्यश्च विप्राय भूमिं दत्त्वा महायशाः ।
रामोऽक्षयांस्तथा लोकाञ्जगाम मनसोऽधिकान् ।
अवर्षति च पर्जन्ये सर्वभूतानि देवराट् ।
वसिष्ठो जीवयामास येन यातोऽक्षयां गतिम् ।
रामो दाशरथिश्चैव हुत्वा यज्ञेषु वै वसु ।
स गतो ह्यक्षयाल्लोकान्यस्य लोके महद्यशः ।
कक्षसेनश्च राजर्षिर्वसिष्ठाय महात्मने ।
न्यासं यथावत्संन्यस्य जगाम सुमहायशाः ।
करंधमस्य पौत्रस्तु मरुत्तोऽऽविक्षितः सुतः ।
कन्यामङ्गिरसे दत्त्वा दिवमाशु जगाम सः ।

---

(for ऽपि). D6. 8 -भोजनं. V1 B1. 2. 4 ब्राह्मणोथैकभाजने (for the post. half). — V1 B6 om. (hapl.) lines 80–83. D3 om. (hapl.) 80–81. — (L. 80) B8 Dn2. n8 शौचमत्र (for °मात्रं). — (L. 81) B2 [अ]थ (for [ए]क-). B1. 2. 4 Dn1 ब्राह्मणोथैकभाजने (Dn1 °भोजनं) (for the post. half). — (L. 82) B3 भिक्षित्वा (for दी°). — (L. 83) B3 Dn1 [ऽ]थ (for ऽपि). B1. 2. 4 ब्राह्मणोथैकभाजने (for the post. half). — *Dn2 reads line* 86 twice. D6 om. lines 87–88. — (L. 88) V1 B3 Dn2 रैवतीम्. V1 B1 इष्टं (*for* इष्टिं). — (L. 89) Bom. ed. तथा (for the first अथ). — Colophon. — *Parvan name* B1 3. 4 शांति. — *Sub-parvan* : V1 B Dn1. n2 D8 दान-धर्म. — *Adhy. name* : V1 B3 Dn D8 प्रायश्चित्तविधिः. — *Adhy. no.* : V1 136 ; B5 127 ; Dn1 133. — *Śloka no.* : Dn1 25 ; Dn2 24.

14 B

Dn1. n2 D8 om. line 3. — (L. 3) B2 (marg.) किंचित्पृथुतरं तन्मे (for the prior half). B1. 5 D5 अर्हसि (for °ति). — (L. 5) D8 ह्यसंक्षयाः (for °शयं). Dn8 -पुण्यवृतैर्; D8 °तरैर् (for °रतैर्). D6 नरैः (for नृपैः). — (L. 6) V1 यथा (for तथा). — (L. 7) B4. 5 D8 तथा; D5 ततो (for सदा). Dn2 मृतो; Dn3 सतां (for गतो). D6 गोलोकानप्यनुत्तमान् (for the post. half). — B5 D6 om. (hapl.) lines 8–13. — (L. 9) B1 D3 उपाहृत्य (for °कृत्य) — (L. 12) Some MSS. वशिष्ठाय. — (*L.* 13) B1 अर्घं (for अर्घ्यं). — B1 om. (hapl.) lines 14–19. — (L. 18) D5 सावित्रं (for °त्रः). —(L. 19) V1 B4 तथा; B2. 8 च यो; B6 यथा; *Dn* च गां (*for* च गा). — (L. 21) Dn आगतान्; Bom. ed. आगतः (for °मत्). — (L. 22) V1 B1. 2. 4 D8 तु (for च). — (L. 25) Dn2 मनसा (for °सो). — (L. 27) Some MSS. वशिष्ठो. — (L. 30) Some MSS. वशिष्ठाय. — (L. 31) D8 -त्तनाः

ब्रह्मदत्तश्च पाञ्चाल्यो राजा धर्मभृतां वरः ।
निधिं शङ्खमनुज्ञाप्य जगाम परमां गतिम् ।
राजा मित्रसहश्चैव वसिष्ठाय महात्मने ।
मदयन्तीं प्रियां भार्यां दत्त्वा च त्रिदिवं गतः ।
मनोः पुत्रश्च सुद्युम्नो लिखिताय महात्मने ।
दण्डमुद्धृत्य धर्मेण गतो लोकाननुत्तमान् ।
सहस्रचित्यो राजर्षिः प्राणानिष्टान्महायशाः ।
ब्राह्मणार्थे परित्यज्य गतो लोकाननुत्तमान् ।
सर्वकामैश्च संपूर्णं दत्त्वा वेश्म हिरण्मयम् ।
मौद्गल्याय गतः स्वर्गं शतद्युम्नो महीपतिः ।
भक्ष्यभोज्यस्य च कृतान्राशयः पर्वतोपमान् ।
शाण्डिल्याय पुरा दत्त्वा समन्युर्दिवमास्थितः ।
नाम्ना च द्युतिमान्नाम शाल्वराजो महाद्युतिः ।
दत्त्वा राज्यमृचीकाय गतो लोकाननुत्तमान् ।
मदिराश्वश्च राजर्षिर्दत्त्वा कन्यां सुमध्यमाम् ।
हिरण्यहस्ताय गतो लोकान्देवैरधिष्ठितान् ।
लोमपादश्च राजर्षिः शान्तां दत्त्वा सुतां प्रभुः ।
ऋष्यशृङ्गाय विपुलैः सर्वैः कामैरयुज्यत ।
कौत्साय दत्त्वा कन्यां तु हंसीं नाम यशस्विनीम् ।
गतोऽक्षयानतो लोकान्राजर्षिश्च भगीरथः ।
दत्त्वा शतसहस्रं तु गवां राजा भगीरथः ।
सवत्सानां कोहलाय गतो लोकाननुत्तमान् ।
एते चान्ये च बहवो दानेन तपसा च ह ।
युधिष्ठिर गताः स्वर्गं निवर्तन्ते पुनः पुनः ।
तेषां प्रतिष्ठिता कीर्तिर्यावत्स्थास्यति मेदिनी ।
गृहस्थैर्दानतपसा यैर्लोका वै विनिर्जिताः ।
शिष्टानां चरितं ह्येतत्कीर्तितं मे युधिष्ठिर ।
दानयज्ञप्रजासर्गैरेते हि दिवमास्थिताः ।
दत्त्वा तु सततं तेऽस्तु कौरवाणां धुरंधर ।
दानयज्ञक्रियायुक्ता बुद्धिर्धर्मोपचायिनी ।
यत्र ते नृपशार्दूल संदेहो वै भविष्यति ।
श्वः प्रभाते हि वक्ष्यामि संध्या हि समुपस्थिता ।

Colophon.

युधिष्ठिरः ।

श्रुतं मे भवतस्तात सत्यव्रतपराक्रम ।
दानधर्मेण महता ये प्राप्तास्त्रिदिवं नृपाः ।
इमांस्तु श्रोतुमिच्छामि धर्मान्धर्मभृतां वर ।
दानं कतिविधं देयं किं तस्य च फलं लभेत् ।
कथं केभ्यश्च धर्म्यं च दानं दातव्यमिष्यते ।
कैः कारणैः कतिविधं श्रोतुमिच्छामि तत्त्वतः ।

भीष्मः ।

शृणु तत्त्वेन कौन्तेय दानं प्रति ममानघ ।
यथा दानं प्रदातव्यं सर्ववर्णेषु भारत ।
धर्मादर्थाद्भयात्कामात्कारुण्यादिति भारत ।
दानं पञ्चविधं ज्ञेयं कारणैर्यैर्निबोध तत् ।
इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम् ।
इति दानं प्रदातव्यं ब्राह्मणेभ्योऽनसूयता ।
ददाति वा दास्यति वा मह्यं दत्तमनेन वा ।
इत्यर्थिभ्यो निशम्यैवं सर्वं दातव्यमर्थिने ।
नास्याहं न मदीयोऽयं पापं कुर्याद्विमानितः ।
इति दद्याद्भयादेव दृढं मूढाय पण्डितः ।
प्रियो मेऽयं प्रियोऽस्याहमिति संप्रेक्ष्य बुद्धिमान् ।
वयस्यायैवमक्लिष्टं दानं दद्यादतन्द्रितः ।

( for -यशाः ). $V_1$ $D_5$ जगाम सुमहद्यशः ( for the post. half ). — ( L. 33 ) $V_1$ ह ( for सः ). — ( L. 34 ) $D_8$ तु ( for च ). — ( L. 35 ) $B_3$ $D_{6,8}$ अनुप्राप्य ( for °ज्ञाप्य ). — ( L. 36 ) $B_5$ वज्रो ( for राजा ). Some MSS. वशिष्ठाय. — ( L. 37 ) $D_8$ दमयंतीं ( for मदयन्तीं ). — ( L. 38 ) $Dn_3$ तु ( for च ). — ( L. 39 ) $Dn_2$ मार्गेण; $D_8$ यत्नेन ( for धर्मेण ). — $B_1$. om. ( hapl. ) lines 40–41. $D_5$ om. ( hapl. ) lines 42–47. — ( L. 44 ) $B_{2,4}$ भक्ष- ( for भक्ष्य- ). — ( L. 46 ) $B_1$ राजन् ( for नाम ). — $Dn_2$ reads lines 47–48 twice. — ( L. 51 ) $V_1$ सर्व- ( for सर्वैः ). — ( L. 53 ) $Dn_3$ ततो ( for अतो ). $D_8$ अक्षयांश्च गतो लोकान् ( for the prior half ). — ( L. 59 ) $D_8$ लोकाः खे च विनिर्मिताः ( for the post. half ). — ( L. 60 ) $D_5$ शिष्टानां चरिते ह्येते ( for the prior half ). $Dn_3$ ते ( for मे ). — ( L. 64 ) $Dn_2$ तत्र ( for यत्र ). — ( L. 65 ) $B_1$ ते; $B_2$ तु ( for the second हि ). — Colophon.— *Parvan name:* $B_{1,3}$ $Dn_3$ शांति. — *Sub-parvan:* $V_1$ B Dn $D_8$ दानधर्म. — *Adhy. name:* $V_1$ दानफलिकं; $B_1$ दानफलकथनं ; $B_{2,6}$ धर्मफल( $B_2$ °लि )कः ; $B_4$ Dn $D_8$ फलिकः. — *Adhy. no.*; $V_1$ 137; $B_5$ 122; Dn 134. — *Śloka no.*: $Dn_2$ 32. — ( L. 67 ) $D_5$ तथा ( for नृपाः ). — ( L. 69 ) $Dn_3$ ज्ञेयं ( for देयं ). $B_4$ $Dn_3$ च तस्य ( by transp. ). $B_6$ भवेत् ( for लभेत् ). $V_1$ $B_{1-3}$ $D_8$ किं च त( $V_1$ किंचित्त )स्य फलं भवेत् ( for the post. half ). — ( L. 70 ) $D_8$ तेभ्यश्च ( for के° ). $V_1$ $B_{1,4}$ $Dn_2$, $n_3$ $D_5$ धर्मं; $D_8$ धर्म्यें ( for धर्म्यं ). — ( L. 71 ) $D_5$ कारणं ( for °णैः ). $V_1$ $B_5$ कतिविधैः ( for °धं ). — ( L. 72 ) $B_{4,5}$ कौरव्य ( for कौन्तेय ). — ( L. 73 ) $B_6$ यथा प्रदानं दातव्यं ( for the prior half ). — $D_{5,8}$ om. (hapl.) line 74. — ( L. 75 ) $V_1$ $B_{2,4,6}$ $Dn_3$ निबोध तान्; $B_1$ °धत ( for °ध तत् ). — ( L. 76 ) $V_1$ इति ( for इह ). $B_5$ शुभं ( for सुखम् ). — ( L. 79 ) $Dn_3$ [अ]र्थिभ्यो ( for °भ्यो ). $V_1$

दीनश्च याचते चायमल्पेनापि हि तुष्यति ।
इति दद्याद्दरिद्राय कारुण्यादिति सर्वथा ।
इति पञ्चविधं दानं पुण्यकीर्तिविवर्धनम् ।
यथाशक्त्या प्रदातव्यमेवमाह प्रजापतिः ।

Colophon.

**15**

For 13. 126–13. 134, D10 S Kumbh. ed. Madras ed. and Cv subst. :

वैशंपायनः ।

अनुशास्य शुभैर्वाक्यैर्भीष्मस्त्वाह महामतिम् ।
प्रीत्या पुनः स शुश्रूषुर्वचनं यद्युधिष्ठिरे ।

जनमेजयः ।

पितामहो मे विप्रर्षे भीष्मं कालवशं गतम् ।
किमपृच्छत्तदा राजा सर्वसामासिकं हितम् ।
उभयोर्लोकयोर्युक्तं पुरुषार्थमनुत्तमम् ।
तन्मे वद महाप्राज्ञ श्रोतुं कौतूहलं हि मे ।

वैशंपायनः ।

भूय एव महाराज शृणु धर्मसमुच्चयम् ।
यदपृच्छत्तदा राजा कुन्तीपुत्रो युधिष्ठिरः ।
शरतल्पगतं भीष्मं सर्वपार्थिवसंनिधौ ।
अजातशत्रुः प्रीतात्मा पुनरेवाभ्यभाषत ।

युधिष्ठिरः ।

पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
श्रूयतां मे हि वचनमर्थित्वात्प्रब्रवीम्यहम् ।
परावरज्ञो भूतानां दयावान्सर्वजन्तुषु ।
आगमैर्बहुभिः स्फीतो भवान्नः परमः कुले ।
त्वादृशो दुर्लभो लोके सांप्रतं ज्ञानदर्शनः ।
भवता गुरुणा चैव धन्या बत वयं प्रभो ।
अयं स कालः संप्राप्तो दुर्लभो ज्ञातिबान्धवैः ।
शास्ता नु नास्ति नः कश्चित्त्वदृते पुरुषर्षभ ।
तस्माद्धर्मार्थसंयुक्तमायत्यां च हितोदयम् ।
आश्चर्यं परमं वाक्यं श्रोतुमिच्छामि भारत ।
अयं नारायणः श्रीमान्सर्वपार्थिवसंनिधौ ।
भवन्तं बहुमानाच्च प्रणयाच्चोपसेवते ।
अस्यैव तु समक्षं नः पार्थिवानां तथैव च ।
इतिवृत्तं पुराणं च श्रोतॄणां परमं हितम् ।
यदि तेऽहमनुग्राह्यो भ्रातृभिः सहितोऽनघ ।
मत्प्रियार्थं तु कौरव्य स्नेहाद्भाषितुमर्हसि ।

वैशंपायनः ।

तस्य तद्वचनं श्रुत्वा स्नेहादागतविक्लवः ।
प्रपिबन्निव तं दृष्ट्वा भीष्मो वचनमब्रवीत् ।
शृणु राजन्पुरा वृत्तमितिहासं पुरातनम् ।
एतावदुक्त्वा गाङ्गेयः प्रणम्य शिरसा हरिम् ।

---

B1. 3-5 Dn2 D8 [ए]व (for [ए]वं). — (L. 82) B2 [ऽ]यं मे (by transp.); D5 मेहं. — (L. 84) V1 दीनश्च याचमानश्च (for the prior half). V1 तुष्यते (for °ति). — (L. 86) D5 पुण्यं पुण्यं (for दानं पुण्य-). — Colophon. — *Parvan name:* B1. 3 Dn3 शांति. — *Sub-parvan:* V1 B1. 3-5 Dn1. n2 D8 दानधर्म. — *Adhy. name:* V1 B1. 2. 4. 5 Dn D8 दानप्रभेदः. — *Adhy. no.:* V1 138; B5 129; Dn1 135. — *Śloka no.:* Dn1. n2 11.

15

D10 जनमेजयः (for वैशंपायनः). — (L. 1) T1 अनुशिष्टः (for °शास्य). D10 T2. 3 G भीष्ममाह महामतिः (for the post. half). — (L. 2) T1 च; M4 सु- (for स). D10 T2. 3 G युधिष्ठिरः; T1 M4 युधिष्ठिर (for °ष्ठिरे). — T1 om. (hapl.) lines 3–8. D10 om. the ref. — (L. 4) T2 om. (hapl.) from the post. half up to the prior half of line 8. D10 T2 G -सामाजिकं (for °सिकं). — (L. 5) T2 नित्यं (for युक्तं). — (L. 6) D10 G2 तमेवेदं; G1 तदेवेदं (for तन्मे वद). — G2 om. the ref. — (L. 7) G4 महाभाग (for °राज). — (L. 12) T1 [ऽ]व (for हि). — (L. 14) D10 T G प्रीतो (for स्फीतो). D10 T G परमं (for °मः). — (L. 15) D10 T1. 3 G M2 (*inf. lin.*). 4 -संयुतः; T2 -संयुतं (for -दर्शनः). — T1 om. lines 16–17. — (L. 16) D10 T2. 3 G M4 नैव (for बत). — (L. 17) D10 T3 G दुर्लभैर् (for °भो). — (L. 18) S (except T3 G2. 4) तु (for नु). D10 T3 शास्ति (for नास्ति). D10 T2. 3 G कः (for नः). G2 कः स्वित् (for कश्चित्). — (L. 19) D10 T2. 3 G2 -सहितम् (for -संयुक्तम्). T1 महोदयं (for हितो°). — (L. 20) T3 आचार्यमपरं वाक्यं (sic) (for the prior half). M1. 3 परिपृच्छामि भारत (for the post. half). — (L. 22) D10 T2. 3 G [ए]व (for [उ]प-). — (L. 23) G2 च (for तु). — T1 transp. lines 24–25. — (L. 24) T1 इतिहासं (for °वृत्तं). M4 पुराणज्ञ (for °णं च). — (L. 26) D10 T G हि (for तु). — (L. 28) G2 -भजन् (for -पिबन्). — Before line 29, T1. 3 ins. भीष्मः. — (L. 29) T1 यथा- (for पुरा). — After line 29, M1-3 read line 47, repeating it in its proper place. — T1 reads lines 30–31, followed by the colophon, after line 69. — (L. 31) T1 [ए]व (for [इ]दं).

धर्मराजं समीक्ष्येदं पुनर्वक्तुं समारभत् ।

Colophon.

अयं नारायणः श्रीमान्पुत्रार्थं व्रतकाङ्क्षया ।
दीक्षितोऽभून्महाबाहुः पुरा द्वादशवार्षिकम् ।
दीक्षितं केशवं द्रष्टुमभिजग्मुर्महर्षयः ।
सेवितुं च महात्मानः प्रीयमाणा जनार्दनम् ।
नारदः पर्वतश्चैव कृष्णद्वैपायनस्तथा ।
देवलः काश्यपश्चैव हस्तिकाश्यप एव च ।
जमदग्निश्च राजेन्द्र धौम्यो वाल्मीकिरेव च ।
अपरेऽपि तपःसिद्धाः सत्यव्रतपरायणाः ।
शिष्यैरनुगताः सर्वे ब्रह्मविद्भिरकल्मषैः ।
केशवस्तानभिगतान्प्रीत्या संप्रतिगृह्य च ।
तेषामतिथिसत्कारं पूजनार्थं कुलोचितम् ।
देवकीतनयो हृष्टो देवतुल्यमकल्पयत् ।
उपविष्टेषु सर्वेषु विष्टरेषु तदानघ ।
विश्वस्तेषु हि तुष्टेषु केशवार्चनया पुनः ।
परस्परं कथा दिव्याः प्रावर्तन्त मनोरमाः ।
विष्णोर्नारायणस्यैव प्रसादात्कथयामि ताः ।
तस्यैव व्रतचर्यायां मुनिभिर्विस्मितः पुरा ।
यश्च गोवृषभाङ्कस्य प्रभावोऽभून्महात्मनः ।
यत्र देवी महादेवमपृच्छत्संशयान्पुरा ।
कथयामास शर्वस्तान्देव्याः प्रियचिकीर्षया ।
उमापत्योश्च संवादं शृणु तात मनोरमम् ।
वर्णाश्रमाणां धर्मश्च तत्र तात समाहितः ।
ऋषिधर्मश्च निखिलो राजधर्मश्च पुष्कलः ।
गृहस्थधर्मश्च शुभः कर्मपाकफलानि च ।
देवगुह्यं च विविधं दानधर्मविधिस्तदा ।
विधानमत्र संप्रोक्तं यमस्य नियमस्य च ।
यमलोकविधानं च स्वर्गलोकविधिस्तथा ।
प्राणमोक्षविधिश्चैव तीर्थचर्या च पुष्कला ।
मोक्षधर्मविधानं च सांख्ययोगसमन्वितम् ।
स्त्रीधर्मश्च स्वयं देव्या देवदेवाय भाषितः ।
एवमादि शुभं सर्वं तत्र तात समाहितम् ।
रुद्राण्याः संशयप्रश्नो यत्र तात प्रवर्तते ।
धन्यं यशस्यमायुष्यं धर्म्यं च परमं हितम् ।
पुष्टियोगमिदं दिव्यं कथ्यमानं मया शृणु ।
इतिहासमिमं दिव्यं पवित्रं परमं शुभम् ।
सायं प्रातः सदा सम्यक्श्रोतव्यं च बुभूषता ।
ततो नारायणो देवः संक्लिष्टो व्रतचर्यया ।
वह्निर्विनिःसृतो वक्त्रात्कृष्णस्याद्भुतदर्शनः ।
अग्निना तेन महता निःसृतेन मुखाद्विभोः ।
पश्यतामेव सर्वेषां दग्ध एव नगोत्तमः ।

— Colophon. *Sub-parvan :* $D_{10}$ $M_1$ दानधर्म. — *Adhy. no. :* $D_{10}$ $T_{2,3}$ $G_{2,4}$ 185 ; $T_1$ 177 ; $G_1$ 119 ; $G_3$ $M_1$ 179; $M_{2,3}$ 180, $M_4$ 178. — Before line 32, S ( except $T_1$ ) ins. भीष्मः. — ( L. 32 ) $D_{10}$ T G पुत्रार्थे ( for °र्थं ). — ( L. 33 ) $D_{10}$ $G_{2,4}$ हि ( for ऽभून् ). $D_{10}$ $G_2$ व्रतं ; $T_2$ पुनर् ( for पुरा ). — $T_1$ om. line 35. — ( L. 35 ) $D_{10}$ $T_3$ $G_4$ सेवित्वा ( for °तुं ). $G_{1,3,4}$ M महात्मानं ( for °नः ). $D_{10}$ $T_{2,3}$ G प्रीयमाणं ( for °णा ). — ( L. 36 ) $T_1$ om. ( hapl. ) from the post half up to the prior half of line 37. $D_{10}$ $T_3$ $G_{1-3}$ $M_1$ तदा ( for तथा ). — ( L. 37 ) $T_1$ काश्यपश्चात्रिरेव च ( for the post. half ). — $T_1$ om. line 40. — ( L. 40 ) $G_4$ सद्भिर् ( for सर्वे ). — ( L. 41 ) $T_1$ सु- ( for सं- ). $T_{2,3}$ G -परि- ( for -प्रति- ). — ( L. 42 ) $T_1$ -सत्कार- ( for °रं ). $G_2$ फलोचितं ( for कुलो° ). — $G_2$ om. lines 43–45. — ( L. 43 ) $G_4$ देवव्रतम् ( for °तुल्यम् ). — ( L. 44 ) $T_1$ तथा ( for तदा ). — $T_1$ om. line 45. — ( L. 45 ) $T_{2,3}$ G [अ]भि- ( for हि ). — ( L. 46 ) $D_{10}$ $T_{2,3}$ $M_{3,4}$ परस्पर- ( for °स्परं ). — Before line 47, $D_{10}$ $T_{2,3}$ $G_2$ ins. भीष्मः. — ( L. 47 ) $M_4$ om. the post. half. $M_{1-3}$ ( all first time ) [इ]द ( for [ए]व ). $D_{10}$ $T_{2,3}$ $G_{2,4}$ ते; $M_{1-3}$ (all first time) वः ( for ताः ). — ( L. 48 ) $T_1$ $G_{1,3}$ $M_{1,3}$ अस्यैव ; $M_4$ om. ( for तस्यैव ). $D_{10}$ S ( except $G_1$ ) विस्मितं ( for °तः ). — ( L. 49 ) $D_{10}$ T G $M_4$ यत्र ( for यश्च ). $T_1$ $G_{1,3}$ M च ( for ऽभून् ). — ( L. 51 ) $D_{10}$ $G_4$ सर्वान्स ; T $G_{1-3}$ $M_4$ सर्वांस्तान् ( for शर्व° ). — ( L. 52 ) $T_{1,2}$ G मनोहरं ( for °रमम् ). — ( L. 53 ) $T_1$ यत्र तात ; $T_2$ तदा तत्र ( for तत्र तात ). — ( L. 54 ) $T_2$ ऋषिधर्माश्च निखिला ( for the prior half ). — ( L. 55 ) $G_2$ -याग- ( for -पाक- ). — ( L. 56 ) $T_1$ $G_3$ दानं ( for दान- ). T $G_{1-3}$ तथा ( for तदा ). — ( L. 57 ) $T_1$ $G_{1,3}$ M तत्र ( for अत्र ). $T_{2,3}$ $G_3$ प्रोक्तं यद् ( for संप्रोक्तं ). — ( L. 58 ) $M_3$ -लोके ( for -लोक- ). $D_{10}$ T G $M_4$ -गतिस् ( for -विधिस् ). — ( L. 59 ) $T_2$ तीर्थचर्यांश्. $T_1$ तीर्थयात्राश्च पुष्कलाः ( for the post. half ). — ( L. 60 ) $G_4$ तीर्थ- ( for मोक्ष- ). — ( L. 61 ) $M_{1-3}$ -धर्मं ( for -धर्मश् ). $M_{1-3}$ भाषितं ( for °तः ). — ( L. 62 ) $G_2$ समाहितः ( for °हितम् ). — $T_1$ om. lines 65–66. — ( L. 65 ) $G_1$ इमं ( for इदं ). — ( L. 66 ) $D_{10}$ $G_2$ इदं ( for इमं ). $G_3$ पुण्यं ( for दिव्यं ). — ( L. 67 ) $M_1$ सु- ( for च ). — Before line 68, $D_{10}$ T $G_4$ ins. भीष्मः. — ( L. 68 ) $M_3$ संश्लिष्टो ( for संक्लिष्टो ). — ( L. 69 ) $T_3$ -दर्शिनः ( for -दर्शनः ). — ( L. 70 ) $G_4$. $T_{1,3,4}$ $G_{1,3,4}$ M विभो ( for विभोः ). — ( L. 72 ) $T_2$ G $M_4$ -गणार्णवः ( for

मृगपक्षिसमाकीर्णः श्वापदैरभिसंकुलः ।
वृक्षगुल्मलताकीर्णो मथितो दीनदर्शनः ।
पुनः स दृष्टमात्रेण हरिणा सौम्यचेतसा ।
स बभूव गिरिः क्षिप्रं प्रफुल्लद्रुमकाननः ।
सिद्धचारणसंघैश्च प्रसन्नैरुपशोभितः ।
मत्तवारणसंयुक्तो नानापक्षिगणैर्युतः ।
तदद्भुतमचिन्त्यं च सर्वेषामभवद्भृशम् ।
तं दृष्ट्वा हृष्टरोमाणः सर्वे मुनिगणास्तदा ।
विस्मिताः परमायस्ताः साध्वसाकुललोचनाः ।
न किंचिदब्रुवंस्तत्र शुभं वा यदि वेतरत् ।
ततो नारायणो देवो मुनिसंघे सुविस्मिते ।
तान्समीक्ष्यैव मधुरं बभाषे पुष्करेक्षणः ।
किमर्थं मुनिसंघस्य विस्मयोऽयमनुत्तमः ।
एतं मे संशयं सर्वे याथातथ्यमनिन्दिताः ।
ऋषयो वक्तुमर्हन्ति निश्चयेनार्थकोविदाः ।
केशवस्य वचः श्रुत्वा तुष्टुवुर्मुनिपुंगवाः ।
भवान्सृजति वै लोकान्भवान्संहरति प्रजाः ।
भवाञ्शीतं भवानुष्णं भवान्सत्यं भवान्क्रतुः ।
भवानादिर्भवानन्तो भवतोऽन्यन्न विद्यते ।
स्थावरं जंगमं सर्वं त्वमेव पुरुषोत्तम ।
त्वत्तः सर्वमिदं तात लोकचक्रं प्रवर्तते ।
त्वमेवार्हसि तद्वक्तुं मुखादग्निविनिर्गमम् ।
एतन्नो विस्मयकरं बभूव मधुसूदन ।
ततोऽधिगतसंत्रासा भवाम पुरुषोत्तम ।
यदिच्छेत्तत्र वक्तव्यं कुतोऽस्माकं नियोगतः ।

भगवान् ।

नित्यं हितार्थं लोकानां भवद्भिः क्रियते तपः ।
तस्माल्लोकहितं गुह्यं श्रूयतां कथयामि वः ।
असुरः सांप्रतं कश्चिदहितो लोकनाशनः ।
मायास्त्रकुशलश्चैव बलदर्पसमन्वितः ।
बभूव स मया वध्यो लोकानां हितकाम्यया ।
पुत्रेण मे वधो दृष्टस्तस्य वै मुनिपुंगवाः ।
तदर्थं पुत्रमेवाहं सिसृक्षुर्वनमागतः ।
आत्मनः सदृशं पुत्रमहं जनयितुं व्रतैः ।
एवं व्रतपरीतस्य तपस्तीव्रतया मम ।
अथात्मा मम देहस्थः सोऽग्निर्भूत्वा विनिःसृतः ।
विनिःसृत्य गतो द्रष्टुं क्षणेन च पितामहम् ।
ब्रह्मणा मन्मथोऽनङ्गः पुत्रत्वे मे प्रकल्पितः ।
अनुज्ञातश्च तेनैव पुनरायान्ममान्तिकम् ।
एतन्मे वैष्णवं तेजो मम वक्त्राद्विनिःसृतम् ।
तत्तेजसा निर्मथितः पुरतोऽयं गिरिः स्थितः ।
दृष्ट्वा नाशं गिरेस्तस्य सौम्यभावतया मम ।
पुनः स दृष्टमात्रेण गिरिरासीद्यथापुरम् ।
एतद्गुह्यं मया तथ्यं कथितं वः समासतः ।
भवन्तो व्यथिता येन विस्मिताश्च तपोधनाः ।
ऋषीणामेवमुक्त्वा तु तान्पुनः प्रत्यभाषत ।

Colophon.

भगवान् ।

भवतां दर्शनादेव प्रीतिरभ्यधिका मम ।

समा° ). $D_{10}$ S ( except $T_1$ $G_1$ ) अपि ( for अभि- ). — ( L. 73 ) $T_1$ मत्तवारणसंयुतः ( for the post. half ). — ( L. 74 ) $G_{1-3}$ -तेजसा ( for -चेतसा ). — ( L. 76 ) $T_2$ -शोभितैः ( for °तः ). — $G_1$ om. (hapl.) 77. — ( L. 77 ) $G_4$ वृतः ( for युतः ). — ( L. 79 ) $D_{10}$ सदा ( for तदा ). — ( L. 80 ) S ( except $T_1$ $M_2$ [ *inf. lin.* ], 4 ) परमायत्ताः ( for °यस्ताः ). — $T_1$ om. line 81. — ( L. 82 ) $D_{10}$ T G तु ( for सु- ). — Before line 84, M ins. भगवान्. — ( L. 84 ) Kumbh. ed. -संघेस्मिन् ( for -संघस्य ). — ( L. 85 ) $T_2$ नित्यं ( for सर्वे ). $T_1$ $G_3$ याथातथ्यैर् ( for °तथ्यम् ). $D_{10}$ $T_{2, 3}$ $G_{1, 2, 4}$ य( $G_4$ या )थात( $D_{10}$ °ति )थ्येन नंदि( $T_3$ नादि )ताः ( for the post. half ). — Before line 87, $T_1$ M ins. भीष्मः. — $T_3$ reads lines 92–95 twice. — ( L. 92 ) $G_4$ लोके ( for लोक- ). — ( L. 93 ) $G_2$ -विनिर्गमः ( for °गमम् ). $T_3$ ( both times ) मुखादग्निविनिर्गतः ( for the post. half ). — ( L. 94 ) $G_{1, 3}$ एवं ( for एतन् ). —(L. 95) $T_3$ ( both times ) G वि- ( for ऽधि- ). — $T_1$ om. line 96. — ( L. 96 ) $D_{10}$ G M यदि चेत् ( for यदिच्छेत् ). $D_{10}$ $G_{1, 3, 4}$ M तच्च ; $G_2$ ते च ( for तत्र ). — ( L. 98 ) $G_4$ सर्वं ( for गुह्यं ). $M_4$ श्रूयते ( for °तां ). — ( L. 99 ) $T_{2, 3}$ $G_2$ अभितो ; $G_4$ असुरो ( for अहितो ). — ( L. 101 ) $G_4$ बभूव न ; M स बभूव ( by transp. ). $D_{10}$ $T_{2, 3}$ $G_2$ वद्धो ( for वध्यो ). — ( L. 102 ) $G_2$ दिष्टस् ( for दृष्टस् ). $G_4$ [ए]व ( for वै ). — ( L. 103 ) $G_{1-3}$ अत्र ( for अर्थं ). — ( L. 106 ) $G_2$ देहस्तु ( for °स्थः ). $T_2$ भूतो ( for भूत्वा ). — ( L. 108 ) $T_2$ निर्मितो ( for मन्मथो ). $G_2$ पुत्रत्वेन ( for °त्वे मे ). $G_1$ damaged ; $G_3$ प्रकल्पिते ( for °तः ). — ( L. 109 ) $T_2$ [ए]वं. —( L. 110 ) $D_{10}$ $T_3$ $G_{2, 4}$ एवं ( for एतन् ). — ( L. 112 ) $D_{10}$ T G दाहं ( for नाशं ). $T_2$ तत्र ( for तस्य ). — ( L. 113 ) $T_{2, 3}$ G $M_4$ यथा पुरा ( for यथापुरम् ). — ( L. 114 ) $G_2$ एतं ( for एतद् ). $D_{10}$ $T_{2, 3}$ G यथा- ( for मया ). $T_2$ समाहिताः ( for °सतः ). — Colophon. *Sub-parvan :* $D_{10}$ $M_{1-3}$ दानधर्म. — *Adhy. name :* $D_{10}$ $T_2$ $G_2$ $M_4$ उमामहेश्वरसंवादः ; $T_3$ नारायणऋषिसंवादः ; $G_4$ गोविंदऋषिगणसंवादः.

भवन्तस्तु तपःसिद्धा भवन्तो देवदर्शनाः ।
सर्वत्र गतिमन्तश्च ज्ञानविज्ञानभाविताः ।
गतागतज्ञा लोकानां सर्वे निर्धूतकल्मषाः ।
तस्माद्भवद्भिर्यत्किंचिद्दृष्टं वाप्यथ वा श्रुतम् ।
आश्चर्यभूतं लोकेषु तद्भवन्तो ब्रुवन्तु मे ।
युष्माभिः कथितं यस्यात्तपसा भावितात्मभिः ।
तस्यादमृतसंकाशं वाङ्मधुश्रवणे स्पृहा ।
रागद्वेषवियुक्तानां सततं सत्यवादिनाम् ।
श्रद्धेयं श्रवणीयं च वचनं हि सतां भवेत् ।
तत्संयोगं हि तन्मेऽस्तु न वृथा कर्तुमर्हथ ।
भवतां दर्शनं तस्मात्सफलं तु भवेन्मम ।
तदहं सज्जनमुखान्निःसृतं जनसंसदि ।
कथयिष्याम्यहरहो बुद्धिदीपकरं नृणाम् ।
तदन्ये वर्धयिष्यन्ति पूजयिष्यन्ति वापरे ।
वाक्शल्यविगताश्चान्ये प्रशंसन्ति पुरातनम् ।

भीष्मः ।

एवं ब्रुवति गोविन्दे श्रवणार्थं महर्षयः ।
वाग्भिः साञ्जलिमालाभिरिदमूचुर्जनार्दनम् ।
अयुक्तमस्मानेवं त्वं वाचा वरद भाषितुम् ।
त्वच्छासनसुखाः सर्वे त्वदधीनपरिश्रमाः ।
एवं पूजयितुं चास्मान्न चैवार्हसि केशव ।
तद्भवस्त्वन्यत्र पश्यामो यल्लोके ते न विद्यते ।
दिवि वा भुवि वा किंचित्तत्सर्वं हि त्वया ततम् ।
न विद्महे वयं देव कथ्यमानं तवान्तिके ।
एवमुक्तो हृषीकेशः सस्मितं चेदमब्रवीत् ।
अहं मानुषयोनिस्थः सांप्रतं मुनिपुंगवाः ।
तस्मान्मानुषवद्वीर्यं मम जानीत सुव्रताः ।
भवद्भिः कथ्यमानं च अपूर्वमिव तद्भवेत् ।

भीष्मः ।

एवं संचोदिताः सर्वे केशवेन महात्मना ।
ऋषयश्चानुवर्तन्ते वासुदेवस्य शासनम् ।
ततस्त्वृषिगणाः सर्वे नारदं देवदर्शनम् ।
अमन्यन्त बुधा बुद्ध्या समर्थं तन्निवोधने ।
ऋषिरुग्रतपाश्चायं केशवस्य प्रियोऽधिकम् ।
पुराणज्ञश्च वाग्मी च कारणैस्तं च मेनिरे ।
सर्वे तदर्हणं कृत्वा नारदं वाक्यमब्रुवन् ।
भवता तीर्थयात्रार्थं चरता हिमवद्गिरौ ।
दृष्टं वै यत्तदाश्चर्यं श्रोतॄणां परमं प्रियम् ।
तत्त्वं त्वमविशेषेण हितार्थं सर्वमादितः ।
प्रियार्थं केशवस्यास्य स भवान्वक्तुमर्हति ।

भीष्मः ।

तदा संचोदितः सर्वैर्ऋषिभिर्नारदस्तथा ।

— *Adhy. no.:* $D_{10}$ $T_{2.3}$ $G_{2.4}$ 186; $T_1$ 178; $G_{1.3}$ $M_1$ 180; $M_{2.3}$ 181; $M_4$ 179. — (L. 117) $T_1$ दर्शनेन (for °नाद्). $M_4$ अप्यधिका (for अभ्य°). — (L. 119) $T_1$ -कोविदाः (for -भाविताः). — (L. 120) $D_{10}$ $T_{2.3}$ G गत्यागतिज्ञा लोकानां (for the prior half). — (L. 123) $G_1$ यस्मात् (for यस्यात्). $T_2$ भावितात्मना (for °भिः). — (L. 124) $G_{1-3}$ वाङ्मधुश्रवणेप्सितं (for the post. half). — $T_1$ om. line 127. — (L. 127) $T_2$ तु (for हि). $D_{10}$ $T_3$ G $M_{1.2.4}$ तं (for तन्). $M_4$ अर्हति (for °थ). — (L. 128) $D_{10}$ $T_3$ दर्शनात् (for °नं). $G_4$ अस्मात् (for त°). $T_1$ भवतां सफलं यस्मात् (for the prior half). — $T_1$ om. lines 129–132. — (L. 130) $D_{10}$ $T_2$ G अहं बुद्धि ($D_{10}$ $G_2$ °द्धिर्; $T_2$ °द्ध्या) (for अहरहो). $G_1$ -दीप्तिकरं (for -दीप°). — (L. 131) $G_4$ तान्येव (for तदन्ये). $D_{10}$ $T_{2.3}$ G च (for वा). — (L. 132) $D_{10}$ $T_{2.3}$ $G_{1.3.4}$ वात्सल्य- (for वाक्शल्य-). $G_4$ -विगतं (for °ताश्). $G_{1-3}$ पुरातनाः (for °तनम्). — $D_{10}$ $T_2$ G om. the ref. — (L. 134) $T_1$ वाग्भिः सांत्वप्रधानाभिर् (for the prior half). — Before line 135, $D_{10}$ S (except $T_1$ $G_2$) ins. ऋषयः. — (L. 135) $G_4$ transp. अस्मान् and एवं. $G_2$ नो वक्तुं (for एवं त्वं). — (L. 137) $D_{10}$ भाषितुं (for केशव). — Before line 138, $D_{10}$ ins. केशव उवाच. — (L. 138) $D_{10}$ $T_{2.3}$ G त्वत्तस्त्वन्यं; $T_1$ तत्त्वदन्यं (for तद्भवस्त्वन्यन्). $G_2$ च (for न). $T_1$ वस्तु (for ते न). — (L. 140) $T_2$ कथं (for वयं). $D_{10}$ त्वेव (for देव). — Before line 142, $T_3$ ins. श्रीभगवानुवाच. — (L. 142) $G_4$ ऋषि- (for मुनि-). — (L. 143) $D_{10}$ $T_2$ $G_{2.4}$ जन्म (for मम). — $T_3$ M om. the ref. — $M_1$ om (hapl.) lines 145–155. — (L. 146) $T_1$ ऋषयश्चान्ववर्तत (for the prior half). — $T_3$ om. (hapl.) line 147. — (L. 147) $T_1$ दिव्य- (for देव-). — (L. 148) $T_1$ तदा (for बुधा). $M_4$ om. from बुधा up to मब्रुवन् (in the post. half of line 151). $T_{2.3}$ निबोध मे (for °धने). — (L. 149) $D_{10}$ $T_2$ G [ऽ]धिकः. — (L. 150) $D_{10}$ $T_2$ $G_4$ पुराणश्चैव वाग्मी च (for the prior half). — (L. 151) $T_1$ $G_{2.3}$ $M_{2.3}$ तदर्पणं (for °र्हणं). — Before line 152, $D_{10}$ T $G_{2-4}$ ins. ऋषयः; $M_{2.3}$ भीष्मः. — $T_1$ om. line 154. — (L. 154) $D_{10}$ $T_{2.3}$ $G_4$ अतस् (for तत्त्वं). $G_{1-3}$ अतस्त्वनवशेषेण; $M_{2-4}$ तत्त्वं त्वनव° (for the prior half). — (L. 155) $G_1$ partly damaged. $T_1$ $G_{3.4}$ भगवन् (for स भवान्). $G_{2.3}$ अर्हसि (for °ति). — $G_{2.3}$ om. the ref. — (L. 156) $T_1$ $M_{2.3}$ तथा (for तदा). $T_{2.3}$ $G_{1.3.4}$ संयोजितः (for संचो°). $D_{10}$ $G_2$ तथा संयोजितः

प्रणम्य शिरसा विष्णुं सर्वलोकहिते रतम् ।
समुद्वीक्ष्य हृषीकेशं वक्तुमेवोपचक्रमे ।
ततो नारायणसुहृन्नारदो वदतां वरः ।
शंकरस्योमया सार्धं संवादमन्वभाषत ।

Colophon.

नारदः ।

भगवंस्तीर्थयात्रार्थं तथैव चरता मया ।
दिव्यमद्भुतसंकाशं दृष्टं हैमवतं वनम् ।
नानावृक्षलतायुक्तं नानापक्षिगणैर्युतम् ।
नानारत्नसमाकीर्णं नानाभावसमन्वितम् ।
दिव्यचन्दनसंयुक्तं दिव्यधूपेन धूपितम् ।
दिव्यपुष्पसमाकीर्णं दिव्यगन्धेन मूर्छितम् ।
सिद्धचारणसंवासं भूतसंघैर्निषेवितम् ।
वरिष्ठाप्सरसाकीर्णं नानागन्धर्वसंकुलम् ।
मृदङ्गमुरजोद्घुष्टं शङ्खवीणाभिनादितम् ।
नृत्यद्भिर्भूतसंघैश्च सर्वतस्त्वभिशोभितम् ।
नानारूपैर्विरूपैश्च भीमरूपैर्भयानकैः ।
व्याघ्रसिंहोरगमुखैर्बिडालवदनैस्तथा ।
खरोष्ट्रद्वीपिवदनैर्गजवक्त्रैस्तथैव च ।
उलूकश्येनवदनैः काकगृध्रमुखैस्तथा ।
एवं बहुविधाकारैर्भूतसंघैर्भृशाकुलम् ।
नानद्यमानं बहुधा हरपारिषदैर्भृशम् ।
घोररूपं सुदुर्दर्शं रक्षोगणशतैर्वृतम् ।
समाजं तद्वने दृष्टं मया भूतपतेः पुरा ।
प्रनृत्ताप्सरसं दिव्यं देवगन्धर्वनादितम् ।
षट्पदैरुपगीतं च प्रथमे मासि माधवे ।
उत्क्रोशक्रौञ्चकुररैः सारसैर्जीवजीवकैः ।
मत्ताभिः परपुष्टाभिः कूजन्तीभिः समाकुलम् ।
उत्तमोत्सवसंकाशं भीमरूपतरं ततः ।
द्रष्टुं भवति सर्वस्य धर्मभागिजनस्य च ।
ये चोर्ध्वरेतसः सिद्धास्तत्र तत्र समागताः ।
मार्ताण्डरश्मिसंचारा विश्वेदेवगणास्तथा ।
तथा नागास्तथादित्या लोकपाला हुताशनाः ।
वाताश्च सर्वे वायन्ति दिव्यपुष्पसमाकुलाः ।
किरन्तः सर्वपुष्पाणि किरन्तोऽद्भुतदर्शनाः ।
ओषध्यः प्रज्वलन्त्यश्च द्योतयन्त्यो दिशो दश ।
विहगाश्च मुदा युक्ता नृत्यन्ति च नदन्ति च ।
गिरः सुमधुरास्तत्र दिव्या दिव्यजनप्रियाः ।
तत्र देवो गिरितटे हेमधातुविभूषिते ।
पर्यङ्क इव बभ्राज उपविष्टो महाद्युतिः ।
व्याघ्रचर्मपरीधानो गजचर्मोत्तरच्छदः ।
व्यालयज्ञोपवीतश्च लोहिताङ्गविभूषितः ।
हरिश्मश्रुजटो भीमो भयकर्ता सुरद्विषाम् ।

सर्वैर् ( $G_2$ °स्वैर् ) (for the prior half). $D_{10}$ $T_{1.3}$ $G_{1.2}$ तदा (for तथा). — (L. 157) $T_1$ -महेश्वरं (for -हिते रतम्). — (L. 160) $T_1$ संवादं चान्वभाषत (for the post. half). — Colophon. *Sub-parvan* : $D_{10}$ M दानधर्म. — *Adhy. name:* $D_{10}$ $T_{2.3}$ $G_2$ M उमामहेश्वरसंवादः. — *Adhy. no.* : $D_{10}$ $T_{2.3}$ $G_{2.4}$ 187; $T_1$ 179; $G_{1.3}$ $M_1$ 181; $M_{2.3}$ 182; $M_4$ 180. — (L. 161) $D_{10}$ $T_1$ $G_{1.3}$ M -यात्रायां (for °र्थं). $G_2$ तदा (for तथा). $G_4$ [आ]चरता (for च°). — (L. 163) $D_{10}$ $T_{2.3}$ $G_4$ -समायुक्तं (for -लता°). $D_{10}$ $T_{2.3}$ G वृतं (for युतम्). — (L. 164) $T_1$ -शब्द- (for -रत्न-). $D_{10}$ $T_3$ -गणाकीर्णं (for -समा°). — $M_3$ reads lines 165–168 twice. — (L. 165) $T_1$ -धूपैः सु-; $G_{3.4}$ -धूमेन (for -धूपेन). — $G_4$ om. (hapl.) line 166. — (L. 166) $T_1$ -गंध- (for -पुष्प-). $T_1$ -पुष्पवि- (for -गन्धेन). $D_{10}$ $T_{2.3}$ चार्चितं; $G_{2.3}$ वासितं (for मूर्छितम्). — (L. 167) $D_{10}$ $T_{2.3}$ $G_4$ -संवातं; $T_1$ $G_3$ -संबाधं; $M_4$ -संवादं (for °सं). $D_{10}$ $T_1$ $M_{1.2.3}$ (both times).4 -संघ- (for -संघैर्). — (L. 168) $D_{10}$ $G_4$ वरिष्ठसारसाकीर्णं; $T_1$ वरिष्ठजनसंकीर्णं (for the prior half). $T_3$ G नाग- (for नाना-). $M_3$ नानाभावसमन्वितं (for the post. half). — (L. 169) $M_4$ मृदंगमुरवोद्घुष्टं (for the prior half). $G_{1.3}$ -वीणानु- (for °भि-). — (L. 170) $T_1$ सर्व- (for भूत-). $T_1$ सर्वशस् (for °तस्). $M_4$ -चोदितं (for -शोभितम्). — (L. 171) $T_2$ भूत- (for भीम-). — (L. 172) $T_2$ -मृगैर् (for -मुखैर्-). $D_{10}$ $G_2$ सिंहव्याघ्रोरगमुखैर् ( $G_3$ °मृगैर् ) (for the prior half). Some MSS. विलाल- (for बिडाल-). — (L. 173) $D_{10}$ $G_{2.3}$ -द्वीप- (for -द्वीपि-). $D_{10}$ $G_4$ om. (hapl.) from the post. half up the prior half of line 174. — (L. 174) $D_{10}$ $G_2$ काल-; $G_4$ कंक- (for काक-). — (L. 180) $T_1$ प्रथमं (for °मे). — (L. 183) $D_{10}$ S (except $M_{1-3}$) उत्तमावाससंकाशं (for the prior half). $T_3$ अभि- (for भीम-). $G_4$ -वरं (for -तरं). $T_{1.2}$ भीमरूपं परंतप (for the post. half). — (L. 184) $T_2$ $G_{3.4}$ दृष्टं (for द्रष्टुं). $D_{10}$ S (except $T_1$) धर्मस्य (for सर्वस्य). — (L. 185) $G_3$ -रेतः सं- (for -रेतसः). $T_1$ समाहिताः (for °गताः). — (L. 187) $T_2$ $G_2$ दिव्यास् (for नागास्). $D_{10}$ $T_{1.3}$ G $M_4$ दिव्या; $T_2$ नागा (for [आ]दित्या). $T_2$ लोक- पाल- (for °पाला). — (L. 188) $T_1$ वांति स्म (for वायन्ति). — (L. 189) $M_{1-3}$ क्रन्दः (for किरन्तः). $T_1$ चरंतो; $T_2$ वदंतो (for किरन्तो). — (L. 191) $T_1$

भयघ्नः सर्वभूतानां भक्तानामभयंकरः ।
किंनरैर्देवगन्धर्वैः स्तूयमानः समन्ततः ।
ऋषिभिश्चाप्सरोभिश्च सर्वतश्चापि शोभितः ।
तत्र भूतपतेः स्थानं देवदानवसंकुलम् ।
सर्वतेजोमयं भूम्ना लोकपालनिषेवितम् ।
महोरगसमाकीर्णं सर्वेषां लोमहर्षणम् ।
भीमरूपमनिर्देश्यमप्रधृष्यतमं विभो ।
तत्र भूतपतिं देवमासीनं शिखरोत्तमे ।
ऋषयो भूतसंघाश्च प्रणम्य शिरसा हरम् ।
गीर्भिः परमशुद्धाभिस्तुष्टुवुश्च महेश्वरम् ।
विमुक्ताश्चैव पापेभ्यो बभूवुर्विगतज्वराः ।
ऋषयो वालखिल्याश्च तथा विप्रर्षयश्च ये ।
अयोनिजा योनिजाश्च तपःसिद्धा महर्षयः ।
तत्रस्थं देवदेवेशं भगवन्तमुपासते ।
ततस्तस्मिन्क्षणे देवी भूतस्त्रीगणसेविता ।
हरतुल्याम्बरधरा समानव्रतचारिणी ।
काञ्चनं कलशं गृह्य सर्वतीर्थाम्बुपूरितम् ।
पुष्पवृष्ट्याभिवर्षन्ती दिव्यगन्धसमायुता ।
सरिद्वराभिः सर्वाभिः पृष्ठतोऽनुगता वरा ।
सेवितुं भगवत्पार्श्वमाजगाम शुचिस्मिता ।
आगम्य तु गिरेः पुत्री देवदेवस्य चान्तिकम् ।
मनःप्रियं चिकीर्षन्ती क्रीडार्थं शंकरान्तिके ।
मनोहराभ्यां पाणिभ्यां हरनेत्रे पिधाय तु ।
अवेक्ष्य हृष्टा स्वगणान्स्मयन्ती पृष्ठतः स्थिता ।
देव्या चान्धीकृते देवे कश्मलं समपद्यत ।
निमीलिते भूतपतौ नष्टचन्द्रार्कतारकम् ।
निःस्वाध्यायवषट्कारं तमसा चाभिसंवृतम् ।
विषण्णं भयसंत्रस्तं जगदासीद्भयाकुलम् ।
हाहाकारस्त्वृषीणां च लोकानामभवत्तदा ।
तमोभिभूते संभ्रान्ते लोके जीवितशङ्किते ।
तृतीयं चास्य संभूतं ललाटे नेत्रमायतम् ।
द्वादशादित्यसंकाशं लोकान्भासावभासयत् ।
तत्र नेत्राग्निना तेन युगान्ताग्निनिभेन वै ।
अदह्यत गिरिः सर्वो हिमवानग्रतः स्थितः ।
दह्यमाने गिरौ तस्मिन्मृगपक्षिसमाकुले ।
सविद्याधरगन्धर्वे दिव्यौषधसमायुते ।
ततो गिरिसुता चापि विस्मयोत्फुल्ललोचना ।
बभूव च जगत्सर्वं तथा विस्मयसंयुतम् ।
पश्यतामेव सर्वेषां देवदानवरक्षसाम् ।
नेत्रजेनाग्निना तेन दग्ध एव नगोत्तमः ।
तं दृष्ट्वा मथितं शैलं शैलपुत्री सविक्लवा ।
पितुः शमनमिच्छन्ती पपात भुवि पादयोः ।
तद्दृष्ट्वा देवदेवेशो देव्या दुःखमनुत्तमम् ।
हैमवत्याः प्रियार्थं च गिरिं पुनरवैक्षत ।
दृष्टमात्रो भगवता सौम्ययुक्तेन चेतसा ।
क्षणेन हिमवाञ्शैलः प्रकृतिस्थोऽभवत्पुनः ।
हृष्टपुष्टविहंगश्च प्रफुल्लद्रुमकाननः ।
सिद्धचारणसंघैश्च प्रीतियुक्तैः समाकुलः ।

रदंति; G3 मदंति ( for नदन्ति ). —( L. 192 ) D10 T2.3 G ततः समंततस्तत्र ( for the prior half ). —( L. 193 ) T2 दिव्य- ( for हेम- ). —( L. 196 ) Some MSS. व्याळ- ( for व्याल- ). —( L. 197 ) D10 T2.3 G M2 [अ]मर- ( for सुर- ). —( L. 198 ) D10 T2.3 G भयहेतुरभक्तानां ( for the prior half ). —( L. 199 ) M1.3 ततस्ततः ( for समन्ततः ). —( L. 200 ) T1 सर्वशश् ( for °तश् ). D10 T1.3 G [ए]व; T2 [उ]त- ( for [अ]पि ). —( L. 202 ) T2 भूमौ ( for भूम्ना ). —( L. 204 ) T1 G2.3 M बभौ ( for विभो ). —( L. 206 ) T2 देव- ( for भूत- ). G2 [अं]जलिं ( for हरम् ). — T3 om. ( hapl. ) line 207. —( L. 207 ) D10 T2 G3.4 मनोहरं; G2 मनोरमं ( for महेश्वरम् ). —( L. 209 ) T3 ते ( for ये ). — T1 om. line 210. —( L. 211 ) D10 T2.3 G M1 ततस्तं; T1 तरसा ( for तत्रस्थं ). —( L. 212 ) T2 तदा ( for भूत- ). S ( except M ) -संवृता ( for -सेविता ). —( L. 215 ) T1 om. from the post. half up to the prior half of line 219. D10 T2.3 G -समावृता; M1 °हिता ( for °युता ). —( L. 217 ) M3 सेवितं ( for °तुं ). —( L. 218 ) G3.4 M2 आगत्य ( for °म्य ). —( L. 221 ) G4 तदा; M3 सिता ( for स्थिता ). —( L. 222 ) T1 नेत्रे ( for देवे ). —( L. 223 ) T1 सं- ( for नि- ). —( L. 224 ) T1 -संवृतः ( for °तम् ). —( L. 225 ) G2 -वित्रस्तं ( for -संत्रस्तं ). — T1 om. line 226. —( L. 226 ) D10 T2.3 G M2 हाहाकारमृषीणां च ( for the prior half ). —( L. 227 ) G3 लोक- ( for लोके ). D10 G T2.3 M1 -संक्षये; T1 -संशये ( for -शङ्किते ). —( L. 228 ) M1 संभ्रांतं ( for संभूतं ). — T1 om. line 229. —( L. 230 ) D10 T3 G1-3 तेनाग्निना ( for नेत्रा° ). T2 तत्र तेनाग्निनाक्षेण ( for the prior half ). — T1 om. ( hapl. ) line 233. —( L. 233 ) M दिव्यौषधि- ( for °ध- ). T3 G2 -समाकुले ( for °युते ). T2 G1.3 दिव्यौषधिसमाकुले ( for the post. half ). — T1 om. lines 235–238. —( L. 238 ) D10 सु- ( for स- ). —( L. 239 ) D10 T2.3 G सं( G2 स )मानम् ( for शमनम् ). —( L. 242 ) D10 T G दृष्टमात्रे ( for °मात्रो ). G1.3 तेजसा ( for चेतसा ). — T1 om. lines 244–245. —( L. 244 ) D10 T2.3 G1-3 -विहंगैश् ( for °गश् ). —( L. 245 ) M1.3.4 समाकुलैः ( for °कुलः ). —( L. 246 ) G1.3.4

पितरं प्रकृतिस्थं तु दृष्ट्वा हैमवती भृशम् ।
अभवत्प्रीतिसंयुक्ता मुदिता च पिनाकिनम् ।
देवी विस्मयसंयुक्ता प्रष्टुकामा महेश्वरम् ।
हितार्थं सर्वलोकानां प्रजानां हितकाम्यया ।
देवदेवं महादेवी बभाषेदं वचोऽर्थवत् ।
भगवन्देवदेवेश शूलपाणे महाद्युते ।
विस्मयो मे महाञ्जातस्तस्मिन्नेत्राग्निसंप्लुते ।
किमर्थं देवदेवेश ललाटेऽस्मिन्प्रकाशते ।
अतिसूर्याग्निसंकाशं तृतीयं नेत्रमायतम् ।
नेत्राग्निना तु महता निर्दग्धो हिमवानसौ ।
पुनः स दृष्टमात्रस्तु प्रकृतिस्थः पिता मम ।
एष मे संशयो देव हृदि संप्रति वर्तते ।
देवदेव नमस्तुभ्यं तन्मे शंसितुमर्हसि ।

नारदः ।

एवमुक्तस्तया देव्या प्रीयमाणोऽब्रवीद्भवः ।
स्थाने संशयितुं देवि धर्मज्ञे प्रियभाषिणि ।
त्वदृते मां हि वै प्रष्टुं न शक्यं केनचित्प्रिये ।
प्रकाशं यदि वा गुह्यं त्वत्प्रियार्थं ब्रवीम्यहम् ।
शृणु तत्सर्वमखिलमस्यां संसदि भामिनि ।
सर्वेषामेव लोकानां कूटस्थं विद्धि मां प्रिये ।
मदधीनास्त्रयो लोका यथा विष्णौ तथा मयि ।
स्रष्टा विष्णुरहं गोप्ता इति तद्विद्धि भामिनि ।
तस्माद्यदा मां स्पृशति शुभं वा यदि वेतरत् ।
तथैवेदं जगत्सर्वं तत्तद्भवति शोभने ।
एतद्गुह्यमजानन्त्या त्वया बाल्यादनिन्दिते ।
नेत्रे मे पिहिते देवि क्रीडनार्थं दृढव्रते ।
त्वत्कृते नष्टचन्द्रार्कं जगदासीद्भृशाकुलम् ।
नष्टादित्ये तमोभूते लोके गिरिसुते प्रिये ।
तृतीयं लोचनं सृष्टं लोकान्संरक्षितुं मया ।
अस्यैव तेजसाक्ष्णो मे मथितोऽयं गिरिः शुभे ।
वृक्षगुल्मलताकीर्णो व्यालाध्युषितकंदरः ।
त्वत्प्रियार्थं कृतो देवि प्रकृतिस्थः पुनर्मया ।
कथितं संशयस्थानं निर्विशङ्का भव प्रिये ।

Colophon.

नारदः ।

क्षणज्ञा देवदेवस्य श्रोतुकामा प्रियं हितम् ।
उमा देवी महादेवमपृच्छत्पुनरेव तु ।
भगवन्देवदेवेश सर्वदेवनमस्कृत ।
चतुर्मुखो वै भगवानभवत्केन हेतुना ।
भगवन्केन वै वक्त्रमैन्द्रमद्भुतदर्शनम् ।
उत्तरं चापि भगवन्पश्चिमं शुभदर्शनम् ।
दक्षिणं च मुखं रौद्रं केनोर्ध्वं जटिलावृतम् ।
यथादिशं महादेव श्रोतुमिच्छामि कारणम् ।
एष मे संशयो देव तन्मे शंसितुमर्हसि ।

महेश्वरः ।

तदहं ते प्रवक्ष्यामि यत्त्वं पृच्छसि भामिनि ।
पुरासुरौ महाघोरौ लोकोद्वेगकरौ भृशम् ।
सुन्दोपसुन्दनामानावासतुर्बहुगर्वितौ ।
अशस्त्रवध्यौ बलिनौ परस्परहितैषिणौ ।

---

च ( for तु ). —(L. 248) $T_{1}$ $G_{1.3}$ द्रष्टुकामा ( for प्रष्टु° ). — $T_{1}$ om. line 249. —(L. 250) $T_{2}$ $G_{4}$ महादेवं ( for °देवी ). — Before line 251, S ( except $T_{2.3}$ $G_{2.4}$ ) ins. देवी ; Madras ed. उमा. —(L. 252) $D_{10}$ तत्र ( for तस्मिन् ). $D_{10}$ $T_{2.3}$ $G_{1.3.4}$ -संभवे ; $G_{2}$ -संनिभे ( for -संप्लुते ). —(L. 253) $D_{10}$ $T_{2}$ $G_{4}$ प्रकाशितं ; $G_{1-3}$ $M_{4}$ °शिते ( for °शते ). —(L. 255) $T_{1}$ च ( for तु ). (L. 257) $T_{1.3}$ G $M_{4}$ मे संप्र- ( for संप्रति ). — $G_{4}$ om. the ref. —(L. 259) $D_{10}$ $T_{2.3}$ $G_{4}$ तथा ( for तया ). — After line 259, $T_{1}$ ins. :

देवीमुवाचानुकूलां सर्वभूतहितैषिणीम् ।

— Before line 260, $D_{10}$ S ( except $G_{2}$ ) ins. महेश्वरः. —(L. 260) $G_{3}$ $M_{1-3}$ संशायितुं ( for °यितुं ). —(L. 261) $T_{1}$ शक्यं ( for प्रष्टुं ). $T_{1}$ प्रष्टुं ( for शक्यं ). —(L. 262) $D_{10}$ $T_{2.3}$ $G_{2-4}$ प्रियार्थं प्र- ( for त्वत्प्रियार्थं ). — $T_{1}$ om. line 264. —(L. 265) $T_{2}$ त्रिलोका ये ( for त्रयो लोका ). — $T_{1}$ om. lines 266–268. —(L. 266) $D_{10}$ $T_{2.3}$ $G_{2-4}$ M [ए]तद् ( for तद् ). —(L. 267) $D_{10}$ $M_{4}$ मा ( for मां ). —(L. 268) $G_{1-3}$ $M_{4}$ तदेव ( for तथैव ). —(L. 270) $D_{10}$ $T_{2.3}$ G मन्नेत्रे ( for नेत्रे मे ). $T_{1}$ शुचिस्मिते ; $T_{2.3}$ धृतव्रते ( for दृढ° ). —(L. 271) $D_{10}$ $T_{1.3}$ $G_{2-4}$ तत्कृते ; $T_{2}$ मत्कृते ( for त्वत्कृते ). $D_{10}$ $T_{2.3}$ G भयाकुलं ( for भृशा° ). —(L. 273) $D_{10}$ S ( except $M_{1.4}$ ) लोकं ( for लोकान् ). — $D_{10}$ S ( except $M_{1.3}$ ) om. ( hapl. ) lines 274–276. — Colophon. *Sub-parvan* : $D_{10}$ दानधर्म. —*Adhy. name* : $D_{10}$ $T_{2}$ M उमामहेश्वरसंवादः. —*Adhy. no.* : $D_{10}$ $T_{2.3}$ $G_{2-4}$ 188; $G_{1.3}$ $M_{1}$ 182; $M_{2.3}$ 183; $M_{4}$ 184. —(L. 280) $T_{1}$ $G_{2.3}$ $M_{4}$ सर्वभूत- ( for °देव- ). —(L. 282) $D_{10}$ T G ते ( for वै ). —(L. 283) $M_{1-3}$ उत्तमं ( for °रं ). —(L. 284) $T_{1}$ केनोर्ध्वं जटिलं प्रभो ( for the post. half ). — $T_{1}$ om. line 285. —(L. 286) $D_{10}$ एवं ( for एष ). —$T_{1}$ महेशः ; $T_{2.3}$ G महादेवः ( for महेश्वरः ). —(L. 287) $D_{10}$ T $G_{2-4}$ $M_{4}$ इच्छसि ( for पृ° ). —(L. 288) $T_{3}$ महाभागौ ( for °घोरौ ). —(L. 289) $G_{1.3}$ M सुंदोप-

तयोरेव विनाशाय निर्मिता विश्वकर्मणा ।
मृगपक्षिगणानां च स्थावराणां तथैव च ।
सर्वतः सारमुद्धृत्य तिलशो लोकपूजिता ।
तिलोत्तमेति विख्याता अप्सराः सा बभूव ह ।
देवकार्यं करिष्यन्ती हावभावसमन्विता ।
सा तु पर्यन्तमागम्य रूपेणाप्रतिमा भुवि ।
मया बहुमता चेयं देवकार्यं करिष्यति ।
इति मत्वा तदा चाहं कुर्वन्तीं मां प्रदक्षिणम् ।
तथैव तां दिदृक्षुश्च चतुर्वक्त्रोऽभवं प्रिये ।
ऐन्द्रं मुखमिदं पूर्वं तपश्चर्यापरं सदा ।
दक्षिणं मे मुखं दिव्यं रौद्रं संहरति प्रजाः ।
लोककार्यपरं नित्यं पश्चिमं मे मुखं प्रिये ।
वेदानधीते सततमद्भुतं चोत्तरं मुखम् ।
एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि ।

उमा ।

भगवञ्श्रोतुमिच्छामि शूलपाणे वरप्रद ।
किमर्थं नीलता कण्ठे भाति बर्हनिभा तव ।

महेश्वरः ।

हन्त ते कथयिष्यामि शृणु देवि समाहिता ।
पुरा युगान्तरे यत्नादमृतार्थं सुरासुरैः ।
बलवद्भिर्विमथितश्चिरकालं महोदधिः ।
रज्जुना नागराजेन मथ्यमाने महोदधौ ।
विषं तत्र समुद्भूतं सर्वलोकविनाशनम् ।
तद्दृष्ट्वा विबुधाः सर्वे तदा विमनसोऽभवन् ।
ग्रस्तं हि तन्मया देवि लोकानां हितकारणात् ।
तत्कृता नीलता चासीत्कण्ठे बर्हिनिभा शुभे ।
तदाप्रभृति चैवाहं नीलकण्ठ इति स्मृतः ।
एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि ।

उमा ।

नीलकण्ठ नमस्तेऽस्तु सर्वलोकसुखावह ।
बहूनामायुधानां त्वं पिनाकं धर्तुमिच्छसि ।
किमर्थं देवदेवेश तन्मे शंसितुमर्हसि ।

महेश्वरः ।

शस्त्रागमं ते वक्ष्यामि शृणु धर्म्यं शुचिस्मिते ।
युगान्तरे महादेवि कण्वो नाम महामुनिः ।
स हि दिव्यां तपश्चर्यां कर्तुमेवोपचक्रमे ।
तथा तस्य तपो घोरं चरतः कालपर्ययात् ।
वल्मीकं पुनरुद्भूतं तस्यैव शिरसि प्रिये ।
वेणुर्वल्मीकसंयोगान्मूर्ध्नि तस्य बभूव ह ।
धरमाणश्च तत्सर्वं तपश्चर्यामथाकरोत् ।
तस्मै ब्रह्मा वरं दातुं जगाम तपसार्चितः ।
दत्त्वा तस्मै वरं देवो वेणुं दृष्ट्वा त्वचिन्तयत् ।
लोककार्यं समुद्दिश्य वेणुनानेन भामिनि ।
चिन्तयित्वा समादाय कार्मुकार्थे न्ययोजयत् ।
विष्णोर्मम च सामर्थ्यं ज्ञात्वा लोकपितामहः ।
धनुषी द्वे तदा प्रादाद्विष्णवे च ममैव च ।
पिनाकं नाम मे चापं शार्ङ्गं नाम हरेर्धनुः ।
तृतीयमवशेषेण गाण्डीवमभवद्धनुः ।
तच्च सोमाय निर्दिश्य ब्रह्मलोकं गतः पुनः ।
एतत्ते सर्वमाख्यातं शस्त्रागममनिन्दिते ।

---

सुंदौ नाम्ना तावू ( $G_{1.3}$ °म्नास्ताम् ) ( for the prior half ). $G_{1-3}$ अतुल्य- ( for आसतुर् ). — $D_{10}$ S ( except $M_{1-3}$ ) om. lines 292–293. — ( L. 295 ) $D_{10}$ $T_{1.2}$ $G_{1-3}$ $M_{1.4}$ अप्सरा सा ( $T_2$ वि- ; $G_2$ सं- ); $T_3$ ह्यप्सराः सा ; $G_4$ चाप्सरसा ( for अप्सराः सा ). — $T_1$ om. lines 296–297. — ( L. 296 ) $D_{10}$ $T_{2.3}$ G $M_{2.4}$ हास- ( for हाव- ). — ( L. 297 ) $T_3$ साधु ( for सा तु ). $D_{10}$ $T_2$ $G_2$ पर्यंतम् ( for पर्यन्तम् ). $M_{1.2}$ आगत्य ( for °म्य ). $G_{1.3}$ मा तपस्यंतमागम्य ( for the prior half ). — ( L. 299 ) $G_{2.3}$ कुर्वंतीं ( for कुर्वन्तीं ). — ( L. 300 ) $G_2$ तदा ( for तथा ). — $G_1$ om. lines 302–305. — ( L. 303 ) $G_{3.4}$ $M_4$ -करं ( for -परं ). — ( L. 307 ) $T_1$ वह्नित्रिपा ; $T_3$ $G_{1-3}$ वर्हिनिभा ( for बर्ह° ). $D_{10}$ $T_2$ $G_4$ तव भाति महेश्वर ( for the post. half ). — $T_3$ $G_3$ महेशः ( for °श्वरः ). — ( L. 308 ) $D_{10}$ $T_{2.3}$ G एतत् ( for हन्त ). — ( L. 314 ) $G_{2.3}$ मे ( for तन् ). — ( L. 315 ) $T_3$ $M_{2.3}$ तत्कृते ( for °ता ). — ( L. 317 ) $M_3$ अर्हसि ( for इच्छसि ). — T $G_{1.4}$ $M_{2.3}$ om. the ref. $T_1$ transp. lines 319 and 320. — ( L. 319 ) $T_3$ कथम् ( for धर्तुम् ). — $G_4$ महादेवः ( for महेश्वरः ). — After the ref., $G_1$ reads line 326 repeating it in its proper place. $D_{10}$ $T_1$ $G_4$ om. line 321. — ( L. 322 ) $M_{2-4}$ पुरा ( for महा- ). $T_{1.3}$ -देवी ( for -देवि ). — ( L. 323 ) M ह ( for हि ). $T_1$ $G_3$ M तीव्रां ( for दिव्यां ). — ( L. 324 ) $T_1$ तदा ( for तथा ). — $T_1$ om. line 327. — ( L. 327 ) $G_3$ तान्सर्वांस् ( for तत्सर्वं ). $T_{2.3}$ $G_4$ तथा ( for अथ ). $D_{10}$ $G_2$ तपश्चर्यां तथाकरोत् ( for the post. half ). — $T_1$ om. 330. — ( L. 330 ) $M_{1.3}$ तेन ( for [अ]नेन ). — ( L. 331 ) $T_1$ त्वचोदयत् ( for न्ययोज° ). — After line 331, $T_1$ ins. :

विश्वकर्माणमाहूय सृज त्वं धनुषी उभे ।

— $T_1$ om. line 332. — ( L. 333 ) $T_1$ ततः ( for तदा ). $T_{1.2}$ विष्णवे मम चैव हि ( $T_2$ तु ) ( for the post. half ). — $M_4$ om. ( hapl. ) line 335. — ( L. 335 ) $G_2$ एव ( for अव- ). $T_1$ -शिष्टं तु ( foa -शेषेण ). — ( L. 336 ) $T_1$ $G_{1.3.4}$ $M_{1.4}$ ब्रह्मा ( for ब्रह्म- ). $T_1$ स्वर्कं ( for

उमा ।

भगवन्सर्वभूतेश पिनाकपरशुप्रिय ।
वाहनेषु तथान्येषु सत्सु भूतपते तव ।
अयं तु वृषभः कस्माद्वाहनत्वमुपागमत् ।
एष मे संशयो देव तं मे शंसितुमर्हसि ।

महेश्वरः ।

तदहं ते प्रवक्ष्यामि वाहनं स यथाभवत् ।
आदिसर्गे पुरा गावः श्वेतवर्णाः शुचिस्मिते ।
बलसंहननोपेता दर्पयुक्ताश्चरन्ति ताः ।
अहं तु तप आतिष्ठे तस्मिन्काले शुभानने ।
एकपादश्चोर्ध्वबाहुर्लोकार्थं हिमवद्गिरौ ।
गावो मे पार्श्वमाविश्य दर्पोत्सिक्ताः समन्ततः ।
स्थानभ्रंशं तु मे देवि चक्रिरे बहुशस्तथा ।
अपचारेण चैतासां मनःक्षोभोऽभवन्मम ।
तस्माद्दग्धा मया गावो रोषाविष्टेन चेतसा ।
तस्मिंस्तु व्यसने घोरे वर्तमाने पशून्प्रति ।
अनेन वृषभेणाहं शमितः संप्रसादनैः ।
तदाप्रभृति शान्ताश्च वर्णभेदत्वमागताः ।
श्वेतोऽयं वृषभो देवि पूर्वसंस्कारसंयुतः ।
वाहनत्वे ध्वजत्वे मे तदाप्रभृति योजितः ।
तस्मान्मे गोपतित्वं च देवैर्गोभिश्च कल्पितम् ।
प्रसन्नश्चाभवं देवि तदा गोपतितां गतः ।

Colophon.

उमा ।

भगवन्सर्वभूतेश शूलपाणे वृषध्वज ।
आवासेषु विचित्रेषु रम्येषु च शुभेषु च ।
सत्सु चान्येषु देशेषु श्मशाने रमसे कथम् ।
केशास्थिकलिले भीमे कपालशतसंकुले ।
सृगालगृध्रसंपूर्णे शवधूमसमाकुले ।
चिताग्निविषमे घोरे गहने च भयानके ।
एवं कलेवरक्षेत्रे दुर्दर्शे रमसे कथम् ।
एष मे संशयो देव तन्मे शंसितुमर्हसि ।

महेश्वरः ।

हन्त ते कथयिष्यामि शृणु देवि समाहिता ।
आवासार्थं पुरा देवि शुद्धान्वेषी शुचिस्मिते ।
नाध्यगच्छं चिरं कालं देशं शुचितमं शुभे ।
एष मेऽभिनिवेशोऽभूत्तस्मिन्काले प्रजाः प्रति ।
आकुलं सुमहद्घोरं प्रादुरासीत्समन्ततः ।
संभूता भूतसृष्टिश्च घोरा लोकभयावहा ।
नानावर्णविरूपाश्च तीक्ष्णदंष्ट्राः प्रहारिणः ।
पिशाचरक्षोवदनाः प्राणिनां प्राणहारिणः ।
यतस्ततश्चरन्ति स्म निघ्नन्तः प्राणिनो भृशम् ।
एवं लोके क्षयं याते प्राणिहीने पितामहः ।
चिन्तयंस्तत्प्रतीकारं मां च शक्तं हि निग्रहे ।
एवं ज्ञात्वा तदा ब्रह्मा तस्मिन्कर्मण्ययोजयत् ।
तच्च प्राणिदयार्थं तु मयाप्यनुमतं प्रिये ।

---

पुनः ). $T_8$ ब्रह्मा लोकांतरं गतः ( for the post. half ). — ( L. 337 ) $T_{1,2}$ $G_{1-3}$ च ( for ते ). $T_1$ किं भूयः श्रोतुमिच्छासि ( for the post. half ). — ( L. 338 ) $D_{10}$ $T_{2,3}$ G भगवन्देवदेवेश ( for the prior half ). $D_{10}$ $T_{2,3}$ G -परम- ( for -परशु- ). $T_3$ om. from the post. half of line 339 up to the prior half of line 342. — ( L. 340 ) $T_1$ उपागतः ( for °मत् ). $D_{10}$ $T_3$ $G_{1,3,4}$ वाहनं स ( $G_4$ तु ) यथाभवत् ( for the post. half ). — $T_1$ om. (hapl.) lines 341–342. — ( L. 341 ) $D_{10}$ $G_4$ एवं ( for एष ). — $D_{10}$ $T_3$ G महादेवः ; $T_2$ महेशः ( for महेश्वरः ). — ( L. 344 ) $D_{10}$ $T_{2,3}$ G बलसंहनना गावो ( for the prior half ). — ( L. 345 ) $D_{10}$ T G आतिष्ठं ( for °ष्ठे ). — ( L. 347 ) $T_3$ तु ( for मे ). $D_{10}$ S ( except $M_{1-3}$ ) आगम्य ( for आविश्य ). — (L. 348) $D_{10}$ $T_{2,3}$ $G_{1,3,4}$ तदा ; $G_2$ तथा ( for तु मे ). $D_{10}$ S ( except $M_{1-3}$ ) तदा ( for तथा ). — ( L. 349 ) $T_2$ तपःक्षेपो ( for मनःक्षोभो ). — ( L. 350 ) $D_{10}$ $T_1$ G यदा ; $T_2$ यथा ( for मया ). — ( L. 352 ) $T_1$ $M_4$ शमितः संप्रसादितः ( $M_4$ °दने ) ( for the post. half ). — ( L. 353 ) $T_1$ श्वेतवर्णमुपागतः ( for the post. half ). — $T_1$ om. line 354. — ( L. 354 ) $T_2$ मे ( for ऽयं ).

$D_{10}$ $T_3$ सर्व- ; $T_2$ G $M_4$ वर्ण- ( for पूर्व- ). — ( L. 357 ) T M Kumbh. and Madras eds. तथा ( for तदा ). — Colophon. *Sub-parvan* : $D_{10}$ $M_{1-3}$ दानधर्म. — *Adhy. name* : $D_{10}$ $T_{2,3}$ $G_2$ M उमामहेश्वरसंवादः. — *Adhy. no.* : $D_{10}$ $T_{2,3}$ $G_{2,4}$ 189 ; $T_1$ 181 ; $G_{1,3}$ $M_1$ 183 ; $M_{2,3}$ 184 ; $M_4$ 182. — ( L. 358 ) $D_{10}$ $T_{2,3}$ $G_4$ -देवेश ( for -भूतेश ). — ( L. 360 ) $D_{10}$ S ( except $T_2$ ) भूतेषु ( $G_1$ °श ) ( for देशेषु ). — $G_1$ om. line 361. — ( L. 361 ) $M_{1-3}$ -मालिले ( for -क° ). — $T_1$ om. line 363. — ( L. 363 ) $G_4$ भयंकरे ( for भयानके ). — $G_1$ om. line 364. — ( L. 364 ) $T_1$ एकः ( for एवं ). — $D_{10}$ $T_{2,3}$ $G_{2-4}$ महादेवः ; $T_1$ महेशः ( for महेश्वरः ). — ( L. 366 ) $T_2$ एतत् ( for हन्त ). — ( L. 367 ) $D_{10}$ महा- ( for पुरा ). — ( L. 369 ) $M_{2,3}$ हि ( for ऽभि- ). $T_1$ सर्वलोकहिताय वै ( for the post. half ). — $T_1$ om. line 370. — ( L. 370 ) $D_{10}$ $T_{2,3}$ G आकुलः सुमहाघोरं ( $G_{1-3}$ °रः ) ( for the prior half ). — ( L. 372 ) $T_{1,2}$ G $M_2$ नानावर्णा ( for °वर्ण- ). $M_{2,3}$ प्रतारिणः ( for प्रहा° ). — ( L. 374 ) $T_1$ चरंति यत्र वै नित्यं ( for the prior half ). — For line 374, $D_{10}$

तस्मात्संरक्षिता देवि भूतेभ्यः प्राणिनो भयात् ।
अस्माच्छ्मशानान्मेध्यं तु नास्ति किंचिदनिन्दिते ।
निःसंपातं मनुष्याणां तस्माच्छुचितमं स्मृतम् ।
भूतसृष्टिं तु तां चाहं श्मशाने संन्यवेशयम् ।
तत्रस्थः सर्वलोकानां विनिहन्मि प्रिये भयम् ।
न च भूतगणेनाहं विना वसितुमुत्सहे ।
तस्मान्मे संनिवासाय श्मशाने रोचते मनः ।
मेध्यकामैर्द्विजैर्नित्यं मेध्यमित्यभिधीयते ।
आचरद्भिर्व्रतं रौद्रं मोक्षकामैश्च सेव्यते ।
स्थानं मे तत्र विहितं वीरस्थानमिति प्रिये ।
कपालशतसंपूर्णं भीमरूपं भयानकम् ।
मध्याह्ने संध्ययोस्तत्र नक्षत्रे रुद्रदैवते ।
आयुष्कामैरशुद्धैर्वा न गन्तव्यमिति स्थितिः ।
मदन्येन न शक्यं हि निहन्तुं भूतजं भयम् ।
तत्रस्थोऽहं प्रजाः सर्वाः पालयामि दिने दिने ।
मन्नियोगाद्भूतसंघा न च घ्नन्तीह किंचन ।
तस्माल्लोकहितार्थाय श्मशाने रमयाम्यहम् ।
एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि ।

उमा ।

भगवन्देवदेवेश त्रिनेत्र वृषभध्वज ।
पिङ्गलं विकृतं भाति रूपं ते सुभयानकम् ।
भस्मदिग्धं विरूपाक्षं तीक्ष्णदंष्ट्रं जटाकुलम् ।
व्याघ्रोरगत्वक्संवीतं कपिलश्मश्रुसंततम् ।
रौद्रं भयानकं घोरं शूलपट्टससंयुतम् ।
किमर्थमीदृशं रूपं तन्मे शंसितुमर्हसि ।

महेश्वरः ।

तदहं कथयिष्यामि शृणु तत्त्वं समाहिता ।
द्विविधो लौकिको भावः शीतमुष्णमिति प्रिये ।
तयोर्विग्रथितं सर्वं सौम्याग्नेयमिदं जगत् ।
सौम्यत्वं सततं विष्णौ मय्याग्नेयं प्रतिष्ठितम् ।
अनेन वपुषा नित्यं सर्वलोकान्बिभर्म्यहम् ।
रौद्राकृति विरूपाक्षं शूलपट्टससंयुतम् ।
आग्नेयमिति मे रूपं देवि लोकहिते रतम् ।
यद्यहं विपरीतः स्यामेतत्त्यक्त्वा शुभानने ।
तदैव सर्वलोकानां विपरीतं प्रवर्तते ।
तस्मान्मयेदं ध्रियते रूपं लोकहितैषिणा ।
इति ते कथितं देवि किं भूयः श्रोतुमिच्छसि ।

उमा ।

भगवन्देवदेवेश शूलपाणे वृषध्वज ।
किमर्थं चन्द्ररेखा ते शिरोभागे विरोचते ।
श्रोतुमिच्छाम्यहं देव तन्मे शंसितुमर्हसि ।

महेश्वरः ।

तदहं ते प्रवक्ष्यामि शृणु कल्याणि कारणम् ।
पुराहं कारणाद्देवि कोपयुक्तः शुचिस्मिते ।
दक्षयज्ञवधार्थाय भूतसंघसमावृतः ।
तस्मिन्क्रतुवधे घोरे यज्ञभागनिमित्ततः ।

---

$T_{2.3}$ G subst. :

इतश्चरन्ति निघ्नन्तः प्राणिनो भृशमेव च ।
[ $T_2$ तु; $G_{1-3}$ हि (for च). ]

— (L. 375) $D_{10}$ T G transp. क्षयं याते and प्राणिहीने. — (L. 376) $T_3$ $G_{1.3.4}$ च; $M_4$ ह (for हि). — (L. 377) $T_1$ मत्वा (for ज्ञात्वा). $D_{10}$ $T_{2.3}$ $G_2$ ततो (for तदा). — (L. 378) $D_{10}$ $T_{2.3}$ G -हितार्थं (for -दयार्थं). — $T_1$ om. line 379. — (L. 380) $T_1$ $G_{1.2}$ तस्माच् (for अ°). $T_2$ श्मशानं (for °नान्). $T_1$ $G_{1-3}$ मे वासं (for मेध्यं तु). $T_3$ कश्चिद् (for किंचिद्). — (L. 381) $D_{10}$ $T_3$ G $M_4$ निःसंपातान् (for °तं). — (L. 382) $T_{2.3}$ G च (for तु). $T_{1.3}$ संनिवेशयं (for संन्यवे°). — After line 382, $T_1$ reads line 392, repeating it in its proper place. — $T_1$ om. (hapl.) line 383. — (L. 383) $D_{10}$ $T_{2.3}$ $G_4$ -भूतानां (for -लोकानां). — (L. 384) $T_2$ शयितुम् (for वसि°). $D_{10}$ अपि नासितुमुत्सहे (for the post. half). — (L. 385) $T_1$ -निवेशाय (for -निवासाय). — $T_1$ om. line 386. $G_2$ om. lines 386–388. — (L. 387) $T_2$ न चरद्भिर् (for आच°). — $T_1$ om. lines 389–391. — (L. 389) $D_{10}$ $T_{2.3}$ $G_{2.4}$ अभि- (for भीम-). — (L. 391) $D_{10}$ आगंतव्यम् (for न गन्त°). $T_3$ स्थितः; $G_2$ स्मृतं; $G_4$ श्रुतिः (for स्थितिः). — (L. 394) $T_2$ चरंति (for च घ्नन्ति). $T_1$ $G_3$ च (for [इ]ह). $D_{10}$ $T_{1.3}$ G $M_1$ कंचन (for किं°). — (L. 395) $D_{10}$ $T_{2.3}$ $G_{2-4}$ तांस्तु; $M_{2-4}$ तान्स्म (तस्माल्). $T_1$ निवसामि (for रमयामि). — After line 396, $T_1$ ins. an addl. colophon [ *Adhy. no.* : 202 ]. — (L. 398) $D_{10}$ $T_{2.3}$ $G_{2-4}$ तु (for सु-). — (L. 399) $T_1$ भयंकरं (for जटाकुलम्). — (L. 400) $D_{10}$ $T_{2.3}$ G व्याघ्रोदर- (for °रग-). $M_{1.3}$ कपिलं (for °ल-). — $M_4$ om. (hapl.) from रौद्रं (in line 401) up to सौम्यत्वं सततं (in line 406). — (L. 402) $D_{10}$ $T_{2.3}$ G $M_1$ त्वीदृशं (for ई°). — (L. 403) $D_{10}$ $T_{2.3}$ $G_4$ समाहिते (for °हिता). — (L. 405) $D_{10}$ $T_2$ $G_4$ नि-; $T_{1.3}$ $G_{1-3}$ हि (for वि-). — (L. 408) $M_3$ रौद्राकृतिर् (for °कृति). $G_2$ शूलपट्टसमन्वितं (for the post. half). — (L. 411) $D_{10}$ $T_3$ तथा (for तदा). — (L. 415) $T_2$ चंद्रलेखा (for °रेखा). — $G_2$ om. (hapl.) lines 416–418. — $T_1$ महेशः (for °श्वरः). — (L. 419) $M_4$ दक्षयज्ञे (for °यज्ञ-). $T_{1.2}$ G -संघैः (for -संघ-). — After line 419, $M_{1-3}$ ins.:

उमा ।

भगवन्सर्वभूतेश पिनाकपरशुप्रिय ।
वाहनेषु तथान्येषु सत्सु भूतपते तव ।
अयं तु वृषभः कस्माद्वाहनत्वमुपागमत् ।
एष मे संशयो देव तं मे शंसितुमर्हसि ।

महेश्वरः ।

तदहं ते प्रवक्ष्यामि वाहनं स यथाभवत् ।
आदिसर्गे पुरा गावः श्वेतवर्णाः शुचिस्मिते ।
बलसंहननोपेता दर्पयुक्ताश्चरन्ति ताः ।
अहं तु तप आतिष्ठे तस्मिन्काले शुभानने ।
एकपादश्चोर्ध्वबाहुर्लोकार्थं हिमवद्गिरौ ।
गावो मे पार्श्वमाविश्य दर्पोत्सिक्ताः समन्ततः ।
स्थानभ्रंशं तु मे देवि चक्रिरे बहुशस्तथा ।
अपचारेण चैतासां मनःक्षोभोऽभवन्मम ।
तस्माद्दग्धा मया गावो रोषाविष्टेन चेतसा ।
तस्मिंस्तु व्यसने घोरे वर्तमाने पशून्प्रति ।
अनेन वृषभेणाहं शमितः संप्रसादनैः ।
तदाप्रभृति शान्ताश्च वर्णभेदत्वमागताः ।
श्वेतोऽयं वृषभो देवि पूर्वसंस्कारसंयुतः ।
वाहनत्वे ध्वजत्वे मे तदाप्रभृति योजितः ।
तस्मान्मे गोपतित्वं च देवैर्गोभिश्च कल्पितम् ।
प्रसन्नश्चाभवं देवि तदा गोपतितां गतः ।

Colophon.

उमा ।

भगवन्सर्वभूतेश शूलपाणे वृषध्वज ।
आवासेषु विचित्रेषु रम्येषु च शुभेषु च ।
सत्सु चान्येषु देशेषु श्मशाने रमसे कथम् ।
केशास्थिकलिले भीमे कपालशतसंकुले ।
सृगालगृध्रसंपूर्णे शवधूमसमाकुले ।
चिताग्निविषमे घोरे गहने च भयानके ।
एवं कलेवरक्षेत्रे दुर्दर्शे रमसे कथम् ।
एष मे संशयो देव तन्मे शंसितुमर्हसि ।

महेश्वरः ।

हन्त ते कथयिष्यामि शृणु देवि समाहिता ।
आवासार्थं पुरा देवि शुद्धान्वेषी शुचिस्मिते ।
नाध्यगच्छं चिरं कालं देशं शुचितमं शुभे ।
एष मेऽभिनिवेशोऽभूत्तस्मिन्काले प्रजाः प्रति ।
आकुलं सुमहद्घोरं प्रादुरासीत्समन्ततः ।
संभूता भूतसृष्टिश्च घोरा लोकभयावहा ।
नानावर्णविरूपाश्च तीक्ष्णदंष्ट्राः प्रहारिणः ।
पिशाचरक्षोवदनाः प्राणिनां प्राणहारिणः ।
यतस्ततश्चरन्ति स्म निघ्नन्तः प्राणिनो भृशम् ।
एवं लोके क्षयं याते प्राणिहीने पितामहः ।
चिन्तयंस्तत्प्रतीकारं मां च शक्तं हि निग्रहे ।
एवं ज्ञात्वा तदा ब्रह्मा तस्मिन्कर्मण्ययोजयत् ।
तच्च प्राणिदयार्थं तु मयाप्यनुमतं प्रिये ।

पुनः ). $T_3$ ब्रह्मा लोकांतरं गतः ( for the post. half ). — ( L. 337 ) $T_{1, 2}$ $G_{1-3}$ च ( for ते ). $T_1$ किं भूयः श्रोतुमिच्छासि ( for the post. half ). — ( L. 338 ) $D_{10}$ $T_{2, 3}$ G भगवन्देवदेवेश ( for the prior half ). $D_{10}$ $T_{2, 3}$ G -परम- ( for -परशु- ). $T_3$ om. from the post. half of line 339 up to the prior half of line 342. — ( L. 340 ) $T_1$ उपागतः ( for °मत् ). $D_{10}$ $T_3$ $G_{1, 3, 4}$ वाहनं स ( $G_4$ तु ) यथाभवत् ( for the post. half ). — $T_1$ om. ( hapl. ) lines 341–342. — ( L. 341 ) $D_{10}$ $G_4$ एवं ( for एष ). — $D_{10}$ $T_3$ G महादेवः ; $T_3$ महेशः ( for महेश्वरः ). — ( L. 344 ) $D_{10}$ $T_{2, 3}$ G बलसंहनना गावो ( for the prior half ). — ( L. 345 ) $D_{10}$ T G आतिष्ठं ( for °ष्ठे ). — ( L. 347 ) $T_3$ तु ( for मे ). $D_{10}$ S ( except $M_{1-3}$ ) आगम्य ( for आविश्य ). — (L. 348) $D_{10}$ $T_{2, 3}$ $G_{1, 3, 4}$ तदा ; $G_2$ तथा ( for तु मे ). $D_{10}$ S ( except $M_{1-3}$ ) तदा ( for तथा ). — ( L. 349 ) $T_2$ तपःक्षेपो ( for मनःक्षोभो ). — ( L. 350 ) $D_{10}$ $T_1$ G यदा ; $T_2$ यथा ( for मया ). — ( L. 352 ) $T_1$ $M_4$ शमितः संप्रसादितः ( $M_4$ °दने ) ( for the post. half ). — ( L. 353 ) $T_1$ श्वेतवर्णमुपागतः ( for the post. half ). — $T_1$ om. line 354. — ( L. 354 ) $T_2$ मे ( for ऽयं ). $D_{10}$ $T_3$ सर्व- ; $T_2$ G $M_4$ वर्ण- ( for पूर्व- ). — ( L. 357 ) T M Kumbh. and Madras eds. तथा ( for तदा ). — Colophon. *Sub-parvan :* $D_{10}$ $M_{1-3}$ दानधर्म. — *Adhy. name :* $D_{10}$ $T_{2, 3}$ $G_2$ M उमामहेश्वरसंवादः. — *Adhy. no. :* $D_{10}$ $T_{2, 3}$ $G_{2, 4}$ 189 ; $T_1$ 181 ; $G_{1, 3}$ $M_1$ 183 ; $M_{2, 3}$ 184 ; $M_4$ 182. — ( L. 358 ) $D_{10}$ $T_{2, 3}$ $G_4$ -देवेश ( for -भूतेश ). — ( L. 360 ) $D_{10}$ S ( except $T_2$ ) भूतेषु ( $G_1$ °श ) ( for देशेषु ). — $G_1$ om. line 361. — ( L. 361 ) $M_{1-3}$ -मालिले ( for -क° ). — $T_1$ om. line 363. — ( L. 363 ) $G_4$ भयंकरे ( for भयानके ). — $G_1$ om. line 364. — ( L. 364 ) $T_1$ एकः ( for एवं ). — $D_{10}$ $T_{2, 3}$ $G_{2-4}$ महादेवः ; $T_1$ महेशः ( for महेश्वरः ). — ( L. 366 ) $T_2$ एतत् ( for हन्त ). — ( L. 367 ) $D_{10}$ महा- ( for पुरा ). — ( L. 369 ) $M_{2, 3}$ हि ( for ऽभि- ). $T_1$ सर्वलोकहिताय वै ( for the post. half ). — $T_1$ om. line 370. — ( L. 370 ) $D_{10}$ $T_{2, 3}$ G आकुलः सुमहाघोरं ( $G_{1-3}$ °रः ) ( for the prior half ). — ( L. 372 ) $T_{1, 2}$ G $M_2$ नानावर्णा ( for °वर्ण- ). $M_{2, 3}$ प्रतारिणः ( for प्रहा° ). — ( L. 374 ) $T_1$ चरंति यत्र वै नित्यं ( for the prior half ). — For line 374, $D_{10}$

तस्मात्संरक्षिता देवि भूतेभ्यः प्राणिनो भयात् ।
अस्माच्छ्मशानान्मेध्यं तु नास्ति किंचिदनिन्दिते ।
निःसंपातं मनुष्याणां तस्माच्छुचितमं स्मृतम् ।
भूतसृष्टिं तु तां चाहं श्मशाने संन्यवेशयम् ।
तत्रस्थः सर्वलोकानां विनिहन्मि प्रिये भयम् ।
न च भूतगणेनाहं विना वसितुमुत्सहे ।
तस्मान्मे संनिवासाय श्मशाने रोचते मनः ।
मेध्यकामैर्द्विजैर्नित्यं मेध्यमित्यभिधीयते ।
आचरद्भिर्व्रतं रौद्रं मोक्षकामैश्च सेव्यते ।
स्थानं मे तत्र विहितं वीरस्थानमिति प्रिये ।
कपालशतसंपूर्णं भीमरूपं भयानकम् ।
मध्याह्ने संध्ययोस्तत्र नक्षत्रे रुद्रदैवते ।
आयुष्कामैरशुद्धैर्वा न गन्तव्यमिति स्थितिः ।
मदन्येन न शक्यं हि निहन्तुं भूतजं भयम् ।
तत्रस्थोऽहं प्रजाः सर्वाः पालयामि दिने दिने ।
मन्नियोगाद्भूतसंघा न च घ्नन्तीह किंचन ।
तस्माल्लोकहितार्थाय श्मशाने रमयाम्यहम् ।
एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि ।

उमा ।

भगवन्देवदेवेश त्रिनेत्र वृषभध्वज ।
पिङ्गलं विकृतं भाति रूपं ते सुभयानकम् ।
भस्मदिग्धं विरूपाक्षं तीक्ष्णदंष्ट्रं जटाकुलम् ।
व्याघ्रोरगत्वक्संवीतं कपिलश्मश्रुसंततम् ।
रौद्रं भयानकं घोरं शूलपट्टससंयुतम् ।
किमर्थमीदृशं रूपं तन्मे शंसितुमर्हसि ।

महेश्वरः ।

तदहं कथयिष्यामि शृणु तत्त्वं समाहिता ।
द्विविधो लौकिको भावः शीतमुष्णमिति प्रिये ।
तयोर्विग्रथितं सर्वं सौम्याग्नेयमिदं जगत् ।
सौम्यत्वं सततं विष्णौ मय्याग्नेयं प्रतिष्ठितम् ।
अनेन वपुषा नित्यं सर्वलोकान्बिभर्म्यहम् ।
रौद्राकृति विरूपाक्षं शूलपट्टससंयुतम् ।
आग्नेयमिति मे रूपं देवि लोकहिते रतम् ।
यद्यहं विपरीतः स्यामेतत्त्यक्त्वा शुभानने ।
तदैव सर्वलोकानां विपरीतं प्रवर्तते ।
तस्मान्मयेदं ध्रियते रूपं लोकहितैषिणा ।
इति ते कथितं देवि किं भूयः श्रोतुमिच्छसि ।

उमा ।

भगवन्देवदेवेश शूलपाणे वृषध्वज ।
किमर्थं चन्द्ररेखा ते शिरोभागे विरोचते ।
श्रोतुमिच्छाम्यहं देव तन्मे शंसितुमर्हसि ।

महेश्वरः ।

तदहं ते प्रवक्ष्यामि शृणु कल्याणि कारणम् ।
पुराहं कारणाद्देवि कोपयुक्तः शुचिस्मिते ।
दक्षयज्ञवधार्थाय भूतसंघसमावृतः ।
तस्मिन्क्रतुवधे घोरे यज्ञभागनिमित्ततः ।

---

T2.3 G subst. :

इतश्चरन्ति निघ्नन्तः प्राणिनो भृशमेव च ।
[ T2 तु; G1–3 हि ( for च ). ]

— ( L. 375 ) D10 T G transp. क्षयं याते and प्राणिहीने. — ( L. 376 ) T3 G1.3.4 च ; M3 ह ( for हि ). — ( L. 377 ) T1 मत्वा ( for ज्ञात्वा ). D10 T2.3 G2 ततो ( for तदा ). — ( L. 378 ) D10 T2.3 G -हितार्थं ( for -दयार्थं ). — T1 om. line 379. — ( L. 380 ) T1 G1.3 तस्माच् ( for अ° ). T2 श्मशानं ( for °नान् ). T1 G1–3 मे वासं ( for मेध्यं तु ). T3 कश्चिद् ( for किंचिद् ). — ( L. 381 ) D10 T3 G M4 निःसंपातान् ( for °तं ). — ( L. 382 ) T2.3 G च ( for तु ). T1.3 संनिवेशयं ( for संन्यवे° ). — After line 382, T1 reads line 392, repeating it in its proper place. — T1 om. ( hapl. ) line 383. — ( L. 383 ) D10 T2.3 G4 -भूतानां ( for -लोकानां ). — ( L. 384 ) T2 शयितुम् ( for वसि° ). D10 अपि नासितुमुत्सहे ( for the post. half ). — ( L. 385 ) T1 -निवेशाय ( for -निवासाय ). — T1 om. line 386. G2 om. lines 386–388. — ( L. 387 ) T2 न चरद्भिर् ( for आच° ). — T1 om. lines 389–391. — ( L. 389 ) D10 T2.3 G1.4 अभि- ( for भीम- ). — ( L. 391 ) D10 आगंतव्यम् ( for न गन्त° ). T3 स्थितः ; G2 स्मृतं ; G4 श्रुतिः ( for स्थितिः ). — ( L. 394 ) T2 चरंति ( for च घ्नन्ति ). T1 G2 च ( for [ई]ह ). D10 T1.3 G M1 कंचन ( for किं° ). — ( L. 395 ) D10 T2.3 G2–4 तांस्तु ; M2–4 तान्स्म ( तस्माल्ल् ). T1 निवसामि ( for रमयामि ). — After line 396, T1 ins. an addl. colophon [ *Adhy. no. : 202* ]. — ( L. 398 ) D10 T2.3 G2–4 तु ( for सु- ). — ( L. 399 ) T1 भयंकरं ( for जटाकुलम् ). — ( L. 400 ) D10 T2.3 G व्याघ्रोदर- ( for °रग- ). M1.3 कापिलं ( for °ल- ). — M4 om. ( hapl. ) from रौद्रं ( in line 401 ) up to सौम्यत्वं सततं ( in line 406 ). — ( L. 402 ) D10 T2.3 G M1 त्वीदृशं ( for ई° ). — ( L. 403 ) D10 T2.3 G4 समाहिते ( for °हिता ). — ( L. 405 ) D10 T2 G4 नि- ; T1.3 G1–3 हि ( for वि- ). — ( L. 408 ) M3 रौद्राकृतिर् ( for °कृति ). G2 शूलपट्टसमन्वितं ( for the post. half ). — ( L. 411 ) D10 T3 तथा ( for तदा ). — ( L. 415 ) T2 चंद्रलेखा ( for °रेखा ). — G2 om. ( hapl. ) lines 416–418. — T1 महेशः ( for °श्वरः ). — ( L. 419 ) M4 दक्षयज्ञे ( for °यज्ञ- ). T1.2 G -संघैः ( for -संघ- ). — After line 419, M1–3 ins. :

देवा विभ्रंशितास्ते वै येषां भागः क्रतौ कृतः।
सोमस्तत्र मया देवि कुपितेन भृशार्दितः।
पश्यंश्चानपराधी सन्पादाङ्गुष्ठेन पीडितः।
तथा विनिकृतेनाहं सामपूर्वं प्रसादितः।
तन्मे चिन्तयतश्चासीत्पश्चात्तापः पुनः प्रिये।
तदाप्रभृति सोमं हि शिरसा धारयाम्यहम्।
एवं मे पापहानिस्तु भवेदिति मतिर्मम।
तदाप्रभृति वै सोमो मूर्ध्नि संदृश्यते सदा।

नारदः।

एवं ब्रुवति देवेशे विस्मिताः परमर्षयः।
वाग्भिः साञ्जलिमालाभिरभितुष्टुवुरीश्वरम्।
नमः शंकर देवेश नमः सर्वजगद्गुरो।
नमो देवादिदेवाय नमः शशिकलाधर।
नमो घोरतराद्घोर नमो रुद्र भयंकर।
नमः शान्ततराच्छान्त नमश्चन्द्रस्य पालक।
नमः सोमाय देवाय नमस्तुभ्यं चतुर्मुख।
नमो भूतपते शंभो जह्नुकन्याम्बुशेखर।
नमस्त्रिशूलहस्ताय पन्नगाभरणाय च।
नमोऽस्तु विषमाक्षाय दक्षयज्ञप्रदाहक।
नमोऽस्तु बहुनेत्राय लोकरक्षणतत्पर।
अहो देवस्य माहात्म्यं महादेवस्य वै कृपा।
एवं धर्मपरत्वं च देवदेवस्य चार्हति।
एवं ब्रुवत्सु मुनिषु वचो देव्यब्रवीद्धरम्।
प्रीत्यर्थं च मुनीनां सा क्षणज्ञा परमं हितम्।
भगवन्देवदेवेश सर्वलोकनमस्कृत।
अस्य वै ऋषिसंघस्य मम च प्रियकाम्यया।
वर्णाश्रमगतं धर्मं वक्तुमर्हस्यशेषतः।
न तृप्तिरस्ति देवेश श्रवणीयं हि ते वचः।
सधर्मचारिणी चेयं भक्ता चेयमिति प्रभो।
वक्तुमर्हसि देवेश लोकानां हितकाम्यया।
याथातथ्येन तत्सर्वं वक्तुमर्हसि शंकर।

Colophon.

महेश्वरः।

हन्त ते कथयिष्यामि यत्ते देवि मनःप्रियम्।
शृणु तत्सर्वमखिलं धर्मं वर्णाश्रमाश्रितम्।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चेति चतुर्विधाः।
ब्रह्मणा विहिताः पूर्वं लोकतन्त्रमभीप्सता।
कर्माणि च तदर्हाणि शास्त्रेषु विहितानि वै।
यदि चेदेकवर्णं स्याज्जगत्सर्वं विनश्यति।
सहैव देवैर्वर्णानि चत्वारि विहितान्युत।
मुखतो ब्राह्मणाः सृष्टास्तस्मात्ते वाग्विशारदाः।
बाहुभ्यां क्षत्रियाः सृष्टास्तस्माद्बाहुबलान्विताः।

---

अगमं तत्र तं देशं भागार्थे परिपद्द्रुतः।

— (L. 420) S ( except $T_3$ $M_{1.3}$ ) क्रतुवरे ( for °वधे ). — (L. 421) $G_{1.3}$ हतः ( for कृतः ). — (L. 422) $D_{10}$ $T_2$ भयार्दितः ( for भृशा° ). — (L. 423) $D_{10}$ $T_{2.3}$ $G_4$ ताडितः ( for पी° ). — (L. 425) $T_1$ G M तु ( for च ). $D_{10}$ $T_{2.3}$ G पुरा ( for पुनः ). — (L. 426) $T_3$ वै ( for हि ). — (L. 427) $T_1$ हि ( for मे ). — $T_3$ $G_3$ om. the ref. — Before line 431, MSS. ins. ऋषयः. — (L. 431) $D_{10}$ S ( except $T_2$ $G_{1.4}$ ) सर्वेश ( for देवेश ). — $T_1$ om. (hapl.) lines 433–434. — (L. 433) $T_2$ नमो घोराद्घोरतर ( for the prior half ). *$D_{10}$* $T_{2.3}$ G नमो रुद्राय शंकर ( for the post. half ). — (L. 434) $T_3$ शांतकराच् ( for °तराच् ). — $T_1$ om. (hapl.) line 436. — (L. 438) $T_2$ $M_4$ नमोस्तु विषमे( $M_4$ °मो )क्षाय ( for the prior half ). $T_2$ -प्रहारक ( -प्रदाहक ). — (L. 440) $D_{10}$ S ( except $T_1$ $G_{1.2}$ $M_2$ ) अहो ( for महा- ). — (L. 441) $T_1$ अहो ( for एवं ). $G_2$ -पतित्वं ( for -परत्वं ). $T_1$ देवेशस्य प्रजापतेः ( for the post. half ). — $T_1$ om. line 443. — (L. 443) $T_{2.3}$ G संप्रीत्यर्थं ( for प्रीत्यर्थं च ). $T_2$ तु ( for सा ). — Before line 444, MSS. ins. उमा. — $T_1$ om. line 445. — (L. 445) $T_3$ $G_{1-3}$ M [ए]व ( for वै ). — (L. 446) $D_{10}$ $T_{2.3}$ $G_4$ -कृतं ( for -गतं ). — $T_1$ om. line 447. — After line 448, $T_1$ ins. :

इति संचोदितो देव्या वक्तुमारभत स्वयम्।

— $T_1$ om. lines 449–450. — (L. 449) $G_{1.3}$ $M_4$ लोकेश ( for देवेश ). — After line 449, $M_{1-3}$ ins. :

ब्राह्मणे कीदृशो धर्मः क्षत्रिये कीदृशो भवेत्।
वैश्ये किंलक्षणो धर्मः शूद्रे धर्मः कथंविधः।

नारदः।

इति संचोदितो देवः प्रियया हितकाम्यया।

— (L. 450) $D_{10}$ S ( except $G_2$; $T_1$ om. ) यंथातथ्येन. $M_{1-3}$ वक्तुमेवोपचक्रमे ( for the post. half ). — Colophon. *Sub-parvan* : $D_{10}$ $M_{1-3}$ दानधर्म. — *Adhy. name* : $D_{10}$ $T_{2.3}$ $G_{2.3}$ उमामहेश्वरसंवादे चंद्रमौलिकथनं ; $G_4$ M उमामहेश्वरसंवादः. — *Adhy. no.* : $D_{10}$ $T_{2.3}$ $G_{2.4}$ 190 ; $T_1$ $M_4$ 183 ; $G_{1.3}$ $M_1$ 184 ; $M_{2.3}$ 185. — $M_4$ om. the ref. $T_1$ महेशः ( for महेश्वरः ). — (L. 451) $T_2$ एतत् ( for हन्त ). — (L. 452) $T_1$ धर्मं वर्णाश्रमाश्रयं ( for the post. half ). — (L. 453) $D_{10}$ $T_{2.3}$ G चतुर्विधं ( for °विधाः ). — (L. 455) $M_4$ शास्त्राणि ( for शास्त्रेषु ). — (L. 456) $D_{10}$ $T_3$ $G_2$ यदीदम् ; $T_2$ तदिदं च ; $G_{1.3.4}$ $M_4$ यदिदं तु ( for यदि चेद् ). — $T_1$ om. line 457. — (L. 457) $D_{10}$ $T_{2.3}$ $G_{1.3.4}$ देवि ( for देवैर् ). $D_{10}$

उदरादुद्गता वैश्यास्तस्माद्वार्तोपजीविनः ।
शूद्राश्च पादतः सृष्टास्तस्मात्ते परिचारकाः ।
तेषां धर्मांश्च कर्माणि शृणु देवि समाहिता ।
विप्राः कृता भूमिदेवा लोकानां धारणे कृताः ।
ते कैश्चिन्नावमन्तव्या ब्राह्मणा हितमिच्छुभिः ।
यदि ते ब्राह्मणा न स्युर्दानयोगवहाः सदा ।
उभयोर्लोकयोर्देवि स्थितिर्न स्यात्समासतः ।
लोकेषु दुर्लभं किं तु ब्राह्मणत्वमिति स्मृतम् ।
अबुधो वा दरिद्रो वा पूजनीयः सदैव सः ।
ब्राह्मणं योऽवमन्येत निन्दयेत्क्रोशयेच्च वा ।
प्रहरेत हरेद्वापि धनं तेषां नराधमः ।
कारयेद्धीनकर्माणि कामलोभविमोहनात् ।
स च मामवमन्येत मां क्रोशति च निन्दति ।
मामेव प्रहरेन्मूढो मद्धनस्यापहारकः ।
ममैव प्रेक्षणं कृत्वा नन्दते मूढचेतनः ।
स्वाध्यायो यजनं दानं तस्य धर्म इति स्थितिः ।
कर्माण्यध्यापनं चैव याजनं च प्रतिग्रहः ।
सत्यं शान्तिस्तपः शौचं तस्य धर्मः सनातनः ।
विक्रयो रसधान्यानां ब्राह्मणस्य विगर्हितः ।
अनापदि च शूद्रान्नं वृषलीसंग्रहस्तथा ।
तप एव सदा धर्मो ब्राह्मणस्य न संशयः ।
स तु धर्मार्थमुत्पन्नः पूर्वं धात्रा तपोबलात् ।
तस्योपनयनं धर्मो नित्यं चोदकधारणम् ।
रहस्यश्रवणं धर्मो वेदव्रतनिषेवणम् ।
अग्निकार्यं परो धर्मो नित्यं यज्ञोपवीतिता ।
शूद्रान्नवर्जनं धर्मो धर्मः सत्पथसेवनम् ।
धर्मो नित्योपवासित्वं ब्रह्मचर्यं परं तथा ।
अमृताश्यं परं धर्मो गृहपुष्पबलिस्तथा ।
गृहसंमार्जनं धर्म आलेपनविधिस्तथा ।
अतिथिव्रतता धर्मो धर्मस्त्रेताग्निधारणम् ।
इष्टयः पशुबन्धाश्च विधिपूर्वं परं तपः ।
दंपत्योः समशीलत्वं धर्मो वै गृहमेधिनाम् ।
एष द्विजन्मनो धर्मो गार्हस्थ्ये धर्मधारणम् ।
यस्तु क्षत्रगतो धर्मस्त्वया देवि प्रचोदितः ।
तमहं ते प्रवक्ष्यामि शृणु देवि समाहिता ।
क्षत्रियास्तु तथा देवि प्रजानां पालने स्मृताः ।
यदि न क्षत्रियो लोके जगत्स्यादधरोत्तरम् ।
रक्षणात्क्षत्रियैरेव जगद्भवति शाश्वतम् ।

---

$T_{2,3}$ $G_{1-3}$ $M_{1,2,4}$ [अ]तः ( for [उ]त ). — $M_{1,3}$ om. ( hapl. ) from the post. half of line 458 up to the prior of line 461. — ( L. 459 ) $D_{10}$ $T_{1,2}$ G तस्मात्ते बाहुगर्विताः ; $T_3$ $M_4$ °ते बलवत्तराः ( $M_4$ °गर्विताः ) ( for the post. half ). — ( L. 460 ) $T_1$ $G_2$ ऊरुभ्याम् ( for उदराद् ). $M_2$ तस्माद्वार्तैव जीवितं ( for the post. half ). — ( L. 461 ) $T_1$ तु ( for च ). $D_{10}$ -चारिणः ( for -चारकाः ). — ( L. 462 ) $G_{1,3}$ आचार- ( for धर्मांश्च ). $T_1$ तेषां च धर्माधर्माणि ( for the prior half ). — ( L. 463 ) $G_{1-3}$ M स्मृता ( for कृता ). $T_1$ विप्राः स्मृता देवभूता ( for the prior half ). $T_1$ धृताः ( for कृताः ). — ( L. 466 ) $T_3$ भूतिर् ( for स्थितिर् ). $T_2$ स्थितं न स्यात्समाहितं ( for the post. half ). — ( L. 468 ) $T_3$ स दैवतः ( for सदैव सः ). $T_1$ अबुद्धा वा दरिद्रा वा पूजनीयाः सदैव ते. — ( L. 469 ) $D_{10}$ T G ब्राह्मणान्न ( for °णं यो ). $T_1$ क्रोधयेच्च् ( for क्रोश° ). $D_{10}$ $T_{2,3}$ G निंदे( $G_{1-3}$ °द्या )च्च क्रोधयेच्च वा ( for the post. half ). — $T_1$ om. line 471. — ( L. 472 ) $D_{10}$ $T_{2,3}$ G क्रोधयति ( for क्रोशति च ). $T_1$ प्राक्रोशति च निंदति ( for the post. half ). — ( L. 473 ) $T_1$ एष ( for एव ). $T_1$ [अ]पकारकः ( for °हारकः ). — ( L. 474 ) $D_{10}$ $M_2$ प्रेषणं ( for प्रेक्षणं ). T G $M_3$ मामेव ( $T_3$ ममैव ) प्रेषणं कृत्वा ( for the prior half ). $D_{10}$ $T_{2,3}$ G निंदते ( for नन्दते ). — ( L. 475 ) $T_2$ स्मृतिः ; $G_{1-3}$ स्मृतः ( for स्थितिः ). — ( L. 476 ) $G_2$ कर्म हि ( for कर्माणि ). — ( L. 479 ) $T_1$ -संगमस् ( for -संग्रहस् ).

— $T_2$ om. ( hapl. ) from the post. half of line 480 up to the prior half of line 482. — $T_1$ om. line 482. — ( L. 483 ) $D_{10}$ $T_2$ G शास्त्रस्य ( for रहस्य- ). — ( L. 484 ) $M_{1,3,4}$ परं ( for परो ). $G_{1,3}$ om. ( hapl. ) from the post. half up to the prior half of line 487. $D_{10}$ $G_2$ नित्ययज्ञोपवीतिना ( $G_2$ °तता ); $T_{2,3}$ $G_4$ नित्यं यज्ञोपवीतिना ( for the post. half ). — ( L. 485 ) $T_1$ त्रेताग्नि- ( for सत्पथ- ). — ( L. 487 ) $T_1$ अमृताशः ; $T_{2,3}$ $G_4$ गृहस्थस्य ( for अमृताश्यं ). $D_{10}$ $G_2$ गृहस्थस्य परो धर्मो ( for the prior half ). $D_{10}$ T G गृहस्थाश्रमिणस्तथा ( for the post. half ). — ( L. 488 ) $T_1$ $G_{1,3}$ $M_4$ धर्मम् ( for धर्म ). $G_2$ गृहसंपूजनं धर्मम् ( for the prior half ). — ( L. 489 ) $T_{2,3}$ G -प्रियता ( for -व्रतता ). $T_1$ om. the post. half and the prior half of line 490. — $D_{10}$ $G_1$ om. ( hapl. ) lines 490-492. — ( L. 490 ) $T_{2,3}$ $G_{2-4}$ इष्टिर्वा ( for इष्टयः ). $G_4$ -बंधश्च. $T_{2,3}$ $G_{2,3}$ परंतप ; M परं ततः ( for परं तपः ). — ( L. 491 ) $G_4$ हि ( for वै ). $G_{2-4}$ -मेधिनः ( for °नाम् ). — ( L. 492 ) $T_{2,3}$ $G_{2-4}$ एवं ( for एष ). $T_2$ $G_2$ गार्हस्थं ( for °स्थ्ये ). — ( L. 493 ) $T_1$ त्रयी विद्या- ( for त्वया देवि ). — ( L. 494 ) $T_{1,2}$ $G_3$ M तद् ( for तम् ). — ( L. 495 ) $T_{2,3}$ G ततो ( for तथा ). $D_{10}$ T G $M_4$ द्विजानां ( for प्र° ). $G_3$ रताः ( for स्मृताः ). — ( L. 496 ) $D_{10}$ $T_{2,3}$ G क्षत्रिया ; $T_1$ स्युर्नृपा ( for क्षत्रियो ). — ( L. 499 ) $D_{10}$ $T_{2,3}$ $G_4$ दीनानां ; $G_{1-3}$ आर्तानां ( for भीतानां ).

तस्याप्यध्ययनं दानं यजनं धर्मतः स्मृतम् ।
भीतानां रक्षणं चैव पापानामनुशासनम् ।
सतां संपोषणं चैव करषड्भागजीवनम् ।
उत्साहः शस्त्रजीवित्वं तस्य धर्माः सनातनाः ।
भृत्यानां भरणं धर्मः कृते कर्मण्यमोघता ।
सम्यग्रणधृतो धर्मो धर्मः पौरहितक्रिया ।
व्यवहारस्थितिर्नित्यं गुणमेतन्महीपतेः ।
आर्तहस्तप्रदो राजा धर्मं प्राप्नोत्यनुत्तमम् ।
एवं ते विहिताः पूर्वैर्धर्माः कर्मविधानतः ।
तथैव देवि वैश्याश्च लोकयात्राहिताः स्मृताः ।
अन्ये तानुपजीवन्ति प्रत्यक्षफलदा हि ते ।
यदि न स्युस्तथा वैश्या न भवेयुस्तथा परे ।
तेषामध्ययनं दानं यजनं धर्म इष्यते ।
वैश्यस्य सततं धर्मः पाशुपाल्यं कृषिस्तथा ।
अग्निहोत्रपरिस्पन्दास्त्रयो वर्णा द्विजातयः ।
वाणिज्यं सत्पथे स्थानमातिथेयं सदा भवेत् ।
विप्राणां स्वागतं न्यायो वैश्यधर्मः सनातनः ।
तिलगन्धरसाश्चैव न विक्रेयाः कथंचन ।
वणिक्पथमुपासद्भिर्वैश्यैर्वैश्यपथि स्थितैः ।
सर्वातिथ्यं त्रिवर्गस्य यथाशक्ति दिवानिशम् ।
एवं ते विहिता देवि लोकयात्रा स्वयंभुवा ।
तथैव शूद्रा विहिताः सर्वधर्मप्रसाधकाः ।
शूद्राश्च यदि ते न स्युः कर्मकर्ता न विद्यते ।
त्रयः पूर्वे शूद्रमूलास्तस्मात्कर्मकराः स्मृताः ।
ब्राह्मणादिषु शुश्रूषा दासधर्म इति स्मृतः ।
वार्ता च कारुकर्माणि शिल्पं नाट्यं तथैव च ।
अहिंसकः शुभाचारो दैवतद्विजवन्दकः ।
शूद्रो धर्मफलैरिष्टैः स्वधर्मेणोपयुज्यते ।
एवमादि तथान्यच्च शूद्रकर्म इति स्मृतम् ।
तेऽप्येवं विहिता लोके कर्मयोगाः शुभानने ।
एवं चतुर्णां वर्णानां पुण्यलोकाः परत्र च ।
विहिताश्च तथा दृष्टा यथावद्धर्मचारिणाम् ।
एष वर्णाश्रयो धर्मः कर्म चैव तदर्पणम् ।
कथितं श्रोतुकामायाः किं भूयः श्रोतुमिच्छसि ।

उमा ।

भगवन्देवदेवेश नमस्ते वृषभध्वज ।
श्रोतुमिच्छाम्यहं देव धर्ममाश्रमिणां विभो ।

महेश्वरः ।

अथाश्रमगतं धर्मं शृणु देवि समाहिता ।
आश्रमाणां तु यो धर्मः क्रियते ब्रह्मवादिभिः ।
गृहस्थः प्रवरस्तेषां गार्हस्थ्यव्रतमाश्रितः ।
पञ्चयज्ञक्रिया शौचं दारतुष्टिरतन्द्रिता ।
ऋतुकालाभिगमनं दानयज्ञतपांसि च ।
अविप्रवासस्तस्येष्टं स्वाध्यायश्चाग्निपूजनम् ।
अतिथीनामाभिमुख्यं शक्त्या चेष्टनिमन्त्रणम् ।
अनुग्रहश्च सर्वेषां मनोवाक्कायकर्मभिः ।
एवमादि शुभं चान्यत्कुर्यात्सद्वृत्तवान्गृही ।
एवं संचरतस्तस्य पुण्यलोका न संशयः ।

---

$T_1$ om. ( hapl. ) the post. half and the prior half of line 500. — ( L. 500 ) $G_2$ संतोपणं ( for संपो° ). $D_{10}$ $T_{2,3}$ G कर्म- ( for कर- ). — ( L. 501 ) $T_{2,3}$ G तस्य धर्मः सनातनः ( for the post. half ). — ( L. 502 ) $T_2$ भरणे ( for °णं ). — $T_1$ om. line 503. — ( L. 503 ) $D_{10}$ $T_{2,3}$ G $M_4$ गुणयु( $D_{10}$ °य-; $T_3$ °हि )तो ( for रणधृतो ). — ( L. 504 ) $T_1$ गुण एप ( for गुणमेतन् ). $D_{10}$ $T_{2,3}$ G गुणयुक्तो महीपतिः ( for the post. half ). — $T_1$ om. lines 505–510. — ( L. 505 ) $D_{10}$ $T_{2,3}$ $G_{2,4}$ -वित्त- ( for -हस्त- ). — ( L. 506 ) $T_{2,3}$ G विहितः ( for °ताः ). M पूर्वे ( for पूर्वैर् ). $D_{10}$ एवं तैर्विहितैः पूर्वैर् ( for the prior half ). $D_{10}$ $G_2$ धर्मकर्म-; $T_{2,3}$ $G_{1,3,4}$ धर्मः कर्म-; $M_4$ धर्माधर्म- ( for धर्माः कर्म- ). — ( L. 510 ) $G_2$ उच्यते ( for इष्यते ). — ( L. 511 ) $D_{10}$ T G $M_4$ कर्म पशु- ( for धर्मः पाशु- ). — $T_1$ om. line 512. — ( L. 513 ) $G_2$ अतिथेयंत् ( for आतिथेयं ). $D_{10}$ $T_{2,3}$ $G_{1,3,4}$ आतिथेयत्वमेव च ( for the post. half ). — ( L. 514 ) G $M_4$ स्वागत- ( for °तं ). — ( L. 516 ) $T_1$ कार्यं ( for वैश्यैर् ). — $M_1$ om. lines 517–519. — ( L. 517 ) $T_1$ निवेदनं ( for दिवानिशम् ). — $T_1$ om. line 518. — ( L. 520 ) $T_1$ $G_{1-3}$ M चेन् ( for ते ). — ( L. 521 ) $T_1$ -मुखास् ( for -मूलास् ). $D_{10}$ $T_{2,3}$ G सर्वे ( for तस्मात् ). $T_3$ कर्मकृतः ( for °कराः ). — ( L. 522 ) $G_4$ $M_3$ दान- ( for दास- ). — $T_2$ om. ( hapl. ) lines 523–526. $T_1$ om. line 523. — ( L. 525 ) $T_1$ -परो नित्यं ; $G_2$ -फलैरिष्टा ( for -फलैरिष्टैः ). $T_1$ $G_2$ [ए]व ( for [उ]प- ). $G_{2,3}$ -पद्यते ( for -युज्यते ). — $T_1$ om. (hapl.) lines 526–527. — ( L. 527 ) $G_2$ कर्मयोग्याः ( for °योगाः ). — ( L. 528 ) $D_{10}$ $T_2$ $G_2$ वर्णलोकाः ; $T_3$ वर्णा लोकाः ( for पुण्यलोकाः ). — ( L. 529 ) $T_{1,3}$ यथा ( for तथा ). $M_3$ दृष्टं ( for दृष्टा ). $D_{10}$ $T_{1,2}$ G -चारिणि ( for °णाम् ). — $T_1$ om. ( hapl. ) from the post. half of line 530 up to the prior half of line 535. — ( L. 534 ) $D_{10}$ $T_3$ $G_2$ तथा ( for अथ ). — ( L. 536 ) $D_{10}$ $T_{2,3}$ G $M_2$ गार्हस्थ्यं धर्ममाश्रितः ; $T_1$ गार्हस्थ्यं व्रतमाश्रितः ( for the post. half ). — ( L. 537 ) $G_2$ अयंत्रिता ( for अतन्द्रिता ). — $T_1$ om. line 539. — ( L. 539 ) $D_{10}$ $T_{2,3}$ G [इ]ष्टः ( for [इ]ष्टं ). $T_3$ स्वाध्यायं चाग्निपूजकं ( for the post. half ). — ( L. 542 )

तथैव वानप्रस्थस्य धर्माः प्रोक्ताः सनातनाः ।
गृहवासं समुत्सृज्य निश्चित्यैकमनाः शुभैः ।
वन्यैरेव सदाहारैर्वर्तयेदिति च स्थितिः ।
भूमिशय्या जटाः श्मश्रुचर्मवल्कलधारणम् ।
देवतातिथिसत्कारो महाकृच्छ्राभिपूजनम् ।
अग्निहोत्रं त्रिषवणं नित्यं तस्य विधीयते ।
ब्रह्मचर्यं क्षमा शौचं तस्य धर्माः सनातनाः ।
एवं स विगते प्राणे देवलोके महीयते ।
यतिधर्मास्तथा देवि सङ्गांस्त्यक्त्वा यतस्ततः ।
आकिंचन्यमनारम्भः सर्वतः शौचमार्जवम् ।
सर्वत्र भैक्षचर्या च सर्वत्रैव विवासनम् ।
सदा ध्यानपरत्वं च दोषशुद्धिः क्षमा दया ।
तत्त्वानुगतबुद्धित्वं तस्य धर्मविधिर्भवेत् ।
ब्रह्मचारी च यो देवि जन्मप्रभृति दीक्षितः ।
ब्रह्मचर्यपरो भूत्वा संश्रयेद्गुरुमात्मनः ।
सर्वकालेषु सर्वत्र गुरुपूजां समाचरेत् ।
भैक्षचर्याग्निकार्यं च सदा जलनिषेवणम् ।
स्वाध्यायः सततं देवि तस्य धर्मः सनातनः ।
तस्य चेष्टा तु गुर्वर्थमाप्राणान्तमिति स्थितिः ।
गुरोरभावे तत्पुत्रे गुरुवद्वृत्तिमाचरेत् ।
एवं सोऽप्यमलाह्लँलोकान्ब्राह्मणः प्रतिपद्यते ।
एष ते कथितो देवि धर्मश्चाश्रमवासिनाम् ।
चातुर्वर्ण्याश्रमे युक्तो लोक इत्येव विद्यते ।
कथितं ते समासेन किं भूयः श्रोतुमिच्छसि ।

Colophon.

उमा ।

भगवन्देवदेवेश त्रिपुरान्तक शंकर ।
अयं त्वृषिगणो देव तपस्तेप इति प्रभो ।
तपसा कर्शिता नित्यं तपोर्जनपरायणाः ।
अस्य किंलक्षणो धर्मः कीदृशश्चागमस्तथा ।
एतदिच्छाम्यहं श्रोतुं तन्मे वद वरप्रद ।

नारदः ।

एवं वदन्त्यां रुद्राण्यामृषयः साधु साध्विति ।
अब्रुवन्हृष्टमनसः सर्वे तद्गतमानसाः ।
शृण्वन्तीमृषिधर्मांस्तु ऋषयश्चाभ्यपूजयन् ।
त्वत्प्रसादाद्वयं देवि श्रोष्यामः परमं हितम् ।
धन्याः खलु वयं सर्वे पादमूलं तवाश्रिताः ।
इति सर्वे तदा देवीं वाचा समभिपूजयन् ।

महेश्वरः ।

न्यायतस्त्वं महाभागे श्रोतुकामा मनस्विनि ।
हन्त ते कथयिष्यामि मुनिधर्मं शुचिस्मिते ।
वानप्रस्थं समाश्रित्य क्रियते बहुधा नरैः ।
बहुशाखो बहुविध ऋषिधर्मः सनातनः ।

$T_1$ कार्यं (for चान्यत्). $M_{2.3}$ व्रतवान् (for वृत्त°). $T_1$ गृहस्थेन शुभात्मना (for the post. half). — $G_2$ om. line 543. — (L. 544) $T_1$ $G_{1.3}$ $M_{1-3}$ धर्मः प्रोक्तः सनातनः (for the post. half). — $T_1$ om. line 545. — (L. 545) $G_1$ M शुभे (for शुभैः). — (L. 546) $G_{1-3}$ समाहारैर् (for सदा°). $T_2$ श्रुतिः (for स्थितिः). — (L. 548) $T_1$ -वृद्धाभि- (for -कृच्छ्राभि-). — (L. 549) $T_1$ नूनं तस्य; $T_2$ तस्य नित्यं (by transp.). — (L. 550) $T_1$ तथा (for क्षमा). $D_{10}$ $T_{2.3}$ G तस्य धर्मः सनातनः (for the post. half). — (L. 551) $D_{10}$ $T_1$ $G_{1-3}$ M सोपि (for स वि-). $M_{1-3}$ विधीयते (for मही°). — (L. 552) $T_3$ $M_3$ -धर्मस् (for -धर्मास्). $D_{10}$ $T_2$ $G_4$ गृहांस् (for सङ्गांस्). $T_2$ संगं त्यक्त्वा यतव्रतः (for the post. half). — (L. 554) $T_2$ सर्वतो (for °त्र). $G_{1.3}$ च (for [ए]व). $T_1$ प्र- (for वि-). — (L. 555) $G_{1-3}$ देह- (for दोष-). — (L. 556) $G_2$ -बुद्धित्वात् (for °त्वं). $T_2$ धर्मगतिर् (for °विधिर्). — (L. 558) $D_{10}$ $T_3$ G साधयेद् (for संश्र°). — $T_1$ om. line 559. $T_2$ om. lines 560–564. — (L. 561) $G_2$ तस्य (for देवि). — (L. 563) $T_1$ गुरुवृत्तिमथाचरेत् (for the post. half). — (L. 564) $T_3$ $G_{1.3.4}$ ब्रह्मगः (for ब्रा°). — After line 564, $G_{1.3}$ ins.:

आयुष्कामो द्विजो देवि धारयेद्ब्रह्म नित्यशः ।
मोक्षकामी च यो विप्रो भूतिकामोऽथ वा पुनः ।
पुनरावृत्तिरहितं लोकं संप्रतिपद्यते ।

— (L. 565) $D_{10}$ $T_{2.3}$ मे (for ते). — (L. 566) $D_{10}$ $T_{2.3}$ चतुर्वर्णाश्रमो युक्तो; $T_1$ G चतुर्णामाश्रमो ($T_1$ °मे) युक्तो (for the prior half). $T_1$ om. the post. half and the prior half of line 567. — Colophon. *Sub-parvan :* $M_{1-3}$ दानधर्म. — *Adhy. name :* $D_{10}$ $T_2$ $G_2$ उमामहेश्वरसंवादे वर्णाश्रमधर्मलक्षणकथनं; $T_3$ उमामहेश्वरसंवादे ऋषिचरितं; $G_4$ वर्णाश्रमलक्षणं; M उमामहेश्वरसंवादः. — *Adhy. no. :* $D_{10}$ $T_2$ $G_4$ 191; $T_1$ $M_4$ 184; $T_3$ 192; $G_{1.3}$ $M_1$ 185. — (L. 569) $D_{10}$ $T_{2.3}$ $G_{2-4}$ M तप; $T_1$ तस (for तेप). — $T_1$ om. line 570. — (L. 570) $D_{10}$ कर्शितं; $T_2$ $G_{1-3}$ $M_4$ कर्शितो (for कर्शिता). $G_{1-3}$ $M_4$ -परायणः (for °यणाः). — (L. 571) $T_3$ तु (for च). $M_2$ कीदृशश्चागमास्तथा (for the post. half). — $G_2$ om. the ref. — (L. 573) $D_{10}$ T $G_{1.3.4}$ $M_4$ ब्रुवंत्यां (for वदन्त्यां). — $T_1$ om. lines 575–579. — (L. 575) $T_2$ [अ]प्यपूजयन् (for [अ]भ्य°). — Before line 576, $G_2$ ins. ऋषय ऊचुः. — $T_3$ om. (hapl.) lines 576–578. — (L. 577) $T_2$ उपाश्रिताः (for तवा°). — (L. 580) $T_2$ अहं (for हन्त). — $T_1$ om. lines

प्रायशः स्वर्गभोगार्थमृषिभिः क्रियते तपः ।
तथा संचरतां तेषां देवि धर्मविधिं शृणु ।
भूत्वा पूर्वं गृहस्थस्तु पुत्रानृण्यमवाप्य च ।
कलत्रकार्यं संस्थाप्य कारणात्संत्यजेद्गृहम् ।
अवस्थाप्य मनो धृत्या व्यवसायपुरःसरः ।
निर्द्वंद्वो वा सदारो वा वनवासाय संव्रजेत् ।
देशाः परमपुण्या ये नदीवनसमन्विताः ।
आबाधमुक्ताः प्रायेण तीर्थायतनसंयुताः ।
तत्र गत्वा विधिं ज्ञात्वा दीक्षां कुर्याद्यथाक्रमम् ।
दीक्षित्वैकमना भूत्वा परिचर्यां समाचरेत् ।
काल्योत्थानं च शौचं च सर्वदेवप्रणामनम् ।
शकृदालेपनं काये त्यक्तदोषाप्रमादिता ।
सायं प्रातश्चाभिषेकमग्निहोत्रं यथाविधि ।
कायशौचं च कार्यं च जटावल्कलधारणम् ।
सततं वनचर्या च समित्कुसुमकारणात् ।
नीवारग्रहणं काले शाकमूलोपचायनम् ।
सदायतनशौचं च तस्य धर्माय चेष्यते ।
अतिथीनामाभिमुख्यं तत्परत्वं च सर्वशः ।
पाद्यासनाभ्यां संपूजा तथाहारनिमन्त्रणम् ।
अग्राम्यपचनं काले पितृदेवार्चनं तथा ।
पश्चादतिथिसत्कारस्तस्य धर्माः सनातनाः ।
शिष्टैर्धर्मासने चैव धर्मार्थसहिताः कथाः ।
प्रतिश्रयविभागश्च भूमिशय्या शिलासु वा ।
व्रतोपवासयोगश्च क्षमा चेन्द्रियनिग्रहः ।
दिवा रात्रौ यथायोगं शौचं धर्मार्थचिन्तना ।
एवं धर्माः पुरा दृष्टाः सामान्या वनवासिनाम् ।
एवं वै यतमानस्य कालधर्मो यदा भवेत् ।
तदैव सोऽभिजायेत स्वर्गलोकं शुचिस्मिते ।
तत्र संविहिता भोगाः स्वर्गस्त्रीभिरनिन्दिते ।
परिभ्रष्टो यदा स्वर्गाद्विशिष्टस्तु भवेन्नृषु ।
एवं धर्मः सदा देवि सर्वेषां वनवासिनाम् ।
एतत्ते कथितं सर्वं किं भूयः श्रोतुमिच्छसि ।

उमा ।

भगवन्देवदेवेश ऋषीणां चरितं शुभम् ।
विशेषधर्मानिच्छामि श्रोतुं कौतूहलं हि मे ।

महेश्वरः ।

तदहं ते प्रवक्ष्यामि शृणु देवि समाहिता ।
वननित्यैर्वनरतैर्वानप्रस्थैर्महर्षिभिः ।
वनं गुरुमिवालम्ब्य वस्तव्यमिति निश्चयः ।
वीरशय्यामुपासद्भिर्वीरस्थानोपसेविभिः ।
व्रतोपवासैर्बहुभिर्ग्रीष्मे पञ्चतपैस्तथा ।
पञ्चयज्ञपरैर्नित्यं पौर्णमास्यपरायणैः ।
मण्डूकशायैर्हेमन्ते शैवालाङ्कुरभोजनैः ।
चीरवल्कलसंवीतैर्मृगाजिनधरैस्तथा ।
चातुर्मास्यपरैः कैश्चिद्देवधर्मपरायणैः ।
एवंविधैर्वनगतैस्तप्यते सुमहत्तपः ।

581, and 583–584. — ( L. 583 ) $T_{2.3}$ G सर्व- ( for स्वर्ग- ). — ( L. 586 ) $D_{10}$ संप्राप्य ( for संस्थाप्य ). — $T_1$ om. line 587. — ( L. 588 ) $G_2$ निर्दारो ( for निर्द्वंद्वो ). — $T_1$ om. lines 590–591. — ( L. 593 ) $G_{1.3}$ शौच-देश-; $M_4$ सर्वभूत- ( for सर्वदेव- ). $T_1$ सर्वदेवेषु वंदनं ( for the post. half ). — $T_1$ om. line 594. — ( L. 594 ) $G_3$ M काले ( for काये ). $M_4$ om. ( hapl. ) from the post. half up to the prior half of line 598. $T_2$ $G_3$ त्यक्तदोषप्रमादिता ; $M_{2.3}$ °रोषाप्रमादिना ( for the post. half ). — ( L. 595 ) $T_1$ transp. अभिषेकं and अग्निहोत्रं. $D_{10}$ $T_{2.3}$ $G_{1-3}$ M चाग्निहोत्रं ( for अग्नि° ). — ( L. 596 ) $D_{10}$ T $G_{2.4}$ काले ; $G_{1.3}$ $M_1$ काल- ( for काय- ). $T_1$ स्याज् ( for the second च ). $G_1$ -धारिणः ( for -धारणम् ). — ( L. 598 ) $T_3$ निवानाश्रयणं काले ( for the prior half ). — ( L. 599 ) $T_1$ तथा ( for सदा ). — ( L. 600 ) $D_{10}$ $T_{2.3}$ G सर्वदा ( for °शः ). — $T_1$ om. line 601. — ( L. 601 ) $D_{10}$ $T_{2.3}$ G संपूज्य ( for °जा ). $T_3$ [आ]तिथ्याहार- ( for तथाहार- ). — ( L. 602 ) $G_{1.3}$ $M_4$ ततः ( for तथा ). — ( L. 603 ) $D_{10}$ तस्य धर्मः सनातनः ( for the post. half ). — $T_1$ om. line 604. — ( L. 604 ) $T_3$ शिष्टै ( for शिष्टैर् ). $G_{2.3}$ धर्मासनैश् ( for °सने ). $G_1$ शिष्टैः सहासनैश्चैव ( for the prior half ). — $T_1$ om. lines 607–608. — ( L. 607 ) $D_{10}$ $T_{2.3}$ $G_{3.4}$ -रात्रं ( for रात्रौ ). $M_{3.4}$ तथा ( for यथा- ). $M_4$ धर्मस्य ( for धर्मार्थ- ). $D_{10}$ $T_{2.3}$ G शौचं धर्मस्य चिंतनं ( for the post. half ). — ( L. 610 ) $D_{10}$ $T_{2.3}$ G -जयति ( for -जायेत ). — ( L. 611 ) $D_{10}$ $T_{2.3}$ $G_{1.3.4}$ संविदिता. ( for °हिता ). — ( L. 612 ) $T_1$ जायते स सदा नृषु ( for the post. half ). — ( L. 614 ) $T_{1.2}$ देवि ( for सर्वं ). — $G_2$ om. the ref. — ( L. 615 ) $T_1$ $M_2$ ( *inf. lin.* ) ऋषीणां परमं श्रुतं ( for the post. half ). — $G_2$ *om. the ref.* $T_1$ महेशः ( for महेश्वरः ). — ( L. 618 ) $T_2$ वनचरैर् ( for °रतैर् ). $T_1$ महात्मभिः ( for महर्षिभिः ). — ( L. 621 ) $D_{10}$ $G_2$ बहुलैर् ( for °भिर् ). $T_1$ ग्रीष्मे पंचतपोन्वितैः ( for the post. half ). — $T_2$ om. ( hapl. ) lines 622–624. — ( L. 622 ) $M_4$ पंचाग्नियज्ञपरैः ( for the prior half ). — After the prior half, $T_1$ ins. :

वेदोक्ताचारतत्परैः ।
अष्टमीकृत्यपरमैः ·

$G_1$ पौर्णमासी- ( for °मास्य- ). — $T_1$ om. line 623. $G_4$ $M_{1-3}$ om. ( hapl. ) lines 623–25. — ( L. 623 ) $T_2$

एवं कृत्वा शुभं कर्म पश्चाद्याति त्रिविष्टपम् ।
तत्रापि सुमहत्कालं स विहृत्य यथासुखम् ।
जायते मानुषे लोके दानभोगसमन्वितः ।
तपोविशेषसंयुक्ताः कथितास्ते शुचिस्मिते ।

उमा ।

भगवन्सर्वभूतेश तेषु ये दारसंयुताः ।
कीदृशं चरितं तेषां तन्मे शंसितुमर्हसि ।

महेश्वरः ।

य एकपत्नीधर्मेणश्चरन्ति विपुलं तपः ।
विन्ध्यपादेषु ये केचिद्ये च नैमिषवासिनः ।
पुष्करेषु च ये चान्ये नदीवनसमाश्रिताः ।
सर्वे ते विधिदृष्टेन चरन्ति विपुलं तपः ।
हिंसाद्रोहविमुक्ताश्च सर्वभूतानुकम्पिनः ।
शान्ता दान्ता जितक्रोधाः सर्वातिथ्यपरायणाः ।
प्राणिष्वात्मोपमा नित्यमृतुकालाभिगामिनः ।
स्वदारसहिता देवि चरन्ति व्रतमुत्तमम् ।
वसन्ति सुखमव्यग्राः पुत्रदारसमन्विताः ।
तेषां परिच्छदारम्भाः कृत्योपकरणानि च ।
गृहस्थवद्विधीयन्ते यथायोगं प्रमाणतः ।
पोषणार्थं च दाराणामग्निकार्यार्थमेव च ।
गावश्च कर्षणं चैव सर्वमेतद्विधीयते ।
एवं वनगतैर्देवि कर्तव्यं दारसंयुतैः ।
ते स्वदारैः समायान्ति पुण्याँल्लोकान्दृढव्रताः ।
पतिभिः सह ये दाराश्चरन्ति विपुलं तपः ।
अव्यग्रभावादैकात्म्यात्ते च गच्छन्ति वै दिवम् ।
एतत्ते कथितं देवि किं भूयः श्रोतुमिच्छसि ।

Colophon.

उमा ।

भगवन्देवदेवेश तेषां कर्मफलं विभो ।
श्रोतुमिच्छाम्यहं देव प्रसादात्ते वरप्रद ।

महेश्वरः ।

वानप्रस्थगतं सर्वं फलपाकं शृणु प्रिये ।
अग्नियोगं व्रजन्ग्रीष्मे नरो द्वादशवार्षिकम् ।
रुद्रलोके हि जायेत विधिदृष्टेन कर्मणा ।
उदवासव्रतं कुर्वन्वर्षकाले दृढव्रतः ।
सोमलोकेऽभिजायेत नरो द्वादशवार्षिकम् ।
काष्ठवन्मौनमास्थाय नरो द्वादशवार्षिकम् ।
मरुतां लोकमास्थाय तत्र भोगैश्च युज्यते ।
कण्टशर्करसंयुक्ते स्थण्डिले संविशेन्मुनिः ।
यक्षलोकेऽभिजायेत सहस्राणि चतुर्दश ।
वर्षाणां भोगसंयुक्तो नरो द्वादशवार्षिकम् ।
वीरासनगतो यस्तु कण्टकाफलकाश्रितः ।
गन्धर्वेष्वभिजायेत नरो द्वादशवार्षिकम् ।
वीरस्थायी चोर्ध्वबाहुर्नरो द्वादशवार्षिकम् ।
देवलोकेऽभिजायेत दिव्यभोगसमन्वितः ।
पादाङ्गुष्ठेन यस्तिष्ठेदूर्ध्वबाहुर्जितेन्द्रियः ।

---

-शाड्वलैः ( for -भोजनैः ). — ( L. 626 ) T3 वनचरैस्; G2 वने वासैस् ( for वनगतैस् ). — T1 om. lines 627–642. — ( L. 628 ) D10 T2.3 G1–3 M सं- ( for स ). — ( L. 631 ) D10 T2.3 -लोकेश ( for -भूतेश ). — T3 G1 om. ( hapl.? ) lines 433–436. G2 om. ( hapl. ) lines 634–636. — ( L. 637 ) G3 -मोह- ( for -द्रोह- ). T2 -कंपनाः ( for -कम्पिनः ). — ( L. 640 ) G1–3 -निरता ( for -सहिता ). ( L. 641 ) M1–3 वने विगतकल्मषाः ( for the post. half ). — ( L. 644 ) T G1.3.4 M स्व- ( for च ). D10 G2 पोषणार्थं स्वदाराणाम् ( for the prior half ). — T1 om. line 646. — ( L. 646 ) D10 T2.3 G -संग्रहैः ( for -संयुतैः ). — ( L. 647 ) G1.3 तैः ( for ते ). — ( L. 649 ) T2 अव्यक्त- ( for °ग्र- ). D10 T2.3 ऐकाग्र्यात्; T1 ऐकात्यात् ( for ऐकात्म्यात् ). — ( L. 650 ) M transp. किं and भूयः. — Colophon. *Adhy. name :* D10 G2 ऋषिचरितं; T2 ऋषिधर्मकथनं; T3 वालखिल्यचरितं; G4 ऋषिचर्या; M उमामहेश्वरसंवादः. — *Adhy. no. :* D10 T2 G2.4 162; T1 M4 185; T3 193; G1.3 M1 186; M2.3 187. — ( L. 651 ) D10 T2 G2–4 प्रभो ( for विभो ). — T1 महेशः ( for महेश्वरः ). — ( L. 653 ) T1 शृणुष्व मे ( for शृणु प्रिये ). — ( L. 654 ) T1 M4 -योगे ( M4 °गं ) वने ( for -योगं व्रजन् ). D10 T2.3 G2.4 ततो ( for नरो ). — D10 T3 G4 om. ( hapl. ) lines 655–657. G1 om. ( hapl. ) lines 655–658. — ( L. 655 ) T1.2 [ऽ]भि- ( for हि ). G2 om. ( hapl. ) from the post. half of line 655 up to the prior half of line 657. — ( L. 656 ) T1.2 उप- ( for उद- ). T2 कुर्याद् ( for कुर्वन् ). T1 पर्वकाले; T2 G3 वर्षा° ( for वर्ष° ). — ( L. 657 ) G3 हि ( for ऽभि- ). T2 repeats from the post. half up to the prior half of line 659 after the prior half of line 667. — M1 om. ( hapl. ) line 658. — After line 659, M2.3 ins. :

शष्पं मृगमुखोत्सृष्टं वसमानो मृगैः सह ।
वसुलोकेऽभिजायेत नरो द्वादशवार्षिकम् ।

— ( L. 660 ) D10 T3 G कुश-; T1 कटु- ( for कण्ट- ). T2 शर्कराभिरसंयुक्तः ( for the prior half ). T3 G1–3 संविशन् ( for °शेन् ). — ( L. 661 ) G1.3 हि ( for ऽभि- ). — ( L. 663 ) D10 वीरस्थान- ( for वीरासन- ). T2 कंटकाफलमाश्रितः; T3 परितः कंटका°; G2 कडकाफलमा° ( for the post. half ). — ( L. 664 ) T2 ततो ( for

इन्द्रलोकेऽभिजायेत सहस्राणि चतुर्दश ।
आहारनियमं कृत्वा मुनिर्द्वादशवार्षिकम् ।
नागलोकेऽभिजायेत संवत्सरगणान्बहून् ।
एवं दृढव्रता देवि वानप्रस्थाश्च कर्मभिः ।
स्थानेषु तेषु तिष्ठन्ति तद्वद्भोगसमन्विताः ।
तेभ्यो भ्रष्टाः पुनर्देवि जायन्ते नृषु भोगिनः ।
वर्णोत्तमकुलेष्वेव धनधान्यसमन्विताः ।
एतत्ते कथितं देवि किं भूयः श्रोतुमिच्छसि ।

उमा ।

एषां यायावराणां तु धर्ममिच्छामि मानद ।
कृपया परयाविष्टस्तं मे ब्रूहि महेश्वर ।

महेश्वरः ।

धर्मं यायावराणां तु शृणु भामिनि तत्परा ।
व्रतोपवासशुद्धाङ्गास्तीर्थस्नानपरायणाः ।
धृतिमन्तः क्षमायुक्ताः सत्यव्रतपरायणाः ।
पक्षमासोपवासैश्च कर्शिता धर्मदर्शिनः ।
वर्षशीतातपैरेव कुर्वन्तः परमं तपः ।
कालयोगेन गच्छन्ति शक्रलोकं शुचिस्मिते ।
तत्र ते भोगसंयुक्ता दिव्यगन्धसमन्विताः ।
दिव्यभूषणसंयुक्ता विमानवरमास्थिताः ।
विचरन्ति यथाकामं दिव्यस्त्रीगणसंयुताः ।
एतत्ते कथितं देवि भूयः श्रोतुं किमिच्छसि ।

उमा ।

तेषां चक्रचराणां तु धर्ममिच्छामि वै प्रभो ।

महेश्वरः ।

हन्त ते कथयिष्यामि शृणु शाकटिकं शुभे ।
संवहन्तो धुरं दारैः शाकटानां तु सर्वदा ।
प्रार्थयन्ते यथा ग्राम्याः शकटैर्भैक्षचर्यया ।
तपोर्जनपराधीनास्तपसा क्षीणकल्मषाः ।
पर्यटन्तो दिशः सर्वाः कामक्रोधविवर्जिताः ।
स्ववशादेव ते मृत्युमभिकाङ्क्षन्ति नित्यशः ।
इन्द्रलोके तथा तेषां निर्मिता भोगसंचयाः ।
अमरैः सह ते यान्ति देववद्भोगसंयुताः ।
वराप्सरोभिः संयुक्ताश्चिरकालमनिन्दिते ।
तेनैव कालयोगेन त्रिदिवं यान्ति शोभने ।
तत्र प्रमुदिता भोगैर्विचरन्ति यथासुखम् ।
एतत्ते कथितं देवि किं भूयः श्रोतुमिच्छसि ।

उमा ।

वैखानसानां वै धर्मं श्रोतुमिच्छाम्यहं प्रभो ।

महेश्वरः ।

तेषु वैखानसा नाम वानप्रस्थाः शुभेक्षणे ।
तीव्रेण तपसा युक्ता दीप्तिमन्तः स्वतेजसा ।
सत्यव्रतपराधीनास्तेषां निष्कल्मषं तपः ।
अश्मकुट्टास्तथान्ये च दन्तोलूखलिनस्तथा ।

---

नरो ). $T_3$ सहस्राणि चतुर्दश ( for the post. half ). — $G_2$ om. ( hapl. ) lines 666–669. — ( L. 670 ) $G_2$ देव- ( for नाग- ). — ( L. 671 ) $T_1$ स्व- ( for च ). — ( L. 672 ) $D_{10}$ $T_{2.3}$ G तत्र ( for तेषु ). $D_{10}$ $T_{2.3}$ G $M_3$ तत्तद्भोग-; $T_1$ तत्र भोग- ( for तद्वद्भोग- ). — $T_1$ $G_3$ om. the ref. — After the ref., M ins. :

भगवन्देवदेवेश ऋषीणां चरितं श्रुतम् ।

— ( L. 676 ) T येषां; $M_{1-3}$ तेषां ( for एषां ). $G_2$ एषामथावराणां तु ( for the prior half ). $G_{1.3}$ वेदितुं ( for मानद ). — After line 676, $T_1$ ins. :

वेदितुं देवदेवेश सदा सद्व्रतशालिनाम् ।

— $T_1$ M om. line 677. — ( L. 678 ) $D_{10}$ त्वं; $G_2$ च ( for तु ). $T_3$ धर्मं यथा वराणां त्वं ( for the prior half ). — ( L. 679 ) $T_2$ तीर्थस्थान- ( for °स्नान- ). — $D_{10}$ $G_4$ om. ( hapl. ) line 680. — ( L. 680 ) $M_{1-3}$ स्मृतिमंतः ( for धृति° ). — ( L. 682 ) $D_{10}$ $T_2$ $G_4$ वर्षैः ( for वर्ष- ). — ( L. 684 ) $M_{1-3}$ transp. तत्र and ते. — ( L. 685 ) $D_{10}$ $T_{2.3}$ G $M_4$ विमानवरमंयु( $T_3$ °म )ताः ( for the post. half ). — $D_{10}$ $G_3$ om. ( hapl. ) line 686. — ( L. 686 ) M -सेविताः ( for -संयुताः ). — ( L. 687 ) $D_{10}$ T $G_{3.4}$ [illegible] श्रोतुमिच्छसि ( for the post. half ). — ( L. 688 ) $D_{10}$ $G_{2.4}$ च ( for तु ). — After line 688, $T_1$ ins. :

विज्ञातुं देवदेवेश भवद्वचनवर्णितम् ।

— $D_{10}$ महादेवः; $G_2$ शिवः ( for महेश्वरः ). — ( L. 689 ) $T_{2.3}$ एतत् ( for हन्त ). — ( L. 690 ) T G शकटानां ( for शा° ). $M_{1-3}$ अतापसाः; $M_4$ तु सर्वथा ( for तु सर्वदा ). — ( L. 691 ) $T_{2.3}$ $G_{3.4}$ -कालं; $G_1$ damaged ( for ग्राम्याः ). $D_{10}$ $G_3$ प्रार्थयंतो यथाकालं ( for the prior half ). — ( L. 692 ) $T_3$ M तपोर्चनपरा धीरास्; $G_{1.3}$ °र्चन-परा वीरास् ( for the prior half ). — $D_{10}$ T G om. lines 694–697. M om. lines 698–699. $T_1$ om. line 700. $M_4$ om. ( hapl. ) lines 701–716. — ( L. 701 ) $G_{1.3}$ शिव ( for प्रभो ). — $T_1$ महेशः ( for महेश्वरः ) — ( L. 702 ) $D_{10}$ $T_{2.3}$ G $M_3$ ते वै; $T_1$ ते तु ( for तेषु ). — ( L. 704 ) $D_{10}$ $T_3$ $G_{1.3}$ $M_{2.3}$ -परा धीरास् ( for -पराधीनास् ). $T_1$ येषां ( for तेषां ). — ( L. 705 ) $T_2$ transp. [अ]न्ये and च. — ( L. 706 ) $D_{10}$ $T_2$ $G_{1-3}$ उंछवृत्ति( $T_2$ °त्ता )स्; $G_4$ उंछवृत्यम् ( for °यन्ति ). — ( L. 707 ) $D_{10}$ T G -वृत्तयश् ( for -व्रतिनश् ). $G_4$ आश्रिताः ( for आस्थिताः ). — $D_{10}$ $T_1$ $M_2$ om. ( hapl. ) line 709. — ( L. 709 ) $T_3$ वि- ( for सं- ). — After line 710,

शीर्णपर्णाशिनश्चान्ये उञ्छयन्ति तथापरे ।
कपोतव्रतिनश्चान्ये कापोतीं वृत्तिमास्थिताः ।
पशुप्रचारनिरताः फेनपाश्च तथापरे ।
मृगवन्मृगचर्यायां संचरन्ति तथापरे ।
अब्भक्षा वायुभक्षाश्च निराहारास्तथैव च ।
संचरन्ति तपो घोरं व्याधिमृत्युविवर्जिताः ।
स्ववशादेव ते मृत्युमभिकाङ्क्षन्ति नित्यशः ।
इन्द्रलोके तथा तेषां निर्मिता भोगसंचयाः ।
अमरैः सह ते यान्ति देववद्भोगसंयुताः ।
वराप्सरोभिः संयुक्ताश्चिरकालमनिन्दिते ।
एतत्ते कथितं देवि किं भूयः श्रोतुमिच्छसि ।

उमा ।

भगवञ्श्रोतुमिच्छामि वालखिल्यांस्तपोधनान् ।

महेश्वरः ।

धर्मचर्यां तथा देवि वालखिल्यगतां शृणु ।
मृगनिर्मोकवसना निर्द्वंद्वास्ते तपोधनाः ।
अङ्गुष्ठमात्राः सुश्रोणि स्वेष्वेवाङ्गेषु संयुताः ।
ते मृत्युविषयातीतास्तपःसिद्धास्तपोबलाः ।
जिताहारा जितक्रोधाः सर्वभोगेषु निःस्पृहाः ।
तपश्चरणमिच्छन्तो लोकार्थं परमोद्यताः ।
उद्यन्तं सततं सूर्यं स्तुवन्तो विविधैः स्तवैः ।
भास्करस्यैव किरणैः सह संयान्ति नित्यदा ।
द्योतयन्ते दिशः सर्वा धर्मज्ञाः सत्यवादिनः ।
तेष्वेव निर्मलं सत्यं लोकार्थं तु प्रतिष्ठितम् ।
लोकोऽयं धार्यते देवि तेषामेव तपोबलात् ।
महात्मनां तु तपसा सत्येन च शुचिस्मिते ।
क्षमया च महाभागे भूतानां संस्थितिं विदुः ।
प्रजार्थमपि लोकार्थं महद्भिः क्रियते तपः ।
तपसा प्राप्यते सर्वं तपसा प्राप्यते फलम् ।
दुष्प्रापमपि यल्लोके तपसा प्राप्यते हि तत् ।
पञ्चभूतस्थितिश्चैव लोकसृष्टिविवर्धनम् ।
एतत्सर्वं समासेन तपोयोगाद्विनिर्मितम् ।
तस्मादयं ऋषिगणस्तपस्तेप इति प्रिये ।
धर्मान्वेषी तपः कर्तुं यतते सततं प्रिये ।
अमरत्वं वशित्वं च तपसा प्रार्थयेत्सदा ।
एतत्ते कथितं सर्वं शृण्वन्त्यास्ते श्रुतं प्रिये ।
प्रियार्थमृषिसंघस्य लोकानां हितकाम्यया ।

नारदः ।

इति ब्रुवन्तं देवेशमृषयश्चापि तुष्टुवुः ।
भूयः परमकं यत्नं तदाप्रभृति चक्रिरे ।

Colophon.

उमा ।

उक्तस्त्वया त्रिवर्गस्य धर्मः परमकः शुभः ।
सर्वव्यापी तु यो धर्मो भगवंस्तद्ब्रवीहि मे ।

महेश्वरः ।

ब्राह्मणा लोकसंसारे सृष्टा धात्रा गुणार्थिना ।
लोकांस्तारयितुं युक्ता मर्त्येषु क्षितिदेवताः ।
तेषु तावत्प्रवक्ष्यामि धर्मं शुभफलोदयम् ।

---

$D_{10}$ $T_{2,3}$ G ins. :

केचिच्चरन्ति तद्विष्णोः पादपूजनमुत्तमम् ।
[ $D_{10}$ $T_3$ $G_{2,4}$ सद्विष्णोः ( for त° ). ]

— $T_1$ om. line 711. — ( L. 711 ) $T_2$ घोरा ( for घोरं ). — ( L. 712 ) $T_2$ $G_{2,4}$ भीषयंति च नित्यशः ( for the post. half ). — ( L. 713 ) $T_3$ इति; $G_2$ इष्ट- ( for इन्द्र- ). — ( L. 714 ) $D_{10}$ $T_{2,3}$ G समतां ( for सह ते ). — ( L. 716 ) $D_{10}$ $G_4$ एवं ( for एतत् ). $G_2$ भूयः श्रोतुं किमिच्छसि ( for the post. half ). — $T_1$ महेशः ( for महेश्वरः ). — $T_1$ om. line 718. — ( L. 720 ) $D_{10}$ S ( except $M_{1-3}$ ) तेषु ( for स्वेषु ). $G_{1-3}$ संश्रिताः ( for संयुताः ). — $D_{10}$ S ( except $M_{1-3}$ ) om. lines 722–723. — ( L. 725 ) $D_{10}$ $T_{2,3}$ G सहसा ( for सह सं- ). — ( L. 726 ) $D_{10}$ S ( except $M_{1-3}$ ) द्योतयंतो ( for °यन्ते ). — $T_1$ om. lines 727 and 729–730. — ( L. 733 ) $T_1$ महत् ( for हि तत् ). — $T_1$ om. lines 734–735. — ( L. 734 ) $D_{10}$ $T_2$ G पंचभूतार्थतत्त्वेन ( $D_{10}$ $G_2$ °त्त्वे च ) ( for the prior half ). $T_2$ -विवर्धनः ( for °नम् ). — ( L. 735 ) $T_2$ अनिंदिते ( for विनिर्मितम् ). — ( L. 736 ) $T_1$ तपस्तस्त इति स्मृतः ( for the post. half ). — $D_{10}$ $T_3$ $G_4$ om. ( hapl. ) lines 737–739. — ( L. 738 ) $T_2$ $G_{1-3}$ शिवत्वं ( for वशित्वं ). $T_1$ $G_{1-3}$ प्रापयेत्; $T_2$ प्राप्यते ( for प्रार्थयेत् ). — ( L. 739 ) $T_1$ देवि ( for सर्वं ). $T_1$ om. the post. half and the prior half of line 740. — ( L. 740 ) $D_{10}$ $T_{2,3}$ G प्रजानां ( for लोकानां ). — $G_2$ om. the ref. — ( L. 741 ) $D_{10}$ $T_{2,3}$ $G_4$ $M_1$ एवं ( for इति ). $T_1$ [अ]भि- ( for [अ]पि ). — ( L. 742 ) $M_3$ परतरं ( for °मकं ). $D_{10}$ $T_{2,3}$ G भूयः परतरं यत्तु ( for the prior half ). — Colophon. *Sub-parvan* : M दानधर्म. — *Adhy. name* : $D_{10}$ $T_{2,3}$ $G_2$ उमामहेश्वरसंवादे वालखिल्यचरितं; M उमामहेश्वरसंवादः. — *Adhy. no.* : $D_{10}$ $T_{2,3}$ $G_{2,4}$ 193; $T_1$ $M_4$ 186; $G_{1,3}$ $M_1$ 187; $M_{2,3}$ 188. — $M_4$ om. lines 743–749. — ( L. 743 ) $D_{10}$ $T_3$ $G_4$ च परमः ( for परमकः ). $M_{1-3}$ शिवः ( for शुभः ). $G_3$ धर्मश्च परमं शुभं ( for the post. half ). — ( L. 744 ) $D_{10}$ $T_3$ $G_2$ [इ]ति ( for तु ). $D_{10}$ $G_{1,2,4}$ त्वं न( $D_{10}$

इन्द्रलोकेऽभिजायेत सहस्राणि चतुर्दश ।
आहारनियमं कृत्वा मुनिर्द्वादशवार्षिकम् ।
नागलोकेऽभिजायेत संवत्सरगणान्बहून् ।
एवं दृढव्रता देवि वानप्रस्थाश्च कर्मभिः ।
स्थानेषु तेषु तिष्ठन्ति तद्वद्भोगसमन्विताः ।
तेभ्यो भ्रष्टाः पुनर्देवि जायन्ते नृषु भोगिनः ।
वर्णोत्तमकुलेष्वेव धनधान्यसमन्विताः ।
एतत्ते कथितं देवि किं भूयः श्रोतुमिच्छसि ।

उमा ।

एषां यायावराणां तु धर्ममिच्छामि मानद ।
कृपया परयाविष्टस्तं मे ब्रूहि महेश्वर ।

महेश्वरः ।

धर्मं यायावराणां तु शृणु भामिनि तत्परा ।
व्रतोपवासशुद्धाङ्गास्तीर्थस्नानपरायणाः ।
धृतिमन्तः क्षमायुक्ताः सत्यव्रतपरायणाः ।
पक्षमासोपवासैश्च कर्शिता धर्मदर्शिनः ।
वर्षशीतातपैरेव कुर्वन्तः परमं तपः ।
कालयोगेन गच्छन्ति शक्रलोकं शुचिस्मिते ।
तत्र ते भोगसंयुक्ता दिव्यगन्धसमन्विताः ।
दिव्यभूषणसंयुक्ता विमानवरमास्थिताः ।
विचरन्ति यथाकामं दिव्यस्त्रीगणसंयुताः ।
एतत्ते कथितं देवि भूयः श्रोतुं किमिच्छसि ।

उमा ।

तेषां चक्रचराणां तु धर्ममिच्छामि वै प्रभो ।

महेश्वरः ।

हन्त ते कथयिष्यामि शृणु शाकटिकं शुभे ।
संवहन्तो धुरं दारैः शाकटानां तु सर्वदा ।
प्रार्थयन्ते यथा ग्राम्याः शकटैर्भैक्षचर्यया ।
तपोर्जनपराधीनास्तपसा क्षीणकल्मषाः ।
पर्यटन्तो दिशः सर्वाः कामक्रोधविवर्जिताः ।
स्ववशादेव ते मृत्युमभिकाङ्क्षन्ति नित्यशः ।
इन्द्रलोके तथा तेषां निर्मिता भोगसंचयाः ।
अमरैः सह ते यान्ति देववद्भोगसंयुताः ।
वराप्सरोभिः संयुक्ताश्चिरकालमनिन्दिते ।
तेनैव कालयोगेन त्रिदिवं यान्ति शोभने ।
तत्र प्रमुदिता भोगैर्विचरन्ति यथासुखम् ।
एतत्ते कथितं देवि किं भूयः श्रोतुमिच्छसि ।

उमा ।

वैखानसानां वै धर्मं श्रोतुमिच्छाम्यहं प्रभो ।

महेश्वरः ।

तेषु वैखानसा नाम वानप्रस्थाः शुभेक्षणे ।
तीव्रेण तपसा युक्ता दीप्तिमन्तः स्वतेजसा ।
सत्यव्रतपराधीनास्तेषां निष्कल्मषं तपः ।
अश्मकुट्टास्तथान्ये च दन्तोलूखलिनस्तथा ।

---

नरो ). $T_3$ सहस्राणि चतुर्दश ( for the post. half ). — $G_2$ om. ( hapl. ) lines 666–669. — ( L. 670 ) $G_2$ देव- ( for नाग- ). — ( L. 671 ) $T_1$ स्व- ( for च ). — ( L. 672 ) $D_{10}$ $T_{2.3}$ G तत्र ( for तेषु ). $D_{10}$ $T_{2.3}$ G $M_3$ तत्तद्भोग-; $T_1$ तत्र भोग- ( for तद्वद्भोग- ). — $T_1$ $G_3$ om. the ref. — After the ref., M ins. :

भगवन्देवदेवेश ऋषीणां चरितं श्रुतम् ।

— ( L. 676 ) T येषां; $M_{1-3}$ तेषां ( for एषां ). $G_2$ एषा-मयावराणां तु ( for the prior half ). $G_{1.3}$ वेदितुं ( for मानद ). — After line 676, $T_1$ ins. :

वेदितुं देवदेवेश सदा सद्वृतशालिनाम् ।

— $T_1$ M om. line 677. — ( L. 678 ) $D_{10}$ त्वं; $G_2$ च ( for तु ). $T_3$ धर्मं यथा वराणां त्वं ( for the prior half ). — ( L. 679 ) $T_2$ तीर्थस्थान- ( for °स्नान- ). — $D_{10}$ $G_4$ om. ( hapl. ) line 680. — ( L. 680 ) $M_{1-3}$ स्मृतिमंतः ( for धृति° ). — ( L. 682 ) $D_{10}$ $T_2$ $G_4$ वर्षैः ( for वर्ष- ). — ( L. 684 ) $M_{1-3}$ transp. तत्र and ते. — ( L. 685 ) $D_{10}$ $T_{2.3}$ G $M_4$ विमानवरसंयु( $T_3$ °म )ताः ( for the post. half ). — $D_{10}$ $G_3$ om. ( hapl. ) line 686. — ( L. 686 ) M -सेविताः ( for -संयुताः ). — ( L. 687 ) $D_{10}$ T $G_{1-4}$ किं भूयः श्रोतुमिच्छसि ( for the post. half ). — ( L. 688 ) $D_{10}$ $G_{2.4}$ च ( for तु ). — After line 688, $T_1$ ins. :

विज्ञातुं देवदेवेश भवद्वचनवर्णितम् ।

— $D_{10}$ महादेवः; $G_2$ शिवः ( for महेश्वरः ). — ( L. 689 ) $T_{2.3}$ एतत् ( for हन्त ). — ( L. 690 ) T G शकटानां ( for शा° ). $M_{1-3}$ अतापसाः; $M_4$ तु सर्वथा ( for तु सर्वदा ). — ( L. 691 ) $T_{2.3}$ $G_{3.4}$ -कालं; $G_1$ damaged ( for ग्राम्याः ). $D_{10}$ $G_2$ प्रार्थयंतो यथाकालं ( for the prior half ). — ( L. 692 ) $T_3$ M तपोर्चनपरा धीरास्; $G_{1.3}$ °र्चन-परा वीरास् ( for the prior half ). — $D_{10}$ T G om. lines 694–697. M om. lines 698–699. $T_1$ om. line 700. $M_4$ om. ( hapl. ) lines 701–716. — ( L. 701 ) $G_{1.3}$ शिव ( for प्रभो ). — $T_1$ महेशः ( for महेश्वरः ) — ( L. 702 ) $D_{10}$ $T_{2.3}$ G $M_3$ ते वै; $T_1$ ते तु ( for तेषु ). — ( L. 704 ) $D_{10}$ $T_3$ $G_{1.2}$ $M_{2.3}$ -परा धीरास ( for -पराधीनास् ). $T_1$ येषां ( for तेषां ). — ( L. 705 ) $T_2$ transp. [अ]न्ये and च. — ( L. 706 ) $D_{10}$ $T_2$ $G_{1-3}$ उंछवृत्ति( $T_3$ °त्ता )स्; $G_4$ उंछवृत्त्यम् ( for °यान्ति ). — ( L. 707 ) $D_{10}$ T G -वृत्तयस् ( for -अलिनस ). $G_1$ आश्रिताः ( for आस्थिताः ). — $D_{10}$ $T_1$ $M_3$ om. ( hapl. ) line 709. — ( L. 709 ) $T_3$ वि- ( for सं- ). — After line 710,

शीर्णपर्णाशिनश्चान्ये उञ्छयन्ति तथापरे ।
कपोतव्रतिनश्चान्ये कापोतीं वृत्तिमाश्रिताः ।
पशुप्रचारनिरताः फेनपाश्च तथापरे ।
मृगवन्मृगचर्यायां संचरन्ति तथापरे ।
अब्भक्षा वायुभक्षाश्च निराहारास्तथैव च ।
संचरन्ति तपो घोरं व्याधिमृत्युविवर्जिताः ।
स्ववशादेव ते मृत्युमभिकाङ्क्षन्ति नित्यशः ।
इन्द्रलोके तथा तेषां निर्मिता भोगसंचयाः ।
अमरैः सह ते यान्ति देववद्भोगसंयुताः ।
वराप्सरोभिः संयुक्ताश्चिरकालमनिन्दिते ।
एतत्ते कथितं देवि किं भूयः श्रोतुमिच्छसि ।

उमा ।

भगवञ्श्रोतुमिच्छामि वालखिल्यांस्तपोधनान् ।

महेश्वरः ।

धर्मचर्यां तथा देवि वालखिल्यगतां शृणु ।
मृगनिर्मोकवसना निर्द्वंद्वास्ते तपोधनाः ।
अङ्गुष्ठमात्राः सुश्रोणि स्वेष्वेवाङ्गेषु संयुताः ।
ते मृत्युविषयातीतास्तपःसिद्धास्तपोबलाः ।
जिताहारा जितक्रोधाः सर्वभोगेषु निःस्पृहाः ।
तपश्चरणमिच्छन्तो लोकार्थं परमोद्यताः ।
उद्यन्तं सततं सूर्यं स्तुवन्तो विविधैः स्तवैः ।
भास्करस्यैव किरणैः सह संयान्ति नित्यदा ।
द्योतयन्ते दिशः सर्वा धर्मज्ञाः सत्यवादिनः ।
तेष्वेव निर्मलं सत्यं लोकार्थं तु प्रतिष्ठितम् ।
लोकोऽयं धार्यते देवि तेषामेव तपोबलात् ।
महात्मनां तु तपसा सत्येन च शुचिस्मिते ।
क्षमया च महाभागे भूतानां संस्थितिं विदुः ।
प्रजार्थमपि लोकार्थं महद्भिः क्रियते तपः ।
तपसा प्राप्यते सर्वं तपसा प्राप्यते फलम् ।
दुष्प्रापमपि यल्लोके तपसा प्राप्यते हि तत् ।
पञ्चभूतस्थितिश्चैव लोकसृष्टिविवर्धनम् ।
एतत्सर्वं समासेन तपोयोगाद्विनिर्मितम् ।
तस्मादयं ऋषिगणस्तपस्तेप इति प्रिये ।
धर्मान्वेषी तपः कर्तुं यतते सततं प्रिये ।
अमरत्वं वशित्वं च तपसा प्रार्थयेत्सदा ।
एतत्ते कथितं सर्वं शृण्वन्त्यास्ते श्रुतं प्रिये ।
प्रियार्थमृषिसंघस्य लोकानां हितकाम्यया ।

नारदः ।

इति ब्रुवन्तं देवेशमृषयश्चापि तुष्टुवुः ।
भूयः परमकं यत्नं तदाप्रभृति चक्रिरे ।

Colophon.

उमा ।

उक्तस्त्वया त्रिवर्गस्य धर्मः परमकः शुभः ।
सर्वव्यापी तु यो धर्मो भगवंस्तद्ब्रवीहि मे ।

महेश्वरः ।

ब्राह्मणा लोकसंसारे सृष्टा धात्रा गुणार्थिना ।
लोकांस्तारयितुं युक्ता मर्त्येषु क्षितिदेवताः ।
तेषु तावत्प्रवक्ष्यामि धर्मं शुभफलोदयम् ।

---

$D_{10}$ $T_{2,3}$ G ins. :

केचिच्चरन्ति तद्विष्णोः पादपूजनमुत्तमम् ।
[ $D_{10}$ $T_3$ $G_{2,4}$ सद्विष्णोः ( for त° ). ]

— $T_1$ om. line 711. — ( L. 711 ) $T_2$ घोरा ( for घोरं ). — ( L. 712 ) $T_2$ $G_{2,3}$ भीपयंति च नित्यशः ( for the post. half ). — ( L. 713 ) $T_3$ इति; $G_3$ इष्ट- ( for इन्द्र- ). — ( L. 714 ) $D_{10}$ $T_{2,3}$ G समतां ( for सह ते ). — ( L. 716 ) $D_{10}$ $G_4$ एवं ( for एतत् ). $G_2$ भूयः श्रोतुं किमिच्छसि ( for the post. half ). — $T_1$ महेशः ( for महेश्वरः ). — $T_1$ om. line 718. — ( L. 720 ) $D_{10}$ S ( except $M_{1-3}$ ) तेषु ( for स्वेषु ). $G_{1-3}$ संश्रिताः ( for संयुताः ). — $D_{10}$ S ( except $M_{1-3}$ ) om. lines 722–723. — ( L. 725 ) $D_{10}$ $T_{2,3}$ G सहसा ( for सह सं- ). — ( L. 726 ) $D_{10}$ S ( except $M_{1-3}$ ) द्योतयंतो ( for °यन्ते ). — $T_1$ om. lines 727 and 729–730. — ( L. 733 ) $T_1$ महत् ( for हि तत् ). — $T_1$ om. lines 734–735. — ( L. 734 ) $D_{10}$ $T_2$ G पंचभूतार्थतत्त्वेन ( $D_{10}$ $G_2$ °त्त्वे च ) ( for the prior half ). $T_3$ -विवर्धनः ( for °नम् ). — ( L. 735 ) $T_2$ अनिंदिते ( for विनिर्मितम् ). — ( L. 736 ) $T_1$ तपस्तप्त इति स्मृतः ( for the post. half ). — $D_{10}$ $T_3$ $G_4$ om. ( hapl. ) lines 737–739. — ( L. 738 ) $T_2$ $G_{1-3}$ शिवत्वं ( for वशित्वं ). $T_1$ $G_{1-3}$ प्रापयेत्; $T_2$ प्राप्यते ( for प्रार्थयेत् ). — ( L. 739 ) $T_1$ देवि ( for सर्वं ). $T_1$ om. the post. half and the prior half of line 740. — ( L. 740 ) $D_{10}$ $T_{2,3}$ G प्रजानां ( for लोकानां ). — $G_2$ om. the ref. — ( L. 741 ) $D_{10}$ $T_{2,3}$ $G_4$ $M_1$ एवं ( for इति ). $T_1$ [अ]भि- ( for [अ]पि ). — ( L. 742 ) $M_3$ परतरं ( for °मकं ). $D_{10}$ $T_{2,3}$ G भूयः परतरं यत्तु ( for the prior half ). — Colophon. *Sub-parvan* : M दानधर्म. — *Adhy. name* : $D_{10}$ $T_{2,3}$ $G_2$ उमामहेश्वरसंवादे वालखिल्यचरितं; M उमामहेश्वरसंवादः. — *Adhy.* no. : $D_{10}$ $T_{2,3}$ $G_{2,4}$ 193; $T_1$ $M_4$ 186; $G_{1,3}$ $M_1$ 187; $M_{2,3}$ 188. — $M_4$ om. lines 743–749. — ( L. 743 ) $D_{10}$ $T_3$ $G_4$ च परमः ( for परमकः ). $M_{1-3}$ शिवः ( for शुभः ). $G_2$ धर्मश्च परमं शुभं ( for the post. half ). — $D_{10}$ $T_3$ $G_2$ [इ]ति ( for तु ). $D_{10}$ $G_{1,2,4}$

ब्राह्मणेष्वभयो धर्मः परमः शुभलक्षणः ।
इमे हि धर्मा लोकार्थं पूर्वं सृष्टाः स्वयंभुवा ।
पृथिव्यां सज्जनैर्नित्यं कीर्त्यमानं निबोध मे ।
स्वदारनिरतिर्धर्मो नित्यं जप्यं तथैव च ।
सर्वातिथ्यं त्रिवर्गस्य यथाशक्ति दिवानिशम् ।
शूद्रो धर्मपरो नित्यं शुश्रूषाभिमना भवेत् ।
त्रैविद्यो ब्राह्मणो वृद्धो न चाध्ययनजीवकः ।
त्रिवर्गं तु व्यतिक्रान्तस्तस्य धर्मः सनातनः ।
षट् कर्माणि च प्रोक्तानि सृष्टानि ब्रह्मणा पुरा ।
धर्मिष्ठानि वरिष्ठानि यानि तानि शृणूत्तमे ।
यजनं याजनं चैव दानं पात्रे प्रतिग्रहः ।
अध्यापनमध्ययनं षट्कर्मा धर्मभाग्द्विजः ।
नित्यस्वाध्यायतो धर्मो नित्ययज्ञः सनातनः ।
दानं प्रशस्यते नित्यं ब्राह्मणेषु त्रिकर्मसु ।
अयं परमको धर्मः संवृत्तः सत्सु विद्यते ।
गर्भस्थाने विशुद्धानां धर्मस्य नियमो महान् ।
पञ्चयज्ञविशुद्धात्मा क्रतुनित्योऽनसूयकः ।
दान्तो ब्राह्मणसत्कर्ता सुसंमृष्टनिवेशनः ।
चक्षुर्दो मनदो जिह्वास्निग्धवर्णप्रदः सदा ।
अतिथ्यभ्यागतरतः शेषान्नकृतभोजनः ।
पाद्यमर्घ्यं यथान्यायमासनं शयनं तथा ।
दीपं प्रतिश्रयं चैव यो ददाति स धार्मिकः ।
प्रातरुत्थाय वै पश्चाद्भोजनेन निमन्त्रयेत् ।
सत्कृत्यानुव्रजेद्यश्च तस्य धर्मः सनातनः ।
प्रवृत्तिलक्षणो धर्मो गृहस्थेषु विधीयते ।
तदहं कीर्तयिष्यामि त्रिवर्गेषु च यद्यथा ।
एकेनांशेन धर्मोऽर्थः कर्तव्यो हितमिच्छता ।
एकेनांशेन कामार्थमेकमंशं विवर्धयेत् ।
निवृत्तिलक्षणः पुण्यो धर्मो मोक्षे विधीयते ।
तस्य वृत्तिं प्रवक्ष्यामि तां शृणुष्व समाहिता ।
सर्वभूतदया धर्मो निवृत्तिपरमः सदा ।
बुभुक्षितं पिपासार्तमतिथिं श्रान्तमागतम् ।
अर्चयन्ति वरारोहे तेषामपि फलं महत् ।
पात्रमित्येव दातव्यं सर्वस्मै धर्मकाङ्क्षिभिः ।
आगमिष्यति यत्पात्रं तत्पात्रं तारयिष्यति ।
काले संप्राप्तमतिथिं भोक्तुकाममुपस्थितम् ।

---

$G_{2.4}$ तद्ब्र )वीतु ; $M_{1.8}$ तं ( $M_8$ त्वं ) ब्रवीहि ( for तद्ब्र° ). T $G_3$ भगवांस्तद्ब्र( $G_3$ °स्त्वं ब्र )वीतु मे ( for the post. half ). — $T_1$ महेशः ( for °श्वरः ). — ( L. 745 ) $T_{2.8}$ $G_{3.4}$ यात्रा ( for धात्रा ). $T_1$ गुणान्विताः ; $T_2$ °र्थिनः ( for °र्थिना ). — ( L. 746 ) $T_1$ धारयितुं ( for ता° ). — $T_1$ om. line 748. — ( L. 748 ) $T_2$ [ए]व यो ; $T_8$ [इ]ह यो ; $G_1$ [आ]ह यो ; $M_{1-8}$ [इ]व यो ( for [अ]भयो ). $G_3$ ब्राह्मणेष्वाह यो धर्मं ( for the prior half ). — ( L. 749 ) $D_{10}$ $T_{2.8}$ च ( for हि ). $T_1$ इमे च धर्मसिद्ध्यर्थं ( for the prior half ). — ( L. 750 ) $D_{10}$ $T_2$ $G_{2.4}$ साद्भिजैर् ( for सज्जनैर् ). — ( L. 751 ) $T_8$ नित्यतृप्तिश्च ( for नित्यं जप्यं ). — $T_1$ om. lines 753–755. — ( L. 754 ) $D_{10}$ -जीविकः ( for -जीवकः ). $G_1$ तथाध्ययनजप्यकः ( for the post. half ). — ( L. 755 ) $G_3$ $M_{1.4}$ व्यतिक्रांतं ( for °क्रान्तस् ). $D_{10}$ $T_{2.8}$ $G_{1.8.4}$ त्रिवर्गस्य व्यतिक्रांतं ( for the prior half ). $M_8$ यस्य ( for तस्य ). — ( L. 756 ) $D_{10}$ हि ( for च ). $T_1$ विप्रेषु ( for प्रोक्तानि ). $T_1$ प्रोक्तानि ( for सृष्टानि ). — $T_1$ om. line 757. — ( L. 757 ) $G_2$ धर्मतीर्थवरिष्ठानि ( for the prior half ). $D_{10}$ $T_{2.8}$ G तानि ( for यानि ). — ( L. 759 ) $M_4$ om. the prior half. $T_{1.2}$ $G_4$ चाध्ययनं ; $G_{1-3}$ द्याध्य° ( for अध्य° ). $T_1$ सुवृत्तो वेदलक्षणः ( for the post. half ). — ( L. 760 ) $G_{1-3}$ नित्यः ( for नित्य- ). — ( L. 761 ) $D_{10}$ $T_3$ G प्रशंसते ( for प्रशस्यते ). — $T_1$ om. line 762. — ( L. 762 ) $D_{10}$ $T_{2.3}$ G एष परो ( for परमको ). — ( L. 763 ) $T_1$ गर्भस्थान- ( for °स्थाने ). $T_1$ धर्मः स ( for धर्मस्य ). — $T_1$ om. lines 764 and 766. — ( L. 766 ) $D_{10}$ $T_{2.3}$ G चक्षुःश्रोत्रम( $T_{2.8}$ °त्रं म )नोजिह्वा- ( for the prior half ). — ( L. 767 ) $G_2$ आतिथ्यभागनिरतः ( for the prior half ). — $T_1$ om. line 768. — ( L. 769 ) $T_1$ नित्यं दद्यात्समाहितः ( for the post. half ). — ( L. 770 ) $T_1$ सततं ( for वै पश्चाद् ). $D_{10}$ $T_{2.8}$ $G_4$ भोजने तु ( for °नेन ). — After line 770, $T_1$ ins. :

कृषिगोरक्ष्यवाणिज्यं पाशुपाल्यं तथैव च ।
सर्वातिथ्यं परो धर्मः प्रोक्तो वैश्यस्य नित्यशः ।
शुश्रूषापरमः शूद्र इति वेदविदो विदुः ।

— $T_1$ om. line 771. — ( L. 771 ) $T_8$ तु ( for च ). $G_3$ एकमंशं विवर्जयेत् ( for the post. half ). — ( L. 772 ) $G_3$ निवृत्तिलक्षणः पुण्यो ( for the prior half ) and धर्मो मोक्षो ( for गृहस्थेषु ). — $T_1$ om. lines 773–774. $M_1$ om. line 773. — ( L. 773 ) $G_2$ फलं तथा ( for च यद्यथा ). — ( L. 774 ) G धर्मार्थः ; $M_2$ ( *sup. lin.* ) धर्मोय ( for धर्मोऽर्थः ). — ( L. 775 ) $D_{10}$ $T_3$ कर्मार्थम् ; $T_1$ धर्मा° ( for कामा° ). — ( L. 776 ) $T_1$ धर्मो ( for पुण्यो ). $M_{2.3}$ मोक्षो ( for मोक्षे ). — $M_{1-8}$ transp. lines 777 and 778. — ( L. 778 ) $D_{10}$ $T_{2.3}$ $G_{1-3}$ निवृत्तिः ( for °त्ति- ). $T_1$ निवृत्तिपरमस्य तु ( for the post. half ). — After line 778, $T_1$ ins. :

आत्मन्येवात्मनो भावं समायोजेत संयतः ।
आत्मभूतो यताहारो मोक्षदृष्टेन कर्मणा ।
पवित्रनित्यो शुक्लश्च तस्य धर्मः सनातनः ।
साधारणं तथा धर्मं प्रवक्ष्यामि शुभानने ।

—( L. 780 ) $T_1$ अर्चयिष्यन्ति ये नित्यं ( for the prior half ).

चित्तं संभावयेत्तत्र व्यासोऽयं समुपस्थितः ।
तस्य पूजां यथाशक्ति सौम्यचित्तः प्रयोजयेत् ।
चित्तमूलो भवेद्धर्मो धर्ममूलं भवेद्यशः ।
तस्मात्सौम्येन चित्तेन दातव्यं देवि सर्वदा ।
सौम्यचित्तस्तु यो दद्यात्तद्धि दानमनुत्तमम् ।
यथाम्बुबिन्दुभिः सूक्ष्मैः पतद्भिर्मेदिनीतले ।
केदाराश्च तटाकानि सरांसि सरितस्तथा ।
तोयपूर्णानि दृश्यन्ते अप्रतर्क्याणि शोभने ।
अल्पमल्पमपि ह्येतद्दीयमानं विवर्धते ।
पीडयापि च भृत्यानां दानमेव विशिष्यते ।
पुत्रदारा धनं धान्यं न मृताननुगच्छति ।
श्रेयो दानं च भोगश्च धनं प्राप्य यशस्विनि ।
दानेन हि महाभागा भवन्ति मनुजाधिपाः ।
नास्ति भूमिसमं दानं नास्ति दानसमो निधिः ।
नास्ति सत्यात्परो धर्मो नानृतात्पातकं परम् ।
आश्रमे यस्तु तप्येत तपोमूलफलाशनः ।
आदित्याभिमुखो भूत्वा जटावल्कलसंवृतः ।
मण्डूकशायी हेमन्ते ग्रीष्मे पञ्चतपा भवेत् ।
सम्यक्तपश्चरन्तीह श्रद्दधाना वनाश्रमे ।
गृहाश्रमस्य ते देवि कलां नार्हन्ति षोडशीम् ।

उमा ।

गृहाश्रमस्य या चर्या व्रतानि नियमाश्च ये ।
यथा च देवताः पूज्याः सततं गृहमेधिना ।
यद्यच्च परिहर्तव्यं गृहिणा तिथिपर्वसु ।
तत्सर्वं श्रोतुमिच्छामि कथ्यमानं त्वया प्रभो ।

महेश्वरः ।

गृहाश्रमस्य यन्मूलं फलं धर्मोऽयमुत्तमः ।
पादैश्चतुर्भिः सततं धर्मो यत्र प्रतिष्ठितः ।
सारभूतं वरारोहे दध्नो घृतमिवोद्धृतम् ।
तदहं ते प्रवक्ष्यामि श्रूयतां धर्मचारिणि ।
शुश्रूषते यः पितरः मातरं च गृहाश्रमे ।
भर्तारं चैव या नारी अग्निहोत्रं च ये द्विजाः ।
तेषु तेषु च प्रीणन्ति देवा इन्द्रपुरोगमाः ।
पितरः पितृलोकस्थाः स्वधर्मेण स रज्यते ।

उमा ।

मातापितृवियुक्तानां का चर्या गृहमेधिनाम् ।
विधवानां च नारीणां भवानेतद्ब्रवीतु मे ।

महेश्वरः ।

देवतातिथिशुश्रूषा गुरुवृद्धाभिवादनम् ।
अहिंसा सर्वभूतानामलोभः सत्यसंधता ।
ब्रह्मचर्यं शरण्यत्वं शौचं पूर्वाभिभाषणम् ।
कृतज्ञत्वमपैशुन्यं सततं धर्मशीलता ।
दिने द्विरभिषेकं च पितृदैवतपूजनम् ।
गवाह्निकप्रदानं च संविभागोऽतिथिष्वपि ।
दीपं प्रतिश्रयं चैव दद्यात्पाद्यासनं तथा ।
पञ्चमेऽहनि षष्ठे वा द्वादशे वाप्यथाष्टमे ।
चतुर्दशे पञ्चदशे ब्रह्मचारी सदा भवेत् ।
श्मश्रुकर्म शिरोभ्यङ्गमञ्जनं दन्तधावनम् ।

— $T_1$ om. lines 782–785. — ( L. 783 ) $D_{10}$ $G_{2,4}$ काल- ( for काले ). $G_4$ अव- ( for उप- ). — ( L. 784 ) $D_{10}$ $T_{2,3}$ G यस्तं ( for चित्तं ). $M_{1,2}$ ( *sup. lin* ), 3 तस्य ( for तत्र ). $M_{1-3}$ व्यासोयमिति निश्चितः ( for the post. half ). — ( L. 785 ) $D_{10}$ $T_{2,3}$ G यथाशक्त्या ( for °शक्ति ). — ( L. 786 ) $D_{10}$ वेत्ति ; $T_3$ $G_4$ वित्त- ( for चित्त- ). $T_1$ $M_4$ -मूलं ( for -मूलो ). $T_2$ $G_2$ -मूलो ( for -मूलं ). — ( L. 787 ) S ( except $T_2$ $G_4$ ) सर्वथा ( for °दा ). — ( L. 788 ) $T_2$ धर्म- ( for ताद्धि ). — ( L. 791 ) $D_{10}$ $T_2$ $G_{1,2}$ अ( $G_1$ ह्य )प्रतर्क्योतिशोभने ; $T_3$ $G_{3,4}$ ह्यप्रतर्क्याणि शोभने ( for the post. half ). — ( L. 792 ) $D_{10}$ $T_{2,3}$ G [ए]कं ( for [ए]तद् ). — $T_1$ om. ( hapl. ) line 793. — ( L. 793 ) $D_{10}$ $G_4$ transp. [अ]पि and च. $T_3$ भूतानां ( for भृत्यानां ). — ( L. 794 ) $D_{10}$ T G पुत्र-दार- ( for °दारा ). — $T_1$ om. line 795. — ( L. 796 ) $T_1$ दानेन मनुजा भुवि ( for the post half ). — ( L. 797 ) $D_{10}$ $T_{2,3}$ G नास्ति भूमौ दानसमं ( for the prior half ). — Line 798 = 12. 156. $24^{ab}$. — $T_1$ om. lines 799–801. — ( L. 802 ) $T_1$ तपश्चरंति ये सम्यक् ( for the prior half ). — ( L. 807 ) $D_{10}$ $T_{1,2}$ $G_{1,3,4}$ विभो ; $G_2$ [अ]नघ ( for प्रभो ). — $T_1$ महेशः ; $G_2$ ईश्वरः ( for महेश्वरः ). — $T_1$ om. lines 809–810. — ( L. 810 ) $D_{10}$ [उ]त्तमं ; $M_4$ [उ]त्थितं ( for [उ]द्धृतम् ). — ( L. 811 ) $T_1$ तम् ( for तद् ). $T_1$ शृणु तावत्समाहिता ( for the post. half ). — After line 811, $G_{1,3}$ ins. :

दंपत्यलंकारिष्णुश्च गृहदानरतिर्नरः ।
कलत्रसौख्यं विन्दन्ति नास्ति तत्र विचारणा ।
स्त्रियो वा पुरुषो वापि दंपतीन्पूजयन्ति ते ।
मनोभिलषितान्कामान्प्राप्नुवन्ति न संशयः ।

— ( L. 812 ) $D_{10}$ शुश्रूषयंते पितरं ( for the prior half ). — ( L. 813 ) $T_1$ नारी च ( for या नारी ). — ( L. 814 ) $T_1$ प्रीतेषु तेषु प्रीणंति ( for the prior half ). — $T_1$ om. line 815. — ( L. 815 ) $G_{1,3}$ हि ; $M_4$ च ( for स ). — $T_1$ महेशः ; $G_3$ om. ( for महेश्वरः ). — ( L. 818 ) $T_1$ गुरुवृद्धानुवंदनं ( for the post. half ). — $M_4$ om. ( hapl. ) lines 819–822. — ( L. 822 ) $D_{10}$ आभिषेकश्च. — $T_1$ om. lines 823–824. — ( L. 823 ) $T_2$ माध्यह्निक- ( for गवा° ). — ( L. 825 ) $D_{10}$ $T_{2,3}$ G द्वादशेप्यष्टमेथ

नैतेष्वहःसु कुर्वीत तेष्वलक्ष्मीः प्रतिष्ठिता ।
व्रतोपवासनियमस्तपो दानं च शक्तितः ।
भरणं भृत्यवर्गस्य दीनानामनुकम्पनम् ।
परदारनिवृत्तिश्च स्वदारेषु रतिः सदा ।
शरीरमेकं दंपत्योर्विधात्रा पूर्वनिर्मितम् ।
तस्मात्स्वदारनिरतो ब्रह्मचारी विधीयते ।
शीलवृत्तविनीतस्य निगृहीतेन्द्रियस्य च ।
आर्जवे वर्तमानस्य सर्वभूतहितैषिणः ।
प्रियातिथेश्च क्षान्तस्य धर्मार्जितधनस्य च ।
गृहाश्रमपदस्थस्य किमन्यैः कृत्यमाश्रमैः ।
यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः ।
तथा गृहाश्रमं प्राप्य सर्वे जीवन्ति चाश्रमाः ।
राजानः सर्वपाषण्डाः सर्वे रङ्गोपजीविनः ।
व्यालग्राहाश्च दम्भाश्च चोरा राजभटास्तथा ।
सविद्याः सर्वशिल्पज्ञाः सर्वे चैव चिकित्सकाः ।
दूराध्वानं प्रपन्नाश्च क्षीणपथ्योदना नराः ।
एते चान्ये च बहवस्तर्कयन्ति गृहाश्रमम् ।
मार्जारा मूषिकाः श्वानः सूकराश्च शुकास्तथा ।
कपोतकाकचटकाः सरीसृपनिषेविणः ।
अरण्यवासिनश्चान्ये संघा ये मृगपक्षिणाम् ।
एवं बहुविधा देवि लोकेऽस्मिन्सचराचराः ।
गृहे क्षेत्रे बिले चैव शतशोऽथ सहस्रशः ।
गृहस्थेन कृतं कर्म सर्वैस्तैरुपभुज्यते ।
उपयुक्तं च यत्तेषां मतिमान्नानुशोचति ।
धर्म इत्येव संकल्प्य यत्तु तस्य फलं शृणु ।
सर्वयत्नप्रणीतस्य हयमेधस्य यत्फलम् ।
वर्षे स द्वादशे देवि फलेनैतेन युज्यते ।
आशापाशविमोक्षश्च विद्धि धर्ममनुत्तमम् ।
वृक्षमूलचरो नित्यं शून्यागारनिवेशनम् ।
नदीपुलिनशायी च नदीतीरमनुव्रजन् ।
विमुक्तः सर्वसङ्गेभ्यः स्नेहबन्धेन वै द्विजः ।
आत्मन्येवात्मनो भावं समायोज्येह ते वने ।
आत्मभूतो यताहारो मोक्षदृष्टेन कर्मणा ।
पवित्रनित्यो युक्तश्च तस्य धर्मः सनातनः ।
नैकत्र रमते सक्तो न चैकग्रामगोचरः ।
युक्तोऽप्यटति योऽयुक्तो न चैकपुलिनेशयः ।
एष मोक्षविदां धर्मो वेदोक्तः सत्पथे स्थितः ।

Colophon.

उमा ।

देवदेव नमस्तुभ्यं त्रियक्ष वृषभध्वज ।
श्रुतं मे भगवन्सर्वं त्वत्प्रसादान्महेश्वर ।
संगृहीतं मया तच्च तव वाक्यमनुत्तमम् ।
इदानीमस्ति संदेहो मानुषेष्वेव कश्चन ।
तुल्यपाणिशिरःकायो राजायमिति दृश्यते ।

वा ( $T_2$ °मेपि वा ; $T_3$ [ orig. ] °मे तथा ) ( for the post. half ). — ( L. 828 ) $T_3$ $G_{1,2,4}$ लक्ष्मीः ( for [अ]लक्ष्मीः ). — $T_1$ om. line 829. — ( L. 832 ) $T_1$ विधात्रा निर्मितं पुरा ( for the post. half ). — ( L. 833 ) $T_1$ [अ]भि- ( for वि- ). — ( L. 835 ) $G_{1,3}$ आर्जवे यतमानस्य ( for the prior half ). — ( L. 836 ) $T_2$ दांतस्य ( for क्षान्तस्य ). — With lines 838–839, cf. Manu. 6. 90. — ( L. 840 ) $T_1$ चापि ( for सर्व- ). — ( L. 841 ) S ( except $T_3$ $M_3$ ) -ग्रहाश् ( for -ग्राहाश् ). — $T_1$ om. line 842. — ( L. 842 ) $T_2$ $G_{1,3,4}$ $M_4$ -शीलकाः ; $T_3$ -जीवकाः ( for -शिल्पज्ञाः ). $D_{10}$ $G_{2,4}$ वै वि- ( for चैव ). — ( L. 843 ) $D_{10}$ $G_{2-4}$ क्षीणाः ; $G_1$ दीनाः ( for क्षीण- ). $T_1$ क्षीणाः पथ्याशना नराः ( for the post. half ). — ( L. 846 ) $D_{10}$ $T_3$ कपोतकाः कर्कटकाः ; $T_3$ $G_3$ °तकाः काकटकाः ( for the prior half ). $T_1$ om. the post. half and the prior half of line 847. $D_{10}$ $T_{2,3}$ -निषेवणाः ( for °विणः ). — ( L. 847 ) $D_{10}$ $G_3$ ते ( for ये ). — $T_1$ om. line 848. — ( L. 848 ) $D_{10}$ -चरानरे ( for °नराः ). — ( L. 849 ) $T_3$ $G_3$ गृह- ( for गृहे ). $T_1$ तथा चैते ; $M_2$ (orig.) शाले चैव ( for बिले चैव ). $T_2$ गृहे क्षेत्रबिले चैव ; $G_1$ गृहक्षेत्रे शाले चैव ( for the prior half ). $G_1$ om. from ऽोऽथ up to हय ( in line 853 ). — ( L. 850 ) $D_{10}$ T $G_{2-4}$ इह ( for उप- ). $M_4$ -लभ्यते ( for -भुज्यते ). — ( L. 851 ) $T_1$ तथैतेषां ( for च यत्तेषां ). $T_3$ कोनु- ; $G_4$ न तु ( for नानु- ). — ( L. 852 ) T $G_{2-4}$ यस् ( for यत् ). $M_4$ तत्तु ( for तस्य ). — ( L. 853 ) $D_{10}$ $T_3$ $G_{2-4}$ -यज्ञ- ( for -यत्न- ). $D_{10}$ $T_{2,3}$ G -मेधेन ( for -मेधस्य ). — ( L. 854 ) $T_3$ च ; $G_{1,3}$ यद् ( for स ). $T_1$ वर्षे द्वादशके देवि तत्फलेनैव युज्यते. — $T_1$ om. lines 855–857. — ( L. 855 ) $D_{10}$ $T_{2,3}$ G $M_4$ -विमोक्षं ( for °क्षश् ). — ( L. 856 ) $G_{1-3}$ -परो ( for -चरो ). $T_3$ -निवेशनः ( for °शनम् ). — ( L. 858 ) $D_{10}$ $T_{2,3}$ $G_{3,4}$ -बंधेभ्यः ( for -सङ्गेभ्यः ). $T_1$ आशापाशविवर्जितः ( for the post. half ). — $T_1$ om. lines 859–863. — ( L. 859 ) $G_{1,3}$ तेन वै ( for ते वने ). — ( L. 862 ) $T_3$ रक्तो ( for सक्तो ). $T_3$ ( also as above ) न चैकशृङ्गिगोचरः ( for the post. half ). — ( L. 863 ) $D_{10}$ $T_{2,3}$ G न चैकपुलिनाश्रयः ( for the post. half ). — ( L. 864 ) $M_{1-3}$ मोक्षविदो ( for °विदां ). $T_1$ सद्वृत्तो मुच्यते चापि ( for the prior half ). $T_1$ गृहस्थः ( for वेदोक्तः ). — *Colophon. Sub-parvan* : $M_{1-3}$ दानधर्मं. — *Adhy. name* : $D_{10}$ $T_3$ $G_3$ M उमामहेश्वरसंवादः ; $T_3$ उमामहेश्वरसंवादे त्रिवर्गकथनं.

केन कर्मविपाकेन सर्वप्राधान्यमर्हति ।
स चापि दण्डयन्मर्त्यान्भर्त्सयन्विधमन्नपि ।
प्रेत्यभावे कथं लोकाँल्लभते पुण्यकर्मणाम् ।
राजवृत्तमहं तस्माच्छ्रोतुमिच्छामि मानद ।
महेश्वरः ।
तदहं ते प्रवक्ष्यामि राजधर्मं शुभानने ।
राजायत्तं हि तत्सर्वं लोकवृत्तं शुभाशुभम् ।
महतस्तपसो देवि फलं राज्यमिति स्मृतम् ।
तपोदानमयं राज्यं परं स्थानं विधीयते ।
तस्माद्राज्ञः सदा मर्त्याः प्रणमन्ति यतस्ततः ।
न्यायतस्त्वं महाभागे श्रोतुकामासि भामिनि ।
तस्मात्तस्यैव चरितं जगत्पथ्यं शृणु प्रिये ।
अराजके पुरा त्वासीत्प्रजानां संकुलं महत् ।
तद्दृष्ट्वा संकुलं ब्रह्मा मनुं राज्ये न्यवेशयत् ।
तदाप्रभृति संदृष्टं राज्ञां वृत्तं शुभाशुभम् ।
तन्मे शृणु वरारोहे तस्य पथ्यं जगद्धितम् ।
यथा प्रेत्य लभेत्स्वर्गं यथा वीर्यं यशस्तथा ।
पित्र्यं वा भूतपूर्वं वा स्वयमुत्पाद्य वा पुनः ।
राजधर्ममनुष्ठाय विधिवद्भोक्तुमर्हति ।
आत्मानमेव प्रथमं विनयैरुपपादयेत् ।
अनु भृत्यान्प्रजाः पश्चादित्येष विनयक्रमः ।
स्वामिनं चोपमां कृत्वा प्रजास्तद्वृत्तकाङ्क्षया ।
स्वयं विनयसंपन्ना भवन्तीह शुभेक्षणे ।
तस्मात्पूर्वतरं राजा आत्मानं विनये नयेत् ।
यो विनीतः स्वयं राजा विनयत्येव वै प्रजाः ।
अपहास्यो भवेत्तादृक्स्वदोषस्यानवेक्षणात् ।
विद्याभ्यासैर्वृद्धयोगैरात्मानं विनयं नयेत् ।
विद्या धर्मार्थफलिनी तद्विदो वृद्धसंज्ञिताः ।
इन्द्रियाणां जयो देवि अत ऊर्ध्वमुदाहृतम् ।
अजये सुमहान्दोषो राजानं विनिपातयेत् ।
पञ्चैव स्ववशान्कृत्वा तदर्थान्पञ्च शोषयेत् ।
षडुत्सृज्य यथायोगं ज्ञानेन विनयेन च ।
शास्त्रचक्षुर्नयपरो भूत्वा भृत्यान्समाहरेत् ।
वृत्तश्रुतकुलोपेतानुपधाभिः परीक्षितान् ।
अमात्यानुपधातीतान्सापसर्पाञ्जितेन्द्रियान् ।
योजयेत यथायोगं यथार्हं स्वेषु कर्मसु ।
अमात्या बुद्धिसंपन्ना राष्ट्रं बहुजनप्रियम् ।
दुराधर्षं पुरश्रेष्ठं कोशः कृच्छ्रसहः स्मृतः ।
अनुरक्तं बलं सारमद्वैधं मित्रमेव च ।
एताः प्रकृतयः षट् च स्वामी च नयतत्त्ववित् ।
प्रजानां रक्षणार्थाय सर्वमेतद्विनिर्मितम् ।
आभिः करणभूताभिः कुर्याल्लोकहितं नृपः ।
आत्मरक्षा नृपेन्द्रस्य प्रजारक्षार्थमिष्यते ।
तस्मात्सततमात्मानं संरक्षेदप्रमादवान् ।
भोजनाच्छादनात्स्नानाद्बहिर्निष्क्रमणादपि ।
नित्यं स्त्रीगणसंयोगाद्रक्षेदात्मानमात्मवान् ।
स्वेभ्यश्चैव परेभ्यश्च शस्त्रादपि विषादपि ।
सततं पुत्रदारेभ्यो रक्षेदात्मानमात्मवान् ।
सर्वेभ्य एव स्थानेभ्यो रक्षेदात्मानमात्मवान् ।
प्रजानां रक्षणार्थाय प्रजाहितकरो भवेत् ।

— *Adhy. no.* : $D_{10}$ $T_{2.3}$ $G_{2.4}$ 194 ; $T_1$ $M_4$ 187 ; $G_{1.3}$ $M_1$ 188 ; $M_{2.3}$ 189. — ( L. 865 ) $T_1$ महादेवं ( for नमस्तुभ्यं ). $T_1$ त्रिनेत्र ; $T_2$ $G_3$ त्र्यक्ष भो ; $G_1$ त्र्यक्षर ( for त्रियक्ष ). — $T_1$ om. lines 866–867. — ( L. 868 ) $G_{1.3}$ मनुष्येषु ( for मानुषेषु ). $D_{10}$ T G [इ]ह ( for [ए]-व ). — ( L. 869 ) S ( except $M_{1-3}$ ) -प्राण- ( for -पाणि- ). $T_1$ -शिरःस्नायू ( for -शिरःकायो ). — $G_2$ om. lines 870–873. — ( L. 871 ) $T_1$ सदा ( for स च ). $D_{10}$ दंडवान् ( for °यन् ). $D_{10}$ $T_{2.3}$ $G_4$ विविधान् ( for विधमन् ). — ( L. 872 ) $G_3$ $M_{1-3}$ -कर्मणा ( for °णाम् ). — $G_{1-3}$ om. the ref. $T_1$ महेशः ( for °श्वरः ). — ( L. 874 ) $T_1$ सनातनं ( for शुभानने ). — ( L. 875 ) $D_{10}$ यत् ( for तत् ). — $T_1$ om. lines 876–879. — ( L. 877 ) $T_2$ तपोदानमयारंभं ( for the prior half ). — ( L. 879 ) $D_{10}$ श्रोतुमिच्छासि भामिनि ( for the post. half ). — With lines 881–882, cf. Manu. 7. 3. — ( L. 882 ) $T_{2.3}$ $G_{1.3.4}$ $M_{1.2.4}$ तं ( for तद् ). $D_{10}$ $G_{2.4}$ न्यवेदयत् ( for °शयत् ). — ( L. 892 ) $T_{2.3}$ $G_{2-4}$ स्वसात् ( for त° ). $D_{10}$ $T_{2.3}$ G विनयत्येव वै ( $G_4$ ते ) प्रजाः ; $M_{1-3}$ त्वात्मानं विनयं नयेत् ( for the post. half ). — $D_{10}$ T G om. line 893. $M_1$ om. ( hapl. ) lines 893–895. — ( L. 894 ) $M_{2.3}$ [अ]नपेक्षणात् ( for [अ]नवे° ). — ( L. 897 ) $D_{10}$ $T_2$ G उदाहृतः ( for °हृतम् ). — ( L. 899 ) $D_{10}$ $T_{2.3}$ G स्ववशे ( for °शान् ). — ( L. 900 ) $D_{10}$ -योगाद् ( for -योगं ). — ( L. 901 ) $T_3$ समाचरेत् ( for °हरेत् ). — ( L. 903 ) $D_{10}$ $T_{2.3}$ $G_{1-3}$ सोपसर्पा( $T_2$ $G_2$ °र्पां )ञ् ( for साप° ). — ( L. 904 ) $T_{2.3}$ तथायोगं ( for यथा° ). — ( L. 905 ) $G_2$ अमात्यान्बुद्धिसंपन्नान् ( for the prior half ). — ( L. 906 ) $G_{1.3}$ पुरं ; $G_2$ वरं ( for पुर- ). $G_4$ कृच्छ्रतरः ( for °सहः ). $T_2$ कोशाः कृच्छ्रसहाः स्मृताः ( for the post. half ). — ( L. 907 ) $D_{10}$ $T_{2.3}$ G $M_4$ साम्नाम् ( for सारम् ). G मंत्रम् ( for मित्रम् ). — ( L. 908 ) $D_{10}$ $T_{2.3}$ G $M_4$ स्वेषु ( for षट् च ). $D_{10}$ $T_3$ G विनय- ; $T_2$ विषय- ( for च नय- ). — ( L. 911 ) $T_{2.3}$ G $M_4$ नरेंद्रस्य ( for नृपेन्द्रस्य ). — ( L. 913 ) $T_{2.3}$ भोजनाच्छादनस्नानाद् ( for the prior half ). — ( L. 917 ) After

प्रजाकार्यं तु तत्कार्यं प्रजासौख्यं तु तत्सुखम् ।
प्रजाप्रियं प्रियं तस्य स्वहितं हि प्रजाहितम् ।
प्रजार्थं तस्य सर्वस्वमात्मार्थं न विधीयते ।
प्रकृतीनां विवादार्थं रागद्वेषौ व्युदस्य च ।
उभयोः पक्षयोर्वादं श्रुत्वा चैव यथातथम् ।
तमर्थं विमृशेद्बुद्ध्या स्वयमा तत्त्वदर्शनात् ।
तद्विद्भिर्बहुभिर्वृद्धैः सहासीनो नरोत्तमैः ।
कर्तारमपराधं च देशकालौ नयानयौ ।
ज्ञात्वा सम्यग्यथाशास्त्रं ततो दण्डं नयेन्नृपु ।
एवं कुर्वल्लँभेद्धर्मं पक्षपातविवर्जनात् ।
प्रत्यक्षाप्तोपदेशाभ्यामनुमानेन वा पुनः ।
बोद्धव्यं सततं राज्ञा देशवृत्तं शुभाशुभम् ।
चारैः कर्मप्रवृत्त्या च तद्विज्ञाय विचारयन् ।
अशुभं निर्हरेत्सद्यो जोपयेच्छुभमात्मनः ।
गर्ह्यान्विगर्हयेदेव पूज्यान्संपूजयेत्तथा ।
दण्ड्यांश्च दण्डयेद्देवि नात्र कार्या विचारणा ।
पश्चापेक्षं सदा मन्त्रं कुर्याद्बुद्धियुतैर्नरैः ।
कुलवृत्तश्रुतोपेतैर्नित्यं मन्त्रपरो भवेत् ।
कामरागेण वै मूर्खैर्नैव मन्त्रमना भवेत् ।
राजा राष्ट्रहितापेक्षः सत्यधर्माणि कारयेत् ।
सर्वोद्योगं स्वयं कुर्याद्दुर्गादिपु सदा नृपः ।
देशवृद्धिकरान्भृत्यानप्रमादेन कारयेत् ।
देशक्षयकरान्सर्वान्संप्रियानपि वर्जयेत् ।
अहन्यहनि संपश्येदनुजीविगणं स्वयम् ।
सुमुखः सुप्रियो भूत्वा सम्यग्वृत्तं समादिशेत् ।
अधर्म्यं परुषं तीक्ष्णं वाक्यं वक्तुं न चार्हति ।
नरे नरे गुणान्दोषान्सम्यग्वेदितुमर्हति ।
स्वेङ्गितं वृणुयाद्धैर्यान्न कुर्यात्क्षुद्रसंविदम् ।
परेङ्गितज्ञो लोकज्ञो भूत्वा संसर्गमाचरेत् ।
स्वतश्च परतश्चैव परस्परभयादपि ।
अमानुषभयेभ्यश्च स्वाः प्रजाः पालयेन्नृपः ।
लुब्धाः कठोराश्चाध्यक्षा मानवा दस्युवृत्तयः ।
निग्राह्या एव ते राज्ञा संगृहीता यतस्ततः ।
कुमारान्विनयैरेव जन्मप्रभृति योजयेत् ।
तेषामात्मगुणोपेतं यौवराज्ये नियोजयेत् ।
प्रकृतीनां यथा न स्याद्राज्यभ्रंशोद्भवं भयम् ।
एतत्संचिन्तयन्नित्यं तद्विधानं तथार्हति ।
अराजकं क्षणमपि राष्ट्रं न स्याद्धि शोभने ।
आत्मनोऽनुविधानाय यौवराज्यं सदेष्यते ।
कुलजानां च वैद्यानां श्रोत्रियाणां तपस्विनाम् ।
अन्येषां वृत्तयुक्तानां विशेषं कर्तुमर्हति ।
आत्मार्थं राज्यतन्त्रार्थं कोशसंचयमारभेत् ।

---

the prior half, T3 ins. :

कामक्रोधभयादपि ।
सततं परदारेभ्यो.

— ( L. 920 ) D10 T3 G2. 4 प्रियाप्रिये ( for प्रजाप्रियं ). D10 T2. 3 G2. 4 तु ( for हि ). — ( L. 922 ) D10 T2 G हि ( G4 च ) रक्षार्थं; T3 रक्षणार्थं ( for विवादार्थं ). — ( L. 923 ) T2 वादान् ( for वादं ). — ( L. 925 ) D10 T2. 3 G तत्त्वविद्भिश्च बहुभिर् ( for the prior half ). G1 वृद्धैः सह ; G3 वृद्धैर्भावी ( for सहासीनो ). — ( L. 931 ) T2 च कर्म- ( for कर्मप्र- ). T1. 2 G विचारयेत ( for °रयन् ). T3 तद्विज्ञातुं विचारयेत ( for the post. half ). — ( L. 932 ) T1 G3. 4 अशुभान् ( for °भं ). — T1 om. 933–939. — ( L. 935 ) T2 बुद्धिहितैर् ; T3 °युतो ( for °युतैर् ). — ( L. 936 ) G1. 3 -तपोपेतैर् ( for -श्रुतो° ). — ( L. 937 ) D10 T2. 3 G कामकारेण वै मुख्यैर् ( for the prior half ). D10 [ए]वं ; G2 च ( for [ए]व ). G1. 3 मंत्रपरो ( for °मना ). — ( L. 938 ) T2. 3 G -हितापेक्षं ( for °पेक्षः ). M4 -कर्माणि ( for -ध° ). — T3 transp. lines 939 and 940. — ( L. 939 ) T2 सदा ( for स्वयं ). D10 T2. 3 G नृपु ( for नृपः ). — ( L. 940 ) G1. 2. 4 M4 देशवृत्ति- ( for °वृद्धि- ). D10 यत्नान् ; T1 विप्रान् ( for भृत्यान् ). G4 न प्रमादेन ( for अप्र° ). D10 G2 अप्रियांश्च विवर्जयेत् ( for the post. half ). — T3 reads line 941 twice. — ( L. 941 ) G1. 3 -प्रियकरान् ( for -क्षय° ). T1 विप्रान् ( for सर्वान् ). T1 सु- ( for सं- ). T2 चापि ( for अपि ). D10 T3 ( both times ) G अप्रियांश्च विस( T3 [ first time ] °व )र्जयेत् ( for the post. half ). — T1 om. line 943. — ( L. 943 ) D10 T2. 3 G2–4 M4 दत्त्वा ( for भूत्वा ). T3 वृत्तिं ( for वृत्तं ). D10 T2. 3 G M4 समाचरेत् ( for °दिशेत् ). — After line 944, T2. 3 G ins. :

असंविश्वास्य वचनं वक्तुं सत्सु न चार्हति ।

[ T3 -विश्वस्य ( for -विश्वास्य ). T2 G4 अस्य विश्वस्य वचनं ( for the prior half ). ]

— ( L. 945 ) G1. 2 सद्यो ; G3 समो ( for सम्यग् ). — ( L. 946 ) T1 स्वाहितं ( for स्वेङ्गितं ). T1 -संगतिं ( for -संविदम् ). — ( L. 947 ) D10 T3 G लोकेषु ; T2 भूतेषु ( for लोकज्ञो ). — ( L. 950 ) D10 लुब्धान् ; G3. 4 वृद्धाः ( for लुब्धाः ). D10 T1. 3 G M4 चाप्यस्य ; T2 हीनाश्च ( for चाध्यक्षा ). — ( L. 951 ) D10 T G M3 संगृहीत्वा ( for °ता ). — ( L. 953 ) D10 T1. 3 G यौवराज्येन ( for °ज्ये नि- ). — ( L. 954 ) D10 T2. 3 G M4 -भ्रंशो भवेद् ( for -भ्रंशोद्भवं ). — T1 om. line 955. — ( L. 955 ) T2 तदा ( for तथा ). — ( L. 956 ) D10 T G राज्यं ( for राष्ट्रं ). — ( L. 957 ) G3 -विनाशाय ( for -विधानाय ). — ( L. 959 ) D10 T2. 3 G2. 4 वृत्ति- ( for वृत्त- ). T1

दुर्गाद्राष्ट्रात्समुद्राच्च वणिग्भ्यः पुरुपात्ययात् ।
परात्मगुणसाराभ्यां भृत्यपोषणमाचरेत् ।
वाहनानां विधायाग्रे पोषणं यौधकर्मसु ।
सादरः सततं भूत्वा अपेक्षाव्रतमाचरेत् ।
चतुर्धा विभजेत्कोशं धर्मभृत्यात्मकारणात् ।
आपदर्थं च नीतिज्ञो देशकालवशेन तु ।
अनाथान्व्याधितान्वृद्धान्स्वदेशे पोषयेन्नृपः ।
संधिं च विग्रहं चैव तद्विशेषांस्तथापरान् ।
यथावत्संविमृश्यैव बुद्धिपूर्वं समाचरेत् ।
सर्वेषां स प्रियो भूत्वा मण्डलं सततं चरेत् ।
शुभेष्वपि च कार्येषु न चैकोऽन्तः समाचरेत् ।
स्वतश्च परतश्चैव व्यसनानि विमृश्य तु ।
परेण धार्मिकान्न्यायान्नातीयाद्बहुफलोभतः ।
रक्ष्यत्वं वै प्रजाधर्मः क्षत्रधर्मस्तु रक्षणम् ।
कुनृपैः पीडितास्तस्मात्प्रजाः सर्वत्र पालयेत् ।
यात्राकालमवेक्ष्यैव पश्चात्कोपः फलोदयम् ।
तद्युक्ताश्चापदश्चैव प्राग्यानादिति चिन्तयेत् ।
व्यसनेभ्यो बलं रक्षेन्नयतो व्ययतोऽपि वा ।
प्रायशो वर्जयेद्युद्धं प्राणरक्षणकारणात् ।
कारणादेव योद्धव्यं नात्मनः परदोषतः ।
सुयुद्धे प्राणमोक्षश्च तस्य धर्माय इष्यते ।
अभियुक्तो बलवता कुर्यादापद्विधिं नृपः ।
अनुनीय तथा सर्वान्प्रजानां हितकारणात् ।
अन्यप्रकृतियुक्तानां राज्ञां वृत्तविचारिणाम् ।
अन्यांश्चापत्प्रपन्नानां न तान्संयोक्तुमर्हति ।
शुभाशुभं यदा देवि वृत्तं तूभयतः स्मृतम् ।
आत्मैव तच्छुभं कुर्यादशुभं योजयेत्परान् ।
एवमुद्देशतः प्रोक्तमलेपत्वं यथा भवेत् ।
एतदेवं समासेन राजधर्मः प्रकीर्तितः ।
एवं संवर्तमानस्तु दण्डयन्भर्त्सयन्प्रजाः ।
न किल्बिषमवाप्नोति पद्मपत्रमिवाम्भसा ।
एवं संवर्तमानस्य कालधर्मो यदा भवेत् ।
स्वर्गलोके तदा राजा त्रिदशैः सह तोष्यते ।
द्विविधं राजवृत्तं च न्यायभाग्यसमन्वितम् ।
एवं न्यायानुगं वृत्तं कथितं ते शुभेक्षणे ।
राज्यं न्यायानुगं नाम बुद्धिशास्त्रानुगं भवेत् ।
धर्म्यं पथ्यं यशस्यं च स्वर्ग्यं चैव तथा भवेत् ।
दैवपक्ष्ये सति नृपे राज्यं न्यायानुगं भवेत् ।
क्रियन्ते यत्र कर्माणि शास्त्रयुक्तिं विमृश्य वै ।
कर्ता द्वेषवियुक्तश्च तत्र न्यायानुगं भवेत् ।
राज्यं भोगानुगं नाम अयथावत्प्रदृश्यते ।
तत्तु शास्त्रविनिर्मुक्तं सतां कोपकरं भवेत् ।

---

रक्षणं ( for विशेषं ). — ( L. 960 ) $M_2$ -मंत्रार्थं ( for -तन्त्रार्थे ). $D_{10}$ $T_{2.3}$ G कोशार्थं च समाचरेत् ( for the post. half ). — $T_1$ om. ( hapl. ) lines 961–964. — ( L. 961 ) $D_{10}$ $T_2$ $G_{2.4}$ दुर्ग- ( for दुर्गाद् ). — ( L. 962 ) $T_2$ दुरात्म- ( for प° ). — ( L. 964 ) $M_4$ अपेक्षो ( for °क्षा- ). — ( L. 965 ) $T_1$ चतुर्विधं भजेत्कोशं ( for the prior half ). — $T_1$ om. line 966. — ( L. 967 ) $T_{1.3}$ $G_{1.3.4}$ $M_{1.2}$ व्यथितान् ( for व्याधि° ). — ( L. 968 ) $T_1$ संधिविग्रहणं चैव यानासनमथैव च. — ( L. 969 ) $T_3$ G स ( for सं- ). $T_1$ भेदं विमृश्य विधिवद् ( for the prior half ). — $T_1$ $M_1$ om. ( hapl. ) line 971. — ( L. 972 ) $T_{2.3}$ G विमृश्यतः ; Kumbh. ed. and Madras ed. °श्य सः ( for °श्य तु ). — ( L. 973 ) $D_{10}$ G योगान् ; $T_2$ लोकान् ( for न्यायान् ). $T_1$ प्रायेण धार्मिकन्यायान् ( for the prior half ). $T_1$ कुर्याद् ( for [अ]तीयाद् ). — $T_1$ om. ( hapl. ) lines 976–977. — ( L. 976 ) $D_{10}$ $T_{2.3}$ $G_4$ $M_4$ यात्राकालेनवे- ( $T_3$ °लानवे )क्ष्यैव ; $G_{1-3}$ °काले न नैवेक्ष्य: ( for the prior half ). $M_{2.4}$ कोप- ( for कोपः ). $D_{10}$ $T_{2.3}$ G पश्चात्कोपफलोदयः ( for the post. half ). — ( L. 979 ) $T_2$ -कारणं ( for °णात् ). — $G_2$ om. ( hapl. ) lines 980–983. — ( L. 981 ) $T_2$ धर्मार्थं ; $T_3$ धर्मोय ( for धर्माय ). $T_1$ चेष्यते ( for इ° ). — ( L. 982 ) $T_2$ चापद्विधिं ; $G_4$ पश्चाद्विधिं ( for आप° ). $T_1$ न कुर्यादापदः परं ( for the post. half ). — $T_1$ om. line 983. — ( L. 983 ) $T_2$ सर्वं प्राणिनां ( for सर्वान्प्रजानां ). — ( L. 984 ) $T_1$ राजा ( for अन्य- ). $M_4$ अथप्रभृति युक्तानां ( for the prior half ). $T_1$ राज्ञां वृत्तिं विचारयेत् ( for the post. half ). — ( L. 985 ) $D_{10}$ $T_{2.3}$ प्रति- ; $G_2$ [अ]पि प्र- ( for [आ]पत्प्र- ). $T_1$ वृत्तिं चापि प्रपन्नानां ( for the prior half ). — $T_1$ om. line 986. — ( L. 986 ) $D_{10}$ $T_{2.3}$ $G_2$ व्रतशुभयसाधनं (sic) ; $G_{1.3.4}$ व्रतं तूभयसाधनं ( for the post. half ). — ( L. 987 ) $T_1$ आत्मनश्च शुभं कार्यम् ( for the prior half ). — $T_1$ om. (hapl.) line 988. — ( L. 988 ) $D_{10}$ $T_3$ अलोपत्वं ; $T_2$ अलोभत्वं ( for अलोपत्वं ). — ( L. 989 ) $D_{10}$ T G एष देवि ( for एतदेवं ). — ( L. 990 ) $T_2$ रक्षयन् ( for भर्त्स° ). $G_{1.3}$ भर्त्सयन्दंडयन्प्रजाः ( for the post. half ). — ( L. 991 ) $D_{10}$ $T_{2.3}$ G निष्कल्मषम् ( for न किल्बिषम् ). — ( L. 993 ) $T_1$ मोदते ; $G_4$ पोष्यते ( for तो° ). — ( L. 996 ) $G_2$ $M_3$ राज- ( for राज्यं ). — ( L. 997 ) $T_3$ तदा ; $M_4$ यथा ( for तथा ). — $D_{10}$ S ( *except* $M_{1-3}$ ) om. ( hapl. ) lines 999–1000. — ( L. 1001 ) T $G_{1.3}$ भाग्यानुगं ( for भोगा° ). $T_1$ विधितः संप्रवर्तते ( for the post. half ). — ( L. 1002 ) $T_1$ परलोकाय न क्षमं ( for the post. half ). — ( L. 1003 ) $D_{10}$ $G_2$ दुस्तरं ; $T_1$ विधुरं ; $G_{1.3}$ दुरितं ( for दुरन्तं ). — $T_1$ om. (hapl.) line 1004. — ( L. 1005 ) $D_{10}$ $T_{2.3}$ G तत्र ( for यत्र ).

अभर्स्यमयशस्यं च दुरन्तं च भवेद् ध्रुवम् ।
यत्र स्वच्छन्दतः सर्वं क्रियते कर्म राजभिः ।
यत्र भाग्यवशात्कृत्या लभन्ते न विशेषतः ।
यत्र दण्ड्या न दण्ड्यन्ते पूज्यन्ते वा नराधमाः ।
यत्र सन्तो विहन्यन्ते तत्र भाग्यानुगं भवेत् ।
शुभाशुभं यदा यत्र विपरीतं प्रदृश्यते ।
राज्ञि वासुरपक्षे तु तत्र भाग्यानुगं भवेत् ।
भाग्यानुगे तु राजानो वर्तमाना यथातथा ।
प्राप्याकीर्तिमनर्थं च इहलोके शुभेक्षणे ।
परत्र सुमहाघोरं तमः प्राप्य दुरत्ययम् ।
तिष्ठन्ति नरके देवि प्रलयान्तादिति स्थितिः ।
मोक्षणं दुष्कृतीनां तु विद्यते कालपर्ययात् ।
नास्त्येव मोक्षणं देवि राज्ञां दुष्कृतकारिणाम् ।
एतत्सर्वं समासेन राजवृत्तं शुभाशुभम् ।
कथितं ते महाभागे भूयः श्रोतुं किमिच्छसि ।

Colophon.

उमा ।

देवदेव महादेव सर्वदेवनमस्कृत ।
यानि धर्मरहस्यानि श्रोतुमिच्छामि तान्यहम् ।

महेश्वरः ।

रहस्यं श्रूयतां देवि मानुषाणां सुखावहम् ।
नपुंसकेषु वन्ध्यासु वियोनौ पृथिवीतले ।
उत्सर्गो रेतसस्तेषु न कार्यो धर्मकाङ्क्षिभिः ।
एतेषु बीजं प्रक्षिप्तं न विरोहति वै प्रिये ।
यत्र वा तत्र वा बीजं धर्मार्थी नोत्सृजेत्पुनः ।
नरो बीजविनाशेन लिप्यते भ्रूणहत्यया ।
अहिंसा परमो धर्मः अहिंसा परमं सुखम् ।
अहिंसा धर्मशास्त्रेषु सर्वेषु परमं पदम् ।
देवतातिथिशुश्रूषा सततं धर्मशीलता ।
वेदाध्ययनयज्ञाश्च तपो दानं दमस्तथा ।
आचार्यगुरुशुश्रूषा तीर्थाभिगमनं तथा ।
अहिंसाया वरारोहे कलां नार्हन्ति षोडशीम् ।
एतत्ते परमं गुह्यमाख्यातं परमार्चितम् ।

उमा ।

यदि धर्मस्त्वहिंसायां किमर्थममरोत्तम ।
यज्ञेषु पशुबन्धेषु हन्यन्ते पशवो द्विजैः ।
कथं च भगवन्भूयो हिंसमाना नराधिपाः ।
स्वर्गं सुदुर्गमं यान्ति सदा स्म रिपुसूदन ।
यस्यैव गोसहस्राणि विंशतिः साधिकानि तु ।
अहन्यहनि हन्यन्ते द्विजानां मांसकारणात् ।
समांसं तु स दत्त्वान्नं रन्तिदेवो नराधिपः ।
कथं स्वर्गमनुप्राप्तः परं कौतूहलं हि मे ।
किं नु धर्मं न शृण्वन्ति न श्रद्दधति वा श्रुतम् ।

$T_1$ $M_{1,2}$ transp. लभन्ते and न. — ( L 1006 ) $D_{10}$ $G_2$ वै ; $T_3$ च ( for वा ). — $T_1$ om. line 1007. — ( L. 1007 ) $T_3$ वसंत्यत्र ; $M_{2,3}$ [ऽ]पि हन्यंते ( for विहन्यन्ते ). $G_{1,3}$ ततो ( for तत्र ). — $D_{10}$ reads lines 1008-1009 twice. — ( L. 1008 ) $D_{10}$ ( both times ) $T_{1,3}$ G यथा ( for यदा ). $T_3$ तत्र ( for यत्र ). — $T_1$ om. lines 1009-1010. — ( L. 1009 ) $G_{1,3,4}$ राज्ञस्तु ( for राज्ञि वा ). — ( L. 1010 ) $G_4$ यथातथं ( for °तथा ). —( L. 1011 ) $M_{1-3}$ अमानं ( for अनर्थं ). $T_3$ प्राप्य लोके शुभं चैव ; $G_4$ प्राप्य कीर्तिमकीर्तिं च ( *for the prior half* ). $G_{1,3}$ शुभानने ( for शुभेक्षणे ). — ( L. 1012 ) $T_1$ सुमहद् ( for सुमहा- ). $T_1$ दुःखं ( for तमः ). — $T_1$ om. line 1014. — ( L. 1014 ) $T_2$ च ( for तु ). $D_{10}$ $G_4$ मोक्षं तु ( $G_4$ च ) सुकृतीनां च ; $T_3$ विमोक्षं दुष्कृतीनां च ( for the prior half ). — ( L. 1015 ) $G_{1-3}$ दुष्कर- ; $M_4$ दुष्कृति- ( for दुष्कृत- ). — ( L. 1017 ) $D_{10}$ transp. श्रोतुं and किं. $T_{1,3}$ $G_2$ किं भूयः श्रोतुमिच्छसि ( for the post. half ). — Colophon. — *Adhy. name :* $D_{10}$ $T_2$ $G_2$ M उमामहेश्वरसंवादः ; $T_3$ राजवृत्तिकथनं. — *Adhy. no. :* $D_{10}$ $T_{2,3}$ $G_{2,4}$ 195 : $T_1$ $M_4$ 188 : $G_{1,3}$ $M_1$ 189 ; $M_{2,3}$ 190.

च ( for वि- ). — ( L. 1024 ) $G_2$ बीजार्थं ( for वा बीजं ). $D_{10}$ $G_4$ धर्मार्थे ( for °र्थी ). — ( L. 1025 ) $D_{10}$ $T_2$ $G_4$ वध्यते ( for लिप्यते ). $D_{10}$ $T_{2,3}$ $G_4$ ब्रह्म- ( for भ्रूण- ). —$T_1$ om. ( hapl. ) line 1027. — ( L. 1027 ) $G_4$ सर्व- ( for धर्म- ). $G_4$ अहिंसा ( for सर्वेषु ). — $T_1$ om. ( hapl. ) line 1030. — ( L. 1031 ) $G_1$ $M_{2,4}$ नार्हति ( for °न्ति ). — ( L. 1032 ) $T_1$ आख्यानं शुभदर्शने ( for the post. half ). — ( L. 1033 ) $D_{10}$ $T_2$ [अ]हिंसायाः ; $T_1$ [अ]हिंसा वै ( for [अ]हिंसायां ). — ( L. 1035 ) $T_1$ भूमौ ( for भूयो ). — ( L. 1036 ) *$T_3$ दुर्गतमं ( for सुदुर्गमं ).* $T_3$ ते कथं ; $G_{1,3}$ तदा स्म ( for सदा स्म ). $D_{10}$ $G_{1,4}$ $M_{1-3}$ रिपुसूदनाः. — $T_1$ transp. lines 1037 and 1038. — ( L. 1037 ) M स्वस्य ( for यस्य ) — T. reads line 1038 twice. — ( L. 1038 ) $T_1$ ( both times ).$_2$ द्विजानां गोसवस्य च ( $T_2$ तु ) ( for the post. half ). — ( L. 1039 ) $T_{1,3}$ समाः सहस्रं दत्त्वान्नं ; $G_4$ मांस तु स ह दत्त्वान्नं ( for the prior half ). — ( L. 1040 ) $T_2$ स्वर्गफलं ( for स्वर्गमनु- ). — ( L. 1041 ) $G_{1,3}$ धर्मांश्च ; $G_2$ धर्माणि ( for धर्मं न ). — ( L. 1042 ) $T_{2,3}$ M मृगयां वै ( $M_{1-3}$ ये ) ( for मृगयायै ). $G_{1,3,4}$ मृगयां वै विनिर्गम्य ( for the prior half ).

मृगयार्थे विनिर्गत्य मृगान्घ्नन्ति नराधिपाः ।
एतत्सर्वं विशेषेण विस्तरेण वृषध्वज ।
श्रोतुमिच्छामि भगवंस्तत्त्वमेतन्ममोच्यताम् ।
महेश्वरः ।
बहुमान्यमिदं देवि नास्ति कश्चिदहिंसकः ।
श्रूयतां कारणं चात्र यथानेकविधं भवेत् ।
दृश्यते चापि लोकेऽस्मिन्न कश्चिदविहिंसकः ।
धरणींसंश्रिताञ्जीवान्सुसूक्ष्मांश्चैव मध्यमान् ।
संचरंश्चरणाभ्यां च हन्ति जीवाननेकशः ।
अज्ञानाज्ज्ञानतो वापि ये जीवाः शयनासने ।
उपाविशञ्शयानश्च हन्ति जीवाननेकशः ।
शिरोवस्त्रेषु ये जीवा नराणां स्वेदसंभवाः ।
तांश्च हिंसन्ति सततं दंशांश्च मशकानपि ।
जले जीवास्तथाकाशे पृथिवी जीवमालिनी ।
एवं जीवाकुले लोके कोऽसौ स्यादस्त्वहिंसकः ।
स्थूलमध्यमसूक्ष्मैश्च स्वेदवातमहीरुहैः ।
दृश्यरूपैरदृश्यैश्च नानारूपैश्च भामिनि ।
जीवैस्ततमिदं सर्वमाकाशं पृथिवी तथा ।
अन्योन्यं ते च हिंसन्ति दुर्बलान्बलवत्तराः ।
मत्स्या मत्स्यान्ग्रसन्तीह खगांश्चैव खगास्तथा ।
सरीसृपैश्च जीवन्ति कपोताद्या विहंगमाः ।
भूचराः खेचराश्चान्ये क्रव्यादा मांसगृद्धिनः ।
समृद्धाः परमांसैस्तु भक्षेरन्येऽपि चापरैः ।
सत्त्वैः सत्त्वानि जीवन्ति शतशोऽथ सहस्रशः ।
अपीडयित्वा नैवान्यं जीवा जीवन्ति सुन्दरि ।
स्थूलकायस्य सत्त्वस्य खरस्य महिषस्य वा ।
जीवस्यैकस्य मांसेन पयसा रुधिरेण वा ।
तृप्यन्ते बहवो जीवाः क्रव्यादा मांसभोजिनः ।
एको जीवसहस्राणि सदा खादति मानवः ।
अन्नाद्यल्पोपभोगेन धान्यसंज्ञानि यानि तु ।
मांसधान्यैः सबीजैश्च भोजनं परिवर्जयेत् ।
त्रिरात्रं पञ्चरात्रं वा सप्तरात्रमथापि वा ।
धान्यानि यो न हिंसेताहिंसकः परिकीर्तितः ।
नाश्नाति यावतो जीवांस्तावत्पुण्येन युज्यते ।
आहारस्य वियोगेन शरीरं परितप्यते ।
तप्यमाने शरीरे तु शरीरं चेन्द्रियाण्यपि ।
वशे तिष्ठन्ति सुश्रोणि नृपाणामिव किंकराः ।
निरुन्धीन्द्रियाण्येव स सुखी स विचक्षणः ।
इन्द्रियाणां निरोधेन दानेन च दमेन च ।
नरः सर्वमवाप्नोति मनसा यद्यदिच्छति ।
एतन्मूलमहिंसाया उपवासः प्रकीर्तितः ।
आहारं कुरुते यस्तु भूमिमाक्रमते च यः ।
सर्वे ते हिंसका देवि यथा धर्मेषु दृश्यते ।
यथेहाहिंसको देवि तत्त्वज्ञो ज्ञायते नरः ।
तथा तेऽहं प्रवक्ष्यामि श्रूयतां धर्मचारिणि ।
फलानि जीर्णपर्णानि भस्म वा योऽपि भक्षयेत् ।

---

विशे° ). — ( L. 1044 ) $D_{10}$ $G_4$ तत्त्वेन ; $T_2$ $G_{1-3}$ तत्सर्वं ; $T_3$ सर्वज्ञ ( for भगवंस् ). $D_{10}$ $T_{1.3}$ G $M_4$ अद्य ( for एतन् ). $T_2$ संशयो मेद्य मोच्यतां ( for the post. half ). — $T_1$ महेशः ; $T_{2.3}$ $G_3$ ईश्वरः ( for महेश्वरः ). — $T_1$ om. line 1046. — ( L. 1046 ) $M_4$ नैक- ( for [अ]नेक- ). — ( L 1047 ) $G_{1.3}$ न हि कश्चिदहिंसकः ; $G_2$ कश्चिदप्यनहिंसकः ( for the post. half ). — $T_3$ om. ( hapl. ) lines 1048–1055. — ( L. 1048 ) $G_4$ धरणीं. $T_3$ G $M_{1.2}$ देवि ( for जीवान् ). $T_1$ [अ]पि ( for [ए]व ). — ( L. 1050 ) $T_1$ संस्थितः ( for ये जीवाः ). — ( L. 1052 ) $D_{10}$ शिरोवस्त्रेण ये जीवा ( for the prior half ). — ( L. 1055 ) $T_1$ वा ( for ऽसौ ). — ( L. 1056 ) $D_{10}$ $T_{2.3}$ $G_{3.4}$ $M_4$ -वारि- ( for -वात- ). — ( L. 1058 ) $T_1$ जीवतत्त्वम ( for जीवैस्ततम् ). — ( L. 1059 ) $T_1$ अपि ( for ते च ). — ( L. 1060 ) $G_{1.3}$ $M_4$ मत्स्यान्मत्स्या ( by transp. ). $T_1$ च हिंसंति ( for ग्रसन्तीह ). $T_3$ मत्स्या गृह्णंति वै मत्स्याः ( for the prior half ). $T_1$ खगश्चापि खगांस्तथा ( for the post. half ). — ( L. 1061 ) T मयूराद्या ( for कपोताद्या ). — ( L. 1062 ) $M_{1-3}$ भूचरान् ( for °राः ) $T_2$ $G_{1.3}$ -गर्द्धिनः ( for -गृद्धिनः ). — $T_1$ om. lines 1063–64. — ( L. 1063 ) $D_{10}$ $T_3$ $G_{1-3}$ ते ; $T_2$ $G_4$ च ( for ये ). $G_4$ ते परे ( for चापरैः ). — ( L. 1065 ) $T_1$ [अ]न्यान् ( for [अ]न्यं ). — ( L. 1066 ) $T_1$ om. from the post. half up to the prior half of line 1067. $D_{10}$ $T_2$ G च ( for वा ). — ( L. 1067 ) $T_1$ मांसेन ( for पयसा ). $G_4$ च ( for वा ). — ( 1068 ) $T_1$ तृप्यंति ( for °ते ). $T_2$ $G_2$ -भोजनाः ( for -भोजिनः ). — ( L. 1069 ) $G_4$ एवं ( for एको ). $G_3$ जीवः ( for जीव- ). — $T_1$ om. lines 1070–1071. — ( L. 1070 ) $M_3$ भोग- ( for धान्य- ). — $T_1$ reads lines 1072-1073 after line 1077. — ( L. 1072 ) $D_{10}$ $T_2$ G $M_4$ तथा ( for अथ ). — ( L. 1073 ) $T_1$ सोऽहिंस्रः ( for [अ]हिंसकः ). — ( L. 1074 ) $D_{10}$ $T_3$ $G_{2.4}$ जीवस् ( for जीवांस् ). — ( L. 1076 ) $D_{10}$ G तु ; $T_{1.3}$ च ( for [अ]पि ). — ( L. 1078 ) $M_2$ [ए]वं ( for [ए]व ). — ( L. 1081 ) $D_{10}$ $T_{2.3}$ G एवं ( for एतन् ). — $T_1$ om. lines 1082–1083. — ( L. 1082 ) $G_3$ सः ( for यः ). — Before line 1084, $T_1$ ins. महेशः. — ( L. 1084 ) $D_{10}$ $T_2$ $G_4$ यथैव ; $T_{1.3}$ $G_{1.3}$ तथैव ; $G_2$ यथा वा ( for यथेह ). — ( L. 1085 ) $D_{10}$ $T_2$ यथा ( for तथा ). $D_{10}$ $T_2$ $G_{1-3}$ ते तं ; $T_1$ तेषां ; $T_3$ $G_4$

आलेख्यमिव निश्चेष्टं तं मन्येऽहमहिंसकम् ।
आरम्भा हिंसया युक्ता धूमेनाग्निरिवावृताः ।
तस्माद्यस्तु निराहारस्तं मन्येऽहमहिंसकम् ।
यस्तु सर्वं समुत्सृज्य दीक्षितो नियतः शुचिः ।
कृत्वा मण्डलमर्यादां संकल्पं कुरुते नरः ।
यावज्जीवमनाशित्वा कालाकाङ्क्षी दृढव्रतः ।
ध्यानेन तपसा युक्तस्तं मन्येऽहमहिंसकम् ।
अन्यथा हि न पश्यामि नरो यः स्यादहिंसकः ।
बहु चिन्त्यमिदं देवि नास्ति कश्चिदहिंसकः ।
यतो यतो महाभागे हिंसा स्यान्महती ततः ।
निवृत्तौ मधुमांसाभ्यां हिंसा त्वल्पतरा भवेत् ।
निवृत्तिः परमो धर्मो निवृत्तिः परमं सुखम् ।
मनसा विनिवृत्तानां धर्मस्य निचयो महान् ।
मनःपूर्वंगमा धर्मा अधर्माश्च न संशयः ।
मनसा बध्यते चापि मुच्यते चापि मानवः ।
निगृहीते भवेत्स्वर्गो विसृष्टे नरको ध्रुवः ।
घातकः शस्त्रमुद्यम्य मनसा चिन्तयेद्यदि ।
आयुःक्षयं गतेऽध्यैषां मृते तु प्रहराम्यहम् ।
इति यो घातको हन्यान्न स पापेन लिप्यते ।
विधिना निहतः पूर्वं निमित्तं स तु घातकः ।
विधिर्हि बलवान्देवि दुस्त्यजं वै पुराकृतम् ।
जीवाः पुराकृतेनैव तिर्यग्योनिसरीसृपाः ।
नानायोनिषु जायन्ते स्वकर्मपरिवेष्टिताः ।
नानाविधविचित्राङ्गा नानावीर्यपराक्रमाः ।
नानाभूमिप्रदेशेषु नानाहाराश्च जन्तवः ।
जायमानस्य जीवस्य मृत्युः पूर्वं प्रजायते ।
सुखं वा यदि वा दुःखं यथा पूर्वं कृतं तथा ।
प्राप्नुवन्ति नरा मृत्युं यदा यत्र च येन च ।
नातिक्रान्तुं हि शक्यं स्यान्निदेशः पूर्वकर्मणः ।
अप्रमत्तः प्रमत्तेषु विधिर्जागर्ति जन्तुषु ।
न हि तस्य प्रियः कश्चिन्न द्वेष्यो न च मध्यमः ।
समः सर्वेषु भूतेषु कालः कालं निरीक्षते ।
गतायुषो ह्याक्षिपति जीवं सर्वस्य देहिनः ।
यथा येन च मर्तव्यं तथा युज्येत मृत्युना ।
अवशो नीयते तत्र मर्तव्यं यत्र येन तु ।
अरण्ये स्वगृहे वापि रात्रौ वाहनि वा तथा ।
यथा येन हि मर्तव्यं नान्यथा म्रियते हि सः ।
दृश्यते न च लोकेऽस्मिन्भूतो भव्योऽपि वा पुनः ।
विज्ञानैर्विक्रमैर्वापि नानामन्त्रौषधैरपि ।
यो हि वञ्चयितुं शक्तो विधेस्तु नियतां गतिम् ।
एष तेऽभिहितो देवि जीवहिंसाविधिक्रमः ।

Colophon.

महेश्वरः ।

श्रूयतां कारणं देवि यथा हि दुरतिक्रमः ।
विधिः सर्वेषु भूतेषु मर्तव्ये समुपस्थिते ।
आयुःक्षयेणोपहताः समागम्य वरानने ।
कीटाः पतंगा बहवः स्थूलाः सूक्ष्माश्च मध्यमाः ।
प्रज्वलत्सु प्रदीपेषु स्वयमेव पतन्ति ते ।

ते सं- ( for तेऽहं ). — ( L. 1086 ) $D_{10}$ $T_{2.3}$ G मूल- ( for जीर्ण- ). — ( L. 1089 ) $M_{1-3}$ निरारंभस् ( for °हारस् ). — $T_1$ om. lines 1090–1091. $G_2$ om. ( hapl. ) lines 1090–1093. — ( L. 1090 ) $G_1$ हिंसां; $G_4$ पूर्वं ( for सर्वं ). $D_{10}$ $T_{2.3}$ $G_{1.3.4}$ दीक्षित्वा ( for °तो ). — ( L. 1093 ) $D_{10}$ $T_{1.3}$ धन्येन ( for ध्यानेन ). — ( L. 1094 ) $G_4$ तु ( for हि ). — $G_3$ om. ( hapl. ) line 1095. $T_1$ om. line 1096. — ( L. 1097 ) $G_2$ अल्पतरा ( for त्वल्प° ). — ( L. 1100 ) Cf. Dhammapada 1. $D_{10}$ S मनःपूर्वा( $G_4$ °र्वं )गमा ( $G_{1.3}$ °मं ) धर्मा ( for the prior half ). — ( L. 1103 ) $M_{1-3}$ मनसा चिंतयन्यतः ( for the post. half ). — ( L. 1104 ) $D_{10}$ $T_2$ $G_3$ आयुःक्षय-; $T_3$ °क्षये ( for °क्षयं ). $D_{10}$ $T_{1.2}$ G $M_4$ [ऽ]न्येषां ( for ऽध्यैषां ). — ( L. 1106 ) $D_{10}$ $G_4$ विधिर्हि ( for विधिना ). — ( L. 1107 ) $T_3$ हि ( for वै ). — ( L. 1108 ) $T_1$ जीवाः पुराकृताश्चैव ( for the prior half ). — ( L. 1110 ) $D_{10}$ नानायुग-; $G_{1.3.4}$ °युध-; $G_2$ °युधा ( for °विध- ). $T_2$ -विशुद्धागा. $D_{10}$ $T_{2.3}$ G -शौर्य- ( for -वीर्य- ). — ( L. 1111 ) $T_1$ नानावेषधराश्चैव ( for the prior half ). — ( L. 1112 ) $T_1$ पुत्रस्य ( for जीवस्य ). $T_1$ उपस्थितः ( for प्रजायते ). — $T_1$ om. line 1113. — ( L. 1113 ) G M पूर्व- ( for पूर्वं ). $D_{10}$ G तु वा; $T_3$ त्वया ( for तथा ). — ( L. 1114 ) $D_{10}$ $T_1$ यथा ( for यदा ). — ( L. 1115 ) $G_4$ तु ( for हि ). $D_{10}$ $T_1$ $G_{1.3.4}$ शक्यः ( for शक्यं ). $D_{10}$ $T_2$ $G_4$ निर्देशः ( for निदेशः ). $T_2$ $G_2$ -कर्मणि ( for °णः ). — ( L. 1119 ) $T_1$ गतायुषं ( for °षो ). $D_{10}$ G ह्याक्षिपते ( for °ति ). $T_3$ $G_{1.3.4}$ जीवः ( for जीवं ). — $D_{10}$ om. ( hapl.) lines 1120–1124. T G $M_4$ om. ( hapl. ) lines 1120–1122. — ( L. 1124 ) $G_1$ भूत- ( for भूतो ). $T_2$, $G_{3.4}$ द्विधा; $T_3$ यथा ( for ऽपि वा ). — ( L. 1127 ) $D_{10}$ $T_{2.3}$ वि- ( for ऽभि- ). — Colophon. — *Adhy name* : $D_{10}$ $T_{2.3}$ $G_2$ उमामहेश्वरसंवादे जीवहिंसाविधिः : M उमामहेश्वरसंवादः. — *Adhy. no.* : $D_{10}$ $T_{2.3}$ $G_{2.4}$ 196; $G_{1.3}$ $M_1$ 190; $M_{2.3}$ 191; $M_4$ 189. — $T_1$ महेशः; $G_3$ शिवः ( for महेश्वरः ). — ( L. 1129 ) $T_2$ देवेषु ( for भूतेषु ). — ( L. 1130 ) $D_{10}$ $G_{2.3}$ [उ]पद्रिताः; $T_1$ °गताः; $T_3$ °चिताः; $G_1$ °रताः ( for °हताः ). — ( L. 1131 ) T $G_{1-3}$ $M_3$ स्थूल- ( for स्थूलाः ). — ( L. 1132 ) $T_1$ [अ]ग्निदेशेषु ( for

बहूनां मृगयूथानां नानावननिषेविणाम् ।
यस्तु कालहतस्तेषां स वै कालेन वध्यते ।
सूनार्थं देवि बद्धानां क्षीणायुर्यो निबध्यते ।
अवशो घातकस्याथ हस्तं तदहरेति सः ।
यथा पक्षिगणाः क्षिप्रं विस्तीर्णाकाशगामिनः ।
क्षीणायुषो निबध्यन्ते शक्ता अपि पलायितुम् ।
यथा वारिचरा मीना बहवो बहुजातयः ।
जालं समधिरोहन्ति स्वयमेव विधेर्वशात् ।
शल्यकस्य च जिह्वाग्रं स्वयमारुह्य शोभने ।
आयुःक्षयेणोपहता निपद्यन्ते सरीसृपाः ।
कृषतां कर्षकाणां च नास्ति बुद्धिर्विहिंसने ।
अथैषां लाङ्गलाग्राद्यैर्हन्यन्ते जन्तवोऽक्षयाः ।
पादाग्रेणैव चैकेन यां हिंसां कुरुते नरः ।
मातंगोऽपि न तां कुर्यात्क्रूरो जन्मशतैरपि ।
म्रियन्ते यैर्हि मर्तव्यं न तान्हन्ति कृषीवलः ।
कृषामीति मतिस्तस्य नास्ति चिन्ता विहिंसने ।
तस्माज्जीवसहस्राणि हत्वापि न स लिप्यते ।
विधिना विहितः पूर्वं पश्चात्प्राणी विपद्यते ।
एवं सर्वेषु भूतेषु विधिर्हि दुरतिक्रमः ।
गतायुषा न शक्यं हि मुहूर्तमपि जीवितुम् ।
जीवितव्ये न मर्तव्यं न भूतं न भविष्यति ।
शुभाशुभं कर्मफलं न शक्यमतिवर्तितुम् ।
तथा ताभिश्च मर्तव्यं भोक्तव्याश्चैव तास्तथा ।
रन्तिदेवस्य गावो वै विधेर्हि वशमागताः ।
स्वयमायान्ति गावो वै हन्यन्ते यत्र सुन्दरि ।
गवां वै हन्यमानानां रुधिरप्रभवा नदी ।
चर्मण्वतीति विख्याता खुरशृङ्गास्थिदुर्गमा ।
रुधिरं तां नदीं प्राप्य तोयं भवति शोभने ।
मेध्यं पुण्यं पवित्रं च गन्धवर्णरसैर्युतम् ।
तत्राभिषेकं कुर्वन्ति कृतजप्याः कृताह्निकाः ।
द्विजा देवगणाश्चापि लोकपाला महेश्वराः ।
तस्य राज्ञः सदा सत्रे स्वयमागम्य सुन्दरि ।
विधिना पूर्वदृष्टेन तन्मांसमुपकल्पितम् ।
मन्त्रवत्प्रतिगृह्णन्ति यथान्यायं यथाविधि ।
समांसं च सदा ह्यन्नं शतशोऽथ सहस्रशः ।
भुञ्जानानां द्विजातीनामस्तमेति दिवाकरः ।
गावो यास्तत्र हन्यन्ते राज्ञस्तस्य क्रतूत्तमे ।
पच्यमानेषु मन्त्रेषु यथान्यायं यथाविधि ।
ताश्च स्वर्गं गता गावो रन्तिदेवश्च पार्थिवः ।
सदा सत्रविधानेन सिद्धिं प्राप्तो नरेश्वरः ।
अथ यस्तु सहायार्थमुक्तः स्यात्पार्थिवैर्नरः ।
भोगानां संविभागेन वस्त्राभरणभूषणैः ।
सहभोजनसंबन्धैः सत्कारैर्विविधैरपि ।
सहायकाले संप्राप्ते संग्रामे शस्त्रमुद्धरेत् ।
व्यूढानीके यथा शस्त्रं सेनयोरुभयोरपि ।
हस्त्यश्वरथसंपूर्णे पदातिबलसंकुले ।
चामरच्छत्रशबले ध्वजचर्मायुधोज्ज्वले ।
शक्तितोमरकुन्तासिशूलपट्टसधारिभिः ।
कूटमुद्गरचापेषुभुसुण्डीजुष्टमुष्टिभिः ।
भिन्दिपालगदाचक्रप्रासकर्पणधारिभिः ।
नानाप्रहरणैर्योधैः सेनयोरुभयोरपि ।
युद्धशौण्डैः प्रगर्जद्भिर्वृषेषु वृषभैरिव ।

प्रदीपेषु ). $M_{1-3}$ वै ( for ते ). — ( L. 1133 ) $T_2$ $G_2$ नानामृग- ( for °वन- ). — ( L. 1134 ) $D_{10}$ $T_{1.3}$ $G_{1-3}$ -गतस् ( for -हतस् ). $D_{10}$ T G स वै ( $G_3$ सर्वैः ) पाशेन बध्यते ( for the post. half ). — ( L. 1135 ) $T_1$ [ऽ]ति- ( for नि- ). — ( L. 1138 ) $T_2$ प्र- ( for नि- ). — ( L. 1139 ) $T_2$ $G_{1.3.4}$ [अं]बुज-; $T_3$ [अं]बुनि ( for बहु- ). — ( L. 1141 ) $G_2$ शेरते ( for शोभने ). — ( L. 1142 ) $D_{10}$ $T_{2.3}$ G -बध्यंते ; $T_1$ -वर्तंते ( for -पद्यन्ते ). — ( L. 1144 ) $T_1$ तथैषां; $M_1$ अन्येषां ( for अथैषां ). — ( L. 1145 ) M हि वा ( for [ए]व च ). — ( L. 1147 ) $T_{2.3}$ $G_2$ $M_3$ कृषीवलाः. $G_{1.3}$ न तान्घ्नंति कृषिवलाः ( for the post. half ). — ( L. 1148 ) $D_{10}$ $T_{2.3}$ $G_4$ कर्षामि ; $T_1$ कृष्यामि ( for कृषामि ). $D_{10}$ $T_{1.3}$ $G_{1-3}$ मनस्; $T_2$ विधिस् ( for मतिस् ). — ( L. 1150 ) $D_{10}$ स हतः ; $T_{2.3}$ $G_4$ साहितः ( for विहितः ). — ( L 1152 ) $D_{10}$ $G_4$ मुहूर्तं तु ( for न शक्यं हि ). $T_2$ $G_{1.3}$ क्षणमप्युपजीवितुं ; $G_4$ न शक्यमुप° ( for the post. half ). — ( L. 1153 ) $G_4$ जीवितं मे ( for °तव्ये ). — $T_1$ om. line 1155. — ( L. 1156 ) $T_1$ हि ( for वै ). — ( L. 1157 ) $T_1$ $G_2$ $M_{1.2.3}$ ( also as above ). $_4$ हि ( for वै ). — ( L. 1158 ) $T_1$ $G_{1-3}$ $M_4$ -प्रवहा ( for -प्रभवा ). — ( L. 1159 ) $G_2$ -संकुला ( for -दुर्गमा ). — $T_1$ om. lines 1161 and 1164. $T_1$ om. the post. half of line 1166 and the prior half of line 1167. — ( L. 1167 ) $G_{1.3.4}$ यथा ; $G_2$ यदा ( for सदा ). $T_1$ मांसमन्नं ( for शतशोऽथ ). — ( L. 1168 ) $M_{1.2.4}$ दिवाकरे ( for °रः ). $T_1$ om. the post. half of line 1169 and the prior half of line 1170. — ( L. 1172 ) $D_{10}$ $T_2$ G नरोत्तमः ; $T_1$ वरानने ( for नरेश्वरः ). — ( L. 1173 ) $T_1$ $M_4$ सन् ( for स्यात् ). — $T_1$ om. ( hapl. ) lines 1176–1177 and om. lines 1180–1188. — ( L. 1180 ) $D_{10}$ $T_{2.3}$ G $M_{1.2.3}$ ( also as above ). $_4$ -शूलमुद्गरपाणिभिः ( for the post. half ). — ( L. 1182 ) $D_{10}$ $T_{2.3}$ G M भिंडिपाल-. $D_{10}$ $T_3$ G -कर्पट- ; $T_2$ -मुद्गर- ( for -कर्पण- ). — ( L. 1186 ) $D_{10}$ $T_{2.3}$ $G_5$ तु ( for च ). — ( L. 1189 ) $D_{10}$ $T_2$ G

शङ्खदुंदुभिनादेन नानातूर्यरवेण च ।
हयहेषितशब्देन कुञ्जराणां च बृंहितैः ।
योधानां सिंहनादैश्च घण्टानां शिञ्जितस्वनैः ।
दिशश्च विदिशश्चैव समन्ताद्बधिरीकृताः ।
ग्रीष्मान्तेषु विगर्जद्भिर्नभसीव बलाहकैः ।
रथनेमिखुरोद्धूतैररुणै रणरेणुभिः ।
कपिलाभिरिवाकाशे छाद्यमाने समन्ततः ।
प्रवृत्ते शस्त्रसंपाते योधानां तत्र सेनयोः ।
तेषां प्रहारक्षतजं रक्तचन्दनसप्रभम् ।
ते स्रवन्तः स्वगात्रेभ्यस्तरन्ते रणमूर्धनि ।
पलाशाशोकपुष्पाणां जंगमा इव राशयः ।
रणे समभिवर्तन्त उद्यतायुधपाणयः ।
शोभमाना रणे शूरा आह्वयन्तः परस्परम् ।
हन्यमानेष्वभिन्नस्तु शूरेषु रणसंकटे ।
पृष्ठं दत्त्वाथ ये तत्र नायकस्य नराधमाः ।
अनाहता निवर्तन्ते नायके वाप्यभीप्सति ।
ते दुष्कृतं प्रपद्यन्ते नायकस्याखिलं नराः ।
यच्चास्ति सुकृतं तेषां युज्यते तेन नायकः ।
अहिंसा परमो धर्म इति येऽपि नरा विदुः ।
संग्रामेषु न युध्यन्ते भृताश्चैवानुरूपतः ।
नरकं यान्ति ते घोरं भर्तृपिण्डापहारिणः ।
यस्तु प्राणान्परित्यज्य प्रविशेदुद्यतायुधः ।
संग्राममग्निप्रतिमं पतंगा इव निर्भयम् ।
सत्त्वमाविशते तत्र ज्ञात्वा योधस्य निश्चयम् ।
आविष्टश्चैव सत्त्वेन निर्घृणो जायते नरः ।
प्रहारैर्नन्दयेद्देवि सत्त्वेनाधिष्ठितो हि सः ।
प्रहारव्यथितश्चैव न वैक्लव्यमुपैति सः ।
यस्तु स्वं नायकं रक्षन्नतिघोरे रणाङ्गणे ।
तापयन्नरिसैन्यानि सिंहो मृगगणानिव ।
आदित्य इव मध्याह्ने दुर्निरीक्ष्यो रणाजिरे ।
निर्दयो यस्तु संग्रामे प्रहरत्युद्यतायुधः ।
यजते स तु पूतात्मा संग्रामेण महाक्रतुम् ।
वर्म कृष्णाजिनं तस्य दण्डकाष्ठं धनुः स्मृतम् ।
रथो वेदी ध्वजो यूपः कुशाश्च रथरश्मयः ।
मानो दर्पस्त्वहंकारस्त्रयस्त्रेताग्नयः स्मृताः ।
प्रतोदश्च स्रुवस्तस्य उपाध्यायोऽस्य सारथिः ।
स्रुग्भाण्डं चापि यत्किंचिद्यज्ञोपकरणानि च ।
आयुधान्यस्य तत्सर्वं समिधः सायकाः स्मृताः ।
स्वेदस्रावश्च गात्रेभ्यः क्षौद्रं तस्य यशस्विनः ।
पुरोडाशा नृशीर्षाणि रुधिरं चाहुतिः स्मृतम् ।
तूणश्चैव चरुर्ज्ञेयो वसोर्धारा वसा स्मृता ।
क्रव्यादा भूतसंघाश्च तस्मिन्यज्ञे द्विजातयः ।
तेषां भक्षान्नपानानि हता नृगजवाजिनः ।
भुञ्जते ते यथाकामं यथा यज्ञे किमिच्छके ।
निहतानां तु योधानां वस्त्राभरणभूषणम् ।
हिरण्यं च सुवर्णं च यद्वै यज्ञस्य दक्षिणा ।
यस्तत्र हन्यते देवि गजस्कन्धगतो नरः ।
ब्रह्मलोकमवाप्नोति रणेष्वभिमुखो हतः ।

[इ]व ( for वि- ). — ( L. 1193 ) D10 T2.3 G -संनिभं
( for -सप्रभम् ). — ( L. 1194 ) D10 T3 G1.3.4 तेषाम( D10
T3 G1 °मा )स्राणि गात्रेभ्यः ; T1 प्रस्रवतश्च गा° ; G2 तेषामा-
स्रवगा° ( for the prior half ). D10 T2 G1.3.4 स्रवंते
( for तरन्ते ). — T1 om. lines 1197–1198. — ( L.
1198 ) G4 शूरेण ( for शूरेषु ). — ( L. 1199 ) D10
T G1–3 M4 त्व ; G4 तु ( for [अ]थ ). — T1 om. line
1200. — ( L. 1200 ) G1.3 अनाहूता. T3 om. ( hapl. )
from the post. half up to the prior half of line
1204. D10 T3 G न ( for वा ). — ( L. 1201 ) T2
दुष्करं ( for दुष्कृतं ). — ( L. 1203 ) T1 ये च ; G2 केचिन्
( for येऽपि ). — ( L. 1204 ) D10 T G भृत्याश् ; M4
हताश् ( for भृताश् ). — ( L. 1207 ) M निर्भयाः ( for
निर्भयम् ). D10 T G पतंग इव निर्भयः ( for the post.
half ). — T1 om. lines 1208–1212. — ( L. 1208 )
D10 T2.3 G स्वर्गम् ( for सत्त्वम् ). D10 G1.4 ज्ञात्वा ;
T3 यत्र ( for तत्र ). D10 G4 सोऽपि ( for ज्ञात्वा ). T2 यो
यस्य गतिनिश्चयं ( for the post. half ). — ( L. 1209 ) D10
T2.3 G सघृणो ( for निर्घृणो ). — ( L. 1210 ) T3 ( also as
above ) नरः ( for हि सः ). — ( L. 1212 ) D10 T2.3 G
रक्षेद् ( for रक्षन् ). T2 M रणाकरे ( for रणाङ्गणे ). — ( L.
1214 ) G1–3 स सूर्यं ( for आदित्य ). — ( L. 1215 ) D10
T2 G प्रहरन् ; T1 प्रहरेद् ( for प्रहरति ). — ( L. 1216 )
T2 G1.3.4 M4 यस् ( for स ). T2 धर्मात्मा ( for पूतात्मा ).
— ( L. 1217 ) T G1.3 M4 चर्म ( for वर्म ). D10 T1.3
G दंत- ( for दण्ड- ). — ( L. 1218 ) D10 T1.2 G वेदिर्
( for वेदी ). ( L. 1219 ) T2.3 G2 M3 मनो- ( for मानो ).
T3 तस्य ( for त्रयस् ). — M1.3 om. ( hapl. ) lines 1220–
1222. — ( L. 1220 ) D10 G4 तपस् ( for स्रुवस् ). D10
T2.3 G हि ; M4 च ( for ऽस्य ). — ( L. 1222 ) G1.3.4
साधकाः ( for सायकाः ). — T1 om. line 1223. — ( L.
1223 ) D10 T3 G1.3.4 -स्रवं ( for -स्रावश् ). — ( L. 1224 )
D10 T G1–3 स्मृताः ; G4 तथा ( for स्मृतम् ). — ( L. 1226 )
T2 M1.3 क्रव्याद- ( for °दा ). — T1 om. lines 1227–
1228 — ( L. 1227 ) D10 T3 G1 भक्तान्न- ( for भक्षान्न- ).
M4 स्मृता ( for हता ). — ( L. 1228 ) G1 च ( for ते ).
D10 किमिच्छतां ; G1.3.4 °नि ( for °के ). — ( L. 1229 )
G च ( for तु ). T1 वीराणां ( for योधानां ). G3 om.

रथमध्यगतो वापि हयपृष्ठगतोऽपि वा ।
हन्यते यस्तु संग्रामे शक्रलोके महीयते ।
स्वर्गे हन्ता पूज्यते तैर्हतस्तत्रैव पूज्यते ।
द्वावेतौ सुखमेधेते हन्ता यश्चैव हन्यते ।
तस्मात्संग्राममासाद्य प्रहर्तव्यमभीतवत् ।
निर्भयो यस्तु संग्रामे प्रहरेदुद्यतायुधः ।
राज्ञो वल्लभतामेति कुलं भावयते स्वकम् ।
यथा नदीसहस्राणि प्रविष्टानि महोदधिम् ।
तथा सर्वे न संदेहो धर्मो धर्मभृतां वरे ।
प्रविष्टा राजधर्मेण आचार्यविनयस्तथा ।
वेदोक्ताश्चैव ये धर्माः पाषण्डेषु च कीर्तिताः ।
तथैव मानवा धर्मा धर्माश्चान्ये तथापरे ।
देशजातिकुलानां च ग्रामधर्मास्तथैव च ।
ये धर्माः पार्वतीयेषु ये धर्माः पत्तनादिषु ।
तेषां पूर्वप्रवृत्तानां कर्तव्यं परिरक्षणम् ।
धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः ।
तस्माद्धर्मो न हन्तव्यः पार्थिवेन विशेषतः ।
प्रजाः पालयते यत्र धर्मेण वसुधाधिपः ।
षट्कर्मनिरता विप्राः पूज्यन्ते पितृदेवताः ।
नैव तस्मिन्ननावृष्टिर्न रोगा नाप्युपद्रवाः ।
धर्मशीलाः प्रजाः सर्वाः स्वधर्मनिरते नृपे ।
एष्टव्यः सततं देवि युक्ताचारो नराधिपः ।
छिद्रज्ञश्चैव शत्रूणामप्रमत्तः प्रतापवान् ।
शत्रवः पृथिव्यां बहवो राज्ञां बहुविनाशकाः ।
तस्मात्प्रमादं सुश्रोणि न कुर्यात्पण्डितो नृपः ।
तेषु मित्रेषु त्यक्तेषु तथा मर्त्येषु हस्तिषु ।
विस्रम्भो नोपगन्तव्यः स्नानपानेषु नित्यशः ।
राज्ञो वल्लभतामेति कुलं भावयते स्वकम् ।
यस्तु राष्ट्रहितार्थाय गोब्राह्मणकृते तथा ।
बन्दिग्राहाय मित्रार्थे प्राणांस्त्यजति दुस्त्यजान् ।
सर्वकामदुघां धेनुं धरणीं लोकधारिणीम् ।
समुद्रान्तां वरारोहे सशैलवनकाननाम् ।
दद्याद्देवि द्विजातिभ्यो वसुपूर्णां वसुंधराम् ।
न तत्समं वरारोहे प्राणत्यागी विशिष्यते ।
सहस्रमपि यज्ञानां यजते यदि चर्द्धिमान् ।
यज्ञैस्तस्य किमाश्चर्यं प्राणत्यागः सुदुष्करः ।
तस्मात्सर्वेषु यज्ञेषु शस्त्रयज्ञो विशिष्यते ।
एवं संग्रामयज्ञास्ते यथातत्त्वमुदाहृताः ।

Colophon.

महेश्वरः ।

मृगयात्रां तु वक्ष्यामि शृणु तां धर्मचारिणि ।
मृगान्हत्वा महीपालो यथा पापैर्न लिप्यते ।
निर्मानुषामिमां सर्वे मृगा इच्छन्ति मेदिनीम् ।
भक्षयन्ति च सस्यानि शासितव्या नृपेण ते ।
दुष्टानां शासनं धर्मः शिष्टानां परिपालनम् ।
कर्तव्यं भूमिपालेन नित्यं कार्येषु चार्जवम् ।
स्वर्गं मृगाश्च गच्छन्ति स्वयं नृपतिना हताः ।
यथा गावो ह्यगोपालास्तथा राष्ट्रमनायकम् ।
तस्मादंशास्तु देवानां गन्धर्वोरगरक्षसाम् ।
राज्ये नियुक्ता राष्ट्रेषु प्रजापालनकारणात् ।
अशिष्टशासने चैव शिष्टानां परिपालने ।
तेषां चर्यां प्रवक्ष्यामि श्रूयतामनुपूर्वशः ।
यथा प्रचरतां तेषां पार्थिवानां यशस्विनि ।
राष्ट्रं धर्मो धनं चैव यशः कीर्तिश्च वर्धते ।

(hapl.) from the post half of line 1234 up to the prior half of line 1238. — (L. 1235) $D_{10}$ T $G_{1,3,4}$ स्वर्गे हताः प्रपूज्यंते (for the prior half). $D_{10}$ $T_{2,3}$ $G_{1,2,4}$ हंता त्वत्र (for हतस्तत्र). — $G_3$ om. lines 1237–1256. — (L. 1238) $T_1$ $G_{1,3}$ M प्रहराति (for °रेद्). — $D_{10}$ T $G_{1,3,4}$ $M_4$ om. line 1239. — (L. 1241) $D_{10}$ $T_2$ धर्मे धर्मभृतां वरं; $T_{1,3}$ $G_{1,3}$ धर्माधर्मभृतां वरे ($G_{1,3}$ °रं) (for the post. half). — $T_1$ om. line 1242. — (L. 1242) $D_{10}$ $T_3$ $G_{1,3,4}$ आचार- (for °र्य-). $T_1$ om. (hapl.) from the post. half of line 1243 up to the prior half of line 1244. — (L. 1244) $G_{1,3,4}$ च (for [ए]व). $D_{10}$ $T_{2,3}$ मानुषा (for मानवा). $D_{10}$ $T_2$ $G_4$ [इ]तरे (for [अ]परे). $T_1$ धर्माश्चैव तु मानवाः (for the post. half). — (L. 1245) $T_1$ देशजाः कुलजाश्चैव (for the prior half). — (L. 1246) $D_{10}$ $T_1$ ये धर्माः पट्टनादिषु (for the post. half). — Lines 1248–1249 = (var.) Manu. 8. 15. — $T_1$ om. line 1251. — (L. 1251) $G_3$ स्वकर्म- (for षट्कर्म-). — (L. 1253) $G_{1,3}$ सत्यधर्मरतैर्नृपैः (for the post. half). — (L. 1254) $T_1$ यष्टव्यः (for एष्टव्यः). $G_3$ एष्टव्यं देवि सततं (for the prior half). — $T_1$ om. lines 1255–1260. — (L. 1258) $G_{1,3}$ भृत्येषु (for मर्त्येषु). — (L. 1262) $T_1$ प्राणत्यागः सुदुष्करः (for the post. half). — $G_1$ om. lines 1266–1269. — (L. 1270) $D_{10}$ T G यथार्थं स( $T_1$ °वत्स )मुदाहृताः (for the post. half.). — Colophon. — *Adhy. name:* $T_{2,3}$ $M_{1,2,4}$ उमामहेश्वरसंवादः. — *Adhy. no.:* $T_1$ $G_3$ $M_1$ 191; $T_{2,3}$ $G_4$ 197; $M_{2,3}$ 192; $M_4$ 190. — $M_1$ om. (hapl. ?) from the post. half of line 1272 up to the prior half of line 1276. — (L. 1273) $T_1$ गच्छंति (for इच्छन्ति). — (L. 1278) $M_{1,4}$ अराजकं (for अनायकम्). — $T_1$ om. lines 1281–1284. — (L. 1282) $T_3$ चैषां (for चर्यां). — $T_3$ om. lines 1283–1287.

नृपाणां पूर्वमेवायं धर्मो धर्मभृतां वरे ।
सभाप्रपातटाकानि देवतायतनानि च ।
ब्राह्मणावसथाश्चैव कर्तव्या नृपसत्तमैः ।
ब्राह्मणा नावमन्तव्या भस्मच्छन्ना इवाग्नयः ।
कुलमुत्सादयेयुस्ते क्रोधाविष्टा द्विजातयः ।
धमायमानो यथा ह्यग्निर्निर्दहेद्धेत्सर्वमिन्धनम् ।
तथा क्रोधाग्निना विप्रा दहेयुः पृथिवीमिमाम् ।
न हि विप्रेषु क्रुद्धेषु राज्यं भुञ्जन्ति भूमिपाः ।
परिभूय द्विजान्मोहाद्वातापिनहुषादयः ।
सबन्धुमित्रा नष्टास्ते दग्धा ब्राह्मणमन्युभिः ।
शरीरं चापि शक्रस्य कृतं भगनिरन्तरम् ।
ततो देवगणाः सर्वे इन्द्रस्यार्थे महामतिम् ।
प्रसादं कारयामासुः प्रणामस्तुतिवन्दनैः ।
तेन प्रीतेन सुश्रोणि गौतमेन महात्मना ।
तच्छरीरं तु शक्रस्य सहस्रभगचिह्नितम् ।
कृतं नेत्रसहस्रेण क्षणेनैव निरन्तरम् ।
छित्त्वा मेषस्य वृषणौ गौतमेनाभिमन्त्रितौ ।
इन्द्रस्य वृषणौ भूत्वा क्षिप्रं वै श्लेषमागतौ ।
एवं विप्रेषु क्रुद्धेषु देवराजः शतक्रतुः ।
अशक्तः शासितुं राज्यं किं पुनर्मानुषो भुवि ।
क्रोधाविष्टो दहेद्विप्रः शुष्केन्धनमिवानलः ।
भस्मीकृत्य जगत्सर्वं सृजेदन्यज्जगत्पुनः ।
अदेवानपि देवान्स कुर्याद्देवानदेवताः ।
तस्मान्नोत्पादयेन्मन्युं मन्युप्रहरणा द्विजाः ।
महत्स्वप्यपराधेषु शासनं नार्हति द्विजः ।
न च शस्त्रनिपातानि न च प्राणैर्वियोजनम् ।
दृश्यते त्रिषु लोकेषु ब्राह्मणानामनिन्दिते ।
क्रोधाश्च विपुला घोराः प्रसादाश्चाप्यनुत्तमाः ।
तस्मान्नोत्पादयेत्क्रोधं नित्यं पूज्या द्विजातयः ।
दृश्यते न स लोकेऽस्मिन्भूतो वाथ भविष्यति ।
क्रुद्धेषु यो वै विप्रेषु राज्यं भुङ्क्ते नराधिपः ।
न चैवोपहसेद्विप्रान्न चैवोपालभेच्च तान् ।
कालमासाद्य कुप्येच्च काले कुर्यादनुग्रहम् ।
संप्रहासश्च भृत्येषु न कर्तव्यो नराधिपैः ।
लघुत्वं चैव प्राप्नोति आज्ञा चास्य निवर्तते ।
भृत्यानां संप्रहासेन पार्थिवः परिभूयते ।
अयाच्यानि च याचन्ति अवक्तव्यं ब्रुवन्ति च ।
पूर्वमप्युचितैर्लाभैः परितोषं न यान्ति ते ।
तस्माद्भृत्येषु नृपतिः संप्रहासं विवर्जयेत् ।
न विश्वसेदविश्वस्ते विश्वस्ते च न विश्वसेत् ।
सगोत्रेषु विशेषेण सर्वोपायैर्न विश्वसेत् ।
विश्वासाद्भयमुत्पन्नं हन्याद्वृक्षमिवाशनिः ।
प्रमादाद्धन्यते राजा लोभेन च वशीकृतः ।
तस्मात्प्रमादं लोभं च न कुर्यान्न च विश्वसेत् ।
भयार्तानां परित्राता दीनानुग्रहकारकः ।
तस्मात्कृत्यविशेषज्ञो नित्यं राष्ट्रहिते रतः ।
सत्यसंधः स्थितो राज्ये प्रजापालनतत्परः ।
अलुब्धो न्यायवादी च षड्भागं चोपजीवति ।
कार्याकार्यविशेषज्ञः सर्वं धर्मेण पश्यति ।
स्वराष्ट्रेषु दयां कुर्यादकार्यं न प्रवर्तते ।
ये चैवैनं प्रशंसन्ति ये च निन्दन्ति मानवाः ।
शत्रुं च मित्रवत्पश्येदपराधविवर्जितम् ।
अपराधानुरूपेण दुष्टं दण्डेन शासयेत् ।
धर्मः प्रवर्तते तत्र यत्र दण्डरुचिर्नृपः ।

— ( L. 1289 ) $D_{10}$ $T_1$ मूलम् ( for कुलम् ). — ( L. 1290 ) $T_3$ धार्यमाणो ( for धमायमानो ). $T_1$ वह्निर् ( for ह्यग्निर् ). $T_1$ M दहेत्सर्वमपींधनं ( for the post. half ). — ( L. 1292 ) $G_{1-3}$ न हि क्रुद्धेषु विप्रेषु ( for the prior half ). — ( L. 1293 ) $T_3$ यथा हि ( for वातापि- ). — ( L. 1296 ) $G_{1.3}$ $M_4$ -मुनिं ( for -मतिम् ). — ( L. 1297 ) $D_{10}$ $G_3$ प्रमादं कामयामासुः ( for the prior half ). $G_{1.3.4}$ प्रसाद- ( for प्रणाम- ). — ( L. 1299 ) $T_2$ -निर्मितं ( for -चिह्नितम् ). — ( L. 1301 ) $G_{1.3}$ [अ]स्य मेष- ( for मेषस्य ). — ( L. 1304 ) $D_{10}$ मानुषा ( for °षो ). — ( L. 1316 ) $D_{10}$ T $G_{1.3.4}$ [अ]प- ( for [उ]प- ). $T_1$ विद्वान् ( for विप्रान् ). — ( L. 1317 ) $G_{1.3}$ कुप्याच्च ( for कुप्येच्च ). — ( L. 1319 ) $T_1$ तस्य ( for चास्य ). — ( L. 1321 ) $G_2$ अयुद्धानि ( for अयाच्यानि ). — ( L. 1322 ) $T_1$ क्रूरैर् ( for पूर्वम् ). $G_{1.3.4}$ पूर्वमप्यर्पितैर्लोभैः ( for the prior half ). — ( L. 1323 ) $T_1$ परिहासं विसर्जयेत् ( for the post. half ).

— Line 1324 = ( var. ) 12. 136. $138^{ab}$ ; 136. 318*, line 1. — ( L. 1324 ) $M_{1-3}$ अविश्वस्तं ( for °स्ते ). $D_{10}$ T $G_{1-3}$ $M_{1.3}$ न च ( by transp. ); $G_4$ नाति- ; $M_4$ om. — $G_2$ om. ( hapl. ) lines 1325–1328. — Line 1326 = ( var. ) 12. 136. $138^{cd}$. — ( L. 1326 ) $T_1$ विश्वस्ताद् ( for विश्वासाद् ). — ( L. 1328 ) $M_{1.3}$ प्रसादं ( for प्रमादं ). $T_3$ च कुर्यान्न ( for कुर्यान्न च ). — ( L. 1329 ) $D_{10}$ T $G_{2-4}$ $M_4$ भयत्राता ( for परि° ). $T_{2.3}$ $G_{3.4}$ -कारणात् ( for -कारकः ). — $T_1$ om. line 1330. — ( L. 1330 ) $D_{10}$ $T_2$ G कार्याकार्य- ( for तस्मात्कृत्य- ). $D_{10}$ om. the post. half and the prior half of line 1331. — ( L. 1332 ) $T_1$ षड्भागकृतजीविनः ( for the post. half ). — ( L. 1333 ) $T_{2.3}$ $G_{2.4}$ $M_{1-3}$ सर्वं- ( for सर्वं ). — ( L. 1334 ) $G_{2.3}$ अकार्ये ( for °र्यं ). $T_1$ प्रवर्तयेत् ( for °र्तते ). — ( L. 1337 ) $G_2$ दुष्टान् ( for दुष्टं ). — ( L. 1338 ) $T_1$ यत्र दंडः प्रवर्तते ( for the post. half ).

नाधर्मो विद्यते तत्र यत्र राजा क्षमान्वितः ।
अशिष्टशासनं धर्मः शिष्टानां परिपालनम् ।
वध्यांश्च घातयेद्यस्तु अवध्यान्परिरक्षति ।
अवध्या ब्राह्मणा गावो दूतश्चैव पिता तथा ।
विद्यां ग्राहयते यश्च ये च पूर्वोपकारिणः ।
स्त्रियश्चैव न हन्तव्या यश्च सर्वातिथिर्नरः ।
धरणीं गां हिरण्यं च सिद्धान्नं च तिलान्घृतम् ।
ददन्नित्यं द्विजातिभ्यो मुच्यते राजकिल्बिषात् ।
एवं चरति यो नित्यं राजा राष्ट्रहिते रतः ।
तस्य राष्ट्रं धनं धर्मो यशः कीर्तिश्च वर्धते ।
न च पापैर्न चानर्थैर्युज्यते स नराधिपः ।
षड्भागमुपयुञ्जन्यः प्रजा राजा न रक्षति ।
स्वचक्रपरचक्राभ्यां धनैर्वा विक्रमेण वा ।
निरुद्योगो नृपो यश्च परराष्ट्रनिघातने ।
स्वराष्ट्रं निष्प्रतापस्य परचक्रेण हन्यते ।
यत्पापं परचक्रस्य परचक्राभिघातने ।
तत्पापं सकलं राजा हतराष्ट्रः प्रपद्यते ।
मातुलं भागिनेयं वा मातरं श्वशुरं गुरुम् ।
पितरं वर्जयित्वैकं हन्याद्धातकमागतम् ।
स्वस्य राष्ट्रस्य रक्षार्थं युध्यमानस्तु यो हतः ।
संग्रामे परचक्रेण श्रूयतां तस्य या गतिः ।
विमाने तु वरारोहे अप्सरोगणसेविते ।
शक्रलोकमितो याति संग्रामे निहतो नृपः ।
यावन्तो लोमकूपाः स्युस्तस्य गात्रेषु सुन्दरि ।
तावद्वर्षसहस्राणि शक्रलोके महीयते ।
यदि वै मानुषे लोके कदाचिदुपपद्यते ।
राजा वा राजमात्रो वा भूयो भवति वीर्यवान् ।
तस्माद्यत्नोऽनुकर्तव्यः स्वराष्ट्रपरिपालने ।
व्यवहारश्च चारश्च सततं सत्यसंधता ।
अप्रमादः प्रमोदश्च व्यवसायेऽप्यचण्डता ।
भरणं चैव भृत्यानां वाहनानां च पोषणम् ।
योधानां चैव सत्कारः कृते कर्मण्यमोघता ।
श्रेय एव नरेन्द्राणामिह चैव परत्र च ।

Colophon.

महेश्वरः ।

पशवः पशुबन्धेषु ये हन्यन्तेऽध्वरेषु च ।
यूपे निबद्धा मन्त्रैश्च यथान्यायं यथाविधि ।
मन्त्राहुतिविपूतास्ते स्वर्गं यान्ति यशस्विनि ।
तर्पिता यज्ञभागेषु तेषां मांसैर्वरानने ।
अग्नयस्त्रिदशाश्चैव लोकपालाः महेश्वराः ।
तेषु तुष्टेषु जायेत तस्य यज्ञस्य यत्फलम् ।
तेन संयुज्यते देवि यजमानो न संशयः ।
सपत्नीकः सपुत्रः स स पितृभ्रातृभिः सह ।
ये तत्र दीक्षिता देवि सर्वे स्वर्गं प्रयान्ति ते ।
एतत्ते सर्वमाख्यातं भूयः श्रोतुं किमिच्छसि ।

उमा ।

भगवन्सर्वभूतेश शूलपाणे महाद्युते ।
श्रोतुमिच्छाम्यहं वृत्तं सर्वेषां गृहमेधिनाम् ।
कीदृशं चरितं तेषां त्रिवर्गसहितं प्रभो ।
प्रत्यायतिः कथं तेषां जीवनार्थमुदाहृतम् ।

— (L. 1339) $T_1$ $G_2$ M वर्तेत (for विद्यते). — $T_1$ om. line 1341. — (L. 1342) $D_{10}$ $T_{1.3}$ $G_{3.4}$ दूताश् (for दूतश्). $T_3$ [अ]पि (for [ए]व). — (L. 1343) $G_2$ श्रावयते (for ग्राह°). — (L. 1346) $T_1$ मुच्यते महतो भयात् (for the post. half). — $T_1$ om. lines 1349–1351. — (L. 1349) $M_4$ [ऽ]सौ (for स). — (L. 1350) $G_{1.3}$ $M_4$ -युंजानः (for -युञ्जन्यः). — (L. 1351) $D_{10}$ $T_2$ $G_{1.3.4}$ धर्मैर् (for धनैर्). — $G_3$ om. (hapl.) from the post. half of line 1352 up to the prior half of line 1354. $D_{10}$ $T_3$ om. (hapl.) lines 1353–1354. $T_1$ om. (hapl.) line 1354. — (L. 1354) $T_3$ $G_{1.3.4}$ M परराष्ट्राभिघातने (for the post. half). — (L. 1355) $T_3$ यत् (for तत्). — (L. 1356) $T_1$ $G_{1.2}$ $M_{1.4}$ च (for वा). — (L. 1358) $M_{1.3}$ तस्य (for स्वस्य). $T_1$ राज्यस्य (for राष्ट्रस्य). — (L. 1360) $G_{1-3}$ M विमानेन (for °ने तु). $T_1$ $G_{1-3}$ M -सेवितः (for °ते). — (L. 1362) $G_{1.3}$ च (for स्युस्). — (L. 1365) $M_{2.3}$ राजपुत्रो (for °मात्रो). — (L. 1366) $D_{10}$ T G $M_4$ तस्माद्यत्नेन कर्तव्यं (for the prior half). $D_{10}$ T G $M_{1.4}$ -पालनं (for °ने). — (L. 1367) $T_1$ व्यवहारविचारश्च (for the prior half). — (L. 1368) $T_3$ $M_1$ प्रमादश् (for प्रमोदश्). $T_1$ [अ]तंद्रिता (for [अ]चण्डता). — (L. 1371) $T_1$ एवं श्रेयो (for श्रेय एव). — Colophon. — *Adhy. name :* $D_{10}$ $T_{2.3}$ $G_2$ उमामहेश्वरसंवादे राष्ट्ररक्षणफलवर्णनं ; M उमामहेश्वरसंवादः. — *Adhy. no. :* $D_{10}$ $T_{2.3}$ $G_{2.4}$ 198 ; $G_{1.3}$ $M_1$ 192 ; $M_{2.3}$ 193 ; $M_4$ 191. — $T_1$ महेशः (for महेश्वरः). — (L. 1373) $D_{10}$ $T_3$ G निबध्य (for निबद्धा). — (L. 1374) $T_1$ -विधूतास् (for -विपू°). — (L. 1375) $T_3$ -भक्षेषु (for -भागेषु). — (L. 1377) $G_3$ om. (hapl.) तुष्टेषु. $G_{1.3}$ तत् (for यत्). $T_1$ यज्ञभागस्य यत्फलं (for the post. half). — $T_1$ om. lines 1379–1381. — (L. 1379) $D_{10}$ $T_{2.3}$ G च (for स). $D_{10}$ $T_{2.3}$ G पित्रा च ; $M_4$ स पित्रा (for स पितृ-). — (L. 1381) $D_{10}$ $T_{2.3}$ G किं भूयः श्रोतुमिच्छसि (for the post. half). — $T_1$ om. lines 1382–1388. — (L. 1383) $G_{1-3}$ -वासिनां (for -मेधिनाम्). — $T_3$ $G_{1.3}$ om. (hapl.) the post. half of line 1384 and the prior

तथा संवर्तमानास्तु लोकयोर्हितमाप्नुयुः ।
काल्योत्थानं च शौचं च देवब्राह्मणभक्तता ।
गुरूणामेव शुश्रूषा ब्राह्मणेष्वभिवादनम् ।
प्रत्युत्थानं च वृद्धानां देवस्थानप्रणामनम् ।
आभिमुख्यं पुरस्कृत्य अतिथीनां च भोजनम् ।
वृद्धोपदेशकरणं श्रवणं हितपथ्ययोः ।
पोषणं भृत्यवर्गस्य सान्त्वदानपरिग्रहैः ।
न्यायतः कर्मकरणमन्यायाहितवर्जनम् ।
सम्यग्वृत्तं स्वदारेषु दोषाणां प्रतिषेधनम् ।
पुत्राणां विनयं कुर्यात्तत्तत्कार्ये नियोजयेत् ।
वर्जनं चाशुभार्थानां शुभानां जोषणं तथा ।
कुलोचितानां धर्माणां यथावत्परिपालनम् ।
वर्जनं कलहादीनां भक्त्या संशमनं तथा ।
सतां व्यसनसंयोगे स्वशक्त्याभ्यवपत्तिता ।
दीनानां संग्रहं चैव नानृशंस्यव्यपेक्षया ।
अबद्धानृतघोराणां वचनानां विवर्जनम् ।
कुलसंधारणं चैव पौरुषेणैव सर्वशः ।
एवमादि शुभं सर्वं तस्य वृत्तमिति स्मृतम् ।
वृद्धसेवी भवेन्नित्यं हितार्थं ज्ञानकाङ्क्षया ।
परार्थं नाहरेद्द्रव्यमनामन्त्र्य तु सर्वदा ।
न याचेत परान्धीरः स्वबाहुबलमाश्रयेत् ।
स्वशरीरं सदा रक्षेदाहाराचारयोरपि ।
हितं पथ्यं सदाहारं जीर्णं भुञ्जीत मात्रया ।
देवतातिथिसत्कारं कृत्वा सर्वं यथाविधि ।
शेषं भुञ्जेच्छुचिर्भूत्वा न च भाषेत विप्रियम् ।
प्रतिश्रयं च पानीयं वलिं भिक्षां च सर्वशः ।
गृहस्थः प्रवहेद्द्याद्गाश्च वत्सांश्च पोषयेत् ।
बहिर्निष्क्रमणं चैव कुर्यात्कारणतो दिवा ।
मध्याह्ने वार्धरात्रे वा गमनं नैव रोचयेत् ।
विषमान्नावगाहेत स्वशक्त्या सममाचरेत् ।
यथायव्ययता लोके गृहस्थानां प्रपूजिता ।
अयशस्करमर्थघ्नं कर्म यत्परपीडनम् ।
भयाद्वा यदि वा लोभान्न कुर्वीत कदाचन ।
बुद्धिपूर्वं समालोक्य दूरतो गुणदोषतः ।
आरभेत तदा कर्म शुभं वा यदि वेतरत् ।
आत्मा साक्षी भवेन्नित्यमात्मनस्तु शुभाशुभे ।
मनसा कर्मणा वाचा न च काङ्क्षेत पातकम् ।

Colophon.

उमा ।

भगवन्भगनेत्रघ्न कालसूदन शंकर ।
इमे तु वर्णाश्चत्वारो विहिताः स्वित्स्वभावतः ।
उताहो क्रियया वर्णाः संभवन्ति महेश्वर ।
एष मे संशयप्रश्नस्तं मे छेत्तुं त्वमर्हसि ।

महेश्वरः ।

स्वभावादेव विद्यन्ते चत्वारो ब्राह्मणादयः ।
एकजात्याः सुदुष्प्रापमन्यवर्णत्वमागतम् ।

---

$G_4$ स्वर्ग्यं च परमं यशः ( for the post. half ). — ( L. 1476 ) $G_{1.4}$ -वर्गो हि ( for -वर्गं च ). $D_{10}$ $T_2$ $G_{2.3}$ $M_4$ त्रिवर्गो हि ( $M_4$ °र्गेपि ) वशे युक्तः ( for the prior half ). — ( L. 1477 ) $T_2$ तथा संवर्तमानस्तु ( for the prior half ). $T_2$ आप्नुयात् ( for °युः ). — ( L. 1478 ) $G_{3.4}$ कल्योत्थानं ( for का° ). $D_{10}$ $T_{2.3}$ $G_{1-3}$ -भक्तितः ( for -भक्तता ). — ( L. 1479 ) $G_2$ अपि ( for एव ). — ( L. 1481 ) $D_{10}$ T $G_{2-4}$ $M_4$ पूजनं ( for भो° ). — ( L. 1484 ) $T_3$ $G_{1-3}$ -वर्जितं ( for -वर्जनम् ). — ( L. 1485 ) $G_2$ दोषं प्रति निषेधनं ( for the post. half ). — ( L. 1486 ) M नियोजनं ( for °जयेत् ). $D_{10}$ T $G_{2.4}$ तत्तत्कार्यनियोजनं ( for the post. half ). — $T_1$ om. line 1487. $D_{10}$ T G $M_4$ om. ( hapl. ) lines 1489–1492. — ( L. 1493 ) $G_4$ च ( for the second [ए]व ). — $T_1$ om. line 1494. — ( L. 1494 ) $D_{10}$ इदं ( for इति ). $D_{10}$ $T_3$ $G_1$ स्थितं ( for स्मृतम् ). — ( L. 1495 ) $G_{1.3}$ हितार्थी ( for °र्थं ). — $G_2$ om. lines 1496–1500. — ( L. 1496 ) $T_1$ परस्वं नाहरेद्विद्वान् ( for the prior half ). $T_1$ om. the post. half and the prior half of line 1497. — ( L. 1499 ) $M_{1-3}$ सदाहाराज् ( for °हारं ). $M_{1-3}$ जीर्णो ( for जीर्णं ). — ( L. 1502 ) $D_{10}$ $T_{2.3}$ $G_{1.3.4}$ $M_4$ च सर्वतः ; $T_1$ प्रदापयेत् ( for च सर्वशः ). — $T_1$ om. line 1503. — ( L. 1503 ) $D_{10}$ $T_3$ $G_{2-4}$ $M_4$ गृहस्थवासी व्रतवद् ( $G_3$ सततं द )द्याद्गाश्चैव पोषयेत्. — ( L. 1504 ) $D_{10}$ T $G_{2-4}$ $M_4$ [ऽ]पि वा ( for दिवा ). — ( L. 1505 ) $G_{1-3}$ गमनाय न ( for °न नैव ). $T_1$ कारयेत् ( for रोच° ). — $T_1$ om. lines 1506–1511. — ( L. 1506 ) $D_{10}$ $T_2$ G $M_4$ विषयान् ( for °मान् ). $D_{10}$ $T_2$ G स्वशक्त्या तु समाचरेत् ( for the post. half ). — ( L. 1507 ) $G_1$ च ; $G_2$ [अ]स्य ( for [आ]य- ). $D_{10}$ $T_3$ $G_{2.4}$ प्रपूजितं ; $G_3$ °जनं ( for °जिता ). — ( L. 1509 ) $T_{2.3}$ $G_{1.3.4}$ $M_4$ लोभाद्वा ( by transp. ). — ( L. 1510 ) $G_{1.3}$ $M_4$ पुरतो ( for दू° ). — ( L. 1511 ) $M_{2.3}$ ततः ( for तदा ). — ( L. 1512 ) $D_{10}$ T G $M_3$ आत्म- ( for आत्मा ). $T_1$ कुर्याच्चैवात्मनः शुभं ( for the post. half ). — Colophon. — *Adhy. name* : $D_{10}$ $T_{2.3}$ $G_2$ M उमामहेश्वरसंवादः. — *Adhy. no.* : $D_{10}$ $T_{2.3}$ $G_{2.4}$ $M_3$ 199 ; $T_1$ $G_{1.3}$ $M_1$ 193 ; $M_2$ 194 ; $M_4$ 191. — ( L. 1515 ) $D_{10}$ $T_{2.3}$ $G_4$ वर्णाश्च ; $G_{1.3}$ च वर्णास्तु ( for तु व° ). $D_{10}$ $T_2$ $G_{2-4}$ $M_4$ स्व- ; $T_1$ स्युः ( for स्वित् ). — After line 1515, $T_1$ ins. :

तच्च कर्म विशेषेण पुनर्जन्मनि जायते ।
तस्मात्ते संप्रवक्ष्यामि तत्सर्वं कर्म पाकतः ।
ब्राह्मणस्तु नरो भूत्वा स्वजातिमनुपालयेत् ।
दृढं ब्राह्मणकर्माणि वेदोक्तानि समाचरेत् ।
सत्यार्जवपरो भूत्वा दानयज्ञपरस्तथा ।
तस्यां जात्यां समुदितो जातिधर्मान्न हापयेत् ।
एवं संवर्तमानस्तु कालधर्मं गतः पुनः ।
स्वर्लोके चाभिजायेत स्वर्गभोगाय भामिनि ।
तत्क्षये ब्राह्मणो भूत्वा तथैव नृपु जायते ।
एवं स्वकर्मणा मर्त्यः स्वजातिं लभते पुनः ।
अपरस्तु तथा कश्चिद्ब्रह्मयोनिसमुद्भवः ।
अवमत्यैव तां जातिमज्ञानतमसावृतः ।
अन्यथा वर्तमानस्तु जातिकर्माणि वर्जयेत् ।
शूद्रवद्विचरेल्लोके शूद्रकर्माभिलाषया ।
शूद्रैः सह चरन्नित्यं शौचमङ्गलवर्जितः ।
स चापि कालधर्मस्थो यमलोकेषु दण्डितः ।
यदि जायेत मर्त्येषु शूद्र एवाभिजायते ।
शूद्र एव भवेद्देवि ब्राह्मणोऽपि स्वकर्मणा ।
तथैव शूद्रस्त्वपरः शूद्रकर्माणि वर्जयन् ।
सत्यार्जवपरो भूत्वा दानधर्मपरस्तथा ।
मन्त्रब्राह्मणसत्कर्ता मनसा ब्राह्मणप्रियः ।
एवंयुक्तसमाचारः शूद्रोऽपि मरणं गतः ।
स्वर्गलोकेऽभिजायेत तत्क्षये नृपु जायते ।
ब्राह्मणानां कुले मुख्ये वेदस्वाध्यायसंयुते ।
एवमेव सदा लोके शूद्रो ब्राह्मण्यमाप्नुयात् ।
एवं क्षत्रियवैश्याश्च जातिधर्मेण संयुताः ।
स्वकर्मणैव जायन्ते विशिष्टेष्वधमेषु च ।
एवं जातिविपर्यासः प्रेत्यभावे भवेन्नृणाम् ।
अन्यथा तु न शक्यन्ते लोकसंस्थितिकारणात् ।
तस्माज्जातिं विशिष्टां तु कथंचित्प्राप्य पण्डितः ।
सर्वथा तां ततो रक्षेन्न पुनर्भ्रश्यते यथा ।
इति ते कथितं देवि भूयः श्रोतुं किमिच्छसि ।

उमा ।

जन्मप्रभृति कैः शुद्धो लभेज्जन्मफलं नरः ।
शोभनाशोभनं सर्वमधिकारवशात्स्वयम् ।

महेश्वरः ।

कर्म कुर्वन्न लिप्येत आर्जवेन समाचरन् ।
आत्मैव तच्छुभं कुर्यादशुभे नैव योजयेत् ।
शठेषु शठवत्कुर्यादार्येष्वृजुवदाचरेत् ।
आपत्सु नावसीदेच्च घोरान्संक्रामयेत्परान् ।
साम्नैव सर्वकार्याणि कर्तुं पूर्वं समारभेत् ।
अनर्थधर्मशोकांस्तु यथा न प्राप्नुयात्स्वयम् ।
प्रयतेत तथा कर्तुमेतद्वृत्तं समासतः ।
एतद्वृत्तं समासाद्य गृहमाश्रित्य मानवाः ।
निराबाधा निरुद्वेगाः प्राप्नुवन्त्युत्तमां गतिम् ।
एतज्जन्मफलं नित्यं सर्वेषां गृहवासिनाम् ।
एवं गृहगतैर्नित्यं वर्तितव्यमिति स्थितिः ।
एतत्सर्वं मया प्रोक्तं किं भूयः श्रोतुमिच्छसि ।

---

पुनर्भवन्तु प्रीत्यापि त एव स्युस्त्रिलोचन ।

— $T_1$ om. (hapl.) lines 1516–1521. — (L. 1517) $D_{10}$ $T_{2,3}$ एवं; $G_{1,4}$ om.; $G_{2,3}$ $M_4$ एतं (for एष). — (L. 1519) Ms एवं (for एक-). $G_{1,3}$ आगताः (for °तम्). — (L. 1521) $D_{10}$ $T_{2,3}$ $G_{2-4}$ तेषां प्र- (for ते संप्र-). $D_{10}$ पातकं; $G_{2,3}$ पाकजं (for °तः). $T_3$ तत्सर्वं कृतपातकः (for the post. half). — $G_3$ om. (hapl.) from the post. half of line 1522 up to the prior half of line 1524. — (L. 1522) $D_{10}$ T $G_{1,2,4}$ -पालयन् (for °येत्). — (L. 1523) $T_1$ समाचरन् (for °ेत्). — $T_1$ om. line 1525. — (L. 15:5) $D_{10}$ $T_{2,3}$ $G_{2-4}$ सत्यां (for तस्यां). $T_2$ जातिधर्मं न भावयेत् (for the post. half). — (L. 1526) $T_{1,3}$ कालधर्म-. — $G_3$ om. (hapl.) lines 1527–1529. — (L. 1527) T $G_{1,4}$ स्वर्गलोके हि जा( $T_{1,2}$ $G_1$ °केभिजा)येत (for the prior half). $T_3$ -लोकाय (for -भोगाय). — $G_3$ om. lines 1528–1529. — (L. 1533) $T_{2,3}$ G $M_4$ शूद्रकर्माभिलाषवान् (for the post. half). — (L. 1535) $T_{2,3}$ $G_{2,4}$ काले (for काल-). — (L. 1538) $T_3$ शूद्रेषु (for शूद्रस्तु). — (L. 1542) Ta -लोके हि; $G_4$ -लोकेषु (for -लोकेऽभि-). — (L. 1543) $G_{1-3}$ -संकुले (for -संयुते). — $T_1$ om. line 1548. — (L. 1548) $D_{10}$ $T_{2,3}$ G $M_4$ शक्यं तत् (for शक्यन्ते). — (L. 1550) $D_{10}$ $T_{1,2}$ $G_{2-4}$ $M_4$ तथा; $T_3$ सदा (for ततो). $T_2$ दृश्यते (for भ्रश्यते). — (L. 1551) $G_{3,4}$ किं भूयः श्रोतुमिच्छसि (for the post. half). — (L. 1552) $G_{1-3}$ कः (for कैः). — (L. 1553) $M_{1-3}$ अधिकारि- (for °कार-). $D_{10}$ $T_{1,2}$ $G_{2-4}$ $M_4$ स्वकं; $T_3$ वद (for स्वयम्). — (L. 1554) $D_{10}$ $T_{2,3}$ $G_{2-4}$ समाचरेत् (for °चरन्). — (L. 1555) $T_1$ आत्मना (for आत्मैव). $D_{10}$ S (except $G_4$) अशुभे योजयेत्परान् (for the post. half). — (L. 1556) $D_{10}$ $G_4$ आर्जवम्; $T_1$ ऋजुरिव; $T_2$ $G_{1,3}$ आर्यवद् (for ऋजुवद्). — (L. 1557) $T_3$ $G_{2,3}$ $M_4$ संग्रामयेत् (for संक्राम°). $D_{10}$ $G_4$ योधान्संग्रामयेत्परान् (for the post. half). — (L. 1558) $T_3$ $G_4$ साम्नेन (for साम्नैव). $T_1$ समाचरेत् (for °रभेत्). — (L. 1559) $D_{10}$ $T_2$ G -शोकानां (for -शोकांस्तु). — (L. 1561) $D_{10}$ T $G_{1,2}$ एवं (for एतद्). — (L. 1562) $D_{10}$ T G $M_4$ निराहारा (for °बाधा). — $T_1$ om. lines 1563–1566. — (L.

उमा ।

सुरासुरपते देव वरद प्रीतिवर्धन ।
मानुषेष्वेव ये केचिदाढ्याः क्लेशविवर्जिताः ।
भुञ्जाना विविधान्भोगान्दृश्यन्ते निरुपद्रवाः ।
अपरे क्लेशसंयुक्ता दरिद्रा भोगवर्जिताः ।
किमर्थं मानुषे लोके न समत्वेन कल्पिताः ।
एतच्छ्रोतुं महादेव कौतूहलमतीव मे ।

महेश्वरः ।

न्यायतस्त्वं महाभागे श्रोतुकामासि भामिनि ।
शृणु तत्सर्वमखिलं मानुषाणां हितं वचः ।
आदिसर्गे पुरा ब्रह्मा समत्वेनासृजत्प्रजाः ।
नित्यं न भवतो ह्यस्य रागद्वेषौ प्रजापतेः ।
तदा तस्मात्समाः सर्वे बभूवुः सर्वतो नराः ।
एवं संवर्तमाने तु युगे कालविपर्ययात् ।
केचित्प्रपेदिरे तत्र विषमं बुद्धिमोहिताः ।
तेषां हानिं ततो दृष्ट्वा तुल्यानामेव भामिनि ।
ब्रह्माणं ते समाजग्मुस्तत्कारणनिवेदकाः ।
कर्तुं नार्हसि देवेश पक्षपातं त्वमीदृशम् ।
पुत्रभावे समे देव किमर्थं नो भवेत्कलिः ।
इत्येवं तैरुपालब्धो ब्रह्मा वचनमब्रवीत् ।
यूयं मा कार्ष्ट मे रोषं स्वकृतं स्मरत प्रजाः ।
युष्माभिरेव युष्माकं ग्रथितं हि शुभाशुभम् ।
यादृशं कुरुते कर्म तादृशं फलमश्नुते ।
स्वकृतस्य फलं भुङ्क्ते नान्यस्तद्भोक्तुमर्हति ।
एवं संबोधितास्तेन लोककर्त्रा स्वयंभुवा ।
पुनर्निवृत्य कर्माणि शुभान्येव प्रपेदिरे ।
एवं विज्ञाततत्त्वास्ते दानधर्मपरायणाः ।
शुभानि विधिवत्कृत्वा कालधर्मगताः पुनः ।
तानि दानफलान्येव भुञ्जते सुखभोगिनः ।
स्वकृतं तु नरस्तस्मात्स्वयमेव प्रपद्यते ।
अपरे धर्मकार्येभ्यो निवृत्तास्तु शुभेक्षणे ।
कदर्या निरनुक्रोशाः प्रायेणात्मपरायणाः ।
तादृशा मरणं प्राप्ताः पुनर्जन्मनि शोभने ।
दरिद्राः क्लेशसंयुक्ता भवन्त्येव न संशयः ।

उमा ।

मानुषेष्वेव ये केचिद्धनधान्यसमन्विताः ।
भोगहीनाः प्रदृश्यन्ते सर्वभोगेषु सत्स्वपि ।
न भुञ्जते किमर्थं ते तन्मे शंसितुमर्हसि ।

महेश्वरः ।

परैः संचोदिता धर्मं कुर्वते न स्वकामतः ।
स्वयं श्रद्धां बहिष्कृत्य कुर्वन्ति च रुदन्ति च ।
तादृशा मरणं प्राप्ताः पुनर्जन्मनि शोभने ।
फलानि तानि संप्राप्य भुञ्जते न कदाचन ।
रक्षन्तो वर्धयन्तश्च आसते निधिपालवत् ।

उमा ।

केचिद्धनवियुक्ताश्च भोगयुक्ता महेश्वर ।
मानुषाः संप्रदृश्यन्ते तन्मे शंसितुमर्हसि ।

महेश्वरः ।

आनृशंस्यपरा ये तु धर्मकामाश्च दुर्गताः ।
परोपकारं कुर्वन्ति दीनानुग्रहकारणात् ।
प्रतिदद्युः परधनं नष्टं वान्यैर्हृतं धनम् ।
नित्यं ये दातुमनसो नरा वित्तेष्वसत्स्वपि ।
कालधर्मवशं प्राप्ताः पुनर्जन्मनि ते नराः ।
एते धनवियुक्ताश्च भोगयुक्ता भवन्त्युत ।

---

1564 ) $D_{10}$ $T_{2}$ $G_{4}$ -स्तैर् ( for -गतैर् ). — ( L. 1567 ) $T_{1}$ लोके ( for केचिद् ). $T_{1}$ आढ्याः कोशविवर्धनाः ( for the post. half ). — ( L. 1568 ) $T_{2}$ मानुषान् ( for विविधान् ). $T_{1}$ ससुखा ( for दृश्यन्ते ). — ( L. 1569 ) $T_{1}$ केचित्क्लेशेन संयुक्ता ( for the prior half ). — ( L. 1570 ) $G_{1,3}$ समत्वेन न कल्पिताः ( for the post. half ). — $T_{1}$ महेशः ( for महेश्वरः ). — ( L. 1572 ) $G_{2,3}$ सु- ( for त्वं ). — $T_{1}$ om. line 1575. — ( L. 1576 ) $G_{4}$ तथा ( for तदा ). $D_{10}$ $T_{2,3}$ $G_{2-4}$ सुराः ; $M_{4}$ सदा ( for समाः ). — $T_{2}$ om. line 1579. — ( L. 1579 ) $D_{10}$ हि नंदनां ; $T_{3}$ हि स ततो ( for हानिं ततो ). — ( L. 1580 ) $D_{10}$ $T_{2,3}$ $G_{2-4}$ M ब्राह्मणास्तु ( for ब्रह्माणं ). $D_{10}$ $T_{2,3}$ $G_{1}$ तत्कारण- ( for कारणनि- ). — ( L. 1583 ) $D_{10}$ $T_{2,3}$ $G_{2,4}$ एवमेतैर् ; $G_{3}$ स एवं तैर् ( for इत्येवं तैर् ). — $T_{1}$ om. line 1584. — ( L. 1584 ) $D_{10}$ $T_{2,3}$ G कृत ( for कार्ष्ट ). — ( L. 1587 ) $G_{3}$ योक्तुम् ( for भो° ). — ( L. 1588 ) $T_{2}$ तै तु ( for तेन ). $D_{10}$ T G काल- ( for लोक- ). — ( L. 1589 ) $T_{1}$ निवृत्ताः ( for °त्य ). — $M_{1-3}$ om. line 1590. — ( L. 1590 ) $T_{1}$ $G_{2,3}$ $M_{4}$ एवं विज्ञाय मर्त्यास्ते ( for the prior half ). — ( L. 1591 ) $D_{10}$ $T_{1}$ $G_{1-3}$ M कालधर्मं ( for °धर्म- ). — ( L. 1592 ) $G_{1,2}$ -भागिनः ( for -भोगिनः ). — ( L. 1593 ) $M_{4}$ च ( for तु ). — ( L. 1594 ) $T_{1}$ $G_{2,3}$ $M_{4}$ कर्म- ( for धर्म- ). $D_{10}$ $T_{2,3}$ $G_{1}$ -कामेभ्यो ( for -कार्येभ्यो ). $D_{10}$ $T_{2,3}$ G च ( for तु ). — ( L. 1596 ) $T_{3}$ तादृशं ( for °शा ). — ( L. 1597 ) $D_{10}$ T $G_{2-4}$ $M_{4}$ -भूयिष्ठा ( for -संयुक्ता ). — ( L. 1599 ) $T_{2}$ भोगहीनेषु सत्स्वपि ( for the post. half ). — $G_{3}$ om. ( hapl. ) lines 1601–1607. — ( L. 1601 ) $G_{1,3}$ प्र- ( for सं- ). $T_{2}$ स्वकर्मतः ( for स्वकामतः ). — ( L. 1602 ) $T_{2}$ धर्मश्रद्धां पुरस्कृत्य ( for the prior half ). — ( L. 1608 ) $T_{1}$ -कामार्थ- ( for -कामाश्च ). $G_{1-3}$ सत्वराः ( for दुर्गताः ). — ( L. 1610 ) $D_{10}$ $T_{3}$ परिदद्युः ( for प्रति° ). $D_{10}$ T $G_{1,2,4}$ नष्टं

धर्मदानोपदेशं वा कर्तव्यमिति निश्चयः ।
इति ते कथितं देवि किं भूयः श्रोतुमिच्छसि ।

Colophon.

उमा ।

भगवन्देवदेवेश त्रियक्ष वृषभध्वज ।
मानुषास्त्रिविधा देव दृश्यन्ते सततं विभो ।
आसीना एव भुञ्जन्ते स्थानैश्वर्यपरिग्रहैः ।
अपरे यत्नपूर्वं तु लभन्ते भोगसंग्रहम् ।
अपरे यतमानास्तु लभन्ते न तु किंचन ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

न्यायतस्त्वं महाभागे श्रोतुकामासि भामिनि ।
ये लोके मानुषा देवि दानधर्मपरायणाः ।
पात्राणि विधिवज्ज्ञात्वा दूरतो ह्यनुमानतः ।
अभिगम्य स्वयं तत्र ग्राहयन्ति प्रसाद्य च ।
दानानि चेङ्गितैरेव तैरविज्ञातमेव वा ।
पुनर्जन्मनि देवेशि तादृशाः शोभना नराः ।
अयत्नतस्तु तान्येव फलानि प्राप्नुवन्त्युत ।
आसीना एव भुञ्जन्ते भोगान्सुकृतभोगिनः ।
अपरे ये च दानानि ददत्येव प्रयाचिताः ।
यथा यथा ते दीनत्वात्पुनर्दास्यन्ति याचिताः ।
तावत्कालं तथा देवि पुनर्जन्मनि ते नराः ।
यत्नतः श्रमसंयुक्ताः पुनस्तान्याप्नुवन्त्युत ।
याचिता अपि ये केचिन्न ददत्येव किंचन ।
अभ्यसूयापरा मर्त्या लोभोपहतचेतसः ।
ते पुनर्जन्मनि शुभे यतन्ते बहुधा नराः ।
न प्राप्नुवन्ति मनुजा मार्गन्तस्तेऽपि किंचन ।
नानुप्तं रोहते सस्यं तद्वद्दानफलं विदुः ।
यद्यद्ददाति पुरुषस्तत्तत्प्राप्नोति केवलम् ।
इति ते कथितं देवि भूयः श्रोतुं किमिच्छसि ।

उमा ।

भगवन्भगनेत्रघ्न केचिद्वार्द्धकसंयुताः ।
अभोगयोग्यकाले तु भोगांश्चैव धनानि च ।
लभन्ते स्थविरा भूत्वा भोगैश्वर्यं यतस्ततः ।
येन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

हन्त ते कथयिष्यामि शृणु तत्त्वं समाहिता ।
धर्मकार्यं चिरं कालं विस्मृत्य धनसंयुताः ।
प्राणान्तकाले संप्राप्ते व्याधिभिश्च निपीडिताः ।
आरभन्ते पुनर्धर्मं दातुं दानानि वा नराः ।
ते पुनर्जन्मनि शुभे भूत्वा दुःखपरिप्लुताः ।
अतीतयौवने काले स्थविरत्वमुपागताः ।
लभन्ते पूर्वदत्तानां फलानि शुभलक्षणे ।
एवं कर्मफलं देवि कालयोगाद्भवत्युत ।

(for हृतं धनम्). —(L. 1611) $T_3$ वै (for ये). —(L. 1613) $D_{10}$ $T_{2.3}$ $G_{1.3.4}$ $M_4$ -विहीनाश् (for -वियुक्ताश्). $T_1$ एते धर्मविहीनाश्च (for the prior half). —(L. 1614) $T_1$ धर्मं (for धर्म-). — Colophon. *Sub-parvan* : $M_{1-3}$ दानधर्म. — *Adhy. name* : $D_{10}$ उमामहेश्वरसंवादे भोगानुभवविधिः; $T_{2.3}$ उमामहेश्वरसंवादे भोगाभोगविधिः; $G_2$ उमामहेश्वरसंवादे भोगविधिः; M उमामहेश्वरसंवादः. — *Adhy. no.* : $D_{10}$ $T_{2.3}$ $G_{2.4}$ 200; $T_1$ $G_{1.3}$ $M_1$ 194; $M_{2.3}$ 195; $M_4$ 192. —(L. 1616) $M_{2.3}$ त्र्यक्ष- (submetric) (for त्रियक्ष). —(L. 1619) $T_2$ लभते (for °न्ते). $G_{1.3}$ M -संग्रहान् (for °हम्). —(L. 1620) $G_{1.3}$ इतरे (for अपरे). $D_{10}$ T $G_{1-3}$ $M_4$ च (for the first तु). —(L. 1621) $T_2$ धर्म- (for कर्म-). — $T_1$ महेशः; $G_2$ शिवः (for महेश्वरः). — $T_1$ om. line 1622. —(L. 1622) $T_{2.3}$ $M_3$ भामिनी. —(L. 1623) $T_2$ $G_2$ लोका (for लोके). $D_{10}$ मानुषे (for °षा). —(L. 1624) $D_{10}$ T G $M_4$ [ऽ]पि (for हि). — $T_2$ reads lines 1625–1628 after line 1633. —(L. 1625) $T_1$ ग्राहयित्वा (for °यन्ति). —(L. 1626) $D_{10}$ दानादि (for °नि). $T_3$ $G_{1.3}$ एव (for अवि-). —(L. 1627) $D_{10}$ T $G_{1.3.4}$ ते देवि; $G_2$ ते दत्त्वा (for देवेशि). —(L. 1628) $T_2$ तान्देवि (for तान्येव). — $G_2$ om. (hapl.) lines 1629–1633. —(L. 1630) $D_{10}$ अपरेण च; $T_1$ °रे चैव; $T_2$ °रे चापि (for °रे ये च). — $D_{10}$ $M_4$ om. (hapl.) line 1631. —(L. 1631) $T_1$ तथा (for the second यथा). $T_{2.3}$ $G_{1.3.4}$ यदा यदार्थिने ($T_2$ °नो) दत्त्वा (for the prior half). $T_{2.3}$ $G_{1.3.4}$ दानं च (for दास्यन्ति). —(L. 1632) $D_{10}$ $T_{2.3}$ $G_{1.3.4}$ ततो (for तथा) —(L. 1633) $D_{10}$ $T_{1.2}$ $G_{1.3.4}$ पुनस्तान्प्राप्नुवंति च (for the post. half). —(L. 1634) $T_3$ मम; $G_{1.3}$ $M_{1.2.4}$ त्वपि (for अपि). $T_{2.3}$ $G_{1.3.4}$ केचित्तु (for ये केचिन्). $D_{10}$ $G_2$ तु ददत्येव किंचन; $T_{1.2}$ ददत्येव न किंचन; $G_{1.3.4}$ अदत्त्वैव कथंचन (for the post. half). —(L. 1635) $G_2$ अनसूयापरा मर्त्या (for the prior half). —(L. 1636) $T_1$ $G_{1-3}$ M यतंतो (for यतन्ते). —(L. 1640) $D_{10}$ $T_{1.2}$ $G_{3.4}$ किं भूयः श्रोतुमिच्छसि (for the post. half). —(L. 1641) $D_{10}$ $T_1$ G $M_4$ वार्धक्य-; $T_3$ वा धर्म- (for वार्द्धक-). —(L. 1643) $T_3$ $G_{1.3.4}$ $M_4$ भूता (for भूत्वा). $T_1$ भोगैश्वर्ययुतास्ततः (for the post. half). — $T_1$ महेशः (for महेश्वरः). —(L. 1648) $D_{10}$ धर्मान् (for धर्मं). — $G_4$ om. (hapl.) lines 1650–1653. $G_2$ om. (hapl.) lines

उमा ।

सुरासुरपते देव वरद प्रीतिवर्धन ।
मानुषेष्वेव ये केचिदाढ्याः क्लेशविवर्जिताः ।
भुञ्जाना विविधान्भोगान्दृश्यन्ते निरुपद्रवाः ।
अपरे क्लेशसंयुक्ता दरिद्रा भोगवर्जिताः ।
किमर्थं मानुषे लोके न समत्वेन कल्पिताः ।
एतच्छ्रोतुं महादेव कौतूहलमतीव मे ।

महेश्वरः ।

न्यायतस्त्वं महाभागे श्रोतुकामासि भामिनि ।
शृणु तत्सर्वमखिलं मानुषाणां हितं वचः ।
आदिसर्गे पुरा ब्रह्मा समत्वेनासृजत्प्रजाः ।
नित्यं न भवतो ह्यस्य रागद्वेषौ प्रजापतेः ।
तदा तस्मात्समाः सर्वे बभूवुः सर्वतो नराः ।
एवं संवर्तमाने तु युगे कालविपर्ययात् ।
केचित्प्रपेदिरे तत्र विषमं बुद्धिमोहिताः ।
तेषां हानिं ततो दृष्ट्वा तुल्यानामेव भामिनि ।
ब्रह्माणं ते समाजग्मुस्तत्कारणनिवेदकाः ।
कर्तुं नार्हसि देवेश पक्षपातं त्वमीदृशम् ।
पुत्रभावे समे देव किमर्थं नो भवेत्कलिः ।
इत्येवं तैरुपालब्धो ब्रह्मा वचनमब्रवीत् ।
यूयं मा कार्ष्ट मे रोषं स्वकृतं स्मरत प्रजाः ।
युष्माभिरेव युष्माकं ग्रथितं हि शुभाशुभम् ।
यादृशं कुरुते कर्म तादृशं फलमश्नुते ।
स्वकृतस्य फलं भुङ्क्ते नान्यस्तद्भोक्तुमर्हति ।
एवं संबोधितास्तेन लोककर्त्रा स्वयंभुवा ।
पुनर्निवृत्य कर्माणि शुभान्येव प्रपेदिरे ।
एवं विज्ञाततत्त्वास्ते दानधर्मपरायणाः ।
शुभानि विधिवत्कृत्वा कालधर्मगताः पुनः ।
तानि दानफलान्येव भुञ्जते सुखभोगिनः ।
स्वकृतं तु नरस्तस्मात्स्वयमेव प्रपद्यते ।
अपरे धर्मकार्येभ्यो निवृत्तास्तु शुभेक्षणे ।
कदर्या निरनुक्रोशाः प्रायेणात्मपरायणाः ।
तादृशा मरणं प्राप्ताः पुनर्जन्मनि शोभने ।
दरिद्राः क्लेशसंयुक्ता भवन्त्येव न संशयः ।

उमा ।

मानुषेष्वेव ये केचिद्धनधान्यसमन्विताः ।
भोगहीनाः प्रदृश्यन्ते सर्वभोगेषु सत्स्वपि ।
न भुञ्जते किमर्थं ते तन्मे शंसितुमर्हसि ।

महेश्वरः ।

परैः संचोदिता धर्मं कुर्वते न स्वकामतः ।
स्वयं श्रद्धां बहिष्कृत्य कुर्वन्ति च रुदन्ति च ।
तादृशा मरणं प्राप्ताः पुनर्जन्मनि शोभने ।
फलानि तानि संप्राप्य भुञ्जते न कदाचन ।
रक्षन्तो वर्धयन्तश्च आसते निधिपालवत् ।

उमा ।

केचिद्धनवियुक्ताश्च भोगयुक्ता महेश्वर ।
मानुषाः संप्रदृश्यन्ते तन्मे शंसितुमर्हसि ।

महेश्वरः ।

आनृशंस्यपरा ये तु धर्मकामाश्च दुर्गताः ।
परोपकारं कुर्वन्ति दीनानुग्रहकारणात् ।
प्रतिदद्युः परधनं नष्टं वान्यैर्हृतं धनम् ।
नित्यं ये दातुमनसो नरा वित्तेष्वसत्स्वपि ।
कालधर्मवशं प्राप्ताः पुनर्जन्मनि ते नराः ।
एते धनवियुक्ताश्च भोगयुक्ता भवन्त्युत ।

---

1564 ) $D_{10}$ $T_2$ $G_4$ -रतैर् ( for -गतैर् ). — ( L. 1567 ) $T_1$ लोके ( for केचिद् ). $T_1$ आढ्याः कोशविवर्धनाः ( for the post. half ). — ( L. 1568 ) $T_2$ मानुषान् ( for विविधान् ). $T_1$ ससुखा ( for दृश्यन्ते ). — ( L. 1569 ) $T_1$ केचित्क्लेशेन संयुक्ता ( for the prior half ). — ( L. 1570 ) $G_{1.3}$ समत्वेन न कल्पिताः ( for the post. half ). — $T_1$ महेशः ( for महेश्वरः ). — ( L. 1572 ) $G_{2.3}$ सु- ( for त्वं ). — $T_1$ om. line 1575. — ( L. 1576 ) $G_4$ तथा ( for तदा ). $D_{10}$ $T_{2.3}$ $G_{2-4}$ सुराः ; $M_4$ सदा ( for समाः ). — $T_2$ om. line 1579. — ( L. 1579 ) $D_{10}$ हि नंदनां ; $T_3$ हि स ततो ( for हानिं ततो ). — ( L. 1580 ) $D_{10}$ $T_{2.3}$ $G_{2-4}$ M ब्राह्मणास् ( for ब्रह्माणं ). $D_{10}$ $T_{2.3}$ $G_4$ तत्कारण- ( for कारणनि- ). — ( L. 1583 ) $D_{10}$ $T_{2.3}$ $G_{2.4}$ एवमेतैर् ; $G_3$ स एवं तैर् ( for इत्येवं तैर् ). — $T_1$ om. line 1584. — ( L. 1584 ) $D_{10}$ $T_{2.3}$ G ब्रूत ( for कार्ष्ट ). — ( L. 1587 ) $G_2$ योक्तुम् ( for भो° ). — ( L. 1588 ) $T_2$ ते तु ( for तेन ). $D_{10}$ T G काल- ( for लोक- ). — ( L. 1589 ) $T_1$ निवृत्ताः ( for °त्य ). — $M_{1-3}$ om. line 1590. — ( L. 1590 ) $T_1$ $G_{2.3}$ $M_4$ एवं विज्ञाय मर्त्यास्ते ( for the prior half ). — ( L. 1591 ) $D_{10}$ $T_1$ $G_{1-3}$ M कालधर्मं ( for °धर्म- ). — ( L. 1592 ) $G_{1.2}$ -भागिनः ( for -भोगिनः ). — ( L. 1593 ) $M_4$ च ( for तु ). — ( L. 1594 ) $T_1$ $G_{2.3}$ $M_4$ कर्म- ( for धर्म- ). $D_{10}$ $T_{2.3}$ $G_4$ -कामेभ्यो ( for -कार्येभ्यो ). $D_{10}$ $T_{2.3}$ G च ( for तु ). — ( L. 1596 ) $T_3$ तादृशं ( for °शा ). — ( L. 1597 ) $D_{10}$ T $G_{2-4}$ $M_4$ -भूयिष्ठा ( for -संयुक्ता ). — ( L. 1599 ) $T_2$ भोगहीनेषु सत्स्वपि ( for the post. half ). — $G_2$ om. ( hapl. ) lines 1601–1607. — ( L. 1601 ) $G_{1.3}$ प्र- ( for सं- ). $T_2$ स्वकर्मतः ( for स्वकामतः ). — ( L. 1602 ) $T_2$ धर्मश्रद्धां पुरस्कृत्य ( for the prior half ). — ( L. 1608 ) $T_1$ -कामार्थ- ( for -कामाश्च ). $G_{1-3}$ नतराः ( for दुर्गताः ). — ( L. 1610 ) $D_{10}$ $T_2$ परिदद्युः ( for प्रति° ). $D_{10}$ T $G_{1.2.4}$ नरैर्हृतं

धर्मदानोपदेशो वा कर्तव्यमिति निश्चयः ।
इति ते कथितं देवि किं भूयः श्रोतुमिच्छसि ।

Colophon.

उमा ।

भगवन्देवदेवेश त्रिचक्ष वृषभध्वज ।
मानुषास्त्रिविधा देव दृश्यन्ते सततं विभो ।
आसीना एव भुञ्जन्ते स्थानैश्वर्यपरिग्रहैः ।
अपरे यत्नपूर्वं तु लभन्ते भोगसंग्रहम् ।
अपरे यतमानास्तु लभन्ते न तु किंचन ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

न्यायतस्त्वं महाभागे श्रोतुकामासि भामिनि ।
ये लोके मानुषा देवि दानधर्मपरायणाः ।
पात्राणि विधिवज्ज्ञात्वा दूरतो ह्यनुमानतः ।
अभिगम्य स्वयं तत्र ग्राहयन्ति प्रसाद्य च ।
दानानि चेङ्गितैरेव तैरविज्ञातमेव वा ।
पुनर्जन्मनि देवेशि तादृशाः शोभना नराः ।
अयत्नतस्तु तान्येव फलानि प्राप्नुवन्त्युत ।
आसीना एव भुञ्जन्ते भोगान्सुकृतभोगिनः ।
अपरे ये च दानानि ददत्येव प्रयाचिताः ।
यथा यथा ते दीनत्वात्पुनर्दास्यन्ति याचिताः ।
तावत्कालं तथा देवि पुनर्जन्मनि ते नराः ।
यत्नतः श्रमसंयुक्ताः पुनस्तान्याप्नुवन्त्युत ।
याचिता अपि ये केचिन्न ददत्येव किंचन ।
अभ्यसूयापरा मर्त्या लोभोपहतचेतसः ।
ते पुनर्जन्मनि शुभे यतन्ते बहुधा नराः ।
न प्राप्नुवन्ति मनुजा मार्गन्तस्तेऽपि किंचन ।
नानुप्तं रोहते सस्यं तद्दानफलं विदुः ।
यद्यद्ददाति पुरुषस्तत्तत्प्राप्नोति केवलम् ।
इति ते कथितं देवि भूयः श्रोतुं किमिच्छसि ।

उमा ।

भगवन्भगनेत्रघ्न केचिद्वार्द्धकसंयुताः ।
अभोगयोग्यकाले तु भोगांश्चैव धनानि च ।
लभन्ते स्थविरा भूत्वा भोगैश्वर्यं यतस्ततः ।
येन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

हन्त ते कथयिष्यामि शृणु तत्त्वं समाहिता ।
धर्मकार्यं चिरं कालं विस्मृत्य धनसंयुताः ।
प्राणान्तकाले संप्राप्ते व्याधिभिश्च निपीडिताः ।
आरभन्ते पुनर्धर्मं दातुं दानानि वा नराः ।
ते पुनर्जन्मनि शुभे भूत्वा दुःखपरिप्लुताः ।
अतीतयौवने काले स्थविरत्वमुपागताः ।
लभन्ते पूर्वदत्तानां फलानि शुभलक्षणे ।
एवं कर्मफलं देवि कालयोगाल्लभन्त्युत ।

---

(for हृतं धनम्). — (L. 1611) T3 वै (for ये). — (L. 1613) D10 T2.3 G1.3.4 M4 -विहीनाश्च (for -वियुक्ताश्च). T1 एते धर्मविहीनाश्च (for the prior half). — (L. 1614) T1 धर्म (for धर्म-). — Colophon. *Sub-parvan :* M1-3 दानधर्म. — *Adhy. name :* D10 उमामहेश्वरसंवादे भोगानुभवविधिः; T2.3 उमामहेश्वरसंवादे भोगाभोगविधिः; G2 उमामहेश्वरसंवादे भोगविधिः; M उमामहेश्वरसंवादः. — *Adhy. no. :* D10 T2.3 G3.4 200; T1 G1.3 M1 194; M2.3 195; M4 192. — (L. 1616) M2.3 त्र्यक्ष- (submetric) (for त्रियक्ष). — (L. 1619) T2 लभते (for °न्ते). G1.3 M -संग्रहान् (for °हम्). — (L. 1620) G1.3 इतरे (for अपरे). D10 T G1-3 M4 च (for the first तु). — (L. 1621) T2 धर्म- (for कर्म-). — T1 महेशः; G2 शिवः (for महेश्वरः). — T1 om. line 1622. — (L. 1622) T2.3 M3 भामिनी. — (L. 1623) T2 G2 लोका (for लोके). D10 मानुषे (for °षा). — (L. 1624) D10 T G M4 [5]पि (for हि). — T2 reads lines 1625-1628 after line 1633. — (L. 1625) T1 ग्राहयित्वा (for °यन्ति). — (L. 1626) D10 दानादि (for °नि). T3 G1.3 एव (for अवि-). — (L. 1627) D10 T G1.3.4 ते देवि; G2 ते दत्त्वा (for देवेशि). — (L. 1628) T2 तान्देवि (for तान्येव). — G2 om. (hapl.) lines 1629-1633. — (L. 1630) D10 अपरेण च; T1 °रे चैव; T2 °रे चापि (for °रे ये च). — D10 M4 om. (hapl.) line 1631. — (L. 1631) T1 तथा (for the second यथा). T2.3 G1.3.4 यदा यदार्थिने (T2 °नो) दत्त्वा (for the prior half). T2.3 G1.3.4 दानं च (for दास्यन्ति). — (L. 1632) D10 T2.3 G1.3.4 ततो (for तथा) — (L. 1633) D10 T1.2 G1.3.4 पुनस्तान्प्राप्नुवंति च (for the post. half). — (L. 1634) T3 मम; G1.3 M1.3.4 त्वपि (for अपि). T2.3 G1.3.4 केचित्तु (for ये केचिन्). D10 G2 तु ददत्येव किंचन; T1.2 ददत्येव न किंचन; G1.3.4 अदत्त्वैव कथंचन (for the post. half). — (L. 1635) G2 अनसूयापरा मर्त्या (for the prior half). — (L. 1636) T1 G1-3 M यतंतो (for यतन्ते). — (L. 1640) D10 T1.2 G3.4 किं भूयः श्रोतुमिच्छसि (for the post. half). — (L. 1641) D10 T1 G M1 वार्धक्य-; T3 ना धर्म- (for वार्द्धक-). — (L. 1643) T2 G1.3.4 M4 भूता (for भूत्वा). T1 भोगैश्वर्ययुतास्ततः (for the post. half). — T1 महेशः (for महेश्वरः). — (L. 1648) D10 धर्मान् (for धर्मं). — G4 om. (hapl.) lines 1650-1653. G2 om. (hapl.) lines

उमा ।
भोगयुक्ता महादेव केचिद्व्याधिपरिप्लुताः ।
असमर्थाश्च तान्भोक्तुं भवन्ति किमु कारणम् ।
महेश्वरः ।
व्याधियोगपरिक्लिष्टा ये निराशाः स्वजीविते ।
आरभन्ते तदा कर्तुं दानानि शुभलक्षणे ।
ते पुनर्जन्मनि शुभे प्राप्य तानि फलान्युत ।
असमर्थाश्च तान्भोक्तुं व्याधितास्ते भवन्त्युत ।
उमा ।
भगवन्देवदेवेश मानुषेष्वेव केचन ।
रूपयुक्ताः प्रदृश्यन्ते शुभाङ्गा प्रियदर्शनाः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।
महेश्वरः ।
हन्त ते कथयिष्यामि शृणु तत्त्वं समाहिता ।
ये पुरा मनुजा देवि लज्जायुक्ताः प्रियंवदाः ।
शक्ताः सुमधुरा नित्यं भूत्वा चैव स्वभावतः ।
अमांसभोजिनश्चैव सदा प्राणिदयायुताः ।
प्रतिकर्मप्रदा चापि वस्त्रदा धर्मकारणात् ।
भूमिशुद्धिकरा चापि कारणादग्निपूजकाः ।
एवंयुक्तसमाचाराः पुनर्जन्मनि ते नराः ।
रूपेण स्पृहणीयास्तु भवन्त्येव न संशयः ।
उमा ।
विरूपाश्च प्रदृश्यन्ते मानुषेष्वेव केचन ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।
महेश्वरः ।
तदहं ते प्रवक्ष्यामि शृणु कल्याणि कारणम् ।
रूपयोगात्पुरा मर्त्या दर्पाहंकारसंयुताः ।
विरूपहासकाश्चैव स्तुतिनिन्दादिभिर्भृशम् ।
परोपतापिनश्चैव मांसादाश्च तथैव च ।
अभ्यसूयापराश्चैव अशुद्धाश्च तथैव च ।
एवंयुक्तसमाचारा यमलोके सुदण्डिताः ।
कथंचित्प्राप्य मानुष्यं तत्र ते रूपवर्जिताः ।
विरूपाः संभवन्त्येव नास्ति तत्र विचारणा ।
उमा ।
भगवन्देवदेवेश केचित्सौभाग्यसंयुताः ।
रूपभोगविहीनाश्च दृश्यन्ते प्रमदाप्रियाः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।
महेश्वरः ।
ये पुरा मनुजा देवि सौम्यशीलाः प्रियंवदाः ।
स्वदारैरेव संतुष्टा दारेषु समवृत्तयः ।
दाक्षिण्येनैव वर्तन्ते प्रमदास्वप्रियास्वपि ।
न तु प्रत्यादिशन्त्येव स्त्रीदोषान्गुह्यसंश्रितान् ।
अन्नपानीयदाः काले नृणां स्वादुप्रदाश्च ये ।
स्वदारवर्तिनश्चैव धृतिमन्तो निरत्ययाः ।
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
मानुषास्ते भवन्त्येव सततं सुभगा भृशम् ।
अर्थहीनेऽपि ते देवि भवन्ति प्रमदाप्रियाः ।
उमा ।
दुर्भगाः संप्रदृश्यन्ते आढ्या भोगयुता अपि ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।
महेश्वरः ।
तदहं ते प्रवक्ष्यामि शृणु सर्वं समाहिता ।
ये पुरा मनुजा देवि स्वदारेष्वनपेक्षया ।
यथेष्टवृत्तयश्चैव निर्लज्जा वीतसंभ्रमाः ।
परेषां विप्रियकरा वाङ्मनःकायकर्मभिः ।
निराश्रया निरन्नाद्याः स्त्रीणां हृदयकोपनाः ।

1651–1653. —( L. 1651 ) $T_3$ -दानानां ( for -दत्तानां ). —( L. 1652 ) $D_{10}$ $T_{2.3}$ $G_{1.3}$ $M_4$ एतत् ( for एवं ). — $M_1$ om. ( hapl. ) lines 1653–1658. —( L. 1654 ) $T_3$ om. ( hapl. ) from the post. half up to the prior half of line 1658. $D_{10}$ किल ( for किमु ). —( L. 1658 ) $T_2$ च ( for ते ). —( L. 1660 ) $T_1$ ( second time ) भवंत्येव ; $T_2$ च दृश्यंते ( for प्रदृ° ). $T_1$ ( second time ) शुभ- ( for प्रिय- ). — After line 1661, $T_1$ ins. :

महेशः ।
दृष्ट्वा परेषां रूपं च नाभ्यसूयन्ति ये नराः ।

— After the above, $T_1$ repeats line 1660.

— $G_{3.4}$ $M_1$ om. the ref. $T_1$ om. lines 1662–1669. —( L. 1663 ) $D_{10}$ $T_2$ $G_{1-3}$ मानुषा ( for मनुजा ). —( L. 1667 ) $D_{10}$ $G_4$ शुचि ( for भूमि- ). —( L. 1668 ) $G_2$ न पुनर्जन्मिनो नराः ( for the post. half ). —( L. 1670 ) $T_3$ $G_{1.3.4}$ सं- ( for च ). $T_1$ भवंत्यन्ये ( for प्रदृश्यन्ते ). $T_1$ विकृतांगाश्च केन च ( for the post. half ). —( L. 1671 ) $T_1$ दृश्यंते कर्मणा केन ( for the prior half ). — $T_1$ om. line 1672. —( L. 1674 ) $T_3$ $G_4$ विरूपा ( for विरूप- ). $T_1$ परेषामुपतापिनः ( for the post. half ). — $T_1$ om. lines 1675–1676. —( L. 1675 ) $T_2$ $G_{1-3}$ मांसादाश्चैव निंदकाः ( for the post. half ). —( L. 1676 ) $D_{10}$ $T_{2.3}$ G $M_4$ तथा ( $G_2$ °दा° ) नराः ( for तथैव च ). —( L. 1677 ) $D_{10}$ यल्लोके हि ( for यमलोके ). —( L. 1678 ) $T_1$ विरूपास्ते भवंत्युत ( for the post. half ). —( L. 1680 ) $G_{1-3}$ काय- ( for केचित् ). — $T_1$ महेशः ( for महेश्वरः ). —( L. 1683 ) $D_{10}$ $T_2$ मानुषा ( for मनुजा ). $T_1$ om. ( hapl. ) from the post. half up to the prior half of line 1695. —( L. 1686 ) $G_1$ damaged ; $G_2$ न तु प्रत्यादिशन्देवि ( for the prior half ). $D_{10}$ $T_{2.3}$ $G_{2-4}$ गुण- ( for गुह्य- ).

एवंयुक्तसमाचाराः पुनर्जन्मनि ते नराः ।
दुर्भगाः संभवन्त्येव स्त्रीणां हृदयविप्रियाः ।
नास्ति तेषां रतिसुखं स्वदारेष्वपि किंचन ।

Colophon.

उमा ।

भगवन्देवदेवेश मानुषेष्वेव केचन ।
ज्ञानविज्ञानसंपन्ना बुद्धिमन्तो विचक्षणाः ।
दुर्गतास्तु प्रदृश्यन्ते यतमाना यथाविधि ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

तदहं ते प्रवक्ष्यामि शृणु कल्याणि कारणम् ।
ये पुरा मनुजा देवि श्रुतवन्तोऽपि केवलम् ।
निराश्रया निरन्नाद्या भृशमात्मपरायणाः ।
ते पुनर्जन्मनि शुभे ज्ञानबुद्धियुता अपि ।
निष्किंचना भवन्त्येव अनुप्तं न हि रोहति ।

उमा ।

मूर्खा लोके प्रदृश्यन्ते दृढं मूढा विचेतसः ।
ज्ञानविज्ञानरहिताः समृद्धाश्च समन्ततः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

ये पुरा मनुजा देवि बालिशा अपि सर्वतः ।
समाचरन्ति दानानि दीनानुग्रहकारणात् ।
अबुद्धिपूर्वं वदतां ददत्येव यतस्ततः ।
ते पुनर्जन्मनि शुभे प्राप्नुवन्त्येव तत्तथा ।
पण्डितोऽपण्डितो वापि भुङ्क्ते दानफलं नरः ।
बुद्ध्यानपेक्षितं दानं सर्वथा तत्फलत्युत ।

उमा ।

भगवन्देवदेवेश मानुषेष्वेव केचन ।
मेधाविनः श्रुतिधरा भवन्ति विशदाक्षराः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

ये पुरा मनुजा देवि गुरुशुश्रूषका भृशम् ।
ज्ञानार्थं ते तु संगृह्य तीर्थतो विधिपूर्वकम् ।
विधिनैव परांश्चैव ग्राहयन्ति न चान्यथा ।
अश्लाघमाना ज्ञानेन प्रशान्ता यतवाचकाः ।
विद्यास्थानानि ये लोके स्थापयन्ति च यत्नतः ।
तादृशा मरणं प्राप्ताः पुनर्जन्मनि शोभने ।
मेधाविनः श्रुतिधरा भवन्ति विशदाक्षराः ।

उमा ।

अपरे मानुषा देव यत्नतोऽपि यतस्ततः ।
बहिष्कृताः प्रदृश्यन्ते श्रुतविज्ञानबुद्धिभिः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

ये पुरा मनुजा देवि ज्ञानदर्पसमन्विताः ।
श्लाघमानाश्च तत्प्राप्य ज्ञानाहंकारमोहिताः ।
तपन्ति ये परान्नित्यं ज्ञानाधिक्येन दर्पिताः ।
ज्ञानादसूयां कुर्वन्ति न सहन्त्येव चापरान् ।
तादृशा मरणं प्राप्ताः पुनर्जन्मनि शोभने ।
मानुष्यं सुचिरं प्राप्य तत्र बोधविवर्जिताः ।
भवन्ति सततं देवि यतन्तो हीनमेधसः ।

उमा ।

भगवन्मानुषाः केचित्सर्वकल्याणसंयुताः ।

—(L. 1688) $T_2$ -व्रतिनश् (for -वर्तिनश्). —(L. 1692) $D_{10}$ $G_4$ आर्या; $T_3$ आर्य- (for आढ्या). —(L. 1695) $T_1$ दर्पात् (for देवि). — $T_1$ om. line 1698. —(L. 1698) $G_{1-3}$ निरानंदाः (for निरन्नाद्याः). —(L. 1700) $D_{10}$ तु (for सं-). —(L. 1701) $T_1$ किं पुनः (for किंचन). — Colophon. — *Adhy. name* : $D_{10}$ $T_3$ $G_2$ $M_{1.2.4}$ उमामहेश्वरसंवादः. — *Adhy. no.* : Dn $T_{2.3}$ $G_{2.4}$ $M_3$ 201; $T_1$ $G_{1.3}$ $M_1$ 195; $M_2$ 196; $M_4$ 193. —(L. 1702) $D_{10}$ $G_{1.3.4}$ [अ]पि (for [ए]त्र). — $T_1$ महेशः (for महेश्वरः). — $T_3$ om. (hapl.) from the post. half of line 1707 up to the prior half of line 1714. —(L. 1710) $D_{10}$ $T_2$ G M हि न (by transp.); $T_1$ न प्र-. —(L. 1711) $D_{10}$ $G_{2.4}$ दृढमूढा; $T_2$ $G_{1.3}$ दृढा मूढा; $M_{1.3}$ दृढं मूढ- (for दृढं मूढा). —(L. 1714) $M_1$ सर्वशः (for °तः). —(L. 1716) $D_{10}$ $T_2$ $G_4$ वा दातुं; $T_{1.3}$ यद्दानं; $G_{1.3}$ ये दातुं; $G_2$ यद्दातुं (for वदतां). $G_{1.3.4}$ च (for [ए]व). $T_3$ ततस् (for यतस्). —(L. 1719) $T_1$ $G_{1.3}$ M बुद्धिं ना(T_1 °द्धिनां)पेक्षते दानं (for the prior half). —(L. 1720) $D_{10}$ $T_3$ $G_{1.3.4}$ च केचन; $G_2$ कदाचन (for [ए]व केचन). —(L. 1721) $T_1$ $G_{1.3.4}$ M श्रुत- (for श्रुति-). — $G_2$ om. (hapl.) lines 1722–1729. —(L. 1725) $T_2$ विधिं दैव- (for विधिनैव). $D_{10}$ $T_3$ च न (by transp.). —(L. 1726) $M_4$ -वाचिकाः. —(L. 1729) $G_{1.3}$ M श्रुतधरा (for श्रुति°). — $G_2$ शिवः (for उमा). —(L. 1731) $T_3$ श्रुति- (for श्रुत-). $G_{1.3}$ -बुद्धितः (for °भिः). $D_{10}$ $T_2$ $G_{2.4}$ ज्ञान($G_4$ श्रुति)विज्ञानबुद्धितः ($T_2$ °द्धयः) (for the post. half). — $T_1$ महेशः (for महेश्वरः). —(L. 1734) $G_{1.3}$ प्राप्ता (for प्राप्य). —(L. 1735) $D_{10}$ $T_{2.3}$ $G_2$ वदंति; $G_{1.3.4}$ भवंति; $M_4$ पतंति (for तपन्ति). —(L. 1736) $D_{10}$ $G_2$ च (for [ए]व). —(L. 1738) $D_{10}$ T G सुचिरात् (for °रं). $G_{1.3}$ सदा

उमा ।
भोगयुक्ता महादेव केचिद्व्याधिपरिप्लुताः ।
असमर्थाश्च तान्भोक्तुं भवन्ति किमु कारणम् ।
महेश्वरः ।
व्याधियोगपरिक्लिष्टा ये निराशाः स्वजीविते ।
आरभन्ते तदा कर्तुं दानानि शुभलक्षणे ।
ते पुनर्जन्मनि शुभे प्राप्य तानि फलान्युत ।
असमर्थाश्च तान्भोक्तुं व्याधितास्ते भवन्त्युत ।
उमा ।
भगवन्देवदेवेश मानुषेष्वेव केचन ।
रूपयुक्ताः प्रदृश्यन्ते शुभाङ्गा प्रियदर्शनाः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।
महेश्वरः ।
हन्त ते कथयिष्यामि शृणु तत्त्वं समाहिता ।
ये पुरा मनुजा देवि लज्जायुक्ताः प्रियंवदाः ।
शक्ताः सुमधुरा नित्यं भूत्वा चैव स्वभावतः ।
अमांसभोजिनश्चैव सदा प्राणिदयायुताः ।
प्रतिकर्मप्रदा वापि वस्त्रदा धर्मकारणात् ।
भूमिशुद्धिकरा वापि कारणादग्निपूजकाः ।
एवंयुक्तसमाचाराः पुनर्जन्मनि ते नराः ।
रूपेण स्पृहणीयास्तु भवन्त्येव न संशयः ।
उमा ।
विरूपाश्च प्रदृश्यन्ते मानुषेष्वेव केचन ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।
महेश्वरः ।
तदहं ते प्रवक्ष्यामि शृणु कल्याणि कारणम् ।
रूपयोगात्पुरा मर्त्या दर्पाहंकारसंयुताः ।
विरूपहासकाश्चैव स्तुतिनिन्दादिभिर्भृशम् ।
परोपतापिनश्चैव मांसादाश्च तथैव च ।
अभ्यसूयापराश्चैव अशुद्धाश्च तथैव च ।
एवंयुक्तसमाचारा यमलोके सुदण्डिताः ।
कथंचित्प्राप्य मानुष्यं तत्र ते रूपवर्जिताः ।
विरूपाः संभवन्त्येव नास्ति तत्र विचारणा ।
उमा ।
भगवन्देवदेवेश केचित्सौभाग्यसंयुताः ।
रूपभोगविहीनाश्च दृश्यन्ते प्रमदाप्रियाः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।
महेश्वरः ।
ये पुरा मनुजा देवि सौम्यशीलाः प्रियंवदाः ।
स्वदारैरेव संतुष्टा दारेषु समवृत्तयः ।
दाक्षिण्येनैव वर्तन्ते प्रमदास्वप्रियास्वपि ।
न तु प्रत्यादिशन्त्येव स्त्रीदोषान्गुह्यसंश्रितान् ।
अन्नपानीयदाः काले नृणां स्वादुप्रदाश्च ये ।
स्वदारवर्तिनश्चैव धृतिमन्तो निरत्ययाः ।
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
मानुषास्ते भवन्त्येव सततं सुभगा भृशम् ।
अर्थहीनेऽपि ते देवि भवन्ति प्रमदाप्रियाः ।
उमा ।
दुर्भगाः संप्रदृश्यन्ते आढ्या भोगयुता अपि ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।
महेश्वरः ।
तदहं ते प्रवक्ष्यामि शृणु सर्वं समाहिता ।
ये पुरा मनुजा देवि स्वदारेष्वनपेक्षया ।
यथेष्टवृत्तयश्चैव निर्लज्जा वीतसंभ्रमाः ।
परेषां विप्रियकरा वाङ्मनःकायकर्मभिः ।
निराश्रया निरन्नाद्याः स्त्रीणां हृदयकोपनाः ।

---

1651–1653. —(L. 1651) $T_3$ -दानानां (for -दत्तानां). —(L. 1652) $D_{10}$ $T_{2,3}$ $G_{1,3}$ $M_4$ एतत् (for एवं). — $M_1$ om. (hapl.) lines 1653–1658. —(L. 1654) $T_3$ om. (hapl.) from the post. half up to the prior half of line 1658. $D_{10}$ किल (for किमु). —(L. 1658) $T_2$ च (for ते). —(L. 1660) $T_1$ (second time) भवंत्येव; $T_2$ च दृश्यंते (for प्रदृ°). $T_1$ (second time) शुभ- (for प्रिय-). — After line 1661, $T_1$ ins.:

महेशः ।
दृष्ट्वा परेषां रूपं च नाभ्यसूयन्ति ये नराः ।

— After the above, $T_1$ repeats line 1660.

— $G_{3,4}$ $M_1$ om. the ref. $T_1$ om. lines 1662–1669. —(L. 1663) $D_{10}$ $T_3$ $G_{1-3}$ मानुषा (for मनुजा). —(L. 1667) $D_{10}$ $G_4$ भुवि (for भूमि-). —(L. 1668) $G_2$ न पुनर्जन्मिनो नराः (for the post. half). —(L. 1670) $T_3$ $G_{1,3,4}$ सं- (for च). $T_1$ भवंत्यन्ये (for प्रदृश्यन्ते). $T_1$ विकृतांगाश्च केन च (for the post. half). —(L. 1671) $T_1$ दृश्यंते कर्मणा केन (for the prior half). — $T_1$ om. line 1672. —(L. 1674) $T_3$ $G_4$ विरूपा (for विरूप-). $T_1$ परेषामुपतापिनः (for the post. half). — $T_1$ om. lines 1675–1676. —(L. 1675) $T_2$ $G_{1-3}$ मांसादाश्चैव निंदकाः (for the post. half). —(L. 1676) $D_{10}$ $T_{2,3}$ $G$ $M_4$ तथा ($G_2$ °दा°) नराः (for तथैव च). —(L. 1677) $D_{10}$ यल्लोके हि (for यमलोके). —(L. 1678) $T_1$ विरूपास्ते भवंत्युत (for the post. half). —(L. 1680) $G_{1-3}$ काय- (for केचित्). — $T_1$ महेशः (for महेश्वरः). —(L. 1683) $D_{10}$ $T_2$ मानुषा (for मनुजा). $T_1$ om. (hapl.) from the post. half up to the prior half of line 1695. —(L. 1686) $G_1$ damaged; $G_2$ न तु प्रत्यादिशन्देवि (for the prior half). $D_{10}$ $T_{2,3}$ $G_{2-4}$ गुण- (for गुह्य-).

एवंयुक्तसमाचाराः पुनर्जन्मनि ते नराः ।
दुर्भगाः संभवन्त्येव स्त्रीणां हृदयविप्रियाः ।
नास्ति तेषां रतिसुखं स्वदारेष्वपि किंचन ।

Colophon.

उमा ।

भगवन्देवदेवेश मानुषेष्वेव केचन ।
ज्ञानविज्ञानसंपन्ना बुद्धिमन्तो विचक्षणाः ।
दुर्गतास्तु प्रदृश्यन्ते यतमाना यथाविधि ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

तदहं ते प्रवक्ष्यामि शृणु कल्याणि कारणम् ।
ये पुरा मनुजा देवि श्रुतवन्तोऽपि केवलम् ।
निराश्रया निरन्नाद्या भृशमात्मपरायणाः ।
ते पुनर्जन्मनि शुभे ज्ञानबुद्धियुता अपि ।
निष्किंचना भवन्त्येव अनुसं न हि रोहति ।

उमा ।

मूर्खा लोके प्रदृश्यन्ते दृढं मूढा विचेतसः ।
ज्ञानविज्ञानरहिताः समृद्धाश्च समन्ततः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

ये पुरा मनुजा देवि बालिशा अपि सर्वतः ।
समाचरन्ति दानानि दीनानुग्रहकारणात् ।
अबुद्धिपूर्वं वदतां ददत्येव यतस्ततः ।
ते पुनर्जन्मनि शुभे प्राप्नुवन्त्येव तत्तथा ।
पण्डितोऽपण्डितो वापि भुङ्क्ते दानफलं नरः ।
बुद्ध्यानपेक्षितं दानं सर्वथा तत्फलत्युत ।

उमा ।

भगवन्देवदेवेश मानुषेष्वेव केचन ।
मेधाविनः श्रुतिधरा भवन्ति विशदाक्षराः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

ये पुरा मनुजा देवि गुरुशुश्रूषका भृशम् ।
ज्ञानार्थं ते तु संगृह्य तीर्थतो विधिपूर्वकम् ।
विधिनैव परांश्चैव ग्राहयन्ति न चान्यथा ।
अश्लाघमाना ज्ञानेन प्रशान्ता यतवाचकाः ।
विद्यास्थानानि ये लोके स्थापयन्ति च यत्नतः ।
तादृशा मरणं प्राप्ताः पुनर्जन्मनि शोभने ।
मेधाविनः श्रुतिधरा भवन्ति विशदाक्षराः ।

उमा ।

अपरे मानुषा देव यत्नतोऽपि यतस्ततः ।
बहिष्कृताः प्रदृश्यन्ते श्रुतविज्ञानबुद्धिभिः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

ये पुरा मनुजा देवि ज्ञानदर्पसमन्विताः ।
श्लाघमानाश्च तत्प्राप्य ज्ञानाहंकारमोहिताः ।
तपन्ति ये पराञ्चित्यं ज्ञानाधिक्येन दर्पिताः ।
ज्ञानादसूयां कुर्वन्ति न सहन्त्येव चापरान् ।
तादृशा मरणं प्राप्ताः पुनर्जन्मनि शोभने ।
मानुष्यं सुचिरं प्राप्य तत्र बोधविवर्जिताः ।
भवन्ति सततं देवि यतन्तो हीनमेधसः ।

उमा ।

भगवन्मानुषाः केचित्सर्वकल्याणसंयुताः ।

---

— (L. 1688) $T_2$ -व्रतिनश् (for -वर्तिनश्). — (L. 1692) $D_{10}$ $G_4$ आर्या ; $T_3$ आर्य- (for आढ्या). — (L. 1695) $T_1$ दर्पात् (for देवि). — $T_1$ om. line 1698. — (L. 1698) $G_{1-3}$ निरानंदाः (for निरन्नाद्याः). — (L. 1700) $D_{10}$ तु (for सं-). — (L. 1701) $T_1$ किं पुनः (for किंचन). — Colophon. — *Adhy. name :* $D_{10}$ $T_3$ $G_2$ $M_{1.2.4}$ उमामहेश्वरसंवादः. — *Adhy. no. :* Dn $T_{2.3}$ $G_{2.4}$ $M_3$ 201 ; $T_1$ $G_{1.3}$ $M_1$ 195 ; $M_2$ 196 ; $M_4$ 193. — (L. 1702) $D_{10}$ $G_{1.3.4}$ [अ]पि (for [ए]व). — $T_1$ महेशः (for महेश्वरः). — $T_3$ om. (hapl.) from the post. half of line 1707 up to the prior half of line 1714. — (L. 1710) $D_{10}$ $T_2$ G M हि न (by transp.); $T_1$ न प्र-. — (L. 1711) $D_{10}$ $G_{2.4}$ दृढमूढा ; $T_2$ $G_{1.3}$ दृढा मूढा ; $M_{1.3}$ दृढं मूढ- (for दृढं मूढा). — (L. 1714) $M_1$ सर्वशः (for °तः). — (L. 1716) $D_{10}$ $T_2$ $G_4$ या दातुं ; $T_{1.3}$ यद्दानं ; $G_{1.3}$ ये दातुं ; $G_2$ यद्दातुं (for वदतां). $G_{1.3.4}$ च (for [ए]व). $T_3$ ततस् (for यतस्). — (L. 1719) $T_1$ $G_{1.3}$ M बुद्धिं ना- ($T_1$ °द्धिनां)- पेक्षते दानं (for the prior half). — (L. 1720) $D_{10}$ $T_3$ $G_{1.3.4}$ च केचन ; $G_2$ कदाचन (for [ए]व केचन). — (L. 1721) $T_1$ $G_{1.3.4}$ M श्रुत- (for श्रुति-). — $G_2$ om. (hapl.) lines 1722–1729. — (L. 1725) $T_2$ विधिं दैव- (for विधिनैव). $D_{10}$ $T_3$ च न (by transp.). — (L. 1726) $M_4$ -वाचिकाः. — (L. 1729) $G_{1.3}$ M श्रुतधरा (for श्रुति°). — $G_2$ शिवः (for उमा). — (L. 1731) $T_3$ श्रुति- (for श्रुत-). $G_{1.3}$ -बुद्धितः (for °भिः). $D_{10}$ $T_2$ $G_{2.4}$ ज्ञान($G_4$ श्रुति)विज्ञानबुद्धितः ($T_2$ °द्धयः) (for the post. half). — $T_1$ महेशः (for महेश्वरः). — (L. 1734) $G_{1.3}$ प्राप्ता (for प्राप्य). — (L. 1735) $D_{10}$ $T_{2.3}$ $G_2$ वदंति ; $G_{1.3.4}$ भवंति ; $M_4$ पतंति (for तपन्ति). — (L. 1736) $D_{10}$ $G_2$ च (for [ए]व). — (L. 1738) $D_{10}$ T G सुचिरात् (for °रं). $G_{1.3}$ सदा

पुत्रैर्दारैर्गुणयुतैर्दासीदासपरिच्छदैः ।
परस्परर्द्धिसंयुक्ताः स्थानैश्वर्यपरिग्रहैः ।
व्याधिहीना निराबाधा रूपारोग्यबलैर्युताः ।
धनधान्येन संपन्नाः प्रासादैर्यानवाहनैः ।
सर्वोपभोगसंयुक्ता नानाचित्रैर्मनोहरैः ।
ज्ञातिभिः सह मोदन्ते अविघ्नं तु दिने दिने ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

तदहं ते प्रवक्ष्यामि शृणु सर्वं समाहिता ।
ये पुरा मनुजा देवि आढ्या वा इतरेऽपि वा ।
श्रुतवृत्तसमायुक्ता दानकामाः श्रुतप्रियाः ।
परेङ्गितपरा नित्यं दातव्यमिति निश्चिताः ।
सत्यसंधाः क्षमाशीला लोभमोहविवर्जिताः ।
दातारः पात्रतो दानं व्रतैर्नियमसंयुताः ।
स्वदुःखमिव संस्मृत्य परदुःखं महात्मनः ।
सौम्यशीलाः शुभाचारा देवब्राह्मणपूजकाः ।
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
दिवि वा भुवि वा देवि जायन्ते कर्मभोगिनः ।
मानुषेष्वपि ये जातास्तादृशाः संभवन्ति ते ।
यादृशास्तु त्वया प्रोक्ताः सर्वे कल्याणसंयुताः ।
रूपं द्रव्यं बलं चायुर्भोगैश्वर्यं कुलं श्रुतम् ।
इत्येतत्सर्वसाद्गुण्यं दानाद्भवति नान्यथा ।
तपोदानमयं सर्वमिति विद्धि शुभानने ।

उमा ।

अथ केचित्प्रदृश्यन्ते मानुषेष्वेव मानुषाः ।
दुर्गताः क्लेशभूयिष्ठा दानभोगविवर्जिताः ।
भयैस्त्रिभिः सदा जुष्टा व्याधिक्षुद्भयपीडिताः ।
दुष्कलत्राभिभूताश्च सततं विघ्नदर्शकाः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

ये पुरा मनुजा देवि आसुरं भावमाश्रिताः ।
क्रोधलोभरता नित्यं निरन्नाद्याश्च निष्क्रियाः ।
नास्तिकाश्चैव धूर्ताश्च मूर्खाश्चात्मपरायणाः ।
परोपतापिनो देवि प्रायशः प्राणिनिर्दयाः ।
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
कथंचित्प्राप्य मानुष्यं तत्र ते दुःखपीडिताः ।
सर्वतः संभवन्त्येव पूर्वमात्मप्रमादतः ।
यथा ते पूर्वकथितं तथा ते संभवन्त्युत ।
शुभाशुभं कृतं कर्म सुखदुःखफलोदयम् ।
इति ते कथितं देवि किं भूयः श्रोतुमिच्छसि ।

Colophon.

उमा ।

भगवन्देवदेवेश मम प्रीतिविवर्धन ।
जात्यन्धाश्चैव दृश्यन्ते जाता वा नष्टचक्षुषः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

हन्त ते कथयिष्यामि शृणु कल्याणि कारणम् ।
ये पुरा कामरागेण परवेश्मसु लोलुपाः ।
परस्त्रियोऽभिवीक्षन्ते दुष्टेनैव स्वचक्षुषा ।
अन्धीकुर्वन्ति ये मर्त्यान्क्रोधलोभसमन्विताः ।

for तत्र). — (L. 1742) $G_{1.3}$ परमं बुद्धिसंयुक्ताः for the prior half). $D_{10}$ $G_4$ om. (hapl.) from ıe post. half up to the prior half of line 1745. 3 -मनोहरैः (for -परिग्रहैः). — (L. 1743) $T_1$ रूपद्रव्य- for रूपारोग्य-). — (L. 1745) $G_2$ om. the post. half. I1-3 -नानाचित्र- (for °चित्रैर्). — $T_1$ महेशः (for महेश्वरः). — (L. 1750) $T_2$ श्रुति- (for श्रुत-). — (L. 1751) $T_3$ रं हित- (for परेङ्गित-). — (L. 1753) $T_2$ नित्यं (for दानं). 1.3 वृत्तैर्विनयसंवृ( $T_3$ °यु )ताः (for the post. half). — (L. 1754) $D_{10}$ $T_{2.3}$ G M परदुःखविवर्जि( $T_3$ °समन्वि )- ः (for the post. half). — (L. 1756) $D_{10}$ $T_{2.3}$ -शील- (for -युक्त-). — (L. 1757) $T_1$ भोगयुक्ता भवं- ापि (for the post. half). — $T_1$ om. lines 1758–759. — (L. 1758) $T_3$ जाता ये (by transp.). — (L. 759) $T_3$ $G_{1.3}$ तथा (for त्वया). $D_{10}$ $G_2$ $M_{1-3}$ सर्वे- for सर्वे). — (L. 1760) $T_2$ वयः; $G_2$ बलं (for कुलं). — (L. 1761) $T_3$ [ए]वं (for [ए]तत्). $T_{1.3}$ सर्वपाड्गुण्यं.

— $T_1$ om. line 1762. — (L. 1764) $T_1$ -संयुक्ता (for -भूयिष्ठा). $T_1$ भूयिष्ठं दानवर्जिताः (for the post. half). — (L. 1765) $D_{10}$ $T_{1.2}$ $G_2$ $M_3$ समाजुष्टा; $T_3$ समा- युक्ता; $G_{1.3.4}$ समाविष्टा (for सदा जुष्टा). $D_{10}$ T G $M_4$ -संयुताः (for -पीडिताः). — (L. 1766) $G_{1.3}$ -कांक्षिताः (for -दर्शकाः). — $T_1$ महेशः (for महेश्वरः). — (L. 1769) $D_{10}$ $T_{2.3}$ G -समायुक्ता; $T_1$ -युता नित्यं (for -रता नित्यं). — $T_1$ om. line 1770. $T_1$ reads line 1771 after line 1774. — (L. 1771) $G_{1-3}$ -निन्दकाः (for -निर्दयाः). — (L. 1775) $D_{10}$ $T_2$ G $M_4$ -कथितास् (for °तं). — $T_1$ om. line 1776. — (L. 1777) $G_{1.3.4}$ $M_4$ भूयः श्रोतुं किमिच्छसि (for the post. half). — Colophon. — *Adhy. name* : $D_{10}$ $T_{2.3}$ $G_2$ M उमामहेश्वरसंवादः. — *Adhy. no.* : $D_{10}$ $T_{2.3}$ $G_{2.4}$ $M_3$ 202; $T_1$ $G_{1.3}$ $M_1$ 196; $M_2$ 197; $M_4$ 194. — $T_1$ महेशः; $G_2$ शिवः (for महेश्वरः). — $T_1$ om. line 1781. — (L. 1782) $T_{1.2}$ $G_{1.3.4}$ $M_{3.4}$ कामकारेण (for °रागेण). $D_{10}$ $T_3$ ये पुरा कर्म- कारेण (for the prior half). — (L. 1784) $D_{10}$ T

लक्षणज्ञाश्च रूपेषु अयथावत्प्रदर्शकाः ।
एवंयुक्तसमाचाराः कालधर्मगतास्तु ते ।
दण्डिता यमदण्डेन निरयस्थाश्चिरं प्रिये ।
यदि चेन्मानुषं जन्म लभेरंस्तादृशा नराः ।
स्वभावतो वा जाता वा अन्धा एव भवन्ति ते ।
अक्षिरोगयुता चापि नास्ति तत्र विचारणा ।

उमा ।

मुखरोगयुताः केचित्क्लिश्यन्ते सततं नराः ।
दन्तकर्णकपोलस्थैर्व्याधिभिर्बहुपीडिताः ।
आदिप्रभृति मर्त्या वा जाता वाप्यथ कारणात् ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

हन्त ते कथयिष्यामि शृणु देवि समाहिता ।
कुवक्तारस्तु ये देवि जिह्वया कटुकं भृशम् ।
असत्यं परुषं घोरं गुरून्प्रति परान्प्रति ।
जिह्वाबाधां तथान्येषां कुर्वते कोपकारणात् ।
प्रायशोऽनृतभूयिष्ठा नराः कार्यवशेन वा ।
तेषां जिह्वाप्रदेशस्था व्याधयः संभवन्ति ते ।
कुश्रोतारस्तु ये चार्थं परेषां कर्णनाशकाः ।
कर्णरोगान्बहुविधाँल्लभन्ते ते पुनर्भवे ।
दन्तरोगशिरोरोगकर्णरोगास्तथैव च ।
अन्ये मुखाश्रिता दोषाः सर्वे चात्मकृतं फलम् ।

उमा ।

पीड्यन्ते सततं देव मानुषेष्वेव केचन ।
कुक्षिपक्षाश्रितैर्दोषैर्व्याधिभिश्चोदराश्रितैः ।
तीक्ष्णशूलैश्च पीड्यन्ते नरा दुःखपरिप्लुताः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

ये पुरा मनुजा देवि कामक्रोधयुता भृशम् ।
आत्मार्थमेव चाहारं भुञ्जते निरपेक्षकाः ।
अभक्ष्याहारदाश्चैव विश्वस्तानां विषप्रदाः ।
अभक्ष्यभक्ष्यदाश्चैव शौचमङ्गलवर्जिताः ।
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
कथंचित्प्राप्य मानुष्यं तत्र ते व्याधिपीडिताः ।
तैस्तैर्बहुविधाकारैर्व्याधिभिर्दुःखपीडिताः ।
भवन्त्येव तथा देवि यथा येन कृतं पुरा ।

उमा ।

दृश्यन्ते सततं देव व्याधिभिर्मेहनाश्रितैः ।
पीड्यमानास्तथा मर्त्या अश्मरीशर्करादिभिः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

ये पुरा मनुजा देवि परदारप्रधर्षकाः ।
तिर्यग्योनिषु धूर्ता वै मैथुनार्थं चरन्ति च ।
कामदोषेण ये धूर्ताः कन्यासु विधवासु च ।
बलात्कारेण गच्छन्ति रूपदर्पधनान्विताः ।
तादृशा मरणं प्राप्ताः पुनर्जन्मनि शोभने ।
यदि चेन्मानुषं जन्म लभेरंस्ते तथाविधाः ।
तत्र मेहनजैर्घोरैः पीड्यन्ते व्याधिभिः प्रिये ।

उमा ।

भगवन्मानुषाः केचिद्दृश्यन्ते शोषिणः कृशाः ।

---

$M_4$ ये मर्त्याः ; G यन्मर्त्याः ( for ये मर्त्यान् ). — $T_1$ om. line 1785. — ( L. 1785 ) $M_4$ लक्षणज्ञापि ( for °श्च ). — ( L. 1786 ) $D_{10}$ $T_{2,3}$ G -वशास् ( for -गतास् ). — ( L. 1787 ) $T_1$ समा बहु ( for चिरं प्रिये ). — ( L. 1788 ) $D_{10}$ T G $M_4$ लभेरंस्ते तथापि वा ( $T_1$ $M_4$ °विधाः ) ( for the post. half ). — ( L. 1789 ) $G_{1-3}$ [उ]त ( for ते ). — ( L. 1791 ) $D_{10}$ T $G_{1,3,4}$ दृश्यंते ; $G_2$ $M_4$ कीर्त्यंते ( for क्लिश्यन्ते ). — ( L. 1792 ) $T_1$ -कपोलस्थ- ( for °स्थैर् ). $G_{1-3}$ M भृश- ( for बहु- ). — ( L. 1793 ) $D_{10}$ $T_{2,3}$ $G_4$ वै मर्त्या ; $T_1$ $G_{1-3}$ $M_4$ वा मर्त्या ( by transp. ). — ( L. 1795 ) $T_1$ शृणु कल्याणकारण ( for the post half ). — ( L. 1796 ) $T_1$ ते ; $G_4$ om. ( for ये ). $D_{10}$ $G_2$ जिह्वायां ; $G_4$ $M_4$ जिह्वायाः ( for जिह्वया ). $T_2$ $G_{3,4}$ कटुका ( for °कं ). — ( L. 1797 ) $D_{10}$ $T_{2,3}$ G वदेत ( for the second प्रति ). — $T_1$ om. line 1798. — ( L. 1798 ) $D_{10}$ $T_2$ नदा ( for तथा ). $M_{3,4}$ ह्येषां ( for [अ]न्येषां ). $D_{10}$ जिह्वाबाधं तदान्येषां ( for the prior half ). — ( L. 1800 ) $T_1$ वै ( for ते ). — ( L. 1801 ) $T_1$ -नाशने ; $G_2$ -नाशनाः (for -नाशकाः ). — ( L. 1802 ) $G_{1,3,4}$ भजंते ( for लभन्ते ). — ( L. 1803 ) $T_1$ कर्णरोग- ( for दन्त° ). $G_{1,3}$ $M_4$ दंतरोगाः शिरोरोगाः ( for the prior half ). $T_1$ -दंतरोगास् ( for कर्ण° ). — ( L. 1804 ) $D_{10}$ $T_2$ G दुःखाश्रिता ( for मुखा° ). $T_1$ अन्ये दुःखाश्रिता रोगाः ( for the prior half ). — ( L. 1805 ) $T_3$ क्लिश्यंते ( for पीड्यन्ते ). — ( L. 1809 ) $D_{10}$ $T_2$ G -क्रोधवशा ; $T_{1,3}$ °वशाद् ( for °युता ). — ( L. 1810 ) $T_1$ स्वादु ( for एव ). — $T_1$ om. ( hapl. ) the post. half of line 1811 and the prior half of line 1812. — ( L. 1812 ) $M_4$ अपथ्य- ( for अभक्ष्य- ). $D_{10}$ $T_2$ $M_{1,3}$ -भक्षदाश् ; $G_4$ -भक्षकाश् ( for -भक्ष्यदाश् ). $G_{1-3}$ अपथ्यभक्षदाश्चैव ( for the prior half ). $T_1$ om. from the post. hlaf of line 1813 up to the prior half of line 1815. — ( L. 1815 ) $D_{10}$ $T_{2,3}$ $G_4$ -संश्रिताः ; $G_{2,3}$ $M_4$ -संयुताः ( for -पीडिताः ). $T_1$ व्याधिभिः कुक्षिसंश्रितैः ( for the post. half ). — ( L. 1816 ) $T_1$ पीड्यंते बहुधा तत्र यथा स्वकृतकर्मभिः. — $T_1$ महेशः ; $G_2$ शिवः ( for महेश्वरः ). — ( L. 1820 ) $G_{1,3}$ -वि- ( for -प्र- ). — ( L. 1821 ) $T_2$ ते ( for च ). — $G_2$ om.

केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।
महेश्वरः ।
ये पुरा मनुजा देवि मांसलुब्धाः सुलोलुपाः ।
आत्मार्थं स्वादुगृद्धाश्च परभोगोपतापिनः ।
अभ्यसूयापराश्चैव परभोगेषु ये नराः ।
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
शोषव्याधियुतास्तत्र नरा धमनिसंतताः ।
भवन्त्येव नरा देवि पापकर्मोपभोगिनः ।
उमा ।
भगवन्मानुषाः केचित्क्लिश्यन्ते कुष्ठरोगिणः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।
महेश्वरः ।
ये पुरा मनुजा देवि परेषां रूपनाशकाः ।
आघातवधबन्धैश्च वृथादण्डेन मोहिताः ।
इष्टनाशकरा ये तु अपथ्याहारदा नराः ।
चिकित्सका वा दुष्टाश्च लोभमोहसमन्विताः ।
निर्दयाः प्राणिहिंसायां मलदाश्चित्तनाशकाः ।
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
यदि वै मानुषं जन्म लभेरंस्ते सुदुःखिताः ।
अत्र ते क्लेशसंयुक्ताः कुष्ठरोगसमन्विताः ।
केचित्त्वग्दोषसंयुक्ता व्रणकुष्ठैश्च संयुताः ।
श्वित्रकुष्ठयुता वापि बहुधा कुष्ठसंयुताः ।
भवन्त्येव नरा देवि यथा येन कृतं फलम् ।
उमा ।
भगवन्मानुषाः केचिदङ्गहीनाश्च पङ्गवः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।
महेश्वरः ।
ये पुरा मनुजा देवि लोभमोहसमावृताः ।
प्राणिनां प्राणहिंसार्थमङ्गहीनं प्रकुर्वते ।
शस्त्रेणोत्कृत्य वा देवि प्राणिनां चेष्टनाशकाः ।
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
तदङ्गहीना वै प्रेत्य भवन्त्येव न संशयः ।
स्वभावतो वा जाता वा पङ्गवस्तु भवन्ति ते ।
उमा ।
भगवन्मानुषाः केचिद्ग्रन्थिभिः पिटकैस्तथा ।
क्लिश्यमानाः प्रदृश्यन्ते तन्मे शंसितुमर्हसि ।
महेश्वरः ।
ये पुरा मनुजा देवि ग्रन्थिभेदकरा नृणाम् ।
मुष्टिप्रहारपरुषा नृशंसाः पापकारिणः ।
पाटकास्तोदकाश्चैव शूलतुन्नास्तथैव च ।
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
ग्रन्थिभिः पिटकैश्चैव क्लिश्यन्ते भृशदुःखिताः ।
उमा ।
भगवन्मानुषाः केचित्पादरोगसमन्विताः ।
दृश्यन्ते सततं देव तन्मे शंसितुमर्हसि ।
महेश्वरः ।
ये पुरा मनुजा देवि क्रोधलोभसमन्विताः ।
मनुजा देवतास्थानं स्वपादैर्भ्रंशयन्त्युत ।
जानुभिः पार्ष्णिभिश्चैव प्राणिहिंसां प्रकुर्वते ।
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
पादरोगैर्बहुविधैर्बाध्यन्ते श्लीपदादिभिः ।
उमा ।
भगवन्मानुषाः केचिद्दृश्यन्ते बहवो भुवि ।
वातजैः पित्तजै रोगैर्युगपत्सांनिपातिकैः ।
रोगैर्बहुविधैर्देव क्लिश्यमानाः सुदुःखिताः ।

(hapl.) lines 1825–1832. — (L. 1825) $M_{1-3}$ चेत्; $M_4$ च (for ते). — (L. 1827) $T_2$ कासरोगादिभिर्युताः (for the post. half). — (L. 1830) $D_{10}$ अर्थार्थं स्वादुगर्धाश्च (for the prior half). — $T_1$ om. line 1831. — (L. 1831) $T_3$ [अ]पि (for [ए]व). $T_3$ -गेहेषु (for -भोगेषु). — $T_1$ om. (hapl.) lines 1833–1842. — (L. 1833) $T_2$ $G_{1-3}$ श्लेष्म- (for शोष-). — (L. 1835) $G_4$ मानुषे (for °षाः). $G_{1-3}$ दृश्यंते (for क्लिश्यन्ते). $G_2$ कर्ण- (for कुष्ठ-). — (L. 1837) $D_{10}$ $T_2$ $G_{1-3}$ $M_{2,4}$ -नाशनाः (for °काः). — (L. 1840) $D_{10}$ $T_3$ $G_1$ $M_4$ द्वेषलोभ-; $T_2$ दोषलोभ-; $G_4$ रोगलोभ- (for लोभमोह-). $G_2$ द्वेषलोभमदान्विताः (for the post. half). — $T_3$ om. (hapl.) lines 1841–1843. — (L. 1841) $D_{10}$ $T_2$ G -नाशनाः (for °काः). — (L. 1844) $T_1$ यत्र ते; $T_3$ $G_1$ अमूते (for अत्र ते). $G_2$ कर्ण- (for कुष्ठ-). $D_{10}$ $T_{1,2}$ $G_{1,3,4}$ -शतैर्वृताः; $T_3$ -शतैर्युताः (for -समन्विताः). — $T_1$ om. (hapl.) lines 1845–1846. $G_4$ om. (hapl.) line 1845. — (L. 1846) $G_2$ -कृच्छ्र- (for -कुष्ठ-). — (L. 1847) $T_{1,3}$ यथा (for नरा). $T_1$ येन यत्र (for यथा येन). — (L. 1848) $G_1$ लोके (for केचिद्). — (L. 1850) $T_3$ om. (hapl.) from the post. half up to the prior half of line 1852. $T_{1,2}$ -समन्विताः (for -समावृताः). — (L. 1851) $D_{10}$ $T_3$ G M -विघ्नं (for -हीनं). — $T_1$ om. line 1852. — (L. 1852) $M_{2,3}$ [अ]न्येन (for [उ]त्कृत्य). $M_{2,3}$ प्राणिनश् (for °नां). — (L. 1855) $D_{10}$ $G_{2,4}$ ते (for तु). — $D_{10}$ $G_{1,2}$ om. उमा. $T_1$ om. line 1860. — (L. 1862) $T_1$ स्फालनैश् (for पिटकैश्). $T_1$ दुःख- (for भृश-). — (L. 1864) $G_3$ क्लिश्यंते (for दृश्यन्ते). — $T_1$ om. line 1865. — (L. 1866) $D_{10}$ मदेन (for मनुजा). $M_{2,3}$ दैवत- (for देवता-). $T_3$ $G_3$ स्वपदैर् (for

असमस्तैः समस्तैश्च आढ्या वा दुर्गतास्तथा ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।
महेश्वरः ।
तदहं ते प्रवक्ष्यामि शृणु कल्याणि कारणम् ।
ये पुरा मनुजा देवि आसुरं भावमाश्रिताः ।
स्ववशाः कोपनपरा गुरुविद्वेषिणस्तथा ।
परेषां दुःखजनका मनोवाक्कायकर्मभिः ।
छिन्दन्भिन्दंस्तुदंश्चैव नित्यं प्राणिषु निर्दयाः ।
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
यदि वै मानुषं जन्म लभेरंस्ते तथाविधाः ।
तत्र ते बहुभिर्घोरैस्तप्यन्ते व्याधिभिः प्रिये ।
केचिच्छ्लीपदसंयुक्ताः केचित्काससमन्विताः ।
ज्वरातिसारतृष्णाभिः पीड्यमानास्तथापरे ।
वातगुल्मैश्च बहुभिः शोफोदरसमन्विताः ।
पादरोगैश्च विविधैर्व्रणकुष्ठभगंदरैः ।
आढ्या वा दुर्गता वापि दृश्यन्ते व्याधिपीडिताः ।
एवमात्मकृतं कर्म भुञ्जते तत्र तत्र वै ।
गूहितुं न च शक्यं वै केनचित्स्वकृतं फलम् ।
इति ते कथितं देवि किं भूयः श्रोतुमिच्छसि ।

Colophon.

उमा ।
भगवन्देवदेवेश भूतपाल नमोऽस्तु ते ।
ह्रस्वाङ्गाश्चैव वक्राङ्गाः कुब्जा वामनकास्तथा ।
अपरे मानुषा देव दृश्यन्ते कुणिबाहवः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।
महेश्वरः ।
ये पुरा मनुजा देवि लोभमोहसमन्विताः ।
धान्यमानान्विकुर्वन्ति क्रयविक्रयकारणात् ।
तुलादोषं तथा देवि घृतमानेषु नित्यशः ।
अर्घापकरणं चैव सर्वेषां क्रयविक्रये ।
अङ्गदोषकरा ये तु परेषां कोपकारणात् ।
मांसादाश्चैव ये मूर्खा अयथावद्वृथा सदा ।
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
ह्रस्वाङ्गा वामनाश्चैव कुब्जाश्चैव भवन्ति ते ।
उमा ।
भगवन्मानुषाः केचिद्दृश्यन्ते मानुषेषु वै ।
उन्मत्ताश्च पिशाचाश्च पर्यटन्तो यतस्ततः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।
महेश्वरः ।
ये पुरा मनुजा देवि दर्पाहंकारसंयुताः ।
बहुधा प्रलपन्त्येव प्रहसन्ति परान्भृशम् ।
मोहयन्ति परान्भोगैर्मदनैर्लोभकारणात् ।
वृद्धान्गुरूंश्च ये मूर्खा वृथैवापहसन्ति च ।
शौण्डा विदग्धाः शास्त्रेषु तथैवानृतवादिनः ।
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
उन्मत्ताश्च पिशाचाश्च भवन्त्येव न संशयः ।
उमा ।
भगवन्मानुषाः केचिन्निरपत्याः सुदुःखिताः ।
यतन्तो न लभन्त्येव अपत्यानि यतस्ततः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

---

स्वपादैर्). $G_{2}$ स्पर्शयंति (for भ्रंशयन्ति). — $G_{2}$ om. from the post. half of line 1867 up to the prior half of line 1868. —(L. 1870) $T_{1}$ क्लिश्यंते (for दृश्यन्ते). $G_{1-3}$ बहुधा (for बहवो). $T_{1}$ भृशं; $G_{4}$ [ऽ]पि च (for भुवि). —(L. 1872) $T_{3}$ रोगैश्च बहुभिर्देव (for the prior half). — $T_{1}$ om. line 1873. —(L. 1876) $T_{2}$ $G_{4}$ त्वासुरं (for आ°). M आस्थिताः (for आश्रिताः). —(L. 1877) $D_{10}$ $T_{2}$ $G_{2.4}$ -विद्वेषणास् (for °षिणम्). —(L. 1879) $M_{2}$ देवि (for एव). — $T_{2}$ om. lines 1881 and 1883. —(L. 1883) $G_{1.3}$ वातादि- (for श्लीपद-). — $G_{2}$ om. (hapl.) lines 1884–1885. —(L. 1885) $D_{10}$ पाद-; $G_{4}$ पद- (for वात-). $T_{3}$ -पित्तैश् (for -गुल्मैश्). $T_{1}$ वातजैर्बहुभिः क्लेशैः (for the prior half). $D_{10}$ श्लेष्मदोष-; $T_{3}$ $M_{4}$ शोषोदर-; $G_{1.3}$ श्लेष्मरोग- (for शोफोदर-). $T_{2}$ श्लेष्मोदरसमासिताः (for the post. half). —(L. 1886) $T_{2}$ $G_{2}$ वात- (for पाद-). $G_{4}$ बहुभिर् (for विविधैर्). $T_{1}$ पादरोगैर्बहुविधैर् (for the prior half). $G_{4}$ प्रच्छर्दिक- (for व्रणकुष्ठ-). —(L. 1888) $D_{10}$ $T_{1.3}$ $G_{4}$ $M_{1-3}$ ते (for वै). —(L. 1889) $D_{10}$ $T_{3}$ $G_{4}$ $M_{4}$ ग्रहीतुं (for गूहितुं). $T_{2}$ $G_{1-3}$ अभिभूतं ($G_{1}$ °धातुं) न शक्यं हि (for the prior half). —(L. 1890) $D_{10}$ $G_{1.2}$ भूयः श्रोतुं किमिच्छसि (for the post. half). — Colophon. *Sub-parvan* : $D_{10}$ दानधर्म. — *Adhy. name* : $D_{10}$ $T_{3}$ $G_{2}$ $M_{1-3}$ उमामहेश्वरसंवादः. — *Adhy. no.* : $D_{10}$ $T_{2.3}$ $G_{2.4}$ 203; $T_{1}$ $G_{1.3}$ $M_{1}$ 197; $M_{2.3}$ 198; $M_{4}$ 195. — $T_{1}$ om. महेश्वरः. —(L. 1898) $D_{10}$ $T_{1.3}$ $G_{2-4}$ अर्घापकर्षणाच्चै($G_{3}$ °णं चै)व (for the prior half). —(L. 1899) $G_{2}$ -दोषपरा (for -दोषकरा). —(L. 1902) $M_{1-3}$ कुण्यंगा (for ह्रस्वाङ्गा). $M_{1-3}$ ह्रस्वांगाश्च (for कुब्जाश्चैव). —(L. 1904) $D_{10}$ $T_{3}$ G $M_{4}$ पर्यटंते. —(L. 1906) $T_{2}$ -संश्रिताः (for -संयुताः). $T_{1}$ लोभमोहसमन्विताः (for the post. half). —(L. 1907) $D_{10}$ T G हसंति च (for प्रहसन्ति). —(L. 1909) $T_{1}$ तथा (for वृथा). —(L. 1910) $G_{1.3}$ M सदा (for तथा). — $G_{2}$ om. (hapl.) lines 1912–1920. —(L. 1913) $G_{1.3}$ अनपत्याः (for निर°). $M_{1-3}$ दृश्यंते निरपत्यकाः (for the post. half). —(L. 1916) $T_{3}$ मानुषा (for मनुजा).

महेश्वरः ।

ये पुरा मनुजा देवि सर्वप्राणिषु निर्दयाः ।
घ्नन्ति बालांश्च भुञ्जन्ते मृगाणां पक्षिणामपि ।
गुरुविद्वेषिणश्चैव परपुत्राभ्यसूयकाः ।
पितृपूजां न कुर्वन्ति यथोक्तं चाष्टकादिभिः ।
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
मानुष्यं सुचिरात्प्राप्य निरपत्या भवन्ति ते ।
पुत्रशोकयुता वापि नास्ति तत्र विचारणा ।

उमा ।

भगवन्मानुषाः केचित्प्रदृश्यन्ते सुदुःखिताः ।
उद्वेगवासनिरताः सोद्वेगाश्च यतस्ततः ।
नित्यशोकसमाविष्टा दुर्गताश्च तथैव च ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

ये पुरा मनुजा नित्यमुत्कोचनपरायणाः ।
भीषयन्ति परान्नित्यं विकुर्वन्ति तथैव च ।
ऋणैर्वृद्धिं च ये कृत्वा दरिद्रेभ्यो यथेष्टतः ।
ऋणार्थमभिगच्छन्ति सततं वृद्धिरूपकाः ।
उद्विजन्ते हि तान्दृष्ट्वा धारकास्त्वथ कारणात् ।
अतिवृद्धिर्न कर्तव्या दरिद्रेभ्यश्च धर्मतः ।
ये श्वभिः क्रीडमानाश्च त्रासयन्ति वने मृगान् ।
प्राणिहिंसां तथा देवि कुर्वन्ति च यतस्ततः ।
येषां गृहेषु वै श्वानस्त्रासयन्ति वृथा नरान् ।
एवंयुक्तसमाचाराः कालधर्मगताः पुनः ।
पीडिता यमदण्डेन निरयस्थाश्चिरं प्रिये ।
कथंचित्प्राप्य मानुष्यं तत्र ते दुःखसंयुताः ।
कुदेशे दुःखभूयिष्ठे व्याघातशतसंकुले ।
जायन्ते तत्र शोचन्तः सोद्वेगाश्च यतस्ततः ।

उमा ।

भगवन्मानुषाः केचिदैश्वर्यस्थानसंयुताः ।
म्लेच्छभूमिषु दृश्यन्ते म्लेच्छैश्वर्यसमन्विताः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

ये पुरा मनुजा देवि धनधान्यसमन्विताः ।
अयथावत्प्रयच्छन्ति श्रद्धावर्जितमेव वा ।
अपात्रेभ्यश्च ये दानं शौचमङ्गलवर्जिताः ।
ददत्येव च ये मूर्खाः श्लाघयावज्ञयापि वा ।
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
कुदेशे म्लेच्छभूयिष्ठे दुर्गमे वनसंकटे ।
म्लेच्छाधिपत्यं संप्राप्य जायन्ते तत्र तत्र वै ।

उमा ।

भगवन्भगनेत्रघ्न मानुषेष्वेव केचन ।
क्लीबा नपुंसकाश्चैव दृश्यन्ते पण्डकास्तथा ।
नीचकर्मरता नीचा नीचसौख्यास्तथा भुवि ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

तदहं ते प्रवक्ष्यामि शृणु कल्याणि कारणम् ।
ये पुरा मनुजा भूत्वा घोरकर्मरतास्तथा ।
पशुपुंस्त्वोपघातेन जीवन्ति च रमन्ति च ।
पुंस्त्वोपघातिनश्चैव नराणां कोपकारणात् ।
ये धूर्ताः स्त्रीषु गच्छन्ति अयथावद्यथेष्टतः ।
कामविघ्नकरा ये तु द्वेषपैशुन्यकारणात् ।

— (L. 1917) $M_4$ अंधान् (for घ्नन्ति). — (L. 1921) $T_3$ सुचिरं (for °रात्). — (L. 1922) $D_{10}$ $T_2$ G च (for वा). — After line 1922, $G_{1,3}$ ins. :

ताद‍ृशास्तु नरा देवि पुनर्जन्मनि दुःखिताः ।
भोगसौख्यं न विन्दन्ति नास्ति तत्र विचारणा ।
उमा ।
भगवन्मानुषाः केचित्कुकलत्रप्रपीडिताः ।
कलत्रवन्तोऽपि सुखं नाप्नुवन्ति कदाचन ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।
महेश्वरः ।
मनुजा देवि दंपत्योर्भेदकाश्च शठास्तथा ।
स्वपत्नीं वर्जयित्वा च पुंश्चल्यां निरताः शुभाः ।

— (L. 1923) $T_1$ दृश्यतेत्तीव दुःखिताः (for the post. half). — (L. 1924) $D_{10}$ $T_2$ G यतव्रताः; $T_{1,3}$ ततस्ततः (for यतस्ततः). — (L. 1925) $T_2$ $G_{1-3}$ नित्यं (for नित्य-). $T_1$ दुर्भगाश् (for दुर्गताश्). — $T_1$ om. lines 1927–1928. — (L. 1929) $D_{10}$ $T_2$ G ऋणवृद्धिकराश्चैव; $T_1$ ऋणवृद्धिपरां कृत्वा (for the prior half). — (L. 1930) $T_2$ अपि; $G_{1,3}$ अप- (for अभि-). $T_3$ -पूर्वकं; $M_3$ (also as above) -सूचकाः (for -रूपकाः). — (L. 1931) $D_{10}$ $G_2$ स्वार्थ-; $T_1$ ऋग-; $T_{2,3}$ $G_{1,3}$ $M_4$ त्वर्थ- (for त्वथ). — (L. 1932) $D_{10}$ $T_2$ G यथेष्टतः (for -च धर्मतः). — $T_1$ om. line 1934. — (L. 1936) $D_{10}$ $T_1$ G कालधर्मं; $T_2$ °धर्मे (for °धर्म-). $T_3$ ततः (for पुनः). — (L. 1941) $D_{10}$ T $G_{2-4}$ -ज्ञान- (for -स्थान-). — (L. 1945) $M_{1-3}$ यशोर्थे कुरुते धर्मं (for the prior half). — (L. 1947) $T_1$ दानं (for मूर्खाः). — (L. 1951) $D_{10}$ $T_3$ G च (for [ए]व). — (L. 1952) $T_1$ om. from the post. half up to the prior half of line 1953. $D_{10}$ $T_{2,3}$ G $M_{1,4}$ पंडकास् (for पण्ड°). — (L. 1953) $T_2$ नित्यं (for नीचा). — $T_1$ om. line 1955. — (L. 1959) $T_2$ तेषु (for स्त्रीषु). $T_1$ ये चापि स्त्रीषु गच्छंति कामव्यसनकारणात्. — (L. 1960) $D_{10}$ $T_{2,3}$ $G_2$ कालधर्मगतास्तु ते; $G_{1,3,4}$ कालधर्मं गतास्तु

एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
दण्डिता यमदण्डेन निरयस्थाश्चिरं प्रिये ।
यदि चेन्मानुषं जन्म लभेरंस्ते तथाविधाः ।
क्लीवा वर्षवराश्चैव पण्डकाश्च भवन्ति ते ।
नीचकर्मरता लोके निर्लज्जा वीतसंभ्रमाः ।
परनिन्दां पुरस्कृत्य ते भवन्ति स्वकर्मणा ।
यदि चेत्संविमृश्येरंस्ते मुच्यन्ते हि किल्बिषात् ।
तत्रापि ते प्रमाद्येयुः पतन्ति नरकालये ।
स्त्रीणामपि तथा देवि यथा पुंसां तु कर्मजम् ।
इति ते कथितं देवि भूयः श्रोतुं किमिच्छसि ।

Colophon.

उमा ।

भगवन्देवदेवेश शूलपाणे वृषध्वज ।
पुंश्चल्य इति याः स्त्रीषु नीचवृत्तरताः स्मृताः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

याः पुरा प्रमदा देवि बुद्धिमोहसमन्विताः ।
कामरागसमायुक्ताः पतीनपचरन्ति वै ।
प्रतिकूलपरा यास्तु पतीन्प्रति यथा तथा ।
शौचं लज्जां तु विस्मृत्य यथेष्टपरिचारकाः ।
एवंयुक्तसमाचारा यमलोके सुदण्डिताः ।
यदि चेन्मानुषं जन्म लभेरंस्तास्तथाविधाः ।
बहुसाधारणा एवं पुंश्चल्यश्च भवन्ति ताः ।
पौंश्चल्यं यत्तु तद्वृत्तं स्त्रीणां कष्टतमं स्मृतम् ।
ततःप्रभृति सा देवि पतन्त्येव न संशयः ।
शोचन्ति चेत्तु तद्वृत्तं मनसा हितमाप्नुयुः ।

उमा ।

भगवन्देवदेवेश प्रमदा विधवा भृशम् ।
दृश्यन्ते मानुषे लोके सर्वकल्याणवर्जिताः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

या पुरा प्रमदा देवि बुद्धिमोहसमन्विताः ।
कुटुम्बं तत्र वै पत्युर्नाशयन्ति वृथा तथा ।
विषदाश्चाग्निदाश्चैव पतीन्प्रति सुनिर्दयाः ।
अन्यासां हि पतीन्यान्ति स्वपतिद्वेषकारणात् ।
एवंयुक्तसमाचारा यमलोके सुदण्डिताः ।
निरयस्थाश्चिरं कालं कथंचित्प्राप्य मानुषम् ।
तत्र ता भोगरहिता विधवास्तु भवन्ति वै ।

उमा ।

भगवन्प्रमदास्त्वन्याः पतौ ज्ञातिषु सत्स्वपि ।
लिङ्गिन्यः संप्रदृश्यन्ते पाषण्डं धर्ममाश्रिताः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

याः पुरा भावदोषेण लोभमोहसमन्विताः ।
परद्रव्यपरा लोभात्परेषां द्रव्यहारकाः ।
अभ्यसूयापरा यास्तु सपत्नीनां प्रदूषकाः ।
ईर्ष्यापराः कोपनाश्च बन्धूनां विफलाः सदा ।
एवंयुक्तसमाचाराः पुनर्जन्मनि ताः प्रिये ।

---

ते ( for the post. half ). — ( L. 1964 ) $T_1$ नपुंसकाश् ( for वर्षवराश् ). G पंडकाश् ( for पण्डकाश् ). $T_1$ नीचकर्मरतास्तथा ( for the post. half ). — ( L. 1965 ) $T_2$ -परा ; $M_{1,2}$ -करा ( for -रता ). $T_1$ नीचसौख्या निकृष्टाश्च ( for the prior half ). — $T_1$ om. lines 1966–1969. — ( L. 1966 ) $D_{10}$ $T_2$ $G_{1,3,4}$ परान्दीनान्बहिष्कृत्य ( for the prior half ). M भजंति ( for भवन्ति ). — ( L. 1967 ) $D_{10}$ $T_{2,3}$ $G_2$ संप्रपश्येरंस्; $G_{1,3,4}$ $M_4$ संप्रदृ° ( for संविमृ° ). $D_{10}$ $T_{2,3}$ $G_1$ कल्मषात् ( for किल्बिषात् ). — ( L. 1968 ) $D_{10}$ $T_3$ $G_4$ अत्र ( for तत्र ). $G_{1-3}$ पतंति निरये पुनः ( for the post. half ). — ( L. 1969 ) $T_3$ om. ( hapl. ) the post. half and the prior half of line 1970. $T_2$ प्रकीर्तितं ( for तु कर्मजम् ). — $G_2$ om. line 1970. — ( L. 1970 ) $T_1$ भवंति मनुजा देवि ( for the prior half ). $G_{1,3,4}$ किं भूयः श्रोतुमिच्छसि ( for the post. half ). — Colophon. *Sub-parvan :* $M_{1-3}$ दानधर्म. — *Adhy. : name* $D_{10}$ $T_{2,3}$ $G_2$ उमामहेश्वरसंवादः. — *Adhy. no. :* $D_{10}$ $T_{2,3}$ $G_{2,4}$ 204 ; $T_1$ $G_{1,3}$ $M_{1,2}$ 198 ; $M_3$ 199 ; $M_4$ 196. — ( L. 1972 ) $D_{10}$ $T_2$ G इव ( for इति ). $D_{10}$ T $G_{1-3}$ M -वृत्ति- ( for -वृत्त- ). — $T_1$ om. line 1974. — ( L. 1974 ) $D_{10}$ $T_{2,3}$ $M_4$ मनुजा ( for प्रमदा ). — ( L. 1975 ) $T_1$ transp. the prior half and the post. half. $G_2$ om. from the post. half up to the post. half of line 1978. $D_{10}$ T $G_{1,3,4}$ अति- ; $M_{1,4}$ अव- ( for अप- ). —( L. 1977 ) $D_{10}$ T $G_{1,3,4}$ -परिचारणाः ( for °चारकाः ). — ( L. 1979 ) $D_{10}$ $T_{2,3}$ G वै ( for चेन् ). $T_{2,3}$ $G_2$ $M_4$ ते ( for तास् ). $G_{1-3}$ यथा तथा ( for तथाविधाः ). — $T_1$ om. lines 1981–1982. — $G_4$ om. the ref. — ( L. 1985 ) $D_{10}$ $G_{2,4}$ मानुषा ( for °षे ). — ( L. 1987 ) $D_{10}$ $T_{2,3}$ G $M_4$ मनुजा ; $T_1$ तु महा- ( for प्रमदा ). — ( L. 1988 ) $T_1$ स्त्रियः ; $G_4$ यथा ( for तथा ). — ( L. 1990 ) $T_1$ अन्यथैव पतिं यांति ( for the prior half ). — $T_1$ om. ( hapl. ) lines 1994–2003. — ( L. 1994 ) $D_{10}$ $T_{2,3}$ G लोके ( for त्वन्याः ). $G_{1,3,4}$ पत्यौ ( for पतौ ). $D_{10}$ $T_{2,3}$ G च ( for [अ]पि ). — ( L. 1995 ) $D_{10}$ $G_4$ पाषंडमतमाश्रिताः ( for the post. half ). — ( L. 1998 ) $D_{10}$ $T_2$ $G_4$ $M_4$ -हरा ( for -परा ). $G_{1,3}$ परद्रव्यातिलोभाच्च ( for the prior half ). — ( L. 2001 )

महेश्वरः ।

ये पुरा मनुजा देवि सर्वप्राणिषु निर्दयाः ।
घ्नन्ति बालांश्च भुञ्जन्ते मृगाणां पक्षिणामपि ।
गुरुविद्वेषिणश्चैव परपुत्राभ्यसूयकाः ।
पितृपूजां न कुर्वन्ति यथोक्तं चाष्टकादिभिः ।
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
मानुष्यं सुचिरात्प्राप्य निरपत्या भवन्ति ते ।
पुत्रशोकयुता वापि नास्ति तत्र विचारणा ।

उमा ।

भगवन्मानुषाः केचित्प्रदृश्यन्ते सुदुःखिताः ।
उद्वेगवासनिरताः सोद्वेगाश्च यतस्ततः ।
नित्यशोकसमाविष्टा दुर्गताश्च तथैव च ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

ये पुरा मनुजा नित्यमुत्कोचनपरायणाः ।
भीषयन्ति परान्नित्यं विकुर्वन्ति तथैव च ।
ऋणैर्वृद्धिं च ये कृत्वा दरिद्रेभ्यो यथेष्टतः ।
ऋणार्थमभिगच्छन्ति सततं वृद्धिरूपकाः ।
उद्विजन्ते हि तान्दृष्ट्वा धारकास्त्वथ कारणात् ।
अतिवृद्धिर्न कर्तव्या दरिद्रेभ्यश्च धर्मतः ।
ये श्वभिः क्रीडमानाश्च त्रासयन्ति वने मृगान् ।
प्राणिहिंसां तथा देवि कुर्वन्ति च यतस्ततः ।
येषां गृहेषु वै श्वानस्त्रासयन्ति वृथा नरान् ।
एवंयुक्तसमाचाराः कालधर्मगताः पुनः ।
पीडिता यमदण्डेन निरयस्थाश्चिरं प्रिये ।
कथंचित्प्राप्य मानुष्यं तत्र ते दुःखसंयुताः ।
कुदेशे दुःखभूयिष्ठे व्याघातशतसंकुले ।
जायन्ते तत्र शोचन्तः सोद्वेगाश्च यतस्ततः ।

उमा ।

भगवन्मानुषाः केचिदैश्वर्यस्थानसंयुताः ।
म्लेच्छभूमिषु दृश्यन्ते म्लेच्छैश्वर्यसमन्विताः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

ये पुरा मनुजा देवि धनधान्यसमन्विताः ।
अयथावत्प्रयच्छन्ति श्रद्धावर्जितमेव वा ।
अपात्रेभ्यश्च ये दानं शौचमङ्गलवर्जिताः ।
ददत्येव च ये मूर्खाः श्लाघयावज्ञयापि वा ।
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
कुदेशे म्लेच्छभूयिष्ठे दुर्गमे वनसंकटे ।
म्लेच्छाधिपत्यं संप्राप्य जायन्ते तत्र तत्र वै ।

उमा ।

भगवन्भगनेत्रघ्न मानुषेष्वेव केचन ।
क्लीबा नपुंसकाश्चैव दृश्यन्ते पण्डकास्तथा ।
नीचकर्मरता नीचा नीचसौख्यास्तथा भुवि ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

तदहं ते प्रवक्ष्यामि शृणु कल्याणि कारणम् ।
ये पुरा मनुजा भूत्वा घोरकर्मरतास्तथा ।
पशुपुंस्त्वोपघातेन जीवन्ति च रमन्ति च ।
पुंस्त्वोपघातिनश्चैव नराणां कोपकारणात् ।
ये धूर्ताः स्त्रीषु गच्छन्ति अयथावद्यथेष्टतः ।
कामविघ्नकरा ये तु द्वेषपैशुन्यकारणात् ।

---

(L. 1917) $M_4$ अंधान् (for घ्नन्ति). —(L. 1921) सुचिरं (for °रात्). —(L. 1922) $D_{10}$ $T_2$ G च (for वा). — After line 1922, $G_{1.3}$ ins. :

ताहृशास्तु नरा देवि पुनर्जन्मनि दुःखिताः ।
भोगसौख्यं न विन्दन्ति नास्ति तत्र विचारणा ।
उमा ।
भगवन्मानुषाः केचित्कुकळत्रप्रपीडिताः ।
कळत्रवन्तोऽपि सुखं नाप्नुवन्ति कदाचन ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।
महेश्वरः ।
मनुजा देवि दंपत्योर्भेदकाश्च शठास्तथा ।
स्वपत्नीं वर्जयित्वा च पुंश्चल्यां निरताः शुभाः ।

(L. 1923) $T_1$ दृश्यतेतीव दुःखिताः (for the post. half). (L. 1924) $D_{10}$ $T_2$ G यतव्रताः; $T_{1.3}$ ततस्ततः (for ततः). —(L. 1925) $T_2$ $G_{1-3}$ नित्यं (for नित्य-). दुर्भगाश् (for दुर्गताश्). — $T_1$ om. lines 1927–1928. (L. 1929) $D_{10}$ $T_2$ G ऋणवृद्धिकराश्चैव; $T_1$ ऋणवृद्धिपरां कृत्वा (for the prior half). —(L. 1930) $T_2$ अपि; $G_{1.3}$ अप- (for अभि-). $T_3$ -पूर्वकं; $M_3$ (also as above) -सूचकाः (for -रूपकाः). —(L. 1931) $D_{10}$ $G_2$ स्वार्थ-; $T_1$ ऋग-; $T_{2.3}$ $G_{1.3}$ $M_4$ त्वर्थ- (for त्वथ). —(L. 1932) $D_{10}$ $T_2$ G यथेष्टतः (for -च धर्मतः). — $T_1$ om. line 1934. —(L. 1936) $D_{10}$ $T_1$ G कालधर्मं; $T_2$ °धर्मे (for °धर्म-). $T_3$ ततः (for पुनः). —(L. 1941) $D_{10}$ T $G_{2-4}$ -ज्ञान- (for -स्थान-). —(L. 1945) $M_{1-3}$ यशोर्थं कुरुते धर्मं (for the prior half). —(L. 1947) $T_1$ दानं (for मूर्खाः). —(L. 1951) $D_{10}$ $T_3$ G च (for [ए]व). —(L. 1952) $T_1$ om. from the post. half up to the prior half of line 1953. $D_{10}$ $T_{2.3}$ G $M_{1.4}$ पंडकाश् (for पण्ड°). —(L. 1953) $T_3$ नित्यं (for नीचा). — $T_1$ om. line 1955. —(L. 1959) $T_2$ तेषु (for स्त्रीषु). $T_1$ ये चापि स्त्रीषु गच्छंति कामव्यसनकारणात्. —(L. 1960) $D_{10}$ $T_{2.3}$ $G_2$ कालधर्मगतास्तु ते; $G_{1.3.4}$ कालधर्मं गतास्तु

एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
दण्डिता यमदण्डेन निरयस्थाश्चिरं प्रिये ।
यदि चेन्मानुषं जन्म लभेरंस्ते तथाविधाः ।
क्लीवा वर्षवराश्चैव पण्डकाश्च भवन्ति ते ।
नीचकर्मरता लोके निर्लज्जा वीतसंभ्रमाः ।
परनिन्दां पुरस्कृत्य ते भवन्ति स्वकर्मणा ।
यदि चेत्संविसृज्येरंस्ते मुच्यन्ते हि किल्बिषात् ।
तत्रापि ते प्रमाद्येयुः पतन्ति नरकालये ।
स्त्रीणामपि तथा देवि यथा पुंसां तु कर्मजम् ।
इति ते कथितं देवि भूयः श्रोतुं किमिच्छसि ।

Colophon.

उमा ।

भगवन्देवदेवेश शूलपाणे वृषध्वज ।
पुंश्चल्य इति याः स्त्रीषु नीचवृत्तरताः स्मृताः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

याः पुरा प्रमदा देवि बुद्धिमोहसमन्विताः ।
कामरागसमायुक्ताः पतीनपचरन्ति वै ।
प्रतिकूलपरा यास्तु पतीन्प्रति यथा तथा ।
शौचं लज्जां तु विस्मृत्य यथेष्टपरिचारकाः ।
एवंयुक्तसमाचारा यमलोके सुदण्डिताः ।
यदि चेन्मानुषं जन्म लभेरंस्तास्तथाविधाः ।
बहुसाधारणा एवं पुंश्चल्यश्च भवन्ति ताः ।
पौंश्चल्यं यत्तु तद्वृत्तं स्त्रीणां कष्टतमं स्मृतम् ।
ततःप्रभृति ता देवि पतन्त्येव न संशयः ।
शोचन्ति चेत्तु तद्वृत्तं मनसा हितमाप्नुयुः ।

उमा ।

भगवन्देवदेवेश प्रमदा विधवा भृशम् ।
दृश्यन्ते मानुषे लोके सर्वकल्याणवर्जिताः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

या पुरा प्रमदा देवि बुद्धिमोहसमन्विताः ।
कुटुम्बं तत्र वै पत्युर्नाशयन्ति वृथा तथा ।
विषदाश्चाग्निदाश्चैव पतीन्प्रति सुनिर्दयाः ।
अन्यासां हि पतीन्यान्ति स्वपतिद्वेषकारणात् ।
एवंयुक्तसमाचारा यमलोके सुदण्डिताः ।
निरयस्थाश्चिरं कालं कथंचित्प्राप्य मानुषम् ।
तत्र ता भोगरहिता विधवास्तु भवन्ति वै ।

उमा ।

भगवन्प्रमदास्त्वन्याः पतौ ज्ञातिषु सत्स्वपि ।
लिङ्गिन्यः संप्रदृश्यन्ते पाषण्डं धर्ममाश्रिताः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

याः पुरा भावदोषेण लोभमोहसमन्विताः ।
परद्रव्यपरा लोभात्परेषां द्रव्यहारकाः ।
अभ्यसूयापरा यास्तु सपत्नीनां प्रदूषकाः ।
ईर्ष्यापराः कोपनाश्च बन्धूनां विफलाः सदा ।
एवंयुक्तसमाचाराः पुनर्जन्मनि ताः प्रिये ।

ते ( for the post. half ). — ( L. 1964 ) $T_{1}$ नपुंसकाश् ( for वर्षवराश् ). G पंडकाश् ( for पण्डकाश् ). $T_{1}$ नीचकर्मरतास्तथा ( for the post. half ). — ( L. 1965 ) $T_{2}$ -परा ; $M_{1,2}$ -करा ( for -रता ). $T_{1}$ नीचसौख्या निकृष्टाश्च ( for the prior half ). — $T_{1}$ om. lines 1966–1969. — ( L. 1966 ) $D_{10}$ $T_{2}$ $G_{1,3,4}$ परान्दीनान्बहिष्कृत्य ( for the prior half ). M भजंति ( for भवन्ति ). — ( L. 1967 ) $D_{10}$ $T_{2,3}$ $G_{2}$ संप्रपश्येरंस् ; $G_{1,3,4}$ $M_{4}$ संप्रदृ° ( for संविसृ° ). $D_{10}$ $T_{2,3}$ $G_{4}$ कल्मषात् ( for किल्बिषात् ). — ( L. 1968 ) $D_{10}$ $T_{3}$ $G_{4}$ अत्र ( for तत्र ). $G_{1-3}$ पतंति निरये पुनः ( for the post. half ). — ( L. 1969 ) $T_{3}$ om. ( hapl. ) the post. half and the prior half of line 1970. $T_{2}$ प्रकीर्तितं ( for तु कर्मजम् ). — $G_{2}$ om. line 1970. — ( L. 1970 ) $T_{1}$ भवंति मनुजा देवि ( for the prior half ). $G_{1,3,4}$ किं भूयः श्रोतुमिच्छसि ( for the post. half ). — Colophon. *Sub-parvan :* $M_{1-3}$ दानधर्मं. — *Adhy. : name* D $T_{2,3}$ $G_{2}$ उमामहेश्वरसंवादः. — *Adhy. no. :* $D_{10}$ $T_{2,3}$ $G_{2,4}$ 204 ; $T_{1}$ $G_{1,3}$ $M_{1,2}$ 198 ; $M_{3}$ 199 ; $M_{4}$ 196. — ( L. 1972 ) $D_{10}$ $T_{2}$ G इव ( for इति ). $D_{10}$ T $G_{1-3}$ M -वृत्ति- ( for -वृत्त- ). — $T_{1}$ om. line 1974. — ( L. 1974 ) $D_{10}$ $T_{2,3}$ $M_{4}$ मनुजा ( for प्रमदा ). — ( L. 1975 ) $T_{1}$ transp. the prior half and the post. half. $G_{2}$ om. from the post. half up to the post. half of line 1978. $D_{10}$ T $G_{1,3,4}$ अति- ; $M_{1,4}$ अव- ( for अप- ). —( L. 1977 ) $D_{10}$ T $G_{1,3,4}$ -परिचारणाः ( for °चारकाः ). — ( L. 1979 ) $D_{10}$ $T_{2,3}$ G वै ( for चेन् ). $T_{2,3}$ $G_{2}$ $M_{4}$ ते ( for तास् ). $G_{1-3}$ यथा तथा ( for तथाविधाः ). — $T_{1}$ om. lines 1981–1982. — $G_{4}$ om. the ref. — ( L. 1985 ) $D_{10}$ $G_{2,4}$ मानुषा ( for °षे ). — ( L. 1987 ) $D_{10}$ $T_{2,3}$ G $M_{4}$ मनुजा ; $T_{1}$ तु महा- ( for प्रमदा ). — ( L. 1988 ) $T_{1}$ स्त्रियः ; $G_{4}$ यथा ( for तथा ). — ( L. 1990 ) $T_{1}$ अन्यमेव पतिं यांति ( for the prior half ). — $T_{1}$ om. ( hapl. ) lines 1994–2003. — ( L. 1994 ) $D_{10}$ $T_{2,3}$ G लोके ( for त्वन्याः ). $G_{1,3,4}$ पत्यौ ( for पतौ ). $D_{10}$ $T_{2,3}$ G च ( for [अ]पि ). — ( L. 1995 ) $D_{10}$ $G_{4}$ पाषंडमतमाश्रिताः ( for the post. half ). — ( L. 1998 ) $D_{10}$ $T_{2}$ $G_{4}$ $M_{4}$ -हरा ( for -परा ). $G_{1,3}$ परद्रव्यातिलोभाच्च ( for the prior half ). — ( L. 2001 )

अपलक्षणसंपन्नाः पाषण्डं धर्ममाश्रिताः ।
स्त्रियः प्रव्राजशीलाश्च भवन्त्येव न संशयः ।

उमा ।

भगवन्मानुषाः केचित्कारुवृत्तिं समाश्रिताः ।
प्रदृश्यन्ते मनुष्येषु नीचकर्मरता जनाः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

ये पुरा मनुजा देवि स्तब्धा मानयुता भृशम् ।
दर्पाहंकारसंयुक्ताः केवलात्मपरायणाः ।
तादृशा मनुजा देवि पुनर्जन्मनि शोभने ।
कारवो नटगन्धर्वाः संभवन्ति यथा तथा ।
नापिता बन्दिनश्चैव तथा वैतालिकाः प्रिये ।
एवंभूतास्त्वधोवृत्तिं जीवन्त्याश्रित्य मानवाः ।
परप्रसादनकरास्ते परैः कृतवेतनाः ।
परावमानस्य फलं भुञ्जते पौर्वदेहिकम् ।

उमा ।

भगवन्देवदेवेश मानुषेष्वेव केचन ।
दासभूताः प्रदृश्यन्ते सर्वकर्मकरा भृशम् ।
आघातभर्त्सनसहाः पीड्यमानाश्च सर्वशः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

तदहं ते प्रवक्ष्यामि शृणु कल्याणि कारणम् ।
ये पुरा मनुजा देवि परेषां वित्तहारकाः ।
ऋणवृद्धिकरं कुर्यान्न्यासदत्तं तथैव च ।
निक्षेपकारणाद्दत्तं परेषां द्रव्यहारिणः ।
प्रमादाद्विस्मृतं नष्टं परेषां धनहारकाः ।
वधबन्धपरिक्लेशैर्दासत्वे कुर्वतेऽपरान् ।
तादृशा मरणं प्राप्ता दण्डिता यमशासनैः ।
कथंचित्प्राप्य मानुष्यं तत्र ते देवि सर्वथा ।
दासभूता भवन्त्येव जन्मप्रभृति मानवाः ।
तेषां कर्माणि कुर्वन्ति येषां ते धनहारकाः ।
आ समाप्तेः स्वपापस्य कुर्वन्तीति विनिश्चयः ।
पशुभूतास्तथा चान्ये भवन्ति धनहारकाः ।
तत्तथा क्षीयते कर्म तेषां पूर्वापराधजम् ।
अतोऽन्यथा न तच्छक्यं कर्म हातुं सुरासुरैः ।
किं तु मोक्षविधिस्तेषां सर्वथा तत्प्रसादनम् ।
अयथावन्मोक्षकामः पुनर्जन्मनि चेष्यते ।
मोक्षकामी यथान्यायं कुर्वन्कर्माणि सर्वशः ।
भर्तुः प्रसादमाकाङ्क्षेदाघातान्सर्वदा सहन् ।
प्रीतिपूर्वं तु यो भर्त्रा मुक्तो मुक्तः स्वपापतः ।
तथाभूतान्कर्मकरान्सदा संपोषयेत्पतिः ।
यथार्हं कारयेत्कर्म दण्डं कारणतः क्षिपेत् ।
वृद्धान्बालांस्तथा क्षीणान्पालयन्धर्ममाप्नुयात् ।
इति ते कथितं देवि किं भूयः श्रोतुमिच्छसि ।

Colophon.

---

$D_{10}$ शोभने ; $T_{2.3}$ G ताः स्त्रियः ; $M_4$ ते नराः ( for ताः प्रिये ). — ( L. 2002 ) $D_{10}$ $T_{2.3}$ G अलक्षणसमायुक्ताः ; $M_4$ परंलक्षगसंयुक्ताः ( for the prior half ). — After the ref., $T_2$ ins. :

भगवन्प्रमदा लोके एकपुत्रा मृतप्रजाः ।
स्त्रीप्रजायै प्रजायन्ते तन्मे ब्रूहि पितामह ।
महादेवः ।
शृणु देवि प्रवक्ष्यामि रहस्यं शास्त्रविश्रुतम् ।
मनुजे पशुपुत्रादि ऋणयोगात्प्रजायते ।
तद्दायुस्तु न गृह्णाति कृत्वा यो न ददाति च ।
तत्र प्रजायते [ कन्या ] दत्त्वा हत्वा प्रयान्ति ये ।

— ( L. 2005 ) $D_{10}$ $T_{2.3}$ $G_2$ -रतास्तथा ; $T_1$ -करा नराः ; $G_{1.3.4}$ -करास्तथा ( for -रता जनाः ). — ( L. 2008 ) $G_{1.3}$ क्रोधलोभ- ( for केवलात्म- ). — ( L. 2009 ) $D_{10}$ T G मानुषा ( for मनुजा ). — ( L. 2010 ) $T_2$ $G_3$ अपरे ( for कारवो ). — $T_1$ om. line 2012. — ( L. 2012 ) $T_2$ तु ये वृत्तिं ( for स्त्वधोवृत्तिं ). $G_{1.3}$ जीवंतो भुवि मानवाः ( for the post. half ). — ( L. 2013 ) $D_{10}$ $T_{2.3}$ $G_{2.4}$ -प्रमाधन- ( for °दन- ). $T_2$ M -परान् ( for -करास् ). $D_{10}$ $G_3$ -वेदनाः ( for -वेतनाः ). — ( L. 2015 ) $T_1$ भगवन्मानुषाः केचिन् ( for the prior half ). M मानवाः ( for केचन ). — ( L. 2016 ) $D_{10}$ $T_3$ G $M_{1.4}$ -कर्मपरा ( for °करा ). $T_1$ नीचकर्मरता भृशं ( for the post. half ). — $T_1$ om. line 2019. — ( L. 2021 ) $T_1$ $G_{1.3}$ $M_{1.2}$ -कृतं कृष्या ( for -करं कुर्यान् ). — ( L. 2022 ) $D_{10}$ -कारिणा ( for -कारणाद् ). $D_{10}$ T G $M_4$ परद्रव्यापहारिणः ( for the post. half ). — $T_2$ om. ( hapl. ) lines 2024–2030. — ( L. 2024 ) $G_{2.3}$ -क्लेशाद् ( for -क्लेशैर् ). $D_{10}$ $T_3$ G दासत्वं ( for °त्वे ). — $T_1$ om. line 2026. — ( L. 2027 ) $T_3$ $G_4$ भविष्यंति ( for भवन्त्येव ). — $G_2$ $M_{1-3}$ om. ( hapl. ) lines 2029–2030. $M_4$ reads line 2030 twice. — ( L. 2030 ) $M_4$ ( second time ) वृक्ष- ( for पशु- ). $T_1$ कुर्वंति ; $M_4$ ( both times ) फलंति ( for भवन्ति ). — ( L. 2032 ) $T_1$ अन्यथा हि ( for अतोऽन्यथा ). $D_{10}$ T G $M_4$ मोक्तुं ( for हातुं ). — ( L. 2036 ) $G_4$ आयामान् ( for आघातान् ). $D_{10}$ $T_2$ $G_{1-3}$ आयामान्सर्वथा सहन् ( for the post. half ). — ( L. 2037 ) $D_{10}$ $T_2$ $G_4$ स पावनः ( for स्वपापतः ). — ( L. 2038 ) $T_3$ $G_{1-3}$ $M_{2.4}$ संतोषयेत् ( for संपो° ). — ( L 2039 ) $T_1$ धर्मकारणपूर्वकं ( for the post. half ). — ( L. 2040 ) $D_{10}$ क्षुधा- ( for तथा ). — $T_1$

उमा ।

भगवन्मानुषेष्वेव मानुषाः समदर्शनाः ।
चण्डाला इव दृश्यन्ते स्पर्शमात्रेण दूषकाः ।
नीचकर्मकरा देव सर्वेषां मलहारकाः ।
दुर्गताः क्लेशभूयिष्ठा विरूपा दुष्टचेतसः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

तदहं ते प्रवक्ष्यामि त्वमेकाग्रमनाः शृणु ।
ये पुरा मनुजा घोरा अतिमानयुता भृशम् ।
आत्मसंभावनायुक्ताः स्तब्धा दर्पसमन्विताः ।
प्रणामं न तु कुर्वन्ति गुरूणामपि पापकाः ।
ये स्वधर्मार्पणं कार्यमतिमानान्न कुर्वते ।
परान्संनामयन्त्येव आज्ञयात्मनि ये बलात् ।
ऋद्धियोगात्परान्नित्यमवमन्यन्ति मानवान् ।
पानपाः सर्वभक्षाश्च परुषाः कटुका नराः ।
एवंयुक्तसमाचारा दण्डिता यमशासनैः ।
कथंचित्प्राप्य मानुष्यं चण्डालाः संभवन्ति ते ।
नीचकर्मरताश्चैव सर्वेषां मलहारकाः ।
परेषां वन्दनपरास्ते भवन्त्यवमानिताः ।
विरूपाः पापयोनिस्थाः स्पर्शनादपि वर्जिताः ।
कुवृत्तिमुपजीवन्ति भूत्वा ते रजकादयः ।
पुरातिमानदोषात्तु भुञ्जते स्वकृतं फलम् ।
तानप्यवस्थाकृपणांश्चण्डालानपि बुद्धिमान् ।
न च निन्देन्नातिकुप्येद्भुञ्जते स्वकृतं फलम् ।
चण्डाला अपि तां जातिं शोचन्तः शुद्धिमाप्नुयुः ।

उमा ।

भगवन्मानुषाः केचिदाशापाशशतैर्वृताः ।
परेषां द्वारि तिष्ठन्ति प्रतिषिद्धाः प्रवेशने ।
द्रष्टुं ज्ञापयितुं चैव न लभन्ते च यत्नतः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

ये पुरा मनुजा देवि ऐश्वर्यस्थानसंयुताः ।
संविदं तु न कुर्वन्ति परैरैश्वर्यमोहिताः ।
द्वाराणि न ददत्येव द्वेषलोभादिभिर्वृताः ।
अवस्थामोहसंयुक्ताः स्वार्थमात्रपरायणाः ।
लुब्धा भोगयुता वापि सर्वेषां निष्फला भृशम् ।
अपि शक्ता न कुर्युर्ये परानुग्रहकारणात् ।
निर्दयाश्चैव निर्द्वारा भोगैश्वर्यगतिं प्रति ।
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
यदि चेन्मानुषं जन्म लभेरंस्ते तथाविधाः ।
दुर्गता दुरवस्थाश्च कर्मव्याक्षेपसंयुताः ।
अभिधावन्ति ते सर्वे तमर्थमभिवेदिनः ।
राज्ञां वा राजमात्राणां द्वारि तिष्ठन्ति वारिताः ।
कर्म विज्ञापितुं भद्रे न लभन्ते कथंचन ।
प्रवेष्टुमपि ते द्वारि बहिस्तिष्ठन्ति काङ्क्षया ।

उमा ।

भगवन्मानुषे लोके मानुषेषु बहुष्वपि ।
सहसा नष्टसर्वस्वा भ्रष्टकोशपरिग्रहाः ।
दृश्यन्ते मानुषाः केचिद्राजचोरोदकादिभिः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

om. line 2041. — (L. 2041) $D_{10}$ $T_2$ G $M_4$ भूयः श्रोतुं किमिच्छसि (for the post. half). — Colophon. — *Sub-parvan* : $M_3$ दानधर्म. — *Adhy. name* : $D_{10}$ $T_{2,3}$ $G_{2,4}$ $M_{1-3}$ उमामहेश्वरसंवादः. — *Adhy. no.* : $D_{10}$ $T_{2,3}$ $G_{2,4}$ 205; $T_1$ $G_{1,3}$ $M_{1,2}$ 199; $M_3$ 200; $M_4$ 127. — (L. 2043) $G_2$ -मात्रे वि- (for -मात्रेण). $D_{10}$ स्पर्शमात्रे विदूषिताः; $T_1$ स्पर्शमात्रविदूषिताः; $T_{2,3}$ $G_{1,3,4}$ स्पर्शमात्रेपि दूषिताः (for the post. half). — (L. 2044) $D_{10}$ $T_{1,2}$ G $M_4$ -रता (for -करा). $G_{1,3,4}$ -हारिणः (for -हारकाः). — $T_1$ om. line 2047. — (L. 2047) $D_{10}$ $T_{2,3}$ G $M_4$ तद् (for त्वम्). — (L. 2048) $D_{10}$ T G $M_4$ देवि (for घोरा). — (L. 2050) $D_{10}$ $T_{2,3}$ $G_3$ पामराः (पापकाः). — $T_1$ om. lines 2051–2052. — (L. 2051) $M_{1-3}$ इति मानं (for अतिमानात्). — (L. 2052) $M_{1-3}$ चाज्ञया (for आ°). — (L. 2053) $D_{10}$ बुद्धि- (for ऋद्धि-). — (L. 2057) $G_{1,3}$ M -कराश्च (for -रताश्च). — (L. 2058) $T_1$ परेषां वचने युक्ताम् (for the prior half). $D_{10}$ $T_2$ $G_{2-4}$ $M_4$ ते भवंत्येव मानिनः ($M_4$ °ताः); $T_1$ ते भवंत्यपमानिताः (for the post. half). — $T_1$ om. line 2059. — (L. 2059) $D_{10}$ $T_{2,3}$ G स्पर्शनादिविवर्जिताः (for the post. half). — $T_1$ om. line 2061. $D_{10}$ $G_4$ $M_{1-3}$ om. (hapl.) lines 2062–2063. — (L. 2063) $T_3$ न निंदेन्नातिकुप्येत (for the prior half). — (L. 2065) $T_1$ आशापाशेन मोहिताः (for the post. half). — (L. 2070) $D_{10}$ $T_{2,3}$ G संवादं (for संविदं). $G_1$ परैश्वर्यविमोहिताः (for the post. half). — $T_1$ om. (hapl.) line 2071. — (L. 2071) $D_{10}$ $T_3$ $G_{2,4}$ लोभमोहादिभिर्वृताः; $T_2$ द्वेषलोभादिमोहिताः (for the post. half). — (L. 2073) $T_1$ लब्ध्वा धनं भोगयुताः (for the prior half). — (L. 2074) $T_1$ परानुग्रहमंततः (for the post. half). — $T_1$ om. lines 2075, 2077, and 2078. — (L. 2082) $D_{10}$ $T_2$ G $M_4$ ते द्वारं; $T_1$ च द्वारं (for ते द्वारि). — (L. 2083) $D_{10}$ T G $M_4$ भगवन्मानुषाः केचिन् (for the prior half). — (L. 2084) $D_{10}$ नष्टकोश-; $T_1$ भ्रष्टराज- (for °कोश-). — (L. 2085) $D_{10}$ राजचोरांधकादिभिः; $M_{1,3,4}$ °चोरोदकाग्निभिः (for the post,

महेश्वरः ।

ये पुरा मनुजा देवि आसुरं भावमाश्रिताः ।
परेषां वृत्तिनाशं तु कुर्वते द्वेषलोभतः ।
उत्कोचनपराश्चैव पिशुनाश्च तथाविधाः ।
परद्रव्यहरा घोराश्चौर्याद्वान्येन कर्मणा ।
निर्दया निरनुक्रोशाः परेषां वृत्तिनाशकाः ।
नास्तिकानृतभूयिष्ठाः परद्रव्यापहारिणः ।
एवंयुक्तसमाचारा दण्डिता यमशासनैः ।
निरयस्थाश्चिरं कालं तत्र दुःखसमन्विताः ।
यदि चेन्मानुषं जन्म लभेरंस्ते तथाविधाः ।
तत्रस्थाः प्राप्नुवन्त्येव सहसा द्रव्यनाशनम् ।
कष्टं च प्राप्नुवन्त्येव कारणाकारणादपि ।
नाशं विनाशं द्रव्याणामुपघातांश्च सर्वशः ।

उमा ।

भगवन्मानुषाः केचिद्बान्धवैः सहसा पृथक् ।
कारणाकारणादेव सहसा प्राणनाशनम् ।
शस्त्रेण वान्यथा वापि प्राप्नुवन्ति वधं नराः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

ये पुरा मनुजा देवि घोरकर्मरता नराः ।
आसुराः प्रायशो मूर्खाः प्राणिहिंसाप्रिया भृशम् ।
निर्दयाः प्राणिहिंसायां तथा प्राणविघातकाः ।
विश्वस्तघातकाश्चैव तथा सुप्तविघातकाः ।
प्रायशोऽनृतभूयिष्ठा नास्तिका मांसभोजिनः ।
एवंयुक्तसमाचाराः प्राणिधर्मगताः पुनः ।
दण्डिता यमदण्डेन निरयस्थाश्चिरं प्रिये ।
तिर्यग्योनिं पुनः प्राप्य तत्र दुःखपरिक्षयात् ।
यदि चेन्मानुषं जन्म लभेरंस्ते तथाविधाः ।
तत्र ते प्राप्नुवन्त्येव वधबन्धान्यथा तथा ।
आढ्या वा दुर्गता वापि भुञ्जते स्वकृतं फलम् ।
सुप्ता मत्ताश्च विश्वस्तास्तथा ते प्राप्नुवन्त्युत ।
प्राणाबाधकृतं दुःखं बान्धवैः सहसा पृथक् ।
पुत्रदारविनाशं वा शस्त्रेणान्येन वा वधम् ।

उमा ।

भगवन्मानुषाः केचिद्राजभिर्नीतिकोविदैः ।
दण्ड्यन्ते मानुषे लोके मानुषाः सततं भुवि ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

ये पुरा मनुजा देवि मनुजांश्चेतरांश्च वा ।
क्लिष्टघातेन निघ्नन्ति प्राणान्प्राणिषु निर्दयाः ।
असुरा घोरकर्माणः क्रूरदण्डवधप्रियाः ।
ये दण्डयन्त्यदण्ड्यांस्तु राजानः कोपमोहिताः ।
हिंसाविहाराः पुरुषा मांसादा नास्तिकाः शुभे ।
केचित्स्त्रीपुरुषघ्नाश्च गुरुघ्नाश्च तथा प्रिये ।
एवंयुक्तसमाचाराः प्राणिधर्मगताः पुनः ।
दण्डिता यमदण्डेन निरयस्थाश्चिरं प्रिये ।
पूर्वदेहकृतं कर्म भुञ्जते तदिह प्रजाः ।
इहैव यत्कृतं कर्म तत्परत्र फलत्युत ।

half). — $G_{2}$ शिवः (for महेश्वरः). — (L. 2087) $M_{1-3}$ आसुरीं वृत्तिमाश्रिताः (for the post. half). — (L. 2091) $G_{1.3}$ परनिष्पत्तिनाशकाः (for the post. half). — $T_{1}$ om. line 2092. — (L. 2093) $T_{3}$ -सादनैः (for -शासनैः). — $T_{1}$ om. line 2094. — (L. 2095) $G_{2}$ लभंते (for लभेरंस्). $T_{2}$ $M_{1.3}$ चेत् (for ते). — M om. (hapl.) the post. half of line 2096 and the prior half of line 2097. $T_{1}$ om. lines 2097–2098. — (L. 2097) $D_{10}$ $T_{3}$ $G_{4}$ तत्प्राप्नुवंति ; $T_{2}$ तत्राप्नु° (for च प्राप्नु°). — (L. 2098) $D_{10}$ $G_{2.4}$ -घातं (for -घातांश्). — $T_{1}$ om. lines 2099–2100. — (L. 2100) $D_{10}$ $T_{2.3}$ G कारणादेव सर्वेषां (for the prior half). — (L. 2101) $T_{1}$ नरा वधं (by transp.). — (L. 2103) $G_{1-3}$ रमृनाः (for नराः). — $T_{1}$ om. lines 2105–2106. — (L. 2105) $T_{2.3}$ $G_{1.3.4}$ प्राणि- (for प्राण-). — $T_{3}$ om. (hapl.) line 2106. — (L. 2107) $G_{1.3}$ $M_{4}$ प्रायेण (for प्रायशो). $D_{10}$ T G $M_{4}$ -भोजनाः (for -भोजिनः). — (L. 2108) $T_{1.3}$ $G_{1.3.4}$ कालधर्म ; $T_{2}$ कालधर्म- (for प्राणि°). — $T_{1}$ om. line 2109. — (L. 2110) $G_{2}$ तिर्यग्योनिगतो भूत्वा (for the prior half). — (L. 2111) $M_{1-3}$ चेत् (for ते). — $T_{1}$ om. lines 2114–2116. — (L. 2117) G राजनीतिविशारदैः (for the post. half). — (L. 2118) $D_{10}$ $G_{1-3}$ मानुषे ($D_{10}$ °षाः) सर्वतोभयाः ; T $G_{4}$ °षाः सर्वतो भुवि (for the post. half). — (L. 2120) $T_{1}$ om. the post. half and the prior half of line 2121. $D_{10}$ $T_{2.3}$ G मानुषां($T_{2.3}$ $G_{2}$ °षा)श्चेतराणि वा (for the post. half). — (L. 2121) $T_{1}$ मूर्खाः (for प्राणान्). $G_{3}$ निर्भयाः (for निर्दयाः). — $G_{1}$ om. (hapl.) line 2122. — (L. 2122) M ये पुरा (for असुरा). — $T_{1}$ om. line 2123. — (L. 2124) $D_{10}$ $T_{2.3}$ G हिंसार्थं कारपरुषा (for the prior half). $D_{10}$ G शुभाः ; $M_{4}$ प्रिये (for शुभे). — $T_{1}$ om. lines 2125–2126. $M_{4}$ om. (hapl.) line 2125. — (L. 2126) $D_{10}$ $T_{2.3}$ G प्राणिधर्म ; $G_{2}$ प्राणधर्म (for प्राणिधर्म-). — (L. 2127) $T_{1}$ पुनर्जन्मनि शोभने (for the post. half). — After line 2127, $T_{1}$ ins. :

दण्ड्यन्ते राजभिस्तीव्रैर्दण्डैर्नीतिपुरःसरम् ।

— (L. 2128) $D_{10}$ $T_{2.3}$ G पूर्वजन्म- ; $T_{1}$ इहैव यत् (for पूर्वदेह-). — (L. 2129) $D_{10}$ $T_{3}$ $G_{4}$ कर्म कृतं (by

एषा व्यवस्थितिर्देवि मानुषेष्वेव दृश्यते ।
न ऋषीणां न देवानाममरत्वात्तपोबलात् ।
तैरेकेन शरीरेण भुज्यते कर्मणः फलम् ।
न तथा मानुषाणां स्यादन्तर्धाय भवेद्धि तम् ।

उमा ।

किमर्थं मानुषा लोके दण्ड्यन्ते पृथिवीश्वरैः ।
कृतापराधमुद्दिश्य हन्ता हर्तायमित्युत ।
पुत्रार्थी पुत्रकामेष्ट्या इहैव लभते सुतान् ।
तेनैव हि शरीरेण भुञ्जानाः कर्मणां फलम् ।
दृश्यन्ते मानुषे लोके तद्भवाननुमन्यते ।
एतन्मे संशयस्थानं तत्त्वं शंसितुमर्हसि ।

महेश्वरः ।

स्थाने संशयितं देवि तत्त्वं शृणु समाहिता ।
कर्म कर्मफलं चेति युगपद्भुवि नेष्यते ।
यत्त्वयाभिहितं देवि हन्ता हर्तायमित्यपि ।
तेषां तत्पूर्वकं कर्म दण्ड्यते यत्र राजभिः ।
दैहिकं दुष्कृतं तेषां हेतुर्भवति शासने ।
अपराधापदेशेन राजा दण्डयति प्रजाः ।
इहलोके व्यवस्थार्थं राजभिर्दण्डनं स्मृतम् ।
उद्वेजनार्थं शेषाणामपराधं तमुद्दिशन् ।
पुराकृतफलं दण्डो दण्ड्यमानस्य तद् ध्रुवम् ।
प्रागेव च मया प्रोक्तं तत्र निःसंशया भव ।

उमा ।

भगवन्भुवि मर्त्यानां दण्डितानां नरेश्वरैः ।
दण्डेनैव तु तेनेह पापनाशो भवेन्न वा ।
एतन्मया संशयितं तद्भवांश्छेत्तुमर्हति ।

महेश्वरः ।

स्थाने संशयितं देवि शृणु तत्त्वं समाहिता ।
ये नृपैर्दण्डिता भूमावपराधापदेशतः ।
यमलोके न दण्ड्यन्ते तत्र ते यमदण्डनैः ।
अदण्डिता वा ये मिथ्या मर्त्या वा दण्डिता भुवि ।
तान्यमो दण्डयत्येव स हि वेद कृताकृतम् ।
नातिक्रमेद्यमं कश्चित्कर्म कृत्वेह मानुषः ।
राजा यमश्च कुर्वाते दण्डमात्रं तु शोभने ।
उभाभ्यां यमराजभ्यां दण्डितोऽदण्डितोऽपि वा ।
पश्चात्कर्मफलं भुङ्क्ते नरके मानुषेषु वा ।
नास्ति कर्मफलच्छेत्ता कश्चिल्लोकत्रयेऽपि च ।
इति ते कथितं सर्वं निर्विशङ्का भव प्रिये ।

उमा ।

किमर्थं दुष्कृतं कृत्वा मानुषा भुवि नित्यशः ।
पुनस्तत्कर्मनाशाय प्रायश्चित्तानि कुर्वते ।
सर्वपापहरं चेति हयमेधं वदन्ति च ।
प्रायश्चित्तानि चान्यानि पापनाशाय कुर्वते ।
तस्मान्मे संशयो जातस्त्वं तं छेत्तुमिहार्हसि ।

महेश्वरः ।

स्थाने संशयितं देवि शृणु तत्त्वं समाहिता ।
संशयो हि महानेष पूर्वेषां च मनीषिणाम् ।
द्विधा तु क्रियते पापं सद्भिश्चासद्भिरेव च ।
अभिसंधाय वा नित्यमन्यथा वा यदृच्छया ।
केवलं चाभिसंधाय संरम्भाच्च करोति यत् ।
कर्मणस्तस्य नाशस्तु न कथंचन विद्यते ।
अभिसंधिकृतस्येह नैव नाशोऽस्ति कर्मणः ।

---

transp. ). — ( L. 2130 ) $T_1$ येषां ; $G_{1.2}$ एषां ( for एषा ). — ( L. 2131 ) $D_{10}$ $T_{1.3}$ G $M_{1-8}$ ऋषीणां ( for ऋषीणां ). $D_{10}$ G $M_4$ अमृतत्वात् ; $T_2$ अमृताच्च ( for अमरत्वात् ). — ( L. 2133 ) $T_1$ क्षीयते बहुजन्मभिः ( for the post. half ). — ( L. 2138 ) $D_{10}$ $T_{2.3}$ $G_{1.3.4}$ $M_4$ मानुषा ( for °षे ). $D_{10}$ T $G_{1.3.4}$ नानु- ( for अनु- ). — ( L. 2139 ) $D_{10}$ $T_3$ $G_{1.3.4}$ तन्मे त्वं छेत्तुमर्हसि ; $T_{1.2}$ तन्मे छेत्तुं त्वमर्हसि ( for the post. half ). — ( L. 2140 ) $T_2$ शृणु तत्त्वं ( by transp. ). — ( L. 2141 ) $T_3$ $G_{1.3}$ $M_1$ कर्माकर्म- ( for कर्म कर्म- ) — $G_2$ om. lines 2142–2144. — ( L. 2143 ) $D_{10}$ $G_{1.3}$ M [अ]भिहिता ( for °हितं ). $T_1$ $G_{1.3.4}$ $M_1$ [उ]त ( for [अ]पि ). — ( L. 2144 ) $M_{1.2.4}$ दैविकं ( for दैहिकं ). $D_{10}$ T $G_{1.3.4}$ देवि कर्मकृतं तै- ( $T_{1.3}$ $G_{1.3}$ ने )षां ( for the prior half ). — ( L. 2146 ) $T_2$ व्यवस्थानं ; $G_{1.3.4}$ °स्थानं ( for °स्थार्थं ). — $T_1$ om. line 2147. — ( L. 2147 ) $T_2$ $G_{1-3}$ परं धर्मं ( for अपराधं ). — ( L. 2151 ) $T_2$ कृतेन ( for तु तेन ). — ( L. 2152 ) $G_1$ शंसितव्यं ( for संशयितं ). — $T_1$ om. line 2153. — ( L. 2156 ) $G_{1.3}$ $M_4$ तस्यां ये ( for ये मिथ्या ). $D_{10}$ T G $M_{1.2.4}$ मिथ्या ( for मर्त्या ). — ( L. 2157 ) $T_1$ नयानयौ ( for कृताकृतम् ). — ( L. 2160 ) $T_1$ पीडितो ( for दण्डितो ). — ( L. 2162 ) $T_2$ $G_2$ कर्मफलं. — $T_1$ om. line 2163. — $T_1$ ins. after line 2165 ; M after line 2167 :

नास्ति कर्मक्षयश्चेति श्रुतं मे भगवद्वचः ।

— $T_1$ om. lines 2166–2168. — ( L. 2168 ) $G_2$ [ऽ]त्रास्ति ( for जातम् ). $D_{10}$ $T_{2.3}$ $G_4$ तस्मान्मया संशयितं ( for the prior half ). — $T_1$ om. line 2169. — ( L. 2170 ) $T_1$ [ऽ]यं ; M मे ( for हि ). — ( L. 2171 ) $T_2$ $G_2$ विधात्रा ; $G_{1.3}$ द्विधात्र ( for द्विधा तु ). — ( L. 2173 ) $T_1$ क्रियते च ( for च करोति ). — $M_{1-3}$ repeat lines 2174–2180 after line 2224. — ( L. 2175 ) $D_{10}$ $T_{2.3}$ G $M_{1-3}$ ( last three first time ), $_4$ [प]व ( for [इ]ह ). $D_{10}$ वि- ( for [प]व ). — ( L. 2176 )

अश्वमेधसहस्रैर्वा प्रायश्चित्तशतैरपि ।
अन्यथा यत्कृतं पापं प्रमादाद्वा यदृच्छया ।
प्रायश्चित्ताश्वमेधाभ्यां शोधनात्तु प्रणश्यति ।
लोकसंव्यवहारार्थं प्रायश्चित्तादिरिष्यते ।
विद्ध्येवं पापके कार्ये निर्विशङ्का भव प्रिये ।
इति ते कथितं देवि किं भूयः श्रोतुमिच्छसि ।

उमा ।

भगवन्देवदेवेश मानुषाश्चेतरा अपि ।
म्रियन्ते बहुधा लोके कारणाकारणादपि ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

ये पुरा मनुजा देवि कारणाकारणादपि ।
यथासुभिर्वियोज्यन्ते प्राणिनः प्राणिभिर्दयैः ।
तथैव ते प्राप्नुवन्ति यथैवात्मकृतं फलम् ।
विषदस्तु विषेणैव शस्त्रैः शस्त्रेण घातकः ।
एवमेव यथा लोके मानुषा घ्नन्ति मानुषान् ।
कारणैरेव ते तेन तथा स्वप्राणनाशनम् ।
प्राप्नुवन्ति पुनर्देवि नास्ति तत्र विचारणा ।
इति ते कथितं सर्वं पापकर्मफलं प्रिये ।
भूयस्तव समासेन कथयिष्यामि तच्छृणु ।
सत्यप्रमाणकरणं नित्यमव्यभिचारि च ।
यैः पुरा मनुजैर्देवि यस्मिन्काले यथा कृतम् ।
येनैव कारणेनापि कर्म यत्तु शुभाशुभम् ।
तस्मिन्काले तथा देवि तेनैव करणेन ते ।
प्राप्नुवन्ति नराः प्रेत्य निःसंदेहं शुभाशुभम् ।
इति सत्यं विजानीहि लोकतन्त्रविधिं प्रति ।
कर्म कृत्वा नरो भोक्ता स नास्ति दिवि वा भुवि ।
न शक्यं कर्म चाभोक्तुं सदेवासुरमानुषैः ।
कर्मणा ग्रथितो लोक आदिप्रभृति वर्तते ।
एतदुद्देशतः प्रोक्तं कर्मपाकफलं प्रिये ।
यदन्यच्च मया नोक्तं यस्मिंस्ते कर्मसंग्रहे ।
बुद्धितर्केण तत्सर्वं तथा वेदितुमर्हसि ।
कथितं श्रोतुकामायाः किं भूयः श्रोतुमिच्छसि ।

Colophon.

उमा ।

भगवन्सर्वलोकेश लोकपालनमस्कृत ।
प्रसादात्ते महादेव श्रुता मे कर्मणां गतिः ।
संगृहीतं च तत्सर्वं तत्त्वतोऽमृतसंनिभम् ।
कर्मणा ग्रथितं सर्वमिति वेद्मि शुभाशुभम् ।
गोवत्सवच्च जननीं निम्नं सलिलवत्तथा ।
कर्तारं स्वकृतं कर्म नित्यं तमनुधावति ।
कृतस्य कर्मणश्चेह न नाशोऽस्तीति निश्चयः ।

---

$M_{1-3}$ (all second time) -सहस्रेण (for °स्रैर्वा). — (L. 2178) $M_{1-3}$ (all second time) प्रायश्चित्तादिभिः पुण्यैः (for the prior half). $D_{10}$ $T_{2,3}$ $G_{1-3}$ श्रेयसा तत्; $G_4$ तेजसा तत् (for शोधनात्तु). — (L. 2179) $T_1$ प्रायश्चित्तं विधीयते (for the post. half). — $T_1$ om. lines 2180-2181. — (L. 2180) $M_{1-3}$ (all second time) अंतरे च त्वदिष्यते (for the post. half). — (L. 2181) $D_{10}$ $T_{2,3}$ $G_{1-3}$ भूयः श्रोतुं किमिच्छसि (for the post. half). — $G_4$ om. the ref. — (L. 2182) $G_{1,3}$ [इ]तरेपि वा; $G_4$ [इ]तरे अपि (for °रा अपि). — (L. 2183) $D_{10}$ $T_{2,3}$ G मानुषा (for बहुधा). — (L. 2186) $D_{10}$ T G $M_4$ वियुज्यंते (for वियो°). $T_2$ $G_{1,2}$ प्राणिभिः (for °नः). — (L. 2187) $D_{10}$ $T_3$ $G_4$ तथैव; $G_{1-3}$ तदेव (for यथैव). — (L. 2188) $D_{10}$ T G $M_4$ घातकाः (for °कः). — (L. 2190) $D_{10}$ Ś कारणेनैव तेनाथ ($T_3$ तेनैव; M ते तेन) (for the prior half). — (L. 2192) $G_4$ देवि (for सर्वं). $D_{10}$ T G $M_4$ कर्मपाक- (for पापकर्म-). — $T_1$ om. line 2194. — (L. 2194) $D_{10}$ $T_2$ G $M_4$ -कारणात् (for °णं). — (L. 2197) $T_1$ शुभं वान्यत् (for तथा देवि). $D_{10}$ T G $M_4$ कारणेनैव तेन तु ($G_{1,3}$ ते) (for the post. half). — (L. 2199) $D_{10}$ $T_{2,3}$ G $M_4$ प्र- (for वि-). $D_{10}$ $T_3$ G लोके तत्र (for लोकतन्त्र-). — (L. 2200) $D_{10}$ T G $M_4$ -कर्ता (for कृत्वा). $T_1$ नान्यो (for स न). — After line 2200, $T_1$ ins.:

नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ।

— (L. 2201) $D_{10}$ $T_{2,3}$ $G_4$ वा भोक्तुं (for चाभोक्तुं). — $T_4$ om. line 2203. — (L. 2203) $G_3$ प्राप्तं (for प्रोक्तं). $D_{10}$ $T_3$ G $M_4$ प्रति (for प्रिये). — $T_1$ om. lines 2204–2205. — (L. 2204) M यच्च हि (for अन्यच्च). $G_2$ प्रोक्तं (for नोक्तं). $T_2$ धर्म- (for कर्म-). — (L. 2205) $T_2$ -तन्त्रेन (for -तर्केण). $G_{1,3}$ तत्त्वं (for तथा). — (L. 2206) $D_{10}$ $T_2$ G M भूयः श्रोतुं किमिच्छसि (for the post. half). — Colophon. — *Adhy. name*: $D_{10}$ $T_3$ $G_2$ M उमामहेश्वरसंवादः. — *Adhy. no.*: $D_{10}$ $T_3$ $G_{2,4}$ 206; $T_1$ $G_{1,3}$ $M_1$ 200; $T_3$ 205 $M_{2,3}$ 201; $M_4$ 198. — (L. 2207) $T_1$ M देव- (for सर्व-). $T_3$ -देवेश (for -लोकेश). $T_3$ नमोऽस्तु ते (for -नमस्कृत). — $T_1$ om. line 2208. — (L. 2209) $T_1$ त्वया प्रोक्तं (for च तत्सर्वं) — (L. 2210) $T_2$ G वेद (for वेद्मि). — (L. 2211) $G_3$ गोवत्सवत्स्वजननीं (for the prior half). — $G_2$ om. lines 2212–2217. — (L. 2212) $T_1$ om. (hapl.) from the post. half up to the prior half of line 2220. $T_3$ $G_4$ तद् (for तम्). — (L. 2213) $T_3$ तत्रश्च (for कृतस्य). $G_{1,3}$ [ए]व (for [इ]ह). $D_{10}$ $T_{2,3}$ G transp. न and नाशो. — (L. 2214) $D_{10}$ $G_1$

अशुभस्य शुभस्यापि तदप्यवगतं मया ।
भूय एव महादेव वरद प्रीतिवर्धन ।
कर्मणां गतिमाश्रित्य संशयान्मोक्तुमर्हसि ।

महेश्वरः ।

यत्ते विवक्षितं देवि गुह्यमप्यसितेक्षणे ।
तत्सर्वं निर्विशङ्का त्वं पृच्छ मां शुभलक्षणे ।

उमा ।

एवं व्यवस्थिते लोके कर्मणा वृषभध्वज ।
कृत्वा तत्पुरुषः कर्म शुभं वा यदि वेतरत् ।
कर्मणः स्वकृतस्येह कदा भुङ्क्ते फलं पुनः ।
इह वा प्रेत्य वा देव तन्मे शंसितुमर्हसि ।

महेश्वरः ।

स्थाने संशयितं देवि तद्धि गुह्यतमं शृणु ।
त्वत्प्रियार्थं प्रवक्ष्यामि देवगुह्यं शुभानने ।
पूर्वदेहकृतं कर्म भुञ्जते तदिह प्रजाः ।
इहैव यत्कृतं पुंसां तत्परत्र फलिष्यति ।
एषा व्यवस्थितिर्देवि मानुषेष्वेव दृश्यते ।
देवानामसुराणां च अमरत्वात्तपोबलात् ।
एकेनैव शरीरेण भुज्यते कर्मणां फलम् ।
मानुषैर्न तथा देवि अन्तरं त्वेतदिष्यते ।

Colophon.

उमा ।

भगवन्भगनेत्रघ्न मानुषाणां विचेष्टितम् ।
सर्वमात्मकृतं चेति श्रुतं मे भगवन्मतम् ।
लोके ग्रहकृतं सर्वं मत्वा कर्म शुभाशुभम् ।
सदैव ग्रहनक्षत्रं प्रायशः पर्युपासते ।
एतं मे संशयं देव तद्गतं छेत्तुमर्हसि ।

महेश्वरः ।

स्थाने संशयितं देवि शृणु तत्त्वविनिश्चयम् ।
नक्षत्राणि ग्रहाश्चैव शुभाशुभनिवेदकाः ।
मानवानां महाभागे न तु कर्मकराः स्वयम् ।
प्रजानां तु हितार्थाय शुभाशुभविधिं प्रति ।
अनागतमतिक्रान्तं ज्योतिश्चक्रेण बोध्यते ।
किं तु तत्र शुभं कर्म सुग्रहैस्तन्निवेद्यते ।
दुष्कृतस्याशुभैरेव समवायो भवेदिति ।
तस्माद्धि ग्रहवैषम्ये वैषम्यं कुरुते जनः ।
ग्रहसाम्ये शुभं कुर्याज्जात्यां जात्यां पुराकृतम् ।
केवलं ग्रहनक्षत्रं न करोति शुभाशुभम् ।
सर्वमात्मकृतं कर्म लोकवादो ग्रहा इति ।
पृथग्ग्रहाः पृथक्कर्ता कर्ता स्वं भुज्यते फलम् ।
इति ते कथितं सर्वं विशङ्कां जहि शोभने ।

उमा ।

भगवन्विविधं कर्म कृत्वा जन्तुः शुभाशुभम् ।

---

[उ]पगतं ( for [अ]व° ). — Before line 2215, D10 ins. उमा. — (L. 2215) G2 महाभाग ( for °देव ). — (L. 2216) G4 संशयं ( for °यान् ). D10 छेत्तुम् ( for मोक्तुम् ). — G2 शिवः ( for महेश्वरः ). — (L. 2218) D10 T3 G2 तत्सर्वं निर्विशंकार्थं ( for the prior half ). — (L. 2219) M3 व्यवसिते ( for °स्थिते ). D10 T2, 3 G M4 कर्मणां ( for °णा ). — (L. 2220) T1 च ( for the second वा ). — T1 om. line 2221. — (L. 2221) T2 तदा ( for कदा ). — (L. 2222) T1 [आ]प्नोति ( for देव ). — (L. 2223) T2 M4 गुह्यतमं ( for संशयितं ). D10 T3 G M1-3 नृपु ( for शृणु ). — (L. 2224) D10 गुह्यं देवि; T2, 3 G2, 4 M2 देवि गुह्यं ( for देवगुह्यं ). G1, 3 देवि गुह्यं शुभाशुभं ( for the post. half ). — M1-3 om. lines 2225-2230. — (L. 2226) G2 [ए]व लिप्यते; G4 फलिष्यते ( for °ति ). — T1 om. (hapl.) lines 2228-2230. — (L. 2229) T3 M4 भुंजते ( for भुज्यते ). — (L. 2230) T2 मानुषाणां ( for °षैर्न ). T3 अंतरे ( for अन्तरं ). G1 इष्यति ( for °ते ). M4 फलमंतरधीयते ( for the post. half ). — Colophon. — *Adhy. name*: D10 T2, 3 G2 M4 उमामहेश्वरसंवादः; M1-3 उमामहेश्वरसंवादे गुह्याधिकारे प्रायश्चित्तविषयनिश्चयः. — *Adhy. no.*: D10 T2 G2, 4 207; T3 206; G1, 3 M1 201; M2, 3 202; M4 199. — (L. 2231) G2 भगवन्देवदेवेश ( for the prior half ). — (L. 2232) T1 ग्रह- ( for आत्म- ). T1 हि ( for मे ). T1 मया ( for मतम् ). — T1 om. line 2233. — (L. 2233) G3 ग्रहगतं ( for °कृतं ). M4 लोके गर्भकृतं कर्म ( for the prior half ). — (L. 2234) D10 T G M4 तदा ( for सदा ). — (L. 2235) D10 T G एष मे संशयो देव ( for the prior half ). D10 T3 G1-3 तन्मे त्वं ( for तद्गतं ). T2 तन्मे शंसितुमर्हसि; G4 तन्मे छेत्तुं त्वमर्हसि ( for the post. half ). — (L. 2236) G2 -विनिश्चितं ( for °श्चयम् ). — M4 om. lines 2240-2245. — (L. 2240) M1-3 विद्यते ( for बोध्यते ). — (L. 2241) T1 ग्रहैस्तु वि- ( for सुग्रहैस्तन् ). T3 निवोध्यते ( for निवेद्यते ). — (L. 2242) M1-3 इह ( for इति ). — (L. 2243) T1, 2 -वैषम्यं ( for °म्ये ). D10 T2 G विषमं ( for वैषम्यं ). T1 ह्यशुभं कुरुते नरः ( for the post. half ). — (L. 2244) G2 जात्यात्मानं ( for जात्यां जात्यां ). D10 T2, 3 G1, 3, 4 ज्ञात्वात्मा( T3 °दा )नं तथाकृतं ( for the post. half ). — T1 om. line 2247. — (L. 2247) D10 प्रकल्प्यंते ( for पृथक्कर्ता ). — (L. 2248) G4 देवि ( for सर्वं ). T1 शंकां जहि शुभानने ( for the post. half ). — (L. 2249) T3 द्विविधं ( for वि° ). — (L. 2250) T1 तयोः पूर्वं च कतरं ( for the prior half ). — (L. 2251) D10 G त्वम् ( for इह ). — G1, 3 om. the ref. — (L. 2254) M1-3 [ए]-

किं तयोः पूर्वकतरं भुङ्क्ते जन्मान्तरे पुनः ।
एष मे संशयो देव तं मे छेत्तुमिहार्हसि ।

महेश्वरः ।

स्थाने संशयितं देवि तत्ते वक्ष्यामि तत्त्वतः ।
अशुभं पूर्वमित्याहुरपरे शुभमित्यपि ।
मिथ्या तदुभयं प्रोक्तं केवलं तद्ब्रवीमि ते ।
मानुषे तु पदे कर्म युगपद्भुज्यते सदा ।
यथाकृतं यथायोगमुभयं भुज्यते क्रमात् ।
भुञ्जानाश्चैव दृश्यन्ते क्रमशो भुवि मानवाः ।
ऋद्धिं हानिं सुखं दुःखमभयं भयमेव च ।
दुःखान्यनुभवन्त्याढ्या दरिद्राश्च सुखानि च ।
यौगपद्याच्च भुञ्जाना दृश्यन्ते लोकसाक्षिकम् ।
नरके स्वर्गलोके च न तथा संस्थितिः प्रिये ।
नित्यं दुःखं हि नरके स्वर्गे नित्यं सुखं तथा ।
शुभाशुभानामाधिक्यात्कर्मणा तत्र सेव्यते ।
निरन्तरं सुखं दुःखं स्वर्गे च नरके भवेत् ।
तत्रापि सुमहत्कृत्वा पूर्वमल्पं पुनः शुभे ।
एतत्ते सर्वमाख्यातं भूयः श्रोतुं किमिच्छसि ।

उमा ।

भगवन्प्राणिनो लोके म्रियन्ते केन हेतुना ।
जाता जाता न तिष्ठन्ति तन्मे शंसितुमर्हसि ।

महेश्वरः ।

तदहं ते प्रवक्ष्यामि शृणु तत्त्वं समाहिता ।
आत्मकर्मक्षयाद्देहं यथा मुञ्चन्ति तच्छृणु ।
शरीरात्मसमाहारो जन्तुरित्यभिधीयते ।
तत्रात्मानं नित्यमाहुरनित्यं क्षेत्रमुच्यते ।
तत्तु कालवशाल्लोके जीर्णं भवति शोभने ।
कालश्छिनत्ति चायूंषि दिनमासर्तुहायनैः ।
कालः पचति भूतानि कालेनाकुलितं जगत् ।
कालं नातिक्रमेरन्हि सदेवासुरमानवाः ।
यथाकाशे न तिष्ठेत द्रव्यं किंचिदचेतनम् ।
तथा धावति कालोऽयं क्षणं किंचिन्न तिष्ठति ।
एवं कालेन संक्रान्तं शरीरं जर्जरीकृतम् ।
अकर्मयोग्यं संशीर्णं त्यक्त्वा देही ततो व्रजेत् ।
नित्यस्यानित्यसंत्यागाल्लोके तन्मरणं विदुः ।
न च नित्यस्य जीवस्य विनाशो विद्यते शुभे ।
स पुनर्जायतेऽन्यत्र शरीरं नवमाविशन् ।
एवं लोकगतिर्नित्यमादिप्रभृति वर्तते ।

उमा ।

भगवन्प्राणिनां बाला दृश्यन्ते मरणं गताः ।
अतिवृद्धाश्च जीवन्तो दृश्यन्ते चिरजीविनः ।
केवलं कालमरणं न प्रमाणं महेश्वर ।
तस्मान्मे संशयं ब्रूहि प्राणिनां जीवकारणम् ।

महेश्वरः ।

शृणु तत्कारणं देवि निर्णयस्त्वेक एव सः ।
जीर्णत्वमात्रं कुरुते कालो देहं न पातयेत् ।
जीर्णे कर्मणि संघातः स्वयमेव विशीर्यते ।
पूर्वकर्मप्रमाणेन जीवितं मृत्युरेव वा ।
यावत्पूर्वकृतं कर्म तावज्जीवति मानवः ।
तद्वत्कालवशाद्बाला म्रियन्ते भोगसंक्षयात् ।

तद् ( for तद् ). — ( L. 2255 ) $T_1$ देवि ( for कर्म ). — ( L. 2257 ) $M_{1-3}$ मानुषाः ( for मानवाः ). — $T_1$ om. line 2258. — ( L. 2258 ) $D_0$ बुद्धिं ( for ऋद्धिं ). $D_{10}$ $T_{2,3}$ G तत्सवमु( $T_3$ °म )भयं भयं ( for the post. half ). — ( L. 2259 ) $T_1$ दुःखस्य शुभजातानि दरिद्राः प्राप्नुवन्ति च. — ( L. 2260 ) $T_2$ युगपद्यच्च ( for यौगपद्याच्च ). $G_{1-3}$ $M_1$ -साक्षिकाः ( for °कम् ). — $T_1$ om. line 2261. — ( L. 2262 ) $D_{10}$ सत्यं ( for नित्यं ). — ( L 2263 ) $D_{10}$ T G $M_4$ आधिक्यं ( for °क्यात् ). — $T_1$ om. lines 2264–2265. — ( L. 2265 ) $D_{10}$ $T_3$ G $M_2$ भुक्त्वा ; $M_4$ पश्चात् ( for कृत्वा ). $G_2$ पूर्वकृतं ( for °मल्पं ). $T_2$ शुभं ( for शुभे ). — ( L. 2266 ) $D_{10}$ T G किं भूयः श्रोतुमिच्छसि ( for the post. half ). — ( L. 2267 ) $G_3$ प्राणिनां ( for °नो ). — ( L. 2268 ) $M_4$ जातु ( for the second जाता ). — ( L. 2269 ) $D_{10}$ $G_2$ सत्यं ; $T_{1,2}$ $G_{1,3,4}$ $M_4$ सर्वं ( for तत्त्वं ). — $T_1$ om. line 2270. — ( L. 2270 ) $G_2$ देवि ( for देहं ). — ( L. 2271 ) $T_1$ -समाहाराज् ( for °हारो ). — ( L. 2272 ) $T_1$ अनित्यो देह उच्यते ( for the post. half ). — After line 2272, $D_{10}$ T G $M_4$ read lines 2279 2281, and om. lines 2273–2275. — ( L. 2276 ) $G_{1,3}$ $M_4$ -मानुषाः ( for -मानवाः ). — $T_1$ om. line 2277. — ( L. 2278 ) $G_{1,3}$ किंचन ( for किंचिन्न ). — ( L. 2279 ) $T_1$ सप्राप्तं ( for संक्रान्तं ). $T_1$ मर्मरी- ( for जर्जरी- ). $G_3$ शरीरं जन्मजन्मानि ( for the post. half ). — ( L. 2280 ) $D_{10}$ $T_3$ $G_4$ संकीर्णं ( for संशीर्णं ). $T_1$ कर्मयोगेन संस्तीर्णं ( for the prior half ). — ( L. 2281 ) $T_1$ -संयोगात् ( for -संत्या° ). — $D_{10}$ T G $M_4$ om. line 2282. — ( L. 2284 ) $D_{10}$ -गतं ( for -गतिर् ) — $D_{10}$ om. lines 2285-2286. — ( L. 2285 ) T G $M_4$ प्राणिनो ( for °नां ). — ( L. 2289 ) $M_4$ निर्द्वन्द्वस्त्वेकम( तत ( for the post. half ) — ( L 2290 ) $D_{10}$ जीर्णत्व- ( for जी° ). — ( L. 2291 ) $G_{1,3}$ संघाते ( for °तः ). $T_1$ जीर्णे तु कर्मसंघाते ( for the prior half ). — ( L. 2292 ) $T_2$ -प्रकारेण ( for -प्रमाणेन ). $D_{10}$ $T_2$ G $M_{3,4}$ मृत्युम ( for मृत्युर् ). — ( L. 2293 ) $T_1$ पूर्वं ( for पूर्व- ). $T_1$ om. the post. half and the prior half of

जीवन्ति चिरवृद्धाश्च तथा कर्मप्रमाणतः ।
इति ते कथितं देवि निर्विशङ्का भव प्रिये ।

उमा ।

भगवन्केन वृत्तेन भवन्ति चिरजीविनः ।
अल्पायुषो नराः केन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

शृणु तत्सर्वमखिलं गुह्यं पथ्यतरं नृणाम् ।
ये नरा वृत्तसंपन्ना भवन्ति चिरजीविनः ।
अहिंसा सत्यवचनमक्रोधः क्षान्तिरार्जवम् ।
गुरूणां नित्यशुश्रूषा वृद्धानामपि पूजनम् ।
शौचं चाकार्यसंत्यागः सदा पथ्यस्य भोजनम् ।
एवमादि शुभं वृत्तं नराणां दीर्घजीविनाम् ।
तपसा ब्रह्मचर्येण रसायननिषेवणात् ।
उदग्रसत्त्वा बलिनो भवन्ति चिरजीविनः ।
स्वर्गे वा मानुषे वापि चिरं तिष्ठन्ति धार्मिकाः ।
अपरे पापकर्माणः प्रायशोऽनृतवादिनः ।
हिंसाप्रिया गुरुद्विष्टा निष्क्रियाः शौचवर्जिताः ।
नास्तिका घोरकर्माणः सततं मांसपानपाः ।
पापाचारा गुरुद्वेषाः कोपनाः कलहप्रियाः ।
एवमेवाशुभाचारास्तिष्ठन्ति निरये चिरम् ।
तिर्यग्योनौ तथात्यन्तमल्पं तिष्ठन्ति मानुषे ।
तस्मादल्पायुषो मर्त्यास्तादृशाः संभवन्ति ते ।
अगम्यदेशगमनादपथ्यानां च भोजनात् ।
आयुःक्षयो भवेन्नृणामायुःक्षयकरा हि ते ।
भवन्त्यल्पायुषस्तैस्तैरन्यथा चिरजीविनः ।
एतत्ते कथितं सर्वं भूयः श्रोतुं किमिच्छसि ।

Colophon.

उमा ।

भगवन्देवदेवेश श्रुतं मे परमं हितम् ।
आत्मनो जातिसंबन्धं ब्रूहि स्त्रीपुरुषान्तरे ।
स्त्रीप्राणः पुरुषप्राण एकः स पृथगेव वा ।
एष मे संशयो देव तं मे छेत्तुं त्वमर्हसि ।

महेश्वरः ।

तदहं ते प्रवक्ष्यामि शृणु सर्वं समाहिता ।
पुंस्त्वं स्त्रीत्वमिति प्राणे स्थितिर्नास्ति शुभेक्षणे ।
निर्विकारी सदैवात्मा स्त्रीत्वं पुंस्त्वं न चात्मनि ।
कर्मप्रकारेण तथा जात्यां जात्यां प्रजायते ।
अकर्ता चाविकारी च नित्यश्च पुरुषः स्मृतः ।
स्त्रीशरीरकृतं कर्म स्त्रीभावेनोपभुज्यते ।
पुरुषेण कृतं कर्म पुरुषेणैव भुज्यते ।
एवं प्रसज्यते लोके भावैकत्वेन भूयशः ।
शरीरं कर्मनानात्वाद्दृश्यते विपरीतवत् ।
कृत्वा तु पौरुषं कर्म स्त्री पुमानपि जायते ।
स्त्रीभावयुक्पुमान्कृत्वा कर्मणा प्रमदा भवेत् ।

उमा ।

भगवन्सर्वलोकेश कर्मात्मा न करोति चेत् ।
कोऽन्यः कर्मकरस्तत्र देहे तद्वक्तुमर्हसि ।

line 2294. — (L. 2294) $D_{10}$ $T_{2.3}$ $G_{1.3.4}$ तत्र कर्म- ; $G_2$ तत्तत्कर्म- (for तद्वत्काल-). — (L. 2295) $D_{10}$ T G $M_4$ चिरं जीवंति वृद्धाश्च (for the prior half). — $T_2$ om. (hapl.) lines 2298–2300. — (L. 2298) $T_1$ केचित् (for केन). — (L. 2299) $T_3$ पथ्यकरं (for °तरं). — (L 2300) $D_{10}$ $T_{1.3}$ G $M_4$ येन वृत्तेन संपन्ना (for the prior half). — $M_4$ om. (hapl.) lines 2301–2306. — (L. 2302) $T_2$ द्विज- (for नित्य-). — (L. 2303) $T_2$ $G_{1.3.4}$ शौचाद् (for शौचं च). — (L. 2304) $D_{10}$ $T_{2.3}$ $G_{2.4}$ -गुणं (for शुभं). — $D_{10}$ $G_2$ om. lines 2307–2309. — (L. 2307) $T_1$ स्वर्गे मानुष्यलोके वा (for the prior half). — (L. 2310) $T_1$ सततं (for नास्तिका). $T_1$ नास्तिका (for सततं). — $T_1$ om. lines 2311–2312. — (L. 2311) $D_{10}$ $T_3$ G -द्विष्टाः (for -द्वेषाः). — (L. 2312) $D_{10}$ नरके (for निरये). — (L. 2313) G नित्यम् (for [अ]त्यन्तम्). $D_{10}$ $T_{2.3}$ G अल्पास्तिष्ठंति मानवाः (for the post. half). — (L. 2316) $M_4$ -क्षयकृन्निर् (for -क्षयो भवेन्). — $T_1$ om. line 2317. — (L. 2317) $M_4$ बाल्याश्च (for अन्यथा). — (L. 2318) $D_{10}$ $T_{2.3}$ G एवं (for एतत्). $T_1$ एतत्ते सर्वमाख्यातं (for the prior half). $D_{10}$ $T_1$ भूयः किं ($T_1$ किं भूयः) श्रोतुमिच्छसि (for the post. half). — Colophon. — *Adhy. name:* $D_{10}$ $T_3$ $M_3$ उमामहेश्वरसंवादः ; $T_2$ $G_{2.4}$ उमामहेश्वरसंवादे आयुःक्षयलक्षणं ; $M_{1-3}$ उमामहेश्वरसंवादे गुह्याधिकरणं. — *Adhy. no.:* $T_1$ 201 ; $T_2$ $G_2$ 208 ; $T_3$ 207 ; $G_{1.3.4}$ $M_{1.2.4}$ 202 ; $M_3$ 203. — (L. 2319) $D_{10}$ T G देवदेव महादेव श्रुतं मे ($T_1$ श्रुतं ते ; $T_3$ शृणु तं) भगवन्निदं. — (L. 2320) $T_1$ -पुरुषांतरं. — (L. 2321) $G_{1-3}$ स्त्रीप्राणाः पुरुषप्राणा (for the prior half). $T_1$ $G_{1-3}$ एकतः ; M एकस्तु (for एकः स). — (L. 2322) $T_2$ शंसितुम् (for छेत्तुं त्वम्). — (L. 2323) M. समाहितं. — (L. 2324) $D_{10}$ T G $M_{2.4}$ स्त्रीत्वं पुंस्त्वम् (by transp.). — (L. 2325) $D_{10}$ T G निर्विकारः (for °कारी). $T_3$ चात्मनः (for °नि). — $D_{10}$ T G om. lines 2327–2331. — (L. 2332) $M_4$ पौर्विकं (for पौरुषं). $T_2$ कृत्वात्मपुरुषं कर्म ; $G_{1-3}$ कृत्वा कर्म पुमान्स्त्री वा (for the prior half). $T_{1.2}$ $M_4$ अभि- (for अपि). — (L. 2333) $G_{1-3}$ स्त्रीभावं यत् (for °वयुक्). $T_1$ स्त्रीभावयुक्तस्तु पुमान् (for

महेश्वरः ।

शृणु भामिनि कर्तारमात्मा हि न च कर्मकृत् ।
प्रकृत्या गुणयुक्तेन क्रियते कर्म नित्यशः ।
शरीरं प्राणिनां लोके यथा पित्तकफानिलैः ।
व्याप्तमेव त्रिभिर्दोषैस्तथा व्याप्तं गुणैस्त्रिभिः ।
सत्त्वं रजस्तम इति गुणास्त्वेते शरीरिणः ।
प्रकाशात्मकमेतेषां सत्त्वं सततमिष्यते ।
रजो दुःखात्मकं तत्र तमो मोहात्मकं स्मृतम् ।
त्रिभिरेतैर्गुणैः सर्वं लोके कर्म प्रवर्तते ।
सत्यं प्राणिदया शौचं श्रेयः प्रीतिः क्षमा दमः ।
एवमादि तथान्यच्च कर्म सात्त्विकमिष्यते ।
दाक्ष्यं कर्मपरत्वं च लोभो भोगविधिं प्रति ।
कलत्रसङ्गो माधुर्यं नित्यमैश्वर्यलुब्धता ।
रजसश्चोद्भवं चैतत्कर्म नानाविधं सदा ।
अनृतं चैव पारुष्यं श्रुतिविद्वेषता भृशम् ।
हिंसापरत्वं नास्तिक्यं निद्रालस्यभयानि च ।
तमसश्चोद्भवं चैतत्कर्म पापयुतं सदा ।
तस्माद्गुणमयः सर्वः कार्यारम्भः शुभाशुभः ।
तस्मादात्मानमव्यग्रं विद्ध्यकर्तारमव्ययम् ।
सात्त्विकाः पुण्यलोकेषु राजसा मानुषे पदे ।
तिर्यग्योनौ च नरके तिष्ठेयुस्तामसा नराः ।

उमा ।

किमर्थमात्मा भेद्यः सन्देहे शस्त्रेण वा हते ।
स्वयं प्रणश्यते देही तन्मे शंसितुमर्हसि ।

महेश्वरः ।

तदहं ते प्रवक्ष्यामि शृणु कल्याणि कारणम् ।
एतन्नैयायिकैश्चापि मुह्यते सूक्ष्मबुद्धिभिः ।
कर्मक्षये तु संप्राप्ते प्राणिनां देहधारिणाम् ।
उपद्रवो भवेद्देहे येन केनापि हेतुना ।
तन्निमित्तं शरीरी तु शरीरं प्राप्तसंक्षयम् ।
अपयाति परित्यज्य ततः कर्मवशेन सः ।
देहक्षतेऽपि नैवात्मा वेदनाभिर्न चाल्यते ।
तिष्ठेत्कर्मफलं यावद्व्रजेत्कर्मक्षये पुनः ।
आदिप्रभृति लोकेऽस्मिन्नेवमात्मगतिः सदा ।
एतत्ते कथितं देवि भूयः श्रोतुं किमिच्छसि ।

Colophon.

उमा ।

भगवन्देवदेवेश कर्मणैव शुभाशुभम् ।
यथायोगं फलं जन्तुः प्राप्नोतीति विनिश्चयः ।
परेषां विप्रियं कुर्वन्यथा संप्राप्नुयाच्छुभम् ।
यद्येतदस्ति चेद्देव तन्मे शंसितुमर्हसि ।

महेश्वरः ।

तदप्यस्ति महाभागे अभिसंधिफलं नृणाम् ।
हितार्थं दुःखमन्येषां कृत्वाशुभमवाप्नुयात् ।
दण्डयन्भर्त्सयन्राजा प्रजाः पुण्यमवाप्नुयात् ।

---

the prior half ). — ( L. 2334 ) $G_{1,3}$ $M_4$ कर्मात्मानं ; $G_2$ कर्मणा न ( for कर्मात्मा न ). $G_2$ च ( for चेत् ). $T_1$ आत्मा वा अथ देहे वा भजते कर्मकर्तृता. — ( L. 2335 ) $T_1$ [ऽ]त्र ( for ऽन्यः ). $D_{10}$ T G देहे तन्मे त्वं ( for तत्र देहे तद् ). — ( L. 2339 ) $D_{10}$ T G त्रिभिर्गुणैः ( by transp. ). — $T_1$ om. lines 2340–2345. — ( L. 2340 ) $D_{10}$ $T_{2-4}$ G चैव ( for इति ). — ( L. 2343 ) $D_{10}$ G युक्तं ; $T_3$ नित्यं ( for सर्वं ). $D_{10}$ तेन ( for लोके ). — ( L. 2344 ) $T_3$ $M_2$ शौर्यं ( for श्रेयः ). $M_4$ दया ( for दमः ). — ( L. 2345 ) $T_3$ $G_{1,3}$ $M_3$ उच्यते ( for इष्यते ). $G_4$ सात्त्विकं कर्म उच्यते ( for the post. half ). — ( L. 2346 ) $D_{10}$ $T_3$ G मोहो ; $T_2$ मोह- ( for भोग- ). — ( L. 2348 ) M [उ]द्भवस्य ( for °वं च ). $T_1$ रजसश्चाद्भुतं चैव ( for the prior half ). — $M_4$ om. ( hapl. ) lines 2349–2351. — ( L. 2350 ) $D_{10}$ $T_2$ G हिंसा सत्यं च ; $T_2$ हिंसात्वं चैव ( for °परत्वं ). — $G_2$ om. lines 2351–2354. — ( L. 2351 ) $T_1$ $M_{1,2}$ [उ]द्भवति ( for [उ]द्भवं च ). $T_1$ पापकरं ( for °युतं ). $D_{10}$ $T_3$ $G_{1,3,4}$ तथा ( for सदा ). — ( L. 2352 ) $T_1$ $M_4$ तस्माद्गुणमयं सर्वं ( for the prior half ). $D_{10}$ $T_{2,3}$ $G_1$ शुभाशुभं. — ( L. 2354 ) $M_4$ सर्व- ( for पुण्य- ). $T_2$ -लोके तु ( for -लोकेषु ). $T_1$ राजसा मानुषेषु वै ; $M_4$ मानुषा राजसाः पदे ( for the post. half ). — $G_{3,4}$ om. the ref. — ( L. 2356 ) $T_{2,3}$ G भिन्नेस्मिन् ( for भेद्यः सन् ). — ( L. 2357 ) $D_{10}$ T G स्वयं प्रयास्यति तदा ( for the prior half ). — ( L. 2359 ) $G_{1,3}$ निर्णायकैश् ; $G_2$ निर्णायिकैश् ; $G_4$ निर्मा° ( for नैया° ). — ( L. 2360 ) $T_2$ $G_{1,3,4}$ प्राणिनां जन्मकारि- ( $T_3$ °धर्मि )णां ( for the post. half ). — ( L. 2362 ) $T_1$ $G_2$ शरीरं ( for °री ). $D_{10}$ $T_{2,3}$ G $M_4$ प्राप्य ( for प्राप्त- ). $T_1$ स तदा प्राप्य संक्षयं ( for the post. half ). — ( L. 2364 ) $M_{1-3}$ देहे ( for देह- ). $D_{10}$ $T_{1,3}$ G $M_4$ -क्षये ( for -क्षते ). $T_1$ च ( for न ). $G_{1-3}$ बाध्यते ( for चाल्यते ). — ( L. 2365 ) $T_1$ कर्मक्षयं ( for °ये ). — ( L. 2366 ) $G_2$ आदि- ( for आत्म- ). $D_{10}$ $T_1$ $G_{1,3,4}$ M स्मृता ; $T_3$ तदा ( for सदा ). — ( L. 2367 ) $D_{10}$ T G किं भूयः श्रोतुमिच्छसि ( for the post. half ). — Colophon. — *Sub-parvan :* M दानधर्म. — *Adhy. name :* $D_{10}$ $T_{1,3}$ $G_2$ उमामहेश्वरसंवादः. — *Adhy. no. :* $D_{10}$ $T_2$ $G_{2,4}$ 209 ; $T_1$ 202 ; $T_3$ 208 ; $G_{1,3}$ $M_{1,4}$ 203. — ( L. 2368 ) $M_4$ सर्व- ( for देव- ). — ( L. 2369 ) $T_1$ -योगबलं ( for

गुरुः संतर्जयञ्शिष्यान्भर्ता भृत्यजनं स्वकम् ।
उन्मार्गप्रतिपन्नांश्च शास्ता धर्मफलं लभेत ।
चिकित्सकश्च दुःखानि जनयन्हितमाप्नुयात् ।
यज्ञार्थं पशुहिंसां च कुर्वन्नपि न हिंसकः ।
एवमन्ये सुमनसो हिंसकाः स्वर्गमाप्नुयुः ।
एकस्मिन्निहतेऽभद्रे बहवः सुखमाप्नुयुः ।
तस्मिन्हते भवेद्धर्मः कुत एव तु पापकम् ।
अभिसंधेरजिह्मत्वाच्छुद्धे धर्मस्य गौरवात् ।
एतत्कृत्वा तु पापिष्ठान्दोषान्न प्राप्नुयात्क्वचित् ।

उमा ।

भगवन्सर्वमर्त्यानां ज्ञानी भवति सत्तमः ।
किमपेक्ष्य तदुत्पन्नं ज्ञानं तस्य फलं च यत् ।
कृत्रिमं तत्स्वभावं वा तन्मे शंसितुमर्हसि ।

नारदः*।

एतच्छ्रुत्वा महादेवो जगौ ज्ञानस्य संभवम् ।

महेश्वरः ।

स्थावरं जंगमं चेति जगद्द्विविधमुच्यते ।
चतस्रो जातयस्तत्र प्रजानां क्रमशो यथा ।
तेषामुद्भेदजा वृक्षा लता वल्ल्यश्च वीरुधः ।
दंशयूकादयश्चान्ये स्वेदजाः कृमिजातयः ।
पक्षिणश्छिद्रकर्णाश्च प्राणिनस्त्वण्डजाः स्मृताः ।
मृगव्यालमनुष्यांश्च विद्धि तेषां जरायुजान् ।
एवं चतुर्विधां जातिमात्मा संश्रित्य तिष्ठति ।
स्पर्शेनैकेन्द्रियेणात्मा तिष्ठत्युद्भेदजेषु वै ।
शरीरस्पर्शरूपाभ्यां क्लेदजेष्वपि तिष्ठति ।
पञ्चभिश्चेन्द्रियद्वारैर्जीवन्त्यण्डजरायुजाः ।
तथा भूम्यम्बुसंयोगाद्भवन्त्युद्भेदजाः प्रिये ।
शीतोष्णयोस्तु संयोगाज्जायन्ते क्लेदजाः प्रिये ।
अण्डजाश्चापि संयोगाज्जायन्ते क्षेत्रबीजयोः ।
शुक्लशोणितसंयोगात्संभवन्ति जरायुजाः ।
जरायुजानां सर्वेषां मानुषं पदमुत्तमम् ।
सकलैरिन्द्रियैर्मर्त्याः संयुक्ता जल्पिनस्तथा ।
भयं रतिश्च चित्तं तद्द्विद्यते मृगपक्षिषु ।
धर्माधर्मौ च विज्ञानं नैव पक्षिमृगादिषु ।
बुद्धिः सत्त्वं धृतिर्लज्जा ज्ञानं विज्ञानमेव च ।
ऊहापोहौ च मर्त्येषु गुणा नानाविधाः स्मृताः ।
मानुषं हि पदं तस्माद्विशिष्टमिह लक्ष्यते ।
महता धर्मकार्येण प्राप्यते जन्म मानुषम् ।
अतः परं तमोत्पत्तिं शृणु देवि समाहिता ।
द्विविधं हि तमो लोके शार्वरं देहजं तथा ।
ज्योतिर्भिश्चाग्निना लोके नाशं गच्छति शार्वरम् ।
देहजं तु तमो घोरं तैः समस्तैर्न शाम्यति ।
तमसस्तस्य नाशार्थं नोपायमधिजग्मिवान् ।
तपश्चकार विपुलं लोककर्ता पितामहः ।
चतुरस्तु समुद्भूता वेदाः साङ्गाः सहोत्तराः ।

-योगं फलं ). — $T_1$ om. lines 2370 2383. — (L. 2371) $D_{10}$ $T_{2,3}$ G यद्येतदाभिसंधेद्देहे ($T_2$ °श्चोद्देशे) (for the prior half). — (L. 2372) $D_{10}$ $T_{2,3}$ G -बलान् (for -फलं). — (L. 2373) $D_{10}$ $T_{2,3}$ G [अ]सुखम् (for [अ]शुभम्). — $D_{10}$ om. (hapl.) line 2374. $M_4$ om. (hapl.) lines 2374–2377. — (L. 2374) $T_2$ जनान् (for प्रजाः). — (L. 2375) $D_{10}$ $T_{2,3}$ $G_{1,2,4}$ -जनान्स्वकान् (for -जनं स्वकम्). $G_2$ भक्तान्पुण्यजनान्स्वकान् (for the post. half). — (L. 2378) $T_2$ -हिंसाश् (for -हिंसां). $D_{10}$ $T_{2,3}$ G लिप्यते (for हिंसकः). — (L. 2381) $D_{10}$ $T_{2,3}$ G पातकं (for पापकम्). — $G_{1,3,4}$ read line 2382 twice. — (L. 2382) $D_{10}$ अगुह्यत्वाच्च (for अजिह्म°). $G_1$ (first time).$_{2,3,4}$ (last two first time) अहिंसतेति हत्वा तु (for the prior half). M शुभे (for शुद्धे). $G_1$ (first time).$_{2,3,4}$ (last two first time) कर्मणि (for धर्मस्य). — (L. 2383) $D_{10}$ G पापेभ्यो (for पापिष्ठान्). $D_{10}$ $T_3$ $G_4$ न दोषं. $G_{1-3}$ न दोषं प्राप्नुयुः क्वचित् (for the post. half). — For line 2384, $D_{10}$ T G subst.:

चतुर्विधानां जन्तूनां कथं ज्ञानमिह स्मृतम् ।

— $D_{10}$ T G Kumbh. and Madras eds. om. lines 2386–2387. M om. the ref. (नारदः*). — (L. 2389) $D_{10}$ T G योनयस् (for जात°). — (L. 2390) $D_{10}$ T G $M_4$ उद्भिदजा (for उद्भे°). — (L. 2391) $T_1$ दंदशूकादयश्चान्ये (for the prior half). — (L. 2392) $G_2$ चंद्र- (for छिद्र-). $T_1$ पक्षिणः क्षुद्रकर्माणः (for the prior half). $T_1$ यतः; $T_{2,3}$ $G_{3,4}$ $M_1$ मताः (for स्मृताः). — (L. 2393) $T_1$ मृगांश्चैव (for मृगव्याल-). $T_1$ चैतान् (for तेषां). — (L. 2395) $T_2$ स्वांशेन (for स्पर्शेन). — (L. 2396) $D_{10}$ T $G_{2-4}$ स्वेदजेषु (for क्ले°). M [ए]व (for [अ]पि). $G_1$ स्वेदजेष्ववतिष्ठते (for the post. half). — $T_1$ om. (hapl.) the post. half of line 2398 and the prior half of line 2399. — (L. 2399) $D_{10}$ T G स्वेदजाः (for क्ले°). M प्रजाः (for प्रिये). — (L. 2400) $D_{10}$ T G transp. संयोगाज् and जायन्ते. $D_{10}$ T G क्षेत्र- (for क्षेत्र-). — (L. 2401) Kumbh. and Madras eds. शुक्र- (for शुक्ल-). — $D_{10}$ T G om. lines 2403–2409. — (L. 2410) M श्रुतोत्पत्तिं (for तमो°). — $M_4$ om. from शार्वरं in the post. half (of line 2411) up to ज्योतिर्भिश्च (in line 2412). — (L. 2412) $D_{10}$ T G $M_4$ तमो (for [अ]ग्निना). — (L. 2413) $D_{10}$ T $G_{2,4}$

ताँल्लब्ध्वा मुमुदे ब्रह्मा लोकानां हितकारणात् ।
देहजं तत्तमो घोरमभूत्तेनैव नाशितम् ।
कार्याकार्यमिदं चेति वाच्यावाच्यमिदं त्विति ।
यदि चेन्न भवेल्लोके श्रुतं चारित्रदेशिकम् ।
पशुभिर्निर्विशेषं तु चेष्टन्ते मानुषास्त्विति ।
यज्ञादीनां समारम्भः श्रुतेनैव विधीयते ।
यज्ञस्य फलयोगेन देवलोकः समृध्यते ।
प्रीतियुक्ताः पुनर्देवा मानुषाणां फलन्त्युत ।
एवं नित्यं प्रवर्धेते रोदसी च परस्परम् ।
लोकसंधारणं तस्माच्छ्रुतमित्यवधारय ।
ज्ञानाद्विशिष्टं जन्तूनां नास्ति लोकत्रयेऽपि च ।
सहजं तत्प्रधानं स्यादपरं कृत्रिमं श्रुतम् ।
उभयं यत्र संपन्नं भवेत्तत्र तु शोभनम् ।
संप्रगृह्य श्रुतं सर्वे कृतकृत्या भवन्त्युत ।
उपरीव च मर्त्यानां देववत्संप्रकाशते ।
कामं क्रोधं भयं दर्पमज्ञानं चैव बुद्धिजम् ।
तच्छ्रुतं नुदति क्षिप्रं यथा वायुर्बलाहकान् ।
अल्पमात्रं कृतो धर्मो भवेज्ज्ञानवतां महान् ।
महानपि कृतो धर्मो ह्यज्ञानान्निष्फलो भवेत् ।
परावरज्ञो भूतानां ज्ञानवांस्तत्त्वविद्भवेत् ।
एवं श्रुतफलं सर्वं कथितं ते शुभेक्षणे ।

उमा ।

भगवन्मानुषाः केचिज्जातिस्मरणसंयुताः ।
किमर्थं तेऽभिजायन्ते जानन्तः पौर्वदेहिकम् ।
एतन्मे तत्त्वतो देव मानुषेषु वदस्व भोः ।

महेश्वरः ।

तदहं ते प्रवक्ष्यामि कारणं शृणु शोभने ।
ये मृताः सहसा मर्त्या जायन्ते सहसा पुनः ।
तेषां पौराणिकोऽभ्यासः कंचित्कालं स तिष्ठति ।
तस्माज्जातिस्मरा लोके जायन्ते बोधसंयुताः ।
तेषां विवर्धतां संज्ञा स्वप्नवत्सा प्रणश्यति ।
परलोकस्य चास्तित्वे मूढानां कारणं च तत् ।

उमा ।

भगवन्मानुषाः केचिन्मृता भूत्वा हि संप्रति ।
निवर्तमाना दृश्यन्ते देहेष्वेव पुनर्नराः ।

महेश्वरः ।

तदहं ते प्रवक्ष्यामि कारणं शृणु शोभने ।
प्राणैर्वियोज्यमानानां बहुत्वात्प्राणिनां क्षये ।
तथैव नामसामान्याद्यमदूता नृणां भुवि ।
वहन्ति ते क्वचिन्मोहादन्यांस्त इति यामिकाः ।
निर्विकारं हि तत्सर्वं यमो वेद कृताकृतम् ।
तस्मात्संयमिनीं प्राप्य यमेनैते विमोक्षिताः ।
पुनरेव निवर्तन्ते शेषं भोक्तुं स्वकर्मणः ।
स्वकर्मण्यसमाप्ते तु न म्रियन्ते हि मानवाः ।

उमा ।

भगवन्सुप्तमात्राणां मर्त्यानां स्वप्नदर्शनम् ।

---

लोके; $G_{1.3}$ लोकैस् ( for घोरं ). $T_1$ ज्योतिर्भिर्न हि नश्यति ( for the post. half ). — ( L. 2415 ) $D_{10}$ T G चचार ( for चकार ). — ( L. 2416 ) $D_{10}$ T G $M_4$ चरतस् ( for चतुरस् ). $T_1$ सहेतराः ( for सहोत्तराः ). — ( L. 2417 ) $D_{10}$ T G -काम्यया ( for -कारणात् ). — ( L. 2418 ) $G_{1-3}$ $M_4$ तु ( for तत् ). $D_{10}$ $T_2$ $G_{1.3.4}$ श्रुतैरेव विनाशितं; $T_1$ ततस्तैरेव नश्यति ; $T_3$ वेदैरेव विनाशितं ( for the post. half ). — ( L. 2420 ) M लभेल् ( for भवेल् ). $T_1$ $G_2$ -दर्शनं ( for -देशिकम् ). — ( L. 2421 ) $D_{10}$ $T_{2.3}$ G अपि ; $T_1$ भुवि ( for त्विति ). — ( L. 2423 ) $T_1$ -भोगेन ( for -योगेन ). — ( L. 2424 ) $D_{10}$ T G भवंति ( for फलन्ति ). — ( L. 2425 ) $T_1$ प्रमोदेते ( for प्रवर्धेते ). — ( L. 2426 ) $M_4$ -संधारणात् ( for °रणं ). $T_2$ श्रुताद् ( for श्रुतम् ). $T_2$ $G_{1.2}$ [उ]प- ( for [अ]व- ). — ( L. 2428 ) $T_1$ $G_4$ स्मृतं ( for श्रुतम् ). — ( L. 2430 ) $D_{10}$ $T_{1.2}$ $G_{1.3.4}$ कृतकृत्यो भवत्युत ( for the post. half ). — ( L. 2431 ) $D_{10}$ $T_{2.3}$ G [उ]परि ( for [इ]व च ). — ( L. 2432 ) $T_3$ कामक्रोध- ; $G_{3.4}$ कामक्रोधं ( for कामं क्रोधं ). $G_2$ धर्मम् ( for दर्पम् ). — $D_{10}$ $T_1$ om. ( hapl. ) line 2436. — ( L. 2437 ) $D_{10}$ $T_3$ $G_{1.3.4}$ शुभ- ; $T_1$ श्रुते ( for श्रुत- ). — $G_4$ om. the

ref. — ( L. 2439 ) $D_{10}$ T G अभि- ( for तेऽभि- ). $T_1$ पूर्वदैहिकं ( for पौर्वदे° ). — M om. line 2440. — ( L. 2441 ) $D_{10}$ T G शृणु तत्त्वं समाहिता ( for the post. half ). — ( L. 2443 ) $T_1$ धर्मः ; $G_{1-3}$ $M_{1-3}$ बोधः ; $M_4$ [ऽ]-भ्यासात् ( for °सः ). $T_1$ $G_2$ किंचित्कालं ( for कंचि° ). $T_1$ $G_{1.3.4}$ सं- — ( L. 2445 ) $G_{1.3}$ सं- ( for वि- ). ( for सा ). — ( L. 2446 ) $M_4$ परस्यैकस्य नास्तित्वे ( for the prior half ). $D_{10}$ $T_3$ लोकानां ( for मूढानां ). — ( L. 2447 ) $T_1$ मानवाः ( for मानुषाः ). — ( L. 2449 ) $M_4$ भामिनि ( for शोभने ). — ( L. 2450 ) $T_2$ वधे ( for क्षये ). — ( L. 2451 ) $D_{10}$ $T_{2.3}$ G प्रति ( for भुवि ). — ( L. 2452 ) $T_1$ निर्हंत्येते ( for वहन्ति ते ). $D_{10}$ T $G_{1.3.4}$ अन्यम( $D_{10}$ $T_1$ °न्यं म )र्त्यं तु धार्मि( $T_1$ यामि )काः ; $G_2$ अद्य मर्त्यास्तु धार्मिकाः ; $M_4$ अन्यस्त्वं चेति यामिकाः ( for the post. half ). — ( L. 2453 ) $D_{10}$ धर्मो ( for यमो ). — ( L. 2454 ) $T_{1.3}$ $G_{1.3.4}$ $M_{1.3.4}$ संयमनीं ( for °मिनीं ). $D_{10}$ $T_{1.2}$ G [ए]केन ( for [ए]ते वि- ). $T_3$ यमेनैकेन तोषिताः ( for the post. half ). — ( L. 2456 ) $T_3$ $G_4$ निवर्तंते ( for न म्रियन्ते ). $G_{1-3}$ पुनर्जीवंति मानुषाः ( for the post. half ). — $T_1$ om. ( hapl. ) lines 2457–2462. — ( L. 2457 )

किं तत्स्वभावमन्यद्वा तन्मे शंसितुमर्हसि ।

महेश्वरः ।

सुप्तानां तु पुनश्चेष्टा स्वप्न इत्यभिधीयते ।
अनागतमतिक्रान्तं पश्यते संचरन्मनः ।
निमित्तं च भवेत्तस्मात्प्राणिनां स्वप्नदर्शनम् ।
एवं ते कथितं सर्वं भूयः श्रोतुं किमिच्छसि ।

Colophon.

उमा ।

भगवन्सर्वभूतेश लोके कर्मक्रियापथे ।
दैवात्प्रवर्तते सर्वमिति केचिद्व्यवस्थिताः ।
अपरे चेष्टया चेति दृष्ट्वा प्रत्यक्षतः क्रियाम् ।
पक्षभेदे द्विधा चास्मिन्संशयस्थं मनो मम ।
तत्त्वं वद महादेव श्रोतुं कौतूहलं हि मे ।

महेश्वरः ।

तदहं ते प्रवक्ष्यामि शृणु तत्त्वं समाहिता ।
न दैवं कुरुते कर्म लोके देवि शुभाशुभम् ।
लक्ष्यते द्विविधं कर्म मानुषाणां शुभानने ।
पुराकृतं तयोरेकमैहिकं च परं तथा ।
अदृष्टं पौर्विकं कर्म तद्दैवमिति लक्ष्यते ।
ऐहिकं दृष्टकरणं तन्मानुषमिति स्मृतम् ।
मानुषं च क्रियामात्रं दैवात्संभवते फलम् ।
एवं तदुभयं सर्वं मानुषं विद्यते नृप ।
लौकिकं तत्प्रवक्ष्यामि दैवमानुषनिर्मितम् ।
कृषौ तु दृश्यते कर्म कर्षणं वपनं तथा ।
रोपणं चैव लवनं यच्चान्यत्पौरुषं स्मृतम् ।
काले वृष्टिः सुवापश्च प्ररोहः पक्तिरेव च ।
एवमादि तु यच्चान्यत्तद्दैवमिति स्मृतम् ।
प्रवापः पौरुषं कर्म सिद्धिर्दैवमिति स्मृतम् ।
दैवादसिद्धिश्च भवेद्दुष्कृतं चास्ति पौरुषे ।
सुयत्नाल्लभते कीर्तिं दुर्यत्नादयशस्तथा ।
एवं लोकगतिर्देवि आदिप्रभृति वर्तते ।

उमा ।

भगवन्सर्वभूतेश सुरासुरनमस्कृत ।
कथमात्मा सदा गर्भं संविशेत्कर्मकारणात् ।
तन्मे वद महादेव तद्धि गुह्यं परं मम ।

महेश्वरः ।

शृणु भामिनि तद्गुह्यं गुह्यानां परमं प्रिये ।
देवगुह्यादपि परमात्मगुह्यमिति स्मृतम् ।
देवासुरास्तन्न विदुरात्मनो हि गतागतम् ।

---

$D_{10}$ $T_2$ G $M_4$ -मात्रेण (for -मात्राणां). $D_{10}$ $T_2$ प्राणिनां (for मर्त्यानां). — $G_2$ om. (hapl.) lines 2458–2461. — (L. 2459) $D_{10}$ $T_{2,3}$ $G_{1,3,4}$ मनश्चेष्टा (for पुन°). — (L. 2461) $M_4$ -दर्शने (for °नम्). — (L. 2462) $D_{10}$ $T_3$ G देवि (for सर्वं). $D_{10}$ किं भूयः श्रोतुमिच्छसि (for the post. half). — Colophon om. in $T_1$. — *Adhy. name :* $D_{10}$ $T_2$ $G_2$ उमामहेश्वरसंवादे जातिस्मरणलक्षणं; $T_3$ M उमामहेश्वरसंवादः. — *Adhy. no. :* $D_{10}$ $T_2$ $G_{2,4}$ 210; $T_3$ 209; $G_{1,3}$ $M_1$ 204; $M_{2,3}$ 205; $M_4$ 202. — (L. 2463) $T_1$ -लोकेश (for -भूतेश). $T_3$ -फले (for -पथे). $T_1$ सर्वलोकनमस्कृत (for the post. half). — (L. 2465) $T_1$ [अ]पि (for [इ]ति). — (L. 2467) $T_1$ परं (for वद). — (L. 2469) $D_{10}$ $T_{2,3}$ $G_{2,4}$ तदेवं; $T_1$ सदैवं; $G_{1,3}$ तद्दैवं (for न दैवं). $T_3$ om. (hapl.) from. the post. half up to the prior half of line 2472. — (L. 2470) $D_{10}$ $T_2$ G मानुषेष्वेव तच्छृणु (for the post. half). — $G_2$ om. lines 2471–2475. — (L. 2471) $T_1$ द्वयोर् (for तयोर्). $D_{10}$ त्वितरत्; $T_1$ त्वपरं; $T_2$ $G_{1,3,4}$ त्वितरं (for च परं). — (L. 2472) $D_{10}$ $T_{1,2}$ $G_{1,3,4}$ अदृष्टपूर्वं यत्कर्म (for the prior half). — (L. 2473) $D_{10}$ T $G_{1,3,4}$ विहीनं (for ऐहिकं). — $T_1$ om. (hapl.) lines 2474–2478. — (L. 2475) $D_{10}$ $T_{2,3}$ $G_{1,3,4}$ कर्म (for सर्वं). $D_{10}$ वृद्धिवन्; $T_{2,3}$ $G_{1,3,4}$ सिद्धि तन् (for विद्यते). — (L. 2477) $M_4$ मर्दनं (for वपनं). — After line 2477, $M_4$ reads line 2481. $T_1$ $M_4$ read line 2478 after line 2505. $D_{10}$ $T_{2,3}$ G repeat lines 2478–2480 after line 2505. — (L. 2478) $T_1$ रोपणं कर्षणं चैव; $M_4$ शोधनं लक्षणं चैव (for the prior half). — After the prio. half, $M_4$ ins. :

लवणं मर्दनं च यत् ।
एवमादीह यत्कर्म.

— (L. 2479) $D_{10}$ G (all both times) सुवापं (for °पश्च). $T_1$ प्ररोहोत्पत्तिरेव च (for the post. half). — (L. 2480) After the prior half, $M_4$ ins. :

*** क्रियया प्रिये ।
स्वयंभूतममानुष्यं.

$G_{1,3}$ (both both times) $M_1$ तत्तद्दैवम्; $M_2$ तत्तु दैवम् (for तद्दैवतम्). — $D_{10}$ T G om. (hapl.) line 2481 — (L. 2481) $M_4$ प्रयत्नं (for प्रवापः). — $G_2$ om. (hapl.) lines 2482–2489. — (L. 2482) $G_{1,3}$ [अ]पि; $M_4$ [अ]त्र (for [अ]स्ति). $T_1$ मानुषे (for पौरुषे). — After line 2484, $T_1$ ins. an addl. colophon [ *Adhy. no :* 203 ]. $M_2$ reads lines 2506–2546 after line 2484. $M_{1,3}$ read lines 2485–2506 after line 2546. — (L. 2485) $D_{10}$ T $G_{1,3,4}$ -लोकेश (for -भूतेश). $M_4$ भगवन्देवदेवेश (for the prior half). — (L. 2487) $T_3$ महाभाग (for °देव). $D_{10}$ $T_{2,3}$ $G_{1,3,4}$ मनं (for मम). — (L. 2488) $D_{10}$ $T_{1,3}$ $G_{1,3,4}$ $M_3$ सर्वं (for गुह्यं). $M_4$ शृणु ते कथयिष्यामि

अदृश्यो हि स देवानां शैघ्र्यात्सौक्ष्म्यान्निराश्रयात् ।
अतिमात्रातिमायानामात्ममाया सदेष्यते ।
सोऽयं चतुर्विधां जातिं संविशत्यात्ममायया ।
मैथुनं शोणितं बीजं दैवं चाप्यत्र कारणम् ।
बीजशोणितसंयोगो यदा संभवते शुभे ।
तदात्मा विशते गर्भमेवमण्डजरायुजे ।
शीतोष्णयोस्तु संयोगे क्लेदजेष्ववतिष्ठति ।
बीजभूमिजलानां तु योगादुद्भेदजेषु च ।
एवं संयोगकाले तु आत्मा गर्भत्वमेयिवान् ।
कललाज्जायते पिण्डं पिण्डात्पेश्यर्बुदं भवेत् ।
व्यक्तिभावं गते चैव कर्म स्वाश्रयते क्रमात् ।
एवं स्त्रीपुरुषसंयोगं पौरुषं विद्धि भामिनि ।
अपत्यलाभो यच्चान्यत्तद्दैवमिति संस्मृतम् ।
एवं विवर्धमानेन कर्मात्मा सह वर्तते ।
एवमात्मगतिं विद्धि यन्मां पृच्छसि सुव्रते ।
पञ्चभूतस्थितिश्चैव ज्योतिषामयनं तथा ।
अबुद्धिगम्यं यन्मर्त्यैर्हेतुभिर्वा न विद्यते ।
तादृशं कारणं दैवं शुभं वा यदि वेतरत् ।
यादृशं चात्मना शक्यं तत्पौरुषमिति स्मृतम् ।
केवलं फलनिष्पत्तिरेकेन न तु शक्यते ।
पौरुषेण च दैवेन युगपद्ग्रथितं प्रिये ।
तयोः समाहितं कर्म शीतोष्णं युगपत्तथा ।
पौरुषं तु तयोः पूर्वमारब्धव्यं विजानता ।
आत्मना नैव शक्यं हि न तथा कीर्तिमाप्नुयात् ।
खननान्मथनाल्लोके जलाग्निप्रापणं यथा ।
तथा पुरुषकारे तु दैवसंपत्समाहिता ।
नरस्याकुर्वतः कर्म दैवसंपन्न लभ्यते ।
तस्मात्सर्वसमारम्भो दैवमानुषनिर्मितः ।
असुरा राक्षसाश्चैव मन्यन्ते लोकनायकाः ।
न पश्यन्ते च ते पापाः केवलं मांसभक्षकाः ।
प्रच्छादितं हि तत्सर्वं गुह्यकामा हि देवताः ।
तदहं ते प्रवक्ष्यामि देवगुह्यं पुरातनम् ।
आदिकाले प्रजाः सर्वाः कृत्वा कर्म शुभाशुभम् ।
भुञ्जते पश्यमानास्ते वृत्तान्तं लोकयोर्द्वयोः ।
यथैवात्मकृतं विद्युर्देशान्तरगता नराः ।
विद्युस्तथैवान्तकाले स्वकृतं पौर्वदेहिकम् ।
एवं व्यवस्थिते लोके सर्वे धर्मपराभवन् ।
अचिरेणैव कालेन स्वर्गः संपूरितस्तदा ।
देवानामपि संबाधं दृष्ट्वा ब्रह्माप्यचिन्तयत् ।
संचरन्ते कथं देवा मानुषाः प्रविशन्ति हि ।
इत्येवमनुचिन्त्यैष मानुषान्समर्मोहयत् ।
तदाप्रभृति ते मर्त्या न विदुस्ते पुरातनम् ।

( for the prior half ). —( L. 2490 ) $T_3$ हिताहितं ( for गतागतम् ). —( L. 2491 ) $D_{10}$ T G सदैवात्मा ( for स देवानां ). $G_{1-3}$ जनैः ( for शैघ्र्यात् ). —( L. 2494 ) $D_{10}$ $T_{1,3}$ $G_{1,3,4}$ चैव ; $T_2$ $G_2$ एव ( for चापि ). — $T_1$ om. lines 2495–2498. $D_{10}$ $T_{2,3}$ G $M_4$ om. lines 2497–2498. — After line 2499, $M_{1-3}$ read lines 2502–2503. —( L. 2500 ) T G $M_1$ कलिलाज् ( for कल° ). $T_3$ पेश्यं-बुदं ; $M_4$ वै बुद्बुदं ( for पेश्यर्बुदं ). $T_1$ पिंडाज्जंतुः प्रजायते ( for the post. half ). —( L. 2501 ) $D_{10}$ $T_{2,3}$ $G_{1-3}$ $M_1$ व्यक्तिभावगतं ( $T_2$ °वं गतं ; $G_3$ °वगतिं ; $M_1$ °वगते ) चैव ; $T_1$ त्यक्तभोगमिमं चैव ( for the prior half ). — $D_{10}$ T G $M_4$ ( hapl. ) om. lines 2502-2503. —( L. 2502 ) Prior half hypermetric. —( L. 2504 ) $D_{10}$ $T_{1,2}$ G वर्धते ( for वर्तते ). $T_3$ कर्मणात्मा स वर्धते ( for the post. half ). —( L. 2505 ) $D_{10}$ $T_3$ $G_{2,4}$ -गतं ( for -गतिं ). $G_2$ मे ( for मां ). $D_{10}$ $T_{2,3}$ $G_{2,4}$ सुप्रभे ; $G_{1,3}$ शोभने ( for सुव्रते ). — After line 2505, $M_{2,3}$ read lines 2547–2548. $G_1$ om. lines 2506–2509. —( L. 2506 ) $D_{10}$ -स्थितिं ; $T_2$ -स्मृतिं ( for -स्थितिश् ). — $T_1$ om. line 2509. —( L. 2510 ) $G_2$ किमलं ( for केवलं ). —( L. 2511 ) $D_{10}$ $T_{2,3}$ G $M_4$ [द]व ( for च ). $G_{1,3}$ क्रथितं ; $M_{1-3}$ ग्रथिताः ( for °तं ). — $T_1$ om. line 2512. —( L. 2512 ) $M_4$ यत्तच् ( for कर्म ). — $T_3$ om. line 2514. —( L. 2514 ) $D_{10}$ $T_2$ हि न ; $T_3$ G तु न ( for नैव ). $M_4$ अनारब्धं तु शक्यं हि ( for the prior half ). $T_{2,3}$ तथा कीर्तिमवाप्नुयात ( for the post. half ). —( L. 2515 ) $G_{3,4}$ खननं ( for °नान् ). $D_{10}$ $T_2$ $G_4$ तथा ( for यथा ). —( L. 2517 ) $D_{10}$ $T_1$ कुर्वतः ( for [अ]कु° ). $D_{10}$ $T_3$ $G_2$ लिप्यते ( for लभ्यते ). —( L. 2519 ) $D_{10}$ -नाशकाः ; $T_{2,3}$ G $M_4$ -नाशनाः ( for -नायकाः ). $T_1$ न मन्यंते च दैवतं ( for the post. half ). — $T_1$ om. lines 2520–2546. —( L. 2520 ) $M_4$ पश्यंति· $D_{10}$ $T_{2,3}$ G पश्यंति न च ( $G_{1,3}$ च न ) ते पापाः ( for the prior half ). $D_{10}$ $T_{2,3}$ G -भक्षणाः ( for °काः ). —( L. 2521 ) $D_{10}$ $T_{2,3}$ G गूढमाया ( for गुह्यकामा ). —( L. 2522 ) $M_4$ एवं विद्धि शुभाचारे ( for the prior half ). $D_{10}$ $T_{2,3}$ $T_3$ G $M_{2,3}$ देवि ( for देव- ). —( L. 2523 ) $D_{10}$ $T_{2,3}$ $T_2$ $G_{1-3}$ G नराः सर्वे ( for प्रजाः सर्वाः ). —( L. 2524 ) $T_2$ $G_{1-3}$ $M_4$ विभज्य पच्यमानास्ते ( for the prior half ). $G_{1,3,4}$ वृत्तांतान् ( for वृत्तान्तं ). —( L. 2526 ) $M_3$ विदुस् ( for विद्युस् ). —( L. 2527 ) G -रता ( for -परा ). $D_{10}$ $T_{2,3}$ सर्वधर्मरताभवन् ( for the post. half ). —( L. 2528 ) $T_2$ मदा ( for तदा ). —( L. 2529 ) $T_3$ प्राचिंतयन् ( for [अ]प्यचिन्तयत् ). —( L. 2530 ) $T_3$ $G_4$ संचरंति ; $G_2$

कामक्रोधौ च तत्काले मानुषेषु न्यपातयत् ।
ताभ्यामभिहता मर्त्याः स्वर्गलोकं न लेभिरे ।
पुराकृतस्याविज्ञानात्कामक्रोधाभिपीडनात् ।
नैतदस्तीति मन्वाना विकारांश्चक्रिरे पुनः ।
अकार्यादीन्महादोषानारभन्तात्मकारणात् ।
विस्मृत्य धर्मकार्याणि परलोकभयं तथा ।
एवं व्यवस्थिते लोके कश्मलं समपद्यत ।
लोकानां चैव वेदानां क्षयायैव तदा प्रिये ।
नरकाः पूरिताश्चासन्प्राणिभिः पापकारिभिः ।
पुनरेव तु तद्दृष्ट्वा लोककर्ता पितामहः ।
अचिन्तयत्तमेवार्थं लोकानां हितकारणात् ।
समत्वेन कथं लोको वर्तेतेति मुहुर्मुहुः ।
चिन्तयित्वा तदा ब्रह्मा ज्ञानेन तपसा प्रिये ।
अकरोज्ज्ञानदृश्यं तु परलोकं न चक्षुषा ।

उमा ।

भगवन्मृतमात्रस्तु योऽयं जात इति स्मृतः ।
तथैव दृश्यते जातस्तत्रात्मा तु कथं भवेत् ।
गर्भादावेव संविष्ट आत्मेति भगवन्मतम् ।
एष मे संशयो देव तन्मे छेत्तुं त्वमर्हसि ।

महेश्वरः ।

तदहं ते प्रवक्ष्यामि शृणु तत्त्वं समाहिता ।
अन्यो गर्भगतो भूत्वा तत्रैव निधनं गतः ।
पुनरन्यच्छरीरं तदाविश्य भुवि जायते ।
तत्कचित्त्वैव सर्वत्र दैवयोगं तु तद्भवेत् ।
सूतिकाया हितार्थं च मोहनार्थं च देहिनाम् ।
यमकर्मविधानं तद्विद्ध्येवं विद्धि शोभने ।
कौक्षमात्रं तु नरकं भुक्त्वा केचित्प्रयान्ति हि ।
माया सा यामिका नाम यज्जन्ममरणान्तरे ।
इति ते कथितं देवि भूयः श्रोतुं किमिच्छसि ।

उमा ।

भगवन्सर्वभूतेश लोकनाथ वृषध्वज ।
नास्त्यात्मा कर्मभोक्तेति मृतो जन्तुर्न जायते ।
स्वभावाज्जायते सर्वं यथा वृक्षफलं तथा ।
यथोर्मयः संभवन्ति तथैव जगदाकृतिः ।
तपोदानादि यत्कर्म तत्रात्मा दृश्यते वृथा ।
नास्ति पौनर्भवं जन्म इति केचिद्व्यवस्थिताः ।
परोक्षवचनं श्रुत्वा न प्रत्यक्षस्य दर्शनात् ।
तत्सर्वं नास्ति वास्तीति संशयस्थास्तथापरे ।
पक्षभेदान्तरे चास्मिंस्तत्त्वं मे वक्तुमर्हसि ।
उक्तं भगवता यत्तु तत्तु लोकस्य संस्थितिः ।

नारदः ।

प्रश्नमेतं तु पृच्छन्त्यां रुद्राण्यां परिषत्तदा ।
कौतूहलयुता श्रोतुं समाहितमनाभवत् ।

°रंतः ( for °रन्ते ). $D_{10}$ $T_{2.3}$ G स्वर्गं ( for देवा ). — ( L. 2531 ) $D_{10}$ $T_{2.3}$ G $M_4$ [ए]व ( for [ए]ष ). — ( L. 2532 ) $G_3$ om. ( hapl. ) from the post. half up to the prior half of line 2534. $D_{10}$ $T_{2.3}$ $G_{1.2.4}$ पुराकृतं ( for °तनम् ). — ( L. 2533 ) $D_{10}$ $T_{2.3.4}$ [ए]व पातयत् ( for न्यपा° ). — ( L. 2534 ) $T_3$ अपि ( for अभि- ). $G_1$ -गता ( for -हता ). $T_2$ तदाप्रभृति ते मर्त्याः ( for the prior half ). $D_{10}$ $T_{2.3}$ G पेदिरे ( for लेभिरे ). — ( L. 2535 ) $D_{10}$ $T_2$ G $M_4$ -पीडिताः ( for -पीडनात् ). — ( L. 2537 ) $D_{10}$ $T_2$ G $M_4$ अकार्यादि- ; $T_3$ आहार्यादि- ( for अकार्यादीन् ). $G_2$ -महादोषं ( for महादोषान् ). $D_{10}$ $T_{2.3}$ $G_{1.3.4}$ आहरंति ; $G_2$ आहरंती ( for आरभन्त ). — ( L. 2538 ) $M_{2.3}$ विस्मृता ( for °त्य ). $T_2$ -लोकं यथा ( for -लोकभयं ). — ( L. 2539 ) $M_1$ व्यवसिते ( for °स्थिते ). — ( L. 2540 ) $D_{10}$ $T_{2.3}$ G देवानां ( for वेदानां ). — $M_4$ om. ( hapl. ) lines 2541–2545. — ( L. 2542 ) $D_{10}$ $T_{2.3}$ G तान् ( for तद् ). — ( L. 2544 ) $D_{10}$ $T_{2.3}$ G $M_1$ लोके ( for लोको ). — ( L. 2546 ) $D_{10}$ $T_{2.3}$ G तत ( for तु ). — ( L. 2547 ) $D_{10}$ यज् ( for ऽयं ). — $T_2$ om. line 2548. — ( L. 2549 ) $D_{10}$ $T_{2.3}$ तु ( for [इ]ति ). $D_{10}$ यथा ; T $G_{1-3}$ मंत्र ( for मतम् ). — ( L. 2550 ) $M_{1.3}$ एतत्ते ; $M_{2.4}$ एतं मे ( for एष मे ). $T_2$ $G_2$ संशयं ( for °यो ). $T_1$ तत्त्वं छेत्तुमिहार्हसि ( for the post. half ). — ( L. 2553 ) $T_1$ $G_{1.3.4}$ $M_2$ अन्य- ( for अन्यच् ). $D_{10}$ $T_{2.3}$ G $M_4$ प्रविश्य ( for आ° ). — $G_2$ om. lines 2554–2557. — ( L. 2554 ) $D_{10}$ T $G_{1.3.4}$ तत्त्वविच्चैव सर्वेस्तु ( for the prior half ). $D_{10}$ $T_{1.2}$ $G_{1.3.4}$ $M_4$ दैवयोगस् ( for °योगं ). $D_{10}$ $T_{2.3}$ $G_{1.3.4}$ सं- ( for तद् ). — ( L. 2556 ) $D_{10}$ $T_{2.3}$ $G_{1.3.4}$ समकर्मविधानत्वाद् ( for the prior half ). — $T_1$ om. line 2557. — ( L. 2557 ) $D_{10}$ $T_{2.3}$ $G_{1.3.4}$ कांक्षमाणांस् ; $M_4$ कुक्षिमात्रं ( for कौक्ष° ). — ( L. 2558 ) $D_{10}$ $T_{2.3}$ $G_{1.3.4}$ सं- ( for सा ). $T_1$ यामा या यामिका नाम ( for the prior half ). — ( L. 2559 ) $T_1$ $G_{2.4}$ किं भूयः श्रोतुमिच्छसि ; $T_3$ भूयः किं श्रोतुमि° ( for the post. half ). — ( L. 2560 ) $D_{10}$ $T_{2.3}$ G -लोकेश ( for -भूतेश ). — ( L. 2564 ) T G $M_{1.2.4}$ -दानानि ( for °दि ). $D_{10}$ तत्र यद् ; $T_{2.3}$ $G_{1.3.4}$ अत्र तद् ( for तत्रात्मा ). $T_1$ $M_3$ यथा ; $T_3$ तथा ; $G_{1.3}$ [ऽ]थ वा ( for वृथा ). $G_2$ तत्र दृश्यति ते वृथा ( for the post. half ). — $G_2$ om. lines 2566–2569. — ( L. 2566 ) $M_4$ परोक्षं ( for परोक्ष- ). $G_{1.3}$ प्रत्यक्षस्य च ; M प्रत्यक्षस्यास्य ( for न प्रत्यक्षस्य ). — ( L. 2567 ) $D_{10}$ T $G_{1.3.4}$ $M_4$ न ( for वा ). — ( L. 2568 ) $T_1$ सर्वं ( for तत्त्वं ). — $D_{10}$ $T_2$ $G_{1-3}$ $M_4$ om. the ref. — ( L. 2570 ) $D_{10}$ $T_{2.3}$

महेश्वरः ।

नैतदस्ति महाभागे यद्वदन्तीह नास्तिकाः ।
एतदेवाभिशस्तानां श्रुतिविद्वेषिणां मतम् ।
सर्वमर्थं श्रुतं दृष्टं यत्प्रागुक्तं मया तव ।
तदाप्रभृति मर्त्यानां श्रुतमाश्रित्य पण्डिताः ।
कामान्संछिन्द्य परिघान्धृत्वा वै परमासिना ।
अभियान्त्येव ते स्वर्गं पश्यन्तः कर्मणां फलम् ।
एवं श्रद्धाफलं लोके परतः सुमहत्फलम् ।
बुद्धिः श्रद्धा च शुश्रूषा कारणानि हितैषिणाम् ।
तस्मात्स्वर्गाभिगन्तारः कतिचित्त्वभवन्नराः ।
अन्ये करणहीनत्वान्नास्तिक्यं भावमाश्रिताः ।
श्रुतविद्वेषिणो मूर्खा नास्तिका दृढनिश्चयाः ।
निष्क्रियाश्च निरन्नाद्याः पतन्त्येवाधमां गतिम् ।
नास्तीति वै पुनर्जन्म कवयोऽप्यत्र मोहिताः ।
नाधिगच्छन्ति तन्नित्यं हेतुवादशतैरपि ।
एषा ब्रह्मकृता माया दुर्विज्ञेया सुरासुरैः ।
किं पुनर्मानुषैर्लोके ज्ञातुकामैः स्वकर्मभिः ।
केवलं श्रद्धया देवि श्रुतिमात्रनिविष्टया ।
तदस्तीत्येव मन्तव्यं तथा हि तमवाप्नुयात् ।
वेदगुह्येषु चान्येषु हेतुर्देवि निरर्थकः ।
बधिरान्धवदेवात्र वर्तितव्यं हितैषिणा ।
एतत्ते कथितं सर्वं देवगुह्यं प्रजाहितम् ।
त्वत्प्रीत्यर्थमिदं गुह्यमवाच्यमपि भाषितम् ।

Colophon.

उमा ।

भगवन्सर्वभूतेश त्रिपुरार्दन शंकर ।
कीदृशा यमदण्डास्ते कीदृशाः परिचारकाः ।
कथं मृतास्ते गच्छन्ति प्राणिनो यमसादनम् ।
कीदृशं भवनं तस्य कथं दण्डयति प्रजाः ।
एतत्सर्वं महादेव श्रोतुमिच्छाम्यहं प्रभो ।

महेश्वरः ।

शृणु कल्याणि तत्सर्वं यत्त्वं देवि मनःप्रियम् ।
दक्षिणस्यां दिशि शुभे यमस्य सदनं महत् ।
विचित्रं रमणीयं च नानाभावसमन्वितम् ।
पितृभिः प्रेतसंघैश्च यमदूतैश्च संततम् ।
प्राणिसंघैः सुबहुभिः कर्मवश्यैस्तु पूरितम् ।
तत्रास्ते दण्डयन्नित्यं यमो लोकहिते रतः ।
मायया सततं वेत्ति प्राणिनां यच्छुभाशुभम् ।
मायया संहरंस्तत्र प्राणिसंघान्यतस्ततः ।
तस्य मायामयाः पाशा न वेद्यन्ते सुरासुरैः ।
को हि मानुषमात्रस्तु वेत्ता तच्चरितं महत् ।
एवं हि शासतस्तस्य यमस्य परिचारकाः ।
गृहीत्वा संनयन्त्येव प्राणिनः क्षीणकर्मिणः ।
येन केनापदेशेन अपदेशस्तदुद्भवः ।

G पृच्छंत्या ( for पृच्छन्त्यां ). D10 T2 G रुद्राण्या ( for °ण्यां ). T3 रुद्राण्या शंकरोवदत् ( for the post. half ). — T1 महेशः ( for °श्वरः ). — ( L. 2572 ) T2 ह; G1. 3. 4 हि; G2 च ( for [इ]ह ). — ( L. 2573 ) D10 T2. 3 G4 श्रुत- ( for श्रुति- ). — ( L. 2574 ) M4 तत्समर्थं ( for सर्वमर्थं ). — ( L. 2575 ) G1–3 सर्वेषां ( for मर्त्यानां ). — ( L. 2576 ) D10 संभिद्य ( for संछिन्द्य ). T1 परितो; T2 भगवान् ( for परिघान् ). M4 कामक्रोधौ समाच्छिद्य ( for the prior half ). D10 T2. 3 G4 धृत्वा वै ( D10 G4 वे ) परमासिनां; M4 परिघो धृतिनामिना ( for the post. half ). — ( L. 2577 ) D10 T G1–3 कर्मणः ( for °णां ). — ( L. 2578 ) T3 -मर्थं ( for -फलं ). G2 भोगे ( for लोके ). T2 एवं श्रुत्वा परं लोके ( for the prior half ). M4 परत्र ( for °तः ). — ( L. 2579 ) D10 T2. 3 G विनयः; T1 नियमः ( for शुश्रूषा ). — ( L. 2581 ) T2 G2 कारण- ( for क° ). — ( L. 2582 ) M1. 3 श्रुति- ( for श्रुत- ). — ( L. 2583 ) D10 T G निरन्नाद्याः ( for °द्याः ). — ( L. 2584 ) D10 T G M4 अस्तीति ( for इति वै ). M4 यत्र ( for ऽप्यत्र ). — ( L. 2585 ) T2 ते ( for तन् ). G2 हेतुमद्दर्शनैरपि ( for the post. half ). — T1 om. line 2587. — ( L. 2587 ) D10 T2. 3 G मानवैर् ( for मानुषैर् ). D10 T2. 3 G कुबुद्धिभिः ( for स्वकर्मभिः ). — ( L. 2589 ) D10 T2. 3 G ततोस्ति ( for तदस्ति ). T3 यथा ( for तथा ). — ( L. 2590 ) T1 [अ]र्थेषु ( for [अ]न्येषु ). — ( L. 2592 ) D10 T2 G देवि ( for सर्वं ). D10 T3 G4 ऋषि-; M4 वेद- ( for देव- ). G4 मनातनं ( for प्रजाहितम् ). — D10 T G om. (hapl.) line 2593. — Colophon. — *Adhy. name :* D10 T2, G2 उमामहेश्वरसंवादः; T3 उमामहेश्वरसंवादे जातिस्मरणलक्षणम्; M1–3 उमामहेश्वरसंवादे तदपशुश्राधिकरणम्. — *Adhy. no. :* D10 T2 G2. 4 211; T1 204; T3 210; G1. 3 M1 205; M2. 3 206; M4 203. — ( L. 2594 ) D10 T2. 3 G1. 3 M4 -लोकेश ( for -भूतेश ). T1 G2. 4 भगवन्देवदेवेश ( for the prior half ). G2 त्रिपुरांतक ( for °रार्दन ). — ( L. 2597 ) T3 दंडयते ( for °यति ). — ( L. 2598 ) G2 तत्त्वतः ( for [अ]हं प्रभो ). — T1 महेशः; G2 शिवः ( for महेश्वरः ). — ( L. 2601 ) G2 -राग- ( for -भाव- ). — T1 om. ( hapl. ) line 2603. — ( L. 2603 ) D10 T3 G M3 च ( for सु- ). — M1–3 om. ( hapl.) line 2605. — ( L. 2607 ) T2 तस्य मायाश्च पाशाश्च ( for the prior half ). T1 भिद्यंते ( for वे° ). — ( L. 2608 ) T3 om. from मात्रस्तु up to पदेशे ( in the prior half of line 2611 ). G1. 2 -मात्रं ( for -मात्रस् ). D10 T2 G

कर्मणा प्राणिनो लोक उत्तमाधममध्यमाः ।
यथार्हं तान्समादाय नयन्ति यमसादनम् ।
धार्मिकानुत्तमान्विद्धि स्वर्गीयास्ते यथामराः ।
नृषु जन्म लभन्ते ये कर्मणा मध्यमाः स्मृताः ।
तिर्यङ्नरकगन्तारो ह्यधमास्ते नराधमाः ।
पन्थानस्त्रिविधा दृष्टा सर्वेषां गतिजीविनाम् ।
रमणीयं निराबाधं दुर्दर्शमिति नामतः ।
रमणीयं तु सन्मार्गं पताकाध्वजसंकुलम् ।
धूपितं सिक्तसंमृष्टं पुष्पमालाभिसंकुलम् ।
मनोहरं सुखस्पर्शं गच्छतामेव तद्भवेत् ।
निराबाधं यथा लोके सुप्रशस्तं तथा भवेत् ।
तृतीयं वत्तु दुर्दर्शं दुर्गन्धि तमसावृतम् ।
परुषं शर्कराकीर्णं श्वदंष्ट्राबहुलं भृशम् ।
कृमिकीटसमाकीर्णं गच्छतामतिदुर्गमम् ।
मार्गैरेभिस्त्रिभिर्नित्यमुत्तमाधममध्यमान् ।
संनयन्ति यथा काले तन्मे शृणु शुचिस्मिते ।
उत्तमानन्तकाले तु यमदूताः सुसंयताः ।
नयन्ति सुखमादाय रमणीयपथेन वै ।

उमा ।

भगवंस्तत्र चात्मानं त्यक्तदेहं निराश्रयम् ।
अदृश्यं कथमादाय संनयन्ति यमान्तिकम् ।

महेश्वरः ।

शृणु भामिनि तत्सर्वं त्रिविधं देहधारणम् ।
कर्मवश्यं भोगवश्यं दुःखवश्यमिति प्रिये ।
मानुषं कर्मवश्यं स्यात्स्वर्गीयं भोगसाधनम् ।
तृतीयं यातनावश्यं शरीरं मायया कृतम् ।
यमलोके न चान्यत्र दृश्यते यातनायुतम् ।
शरीरैर्यातनावश्यैर्जीवमामुच्य भामिनि ।
नयन्ति यामिकास्तत्र प्राणिनो मायया मृतान् ।
मध्यमानथ वेषेण मध्यमेन यथा तथा ।
चण्डालवेषास्त्वधमान्गृहीत्वा भर्त्स्य तर्जनैः ।
आकर्षन्तस्तथा पाशैर्दुर्दर्शेन नयन्ति तान् ।
त्रिविधानेवमादाय नयन्ति यमसादनम् ।
धर्मासनगतं दृष्ट्वा भ्राजमानं स्वतेजसा ।
लोकपालं सभाध्यक्षं तथैव परिषद्गतम् ।
दर्शयन्ति महाभागे यामिकास्तान्निवेद्य ते ।
पूजयन्दण्डयन्कांश्चित्तेषां शृण्वञ्शुभाशुभम् ।
व्यापृतो बहुसाहस्रैस्तत्रास्ते सततं यमः ।
गतानां तु यमस्तेषामुत्तमानभिपूजया ।
अभिसंगम्य विधिवत्पृष्ट्वा स्वागतकौशलम् ।
प्रस्तुत्य सत्कथां तेषां लोकं संदिशते यमः ।
यमेनैवमनुज्ञाता यान्ति पश्चात्त्रिविष्टपम् ।
मध्यमानां यमस्तेषां श्रुत्वा कर्म यथातथम् ।
जायन्तां मानुषेष्वेव इति संदिशते च तान् ।
अधमान्पापसंयुक्तान्यमो नावेक्षतेऽऽगतान् ।
यमस्य पुरुषा घोराश्चण्डालसमदर्शनाः ।
यातना यापयन्त्येतांल्लोकपालस्य शासनात् ।

देवस्य ; $T_1$ वेत्तास्य ( for वेत्ता तच् ). — ( L. 2609 ) $D_{10}$ $T_3$ G $M_4$ संवसतस् ; $M_{1-3}$ संशास° ( for हि शास° ). — ( L. 2610 ) $T_1$ तान् ( for सं- ). — ( L. 2611 ) $D_{10}$ $T_3$ $G_4$ त्वपदेशास् ; $M_{1-3}$ ह्यप° ( for अप° ). $T_2$ $G_{1-3}$ समुद्भवः ( for तदुद्भवः ). $M_4$ त्वपदेशं तदुद्भवेत् ( for the post. half ). — ( L. 2612 ) $G_2$ प्राणिनां ( for °नो ). $D_{10}$ लोका ( for लोक ). — ( L. 2613 ) $G_2$ तत् ( for तान् ). — ( L. 2614 ) $D_{10}$ T G $M_2$ स्वर्गिणस् ( for स्वर्गीयास् ). $M_4$ यथा स्मृताः ( for यथामराः ). — $M_4$ om. ( hapl. ) line 2615. — ( L. 2615 ) $M_{1-3}$ वै ( for ये ). $G_2$ मानुषाः ( for मध्यमाः ). — ( L. 2618 ) $G_{1.3}$ दुर्दर्शमिव नारकं ( for the post. half ). — ( L. 2622 ) $T_1$ तथा ( for यथा ). $D_{10}$ $T_{2.3}$ $G_1$ लोकं ( for लोके ). $D_{10}$ $T_{2.3}$ G कृतं ; $T_1$ यथा ( for तथा ). — ( L. 2623 ) $D_{10}$ T G यत् ( for तत् ). — ( L. 2624 ) $T_1$ $G_{1.3}$ M -पूर्णं ( for -कीर्णं ). $G_{1.3}$ -बहुदायुतं ( for °लं भृशम् ). — ( L. 2626 ) $D_{10}$ $T_{2.3}$ G एव ; M एवं ( for एभिस् ). — ( L. 2628 ) $G_{1.3}$ उत्तमाधमकाले तु ; $M_4$ °नां तु कालेन ( for the prior half ). $T_2$ सुसंवृताः ( for °यताः ). — ( L. 2629 ) $G_3$ -पदेन ( for -पथेन ). — ( L. 2630 ) $T_2$ गतश्रियं ( for निराश्रयम् ). — $G_2$ om. lines 2631-2634. — $T_1$ महेशः ( for °श्वरः ). — ( L. 2632 ) $G_1$ देवि ( for देह- ). $D_{10}$ T $G_{1.3.4}$ $M_2$ -कारणम् ( for -धा° ). — ( L. 2633 ) $T_1$ अथापरं ( for इति प्रिये ). — ( L. 2634 ) $D_{10}$ $T_{2.3}$ $G_{1.3.4}$ द्वितीयं ; $T_1$ स्वकीयं ( for स्वर्गीयं ). — $T_1$ om. ( hapl. ) line 2636. — ( L. 2637 ) $D_{10}$ $G_{2-4}$ जीवान् ( for जीवम् ). — ( L. 2639 ) $T_1$ मध्यमेन ( for °मान् ). $G_{1.3.4}$ योध- ( for अथ ). — ( L. 2644 ) $M_3$ तदाध्यक्षं ; $M_4$ धना° ( for सभा° ). — ( L. 2645 ) $G_2$ धार्मिकास् ( for यामि° ). $T_{2.3}$ तं ( for तान् ). $T_1$ तु ( for ते ). — ( L. 2647 ) $T_1$ नियतं ( for सततं ). — ( L. 2648 ) $T_2$ -पूजयेत् ; $G_{1.3.4}$ -पूजयन् ( for -पूजया ). $G_2$ आत्मवानतिपूजया ( for the post. half ). — ( L. 2649 ) $D_{10}$ T G $M_{2.4}$ -संगृह्य ( for -संगम्य ). — ( L. 2650 ) $D_{10}$ $T_{2.3}$ G तत्कृतं ; $T_1$ संगतं ( for सत्कथां ). — ( L. 2652 ) $G_2$ पच्यमानां ( for मध्यमानां ). $G_{1.3}$ समस् ( for यमस् ). — ( L. 2654 ) $D_{10}$ T G $M_4$ पाश- ( for पाप- ). — ( L. 2656 ) $D_{10}$ $T_{1.3}$ G प्रापयंति ( for या° ). $T_2$ प्रापयंत्येव तान्सर्वाँल्ँ ( for the prior

महेश्वरः ।

नैतदस्ति महाभागे यद्वदन्तीह नास्तिकाः ।
एतदेवाभिशस्तानां श्रुतिविद्वेषिणां मतम् ।
सर्वमर्थं श्रुतं दृष्टं यत्प्रागुक्तं मया तव ।
तदाप्रभृति मर्त्यानां श्रुतमाश्रित्य पण्डिताः ।
कामान्संछिन्द्य परिघान्धृत्या वै परमासिना ।
अभियान्त्येव ते स्वर्गं पश्यन्तः कर्मणां फलम् ।
एवं श्रद्धाफलं लोके परतः सुमहत्फलम् ।
बुद्धिः श्रद्धा च शुश्रूषा कारणानि हितैषिणाम् ।
तस्मात्स्वर्गाभिगन्तारः कतिचित्त्वभवन्नराः ।
अन्ये करणहीनत्वान्नास्तिक्यं भावमाश्रिताः ।
श्रुतविद्वेषिणो मूर्खा नास्तिका दृढनिश्चयाः ।
निष्क्रियाश्च निरन्नाद्याः पतन्त्येवाधमां गतिम् ।
नास्तीति वै पुनर्जन्म कवयोऽप्यत्र मोहिताः ।
नाधिगच्छन्ति तन्नित्यं हेतुवादशतैरपि ।
एषा ब्रह्मकृता माया दुर्विज्ञेया सुरासुरैः ।
किं पुनर्मानुषैर्लोके ज्ञातुकामैः स्वकर्मभिः ।
केवलं श्रद्धया देवि श्रुतिमात्रनिविष्टया ।
तदस्तीत्येव मन्तव्यं तथा हि तमवाप्नुयात् ।
वेदगुह्येषु चान्येषु हेतुर्देवि निरर्थकः ।
बधिरान्धवदेवात्र वर्तितव्यं हितैषिणा ।
एतत्ते कथितं सर्वं देवगुह्यं प्रजाहितम् ।
त्वत्प्रीत्यर्थमिदं गुह्यमवाच्यमपि भाषितम् ।

Colophon.

उमा ।

भगवन्सर्वभूतेश त्रिपुरार्दन शंकर ।
कीदृशा यमदण्डास्ते कीदृशाः परिचारकाः ।
कथं मृतास्ते गच्छन्ति प्राणिनो यमसादनम् ।
कीदृशं भवनं तस्य कथं दण्डयति प्रजाः ।
एतत्सर्वं महादेव श्रोतुमिच्छाम्यहं प्रभो ।

महेश्वरः ।

शृणु कल्याणि तत्सर्वं यत्तद्देवि मनःप्रियम् ।
दक्षिणस्यां दिशि शुभे यमस्य सदनं महत् ।
विचित्रं रमणीयं च नानाभावसमन्वितम् ।
पितृभिः प्रेतसंघैश्च यमदूतैश्च संततम् ।
प्राणिसंघैः सुबहुभिः कर्मवश्यैस्तु पूरितम् ।
तत्रास्ते दण्डयन्नित्यं यमो लोकहिते रतः ।
मायया सततं वेत्ति प्राणिनां यच्छुभाशुभम् ।
मायया संहरंस्तत्र प्राणिसंघान्यतस्ततः ।
तस्य मायामयाः पाशा न वेद्यन्ते सुरासुरैः ।
को हि मानुषमात्रस्तु वेत्ता तच्चरितं महत् ।
एवं हि शासतस्तस्य यमस्य परिचारकाः ।
गृहीत्वा संनयन्त्येव प्राणिनः क्षीणकर्मिणः ।
येन केनापदेशेन अपदेशास्तदुद्भवः ।

---

$G$ पृच्छंत्या ( for पृच्छन्त्यां ). $D_{10}$ $T_2$ $G$ रुद्राण्या ( for °ण्यां ). $T_3$ रुद्राण्या शंकरोवदत् ( for the post. half ). — $T_1$ महेशः ( for °श्वरः ). — ( L. 2572 ) $T_2$ ह ; $G_{1.3.4}$ हि ; $G_2$ त्व ( for [इ]ह ). — ( L. 2573 ) $D_{10}$ $T_{2.3}$ $G_4$ श्रुत- ( for श्रुति- ). — ( L. 2574 ) $M_4$ तत्समर्थं ( for सर्वमर्थं ). — ( L. 2575 ) $G_{1-3}$ सर्वेषां ( for मर्त्यानां ). — ( L. 2576 ) $D_{10}$ संभिद्य ( for संछिन्द्य ). $T_1$ परितो ; $T_2$ भगवान् ( for परिघान् ). $M_4$ कामक्रोधौ समाच्छिद्य ( for the prior half ). $D_{10}$ $T_{2.3}$ $G_4$ धृत्या वै ( $D_{10}$ $G_4$ ये ) परमासनां ; $M_4$ परिवो धृतिनामिना ( for the post. half ). — ( L. 2577 ) $D_{10}$ $T$ $G_{1-3}$ कर्मणः ( for °णां ). — ( L. 2578 ) $T_3$ -मर्थं ( for -फलं ). $G_2$ भोगे ( for लोके ). $T_2$ एवं श्रुत्वा परं लोके ( for the prior half ). $M_4$ परत्र ( for °तः ). — ( L. 2579 ) $D_{10}$ $T_{2.3}$ $G$ विनयः ; $T_1$ नियमः ( for शुश्रूषा ). — ( L. 2581 ) $T_2$ $G_2$ कारण- ( for क° ). — ( L. 2582 ) $M_{1.3}$ श्रुति- ( for श्रुत- ). — ( L. 2583 ) $D_{10}$ $T$ $G$ निरन्नादाः ( for °द्याः ). — ( L. 2584 ) $D_{10}$ $T$ $G$ $M_4$ अस्तीति ( for इति वै ). $M_4$ यत्र ( for ऽप्यत्र ). — ( L. 2585 ) $T_2$ ते ( for तन् ). $G_2$ हेतुमद्दर्शनैरपि ( for the post. half ). — $T_1$ om. line 2587. — ( L. 2587 ) $D_{10}$ $T_{2.3}$ $G$ मानवैर् ( for मानुषैर् ). $D_{10}$ $T_{2.3}$ $G$ कुबुद्धिभिः ( for स्वकर्मभिः ). — ( L. 2589 ) $D_{10}$ $T_{2.3}$ $G$ ततोऽस्ति ( for तदस्ति ). $T_3$ यथा ( for तथा ). — ( L. 2590 ) $T_1$ [अ]र्थेषु ( for [अ]न्येषु ). — ( L. 2592 ) $D_{10}$ $T_2$ $G$ देवि ( for सर्वं ). $D_{10}$ $T_3$ $G_4$ ऋषि- ; $M_4$ वेद- ( for देव- ). $G_4$ सनातनं ( for प्रजाहितम् ). — $D_{10}$ $T$ $G$ om. (hapl.) line 2593. — Colophon. — *Adhy. name :* $D_{10}$ $T_2$ $G_2$ उमामहेश्वरसंवादः ; $T_3$ उमामहेश्वरसंवादे जातिस्मरणलक्षणम् ; $M_{1-3}$ उमामहेश्वरसंवादे तदपगुह्याधिकरणम्. — *Adhy. no. :* $D_{10}$ $T_2$ $G_{2.4}$ 211 ; $T_1$ 204 ; $T_3$ 210 ; $G_{1.3}$ $M_1$ 205 ; $M_{2.3}$ 206 ; $M_4$ 203. — ( L. 2594 ) $D_{10}$ $T_{2.3}$ $G_{1.3}$ $M_4$ -लोकेश ( for -भूतेश ). $T_1$ $G_{2.4}$ भगवन्देवदेवेश ( for the prior half ). $G_2$ त्रिपुरांतक ( for °रार्दन ). — ( L. 2597 ) $T_3$ दंडयते ( for °यति ). — ( L. 2598 ) $G_2$ तत्त्वतः ( for [अ]हं प्रभो ). — $T_1$ महेशः ; $G_2$ शिवः ( for महेश्वरः ). — ( L. 2601 ) $G_2$ -राग- ( for -भाव- ). — $T_1$ om. (hapl.) line 2603. — ( L. 2603 ) $D_{10}$ $T_3$ $G$ $M_3$ च ( for सु- ). — $M_{1-3}$ om. (hapl.) line 2605. — ( L. 2607 ) $T_2$ तस्य मायाश्च पाशाश्च ( for the prior half ). $T_1$ भिद्यंते ( for वे° ). — ( L. 2608 ) $T_3$ om. from मात्रस्तु up to पदेशे ( in the prior half of line 2611 ). $G_{1.2}$ -मात्रं ( for -मात्रस् ). $D_{10}$ $T_2$ $G$

कर्मणा प्राणिनो लोक उत्तमाधममध्यमाः ।
यथार्हं तान्समादाय नयन्ति यमसादनम् ।
धार्मिकानुत्तमान्विद्धि स्वर्गीयास्ते यथामराः ।
नृषु जन्म लभन्ते ये कर्मणा मध्यमाः स्मृताः ।
तिर्यङ्नरकगन्तारो ह्यधमास्ते नराधमाः ।
पन्थानस्त्रिविधा दृष्टा सर्वेषां गतिजीविनाम् ।
रमणीयं निराबाधं दुर्दर्शमिति नामतः ।
रमणीयं तु सन्मार्गं पताकाध्वजसंकुलम् ।
धूपितं सिक्तसंमृष्टं पुष्पमालाभिसंकुलम् ।
मनोहरं सुखस्पर्शं गच्छतामेव तद्भवेत् ।
निराबाधं यथा लोके सुप्रशस्तं तथा भवेत् ।
तृतीयं तत्तु दुर्दर्शं दुर्गन्धि तमसावृतम् ।
परुषं शर्कराकीर्णं श्वदंष्ट्राबहुलं भृशम् ।
कृमिकीटसमाकीर्णं गच्छतामतिदुर्गमम् ।
मार्गैरेभिस्त्रिभिर्नित्यमुत्तमाधममध्यमान् ।
संनयन्ति यथा काले तन्मे शृणु शुचिस्मिते ।
उत्तमानन्तकाले तु यमदूताः सुसंयताः ।
नयन्ति सुखमादाय रमणीयपथेन वै ।

उमा ।

भगवंस्तत्र चात्मानं त्यक्तदेहं निराश्रयम् ।
अदृश्यं कथमादाय संनयन्ति यमान्तिकम् ।

महेश्वरः ।

शृणु भामिनि तत्सर्वं त्रिविधं देहधारणम् ।
कर्मवश्यं भोगवश्यं दुःखवश्यमिति प्रिये ।
मानुषं कर्मवश्यं स्यात्स्वर्गीयं भोगसाधनम् ।
तृतीयं यातनावश्यं शरीरं मायया कृतम् ।
यमलोके न चान्यत्र दृश्यते यातनायुतम् ।
शरीरैर्यातनावश्यैर्जीवमामुच्य भामिनि ।
नयन्ति यामिकास्तत्र प्राणिनो मायया मृतान् ।
मध्यमानथ वेषेण मध्यमेन पथा तथा ।
चण्डालवेषास्त्वधमान्गृहीत्वा भर्त्स्य तर्जनैः ।
आकर्षन्तस्तथा पाशैर्दुर्दर्शेन नयन्ति तान् ।
त्रिविधानेवमादाय नयन्ति यमसादनम् ।
धर्मासनगतं दक्षं भ्राजमानं स्वतेजसा ।
लोकपालं सभाध्यक्षं तथैव परिषद्गतम् ।
दर्शयन्ति महाभागे यामिकास्तान्निवेद्य ते ।
पूजयन्दण्डयन्कांश्चित्तेषां शृण्वञ्शुभाशुभम् ।
व्यापृतो बहुसाहस्रैस्तत्रास्ते सततं यमः ।
गतानां तु यमस्तेषामुत्तमानभिपूजया ।
अभिसंगम्य विधिवत्पृष्ट्वा स्वागतकौशलम् ।
प्रस्तुत्य सत्कथां तेषां लोकं संदिशते यमः ।
यमेनैवमनुज्ञाता यान्ति पश्चात्त्रिविष्टपम् ।
मध्यमानां यमस्तेषां श्रुत्वा कर्म यथातथम् ।
जायन्तां मानुषेष्वेव इति संदिशते च तान् ।
अधमान्पापसंयुक्तान्यमो नावेक्षतेऽऽगतान् ।
यमस्य पुरुषा घोराश्चण्डालसमदर्शनाः ।
यातना यापयन्त्येताँल्लोकपालस्य शासनात् ।

देवस्य; $T_1$ वेत्तास्य (for वेत्ता तच्). — (L. 2609) $D_{10}$ $T_2$ G $M_4$ संवसतस्; $M_{1-3}$ संशास° (for हि शास°). — (L. 2610) $T_1$ तान् (for सं-). — (L. 2611) $D_{10}$ $T_3$ $G_4$ त्वपदेशस्; $M_{1-3}$ ह्यप° (for अप°). $T_2$ $G_{1-3}$ समुद्भवः (for तदुद्भवः). $M_4$ त्वपदेशं तदुद्भवेत् (for the post. half). — (L. 2612) $G_2$ प्राणिनां (for °नो). $D_{10}$ लोका (for लोक). — (L. 2613) $G_2$ तत् (for तान्). — (L. 2614) $D_{10}$ T G $M_2$ स्वर्गिणस् (for स्वर्गीयास्). $M_4$ यथा स्मृताः (for यथामराः). — $M_4$ om. (hapl.) line 2615. — (L. 2615) $M_{1-3}$ वै (for ये). $G_2$ मानुषाः (for मध्यमाः). — (L. 2618) $G_{1.3}$ दुर्दर्शमिव नारकं (for the post. half). — (L. 2622) $T_1$ तथा (for यथा). $D_{10}$ $T_{2.3}$ $G_4$ लोकं (for लोके). $D_{10}$ $T_{2.3}$ G कृतं; $T_1$ यथा (for तथा). — (L. 2623) $D_{10}$ T G यत् (for तत्). — (L. 2624) $T_1$ $G_{1.3}$ M -पूर्णं (for -कीर्णं). $G_{1.3}$ -बहुव्याप्तं (for °लं भृशम्). — (L. 2626) $D_{10}$ $T_{2.3}$ G एव; M एवं (for एभिस्). — (L. 2628) $G_{1.3}$ उत्तमाधमकाले तु; $M_4$ °नां तु कालेन (for the prior half). $T_2$ सुसंवृताः (for °यताः). — (L. 2629) $G_2$ -पदेन (for -पथेन). — (L. 2630) $T_2$ गताश्रयं (for निराश्रयम्). — $G_2$ om. lines 2631-2634. — $T_1$ महेशः (for °श्वरः). — (L. 2632) $G_4$ देवि (for देह-). $D_{10}$ T $G_{1.3.4}$ $M_2$ -कारणम् (for -धा°). — (L. 2633) $T_1$ अथापरं (for इति प्रिये). — (L. 2634) $D_{10}$ $T_{2.3}$ $G_{1.3.4}$ द्वितीयं; $T_1$ स्वकीयं (for स्वर्गीयं). — $T_1$ om. (hapl.) line 2636. — (L. 2637) $D_{10}$ $G_{2-4}$ जीवान् (for जीवम्). — (L. 2639) $T_1$ मध्यमेन (for °मान्). $G_{1.3.4}$ योध- (for अथ). — (L. 2644) $M_3$ तदाध्यक्षं; $M_4$ धना° (for सभा°). — (L. 2645) $G_2$ धार्मिकास् (for यामि°). $T_{2.3}$ तं (for तान्). $T_1$ तु (for ते). — (L. 2647) $T_1$ नियतं (for सततं). — (L. 2648) $T_2$ -पूजयेत्; $G_{1.3.4}$ -पूजयन् (for -पूजया). $G_2$ आत्मवानतिपूजया (for the post. half). — (L. 2649) $D_{10}$ T G $M_{2.4}$ -संगृह्य (for -संगम्य). — (L. 2650) $D_{10}$ $T_{2.3}$ G तत्कृतं; $T_1$ संगतं (for सत्कथां). — (L. 2652) $G_2$ पच्यमानां (for मध्यमानां). $G_{1.3}$ समस् (for यमस्). — (L. 2654) $D_{10}$ T G $M_4$ पाश- (for पाप-). — (L. 2656) $D_{10}$ $T_{1.3}$ G प्रापयंति (for या°). $T_2$ प्रापयंत्येव तान्सर्वाँल्ँ (for the prior

छिन्दन्तश्च नुदन्तश्च प्रकर्षन्ते यतस्ततः ।
क्रोशतः पातयन्त्येतान्मिथो गर्तेष्ववाङ्मुखान् ।
संघातिन्यः शिलाश्चैषां पतन्ति शिरसि प्रिये ।
अयोमुखाः काकबला भक्षयन्ति सुदारुणाः ।
असिपत्रवने घोरे चारयन्ति तथापरान् ।
तीक्ष्णदंष्ट्रास्तथा श्वानः कांश्चित्तत्र दशन्ति वै ।
तत्र वैतरणी नाम नदी ग्राहसमाकुला ।
दुष्प्रवेशा च घोरा च मूत्रशोणितवाहिनी ।
तस्यां संमज्जयन्त्येतांस्तृषितान्पाययन्ति तान् ।
आरोपयन्ति वै कांश्चित्तत्र कण्टकशल्मलीम् ।
यन्त्रचक्रेषु तिलवत्पीड्यन्ते तत्र केचन ।
अङ्गारेषु च दह्यन्ते तथा दुष्कृतकारिणः ।
कुम्भीपाकेषु पच्यन्ते भर्ज्यन्ते सघृतेषु वै ।
पाट्यन्ते तरुवच्छत्रैः पीड्यन्ते लोचनादिषु ।
भिद्यन्तेऽथाङ्गशः शूलैस्तुद्यन्ते सूक्ष्मसूचिभिः ।
एवं त्वया कृतो दोषस्तदर्थं दण्डनं त्विदम् ।
वाचैवं घोषयन्ति स्म दण्ड्यमानान्समन्ततः ।
एवं ते यातनाः प्राप्य शरीरैर्यातनावशैः ।
प्रसहन्तश्च तद्दुःखं स्मरन्तः स्वापराधजम् ।
क्रोशन्तश्च रुदन्तश्च न मुच्यन्ते कथंचन ।
स्मरन्तस्तत्र तप्यन्ते पापमात्मकृतं फलम् ।
एवं बहुविधा दण्डा भुज्यन्ते पापकारिभिः ।
यातनाश्च तथा भुक्त्वा पच्यन्ते नरके पुनः ।
अपरे यातना भुक्त्वा मुच्यन्ते तत्र किल्बिषात् ।
पापदोषक्षयकरा यातना संस्मृता नृणाम् ।
बहुतप्तं यथा लोहं निर्मलं तत्तथा भवेत् ।

Colophon.

उमा ।

भगवंस्ते कथं तत्र दण्ड्यन्ते नरकेषु वै ।
कति ते निरया घोराः कीदृशास्ते महेश्वर ।

महेश्वरः ।

शृणु भामिनि तत्सर्वं पच्यते नरकाह्वयाः ।
भूमेरधस्ताद्विहिता घोरा दुष्कृतकर्मणाम् ।
प्रथमं रौरवं नाम शतयोजनमायतम् ।
तावत्प्रमाणं विस्तीर्णं तामसं पापपीडितम् ।
भृशं दुर्गन्धि परुषं कृमिभिर्दारुणैर्युतम् ।
अतिघोरमनिर्देश्यं प्रतिकूलं यतस्ततः ।
ते चिरं तत्र तिष्ठन्ति न तत्र शयनासने ।

half). $G_2$ -शासन- (for -पालस्य). — (L. 2657) $D_{10}$ T $G_{1.3.4}$ भिंदंतश्च तु( $D_{10}$ रु )दंतश्च; $G_2$ विंदंतश्च नदंतश्च (for the prior half). — (L. 2658) T $G_{1-3}$ $M_4$ क्रोशंतः (for क्रोशतः). $T_1$ अथो (for मिथो). — (L. 2659) $T_2$ संघाभिन्यः (for संघातिन्यः). $T_2$ [ए]व (for [ए]षां). — (L. 2660) $T_{2.3}$ अधोमुखाः (for अयो°). $D_{10}$ T G $M_1$ कंकवळा (G °टा) (for काकबला). — (L. 2661) $M_4$ -वटे (for -वने). $G_{1-3}$ [अ]वशान् (for [अ]परान्). — (L. 2662) $D_{10}$ $T_3$ $G_4$ ह्यशंते (for दशन्ति). — (L. 2665) $T_3$ तस्याः (for तस्यां). $D_{10}$ T $G_{1.3.4}$ [ए]ते (for [ए]तांस्). $G_2$ तस्यां संमज्जयंत्येते (for the prior half). $T_1$ वारयंति (for पाय°). $G_{1.3}$ ते (for तान्). $G_2$ घोरे तान्भावयंति ते (for the post. half). — (L. 2666) $T_1$ $G_{3.4}$ -शाल्मलीं (for -श°). — (L. 2667) $T_1$ यंत्रचक्रेषु बहुधा (for the prior half). — (L. 2668) $G_{1.3}$ $M_4$ दृश्यंते (for दह्यन्ते). $T_3$ -चारिणः (for -का°). — (L. 2669) $T_1$ -पाके तु (for -पाकेषु). $T_1$ om. from the post. half up to the prior half of line 2670. $T_2$ पच्यंते; $T_3$ भज्यंते; $M_4$ भिद्यंते (for भर्ज्यन्ते). $D_{10}$ $T_{2.3}$ $G_{1.3.4}$ सिकतासु; $G_2$ स्वकृतेन (for सघृतेषु). — (L. 2670) $D_{10}$ T G पीड्यंते ($D_{10}$ $T_3$ $G_{1.3.4}$ पाचिनः) क्रकचादिभिः (for the post. half). — (L. 2671) $D_{10}$ T G भागशः (for ऽथाङ्गशः). M केचित् (for शूलैस्). $G_2$ -बुद्धिभिः (for -सूचिभिः). — (L. 2672) $T_3$ त्वदर्थं (for त°). $D_{10}$ T G इति (for इदम्). — (L. 2673) $T_1$ वाचैव दंडयंतस्ते (for the prior half). $D_{10}$ T G $M_4$ दंड्यमानाः (for °मानान्). — (L. 2674) $D_{10}$ $T_3$ G $M_4$ यातनां (for °नाः). — (L. 2677) $G_{1.3}$ पच्यंते (for तप्यन्ते). $D_{10}$ T G भृशं (for फलम्). — (L. 2678) $T_1$ एवं बहुविधो दंडो; $T_2$ एवं बहुविधान्दंडान् (for the prior half). — (L. 2679) $T_2$ प्रभुंजतः; $G_{1-3}$ [अ]नुभूयैव (for तथा भुक्त्वा). $D_{10}$ $T_3$ $G_4$ यातनाभिश्च पा( $D_{10}$ प )च्यंते (for the prior half). $D_{10}$ $T_3$ $G_4$ नरकेषु पुनः पुनः (for the post. half). — (L. 2680) $T_1$ $G_{1-3}$ यातनां (for °ना). $G_2$ कल्मषात् (for किल्बि°). — (L. 2681) $G_{1.2}$ स्मार्यंते (for संस्मृता). — (L. 2682) $D_{10}$ $T_{2.3}$ G अमलं; $T_1$ अतुलं (for निर्मलं). — Colophon. — *Adhy. name :* $D_{10}$ $T_2$ उमामहेश्वरसंवादे नरकविवरणं; $T_3$ $M_4$ उमामहेश्वरसंवादः; $G_4$ यातनानुभवप्रकारः; $M_{1-3}$ उमामहेश्वरसंवादे यातनाभेदवर्णनम्. — *Adhy. no. :* $D_{10}$ $T_2$ $G_{3.4}$ 212; $T_1$ 205; $T_3$ 211; $G_{1.3}$ $M_1$ 206; $M_{2.3}$ 207; $M_4$ 204. — (L. 2683) $M_4$ कथितं (for ते कथं). $T_1$ दंड्यंते यमकिंकरैः (for the post. half). — (L. 2684) $D_{10}$ T G नरका (for निरया). $T_3$ वद प्रभो (for महेश्वर). — $T_1$ महेशः (for °श्वरः). — (L. 2685) M ते (for [ए]ते). $D_{10}$ T G पंच ते ($G_{1.4}$ °चैते) नरकाः स्मृताः (for the post. half). — (L. 2686) $T_1$ विविधा (for विहिता). — (L. 2689) Some Mss. क्रिमिभिर् (for कृ°). $M_4$ वृतं (for युतम्). $G_2$ क्रिमिदुर्वारणैर्युतं (for the post. half). — $T_1$ om. line 2690.

कृमिभिर्भक्ष्यमाणाश्च विस्रगन्धसमायुताः ।
एवंप्रमाणमुद्विग्ना यान्ति तिष्ठन्ति तत्र ते ।
यातनाभ्यो दशगुणं नरके दुःखमिष्यते ।
तत्र चात्यन्तिकं दुःखमिति विद्धि शुभेक्षणे ।
क्रोशन्तश्च रुदन्तश्च वेदनास्तत्र भुञ्जते ।
भ्रमन्ति दुःखमोक्षार्थं त्राता कश्चिन्न विद्यते ।
दुःखस्यान्तरमात्रं तु द्वारं वा न च लभ्यते ।
महारौरवसंज्ञं तु द्वितीयं नरकं प्रिये ।
तस्माद्विगुणितं विद्धि माने दुःखे च रौरवात् ।
तृतीयं नरकं तत्र कण्टकावनसंज्ञितम् ।
ततो द्विगुणितं तं च पूर्वाभ्यां दुःखमानयोः ।
महापातकसंयुक्ता घोरास्तस्मिन्विशन्ति हि ।
अग्निकुण्डमिति ख्यातं चतुर्थं नरकं प्रिये ।
एतद्विगुणितं तस्माद्यथानिष्टसुखं तथा ।
तत्र दुःखं हि सुमहदमानुषमिति स्मृतम् ।
भुञ्जते तत्र तत्रैव दुःखं दुष्कृतकारिणः ।
पञ्चकष्टमिति ख्यातं पञ्चमं नरकं प्रिये ।
तत्र दुःखमनिर्देश्यं महाघोरं यथातथम् ।
पञ्चेन्द्रियैरसह्यत्वात्पञ्चकष्टमिति स्मृतम् ।
भुञ्जते तत्र तत्रैव दुःखं दुष्कृतकारिणः ।
अमानुषार्हं तद्दुःखं महाभूतैस्तु भुज्यते ।
अतिघोरं चिरं कृत्वा महाभूतानि यान्ति तम् ।
पञ्चकष्टेन हि समं नास्ति दुःखं तथाविधम् ।
दुःखस्यान्तमिति प्राहुः पञ्चकष्टं सदा प्रिये ।
एवं ते तेषु तिष्ठन्ति प्राणिनो दुःखभागिनः ।
अन्ये च नरकाः सन्ति अवीचिप्रमुखाः प्रिये ।
क्रोशन्तश्च रुदन्तश्च वेदनार्ता भृशातुराः ।
केचिद्भ्रमन्ति वेष्टन्ते केचिद्धावन्ति चातुराः ।
आधावन्ते निवार्यन्ते शूलहस्तैर्यतस्ततः ।
रुजार्दितास्तृषायुक्ताः प्राणिनः पापकारिणः ।
क्रोशन्तश्च नदन्तश्च न मुच्यन्ते कथंचन ।
कृमिभिर्भक्ष्यमाणाश्च वेदनार्तास्तृषान्विताः ।
संस्मरन्तः स्वकं कर्म कृतमात्मापराधजम् ।
शोचन्तस्तत्र तिष्ठन्ति यावत्पापक्षयं प्रिये ।
एवं भुक्त्वा तु नरकं मुच्यन्ते पापसंक्षयात् ।

उमा ।

भगवन्कतिकालं ते तिष्ठन्ते नरकेषु वै ।
एतद्वेदितुमिच्छामि तन्मे ब्रूहि महेश्वर ।

महेश्वरः ।

शतं सहस्रं वर्षाणामादिं कृत्वा हि जन्तवः ।
तिष्ठन्ति नरकावासाः प्रलयान्तमिति स्थितिः ।

— (L. 2690) $M_4$ ·रूपं (for ·कूलं). $D_{10}$ $T_{2,3}$ G ततस् (for य°). — (L. 2691) $T_1$ पापिष्ठाम् (for ते चिरं). $M_4$ तेषु (for the first तत्र). — (L. 2692) $D_{10}$ $T_{2,3}$ G विष्ठा-; $T_1$ $M_4$ विप· (for विस्र·). — $T_1$ om. line 2693. — (L. 2693) $D_{10}$ $T_{2,3}$ G यावत् (for यान्ति). $G_4$ यत्र (for तत्र). —$T_1$ reads lines 2695–2697 twice. — (L. 2695) $D_{10}$ $T_3$ G इष्यते च (for इति विद्धि). $T_2$ इष्यते शुभलक्षणे (for the post. half). — (L. 2696) $T_1$ (both times) वेदनां; $M_4$ यातनास् (for वेद°). — (L. 2697) $T_{2,3}$ G ज्ञाता (for त्राता). — $T_1$ om. (hapl.) line 2698. — (L. 2702) $D_{10}$ $T_{2,3}$ $G_{1-3}$ $M_{1-3}$ तच्च; $T_1$ $M_4$ तत्र (for तं च). $G_2$ पूर्णं स्याद् (for पूर्वाभ्यां). $T_1$ मानदुःखयोः (for दुःखमानयोः). — $T_1$ om. (hapl.) lines 2705–2708. $M_3$ om. lines 2705-2709. — (L. 2706) $T_2$ ततो (for तत्र). — $T_2$ $G_2$ om. (hapl.) lines 2708–2711. — (L. 2708) $T_3$ नरकं पंचमं प्रिये (for the post. half). — (L. 2709) $T_1$ यथातथा (for °तथम्). — (L. 2710) $T_1$ $G_{1,3,4}$ असाध्यत्वात् (for असह्य°). — $M_2$ om. line 2711. — (L. 2711) $T_3$ तत्रैवं (for °व). — (L. 2712) $D_{10}$ T $G_{1,3,4}$ अमानुषार्हजं दुःखं; $G_2$ °षा भृशं दुःखं (for the prior half). $G_2$ om. the post. half. — (L. 2714) $D_{10}$ $T_3$ $G_{1,3,4}$ $M_1$ तथापरं; $G_2$ तथा समं (for तथाविधम्). — (L. 2715) $D_{10}$ $T_{2,3}$ G दुःखस्थानमिति ($T_2$ °नं सदा) प्राहुः (for the prior half). — (L. 2716) $D_{10}$ $T_2$ $G_4$ त्वेतेषु; $T_1$ ते तत्र; $T_3$ $G_{1-3}$ चैतेषु (for ते तेषु). — $M_3$ om. (hapl.) from the post. half of line 2718 up to the prior half of line 2722. — $T_1$ om. (hapl.) line 2719. — (L. 2719) $D_{10}$ $T_{2,3}$ G केचिद्भ्रमंतश्चेष्टंते (for the prior half). — (L. 2720) $D_{10}$ $T_{2,3}$ G आधावंतो; $T_1$ आवार्यन्ते (for आधावन्ते). $T_1$ इतस्ततः (for यत°). — (L. 2721) $T_1$ क्षुधार्दितास् (for रुजा°). — (L. 2722) $D_{10}$ T G यावत्पूर्वकृतं तावत् (for the prior half). — $T_1$ om. line 2723. — (L. 2723) $G_{1,3}$ वेदनामपराधजां (for the post. half). — $G_{1,3}$ om. (hapl.) line 2724. — (L. 2724) $D_{10}$ T $G_{2,4}$ पापं (for कर्म). $T_1$ स्वीयम् (for कृतम्). — $T_1$ om. line 2726. — (L. 2726) $G_{1-3}$ नरः कर्म (for तु नरकं). — (L. 2727) $D_{10}$ तु (for ते). $D_{10}$ T $G_{1-3}$ $M_3$ तिष्ठंति (for तिष्ठन्ते). $D_{10}$ ते (for वै). — After line 2727 $T_1$ (marg.) ins.:

मानुषाः पापकर्माणो वक्तुमर्हसि मे प्रिय ।

— $D_{10}$ $T_{1,3}$ $G_{2,4}$ $M_{1-3}$ om. line 2728. — $T_1$ महेशः (for °श्वरः). — (L. 2729) $D_{10}$ T G शतं व($T_3$ °तव)र्षसहस्राणाम् ($G_2$ °णि) (for the prior half). $G_{1,3,4}$

उमा ।

भगवंस्तेषु ते कुत्र तिष्ठन्तीति वद प्रभो ।

महेश्वरः ।

रौरवे शतसाहस्रं वर्षाणामिति संस्थितिः ।
मानुषघ्नाः कृतघ्नाश्च तथैवानृतवादिनः ।
जारचोराश्च नारी च सर्वतश्चापचारिणी ।
उत्कोचकाश्च पिशुना वर्णसंभेदकारकाः ।
तादृशाः परिपच्यन्ते रौरवे नरके नराः ।
देशघ्नाश्चैव राजघ्नाः पितृमातृविघातिनः ।
राजा चान्यायतः शास्ता साक्षित्वेऽनृतवादिनः ।
बहुघ्नाश्च कुलघ्नाश्च भ्रूणघ्ना गुरुघातिनः ।
विश्वस्तघातकाश्चैवमात्मघ्नाः कोपकारणात् ।
पतिघ्नयः प्रमदा मोहाद्यज्ञविघ्नकराश्च ये ।
द्वितीये द्विगुणं कालं पच्यन्ते तादृशा नराः ।
महापातकयुक्तास्तु तृतीये दुःखमाप्नुयुः ।
एतावन्मानुषसहं परमन्येषु लक्ष्यते ।
यक्षा विद्याधराश्चैव काद्रवेयाश्च किंनराः ।
गन्धर्वा भूतसंघाश्च तेषां पापयुता भृशम् ।
चतुर्थे परिपच्यन्ते यावद्युगविपर्ययः ।
सहन्तस्तादृशं घोरं पञ्चकष्टे च यादृशम् ।
तादृग्विधस्य दुःखस्य अयोग्यान्विद्धि मानुषान् ।
एवं ते नरकान्भुक्त्वा तत्र क्षपितकल्मषाः ।
नरकेभ्यो विमुक्ताश्च जायन्ते कृमिजातिषु ।
उद्भेदजेषु वा केचित्तत्रापि क्षीणकल्मषाः ।
पुनरेव प्रजायन्ते मृगपक्षिषु शोभने ।
मृगपक्षिषु तद्भुक्त्वा लभन्ते मानुषं पदम् ।

उमा ।

नानाजातिषु केनैव जायन्ते पापकारिणः ।

महेश्वरः ।

तदहं ते प्रवक्ष्यामि यत्त्वमिच्छसि भामिनि ।
सर्वथात्मा कर्मवशान्नानाजातिषु दृश्यते ।
यश्च मांसप्रियो नित्यं कङ्कगृध्रान्स संस्पृशेत् ।
सुरापः सततं मर्त्यः सूकरत्वं व्रजेद् ध्रुवम् ।
अभक्ष्यभक्षणो मर्त्यः काकजातिषु संस्पृशेत् ।
परोद्वेगकरो नित्यं व्यालजातिषु जायते ।
आत्मघ्नो यो नरः कोपात्प्रेतजातिषु तिष्ठति ।
पैशुन्यात्परिवादाच्च कुक्कुटत्वं समश्नुयात् ।
नास्तिकश्चैव यो मूर्खो मृगजातिं स गच्छति ।
हिंसाविहारस्तु नरः कृमिकीटेषु जायते ।
अत्र मानयुतो नित्यं प्रेत्य गर्दभतां व्रजेत् ।
असत्यं परुषं वाक्यं यो वदेन्मत्स्यतां व्रजेत् ।
अगम्यागमनाच्चैव परदाराभिमर्शनात् ।

[आ]दि- (for हि). $G_2$ महीं गत्वा हि जंतवः (for the post. half). — (L. 2730) $G_2$ स्मृताः (for स्थितिः). — $D_{10}$ $G_4$ om. the ref. — (L. 2731) $D_{10}$ $T_1$ $M_{1-3}$ के (for ते). $D_{10}$ $T_{2,3}$ $G_{2,4}$ तत्र (for कुत्र). $G_{1,3}$ भगवन्केषु के तत्र (for the prior half). — $T_1$ महेशः; $G_{3,3}$ om. (for महेश्वरः). — $D_{10}$ T G om. lines 2734–2741. $M_{1,3}$ om. lines 2737–2738. $M_2$ reads line 2742 twice. — (L. 2742) $T_3$ द्वितीयं (for °ये). $M_2$ (first time) तृतीयं त्रिगुणं कालं (for the prior half). — (L. 2743) $T_3$ -संयुक्तास् (for -युक्तास्तु). — (L. 2744) $M_{1,3}$ वक्ष्यते (for ल°). — (L. 2745) $D_{10}$ यक्ष- (for यक्षा). — (L. 2746) $D_{10}$ $G_{2,4}$ गंधर्व- (for गन्धर्वा). $T_1$ तेषां पापमुदाहृतं (for the post. half). — (L. 2747) $G_2$ -तप्यंते (for -पच्यन्ते). $D_{10}$ $T_{2,3}$ $G_{2-4}$ तादृशा नरकाः स्मृताः (for the post. half). — $T_1$ om. lines 2748–2749. — (L. 2748) $M_{1-3}$ दुःखं (for घोरं). $D_{10}$ $T_3$ $G_{2,4}$ पंचकष्टे तु; $T_2$ $G_{1,3}$ °कष्टेषु (for °कष्टे च). — (L. 2749) $D_{10}$ $T_{2,3}$ G तत्रास्य ($D_{10}$ $G_4$ अत्रास्य; $T_3$ तत्रापि) चिरदुःखस्य (for the prior half). $D_{10}$ ह्ययोग्यान्; $T_{2,3}$ $G_{1,2,4}$ ह्य( $G_{1,3}$ अ)-योन्यान्; $G_3$ ह्ययोन्यान् (for अयोग्यान्). — $T_1$ $G_3$ om. lines 2751–2752. — (L. 2752) $D_{10}$ $T_2$ $G_{1,2,4}$ अत्र (for तत्र). — (L. 2755) $T_2$ जायंते (for केनैव). $T_2$ केन वै (for जायन्ते). — $T_1$ महेशः (for °श्वरः). — (L. 2756) $T_1$ श्रोतुमर्हसि (for यत्त्वमिच्छसि). $D_{10}$ G शोभने (for भामिनि). — $T_3$ reads line 2757 twice. — (L. 2757) $D_{10}$ $T_{1,2,3}$ (second time) सर्वदात्मा; $T_3$ (first time) सर्वमात्मा (for °थात्मा). $D_{10}$ $T_{2,3}$ (second time) $G_{1,2,4}$ -वशो (for -वशान्). $D_{10}$ $T_{1,3}$ (second time) G $M_2$ जायते; $T_{2,3}$ वर्तते (for दृश्यते). — $T_1$ om. lines 2758–2760. — (L. 2758) $D_{10}$ $T_3$ G काक- (for कङ्क-). $G_2$ -गृध्रादि (for °न्स). — (L. 2759) $T_2$ नित्यं (for मर्त्यः). — (L. 2760) $D_{10}$ $T_{2,3}$ G जायते (for संस्पृशेत्). — $D_{10}$ $T_1$ G om. (hapl.) line 2761. $T_3$ reads lines 2761–2765 after line 2771. — For line 2761, $T_2$ subst.:

परापकारको नित्यं व्यालकादिषु जायते ।

— (L. 2762) $M_{1-3}$ -वर्गेषु (for -जातिषु). $T_1$ जायते (for तिष्ठति). — (L. 2763) $D_{10}$ $T_1$ G अवाप्नुयात् (for समश्नु°). — (L. 2764) $T_2$ -जातिषु (for -जातिं स). — $D_{10}$ $T_3$ G — (L. 2766) $D_{10}$ T G अति- (for अत्र). — $D_{10}$ $T_3$ G $M_1$ om. (hapl.) line 2767. — (L. 2767) $T_1$ $M_2$ मर्त्यतां (for मत्स्यतां). — (L. 2768) $D_{10}$ $T_3$ G परदारनिषेवणात्; $T_1$ मूषकत्वं व्रजेन्नरः (for the post. half). — $T_1$

मूषिकत्वं व्रजेन्मर्त्यो नास्ति तत्र विचारणा ।
कृतघ्नो मित्रघाती च सृगालवृकजातिषु ।
गुरुघ्नः पितृघाती च स्थावरेष्ववतिष्ठति ।
वाचिकैः पक्षिमृगतां मानसैरन्यजातिताम् ।
शरीरजैः कर्मदोषैर्याति स्थावरतां नरः ।
एवमाद्यशुभं कृत्वा नरा निरयमाश्रिताः ।
तांस्तान्भावान्प्रपद्यन्ते स्वकृतस्यैव कारणात् ।
एवं जातिषु निर्दग्धाः प्राणिनः पापकारिणः ।
कथंचित्पुनरुत्पद्य लभन्ते मानुषं पदम् ।
बहुकृत्वोऽतिसंतप्तं लोहं शुचितमं यथा ।
बहुदुःखाभिसंतप्तस्तथात्मा शुध्यते मलात् ।
तस्मात्सुदुर्लभं चेति विद्धि जन्म सुमानुषम् ।

Colophon.

उमा ।

भगवन्देवदेवेश शूलपाणे वृषध्वज ।
श्रुतं मे परमं गुह्यं प्रसादात्ते वरप्रद ।
श्रोतुं भूयोऽहमिच्छामि प्रजानां हितकारणात् ।
शुभाशुभमिति प्रोक्तं कर्म सर्वं समासतः ।
तन्मे विस्तरशो ब्रूहि शुभाशुभविधिं प्रति ।
अशुभं कीदृशं कर्म प्राणिनोऽधो निपातयेत् ।
शुभं कर्म कथं देव प्रजानामूर्ध्वतो नयेत् ।
एतन्मे वद देवेश श्रोतुकामास्मि कीर्तय ।

महेश्वरः ।

तदहं ते प्रवक्ष्यामि तत्सर्वं शृणु शोभने ।
सुकृतं दुष्कृतं चेति द्विविधः कर्मविस्तरः ।
तयोर्यद्दुष्कृतं कर्म तच्च संजायते त्रिधा ।
मनसा कर्मणा वाचा बुद्धिमोहसमुद्भवम् ।
मनःपूर्वं तु वाक्कर्म वर्तते वाङ्मयं ततः ।
जायते वै क्रियायोगमेवं चेष्टाक्रमं प्रिये ।
अभिद्रोहोऽभ्यसूया च परार्थे चक्षुषा स्पृहा ।
शुभाशुभानां मर्त्यानां वर्तनं विपरीततः ।
धर्मकार्ये यदश्रद्धा पापकर्मणि हर्षणम् ।
एवमाद्यशुभं कर्म मनसा पापमुच्यते ।
अनृतं यच्च परुषमबद्धवचनं कटु ।
असत्यं परिवादश्च पापमेतत्तु वाङ्मयम् ।
अगम्यागमनं चैव परदारनिषेवणम् ।
वधबन्धपरिक्लेशैः परप्राणोपतापनम् ।
चौर्यं परेषां द्रव्याणां हरणं नाशनं तथा ।

om. line 2769. — (L. 2770) $M_4$ -मृग- (for -वृक-). — (L. 2771) $T_1$ पुत्र- (for पितृ-). $D_{10}$ $T_{2,3}$ G कृतघ्नः पु( $G_2$ मि )त्रघाती च (for the prior half). $D_{10}$ $T_{1,3}$ G [अ]धि-; $T_2$ च (for [अ]व-). — $D_{10}$ $T_{2,3}$ G M om. lines 2772-2773. — (L. 2774) $D_{10}$ T G नरा निरयगामिनः (for the post. half). — (L. 2775) $T_2$ तां तां योनिं; $T_3$ तांस्तान्गर्भान् (for °न्भावान्). $D_{10}$ तांस्तान्संप्रतिपद्यंते (for the prior half). — (L. 2776) $D_{10}$ $T_3$ G निर्दह्याः (for निर्दग्धाः). — (L. 2777) $T_1$ कथंचित्सुकृतादेव (for the prior half). — (L. 2778) $D_{10}$ T G बहुशश्चाग्निसंक्रान्तं (for the prior half). $D_{10}$ $T_3$ G शुचिमयं; $T_1$ शुचि भवेद्; $T_2$ शुचितरं (for °तमं). $T_3$ तथा (for यथा). — (L. 2779) $G_3$ $M_4$ -संतप्तं (for °प्तस्). $M_{1-3}$ शोध्यते (for शु°). $T_1$ बलात् (for मलात्). $D_{10}$ $T_3$ G $M_4$ तथात्मा शोध्यते बलात् ( $M_4$ महान् ) (for the post. half). — (L. 2780) $G_2$ सुदुर्बलं (for °र्लभं). $T_1$ देवि (for चेति). $M_4$ सुदुर्लभं चेति विद्धि (for the prior half). $M_4$ फलं (for विद्धि). —Colophon. *Sub-parvan* : $M_{1-3}$ दानधर्म. — *Adhy. name* : $D_{10}$ $T_3$ $G_2$ $M_{1-3}$ उमामहेश्वरसंवादः; $T_2$ उमामहेश्वरसंवादे नरकाविशेषाः. — *Adhy. no.* : $D_{10}$ $T_3$ $G_{2,4}$ 213; $T_1$ 206; $T_2$ 212; $G_{1,3}$ $M_1$ 207; $M_{2,3}$ 208; $M_4$ 205. — $G_2$ om. the ref. $T_1$ om. from the post. half of line 2781 up to the prior half of line 2782. $T_1$ om. lines 2784-2785. — (L. 2784) $D_{10}$ $T_{2,3}$ G स्वं स्वं (for सर्वं). — (L. 2786) $T_2$ यत्; $T_3$ $G_1$ यो (for ऽधो). — (L. 2787) $D_{10}$ $T_{2,3}$ $G_{1-3}$ वापि; $G_4$ चापि (for कर्म). $D_{10}$ T G भवेत् (for नयेत्). — $T_1$ महेशः (for °श्वरः). — (L. 2790) $D_{10}$ T G द्विविधं कर्मविस्तरं (for the post. half). — (L. 2792) $D_{10}$ कर्मणा मनसा (by transp.). $D_{10}$ $T_3$ $G_2$ -समुद्भवात् (for °द्भवम्). — (L. 2793) $D_{10}$ $T_3$ $G_{1-3}$ $M_{3,4}$ वा कर्म; $T_2$ तत्कर्म (for वाक्कर्म). $M_{1-3}$ तथा (for ततः). $M_4$ वर्तते वाङ्मयात्तथा (for the post. half). — (L. 2794) $M_4$ -योगाद् (for -योगम्). $D_{10}$ $T_3$ G अनु चेष्टाः (for एवं चेष्टा-). $T_2$ $G_{1,3,4}$ $M_4$ क्रमः (for -क्रमं). — (L. 2795) $D_{10}$ T G परार्थेषु च वै स्पृहा (for the post. half). — $T_1$ om. line 2796. — (L. 2796) $D_{10}$ G वर्तनं परिवारितः; $T_2$ °नं विपरीतकं (for the post. half). — (L. 2797) $T_1$ तथाश्रद्धा; $G_2$ यदाश्रद्धा; $M_4$ तु याश्रद्धा (for यदश्रद्धा). — (L. 2799) $T_1$ $M_4$ पारुष्यम्; $G_2$ वचनम् (for परुषम्). $T_1$ अयुक्त-; $G_{1,3}$ अवद्धं (for °द्ध-). $T_2$ अबंधं यच्च शंकरि; $G_2$ अवद्धं परुषं कटु (for the post. half). — (L. 2800) $M_4$ असत्त्वं (for °त्यं). $M_{1,3}$ असत्यं परिवादं च (for the prior half). — (L. 2802) $M_4$ परतापोपताडनं (for the post. half). — (L. 2804) $T_1$

अभक्ष्यभक्षणं चैव व्यसनेष्वभिषङ्गता ।
दर्पात्स्तम्भाभिमानाच्च परेषामुपतापनम् ।
अकार्याणां च करणमशौचं पानमेव च ।
दौःशील्यं क्षुद्रसंपर्कः साहाय्यं पापकर्मणि ।
अधर्म्यमयशस्यं च कार्यं तस्य निषेवणम् ।
एवमाद्यशुभं चान्यच्छारीरं पापमुच्यते ।
मानसाद्वाङ्मयं पापं विशिष्टमिति वक्ष्यते ।
वाङ्मयादपि वै पापं शारीरं गण्यते बहु ।
एवं पापयुतं कर्म पातयेत्त्रिविधं नरम् ।
परोपतापजननमत्यन्तं पापकं स्मृतम् ।
द्विविधं तत्कृतं पापं कर्तारं नरकं नयेत् ।
पातकं त्वपि यत्कर्म करणाद्बुद्धिपूर्वकम् ।
सापदेशमवश्यं तु कर्तव्यमिति यत्कृतम् ।
कथंचित्तत्कृतमपि कर्ता तेन न लिप्यते ।
अवश्यभावदेशेन प्रतिहन्येत कारणम् ।

उमा ।

भगवन्पापकं कर्म यथा कृत्वा न लिप्यते ।
अनृतं धर्मयुक्तं च तन्मे शंसितुमर्हसि ।

महेश्वरः ।

यो नरोऽनपराधी सन्नात्मप्राणस्य रक्षणात् ।
शत्रुमुद्यतशस्त्रं वा पूर्वं तेन हतोऽपि वा ।
प्रतिगत्य नरो हिंस्यान्न स पापेन लिप्यते ।
चोराटविकसंत्रस्तास्तत्प्रतीकारचेष्टया ।
तान्प्रतिघ्नन्नरो हिंस्यान्न स पापेन लिप्यते ।
वृत्तिघ्नं तु नरो हिंस्यान्न स पापेन लिप्यते ।
ग्रामार्थं भर्तृपिण्डार्थं दीनानुग्रहकारणात् ।
वधबन्धपरिक्लेशान्कुर्वन्पापात्प्रमुच्यते ।
दुर्भिक्षे चात्मवृत्त्यर्थमेकायनगतस्तथा ।
अकार्यं वाप्यभक्ष्यं वा कृत्वा पापैर्न लिप्यते ।
व्याधितो रोगमोक्षार्थमभक्ष्येण न लिप्यते ।
अनृतं धर्मयुक्तं च दाक्षिण्यात्स्त्रीषु भाषितम् ।
आत्मप्राणभयादुक्तं मोक्षार्थं चाप्यधार्मिकात् ।
विवाहकरणे चैव लौकिकेनानृतं ब्रुवन् ।
संस्तम्भनार्थं त्रस्तानामनृतेन न लिप्यते ।
विधिरेष गृहस्थानां प्रायेणैवोपदिश्यते ।
अवाच्यं वाप्यकार्यं वा देशकालवशेन तु ।
बुद्धिपूर्वं नरः कुर्वंस्तत्प्रयोजनमात्रया ।
किंचिद्वा लिप्यते पापैरथ वा न च लिप्यते ।
एवं देवि विजानीहि नास्ति तत्र विचारणा ।

---

परेषां व्यसनक्रिया ( for the post. half ). — $T_1$ om. line 2805. — ( L. 2805 ) $T_3$ स्तंभातिमानाच् ; $M_4$ °भिमानश्च ( for °मानाच् ). $M_4$ -तापनात् ( for °नम् ). — ( L. 2806 ) $D_{10}$ T G अशौचं पान( $T_2$ °प )सेवनं ( for the post. half ). — ( L. 2807 ) $D_{10}$ T G पाप- ( for क्षुद्र- ). $T_{2,3}$ -संपर्कं ( for °र्कः ). $T_1$ आवासः पापकर्मणां ( for the post. half ). — ( L. 2808 ) $G_{1,3}$ कामं ( for कार्यं ). — ( L. 2810 ) $T_2$ $M_4$ मनसा ( for मानसाद् ). $D_{10}$ $T_{2,3}$ G $M_4$ लक्ष्यते ( for व° ). $T_1$ वरिष्ठमिति लक्षये ( for the post. half ). — After line 2810, $D_{10}$ $T_{2,3}$ $G_{1,3,4}$ $M_4$ read line 2822, repeating it in its proper place, while $G_2$ reads line 2822. — ( L. 2811 ) $D_{10}$ T G पापाच् ( for पापं ). — ( L 2812 ) $D_{10}$ S त्रिविधं पातयेन्नरं ( for the post. half ). — $T_1$ om. lines 2813-2818. — ( L. 2813 ) $D_{10}$ $T_3$ G परापकारजननम् ; $T_2$ परतापकरं पापम् ; $M_4$ परोपघातजननम् ( for the prior half ). $D_{10}$ $T_{2,3}$ G पातकं ( for पापकं ). — ( L. 2814 ) $D_{10}$ $T_{2,3}$ G त्रिविधं ( for द्वि° ). $D_{10}$ $T_3$ G पापकं ( for नरकं ). — ( L. 2815 ) $D_{10}$ $T_{2,3}$ $G_{1,2,4}$ चापि ; $G_3$ नापि ( for त्वपि ). $D_{10}$ $T_3$ G कर्मणा ; $T_3$ कर्मणां ; $M_4$ कारणं ( for करणाद् ). — ( L. 2816 ) $M_4$ अपि ( for इति ). — ( L. 2817 ) $T_2$ G स ( for न ). — ( L. 2818 ) $D_{10}$ $T_{2,3}$ G अवश्यं पापदेशेन ( for the prior half ). — ( L. 2819 ) $D_{10}$ कर्म ( for कृत्वा ). — After line 2819, $T_3$ ins. :

पापस्यावरणे वापि तद्वोपश्च महेश्वर ।

— $D_{10}$ T $G_{1,3,4}$ om. line 2820. $G_2$ om. ( hapl. ) lines 2820–2823. — $T_1$ महेशः ( for महेश्वरः ). — ( L. 2821 ) $G_3$ [ ऽ ]परो ( for नरो ). $D_{10}$ $T_{2,3}$ $G_{1,3,4}$ च ( for सन् ). $D_{10}$ $T_{2,3}$ $G_{1,3,4}$ स्वात्म- ( for आत्म- ). $M_{1,2}$ कारणात् ( for रक्ष° ). — ( L. 2823 ) $D_{10}$ $T_1$ $G_{1,3,4}$ प्रतिहन्यात् ; $T_{2,3}$ °हन्य ( for °गत्य ). $T_1$ यस्तु ( for हिंस्यान् ). — $D_{10}$ $G_{2,4}$ om. ( hapl. ) lines 2824–2826. — ( L. 2824 ) $T_2$ चोरादधिकसंत्रस्तास् ; $G_{1,3}$ चोरा अधिकसंत्रस्तास् ( for the prior half ). — For line 2824, $T_1$ subst. :

ये संत्रासकराश्चोरास्तथैवाटविकाश्च ये ।

— ( L. 2825 ) $T_{2,3}$ $G_{1,3}$ यः प्रजघ्नन् ; M यः प्रति° ( for तान्प्रति° ). $T_1$ यस्तु ; $G_{1,3}$ हन्यान् ( for हिंस्यान् ). — After 2825, $T_2$ reads 2836 repeating it in its proper place. $T_{1,3}$ $G_{1,3}$ om. ( hapl. ) line 2826. — ( L. 2828 ) $M_3$ ब्रुवंति ( for कुर्वन् ). — ( L. 2829 ) $M_4$ दुर्भिक्षं ( for °क्षे ). — ( L. 2830 ) $G_{1,3}$ अपि ( for वापि ). $D_{10}$ $T_{1,3}$ G पापान् ; $T_2$ पापं ( for पापैर् ). — After line 2830, $M_4$ reads line 2836. $D_{10}$ T G om. ( hapl. ) lines 2831–2835. — ( L. 2831 ) $M_4$ व्याधितो रोगमोक्षार्थे ( for the prior half ). — ( L. 2832 ) $M_3$ नर्म- ( for धर्म- ). — ( L. 2835 ) $M_4$ दुःखानाम् ( for त्रस्ता° ). — ( L. 2837 ) $T_{1,2}$ अकार्यं वाप्यवाच्यं वा ( for

उमा ।
भगवन्पानदोषांश्च पेयापेयत्वकारणम् ।
एतदिच्छाम्यहं श्रोतुं तन्मे वद महेश्वर ।
महेश्वरः ।
हन्त ते कथयिष्यामि पानोत्पत्तिं शुचिस्मिते ।
पुरा सर्वेऽभवन्मर्त्या बुद्धिमन्तो नयानुगाः ।
शुचयः सुभगाचाराः सर्वे सुमनसः प्रिये ।
एवंभूते तदा लोके प्रेष्यत्वं न परस्परम् ।
प्रेष्याभावान्मनुष्याणां कर्मारम्भो ननाश ह ।
उभयोर्लोकयोर्नाशं दृष्ट्वा कर्मक्षयात्प्रभुः ।
यज्ञकर्म कथं लोके वर्ततेति पितामहः ।
आज्ञापयत्सुरान्देवि मोहयध्वेति मानुषान् ।
तमसः सारमुद्धृत्य पानं बुद्धिप्रणाशनम् ।
न्यपातयन्मनुष्येषु पापदोषावहं प्रिये ।
तदाप्रभृति तत्पीत्वा मुहुर्मुहुर्मानुषा भुवि ।
कार्याकार्यमजानन्तो वाच्यावाच्यं गुणागुणम् ।
केचिद्धसन्ति तत्पीत्वा प्ररुदन्ति तथा परे ।
नृत्यन्ति मुदिताः केचिद्गायन्ति च शुभाशुभम् ।
कलहं कुर्वतेऽभीक्ष्णं प्रहरन्ति परस्परम् ।
केचिद्धावन्ति सहसा प्रस्खलन्ति पतन्ति च ।
अयुक्तं बहु भाषन्ते यत्रक्वचन शेरते ।
नग्ना विक्षिप्य गात्राणि नष्टसंज्ञा मृता इव ।
एवं बहुविधान्पापान्कुर्वन्ति हृतचेतसः ।
ये पिबन्ति महामोहं पानं पापयुता नराः ।
धृतिं लज्जां च बुद्धिं च पानं पीतं प्रणाशयेत् ।
तस्मान्नराः संभवन्ति निर्लज्जा निरपत्रपाः ।
बुद्धिसत्त्वैः परिक्षीणास्तेजोहीना मलान्विताः ।
पीत्वा पीत्वा तृषायुक्ताः पानपाः संभवन्ति च ।
पानकामाः पानकथाः पानकालाभिकाङ्क्षिणः ।
पानार्थं कर्मवश्यास्ते संभवन्ति नराधमाः ।
पानकामास्तृपायोगाद्बुद्धिसत्त्वपरिक्षयात् ।
पानपानां प्रेष्यकराः पानपास्त्वभवन्भृशम् ।
तदाप्रभृति वै लोके नीचैः पानवशैर्नरैः ।
कारयन्ति च कर्माणि बुद्धिमन्तस्त्वपानपाः ।
कारुत्वमथ दासत्वं प्रेष्यतामेत्य पानपाः ।
सर्वकर्मकराश्चासन्पशुवद्रज्जुबन्धिताः ।
पानपास्तु मदान्धत्वात्तदा बुद्धिप्रणाशनात् ।
कार्याकार्यस्य चाज्ञानाद्यथेष्टकरणात्स्वयम् ।
विदुषामविधेयत्वात्पापमेवाभिपद्यते ।
परिभूतो भवेल्लोके मद्यपो मित्रभेदकः ।
सर्वकालमशुद्धश्च सर्वभक्षस्तथाभवत् ।
विशिष्टैर्ज्ञातिभिर्द्वेष्यः सततं कलिभावनः ।

the prior half ). $T_1$ om. from the post. half of line 2838 up to the prior half of line 2839. — ( L. 2839 ) $T_2$ आलिप्यते ( for चा लि° ). $T_1$ न स पापेन लिप्यते ; $M_4$ अथ वाचा न लिप्यते ( for the post. half ). $T_1$ om. from the post half of line 2841 up to the prior half of line 2842. — ( L. 2843 ) $T_2$ अहं ( for हन्त ). — ( L. 2845 ) $D_{10}$ $T_{1.3}$ G सुशुभाचाराः ; $T_2$ च शुभा° ( for सुभगा° ). $D_{10}$ $T_{2.3}$ $G_{1-3}$ चोन्मनसः ( for सुम° ). — ( L. 2846 ) $D_{10}$ T G प्रेष्यकृन् ( for °त्वं ). — ( L. 2848 ) $G_4$ नृपः ( for प्रभुः ). — ( L. 2849 ) $T_2$ तथा ( for कथं ). $T_3$ एवंभूते तदा लोके ( for the prior half ). — $T_1$ om. line 2850. — ( L. 2851 ) $T_2$ प्राण- ( for पानं ): — ( L. 2852 ) $T_1$ सर्व- ( for पाप- ). — ( L. 2853 ) $D_{10}$ $T_{2.3}$ $G_{2.4}$ तत्पानान् ; $T_1$ पानेन ; $G_{1.3}$ तत्पानं ( for तत्पीत्वा ). $D_{10}$ $T_{2.3}$ G मानवा ( for मानुषा ). — ( L. 2855 ) $M_4$ वदंति ( for हसन्ति ). $D_{10}$ T G प्रवदंति ( for प्ररु° ). $M_4$ प्रिये ( for परे ). — ( L. 2856 ) $T_1$ om. from the post. half up to the prior half of line 2857. $D_{10}$ $T_3$ $G_{1.3.4}$ $M_4$ शुभाशुभान् ( for °शुभम् ). — ( L. 2857 ) $D_{10}$ $T_3$ G कलिं ते ( for कलहं ). $T_3$ कलि कुर्वंति तेंभीक्ष्णं ( for the prior half ). — ( L. 2858 ) $D_{10}$ $T_{2.3}$ G $M_{1-3}$ कचिद् ( for के° ). $T_1$ तथापरे ( for पतन्ति च ). — ( L. 2859 ) $D_{10}$ $T_{2.3}$ G शोभने ( for शेरते ). — ( L. 2860 ) $D_{10}$ T G नष्टज्ञाना इवा( $G_2$ उपा )सते ( for the post. half ). — ( L. 2861 ) $D_{10}$ T G भावान् ( for पापान् ). $D_{10}$ भ्रांत- ; $T_1$ हत- ( for हृत- ) $T_{2.3}$ G कुर्वंति भ्रान( $T_2$ °ति )चेतनाः ( for the post. half ). — ( L. 2865 ) $T_1$ -सत्त्व- ( for -सत्त्वैः ). $T_2$ मदान्विताः ( for मला° ). — ( L. 2867 ) $T_2$ -पराः ( for -कथाः ). $G_{3.4}$ पानकालाभिलाषिणः ; $M_4$ °कामाभिकांक्षिताः ( for the post. half ). — $T_1$ om. ( hapl. ) lines 2868–2869. — ( L. 2869 ) $M_{1.4}$ केचित्सत्त्व- ( for बुद्धिसत्त्व- ). — ( L. 2870 ) $D_{10}$ T G पानदानां ( for °पानां ). $D_{10}$ T G पानपाः सहसाभवन् ( for the post. half ). — ( L. 2871 ) $D_{10}$ T G दीनैः ( for नीचैः ). $T_1$ पापरतैर् ; $T_2$ पापवशैर् ( for पान° ). — ( L. 2872 ) $D_{10}$ T G तु ( $G_4$ च ) पानपाः ( $G_{1.3}$ °दाः ) ( for त्वपानपाः ). — $D_{10}$ om. ( hapl. ) line 2873. — ( L. 2874 ) $M_1$ सर्वकाम- ( for °कर्म- ). $T_3$ -पीडिताः ; $G_{1.3}$ -बंधिनः ( for -बन्धिताः ). — $T_1$ om. lines 2875–2880. — ( L. 2875 ) $D_{10}$ $G_{2.4}$ सुधां दत्त्वा ; $T_2$ $G_{1.3}$ सुरां पीत्वा ; $T_3$ सुरां दत्त्वा ( for मदान्धत्वात् ). — ( L. 2876 ) $M_4$ यथेष्टं कारिणः स्वयं ( for the post. half ). — ( L. 2877 ) $G_1$ अपि हेयत्वात् ; $G_4$ अभिधेयत्वात् ( for अविधे° ). — ( L. 2879 ) $T_2$ अबुद्धिश् ; $T_3$ $G_{2.4}$ अशुद्धिश् ( for °शुद्धश् ). $T_2$ $G_{1.3}$ भवेत् ( for [अ]भवत् ). — ( L. 2880 ) $D_{10}$ $T_{2.3}$ G विनष्टो ज्ञाति( $D_{10}$ जाति- ; $G_{1.3}$ ज्ञान )विद्रूयः

कटुकं परुषं घोरं वाक्यं वदति सर्वतः ।
गुरूनतिवदेन्मत्तः परदारान्प्रधर्षयेत् ।
संविदं कुरुते शौण्डैर्न शृणोति हितं क्वचित् ।
एवं बहुविधा दोषाः पानपे सन्ति शोभने ।
केवलं नरकं यान्ति नास्ति तत्र विचारणा ।
तस्मात्तद्वर्जितं सद्भिः पानमात्महितैषिभिः ।
यदि पानं न वर्जेरन्सन्तश्चारित्रकारणात् ।
भवेदेवं जगत्सर्वं निर्मर्यादं च निष्क्रियम् ।
तस्माद्बुद्धेर्हि रक्षार्थं सद्भिः पानं विवर्जितम् ।
इति ते दुष्कृतं सर्वं त्रिविधं कथितं प्रिये ।

Colophon.

महेश्वरः ।

विधानं सुकृतस्यापि भूयः शृणु शुचिस्मिते ।
प्रोच्यते तत्त्रिधा देवि सुकृतं च समासतः ।
यदौपरमिकं चैव सुकृतं निरुपद्रवम् ।
तथैव सोपकरणं तावता सुकृतं विदुः ।
निवृत्तिः पापकर्मभ्यस्तदौपरमिकं प्रिये ।
मनोवाक्कायजा दोषाः शृणु मे वर्जनाच्छुभम् ।
त्रैविध्यदोषोपरमे यस्तु दोषव्यपेक्षया ।
स तु प्राप्नोति सकलं सर्वदुष्कृतवर्जनात् ।
व्रतवद्वर्जयेद्दोषान्युगपत्पृथगेव वा ।
तथा धर्ममवाप्नोति दोषत्यागो हि दुष्करः ।
दोषसाकल्यसंत्यागान्मुनिर्भवति मानवः ।
सौकर्यं परधर्मस्य कार्यारम्भादृतेऽपि च ।
आत्मना स्थापनामात्राल्लभ्यते सुकृतं परम् ।
अहो नृशंसाः पच्यन्ते मानुषाः स्वल्पबुद्धयः ।
ये तादृशं न बुध्यन्ते आत्माधीनं च निर्व्ययम् ।
दुष्कृतत्यागमात्रेण पदमूर्ध्वं हि लभ्यते ।
पापभीरुत्वमात्रेण दोषाणां परिवर्जनात् ।
सुशोभनं भवेद्देवि किमु धर्मव्यपेक्षया ।
इत्यौपरमिकं देवि सुकृतं कथितं तव ।
श्रुताच्च वृद्धसंयोगादिन्द्रियाणां च निग्रहात् ।
संतोषाच्च धृतेश्चैव शक्यते दोषवर्जनम् ।
तदेव यम इत्याहुर्दोषसंयमनं प्रिये ।
यमधर्मेण धर्मोऽस्ति नान्यः शुभतरः शुभे ।
यमधर्मेण यतयः प्राप्नुवन्त्युत्तमां गतिम् ।
ईश्वराणां प्रभवतां दरिद्राणां च वै नृणाम् ।
सफलो दोषसंत्यागो दानादपि शुभादपि ।
तपो दानं महादेवि दोषमल्पं विनिर्दहेत् ।

---

(for the prior half). D10 T2.3 G -भावगः (for °नः). M4 सर्वं तत्कलहावहः (for the post. half). — (L. 2881) D10 T2.3 G M1-3 परुषं कटुकं घोरं (for the prior half). D10 T2.3 G सर्वशः; T1 पानपः (for सर्वतः). — (L. 2882) T1 मर्त्यः; T2 मुक्तः (for मत्तः). — (L. 2883) T1 धूर्तैर् (for शौण्डैर्). — (L. 2887) D10 T2 G2.4 न वर्तेरन्; T1 सत्यजे° (for न वर्जे°). G1.3 यदि पापान्न वर्तेरन् (for the prior half). — (L. 2888) D10 T3 G एतज्; T1.2 एव (for एवं). D10 T2 G2.4 अमर्यादं (for निर्म°). — T1 om. lines 2889-2890. — (L. 2889) D10 वृद्धैर्; T3 बुधैर् (for बुद्धेर्). — (L. 2890) G4 देवि (for सर्वं). T2 G1.3 कथितं त्रिविधं प्रिये; G4 त्रिविधं दुष्कृतं प्रिये (for the post. half). — Colophon. — *Sub-parvan :* M2-4 दानधर्म. — *Adhy. name :* D10 T2.3 G2 M1 उमामहेश्वरसंवादः. — *Adhy. no.:* D10 T2 G2.4 214; T1 207; T3 213; G1.3 M1 208; M2.3 209; M4 206. — T1 महेशः (for °श्वरः). — (L. 2892) G1.3 त्रिविधं (for तत्त्रिधा). T2 ते (for च). — T1 om. lines 2893-2895. — (L. 2893) G1.3 M2 (*inf. lin.*) औपरमितं (for °कं). — (L. 2894) M4 तपसा (for तावता). — (L. 2895) M2 (*inf. lin.*) औपरमितं (for °कं). — (L. 2896) T2 G1-3 M1.4 मनोवाक्कायजान्दोषान् (for the prior half). — For line 2896, T1 subst.:

वाङ्मनःकायजं चेति सुकृतं त्रिविधं स्मृतम् ।

— (L. 2897) T1 यश्च; M4 नित्यं (for यस्तु). — (L. 2898) T1 सुकृतं (for सकलं). T1.2 G1.3.4 सर्वं (for सर्व-). M3 -वर्जनं (for -वर्जनात्). — (L. 2900) T1 स तु (for तथा). T3 तथा कर्मण्यवाप्नोति (for the prior half). — (L. 2901) G2 मन्त्री (for मुनिर्). — T1 om. line 2902. — (L. 2902) D10 सौकर्यं (for °र्यं). D10 T2.3 G पश्य (for पर-). — (L. 2903) T1 आत्मवत्; M1-3 °नः (for °ना). D10 T3 G2 आत्मोपलब्धोपरमात्; T2 आत्मोपसर्पोपरमात्; G1.3.4 आत्मा च लब्धोपरमो (for the prior half). D10 T2.3 G2.4 लभेत; T1 G1.3 लभते (for लभ्यते). T1 फलं; M4 पदं (for परम्). — (L. 2904) G1.3 ह्रस्व- (for स्वल्प-). — (L. 2905) T G4 एतादृशं (for ये ता°). M4 कुर्वन्ति (for बुध्यन्ते). D10 T3 G निर्व्ययाः; T1 निर्दयाः; T2 निर्वृताः (for निर्व्ययम्). — T1 om. lines 2906-2908. — (L. 2908) D10 T G सुशोभनो (for °भनं). T2 G1.3 ऋजु- (for किमु). — (L. 2909) G1.2.4 कथितं सुकृतं तव (for the post. half). — (L. 2910) T2 श्रुता (for श्रुताच्). — (L. 2911) T1 पश्यते (for शक्यते). — (L. 2912) D10 T2.3 G धर्मम्; M यमम् (for यम). — T1 om. (hapl.) line 2913. — (L. 2913) G1.3 शुभकरः (for °तरः). D10 T2.3 G प्रिये (for शुभे). — (L. 2915) T1 भवेन्नृणां; G4 नृणां प्रिये (for च वै

सुकृतं यामिकं प्रोक्तं पथ्यं निरुपसाधनम् ।
सुखाभिसंधिर्लोकानां सत्यं शौचमथार्जवम् ।
व्रतोपवासः प्रीतिश्च ब्रह्मचर्यं दमः शमः ।
एवमादि शुभं कर्म सुकृतं नियमाश्रितम् ।
शृणु तेषां विशेषांश्च कीर्तयिष्यामि भामिनि ।
सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ।
नास्ति सत्यात्परं दानं नास्ति सत्यात्परं तपः ।
यथा श्रुतं यथा दृष्टमात्मना यद्यथा कृतम् ।
तथा तस्याविकारेण वचनं सत्यलक्षणम् ।
यच्छलेनाभिसंयुक्तं सत्यरूपं मृषैव तत् ।
नित्यमेव प्रवक्तव्यं परावर्यं विजानता ।
दीर्घायुश्च भवेत्सत्यात्कुलसंतानपालकः ।
लोकसंस्थितिपालश्च भवेत्सत्येन मानवः ।

उमा ।

कथं संधारयन्मर्त्यो व्रतं शुभमवाप्नुयात् ।

महेश्वरः ।

पूर्वमुक्तं तु यत्पापं मनोवाक्कायकर्मभिः ।
व्रतवत्तस्य संत्यागस्तदौपरमिकं व्रतम् ।
तेन धर्ममवाप्नोति व्रतवत्परिपालयन् ।
मङ्गलं शुभकर्माणि व्रतेनैव समाचरेत् ।
नरो धर्ममवाप्नोति शुभसंजोषणं व्रतम् ।
यद्यदात्मप्रियं नित्यं मनोवाक्कायकर्मभिः ।
व्रतवत्तस्य संत्यागस्तपोव्रतमिति स्थितम् ।
त्याज्यं वा यदि वा जोष्यमव्रतेन वृथा चरन् ।
तथा फलं न लभते तस्माद्धर्मं व्रताच्चरेत् ।
शुद्धकायो नरो भूत्वा स्नात्वा तीर्थे यथाविधि ।
पञ्च भूतानि चन्द्रार्कौ संध्ये धर्मं यमं पितॄन् ।
आत्मनैनं तथात्मानं निवेद्य व्रतवच्चरेत् ।
व्रतसा मरणाद्वापि कालच्छेदेन वा चरेत् ।
शाकादिषु व्रतं कुर्यात्तथा पुष्पफलादिषु ।
ब्रह्मचर्यं व्रतं कुर्यादुपवासं तथा व्रतम् ।
एवमन्येषु बहुषु व्रतं कार्यं हितैषिणा ।
व्रतभङ्गो यथा न स्याद्रक्षितव्यं तथा बुधैः ।
व्रतभङ्गो महत्पापमिति विद्धि शुभेक्षणे ।
औषधार्थं यदज्ञानाद्गुरूणां वचनादपि ।
अनुग्रहार्थं बन्धूनां व्रतभङ्गो न दुष्यते ।
व्रतापवर्गकालेषु देवब्राह्मणपूजनम् ।
नरेण तु यथाशक्ति कार्यं सिद्धिं तथाप्नुयात् ।

उमा ।

कथं शौचविधिस्तत्र तन्मे शंसितुमर्हसि ।

महेश्वरः ।

बाह्यमाभ्यन्तरं चेति द्विविधं शौचमिष्यते ।
मानसं सुकृतं यत्तच्छौचमाभ्यन्तरं स्मृतम् ।
सदाहारविशुद्धिश्च कायप्रक्षालनं च यत् ।
बाह्यं शौचं भवेदेतत्तथैवाचमनादि च ।
मृच्चैव शुद्धदेशस्था गोशकृन्मूत्रमेव च ।
द्रव्याणि गन्धयुक्तानि यानि पुष्टिकराणि च ।
एतैः संमार्जयेत्कायमम्भसा च पुनः पुनः ।
अक्षोभ्यं यत्प्रकीर्णं च नित्यस्रोतश्च यज्जलम् ।
प्रायशस्तादृशे मज्जेदन्यथा चापि वर्जयेत् ।

नृणाम्). — (L. 2917) $G_{1.3}$ M महदपि (for महादेवि). $D_{10}$ $T_{2.3}$ G $M_4$ हि निर्हरेत्; $M_{1-3}$ हि निर्दहेत् (for विनिर्द°). $T_1$ दोषं सर्वं विनिर्हरेत् (for the post. half). — (L. 2918) $D_{10}$ $T_{2.3}$ G चोक्तं (for प्रोक्तं). $T_1$ om. from the post. half up to the prior half of line 2919. $D_{10}$ $T_{2.3}$ G वक्ष्ये (for पथ्यं). — (L. 2919) $T_1$ तथा; $M_4$ उत (for अथ). — (L. 2920) $T_1$ $M_{1-3}$ व्रतोपवासं (for °वासः). — (L. 2922) $T_1$ शोभने (for भामिनि). — (L. 2923) $M_4$ संयानं (for सोपानं). — $T_1$ om. lines 2925–2951. — (L. 2926) $D_{10}$ $T_{2.3}$ G विकारेण (for [अ]वि°). — (L. 2927) $D_{10}$ $T_{2.3}$ G $M_2$ शीलेन (for छ°). — (L. 2928) $D_{10}$ $T_{2.3}$ G सत्यम् (for नित्यम्). — (L. 2929) $M_4$ -कारकः (for -पालकः). — $D_{10}$ $T_3$ G $M_4$ om. (hapl.) lines 2933–2937. $T_2$ om. lines 2934–2935. — (L. 2936) $T_2$ तेन (for नरो). $T_2$ -संजोषणाद् (for °षणं). — (L. 2938) $D_{10}$ $T_{2.3}$ G $M_{3.4}$ स्मृतं (for स्थितम्). — (L. 2940) $D_{10}$ $T_{2.3}$ G वृथा (for व्रताच्). — (L. 2942) $G_3$ समौ (for यमं). — (L. 2943) $D_{10}$ $T_{2.3}$ G [ए]व (for [ए]वं). — (L. 2944) $T_2$ हरणाद् (for मर°). $D_{10}$ $T_{2.3}$ $G_{1.2.4}$ [आ]हरेत् (for चरेत्). $M_4$ om. (hapl.) from the post. half of line 2945 up to the prior half of line 2946. — (L. 2946) $D_{10}$ $T_{2.3}$ $G_{2-4}$ $M_1$ ब्रह्मचर्य- (for °चर्यं). $D_{10}$ $T_{2.3}$ G उपवासव्रतं तथा (for the post. half). — (L. 2951) $T_2$ भूतानां (for बन्धूनां). — (L. 2952) $D_{10}$ $T_2$ G $M_1$ -काले तु; $T_3$ -कालेपि (for -कालेषु). — (L. 2953) $D_{10}$ $T_{2.3}$ G यथा विद्धि (for यथाशक्ति). $T_3$ कार्य- (for कार्यं). $D_{10}$ $T_2$ G कार्यसिद्धिं यथा( $D_{10}$ °द्धिमवा )प्नुयात् (for the post. half). — $T_1$ महेशः; $G_2$ शिवः (for महेश्वरः). — (L. 2955) $T_3$ $M_4$ अभ्यंतरं (for आ°). $G_4$ [ए]व (for [इ]ति). — (L. 2956) $T_2$ मनसा (for मानसं). — (L. 2957) $T_1$ -प्रतपनं (for -प्रक्षालनं). — (L. 2958) $D_{10}$ $T_{2.3}$ G बाह्य- (for बाह्यं). $T_1$ [आ]चमनादिकं; $T_2$ $G_{1.3}$ °दिषु; $G_2$ °दि वा (for °नादि च). — (L. 2959) $G_{1.3}$ सुप्र- (for शुद्ध-). — (L. 2963) $D_{10}$ $T_3$ G वि- (for [अ]-

त्रिराचमनकं श्रेष्ठं निष्फेनैर्निर्मलैर्जलैः ।
तथा विण्मूत्रयोः शुद्धिरद्भिर्बहुमृदा भवेत् ।
तदैव जलसंशुद्धिर्यत्संशुद्धं तु संस्पृशेत् ।
शकृता भूमिशुद्धिः स्याल्लोहानां भस्मना स्मृता ।
तक्षणं घर्षणं चैव दारवाणां विशोधनम् ।
दहनं मृन्मयानां च मर्त्यानां कृच्छ्रधारणम् ।
शेषाणां देवि सर्वेषामातपेन जलेन च ।
ब्राह्मणानां च वाक्येन सदा संशोधनं भवेत् ।
अदुष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते ।
एवमापदि संशुद्धिरेवं शौचं विधीयते ।

उमा ।

आहारशुद्धिस्तु कथं तन्मे वद महाप्रभो ।

महेश्वरः ।

अमांसमद्यमक्लेद्यमपर्युषितमेव च ।
अतिकट्वम्ललवणैर्हीनं च शुभगन्धि च ।
कृमिकीटमलैर्हीनं संभृतं शुद्धभाजने ।
एवंविधं सदाहारं देवब्राह्मणसत्कृतम् ।
शुद्धमित्येव विज्ञेयमन्यथा त्वशुभं भवेत् ।
ग्राम्यादारण्यकैः सिद्धं शुद्धमित्यवधारय ।
अतिमात्रगृहीतात्तु अल्पदत्तं भवेच्छुचि ।
यज्ञशेषं हविःशेषं पितृशेषं च निर्मलम् ।
इति ते कथितं देवि भूयः श्रोतुं किमिच्छसि ।

Colophon.

उमा ।

भक्षयन्त्यपरे मांसं वर्जयन्त्यपरे भुवि ।
तन्मे वद महादेव भक्ष्याभक्ष्यस्य कारणम् ।

महेश्वरः ।

मांसस्य भक्षणे दोषो यश्चास्याभक्षणे गुणः ।
तदहं कीर्तयिष्यामि तन्निबोध यथातथम् ।
इष्टं दत्तमधीतं च क्रतवश्च सदक्षिणाः ।
अमांसभक्षणस्यैते कलां नार्हन्ति षोडशीम् ।
आत्मार्थं यः परप्राणान्हिंस्यात्स्वादुफलेप्सया ।
व्यालगृध्रसृगालैश्च राक्षसैश्च समस्तु सः ।
यो वृथानित्यमांसाशी स पुमानधमो भवेत् ।
ततः कष्टतरं नास्ति स्वयमाहृत्य भक्षणात् ।
स्वमांसं परमांसेन यो वर्धयितुमिच्छति ।
उद्विग्नवासं लभते यत्र यत्रोपजायते ।
संछेदनं स्वमांसस्य यथा संजनयेद्रुजम् ।
तथैव परमांसेऽपि वेदितव्यं विजानता ।
यस्तु सर्वाणि मांसानि यावज्जीवं न भक्षयेत् ।
स स्वर्गे विपुलं स्थानं लभते नात्र संशयः ।
यस्तु वर्षशतं पूर्णं तप्यते परमं तपः ।
यश्चापि वर्जयेन्मांसं सममेतन्न वा समम् ।
न हि प्राणैः प्रियतमं लोके किंचन विद्यते ।
तस्मात्प्राणिदया कार्या यथात्मनि तथा परे ।
सर्वे यज्ञा न तत्कुर्युः सर्वे वेदाश्च भामिनि ।

---

पि ). — ( L. 2964 ) $D_{10}$ T G त्रिस्त्रि( $G_4$ °भि )राचमनं श्रेष्ठं ( for the prior half ). $T_1$ निर्णिक्तैर् ; $G_{1.3}$ नियतं ( for निष्फेनैर् ). $M_4$ om. ( hapl. ) from the post. half of line 2965 up to the prior half of line 2966. — ( L. 2966 ) $D_{10}$ $T_{2.3}$ G तथैव ; $T_1$ तदेव ( for तदैव ). $T_1$ $M_4$ यथा शुद्धं ; $G_{1.3}$ यथा शुद्धिं ; $M_{1-3}$ यदा शुद्धं ( for यत्संशुद्धं ). — ( L. 2967 ) $D_{10}$ $T_{2.3}$ $G_{1.3.4}$ स्मृतं ; $T_1$ भवेत् ; $G_2$ कृतं ( for स्मृता ). — ( L. 2968 ) $T_3$ कर्षणं ( for घ° ). — ( L. 2969 ) $M_4$ शुद्धिकारणं ( for कृच्छ्रधा° ). — ( L. 2974 ) $D_{10}$ T G देवदेव ( $T_1$ तन्मे वद ) महेश्वर ( for the post. half ). — $T_1$ महेशः ( for °श्वरः ). — ( L. 2976 ) $D_{10}$ T G -लवण- ( for °णैर् ). $M_4$ अकटुक्षारलवणैर् ( for the prior half ). — ( L. 2977 ) $D_{10}$ T G -केश- ( for -कीट- ). $T_3$ -दर्शनं ( for -भाजनम् ). $D_{10}$ $T_2$ G संवृ( $G_{1.3}$ °हृ- ; $G_4$ °भृ )तं शुद्धदर्शनं ; $T_1$ संभृतं शुचि भोजनं ( for the post. half ). — ( L. 2978 ) $D_{10}$ $T_{2.3}$ M सदाहार्यं ( for सदाहारं ). $T_1$ G देवब्राह्मणसात्कृतं ( for the post. half ). — ( L. 2979 ) $T_3$ श्रेष्ठम् ( for शुद्धम् ). $D_{10}$ $T_{1.3}$ G तज् ( for वि- ). $T_2$ शुद्धिश्चुनमितीत्येवम् ( for the prior half ). $D_{10}$ T G अन्यथा मन्यतेशुभं ( for the post. half ). — ( L. 2980 ) $G_1$ शुद्धं ( for सिद्धं ). $D_{10}$ T G $M_4$ श्रेष्ठम् ( for शुद्धम् ). — $T_1$ om. line 2981. — ( L. 2981 ) $M_4$ -गृहीतं ( for °तात् ). $M_4$ यच्च जग्धं भवेच्छुचिः ( for the post. half ). — $G_2$ om. line 2983. — ( L. 2983 ) $T_{1.3}$ किं भूयः ( $T_3$ भूयः किं ) श्रोतुमिच्छसि ( for the post. half ). — Colophon. — *Adhy. name* : $D_{10}$ $T_{2.3}$ M उमामहेश्वरसंवादः. — *Adhy. no.* : $D_{10}$ $T_3$ $G_{2.4}$ 215 ; $T_1$ 208 ; $T_2$ 214 ; $G_{1.3}$ $M_1$ 209 ; $M_{2.3}$ 210 ; $M_4$ 207. — ( L. 2984 ) $D_{10}$ $T_{2.3}$ G विभो ; $T_1$ [ऽ]पि च ( for भुवि ). — ( L. 2985 ) $D_{10}$ $T_3$ G भक्ष्याभक्ष्यविनिर्णयं ; $T_2$ M °स्वकारणं ( $M_4$ °णात् ) ( for the post. half ). — $T_1$ महेशः ( for °श्वरः ). — ( L. 2987 ) $T_4$ तदहं संप्रवक्ष्यामि ( for the prior half ). $G_1$ यथातथा ( for यथातथम् ). — ( L. 2988 ) $T_1$ [आ]प्तदक्षिणाः ( for सद° ). — ( L. 2989 ) $D_{10}$ $T_3$ G [ए]व ( for [ए]ते ). — ( L. 2990 ) $T_1$ -परीप्सया ( for -फले° ). — ( L. 2991 ) $T_1$ स्मृतः ; $M_4$ ततः ( for तु सः ). — ( L. 2992 ) $M_4$ भूतो ( for वृथा- ). — ( L. 2995 ) $T_1$ उद्विग्नतां स लभते ( for the prior half ). — ( L. 2996 ) $T_1$ संखादनं ; $T_3$ यच्छेदनं ; $M_4$ संछेदनात् ( for °दनं ). $D_{10}$ $T_{2.3}$ G रुजां ( for रुजम् ).

यन्मांसरसमास्वाद्य पुनर्मांसानि वर्जयेत् ।
धर्म्यं यशस्यमायुष्यं स्वर्ग्यं स्वस्त्ययनं महत् ।
इत्येवं मुनयः प्राहुर्मांसस्याभक्षणे गुणान् ।
एवं बहुगुणं देवि नृणां मांसविवर्जनम् ।
न शक्नुयाद्यदा जीवंस्त्यक्तुं मांसं कथंचन ।
त्रिपुण्यमासमात्रं वा वर्जनीयं विशेषतः ।
न शक्नुयादपि तथा कौमुदीमासमेव च ।
जन्मनक्षत्रतिथिषु सदा पर्वसु रात्रिषु ।
वर्जनीयं तथा मांसं परत्र हितमिच्छता ।
अशक्तः कारणान्मर्त्यो भोक्तुमिच्छेद्विधिं शृणु ।
अनेन विधिना खादन्कल्मषेण न लिप्यते ।
सूनायां च गतप्राणं क्रीत्वा न्यायेन भामिनि ।
ब्राह्मणातिथिपूजार्थं भोक्तव्यं हितमिच्छता ।
भैषज्यकारणाद्व्याधौ खादन्पापैर्न लिप्यते ।
पितृशेषं तथैवाश्नन्मांसं नाशुभमृच्छति ।

उमा ।

गुरुपूजा कथं देव क्रियते धर्मकाङ्क्षिभिः ।

महेश्वरः ।

गुरुपूजां प्रवक्ष्यामि यथावत्तव शोभने ।
कृतज्ञानां परो धर्म इति वेदानुशासनम् ।
तस्मात्स्वगुरवः पूज्यास्ते हि पूर्वोपकारिणः ।
गुरूणां च गरीयांसस्त्रयो लोकेषु पूजिताः ।
उपाध्यायः पिता माता संपूज्यास्ते विशेषतः ।
ये पितृभ्रातरो ज्येष्ठा ये च तस्यानुजास्तथा ।
पितुः पिता च सर्वे ते पूजनीया यथा पिता ।
मातुर्या भगिनी ज्येष्ठा मातुर्या च यवीयसी ।
मातामही च धात्री च सर्वास्ता मातरः स्मृताः ।
उपाध्यायस्य यः पुत्रो यश्च तस्य भवेद्गुरुः ।
ऋत्विग्गुरुः पिता चेति गुरवः परिकीर्तिताः ।
ज्येष्ठो भ्राता नरेन्द्रश्च मातुलः श्वशुरस्तथा ।
भयत्राता च भर्ता च गुरवस्ते प्रकीर्तिताः ।
इत्येष कथितः स्वर्ग्यो गुरूणां सर्वसंग्रहः ।
अनुवृत्तिं च पूजां च तेषामपि निबोध मे ।
अवध्यौ मातृपितरौ उपाध्यायस्तथैव च ।
कथंचिन्नावमन्तव्या नरेण हितमिच्छता ।
येन प्रीणाति च पिता तेन प्रीतः प्रजापतिः ।
येन प्रीणाति चेन्माता प्रीताः स्युर्देवमातरः ।
येन प्रीणात्युपाध्यायो ब्रह्मा तेनाभिपूजितः ।
अप्रीतेषु पुनस्तेषु नरो नरकमेति हि ।
गुरूणां वैरनिर्बन्धो न कर्तव्यः कथंचन ।
नरकं स गुरुप्रीत्या मनसापि न गच्छति ।
न ब्रूयाद्विप्रियं तेषामनिष्टे न प्रवर्तयेत् ।
विगृह्य न वदेत्तेषां समीपे स्पर्धया क्वचित् ।
यद्यदिच्छन्ति ते कर्तुमस्वतन्त्रस्तदाचरेत् ।

— (L. 3000) $D_{10}$ $T_{2,3}$ $G_{1,3,4}$ यत् (for यस्). $M_{1,3}$ विपुलं (for परमं) — (L. 3001) $D_{10}$ $T_3$ G यच्चापि; $T_1$ $M_{1-3}$ यच्चात्र; $M_4$ यश्चात्र (for °पि). — (L. 3002) $M_{1,2}$ किंचिन्न (for किंचन). — (L. 3004) $M_{2,3}$ सर्व- (for सर्वे). $D_{10}$ $T_3$ $G_2$ देवाश् (for वेदाश्). — (L. 3005) $D_{10}$ T G $M_4$ यो (for यन्). $D_{10}$ $T_3$ $G_2$ मांसं वि-; $T_2$ $G_{1,2,4}$ मांसं न ($G_1$ च) (for मांसानि). $M_{1-3}$ पुनर्मांसस्य वर्जनं (for the post. half). — After line 3005, $M_4$ ins.:

सत्रेण यजते नित्यं सदा दानं प्रयच्छति ।
सदा तपस्वी भवति मधुमांसस्य वर्जनात् ।

— $D_{10}$ T G om. line 3006. $T_1$ om. line 3009. — (L. 3009) $D_{10}$ $T_2$ G [अ]तीव (for जीवंस्). — (L. 3010) $D_{10}$ $T_{2,3}$ G पुण्यं तन्मांसमात्रं वा (for the prior half). — $T_1$ om. line 3011. — (L. 3012) $T_1$ $G_{1,3,4}$ तथा (for सदा). — (L. 3013) $T_2$ वर्जितव्यं (for वर्जनीयं). $D_{10}$ $T_3$ G तदा; $T_{1,2}$ सदा (for तथा). — (L. 3015) $D_{10}$ $T_{2,3}$ G अनेन खादन्विधिना (for the prior half). $D_{10}$ T G कलुषेण (for कल्म°). — $T_3$ om. (hapl.) lines 3016–3018. — (L. 3016) $T_1$ वि- (for च). — For line 3016, $M_4$ subst.:

स्वधायां च गतप्राणान्क्रीडन्त्या येन भामिनि ।

— (L. 3018) $D_{10}$ $T_{1,3}$ G $M_{2,3}$ -करणाद् (for -का°). $G_4$ वाध (for व्याधौ). — (L. 3019) $D_{10}$ $G_{3,4}$ [अ]न्न (for [अ]श्नन्). — (L. 3020) $M_4$ कर्म- (for धर्म-). $D_{10}$ T G -चारिभिः (for -काङ्क्षिभिः). — $T_1$ महेशः (for °श्वरः). — (L. 3022) $G_2$ देवानु- (for वेदानु-). — (L. 3023) $M_4$ ते (for स्व-). — (L. 3026) $T_1$ च स्युर्; $T_{2,3}$ $G_{1,3,4}$ पितुर् (for पितृ-). $T_1$ om. from the post. half up to the prior half of line 3027. — (L. 3027) $D_{10}$ $T_{1,3}$ G $M_4$ पिता यथा (by transp.); $T_2$ पिता तथा. — (L. 3028) $D_{10}$ T G transp. मातुर् and या च. — (L. 3031) $D_{10}$ T G $M_4$ संप्र- (for परि-). — (L. 3032) $D_{10}$ $G_4$ ज्येष्ठ- (for ज्येष्ठो). — $T_1$ om. lines 3034–3035. — (L. 3034) $D_{10}$ $G_4$ साध्वि; $T_3$ सार्धं (for स्वर्ग्यो). $T_2$ इत्येते कथिताः सर्वे; $G_{1,3}$ गुरुरित्येव कथितो (for the prior half). — (L. 3036) $D_{10}$ $T_{2,3}$ G आराध्यौ मातापितरौ (for the prior half). — (L. 3038) $D_{10}$ T G $M_4$ पितरस् (for च पिता). — (L. 3039) $G_4$ तेन (for प्रीताः). $G_{2,4}$ स्याद् (for स्युर्). — (L. 3040) $T_1$ तेन ब्रह्मा प्रजापतिः (for the post. half). — $T_1$ om. line 3043. — (L. 3043) $D_{10}$ G नरः स्वगुरुमप्रीत्या (for the prior half). — (L. 3044) $D_{10}$ $T_1$ $G_{2,4}$ अनिष्टं; $T_{2,3}$ $G_{1,3}$ अरिष्टं

वेदानुशासनसमं गुरुशासनमिष्यते ।
कलहांश्च विवादांश्च गुरुभिः सह वर्जयेत् ।
कैतवं परिहासांश्च मन्युकामाश्रयाः कथाः ।
गुरूणां योऽनहंवादी करोत्याज्ञामतन्द्रितः ।
न तस्मात्सर्वमर्त्येषु विद्यते पुण्यकृत्तमः ।
असूयामपवादांश्च गुरूणां परिवर्जयेत् ।
तेषां प्रियहितान्वेषी भूत्वा परिचरेत्सदा ।
न तद्यज्ञफलं कुर्यात्तपो वाचरितं महत् ।
यत्कुर्यात्पुरुषस्येह गुरुपूजा सदा कृता ।
अनुवृत्तेर्विना धर्मो नास्ति सर्वाश्रमेष्वपि ।
तस्मात्क्षमादृतः काले गुरुवृत्तिं समाचरेत् ।
स्वमर्थं स्वशरीरं च गुर्वर्थं संत्यजेद्बुधः ।
विवादं धनहेतोर्वा मोहाद्वा तैर्न रोचयेत् ।
ब्रह्मचर्यमहिंसा च दानानि विविधानि च ।
गुरुभिः प्रतिषिद्धस्य सर्वमेतदपार्थकम् ।
उपाध्यायं पितरं मातरं च
येऽभिद्रुह्युर्मनसा कर्मणा वा ।
तेषां पापं भ्रूणहत्याविशिष्टं
तेभ्यो नान्यः पापकृदस्ति लोके ।

उमा ।

उपवासविधिं तत्र तन्मे शंसितुमर्हसि ।

महेश्वरः ।

शरीरमलकार्श्यार्थमिन्द्रियोच्छोषणाय च ।
एकभुक्तोपवासैस्तु धारयन्ते व्रतं नराः ।
लभन्ते विपुलं धर्मं तथाहारपरिक्षयात् ।
बहूनामुपरोधं तु न कुर्यादात्मकारणात् ।
जीवोपघातं च तथा धान्यं संजीव्यमिष्यते ।
तस्मात्पुण्यं लभेन्मर्त्यः स्वयमाहारकर्शनात् ।
तद्गृहस्थैर्यथाशक्ति कर्तव्यमिति निश्चयः ।
उपवासार्दिते काय आपदर्थं पयो जलम् ।
भुञ्जन्न व्रतघाती स्याद्ब्राह्मणाननुमान्य च ।

उमा ।

ब्रह्मचर्यं कथं देव रक्षितव्यं विजानता ।

महेश्वरः ।

तदहं ते प्रवक्ष्यामि शृणु देवि समाहिता ।
ब्रह्मचर्यं परं शौचं ब्रह्मचर्यं परं तपः ।
केवलं ब्रह्मचर्येण प्राप्यते परमं पदम् ।
संकल्पाद्दर्शनाच्चैव तद्युक्तवचनादपि ।
संस्पर्शादथ संयोगात्पञ्चधा रक्षितं परम् ।
व्रतवद्धारितं चैव ब्रह्मचर्यमकल्मषम् ।
नित्यसंरक्षणं तस्य नैष्ठिकानां विधीयते ।
तदिष्यते गृहस्थानां कालमुद्दिश्य कारणम् ।
जन्मनक्षत्रयोगेषु पुण्यवासेषु पर्वसु ।
देवताधर्मकार्येषु ब्रह्मचर्यव्रतं चरेत् ।
ब्रह्मचर्यव्रतफलं लभेद्दारव्रती सदा ।
शौचमायुस्तथारोग्यं लभ्यते ब्रह्मचारिभिः ।

उमा ।

तीर्थचर्या कथं देव क्रियते धर्मकाङ्क्षिभिः ।
कानि तीर्थानि लोकेश तन्मे शंसितुमर्हसि ।

महेश्वरः ।

हन्त ते कथयिष्यामि तीर्थस्नानविधिं प्रिये ।
पावनार्थं च शौचार्थं ब्रह्मणा निर्मिताः पुरा ।
यास्तु लोके महानद्यस्ताः सर्वास्तीर्थसंज्ञिताः ।
तासां प्राक्स्रोतसः श्रेष्ठाः संगमश्च परस्परम् ।

---

(for अनिष्टे). — T1 om. line 3046. — (L. 3046) T3 स्वयं तदपि नाचरेत् (for the post. half). — (L. 3047) G4 वेदानुशासनमिमं (for the prior half). — T1 om. line 3049. T3 reads lines 3049–3052 twice. — (L. 3049) D10 G3 तथा (for कथाः). T3 (both times) G4 मन्युकामाश्रयांस्तथा (for the post. half). — (L. 3052) D10 T2.3 (both times) G अपवादं ; T1 °रार्धं (for °वादांश्). T3 (both times) गुरुभिः सह वर्जयेत् (for the post. half). — T1 om. line 3055. — (L. 3057) D10 T3 G2.4 क्षमान्वितः ; T1 क्षमायुतः ; G1.3 क्षमावृतः (for समादृतः). — (L. 3058) M1.4 समर्थं (for स्व°). M च (for स्व-). G1.3 गुर्वर्थं संप्रवर्तयेत् (for the post. half). — (L. 3059) T2 तैर्विवादं (for मोहाद्वा तैर्). — (L. 3061) T1 निरर्थकं (for अपा°). — (L. 3065) T1 ततो (for तेभ्यो). — T1 महेशः (for °श्वरः). — (L. 3067) D10 T3 G -शोषणं ; T1 -हान्य° (for -कार्श्य°).

T2 शरीरं लाभशाल्यर्थम् (for the prior half). — (L. 3068) T1 G4 धारयंति (for °यन्ते). — (L. 3071) M1 जीवघातनिवृत्त्यर्थं (for the prior half). D10 T1.3 G सजीवं धान्यमिष्य(T1 °मुच्य)ते ; T2 स जीवं धारयिष्यते (for the post. half). — (L. 3072) G2 -दर्शनात् (for -क°). — (L. 3074) G2 काल (for काय). T1 उपवासार्दितः — (L. 3075) D10 T2.3 G काल (for the prior half). — (L. 3075) D10 T2.3 G प्रतिघाती (for व्रत°). — T1 महेशः (for °श्वरः). — T1 om. (hapl.) line 3077. — (L. 3077) G4 सर्वं (for देवि). — (L. 3081) T1 G4 अपि (for अथ). D10 T2.3 G मतं ; T1 द तत् (for परम्). — (L. 3083) D10 T2.3 G नित्यं संरक्षितं तस्य (for the prior half). — (L. 3085) D10 G2 -वारेषु ; M2 (inf. lin.) -मासेषु (for -वा°). — (L. 3089) D10 T2.3 व्रतं (for चर्यं). G1 कर्म- (for धर्म-). T1 यन्ते ब्रह्मचारिभिः (for the post. half). — (L. 3090) D10 T2.3 G M2 लोकेषु (for

तासां सागरसंयोगो वरिष्ठश्चेति विद्यते ।
तासामुभयतः कूलं यत्र तत्र महर्षिभिः ।
देवैर्वा सेवितं देवि तत्तीर्थं परमं स्मृतम् ।
समुद्रश्च महातीर्थं पावनं परमं शुभम् ।
तस्य कूलगतास्तीर्था महद्भिश्च समाप्लुताः ।
स्रोतसां पर्वतानां च जोषितानां महर्षिभिः ।
अपि कूपतटाकं वा मुनिभिः सेवितं प्रिये ।
तत्तु तीर्थमिति ज्ञेयं प्रभावात्तु तपस्विनाम् ।
तदाप्रभृति तीर्थत्वं लेभे लोकहिताय वै ।
एवं तीर्थोद्भवं विद्धि तस्य स्नानविधिं शृणु ।
तन्मना व्रतभूयिष्ठो गत्वा तीर्थाभिकाङ्क्षया ।
उपवासत्रयं कुर्यादेकं वा नियमान्वितः ।
पुण्यमासयुते काले पौर्णमास्यां यथाविधि ।
बहिरेव शुचिर्भूत्वा तत्तीर्थं तन्मनाविशेत् ।
त्रिराप्लुत्य जलाभ्याशे दत्त्वा ब्राह्मणदक्षिणाम् ।
अभ्यर्च्य देवायतनं ततः प्रायाद्यथागतम् ।
एतद्विधानं सर्वेषां तीर्थं तीर्थं प्रति प्रिये ।
समीपतीर्थस्नानात्तु दूरतीर्थं सुपूजितम् ।
आदिप्रभृति शुद्धस्य तीर्थस्नानं शुभं भवेत् ।
तपोर्थं पापनाशार्थं शौचार्थं तीर्थगाहनम् ।
एवं पुण्येषु मासेषु तीर्थस्नानं शुभं भवेत् ।
एतन्नैयमिकं सर्वं सुकृतं कथितं तव ।

Colophon.

महेश्वरः ।

दानानि देवपूजां च पितृपूजां तथैव च ।
अन्यानि धर्मकार्याणि सुकृतं सोपसाधनम् ।
तत्सर्वं शृणु कल्याणि प्रजानां हितकाम्यया ।
चेतनाचेतनैर्युक्तं यल्लोके विद्यते धनम् ।
एतदर्थमवाप्नोति नरः प्रेत्य शुभेक्षणे ।

उमा ।

लोकसिद्धं तु यद्द्रव्यं सर्वसाधारणं भवेत् ।
तद्दत्सर्वसामान्यं कथं धर्मं लभेन्नरः ।
एवं साधारणे द्रव्ये कस्य स्वत्वं कथं भवेत् ।

महेश्वरः ।

लोके भूतमयं द्रव्यं सर्वसाधारणं तथा ।
यथैव तद्ददन्मर्त्यो भवेत्पुण्यं हि तच्छृणु ।
दाता प्रतिग्रहीता च देयं सोपक्रमं तथा ।
देशकालौ च यत्त्वेतद्दानं षड्गुणमुच्यते ।
तेषां संपद्विशेषांश्च कीर्त्यमानान्निबोध मे ।
आदिप्रभृति यः शुद्धो मनोवाक्कायकर्मभिः ।
सत्यवादी जितक्रोधस्त्वलुब्धो नानसूयकः ।
श्रद्धावानास्तिकश्चैव एवं दाता प्रशस्यते ।

---

°श ). T1 नानातीर्थानि देवेश ( for the prior half ). — T1 महेशः ( for °श्वरः ). — ( L. 3092 ) D10 T1.2 G निर्मितं ( for °ताः ). — ( L. 3093 ) T3 -संज्ञकाः ; G1 -संज्ञिकाः ( for -संज्ञिताः ). — ( L. 3095 ) T1 विशिष्ट इति कीर्त्यते ( for the post. half ). — ( L. 3096 ) T1 om. from the post. half up to the prior half of line 3101. D10 T2.3 G तत्र ( for यत्र ). — D10 reads lines 3097–3100 twice. — ( L. 3097 ) M तत्र ( M4 °त्तु ) तीर्थं परं स्मृतं ( for the post. half ). — ( L. 3099 ) T3 तीर- ( for कूल- ). — ( L. 3101 ) D10 G2 कूलं ; T3 G1.3 M1.4 कूपं ; G4 कूल- ( for कूप- ). D10 T2.3 G2.4 सेवितं मुनिभिः प्रिये ( for the post. half ). — ( L. 3103 ) M1–3 भवेत् ( for लेभे ). — ( L. 3104 ) M देवि ( for विद्धि ). D10 T2.3 G एवं तीर्थं भवेद्देवि ( for the prior half ). T1 तत्र ( for तस्य ). — ( L. 3105 ) D10 G2.4 जन्मना ( for तन्मना ). T1 शुचि- ( for व्रत- ). D10 T3 G2.4 तीर्थानि ( for °भि- ). — ( L. 3107 ) D10 G M4 -मासे ; T3 -मार्ग- ( sic ) ( for -मास- ). — ( L. 3108 ) D10 G4 मन्मना ; G1.3 मनसा ( for तन्मना ). G2 तत्तीर्थं मलनाशवित् ( for the post. half ). — ( L. 3109 ) G3 पुराप्लुत्य ( for त्रि° ). — ( L. 3110 ) T1 गच्छेद् ( for प्रायाद् ). — ( L. 3111 ) D10 T2.3 G M4 इति ( for प्रति ). T1 तीर्थानामुत्तमं प्रिये ( for the post. half ). — ( L. 3114 ) T2 G1.3 सर्वंती-( T2 तीर्थं ती )र्थावगाहनं ( for the post. half ). — ( L. 3115 ) T1.2 तीर्थेषु ( for मासेषु ). — Colophon. — *Adhy. name :* D10 T2.3 G2 M उमामहेश्वरसंवादः. — *Adhy. no. :* D10 T2 G2.4 216 ; T1 209 ; T3 215 ; G1.3 M1 210 ; M2.3 211 ; M4 208. — After the ref., M ins. :

तृतीयं सोपकरणं क्रियते गृहवासिभिः ।

— D10 T2.3 G om. lines 3117–3120. — ( L. 3117 ) M देवपूजा ( for °पूजां ). M पितृपूजा ( for °पूजां ). — ( L. 3121 ) D10 एतमर्थम् ( for एतदर्थम् ). T1 M तद्दद्धर्ममवाप्नोति ( for the prior half ). — ( L. 3122 ) T1 तथा ( for भवेत् ). — ( L. 3124 ) D10 T G तस्य ( for कस्य ). — ( L. 3125 ) G2 भवेत् ( for तथा ). — ( L. 3126 ) T3 G2 तथा ( for यथा ). D10 T2.3 G M4 लभेत् ( for भवेत् ). T2 स ( for हि ). T1 लभेत्पुण्यफलं शृणु ( for the post. half ). — T1 om. lines 3127–3132. — ( L. 3128 ) M2 -कालेन ( for -कालौ च ). — D10 om. lines 3131–3198. — ( L. 3132 ) G3 M4 एतद्दाता ( for एवं दाता ). — ( L. 3133 ) T3 G तथा ( T2 °दा ) दीन- ( for तथोदित- ). T1 त्वलुब्धो नाभ्यसूयकः ( for the post. half ). — ( L. 3134 ) T1 पंचयज्ञपरायणः ( for the post. half ). — After line 3134, T1 reads lines 3189–3190, repeating them in their proper

शुद्धो दान्तो जितक्रोधस्तथोदितकुलोद्भवः ।
श्रुतचारित्रसंपन्नस्तथा बहुकलत्रवान् ।
पञ्चयज्ञपरो नित्यं निर्विकारशरीरवान् ।
एतान्पात्रगुणान्विद्धि तादृक्पात्रं प्रशस्यते ।
पितृदेवाग्निकार्येषु तस्य दत्तं महत्फलम् ।
यद्यदर्हति यो लोके पात्रं तस्य भवेच्च सः ।
मुच्येतापदमापन्नो येन पात्रं स तस्य तु ।
अन्नस्य क्षुधितः पात्रं तृषितस्तु जलस्य वै ।
एवं पात्रेषु नानात्वमिष्यते पुरुषं प्रति ।
जारश्चोरश्च षण्डश्च हिंस्रः समयभेदकः ।
लोकविघ्नकराश्चान्ये वर्जिताः सर्वशः प्रिये ।
परोपघाताद्यद्द्रव्यं चौर्याद्वा लभ्यते नृभिः ।
निन्दया लभ्यते यच्च धूर्तभावेन वा तथा ।
अधर्मादथ मोहाद्वा बहूनामुपरोधनात् ।
लभ्यते यद्धनं देवि तदन्यद्वा हृतं भवेत् ।
तादृशेन कृतं धर्मं निष्फलं विद्धि भामिनि ।
तस्मान्न्यायागतेनैव दातव्यं शुभमिच्छता ।
यद्यदात्मप्रियं नित्यं तत्तद्देयमिति स्थितिः ।
उपक्रममिमं विद्धि दातॄणां परमं हितम् ।
पात्रभूतं तु दूरस्थमभिगम्य प्रसाद्य च ।
दाता दानं तथा दद्याद्यथा तुष्येत तेन सः ।
एष दानविधिः श्रेष्ठः समाहूय तु मध्यमः ।
पूर्वं च पात्रतां ज्ञात्वा समाहूय निवेद्य च ।
शौचार्चनसमायुक्तं दातव्यं श्रद्धया प्रिये ।
याचितॄणां तु परममाभिमुख्यपुरस्कृतम् ।
संमानपूर्वं संगृह्य दातव्यं देशकालयोः ।
अपात्रेभ्योऽपि चान्येभ्यो दातव्यं भूतिमिच्छता ।
पात्राणि संपरीक्ष्यैव दाता वै दानमात्रयोः ।
अतिशक्त्या परं दानं यथाशक्ति तु मध्यमम् ।
तृतीयं चापरं दानं नानुरूपमिवात्मनः ।
यथासंभावितं पूर्वं दातव्यं तत्तथैव च ।
पुण्यक्षेत्रेषु यद्दत्तं पुण्यकालेषु वा तथा ।
तच्छोभनतरं विद्धि गौरवाद्देशकालयोः ।

उमा ।

यश्च पुण्यतमो देशस्तथा कालश्च शंस मे ।

महेश्वरः ।

कुरुक्षेत्रं महानद्यो यच्च देवर्षिसेवितम् ।
गिरिर्वरश्च तीर्थानि देशभागेन पूजिताः ।
ग्रहीतुरीप्सितो यश्च तत्र दत्तं महत्फलम् ।
शरद्वसन्तकालश्च पुण्यमासस्तथैव च ।
शुक्लपक्षश्च पक्षाणां पौर्णमासी च पर्वसु ।
पितृदैवतनक्षत्रं निर्मला दिवसास्तथा ।
तच्छोभनतरं विद्धि चन्द्रसूर्यग्रहं तथा ।
प्रतिग्रहीतुर्यः कालो मनसा कीर्तितः शुभे ।
एवमादिषु कालेषु दत्तं दानं महद्भवेत् ।
दाता देयं च पात्रं च उपक्रमयुता क्रिया ।
देशः कालश्च इत्येषां संपच्छुद्धिः प्रकीर्तिता ।

---

place. — $T_1$ om. lines 3135–3141. — (L. 3135) $T_3$ $G_{1.3.4}$ -यज्ञकरो (for °परो). — (L. 3137) $G_1$ -कार्ये तु (for -कार्येषु). — (L. 3139) $T_{2.3}$ G $M_4$ मुच्येद् (for मुच्येत). — (L. 3140) $M_4$ क्षुधितं (for °तः). $T_2$ तृषितं तु; $G_4$ °तस्य (for °तस्तु). $G_{1.3}$ $M_4$ तृषितं सलिलस्य वै (for the post. half). — (L. 3141) $T_3$ नानार्थम् (for °त्वम्). — (L. 3145) $T_3$ G निंद्यायद् (for निन्दया). — (L. 3147) $G_3$ यद्वलभ्यते (by transp.). $T_{2,3}$ G तदत्यंतवि($T_3$ °तं वि)गर्हितं; $M_4$ तदन्यायाहृतं भवेत् (for the post. half). — (L 3148) $G_2$ तु तं (for कृतं). — (L. 3149) $T_3$ न्यायागमेन (for °तेन). $T_1$ अफलाकाङ्क्षिणा नित्यं (for the prior half). $T_2$ भूतिम् (for शुभम्). — $T_1$ om. line 3151. — (L. 3151) $T_3$ G $M_{1-3}$ इदं (for इमं). — (L. 3154) $T_1$ स एष विधिवच्छ्रेष्ठः (for the prior half). — After line 3154, $T_1$ ins.:

यद्द्रव्यं न्यायतः प्राप्तं तदेव स्वमिति स्मृतम् ।

— (L. 3155) T निवेदयेत् (for °द्य च). — (L 3156) $T_{2,3}$ G शौचाचमनसंयुक्तं ($G_4$ °स्कारात्) (for the prior half). $G_4$ वर्तव्यं (for दातव्यं). — (L. 3157) $M_{1-3}$ चरमम् (for प°). $M_{1-3}$ -पुरस्कृतः (for °तम्). — (L. 3158) T G संग्राह्यं (for संगृह्य). — $G_2$ reads lines 3159–3165 twice. — (L. 3160) $T_{2,3}$ $G_{1,2}$ (both times).$_{3,4}$ -मात्रया (for °योः). — (L. 3161) $T_2$ -शक्त्या (for -शक्ति). — $T_1$ om. lines 3162–3163. — (L. 3162) $T_3$ परं (for [अ]परं). — (L. 3163) $G_{1.2}$ (both times).$_3$ M -संभापितं (for °वितं). $G_2$ (both times) दानं तत् (for दातव्यं). — (L. 3165) $T_2$ शोभनकरं (for °तरं). — $T_1$ महेश्वरः (for °श्वरः). — (L. 3168) $T_1$ $G_{1.3}$ M वनं (for वरश्च). $T_{1.2}$ -भागेषु (for °न). $T_3$ G देशभागेषु पूजितः (for the post. half). — (L. 3169) $T_{2.3}$ $G_{1.2}$ यत्र (for यश्च). $T_1$ ग्रहीतुरिष्टं स्याद्यत्र; $G_{3.4}$ $M_4$ ग्रहीतुमीप्सितो यत्र (for the prior half). $T_{2.3}$ G महा- (for महत्). — (L. 3171) $G_{1.3}$ -पक्षे (for -पक्षश्च). — (L. 3172) $T_3$ G निर्मलो दिवसस्तथा (for the post. half). — (L. 3173) T G $M_4$ -ग्रहे (for -ग्रहं). — $T_1$ om. line 3174. — (L. 3174) M तर्कितः (for कीर्तितः). — (L. 3175) $M_3$ om. कालेषु. $T_{1.2}$ महत्फलं (for °द्भवेत्). — (L. 3176) $T_2$ दानस्य (for देयं च).

यत्रैव युगपत्संपत्तत्र शुद्धिर्महद्भवेत् ।
अत्यल्पमपि यद्दानमेभिः षड्भिर्गुणैर्युतम् ।
भूत्वानन्तं नयेत्स्वर्गं दातारं दोषवर्जितम् ।
सुमहद्वापि यद्दानं गुणैरेभिर्विनाकृतम् ।
अत्यल्पफलनिर्योगमफलं वा भवेद्धि तत् ।

उमा ।

एवं गुणयुतं दानं दत्तं स्वफलतां व्रजेत् ।
तदस्ति चेन्महादेव तन्मे शंसितुमर्हसि ।

महेश्वरः ।

तदप्यस्ति महाभागे नराणां भवदोषतः ।
कृत्वा तु धर्मं विधिवत्पश्चात्तापं करोति चेत् ।
श्लाघया वा यदि ब्रूयाद्वृथा संसदि यत्कृतम् ।
प्रकल्पयेच्च मनसा तत्फलं प्रेत्यभावतः ।
धर्मकार्यं कृतं यच्च सततं फलकाङ्क्षया ।
एवं कृतं वा दत्तं वा परत्र विफलं भवेत् ।
एते दोषा विवर्ज्याश्च दातृभिः पुण्यकाङ्क्षिभिः ।
सनातनमिदं वृत्तं सद्भिराचरितं तथा ।
अनुग्रहः परेषां तु गृहस्थानामृणं हि तत् ।
इत्येवं मन आवेश्य दातव्यं सततं बुधैः ।
एवमेव कृतं नित्यं सुकृतं तद्भवेन्महत् ।
सर्वसाधारणं द्रव्यमेवं दत्त्वा महत्फलम् ।

Colophon.

उमा ।

भगवन्कानि देयानि धर्ममुद्दिश्य मानवैः ।
तान्यहं श्रोतुमिच्छामि तन्मे शंसितुमर्हसि ।

महेश्वरः ।

अजस्रं धर्मकार्यं च तथा नैमित्तिकं प्रिये ।
अन्नं प्रतिश्रयो दीपः पानीयं तृणमिन्धनम् ।
स्नेहो गन्धश्च भैषज्यं तिलाश्च लवणं तथा ।
एवमादि तथान्यच्च दानमाजस्रमुच्यते ।
अजस्रदानात्सततमाजस्रमिति निश्चितम् ।
सामान्यं सर्ववर्णानां दानं शृणु समाहिता ।
अन्नं प्राणा मनुष्याणामन्नदः प्राणदो भवेत् ।
तस्मादन्नं विशेषेण दातुमिच्छन्ति मानवाः ।
ब्राह्मणायाभिरूपाय यो दद्यादन्नमीप्सितम् ।
निदधाति निधिं श्रेष्ठं सोऽनन्तं पारलौकिकम् ।
श्रान्तमध्वपरिश्रान्तमतिथिं गृहमागतम् ।
अर्चयीत प्रयत्नेन स हि यज्ञो वरः स्मृतः ।
कृत्वा तु पापकं कर्म यो दद्यादन्नमर्थिनाम् ।
ब्राह्मणानां विशेषेण सोऽपहन्ति स्वकं तमः ।
पितरस्तस्य नन्दन्ति सुवृष्ट्या कर्षका इव ।
पुत्रो वा यस्य पौत्रो वा श्रोत्रियान्भोजयिष्यति ।
अपि चण्डालशूद्राणामन्नदानान्न गर्ह्यते ।
तस्मात्सर्वप्रयत्नेन दद्यादन्नममत्सरः ।

---

T1 G1, 3 M -युताः क्रियाः ( for -युता क्रिया ). —(L. 3177) M4 देशकालं for देशः कालश्च ). T1 तथा श्लेषा ( for च श्लेषो ). T2, 3 G देशकाल तथान्यं( T3 G2 °श्ले षा ( for the prior half ). G2 सद्व- ( for संपच् ). — T1 om. line 3178. — (L. 3178) T2, 3 G यथा ( for यत्र ). T2, 3 G M. दानं ( for शुद्धिर् ). — G1 om. ( hapl. lines 3179–3181. — (L. 3182) T2 G1 फलाच( G4 °थि )तं ( for भवेद्धि तत् ). — (L. 3183) T1 तत्फलतां ; G च फ( G4 °चाफ )लतां ( for स्वफ° ). — (L. 3184) T3 G महद्देयं ( for महादेव ). T2 तन्नास्ति चेन्महद्दानं ( for the prior half ). —T1 महेशः ( for °श्वरः ). — (L. 3186) T2, 3 G धर्मं तु ( by transp. ). G2 कृत्वा पापं ( for पश्चात्तापं ). — (L. 3187) T1 श्लाघनाय ; G2 श्लाघनाचा ( for °या वा ). G1 श्लाघां वा यदि वा ब्रूयाद् ( for the prior half ). M4 तत् ( for यत् ). T1 कृत्वा संसदि वै नरः ( for the post. half ). — T1 om. line 3188. — (L. 3189) T3 G कर्म धर्म- ( for धर्मकार्यं ). T1 ( first time ) एतेन यत्कृतं कर्म ; T2 कर्म धर्मकृता यच्च ( for the prior half ). — (L. 3190) G M एतत् ( for एवं ). T1 ( first time ) दत्त वापि हुतं वापि ( for the prior half ). — (L. 3191) T1 वर्जनीया ( for विवर्ज्याश्च ). — (L. 3192) T1 सदा ( for तथा ). — (L. 3193) T2, 3 G अनुग्रहाद् ( for °ग्रहः ). — (L. 3194) T1 निश्चित्य मन-सैवं ( for the prior half ). — T1 om. line 3195. — (L. 3195) T2 भवेत् ( for कृतं ). — (L. 3196) T1 दत्तं ; G4 कृत्वा ( for दत्त्वा ). — Colophon om. in D10. — *Sub-parvan* : M1–3 दानधर्म. — *Adhy. name* : T2 G2 उमामहेश्वरसंवादे दानविधिः ; T3 M उमामहेश्वरसंवादः. — *Adhy. no.* : T1 210 ; T2 G2, 4 217 ; T3 216 ; G1, 3 M1 211 ; M2, 3 212 ; M4 209. — D10 om. the ref. — T1 महेशः ( for °श्वरः ). — (L. 3199) T1 तत् ( for च ). — (L. 3201) G3, 4 M1 गंधं ( for गन्धश्च ). — (L. 3204) T3 समासतः ( for °हिता ). — (L. 3205) D10 T2 G2, 4 प्राणो ( for प्राणा ). — (L. 3206) D10 T2, 3 G2, 4 दातुमिच्छति मानवः ( for the post. half ). — T3 om. ( hapl. ) lines 3208–3211. — (L. 3208) T1 M4 धनं ( for निधिं ). — (L. 3209) T2 श्रद्धयाध्व- ( for श्रान्तमध्व- ). D10 परिक्लांतम् ( for °श्रान्तम् ). — (L. 3210) D10 T2 G M4 वरप्रदः ; T1 फलप्रदः ( for वरः स्मृतः ). — (L. 3211) D10 T2 G पातकं ( for पापकं ). — (L. 3214) D10 T1 G यस्य तु ( for वा यस्य ). D10 T3 G श्रोत्रियं ( for °यान् ). — (L. 3215) D10 T1, 3 G M4 अन्नदानं ( for °नान् ). T1 गर्हति ; T2 ( also as above ) लभ्यते ; G3 गृह्यते ( for गर्ह्यते ). — (L. 3217) D

कलत्रं पीडयित्वापि पोषयेदतिथीन्सदा ।
जन्मापि मानुषे लोके तदर्थं हि विधीयते ।
अन्नदानाच्च ये लोकास्तान्प्रवक्ष्याम्यनिन्दिते ।
भवनानि प्रकाशन्ते दिवि तेषां महात्मनाम् ।
अनेकशतभौमानि सान्तर्जलवनानि च ।
वैडूर्यार्चिःप्रकाशानि रुक्मरूप्यनिभानि च ।
नानासंस्थानरूपाणि नानारत्नमयानि च ।
चन्द्रमण्डलशुभ्राणि किङ्किणीजालवन्ति च ।
तरुणादित्यवर्णानि स्थावराणि चराणि च ।
यथेष्टभक्ष्यभोज्यानि शयनासनवन्ति च ।
सर्वकामफलाश्चात्र वृक्षा भवनसंस्थिताः ।
वाप्यो वह्व्यश्च कूपाश्च दीर्घिकाश्च सहस्रशः ।
अरुजानि विशोकानि नित्यानि विविधानि च ।
भवनानि विविक्तानि प्राणदानां त्रिविष्टपे ।
विवस्वतश्च सोमस्य ब्रह्मणश्च प्रजापतेः ।
विशन्ति लोकांस्ते नित्यं जगत्यन्नोदकप्रदाः ।
तत्र ते सुचिरं कालं विहृत्याप्सरसां गणैः ।
जायन्ते मानुषे लोके सर्वकल्याणसंयुताः ।
बलसंहननोपेता नीरोगाश्चिरजीविनः ।
कुलीना मतिमन्तश्च भवन्त्यन्नप्रदा नराः ।
तस्मादन्नं विशेषेण दातव्यं भूतिमिच्छता ।
सर्वकालं च सर्वस्य सर्वत्र च सदैव च ।
सुवर्णदानं परमं स्वर्ग्यं स्वस्त्ययनं महत् ।
तस्मात्तद्वर्णयिष्यामि यथावदनुपूर्वशः ।
अपि पापं कृतं क्रूरं दत्तं रुक्मं प्रणाशयेत् ।
सुवर्णं ये प्रयच्छन्ति श्रोत्रियेभ्यः सुचेतसः ।
देवतास्ते तर्पयन्ति समस्ता इति वैदिकम् ।
अग्निर्हि देवताः सर्वाः सुवर्णं चाग्निरुच्यते ।
तस्मात्सुवर्णदानेन दत्ताः स्युः सर्वदेवताः ।
अग्न्यभावे तु कुर्वन्ति वह्निस्थानेषु काञ्चनम् ।
तस्मात्सुवर्णदातारः सर्वान्कामानवाप्नुयुः ।
आदित्यस्य हुताशस्य लोकान्नानाविधाञ्शुभान् ।
काञ्चनं संप्रदायाशु प्रविशन्ति न संशयः ।
अलंकारकृतं चापि केवलात्प्रविशिष्यते ।
सौवर्णैर्ब्राह्मणान्काले तैरलंकृत्य भोजयेत् ।
एतत्परमकं दानं दत्त्वासौ वर्णमद्भुतम् ।
द्युतिं मेधां वपुः कीर्तिं पुनर्जाते लभेद्ध्रुवम् ।
तस्मात्स्वशक्त्या दातव्यं काञ्चनं भुवि मानवैः ।
न ह्येतस्मात्परं लोकेष्वन्यत्पावनमुच्यते ।
अत ऊर्ध्वं प्रवक्ष्यामि गवां दानमनिन्दिते ।
न हि गोभ्यः परं दानं विद्यते जगति प्रिये ।
लोकान्सिसृक्षुणा पूर्वं गावः सृष्टाः स्वयंभुवा ।
वृत्त्यर्थं सर्वभूतानां तस्मात्ता मातरः स्मृताः ।
लोकज्येष्ठा लोकवृत्त्यां प्रवृत्ता
मय्यायत्ताः सोमविष्यन्दभूताः ।
सौम्याः पुण्याः कामदाः प्राणदाश्च
तस्मात्पूज्याः पुण्यकामैर्मनुष्यैः ।
धेनुं हि दत्त्वा निभृतामरोगां
कल्याणवत्सां च पयस्विनीं च ।
यावन्ति लोमानि भवन्ति तस्या-

तोषयेद्; $T_1$ पूज°; $T_3$ भोज° (for पोष°). —(L. 3218) $T_3$ जन्मना (for जन्मापि). —(L. 3219) $T_{2.3}$ लोका- स्तान् (for ये लोकास्). $D_{10}$ $T_1$ G अन्नदानां च लोकां( $T_1$ °का )स्तान् (for the prior half). $D_{10}$ $T_{2.3}$ G सं° (for तान्). — $T_1$ om. (hapl.) line 3221. —(L. 3222) $T_3$ रुक्मरूपशतानि च (for the post. half). —(L. 3223) $D_{10}$ $G_{2.4}$ नानारूपाणि सं( $D_{10}$ सु )स्थानि (for the prior half). — $T_1$ om. (hapl.) line 3224. —(L. 3227) $D_{10}$ $T_{2.3}$ $G_{2.4}$ -काल- (for -काम-). $T_1$ वृक्षा (for चात्र). $T_1$ भवनेषु च संस्थिताः (for the post half). —(L. 3228) $T_1$ नद्यश् (for वह्व्यश्). —(L. 3229) $G_{1.3.4}$ निरुजानि (for अरु°). —(L. 3230) $D_{10}$ T G विचित्राणि (for विविक्तानि). $G_2$ प्राणदानि (for °दानां). $T_1$ अन्नदानां विशिष्यते (for the post. half). —(L. 3234) $T_1$ जायंते मानुषं लोकं (for the prior half). $T_1$ om. from the post. half up to the prior half of line 3235. — $T_1$ om. lines 3236, 3238 and 3240. —(L. 3240) $D_{10}$ $T_{2.3}$ $G_{2.4}$ ते (for तद). —(L. 3241) $T_1$ रुक्मे दत्तं (for दत्तं रुक्मं). —(L. 3243) $T_2$ देवतास्तर्पयंति स; $G_2$ °स्तेन तृप्यंति; $M_2$ (*sup. lin.* as above). $_3$ °स्ते प्रयच्छंति (for the prior half). —(L. 3245) $T_2$ $G_{1.3.4}$ तृप्ताः (for दत्ताः). — $T_1$ om. lines 3246–3247 and 3250–3251. —(L. 3250) $D_{10}$ $T_3$ $G_{2.4}$ अलंकारं (for अलंकार-). —(L. 3251) $D_{10}$ $T_3$ $G_{1-3}$ M ब्राह्मणं (for °णान्). —(L. 3252) $D_{10}$ $T_{2.3}$ G य ए( $G_2$ यदे )तत्परमं दानं (for the prior half). —(L. 3253) $T_1$ धृतिं (for द्युतिं). $T_1$ $G_4$ $M_{1.2}$ पुनर्जातो (for °जाते). $T_3$ $G_{1.3}$ $M_4$ पुनर्जातो भवेद्ध्रुवं (for the post. half). —(L. 3254) $T_1$ सर्व- (for भुवि). — $T_1$ om. line 3255. —(L. 3255) $D_{10}$ $T_{2.3}$ G [अ]न्यत्पापात्प्रमुच्यते (for the post. half). —(L. 3256) $T_1$ अनुत्तमं (for अनिन्दिते). —(L. 3259) $T_1$ प्रीत्यर्थं (for वृत्त्यर्थं). —(L. 3260) $T_1$ लोकवृत्तौ (for °वृत्त्यां). $T_{2.3}$ प्रवृत्या (for °त्ता). —(L. 3261) $D_{10}$ T G $M_4$ -निष्यंदभूताः (for -विष्यन्द°). —(L. 3262) $T_1$ $G_4$ प्राणदाः कामदाश् (by *transp.*).

स्तावत्समाः स्वर्गफलानि भुङ्क्ते ।
प्रयच्छते यः कपिलां सचेलां
कांस्योपदोहां कनकाग्रशृङ्गीम् ।
पुत्रांश्च पौत्रांश्च कुलं च सर्व-
मासप्तमं तारयते परत्र ।
अन्तर्जाताः क्रीतका द्यूतलब्धाः
प्राणक्रीताः सोदकाश्चौजसा वा ।
कृच्छ्रोत्सृष्टाः पोषणार्थागताश्च
द्वारैरेतैस्ताः प्रलब्धाः प्रदद्यात् ।
कृशाय बहुपुत्राय श्रोत्रियायाहिताग्नये ।
प्रदाय नीरुजां धेनुं लोकान्प्राप्नोत्यनुत्तमान् ।
नृशंसस्य कृतघ्नस्य लुब्धस्यानृतवादिनः ।
हव्यकव्यव्यपेतस्य न दद्याद्गाः कथंचन ।
समानवत्सां यो दद्याद्धेनुं विप्रे पयस्विनीम् ।
सुवस्त्रां वस्त्रसंदानां सोमलोके महीयते ।
समानवत्सां यो धेनुं कृष्णां दद्यात्पयस्विनीम् ।
सुवृत्तां वस्त्रसंदानां लोकान्प्राप्नोत्यपां पतेः ।
समानवत्सां यो धेनुं दद्याद्गौरीं पयस्विनीम् ।
सुवृत्तां वस्त्रसंदानामग्निलोके महीयते ।
हिरण्यवर्णां पिङ्गाक्षीं सवत्सां कांस्यदोहनाम् ।
प्रदाय वस्त्रसंदानां याति कौबेरसद्म सः ।
वायुरेणुसवर्णां तु सवत्सां कांस्यदोहनाम् ।
प्रदाय वस्त्रसंदानां वायुलोके महीयते ।
युवानं बलिनं श्यामं शतेन सह यूथपम् ।
गवेन्द्रं ब्राह्मणेन्द्राय भूरिशृङ्गमलंकृतम् ।
ऋषभं ये प्रयच्छन्ति श्रोत्रियाणां महात्मनाम् ।
ऐश्वर्यमभिजायन्ते जायमानाः पुनः पुनः ।
गवां मूत्रपुरीषाणि नोद्विजेत कदाचन ।
न चासां मांसमश्नीयाद्गोषु भक्तः सदा भवेत् ।
ग्रासमुष्टिं परगवे दद्यात्संवत्सरं शुचिः ।
अकृत्वा स्वयमाहारं व्रतं तत्सार्वकामिकम् ।
गवामुभयतःकाले नित्यं स्वस्त्ययनं वदेत् ।
न चासां चिन्तयेत्पापमिति धर्मविदो विदुः ।
गावः पवित्रं परमं गोषु लोकाः प्रतिष्ठिताः ।
कथंचिन्नावमन्तव्या गावो लोकस्य मातरः ।
तस्मादेव गवां दानं विशिष्टमिति कथ्यते ।
गोषु पूजा च भक्तिश्च नरस्यायुष्यमावहेत् ।
अतः परं प्रवक्ष्यामि भूमिदानं महाफलम् ।
भूमिदानसमं दानं न किलास्तीति निश्चयः ।
गृहयुक्क्षेत्रयुग्वापि भूमिभागः प्रदीयते ।
सुखभोग्यं निराक्रोशं वास्तुपूर्वं प्रकल्प्य च ।
ग्रहीतारमलंकृत्य वस्त्रपुष्पानुलेपनैः ।
सभृत्यं सपरीवारं भोजयित्वा यथेष्टतः ।
यो दद्याद्दक्षिणाकाले त्रिरद्भिर्गृह्यतामिति ।
एवं भूम्यां प्रदत्तायां श्रद्धया वीतमत्सरैः ।
यावत्तिष्ठति सा भूमिस्तावत्तस्य फलं विदुः ।
भूमिदः स्वर्गमारुह्य रमते शाश्वतीः समाः ।
अचला ह्यक्षया भूमिः सर्वान्कामान्दुधुक्षति ।

— (L. 3264) $G_{1.3}$ सुभृतां (for नि°). $D_{10}$ $T_3$ G सुशीलां (for अरोगां). — (L. 3266) $T_1$ $M_4$ तस्यां (for तस्यास्). — (L. 3269) $D_{10}$ $T_3$ G सकांस्यदोहां (for कांस्योप°). — $T_1$ om. lines 3272–3275. — (L. 3273) $G_{1.3}$ सोमकाश् (for सोद°). — (L. 3277) $T_1$ विरुजां (for नी°). — (L. 3279) $G_{1.3}$ गां; $G_4$ तां (for गाः). — (L. 3280) $G_{1.3}$ धेनुं; $M_{1-3}$ श्वेतां (for दद्याद्). $D_{10}$ om. (hapl.) from the post. half up to the prior half of line 3282. $G_{1.3}$ दद्याद् (for धेनुं). M दद्यात् (for विप्रे). — (L. 3281) T G $M_4$ सुवृत्तां (for सुवस्त्रां). $T_{1.3}$ $G_{1.3.4}$ -संछन्नां; $T_2$ -संपन्नां (for -संदानां). — $M_4$ om. (hapl.) lines 3282–3283. — (L. 3282) $T_3$ G दद्यात् (for धेनुं). $D_{10}$ $T_3$ G धेनुं (for दद्यात्). — (L. 3283) $T_{2.3}$ $G_{1.3.4}$ -संछन्नां (for -संदानां). $T_1$ कृष्णवस्त्रेण संछन्नां (for the prior half). — $M_4$ om. (hapl.) lines 3286–3289. — (L. 3287) $D_{10}$ $T_1$ $G_{3.4}$ -संछन्नां; $T_{2.3}$ $G_{1.2}$ -संपन्नां (for -संदानां). $D_{10}$ reads from the post. half up to the prior of line 3289 twice. — (L. 3288) $T_1$ वात- (for वायु-). — (L. 3289) $D_{10}$ (both times) $T_{2.3}$ $G_{1.2}$ -संपन्नां; $T_1$ $G_{3.4}$ -संछन्नां (for -संदानां). — (L. 3292) $T_1$ वृषभं (for ऋ°). — (L. 3293) $T_3$ ऐश्वर्याणि (for °र्यम्). — (L. 3297) $D_{10}$ अभुक्त्वा (for अकृत्वा). $G_{1.3}$ वृत्तं (for व्रतं). $G_{1.3}$ $M_4$ -कालिकं (for -कामिकम्). — (L. 3298) $G_2$ महत् (for वदेत्). — $T_1$ om. line 3303. — (L. 3303) $D_{10}$ $G_{2-4}$ नरस्यायुष्यतां वहेत्; $T_2$ °तां महत्; $T_3$ °तां व्रजेत्; $G_1$ °तां भवेत् (for the post. half). — (L. 3304) $T_1$ महत्फलं; $G_2$ फलं महत् (for महाफलम्). — (L. 3305) $T_1$ भूमिदानात्परं दानं (for the prior half). $D_{10}$ T $G_{1.3.4}$ लोके नास्ति; $G_2$ नास्ति लोके (for न किलास्ति). — After line 3306, $M_{1-3}$ ins.:

उभयासंयुतं दानं शून्यं तत्र विशिष्यते ।

— $T_1$ om. line 3307. — (L. 3307) $D_{10}$ $T_{2.3}$ G $M_4$ -भोगं (for -भोग्यं). — (L. 3309) $G_{1.3}$ सापत्यं (for सभृत्यं). — (L. 3310) $D_{10}$ T G दक्षिणां; $M_4$ °णे (for दक्षिणा-). $T_2$ भूरद्भिर् (for त्रि°). $G_{1.3}$ भूस्त्रिरद्भिः प्रगृह्यतां (for the post. half). — $T_1$ om. 3314. — (L.

यच्च कुरुते पापं पुरुषो वृत्तिकर्शितः ।
अपि गोकर्णमात्रेण भूमिदानेन मुच्यते ।
सुवर्णरजतं वस्त्रं मणिमुक्तावसूनि च ।
सर्वमेतन्महाप्राज्ञे भूमिदाने प्रतिष्ठितम् ।
भर्तुर्निःश्रेयसे युक्तास्त्यक्तात्मानो रणे हताः ।
ब्रह्मलोकाय संसिद्धा नातिक्रामन्ति भूमिदम् ।
हलकृष्टां महीं दद्याद्यः सबीजफलान्विताम् ।
सकूपशरणां वापि सा भवेत्सर्वकामदा ।
निष्पन्नसस्यां पृथिवीं यो ददाति द्विजन्मनाम् ।
विमुक्तः कलुषैः सर्वैः शक्रलोकं स गच्छति ।
यथा जनित्री क्षीरेण स्वपुत्रमभिवर्धयेत् ।
एवं सर्वफलैर्भूमिर्दातारमभिवर्धयेत् ।
ब्राह्मणं वृत्तसंपन्नमाहिताग्निं शुचिव्रतम् ।
ग्राहयित्वा निजां भूमिं न याति यमसादनम् ।
यथा चन्द्रमसो वृद्धिरहन्यहनि दृश्यते ।
तथा भूमिकृतं दानं सस्ये सस्ये विवर्धते ।
यथा बीजानि रोहन्ति प्रकीर्णानि महीतले ।
तथा कामाः प्ररोहन्ति भूमिदानगुणार्जिताः ।
पितरः पितृलोकस्था देवताश्च दिवि स्थिताः ।
संतर्पयन्ति भोगैस्तं यो ददाति वसुंधराम् ।
दीर्घायुष्ट्वमरोगत्वं स्फीतां च श्रियमुत्तमाम् ।
परत्र लभते मर्त्यः संप्रदाय वसुंधराम् ।
एतत्सर्वं मयोद्दिष्टं भूमिदानस्य यत्फलम् ।
श्रद्दधानैर्नरैर्नित्यं श्राव्यमेतत्सनातनम् ।
अतः परं प्रवक्ष्यामि कन्यादानं यथाविधि ।
कन्या देया तथा देवि परेषामात्मनोऽपि वा ।
कन्यां शुद्धव्रताचारां कुलरूपसमन्विताम् ।
यस्मै दित्सति पात्राय तेनापि भृशकामिताम् ।
प्रथमं तत्समाकल्प्य बन्धुभिः कृतनिश्चयम् ।
कारयित्वा गृहं पूर्वं दासीदासपरिच्छदैः ।
गृहोपकरणं चैव शुद्धधान्येन संयुतम् ।
दारार्थिने तदर्हाय कन्यां तां समलंकृताम् ।
सविवाहं यथान्यायं प्रयच्छेदग्निसाक्षिकम् ।
वृत्त्यायतिं तथा कृत्वा सद्गृहे तौ निवेशयेत् ।
एवं कृत्वा वधूदानं तस्य दानस्य गौरवात् ।
प्रेत्यभावे महीयेत स्वर्गलोके यथासुखम् ।
पुनर्जातौ च सौभाग्यं कुलवृद्धिं तथाप्नुयात् ।
विद्यादानं तथा देवि पात्रभूताय वै ददत् ।
प्रेत्यभावे लभेन्मर्त्यो मेधां बुद्धिं धृतिं स्मृतिम् ।
अनुरूपाय शिष्याय स्वां विद्यां यः प्रयच्छति ।
यथोक्तमस्य दानस्य फलमानन्त्यमुच्यते ।
दापनं त्वथ विद्यानां दरिद्रेभ्योऽर्थवेतनैः ।
स्वयंदत्तेन तुल्यं स्यादिति विद्धि शुभानने ।
एवं ते कथितान्येव महादानानि भामिनि ।
त्वत्प्रियार्थं महादेवि भूयः श्रोतुं किमिच्छसि ।

Colophon.

3315) D10 T2.3 G M यत्किंचित् (for यच्च). — (L. 3316) G1.3 गोचर्म- (for गोकर्ण-). — (L. 3318) D10 T2.3 G महाभागे (for °प्राज्ञे). — (L. 3322) M1 वापीं (for वापि). — (L. 3324) M1 कल्मषैः (for कलुषैः). — T1 om. lines 3325–3326. — (L. 3327) T1 प्रशांतं नियतव्रतं (for the post. half). — T1 om. (hapl.) line 3330. — (L. 3330) D10 T2.3 G भूमेः (for भूमि-). G2 विवर्धनं (for °र्धते). — (L. 3332) G2 -गुणान्विताः (for °र्जिताः). T1 भूमिदस्य गुणान्विते (for the post. half). — M3 reads line 3333 twice. — (L. 3335) T1 G1.3 M1 दीर्घायुष्यम् (for °ष्ट्वम्). D10 T2.3 G2.4 दीर्घायुष्यं वरांगत्वं (for the prior half). — (L. 3340) D10 T G महादेवि (for तथा देवि). — After line 3341, T1 ins.:

यो ददाति सुपात्राय ब्रह्मलोकं स गच्छति ।

— T1 om. (hapl.) line 3342. — (L. 3343) T1 समालोच्य (for °कल्प्य). — (L. 3344) T3 ग्राहयित्वा (for कार°). — (L. 3345) D10 T1.2 G1.3.4 गृहोपकरणैश्चैव (for the prior half). D10 T2.3 G M4 पशुधान्येन संयुतां; T1 पशुधान्यैः समन्वितां (for the post. half). — (L. 3346) D10 T2.3 G M1 तदर्थिने (for दारा°). T1 वराय च यथार्हाय (for the prior half). — T1 om. line 3348. — (L. 3348) T2 प्रत्यायतिं; T3 वृत्ता° (for वृत्त्या°). — For line 3348, M1 subst.:

वृत्त्यायतिं तां कृत्वा सन्गृहे तेन निवेशितः ।

— (L. 3351) T1.2 G1.3.4 जातश् (for जातौ). — After line 3351, T1 ins.:

अतः परं प्रवक्ष्यामि विद्यादानमनुत्तमम् ।

— T1 reads lines 3352–3353 after line 3358. — (L. 3354) M4 अनुकूलाय (for °रूपाय). D10 T2.3 G2.4 यश्च विद्यां; G1.3 यस्य विद्यां (for स्वां विद्यां यः). — (L. 3355) D10 T2.3 G1.3.4 यथोक्तस्य प्रदानस्य; G2 °क्तस्यैव दानस्य (for the prior half). D10 T G अश्नुते (for उच्यते). — (L. 3356) T1 दापयित्वा (for दापनं तु). — (L. 3358) D10 T2.3 T1 तु शोभने (for ऽर्थवेतनैः). — (L. 3359) G मानिनि; T1 शोभने (for भामिनि). D10 T2 G मया (for महा-). T1 G1.3 किं भूयः श्रोतुमिच्छसि (for the post. half). — Colophon. — *Adhy. name:* D10 उमामहेश्वरसंवादे गोभूहिरण्यकन्यासरस्वतीदाननिरूपणं; T2 G2 M उमामहेश्वरसंवादः; T3 उमामहेश्वरसंवादे दानविधिः. — *Adhy. no.:* D10 T2 G2.4 218; T1 211;

उमा ।
भगवन्देवदेवेश कथं देयं तिलान्वितम् ।
तस्य तस्य फलं ब्रूहि दत्तस्य च कृतस्य च ।
महेश्वरः ।
तिलकल्पविधिं देवि त्वं मे शृणु समाहिता ।
सगुडैरसगुडैर्वा तिला देया विशेषतः ।
तिलाः पवित्राः पापघ्नाः सुपुण्या इति संस्मृताः ।
न्यायतस्तु तिलाञ्शुद्धान्संभृत्याथ स्वशक्तितः ।
तिलराशिं पुनः कुर्यात्पर्वताभं सरत्नकम् ।
महान्तं यदि वा स्तोकं नानाद्रव्यसमायुतम् ।
सुवर्णरजताभ्यां च मणिमुक्ताप्रवालकैः ।
अलंकृत्य यथायोगं सपताकं सवेदिकम् ।
सभूषणं सवस्त्रं च शयनासनसंयुतम् ।
प्रायशः कौमुदीमासे पौर्णमास्यां विशेषतः ।
भोजयित्वा च विधिवद्ब्राह्मणानर्हतो बहून् ।
स्वयं कृत्वोपवासं च वृत्तशौचसमन्वितः ।
दद्यात्प्रदक्षिणीकृत्य तिलराशिं सदक्षिणम् ।
एकस्य वा बहूनां वा दातव्यं भूतिमिच्छता ।
तस्य दानफलं देवि अग्निष्टोमेन संमितम् ।
केवलं वा तिलैरेव भूमौ कृत्वा गवाकृतिम् ।
सरत्नकं सवस्त्रं च पुंसा गोदानकाङ्क्षिणा ।
तदर्हाय प्रदातव्यं तस्य गोदानवत्फलम् ।
शरावांस्तिलसंपूर्णान्सहिरण्यान्सचम्पकान् ।
जलैर्ददद्ब्राह्मणाय स पुण्यफलभाग्भवेत् ।
एवं तिलमयं देयं नरेण हितमिच्छता ।
नानादानफलं भूयः शृणु देवि समाहिता ।
बलमायुष्यमारोग्यमन्नदानाल्लभेन्नरः ।
पानीयदस्तु सौभाग्यं रसज्ञानं लभेन्नरः ।
वस्त्रदानाद्वपुःशोभामलंकारं लभेन्नरः ।
दीपदो बुद्धिवैमल्यं द्युतिं शोभां लभेत्पुनः ।
राजपीडाविमोक्षं तच्छत्रदो लभते फलम् ।
दासीदासप्रदानात्तु भवेत्कर्मान्तभाङ्नरः ।
दासीदासं च विविधं लभेत्प्रेत्य गुणान्वितम् ।
यानानि वाहनं चैव तदर्हाय ददन्नरः ।
पादरोगपरिक्लेशान्मुक्तश्चोत्साहवान्भवेत् ।
विचित्रं रमणीयं च लभते यानवाहनम् ।
प्रतिश्रयप्रदानाच्च तदर्हाय तदिच्छते ।
वर्षकाले तु रात्रौ च लभेत्पक्षवलं शुभम् ।
सेतुकूपतटाकानां कर्ता तु लभते नरः ।
दीर्घायुष्यं च सौभाग्यं तथा प्रेत्यायतीं शुभाम् ।
वृक्षपङ्क्तिकरो यस्तु च्छायापुष्पफलप्रदः ।
प्रेत्यभावे लभेत्पुण्यमभिगम्यो भवेन्नरः ।

$T_3$ 217; $G_{1,3}$ $M_1$ 212; $M_{2,3}$ 213; $M_4$ 210. — (L. 3361) $T_1$ दान- (for the second तस्य). $T_1$ श्रोतुं कौतूहलं मम (for the post. half). — $T_1$ महेशः (for °श्वरः). — $T_1$ om. line 3362. — (L. 3362) $D_{10}$ $T_{2,3}$ G तन् (for त्वं). $G_2$ om. from the post. half of line 3363 up to the prior half of line 3366 — (L. 3364) $T_1$ च (for सं-). — $T_1$ om. line 3365. — (L. 3365) $D_{10}$ $T_3$ $G_{1,3,4}$ संहृत्य; $T_2$ संगृह्य (for संभृत्य). — (L. 3366) $T_1$ प्रकुर्वीत; $G_{1,3}$ पुरस्कुर्यात् (for पुनः कु°). $T_2$ सुरत्नकं; $T_3$ सरत्निकं (for सरत्नकम्). — (L. 3067) $D_{10}$ T G -समन्वितं (for -समायुतम्). — (L. 3370) $T_{2,3}$ G -संमितं (for -संयुतम्). — $T_1$ om. lines 3371–3373. — (L. 3372) M तदर्हान्ब्राह्मणान्बहून् (for the post. half). — (L. 3373) $D_{10}$ $T_{2,3}$ G $M_4$ कृतोपवासश्च (for कृत्वोपवासं). $T_2$ व्रत- (for वृत्त-). — (L. 3374) $G_{1,3}$ तस्मात् (for दद्यात्). — (L. 3375) $D_{10}$ $T_{2,3}$ G [अ]पि (for the first वा). — (L. 3376) T G $M_{1-3}$ संयुतं (for संमितम्). — (L. 3377) $G_{1,3,4}$ भूमिं (for भूमौ). — $T_1$ om. line 3378. — (L. 3378) $D_{10}$ $T_{2,3}$ G सवस्त्रकं सरत्नं ($G_2$ °कं) च (for the prior half). — (L. 3379) $D_{10}$ $T_{1,2}$ G M गोदानतः (for °वत्). — (L. 3380) $G_{1,3}$ सवस्त्रकान् (for सचम्प°). — (L. 3381) $D_{10}$ $T_{2,3}$ G नृपो (for जलैर्). $G_{1,3,4}$ दद्याद् (for ददद्). $T_1$ यो दद्याद्विप्रवर्येभ्यः (for the prior half). — (L. 3383) $T_3$ देवि (for भूयः). $T_3$ भूयः (for देवि). — (L. 3384) $G_1$ फलम् (for बलम्). — (L. 3385) $T_1$ शुद्धं (for रस-). — (L. 3386) $T_1$ आयुर्वृद्धिं (for अलंकारं). — $D_{10}$ om. (hapl.) line 3387. — (L. 3387) T G -वैशद्यं (for -वैमल्यं). T $G_{2-4}$ नरः (for पुनः). — $T_3$ om. (hapl.) lines 3388–3391. — (L. 3388) $D_{10}$ $T_{1,2}$ G $M_4$ तु (for तच्). $G_{1-3}$ छत्रतो (for °दो). — $T_1$ om. (hapl.) line 3389. — (L. 3391) $T_1$ दासीदासप्रजा नरः (for the post. half). — $T_1$ om. line 3392. — (L. 3392) $D_{10}$ $T_2$ G $M_4$ मुक्तश्चासनवाहवान् (for the post. half). — (L. 3393) $T_1$ छत्रोपानहदानाच्च (for the prior half). — (L. 3394) $D_{10}$ $T_{2,3}$ G -प्रदानं (for °नाच्). $T_1$ लभते चोत्तमं गृहं (for the post. half). — $T_1$ om. line 3395. — (L. 3395) $T_3$ G वर्षा- (for वर्ष-). $T_2$ $G_{1,3}$ वा (for च). — (L. 3397) $D_{10}$ $T_{2,3}$ G $M_{3,4}$ दीर्घायुष्यं; $T_1$ दीर्घमायुश्च (for दीर्घायुष्यं). $D_{10}$ T G प्रेत्य गतिं (for प्रेत्यायतीं). — $T_1$ om. lines 3398–3405. — (L. 3398) $D_{10}$ $T_{2,3}$ G $M_4$ -संरोपको (for -पङ्क्तिकरो). — (L. 3399) $G_{1,3,4}$ वहेत् (for लभेत्). $G_{1,3}$ M नरैः (for नरः). — (L.

यस्तु संक्रमकृल्लोके नदीषु जलतारिणाम् ।
लभेत्पुण्यफलं प्रेत्य व्यसनेभ्यो विमोक्षणम् ।
मार्गकृत्सततं मर्त्यो भवेत्संतानवान्पुनः ।
कायदोषविमुक्तस्तु तीर्थकृत्सततं भवेत् ।
औषधानां प्रदाता च सततं कृपयान्वितः ।
भवेद्व्याधिविहीनश्च दीर्घायुश्च विशेषतः ।
अनाथान्पोषयेद्यस्तु कृपणान्धकपङ्गुकान् ।
स तु पुण्यफलं प्रेत्य लभते कृच्छ्रमोक्षणम् ।
देवगोष्ठान्सभाः शाला भिक्षूणां च प्रतिश्रयम् ।
यः कुर्याल्लभते नित्यं नरः प्रेत्य फलं शुभम् ।
प्रासादवासं विविधं पक्षशोभां लभेन्नरः ।
विविधं विविधाकारं भक्ष्यभोज्यगुणान्वितम् ।
रम्यं सदैव गोवाटं यः कुर्याल्लभते नरः ।
प्रेत्यभावे शुभां जातिं व्याधिमोक्षं तथैव च ।
एवं नानाविधं द्रव्यं दाता कर्ता लभेत्फलम् ।

उमा ।

कृतं दत्तं यथा यावत्तस्य यल्लभते फलम् ।
एतन्मे वद देवेश तत्र कौतूहलं महत् ।

महेश्वरः ।

प्रेत्यभावे शृणु फलं दत्तस्य च कृतस्य च ।
दानं वा षड्गुणयुतं तदर्हाय यथाविधि ।
यथाविभवतो दानं दातव्यमिति मानवैः ।
बुद्धिमायुष्यमारोग्यं कुलं भाग्यं तथागमम् ।
रूपेण सप्तधा भूत्वा मानुष्यं फलति ध्रुवम् ।
इदं दत्तमिदं मे स्यादित्येवं फलकाङ्क्षया ।
यद्दत्तं तत्तदेव स्यान्न तु किंचन लभ्यते ।
ध्रुवं देव्युत्तमे दाने मध्यमे त्वधमे फलम् ।

Colophon.

उमा ।

भगवन्देवदेवेश विशिष्टं यज्ञमुच्यते ।
लौकिकं वैदिकं चैव तन्मे शंसितुमर्हसि ।

महेश्वरः ।

देवतानां च संपूजा यज्ञेष्वेव समाहिता ।
यज्ञा वेदेष्वधीनाश्च वेदा ब्राह्मणसंयुताः ।
इदं तु सकलं द्रव्यं दिवि वा भुवि वा प्रिये ।
यज्ञार्थं विद्धि तत्सृष्टं लोकानां हितकाम्यया ।
एवं विज्ञाय तत्कर्ता सदारः सततं द्विजः ।
प्रेत्यभावे लभेल्लोकान्ब्रह्मकर्मसमाधिना ।
ब्राह्मणेष्वपि तद्ब्रह्म नित्यं देवि समाहितम् ।
तस्माद्विप्रैर्यथाशास्त्रं विधिदृष्टेन कर्मणा ।
यज्ञकर्म कृतं सर्वं देवता अभितर्पयेत् ।
ब्राह्मणाः क्षत्रियाश्चैव यज्ञार्हाः प्रायशः स्मृताः ।
अग्निष्टोमादिभिर्यज्ञैर्वेदेषु परिकल्पितैः ।
सुशुद्धैर्यजमानैश्च ऋत्विग्भिश्च यथाविधि ।
शुद्धैर्द्रव्योपकरणैर्यष्टव्यमिति निश्चयः ।
तथा कृतेषु यज्ञेषु देवानां तोषणं भवेत् ।

---

3400 ) D10 T2.3 G -हारिणां ( for -ता° ). — ( L. 3401 ) T2 विमोक्षितः ( for °क्षणम् ). — ( L. 3402 ) G1.3.4 M4 नरः ( for पुनः ). — ( L. 3404 ) D10 T2.3 M1.4 प्रदानात्तु ( for °ता च ). — ( L. 3407 ) T1 प्राप्य ( for प्रेत्य ). — ( L. 3410 ) D10 T G पुनः ( for नरः ). — T1 om. line 3411. — ( L. 3414 ) D10 T2.3 G दान- ; T1 दानात् ( for दाता ). — ( L. 3415 ) G कथं ( for कृतं ). G4 तावत् ( for या° ). D10 T G M4 तल् ( for यल् ). — ( L. 3416 ) D10 T3 G2.4 देव- ; T2 शंस ( for वद ). T2 G4 हि मे ( for महत् ). — T1 महेशः ( for °श्वरः ). — ( L. 3418 ) D10 T G दानं षड्गुणयुक्तं तु ( T2 G4 °संयुक्तं ) ( for the prior half ). — ( L. 3420 ) D10 T2 बलं ( for कुलं ). D10 यथागमं ; T2 तथाकृतं ( for °गमम् ). — ( L. 3421 ) T1 चोत्तमो ( for सप्तधा ). T2 M4 मानुष्ये ; G1.3 M1-3 मनुष्ये ( for मानुष्यं ). T1 लभते ( for फलति ). — ( L. 3422 ) D10 T2.3 G देयम् ( for मे स्याद् ). — ( L. 3423 ) G4 तु दत्तं ( for दत्तं तत् ). T2 यन्न दत्तं सदा येन ( for the prior half ). T2 तत् ( for तु ). — ( L. 3424 ) D10 G2.4 तेपि ( for देवि ). T2 [ऽ]प्युक्तं ( for दाने ). — Colophon. — *Adhy. name* : D10 T2.3 M4 उमामहेश्वरसंवादः ; M1-3 उमामहेश्वरसंवादे नानादानफलोपदेशः. — *Adhy. no.* : D10 T2 G2.4 219 ; T1 212 ; T3 218 ; G1.3 M1 213 ; M2.3 214 ; M4 211. — T1 महेशः ( for °श्वरः ). — ( L. 3427 ) D10 T1.2 G1.3.4 पूजाया ( G1.3.4 °यां ) ; G2 पूजार्थ ( for संपूजा ). T1 यज्ञ इत्युच्यते बुधैः ( for the post. half ). — G2 om. lines 3428–3432. — ( L. 3428 ) D10 T G1.3.4 M4 [अ]धीताश्च ( for °नाश्च ). — ( L. 3432 ) T3 भवेल् ( for लभेल् ). — ( L. 3433 ) D10 T2.3 G [ए]व ( for [अ]पि ). G3 ब्रह्मन् ( for ब्रह्म ). T1 ब्राह्मणेनापि तत्कर्म ; M4 °णेष्वेव तान्ब्रह्मन् ( for the prior half ). — ( L. 3436 ) D10 T3 G यज्ञार्थं ( for °र्हाः ). T1 om. from the post. half of line 3437 up to the prior half of line 3438. — ( L. 3438 ) G3.4 शुद्धै-ऋत्विग्भ्यश्च ( for °ग्भिश्च ). — ( L. 3439 ) G3.4 M4 शुद्धै-र्यज्ञोपकरणैर् ( for the prior half ). — ( L. 3440 ) G4 पोषणं ( for तो° ). — M3 om. lines 3441–3442. — ( L. 3441 ) D10 T3 G2.4 सर्वदेवेषु ; G1.3 देवि देवेषु ; M1.2 देवसत्त्वेषु ( for °संघेषु ). T2 G1.3 M1.2 यष्टा ( for यज्वा ). — G3 reads line 3442 twice. — G1 ins. after line 3442 : G3 after the first occurrence of line

तुष्टेषु देवसंघेषु यज्वा यज्ञफलं लभेत् ।
देवाः संतोषिता यज्ञैर्लोकान्संवर्धयन्त्युत ।
उभयोर्लोकयोर्भूतिर्देवि यज्ञैः प्रदृश्यते ।
तस्माद्यज्वा दिवं गत्वा अमरैः सह मोदते ।
नास्ति यज्ञसमं दानं नास्ति यज्ञसमो निधिः ।
सर्वधर्मसमुद्देशो देवि यज्ञे समाहितः ।
एषा यज्ञकृता पूजा लौकिकीमपरां शृणु ।
देवसत्कारमुद्दिश्य क्रियन्ते लौकिकोत्सवाः ।
देवगोष्ठान्हि संस्कृत्य चोत्सवं यः करोति वै ।
यागान्देवोपहारांश्च शुचिर्भूत्वा यथाविधि ।
देवान्संतोषयित्वा स देवि धर्ममवाप्नुयात् ।
गन्धमाल्यैश्च विविधैः परमान्नेन धूपनैः ।
बहुभिः स्तुतिभिश्चैव स्तुवन्तः प्रयता नराः ।
नृत्तैर्वाद्यैश्च गान्धर्वैरन्यैर्दृष्टिविलोभनैः ।
देवसत्कारमुद्दिश्य कुर्वते ये नरा भुवि ।
तेषां भक्तिकृतेनैव सत्कारेणाभिपूजिताः ।
तथैव तोषं संयान्ति देवि देवास्त्रिविष्टपे ।
मानुषैरपरैर्वापि शुचिभिस्तत्परायणैः ।
ब्रह्मचर्यपरैरेतत्कृतं धर्मफलं भवेत् ।
केवलैः स्तुतिभिर्देवि गन्धमाल्यसमायुतैः ।
प्रयतैः शुद्धगात्रैस्तु शुद्धदेशे सुपूजिताः ।
संतोषं यान्ति वै देवा भक्तैः संपूजितास्तथा ।
देवान्संतोषयित्वैव देवि धर्ममवाप्नुयात् ।

उमा ।

त्रिविष्टपस्था वै देवा भूमौ मानुषचेष्टितम् ।
कथं ज्ञास्यन्ति विविधं तन्मे शंसितुमर्हसि ।

महेश्वरः ।

तदहं ते प्रवक्ष्यामि यथा तैर्विद्यते प्रिये ।
प्राणिनां तु शरीरेषु अन्तरात्मा व्यवस्थितः ।
आत्मानं परमं देवमिति विद्धि शुभेक्षणे ।
आत्मा मनोव्यवस्थानात्सर्वं वेत्ति शुभाशुभम् ।
आत्मैव देवास्तद्विद्युरन्यग्रमनसः कृतम् ।
सतां मनोव्यवस्थानाच्छुभं भवति वै नृणाम् ।
तस्माद्देवाभिसंपूजा पितृपूजा तथैव च ।
यज्ञाश्च धर्मकार्याणि गुरुपूजाश्च शोभने ।
शुद्धगात्रैर्वृत्तयुक्तैस्तन्मयैस्तत्परायणैः ।
एवं व्यवस्थितैर्नित्यं कर्तव्यमिति निश्चयः ।
एवं कृत्वा शुभाकाङ्क्षी परत्रेह च मोदते ।

---

3442 :

आयुष्कामो द्विजो देवि भूतिकामोऽथ वा पुनः ।
सर्वदा धारयेद्ब्रह्म मोक्षकामी च यो नरः ।

[ (L. 2) $G_1$ ध्यान- (for मोक्ष-). ]

— (L. 3443) $D_{10}$ $T_{2.3}$ $G_{2.4}$ प्रीतिर् (for भूतिर्). $D_{10}$ $T_{2.3}$ $G_{1.3.4}$ यज्ञे (for यज्ञैः). $T_1$ देवि यज्ञे प्रतिष्ठिता (for the post. half). — $T_1$ om. lines 3444-3446. — (L. 3444) $G_{1.3}$ यागाद् (for यज्वा). — (L. 3445) $T_3$ $G_{1.3}$ $M_4$ विधिः (for निधिः). — (L. 3448) $D_{10}$ $T_{2.3}$ क्रियते लौकिकोत्सवः (for the post. half). — (L. 3449) $D_{10}$ $T_{2.3}$ $G_{2.4}$ -गोष्ठेषि ; $M_2$ (*inf. lin.* as above).$_4$ -गोष्ठानि (for -गोष्ठान्हि). $M_1$ संस्तुत्य (for संस्कृत्य). $T_1$ देवायतनमुद्दिश्य ; $G_{1.3}$ देवदेहांश्च संस्थाप्य (for the prior half). $G_{1.3}$ हि (for च) $G_3$ यः ; $G_4$ च (for वै). — (L. 3450) $T_1$ कुर्वन् ; $T_3$ $M_{1-3}$ योगान् ; $G_{1.3}$ यागं (for यागान्). — (L 3451) $T_1$ [अ]पि ; $G_2$ [अ]थ (for स). $T_2$ देवधर्मं समाप्नुयात् (for the post. half). — (L. 3453) $D_{10}$ $T_3$ $G$ बह्वीभिः (for बहुभिः). $D_{10}$ $T_{2.3}$ $G$ स्तुवद्भिः प्रयतैर्नरैः ; $T_1$ लौकिकैश्च तथापरैः (for the post. half). — (L. 3455) $T_1$ नराः कुर्वन्ति ये भुवि (for the post. half). — (L. 3456) $D_{10}$ $T$ $G$ [ए]व (for [अ]भि-). $T_1$ -पूजया (for -पूजिताः). — $T_1$ om. line 3457. — (L. 3457) $D_{10}$ $T_{2.3}$ $G$ तेन (for तथा). $T_3$ दिवि ; $G_1$ देव- (for देवि). — (L. 3458) $T_1$ च (for वा). $D_{10}$ $T_{2.3}$ $G$ मानुषैश्चो($G_{1.3}$ °रु)पका($T_3$ $G_{1.3}$ °चा)रैर्वा (for the prior half). $T_1$ स्तुतिभिस (for शुचि°). — After line 3458, $T_1$ ins. :

देवास्तोषं यथा यान्ति ब्रह्मलोकं ददत्यपि ।

— $T_1$ om. line 3459. — (L. 3459) $D_{10}$ $T_3$ $G$ $M_4$ लभेत (for भवेत्). — (L. 3460) $D_{10}$ $T_{2.3}$ $G_2$ -समाहितैः ; $T_1$ -समन्वितैः (for -समायुतैः). — (L. 3461) $T_3$ सुपूजितैः (for °जिताः). — (L. 3462) $G_4$ प्राप्य (for यान्ति). $D_{10}$ $T_{2.3}$ $G$ ते (for वै). $T_1$ देवि (for देवा). $T_3$ सदा (for तथा). — (L. 3464) $D_{10}$ $T_{2.3}$ $G$ भूमौ देवा ($T_3$ °व) (by transp). — (L. 3465) $D_{10}$ $T_{2.3}$ $G$ विधिवत् ; $T_1$ वै देव (for विविधं). — $T_1$ महेशः (for °श्वरः). — $T_1$ om. line 3466. — (L. 3466) $D_{10}$ ते ; $G_2$ वै (for तैर्). $T_3$ ज्ञायते (for विद्यते). — (L. 3467) $T_1$ शरीरिसिन् (for °रेषु). — (L. 3468) $T_1$ तमेव परमात्मानम् (for the prior half). — (L. 3470) $G_4$ ते (for तद्). $T_1$ देवताश्च शरीरस्था (for the prior half). $D_{10}$ $T_{1.3}$ $G$ -मनसा (for °सः). — After line 3470, $T_1$ ins :

ज्ञास्यन्ति सकलं धर्ममिति विद्धि शुभेक्षणे ।

— (L. 3472) $D_{10}$ $T_2$ $G_{1.3.4}$ -संपूज्या (for °जा). $D_{10}$ $T$ $G$ ब्राह्मणाना (for पितृपूजा). — After line 3472, $T_1$ ins. :

ब्राह्मणे पूजिते चैव प्रीताः स्युः सर्वदेवताः ।

अन्यथा मन आवेश्य कृतं न फलति प्रिये ।
ऋतेऽपि तु मनो देवि अशुभं फलति ध्रुवम् ।
Colophon.
उमा ।
पितृमेधः कथं देव तन्मे शंसितुमर्हसि ।
सर्वेषां पितरः पूज्याः सर्वसंपत्प्रदायिनः ।
महेश्वरः ।
पितृमेधं प्रवक्ष्यामि यथावत्तन्मनाः शृणु ।
देशकालौ विधानं च तत्क्रियायाः शुभाशुभम् ।
लोकेषु पितरः पूज्या देवतानां च देवताः ।
शुचयो निर्मलाः पुण्या दक्षिणां दिशमाश्रिताः ।
यथा वृष्टिं प्रतीक्षन्ते भूमिष्ठाः सर्वजन्तवः ।
पितरश्च तथा लोके पितृमेधं शुभेक्षणे ।
तस्य देशाः कुरुक्षेत्रं गया गङ्गा सरस्वती ।
प्रभासं पुष्करं चेति तेषु दत्तं महाफलम् ।
तीर्थानि सरितः पुण्या विविक्तानि वनानि च ।
नदीनां पुलिनानीति देशाः श्राद्धस्य पूजिताः ।
मघाप्रौष्ठपदौ मासौ श्राद्धकर्मणि पूजितौ ।
पक्षयोः कृष्णपक्षश्च पूर्वपक्षात्प्रशस्यते ।
अमावास्यां त्रयोदश्यां नवम्यां प्रतिपत्सु च ।
तिथिष्वेतासु तुष्यन्ति दत्तेनेह पितामहाः ।
पूर्वाह्णे शुक्लपक्षे वा रात्रौ जन्मदिनेषु वा ।
युग्मेष्वहःसु च श्राद्धं न च कुर्वीत पण्डितः ।
एष कालो मया प्रोक्तः पितृमेधस्य पूजितः ।
यस्मिन्वा ब्राह्मणं पात्रं पश्येत्कालः स च स्मृतः ।
अपाङ्क्त्या द्विजा वर्ज्या ग्राह्यास्ते पङ्क्तिपावनाः ।
पूजयेद्यदि पापिष्ठाञ्श्राद्धेषु नरकं व्रजेत् ।
वृत्तश्रुतकुलोपेतान्सकलव्रान्गुणान्वितान् ।
तदर्हान्श्रोत्रियान्विद्धि ब्राह्मणाननुजः शुभे ।
एतान्निमन्त्रयेद्विद्वान्पूर्वेद्युः प्रातरेव वा ।
तत्र श्राद्धक्रियां पश्चादारभेत यथाविधि ।
त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः ।
त्रीणि चात्र प्रशंसन्ति शौचमक्रोधमत्वराम् ।
कुतपस्य च लोमानि कुशा दर्भास्तिला मधु ।
नीलशाकं गजच्छाया पवित्रं श्राद्धकर्मसु ।
तिलानवकिरेत्तत्र नानावर्णान्समन्ततः ।
अशुद्धं पितृयज्ञेषु तिलैः शुध्यति शोभने ।
नीलकाषायवस्त्रं च भिन्नकर्णं नवव्रणम् ।
हीनाङ्गमशुचिं वापि वर्जयेत्तत्र दूरतः ।
कुक्कुटांश्च वराहांश्च नग्नं क्लीबं रजस्वलाम् ।
आयसं त्रपु सीसं च श्राद्धकर्मणि वर्जयेत् ।
मांसैः प्रीणन्ति पितरो मुद्गमाषयवैरिह ।
शशरौरवमांसेन षण्मासं तृप्तिरिष्यते ।
संवत्सरं च गव्येन हविषा पायसेन च ।
वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ।
आनन्त्याय भवेद्दत्तं खड्गमांसं पितृक्षये ।
पायसं सतिलं क्षौद्रं खड्गमांसेन संमितम् ।
महाशफरिणो मत्स्याश्छागो वा सर्वलोहितः ।

— (L. 3473) $D_{10}$ $T_{2.3}$ $G_{1.2}$ M -पूजा (for -पूजाश्). — (L. 3474) $D_{10}$ $T_{2.3}$ G $M_4$ व्रतयुतैस् (for वृत्तयुक्तैस्). — (L. 3476) $T_1$ स (for [इ]ह). — (L. 3477) $G_4$ अंजसा (for अन्यथा). — (L. 3478) $T_3$ कर्म नो (for तु मनो). $D_{10}$ $T_2$ भवति (for फलति). — Colophon. — *Adhy. name* : $D_{10}$ $T_{2.3}$ $G_2$ M उमामहेश्वरसंवादः. — *Adhy. no.* : $D_{10}$ $T_2$ $G_{2.4}$ 220; $T_1$ 213; $T_3$ 219; $G_{1.3}$ $M_1$ 214; $M_{2.3}$ 215; $M_4$ 212. — After the ref., $T_3$ ins. :

देवदेव जगन्नाथ भगवन्प्राणनायक ।

— (L. 3480) $M_{1-3}$ सर्वे (for सर्व-). — $T_1$ महेशः (for °श्वरः). — (L. 3482) $T_3$ $M_3$ देशकालं; $G_{2.4}$ °काल- (for °कालौ). — $T_1$ om. (hapl.) line 3484. — (L. 3485) $M_4$ वृत्तं (for वृष्टिं). — (L. 3488) $G_2$ [ए]व (for [इ]ति). $T_{1.2}$ $G_{1.2.4}$ महत्फलं (for महाफलम्). — (L. 3490) $T_2$ वेदाः; $M_1$ देवाः; $M_2$ देवि (for देशाः). — (L. 2491) $D_{10}$ $T_{1.3}$ G $M_4$ माघ- (for मघा-). — (L. 3493) $G_2$ दशम्यां (for नवम्यां). — (L. 3495) $G_2$ -दिनेपि (for -दिनेषु). — $T_1$ om. lines 3499-3500. — (L. 3500) $D_{10}$ $T_{2.3}$ G भोजयेद् (for पू°). $M_4$ पापिष्ठं (for °ष्ठान्). — (L. 3501) $T_1$ -गुणोपेतान् (for -कुलो°). $T_1$ द्विजोत्तमान् (for गुणान्वितान्). — $T_1$ om. line 3502. — (L. 3504) $T_1$ श्राद्धविधिं (for क्रिया°). — (L. 3507) $D_{10}$ $T_2$ G कुतपं ($T_2$ °पः) खड्गपात्रं च; $T_1$ कालशाकं गजच्छाया (for the prior half). $T_3$ तिलं (for तिला). — (L. 3508) $D_{10}$ $T_2$ G काल- (for नील-). — For line 3508, $T_1$ subst. :

एतानि सुपवित्राणि श्राद्धकर्मसु शोभने ।

— (L. 3510) $G_{1.3}$ -यज्ञं च (for -यज्ञेषु). $D_{10}$ $G_4$ अशुद्धमपितृकं च; $T_2$ $G_2$ °मपवित्रं च; $T_3$ °द्धं पितृकश्चैव (for the prior half). — (L. 3511) $D_{10}$ $T_{2.3}$ G भिन्नवर्णं; $T_1$ हीनवर्णं (for भिन्नकर्णं). — (L. 3515) $T_1$ अपि (for इह). — (L. 3517) $T_2$ सर्पिषा (for हविषा). — (L. 3518) $D_{10}$ G वाध्राणसस्य. $T_1$ वार्ध्रा°; $T_3$ वाध्रायणस्य (for वार्ध्रीणसस्य). — (L. 3519) $T_1$ अनंताय भवत्तत्तु (for the prior half). — $T_1$ om. line 3521. — (L. 3521) $D_{10}$ $T_{2.3}$ G $M_4$ -शकलिनो (for -शफरिणो). — (L. 3522) $T_2$ $G_{1-3}$ कालशाकमितीरयेत्; $G_4$ कालस्य शाकमित्येनत् (for the prior half). $D_{10}$ $T_{2.3}$ G प्रकल्पितं (for प्रकीर्तितम्). — (L. 3523) $T_3$ परि- (for

कालशाककमित्येव तदानन्त्यं प्रकीर्तितम् ।
सापूपं सामिषं स्निग्धमाहारमुपकल्पयेत् ।
उपकल्प्य तदाहारं ब्राह्मणानर्चयेत्ततः ।
श्मश्रुकर्मशिरःस्नातान्समारोप्यासनं क्रमात् ।
सुगन्धमाल्याभरणैः स्रग्भिरेतान्विभूषयेत् ।
अलंकृतोपविष्टांस्तान्पिण्डावापं निवेदयेत् ।
ततः प्रस्तीर्य दर्भाणां प्रस्तरं दक्षिणामुखः ।
तत्समीपेऽग्निमिद्ध्वा च स्वधां च जुहुयात्ततः ।
समीपे त्वग्नीषोमाभ्यां पितृभ्यो जुहुयात्तथा ।
ततो दर्भेषु पिण्डांस्त्रीन्निर्वपेद्दक्षिणामुखम् ।
अपसव्यमपाङ्गुष्ठं नामधेयपुरस्कृतम् ।
एतेन विधिना दत्तं पितृणामक्षयं भवेत् ।
ततो विप्रान्यथाकामं पूजयेन्नियतः शुचिः ।
सदक्षिणं ससंभारं यथा तुष्यन्ति ते द्विजाः ।
यत्र तत्क्रियते कर्म पैतृकं ब्राह्मणान्प्रति ।
तत्सर्वमखिलं कुर्याद्वैश्वदेवस्य पूर्वकम् ।
अश्रून्न पातयेत्तत्र न जल्पेन्न जपेन्मिथः ।
नियम्य वाचं देहं च श्राद्धकर्म समारभेत् ।
ततो निर्वपणे वृत्ते तान्पिण्डांस्तदनन्तरम् ।
ब्राह्मणोऽग्निरजो गौर्वा भक्षयेदप्सु वा क्षिपेत् ।
पत्नीं वा मध्यमं पिण्डं पुत्रकामो हि प्राशयेत् ।
आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् ।
तृप्तानुत्थाप्य तान्विप्रानन्नशेषं निवेदयेत् ।
तच्छेषं बहुभिः पश्चात्सभृत्यो भक्षयेन्नरः ।
एष प्रोक्तः समासेन पितृयज्ञः सनातनः ।
पितरस्तेन तुष्यन्ति कर्ता च फलमाप्नुयात् ।
अहन्यहनि वा कुर्यान्मासे मासेऽथ वा पुनः ।
संवत्सरस्य द्विः कुर्याच्चतुर्वापि च शक्तितः ।
दीर्घायुश्च भवेत्स्वस्थः पितृमेधेन मानवः ।
सपुत्रो बहुभृत्यश्च प्रभूतधनधान्यवान् ।
श्राद्धदः स्वर्गमाप्नोति निर्मलं विविधाद्भुतम् ।
अप्सरोगणसंघुष्टं विरजस्कमनन्तकम् ।
श्राद्धानि पुष्टिकामा ये प्रकुर्वन्ति च पण्डिताः ।
तेषां पुष्टिं प्रजाश्चैव दास्यन्ति पितरः सदा ।
धन्यं यशस्यमायुष्यं स्वर्ग्यं शत्रुविनाशनम् ।
कुलसंधारणं चेति श्राद्धमाहुर्मनीषिणः ।

उमा ।

भगवन्देवदेवेश मृतास्ते भुवि जन्तवः ।
नानाजातिषु जायन्ते शीघ्रं कर्मवशात्पुनः ।
पितरांस्त्वति ते तत्र कथं तिष्ठन्ति देववत् ।
पितृणां कतमो देशः पिण्डानश्नन्ति ते कथम् ।
अन्ने दत्ते मृतानां तु कथमाप्यायनं भवेत् ।
एवं मया संशयितं भगवञ्छेत्तुमर्हसि ।

नारदः ।

एतद्विरुद्धं रुद्राण्यां पृच्छन्त्यां परिषन्मुदा ।
बभूव सर्वा मुदिता श्रोतुं परमकं हि तत् ।

---

उप- ). — $T_1$ om. line 3525. — ( L. 3526 ) $G_2$ सु- ( for वि- ). — $T_1$ om. ( hapl. ) line 3527. — ( L. 3527 ) $G_2$ पिंडावापान् ( for °पं ). — ( L. 3528 ) $T_1$ प्रकीर्य ( for प्रस्तीर्य ). $D_{10}$ T G प्रस्तरं दक्षिण मुखं ( for the post. half ). — ( L. 3529 ) $G_2$ स्वाहां ( for स्वधां ). — After line 3529, $T_2$ $M_4$ read line 3531 repeating it in its proper place. — $T_1$ om. ( hapl ) line 3530. — ( L. 3530 ) $T_{2,3}$ $G_2$ $M_3$ अग्निषोमाभ्यां ( for त्वग्नी° ). $G_2$ पैतृकं ( for पितृभ्यो ). — ( L. 3531 ) $D_{10}$ $T_2$ ( second time ) G तथा ; $T_3$ तदा ( for ततो ). $T_1$ विस्तीर्णं ( for पिण्डांस्त्रीन् ). $T_{1,2}$ ( both times ), $_3$ $G_{1,3}$ $M_{1-3,4}$ ( both times ) निव( $T_1$ $M_3$ °वे- ; $T_3$ °क्षि )पेद्दक्षिणामुखः ( for the post. half ). — ( L. 3532 ) $T_1$ अपां मुष्टिं ( for अपाङ्गुष्ठं ). — ( L. 3534 ) $D_{10}$ T G $M_4$ यथाशक्ति ( for °कामं ). — ( L. 3536 ) $D_{10}$ T G $M_4$ तत्र ( for ( for कर्म ). $D_{10}$ T G $M_4$ om. ( hapl. ) from the post. half up to the prior half of line 3538. — ( L. 3538 ) $D_{10}$ $T_{1,3}$ G $M_{1,2}$ जल्पं ( for जल्पेन् ). $M_{1-3}$ हसेन् ( for जपेन् ). — ( L. 3539 ) $T_1$ $M_4$ समाचरेत् ( for °रभेत् ). — ( L. 3540 ) $T_1$ ततो दर्भेषु निस्तीर्णान् ( for the prior half ). — ( L. 3542 ) $T_{1,3}$ पुत्रकामा ( for °कामो ). $D_{10}$ $T_2$ G [ऽ]पि- ( for हि ). — ( L. 3547 ) $T_1$ तृप्यंति ( for तुष्यन्ति ). — ( L. 3548 ) $T_1$ [ऽ]पि वा ; $M_3$ यथा ( for ऽथ वा ). — ( L. 3549 ) $D_{10}$ $G_{2,4}$ संवत्सरं द्विः कुर्याच्च ; $T_1$ °त्सरं तथा कुर्याच्च् ; $T_2$ °त्सरेऽथ वा कुर्याच् ; $G_{1,3}$ °त्सरं द्विजः कुर्याच्च् ( for the prior half ). $T_1$ चातुर्मास्ये ( for चतुर्वापि ). $D_{10}$ $T_{2,3}$ G स्व- ( for च ). — ( L. 3550 ) $T_1$ -यज्ञेन ( for -मेधेन ). $G_4$ वा पुनः ( for मानवः ). — ( L. 3551 ) T सुपुत्रो ( for स° ). $T_{2,3}$ बहुपुत्रश्च् ( for °भृत्यश्च् ). — ( L. 3552 ) $G_{1-3}$ M श्राद्धकृत् ( for °दः ). $D_{10}$ T G $M_4$ निर्मलं विविधात्मकं ( for the post half ). — $T_1$ om. ( hapl. ) line 3553. — ( L. 3553 ) $D_{10}$ $T_3$ G $M_1$ अनंतरं ( for अनन्तकम् ). — ( L. 3554 ) $D_{10}$ $T_{2,3}$ $G_{2,4}$ -कामा वै ; $G_{1,3}$ -काराणि ( for -कामा ये ). $D_{10}$ $T_{2,3}$ G ये ( $G_2$ यैः ) प्रकुर्वंति पंडिताः ( for the post. half ). — ( L. 3555 ) $T_{1,3}$ G प्रजां ( for प्रजाश् ). — ( L. 3557 ) $D_{10}$ $T_3$ G -संधारकं ( for °रणं ). — ( L. 3560 ) $D_{10}$ $T_{2,3}$ G स्वस्ति ( for त्विति ). $M_4$ पुनरास्त्विति ते तत्र ( for the prior half ). — ( L. 3561 ) $T_1$ दातृणां ( for पि° ). — ( L. 3563 ) $G_4$ एतन् ( for एवं ). $T_1$ एवं मे संशयं देव ( for the prior half ). $D_{10}$ $T_{2,3}$ G $M_4$ वक्तुम् ( for छेत्तुम् ). — $T_1$ om. the ref.

महेश्वरः ।

स्थाने संशयितं देवि शृणु कल्याणि तत्त्वतः ।
गुह्यानां परमं गुह्यं खिलानां परमं खिलम् ।
यथा देवगणा देवि तथा पितृगणाः प्रिये ।
दक्षिणस्यां दिशि शुभे सर्वे पितृगणाः स्थिताः ।
प्रेतानुद्दिश्य या पूजा क्रियते मानुषैरिह ।
तेन तुष्यन्ति पितरो न प्रेताः पितरः स्मृताः ।
उत्तरस्यां यथा देवा रमन्ते यज्ञकर्मभिः ।
दक्षिणस्यां तथा ते च तुष्यन्ति विविधैर्मखैः ।
द्विविधं क्रियते कर्म हव्यकव्यसमाश्रितम् ।
तयोर्हव्यक्रिया देवान्कव्यमाप्याययेत्पितॄन् ।
प्रसव्यं मङ्गलैर्द्रव्यैर्हव्यकर्म विधीयते ।
अपसव्यममङ्गल्यैः कव्यं चापि विधीयते ।
सदेवासुरगन्धर्वाः पितॄनभ्यर्चयन्ति च ।
आप्यायिताश्च ते श्राद्धैः पुनराप्याययन्ति तान् ।
अनिष्ट्वा च पितॄन्पूर्वं यः क्रियां प्रकरोति चेत् ।
रक्षांसि च पिशाचाश्च फलं भोक्ष्यन्ति तस्य तत् ।
हव्यकव्यक्रिया तस्मात्कर्तव्या भुवि मानवैः ।
कर्मक्षेत्रं हि मानुष्यं तदन्यत्र न विद्यते ।
कव्येन संततिर्दृष्टा हव्ये भूतिः पृथग्विधा ।
इति ते कथितं देवि देवगुह्यं सनातनम् ।

Colophon.

उमा ।

एवं कृतस्य धर्मस्य श्रोतुमिच्छाम्यहं प्रभो ।
प्रमाणं फलमानानां तन्मे शंसितुमर्हसि ।

महेश्वरः ।

प्रमाणकल्पनां देवि दानस्य शृणु भामिनि ।
यत्सारस्तु नरो लोके तद्दानं चोत्तमं स्मृतम् ।
सर्वदानविधिं प्राहुस्तदेव भुवि शोभने ।
प्रस्थं सारं दरिद्रस्य शतं कोटिधनस्य च ।
प्रस्थसारस्तु तत्प्रस्थं ददन्महदवाप्नुयात् ।
कोटिसारस्तु तां कोटिं ददन्महदवाप्नुयात् ।
उभयं तन्महत्तच्च फलेनैव समं स्मृतम् ।
धर्मार्थकामभोगेषु शक्यभावं तु मध्यमम् ।
स्वद्रव्यादतिहीनं तु तद्दानमधमं स्मृतम् ।
शृणु दत्तस्य वै देवि पञ्चधा फलकल्पनम् ।
आनन्त्यं च महच्चैव समं हीनं च पातकम् ।
तेषां विशेषान्वक्ष्यामि शृणु देवि समाहिता ।
दुस्त्यजस्य च वै दानं पात्र आनन्त्यमुच्यते ।
दानं षड्गुणयुक्तं तु महदित्यभिधीयते ।
यथाश्रद्धं तु वै दानं यथार्हं सममुच्यते ।
गुणतस्तु तथा हीनं दानं हीनमिति स्मृतम् ।
दानं पातकमित्याहुः षड्गुणानां विपर्यये ।
देवलोके महत्कालमानन्त्यस्य फलं विदुः ।

— T1 om. lines 3564–3574. — (L. 3564) D10 T2.3 G पृच्छंत्यां रुद्राण्यां ( by transp. ). M4 पुरुषं ( for परिषद् ). — (L. 3565) D10 T2.3 G3.4 श्रोतुं हि ( T3 वै ) परमं हितं ; G1.3 श्रोतुं तत्परमं हि यत् ( for the post. half ). — (L. 3567) D10 T2.3 G हितानां परमं हितं ( for the post. half ). — (L. 3570) G2 यत्पूतं ( for या पूजा ). — (L. 3573) D10 T2.3 G M4 देवि ( for ते च ). — (L. 3574) G1.3 हव्यकव्यं समाहितं ( for the post. half ). — (L. 3575) D10 T G आप्यायते ( for °ययेत् ). — (L. 3576) M अप्रसव्यं ( for प्र° ). T1 दिव्यैर् ( for द्रव्यैर् ). T1 हव्यं कव्यं ; T3 हव्यं कर्म ( for हव्यकर्म ). — T1.3 om. ( hapl. ) line 3577. — (L. 3578) G2 पितॄनभ्यर्चयंस्तथा ( for the post. half ). — (L. 3579) D10 G1–3 आप्यायं( G1 °य )ते ( for °यिताश् ). T1 ये ( for ते ). T2.3 G4 आप्यायंते च तैः श्राद्धैः ( for the prior half ). — (L. 3580) M4 अग्निष्वात्त- ( for अनिष्ट्वा च ). T1 पूर्वान् ( for पूर्वं ). M1–3 यां ( for यः ). — (L. 3581) T1 वै ( for तत् ). — (L. 3582) D10 T G -क्रियास् ( for -क्रिया ). D10 T G3.4 मानुषैः ( for मानवैः ). — (L. 3583) T1 कर्मक्षेत्रे ( for °क्षेत्रं ). — (L. 3584) T2 M3 हव्यैर् ( for हव्ये ). — Colophon. — *Sub-parvan :* M2.3 दानधर्म. — *Adhy. name :* D10 G1–3 उमामहेश्वरसंवादे हव्यकव्यमाहात्म्यकथनं ; T2 M4 उमामहेश्वरसंवादः. — *Adhy. no. :* D10 T2 G2.4 221 ; T1 214 ; T3 223 ; G1.3 M1 215 ; M2.3 216 ; M4 213. — (L. 3587) T1 प्रमाणं फलदानानां ; M4 प्रमाणं फलदानं तत् ( for the prior half ). — T1 महेशः ( for °श्वरः ). — (L. 3588) D10 T2.3 G प्रमाणक( D10 °णं क )ल्पना देवि ( for the prior half ). — (L. 3589) T3 यत्सारं ( for यत्सारस् ). — (L. 3591) G2 प्रस्थ- ( for प्रस्थं ). G2 शत- ( for शतं ). — (L. 3592) T3 -सारं ( for -सारस् ). G2 सर्वं ( for प्रस्थं ). — D10 T1 om. ( hapl. ) line 3593. — (L. 3594) T1 शतदानस्य तस्यैव ( for the prior half ). — T1 om. line 3595. G2 om. ( hapl. ) lines 3595–3596. T2 om line 3596. — (L. 3596) T3 धर्मतः ( for अधमं ). — (L. 3599) D10 T2.3 G विशेषं ( for °षान् ). — (L. 3600) T2.3 G2 पात्रम् ( for पात्र ). T1 चानंत्यम् ( for आ° ). — (L. 3601) M4 तद्गुण- ( for षड्गुण- ). — (L. 3602) T1 दानार्हं ( for यथार्हं ). — (L. 3605) T2 महत्कार्यम ( for °लम् ). — (L. 3606) G1.3 यथा ( for तथा ). D10 T2.3 G M1–3 कालं ( for दानं ). — (L. 3607) D10 T2.3 G M4 सदा ; T1 यथा ( for

महतस्तु तथा दानं स्वर्गलोके तु पूज्यते ।
समस्य तु तथा दानं मानुषं भोगमावहेत् ।
दानं निष्फलमित्याहुर्विहीनं क्रियया शुभे ।
अथ वा म्लेच्छदेशेषु तत्र तत्फलतां व्रजेत् ।
नरकं प्रेत्य तिर्यक्षु गच्छेदशुभदानतः ।

उमा ।

अशुभस्यापि दानस्य शुभं स्याच्च फलं कथम् ।

महेश्वरः ।

मनसा तत्त्वतः शुद्धमनृशंसपुरःसरम् ।
प्रीत्या तु सर्वदानानि दत्त्वा फलमवाप्नुयात् ।
रहस्यं सर्वदानानामेतद्विद्धि शुभेक्षणे ।
अन्यानि सर्वकार्याणि शृणु सद्भिः कृतानि च ।
आरामं देवगोष्ठानि संक्रमाः कूप एव च ।
गोवाटं च तटाकं च सभाः शालाश्च सर्वशः ।
भिक्षुकावसथाश्चैव पानीयं गोतृणानि च ।
व्याधितानां च भैषज्यमनाथानां च भोजनम् ।
अनाथशवसंस्कारस्तीर्थमार्गविशोधनम् ।
व्यसनाभ्यवपत्तिश्च सर्वेषां च स्वशक्तितः ।
एतत्सर्वं समासेन धर्मकार्यमिति स्मृतम् ।
तत्कर्तव्यं मनुष्येण स्वशक्त्या श्रद्धया शुभे ।
प्रेत्यभावे लभेत्पुण्यं नास्ति तत्र विचारणा ।
रूपं सौभाग्यमारोग्यं बलं सौख्यं लभेन्नरः ।
स्वर्गे वा मानुषे वापि तैस्तैराप्यायते हि सः ।

उमा ।

भगवँल्लोकपालेश धर्मस्तु कतिभेदकः ।
दृश्यते चरितः सद्भिस्तन्मे शंसितुमर्हसि ।

महेश्वरः ।

शृणु देवि समुद्देशान्नानात्वं धर्मसंकटे ।
धर्मा बहुविधा लोके श्रुता वेदमुखोद्भवाः ।
स्मृतिधर्मश्च बहुधा सद्भिराचार इष्यते ।
देशधर्माश्च दृश्यन्ते कुलधर्मास्तथैव च ।
जातिधर्माश्च वै धर्मा गणधर्माश्च शोभने ।
शरीरकालवैषम्यादापद्धर्मश्च दृश्यते ।
एतद्धर्मस्य नानात्वं क्रियते लोकवासिभिः ।
कारणात्तत्र तत्रैव फलं धर्मस्य चेष्यते ।
तत्कारणसमायोगे लभेत्कुर्वन्फलं नरः ।
अन्यथा न लभेत्पुण्यमतदर्हः समादिशन् ।
एवं धर्मस्य नानात्वं फलं कुर्वँल्लभेन्नरः ।
श्रौतः स्मार्तस्तु धर्माणां प्राकृतो धर्म उच्यते ।
इति ते कथितं सर्वं भूयः श्रोतुं किमिच्छसि ।

Colophon.

उमा ।

भगवन्सर्वभूतेश त्रिपुरार्दन शंकर ।
श्रुतं पापकृतं दुःखं यमलोके वरप्रद ।
श्रोतुमिच्छाम्यहं देव नृणां सुकृतकर्मणाम् ।
कथं ते भुञ्जते लोकान्स्वर्गलोके महेश्वर ।

तथा ). $D_{10}$ $T_{2.3}$ G मानुष्यं ( for °षं ). —( L. 3611 ) $T_1$ शुभस्य ( for शुभं स्याच् ). $T_3$ $G_2$ transp. फलं and कथं. —$T_1$ महेशः ( for °श्वरः ). —( L. 3612 ) $D_{10}$ $T_{2.3}$ G आनृशंस्य- ( $T_2$ °स्यं ) ( for अनृशंस- ). —( L. 3613 ) $T_1$ दत्त्वा तत्फलमाप्नुयात् ( for the post. half ). —( L. 3614 ) $G_{1.3.4}$ शुभानने ( for शुभेक्षणे ). —( L. 3615 ) $D_{10}$ T G धर्म- ( for सर्व- ). — $G_2$ $M_4$ om. ( hapl. ) lines 3616–3618. —( L. 3616 ) $D_{10}$ T $G_{1.3.4}$ आराम- ( for °मं ). —( L. 3617 ) $D_{10}$ T $G_{1.3.4}$ गोवाटश्च तटाकश्च ( for the prior half ). —( L. 3618 ) $D_{10}$ T $G_{1.3.4}$ पाषंडावसथश्चैव ( for the prior half ). —( L. 3619 ) $D_{10}$ T G $M_4$ पोषणं ( for भोजनम् ). —( L. 3620 ) $T_1$ तीर्थानां मार्गशोधनं ( for the post. half ). —( L. 3621 ) $T_1$ निवारो व्यसनस्यापि ( for the prior half ). —( L. 3627 ) $G_{1.3}$ भगवन्देवदेवेश ( for the prior half ). —( L. 3628 ) $D_{10}$ $T_{2.3}$ G परितः ; $T_1$ कथितः ( for चरितः ). — $T_1$ महेशः ( for °श्वरः ). — $T_1$ om. line 3629. —( L. 3630 ) $D_{10}$ T G $M_4$ श्रुतिभेद- ( for श्रुता वेद- ). —( L. 3631 ) $T_1$ श्रुति- ( for स्मृति- ). —( L. 3633 ) $M_4$ राज- ( for जाति- ). —( L. 3634 ) $G_{1.3}$ -लय- ( for -काल- ). $T_1$ -वैधर्म्याद् ( for -वैषम्याद् ). — $G_4$ om. ( hapl. ) from the post. half of line 3636 up to the prior half of line 3639. —( L. 3637 ) $T_1$ एतत्कारणसंयोगं ( for the prior half ). —( L. 3638 ) $G_{1.3}$ भवेत् ( for लभेत् ). $D_{10}$ $T_{2.3}$ $G_{1-3}$ समाविशेत् ; $M_{1-3}$ °विशन् ; $M_4$ °दिशेत् ( for °दिशन् ). $T_1$ विहीनः शास्त्रदृष्टितः ( for the post. half ). — $T_1$ om. lines 3639–3640. —( L. 3641 ) $D_{10}$ $T_2$ देवि ( for सर्वं ). $T_1$ $G_{1.3.4}$ $M_2$ किं भूयः श्रोतुमिच्छसि ( for the post. half ). — Colophon. — *Sub-parvan* : $M_{1-3}$ दानधर्म. — *Adhy. name* : $D_{10}$ $T_2$ $G_2$ उमामहेश्वरसंवादे धर्मसमुच्चयं ; $T_3$ उमामहेश्वरसंवादे हव्यकव्यमाहात्म्यं ; M उमामहेश्वरसंवादः. — *Adhy. no.* : $D_{10}$ 200 ; $T_1$ 215 ; $T_2$ $G_{2.4}$ 222 ; $T_3$ 221 ; $G_{1.3}$ $M_1$ 216 ; $M_{2.3}$ 217 ; $M_4$ 214. —( L. 3642 ) $T_1$ -लोकेश ( for -भूतेश ). $G_{2.4}$ भगवन्देवदेवेश ( for the prior half ). $T_1$ om. from the post. half up to the prior half of line 3644. $D_{10}$ $T_{2.3}$ G पुरमर्दन शंकर ( for the post. half ). —( L. 3643 ) $D_{10}$ $T_{2.3}$ G पापकृतां ( for °तं ). —( L. 3644 ) $G_3$ -कारिणां ( for -कर्मणाम् ). $T_1$ नराः सुकृतकर्मिणः ( for the post.

कथिताः कीदृशा लोका नृणां सुकृतकारिणाम् ।
एतन्मे वद देवेश श्रोतुं कौतूहलं हि मे ।

महेश्वरः ।

शृणु कल्याणि तत्सर्वं यत्त्वमिच्छसि भामिनि ।
विविधाः पुण्यलोकास्ते कर्माकर्मण्यतां गताः ।
मेरुं हि कनकात्मानं परितः सर्वतोदिशम् ।
भद्राश्वः केतुमालश्च उत्तराः कुरवस्तथा ।
जम्बूवनादयः स्वर्गा इत्येते कर्मवर्जिताः ।
तेषु भोगाः स्वयंभूताः प्रदृश्यन्ते यतस्ततः ।
योजनानां सहस्रं तु एकैकं मानमात्रया ।
नित्यपुष्पफलोपेतास्तत्र वृक्षाः समन्ततः ।
आसक्तवस्त्राभरणाः सर्वे कनकसंनिभाः ।
द्विरेफाश्चाण्डजास्तत्र प्रवालमणिसंनिभाः ।
विचित्राश्च मनोज्ञाश्च कूजितैः शोभयन्ति तान् ।
कुशेशयवनैश्छन्ना नलिन्यश्च मनोरमाः ।
तत्र वान्त्यनिला नित्यं दिव्यगन्धाः सुखावहाः ।
सर्वे चाम्लानमाल्याश्च विरजोम्बरसंवृताः ।
एवं बहुविधा देवि दिवि भोगाः सुखावहाः ।
स्त्रियश्च पुरुषाश्चैव सर्वे सुकृतकारिणः ।
रमन्ते तत्र चान्योन्यं कामरागसमन्विताः ।
दिव्यभूषणसंयुक्ता दिव्यगन्धसमन्विताः ।
मनोरमा महाभागाः सर्वे ललितकुण्डलाः ।
एवं तत्रगता मर्त्याः प्रमदाः प्रियदर्शनाः ।
नानाभावसमायुक्ता यौवनस्थाः सदैव तु ।
कमनीयाः कामयुताः कामज्ञा ललितास्तथा ।
मनोनुकूला मधुरा भोगिनामुपकल्पिताः ।
प्रमदाश्चोद्भवन्त्येव स्वर्गलोके यथा तथा ।
एवंविधाः स्त्रियश्चात्र पुरुषाश्च परस्परम् ।
रमन्ते चेन्द्रियैः स्वस्थैः शरीरैर्भोगसंस्कृतैः ।
कामहर्षौ गुणावास्तां नान्ये क्रोधादयः प्रिये ।
क्षुत्पिपासा न चास्त्यत्र गात्रक्लेशाश्च शोभने ।
सर्वतो रमणीयश्च सर्वर्तुकुसुमान्वितम् ।
यावत्पुण्यफलं तावद्रमन्ते तत्र संगताः ।
निरन्तरं भोगयुता रमन्ते स्वर्गवासिनः ।
तत्र भोगान्यथायोगं भुक्त्वा पुण्यक्षयात्पुनः ।
नश्यन्ति जायमानास्ते शरीरैः सहसा प्रिये ।
स्वर्गलोकात्परिभ्रष्टा जायन्ते मानुषे पुनः ।
पूर्वपुण्यावशेषेण विशिष्टाः संभवन्ति ते ।
एषा स्वर्गगतिः प्रोक्ता पृच्छन्त्यास्तव भामिनि ।
अत ऊर्ध्वं पदान्यष्टौ कर्मण्यानि शृणु प्रिये ।
भोगयुक्तानि पुण्यानि उच्छ्रितानि परस्परम् ।
विद्याधराः किंपुरुषा यक्षगन्धर्वकिंनराः ।
अप्सरो दानवा देवा यथाक्रममुदाहृताः ।
तेषु स्थानेषु जायन्ते प्राणिनः पुण्यकर्मिणः ।

---

half ). — $D_{10}$ $G_3$ om. ( hapl. ) lines 3645–3646. — ( L. 3645 ) M भोगान् ( for लोकान् ). — ( L. 3646 ) $T_1$ कति ते ( for कथिताः ). $M_4$ लोके ( for लोका ). — $T_1$ महेशः ( for °श्वरः ). — ( L. 3648 ) $D_{10}$ $T_{2.3}$ G शोभने ( for भामिनि ). — $T_1$ om. line 3649. — ( L. 3652 ) $T_1$ चैव ( for स्वर्गा ). $T_1$ उच्यंते ( for इत्येते ). — $T_1$ om. ( hapl. ) line 3653. — ( L. 3653 ) $D_{10}$ $T_{2.3}$ $G_{2.4}$ भूत्वा ; $G_{1.3}$ $M_4$ भूताः ( for भोगाः ). — ( L. 3655 ) $T_1$ transp. the prior half and the post. half. $D_{10}$ $T_{2.3}$ $G_{1-3}$ नित्यं ( for नित्य- ). — ( L. 3659 ) $D_{10}$ $T_{2.3}$ G -वन- ( for -वनैश् ). — ( L. 3660 ) $D_{10}$ $T_{2.3}$ $G_{2.4}$ वात्यनिलो ( for वान्त्यनिला ). $D_{10}$ T G दिव्यगंधसु( $T_3$ °धः सु )खावहः ( for the post. half ). — $G_4$ om. ( hapl. ) lines 3661–3662. — ( L. 3662 ) $G_{1.3}$ $M_4$ दिव्यभोग- ( for दिवि भोगाः ). $T_1$ देवभोगाः समंततः ( for the post. half ). — ( L. 3664 ) $T_1$ एवं ते ( for रमन्ते ). — $D_{10}$ T G om. ( hapl. ) line 3665. — ( L. 3666 ) $D_{10}$ मनोहरा ( for °रमा ). — $G_3$ reads line 3667 twice. — ( L. 3667 ) $D_{10}$ $T_{2.3}$ G स्थिता ( for -गता ). — ( L. 3668 ) $G_{1-3}$ ताः ( for तु ). — ( L. 3669 ) $D_{10}$ $T_{2.3}$ G युवत्यः कल्पितास्तत्र ( for the prior half ). $G_{1-3}$ मनोज्ञा ; $G_4$ कालज्ञा ( for काम° ). $T_1$ कामजा ललनास्तथा ( for the post. half ). — $T_1$ om. ( hapl. ) lines 3670–3671. — ( L. 3672 ) $M_{1-3}$ तत्र ( for चात्र ). — ( L. 3674 ) $T_1$ -हर्ष- ( for -हर्षौ ). $D_{10}$ $T_{2.3}$ G कामहर्ष( $T_2$ °क्रोध )गुणाभ्यस्ता ( for the prior half ). — ( L. 3675 ) $T_2$ च नास्त्यत्र ; $M_{1-3}$ -परिक्लेशा ; $M_4$ न संत्यत्र ( for न चास्त्यत्र ). $T_1$ क्षुत्पिपासे न संत्यत्र ( for the prior half ). $T_1$ $M_4$ परि- ( for गात्र- ). $M_{1-3}$ न संत्यत्र शुभानने ( for the post. half ). — ( L. 3676 ) $D_{10}$ $T_{1.2}$ $G_2$ रमणीयं ( for °यश् ). $D_{10}$ T $G_2$ $M_4$ सर्वत्र ( for सर्वर्तु- ). $G_{1.3}$ सर्वत्र कुसुमावृतः ( for the post. half ). — ( L. 3677 ) $G_{1-3}$ बहु ( for तत्र ). $D_{10}$ $T_2$ $G_4$ दृश्यं( $G_4$ दीर्घ्यं )ते तेषु संगताः ( for the post. half ). — ( L. 3679 ) $D_{10}$ $G_2$ भूतान् ( for भोगान् ). — ( L. 3680 ) $T_2$ शरीरैः सह भोगिनः ( for the post. half ). — ( L. 3683 ) $G_{1-3}$ एषां तु स्वर्गतिः प्रोक्ता ( for the prior half ). — ( L. 3684 ) $T_1$ प्रवक्ष्यामि ( for पदान्यष्टौ ). — ( L. 3685 ) $D_{10}$ $T_2$ G सुकर्माणि ( for कर्मण्यानि ). — ( L. 3687 ) $T_1$ om. $G_2$ पुरःसरं ( for परस्परम् ). — ( L. 3687 ) $T_1$ om. from the post. half up to the prior half of line 3692. $T_2$ $G_{1.3}$ -कामम् ; $T_3$ -क्रतुम् ( for -कनम् ).

तेषामपि च ये लोकाः स्वर्गलोकोपमाः स्मृताः ।
स्वर्गवत्तत्र ते भोगान्भुञ्जते च रमन्ति च ।
रूपसत्त्वबलोपेताः सर्वे दीर्घायुषस्तथा ।
तेषां सर्वक्रियारम्भो मानुषेष्वेव दृश्यते ।
अतिमानुषमाश्चर्यमस्त्रमायाबलात्कृतम् ।
जराप्रसूतिमरणं तेषु स्थानेषु दृश्यते ।
गुणदोषाश्च सन्त्यत्र आकाशगमनं तथा ।
अन्तर्धानं बलं सर्वमायुश्च चिरजीवनम् ।
तपोविशेषाज्जायन्ते तेषां कर्माणि भामिनि ।
देवलोकप्रवृत्तिस्तु तेषामेव विधीयते ।
न तथा देवलोको हि तद्विशिष्टाः सुराः स्मृताः ।
तत्र भोगमनिर्देश्यममृतत्वं च विद्यते ।
विमानगमनं नित्यमप्सरोगणसेवितम् ।
एवमन्यच्च तत्कर्म दैवतेभ्यो विशिष्यते ।
प्रत्यक्षं तव तत्सर्वं देवलोकप्रवर्तनम् ।
तस्मान्न वर्णये देवि विदितं हि त्वया शुभे ।
तत्सर्वं सुकृतेनैव प्राप्यते चोत्तमं पदम् ।

Colophon.

उमा ।

मानुषेष्वेव जीवत्सु गतिर्विज्ञायते न वा ।
अयं शुभगतिर्जीवन्नसौ त्वशुभभागिति ।
एतदिच्छाम्यहं श्रोतुं तन्मे शंसितुमर्हसि ।

महेश्वरः ।

तदहं ते प्रवक्ष्यामि जीवतां विद्यते यथा ।
द्विविधाः प्राणिनो लोके दैवासुरसमाश्रिताः ।
मनसा कर्मणा वाचा प्रतिकूला भवन्ति ये ।
तादृशानासुरान्विद्धि मर्त्यास्ते नरकालयाः ।
रागद्वेषयुता ये तु निर्लज्जा निरपत्रपाः ।
दर्पाहंकारसंयुक्ता नरा नरकगामिनः ।
नास्तिकाश्च शठा घोराः परेषामुपतापिनः ।
यथेष्टवृत्तयश्चैव नरा नरकगामिनः ।
दुष्प्रतीतमना यस्तु चलचित्तो निराकृतिः ।
शिश्नोदररतिर्मूढो निरयं याति सोऽधमः ।
मांसपानप्रिया नित्यं कठोरा नीचवृत्तयः ।
तादृशानासुरान्विद्धि सर्वे ते नरकालयाः ।
हिंसाविहारा ये नित्यं निर्दयाः प्राणिनाशने ।
स्वधर्मविमुखाश्चैव परस्वेष्वभिकाङ्क्षिणः ।
युद्धमात्सर्यसंयुक्ता ग्राम्यभोगपरायणाः ।
तादृशानासुरान्विद्धि नरान्नरकगामिनः ।
दर्पोत्सेकसमायुक्ता मूर्खास्तत्त्वबहिष्कृताः ।
श्रुतिविद्वेषिणो नित्यं ते नरा नरकालयाः ।
नित्यं वदन्ति ये मोहादनृतं कटुकं वचः ।
कृतघ्नाः पिशुना घोरा भवन्ति नरकालयाः ।
हिंस्राश्चोराश्च धूर्ताश्च परदाराभिमर्शिनः ।
नीचकर्मकरा ये च शौचमङ्गलवर्जिताः ।
श्रुतिविद्वेषिणः पापा लोकचारित्रदूषकाः ।
एवंयुक्तसमाचारा जीवन्तो नरकालयाः ।
लोकोद्वेगकराश्चान्ये पशवश्च सरीसृपाः ।
वृक्षाः कण्टकिनो रूक्षास्तादृशान्विद्धि चासुरान् ।
अपरान्देवपक्षांस्तु शृणु देवि समाहिता ।
मनोवाक्कर्मभिर्नित्यमनुकूला भवन्ति ये ।
तादृशानमरान्विद्धि ते नराः स्वर्गगामिनः ।
शौचार्जवपराधीनाः परार्थं न हरन्ति ये ।
ये समाः सर्वभूतेषु ते नराः स्वर्गगामिनः ।
भयाद्वा वृत्तिहेतोर्वा अनृतं न ब्रुवन्ति ये ।

— (L. 3690) T2 लोकान् (for भोगान्). — (L. 3693) D10 T2.3 G M4 ऐश्वर्यम् (for आश्चर्यम्). D10 T2.3 G M4 अत्र; T1 मंत्र- (for अस्त्र-). — (L. 3696) M सत्त्वम् (for सर्वम्). D10 T2.3 G अंतर्धानबलं सत्त्व(T2 G1 °त्य)म् (for the prior half). D10 T2.3 G4 -जीविता; T1 °विनः; G1-3 -जीविनं; M4 -जीविनां (for -जीवनम्). — T1 om. line 3697. — (L. 3697) D10 T2.3 G यथा (for तेषां). — (L. 3698) D10 T3 G देवलोके (for °लोक-). — T1 om. line 3699. — (L. 3701) M1-3 -सेवनं (for -सेवितम्). — (L. 3703) T1 चैव (for तव). D10 -लोके (for -लोक-). — (L. 3705) D10 T G सुकृतैरेव (for °तेनैव). T1 मानुषेष्वेव दृश्यते (for the post. half). — Colophon om. in T1. — *Sub-parvan* : M1-3 दानधर्म. — *Adhy. name* : D10 T2.3 G2 उमामहेश्वरसंवादे पुण्यलोकप्रशंसा (G2 °सनं); M1-3 उमामहेश्वरसंवादे सुकृतिकर्मफलं; M4 उमामहेश्वरसंवादः. — *Adhy. no.* : D10 T2.3 G2.4 223; G1.3 M1 217; M2.3 218; M4 215. — (L. 3707) D10 T2.3 G यथा (for अयं). D10 T2 G1.3.4 नासौ; T1 त्वसौ; G3 न हि (for असौ). — T1 महेशः (for °श्वरः). — (L. 3709) D10 T2.3 G M4 जीवितं (for जीवतां). — (L. 3710) D10 T2 दे(T2 दै)वासुरसुगाश्रिताः; T1 G1-3 M दैवमासुरमा°; G4 दैवासुरमपा° (for the post. half). — D10 T1.3 G1.3.4 M4 om. (hapl.) lines 3713-3728. T2 G2 om. (hapl.) lines 3729-3732. — (L. 3729) D10 T1.3 G1.3.4 M4 -मर्शकाः (for -मर्शिनः). — (L. 3730) D10 T1.3 G1.3.4 -कर्मरता (for °करा). — (L. 3731) D10 T3 G1.3.4 M4 शुचि-; M1-3 गुरु- (for श्रुति-). — (L. 3737) T1 सत्यं वदंति सततं (for the prior half). — T3 om. (hapl.) lines 3738-3741. — (L. 3738) D10 T1 G1-3

कथिताः कीदृशा लोका नृणां सुकृतकारिणाम्।
एतन्मे वद देवेश श्रोतुं कौतूहलं हि मे।

महेश्वरः।

शृणु कल्याणि तत्सर्वं यत्त्वमिच्छसि भामिनि।
विविधाः पुण्यलोकास्ते कर्माकर्मण्यतां गताः।
मेरुं हि कनकात्मानं परितः सर्वतोदिशम्।
भद्राश्वः केतुमालश्च उत्तराः कुरवस्तथा।
जम्बूवनादयः स्वर्गा इत्येते कर्मवर्जिताः।
तेषु भोगाः स्वयंभूताः प्रदृश्यन्ते यतस्ततः।
योजनानां सहस्रं तु एकैकं मानमात्रया।
नित्यपुष्पफलोपेतास्तत्र वृक्षाः समन्ततः।
आसक्तवस्त्राभरणाः सर्वे कनकसंनिभाः।
द्विरेफाश्चाण्डजास्तत्र प्रवालमणिसंनिभाः।
विचित्रांश्च मनोज्ञांश्च कूजितैः शोभयन्ति तान्।
कुशेशयवनैश्छन्ना नलिन्यश्च मनोरमाः।
तत्र वान्त्यनिला नित्यं दिव्यगन्धाः सुखावहाः।
सर्वे चाम्लानमाल्याश्च विरजोम्बरसंवृताः।
एवं बहुविधा देवि दिवि भोगाः सुखावहाः।
स्त्रियश्च पुरुषाश्चैव सर्वे सुकृतकारिणः।
रमन्ते तत्र चान्योन्यं कामरागसमन्विताः।
दिव्यभूषणसंयुक्ता दिव्यगन्धसमन्विताः।
मनोरमा महाभागाः सर्वे ललितकुण्डलाः।
एवं तत्रगता मर्त्याः प्रमदाः प्रियदर्शनाः।
नानाभावसमायुक्ता यौवनस्थाः सदैव तु।
कमनीयाः कामयुताः कामज्ञा ललितास्तथा।
मनोनुकूला मधुरा भोगिनामुपकल्पिताः।
प्रमदाश्चोद्भवन्त्येव स्वर्गलोके यथा तथा।
एवंविधाः स्त्रियश्चात्र पुरुषाश्च परस्परम्।
रमन्ते चेन्द्रियैः स्वस्थैः शरीरैर्भोगसंस्कृतैः।
कामहर्षौ गुणावास्तां नान्ये क्रोधादयः प्रिये।
क्षुत्पिपासा न चास्त्यत्र गात्रक्लेशाश्च शोभने।
सर्वतो रमणीयश्च सर्वर्तुकुसुमान्वितम्।
यावत्पुण्यफलं तावद्रमन्ते तत्र संगताः।
निरन्तरं भोगयुता रमन्ते स्वर्गवासिनः।
तत्र भोगान्यथायोगं भुक्त्वा पुण्यक्षयात्पुनः।
नश्यन्ति जायमानास्ते शरीरैः सहसा प्रिये।
स्वर्गलोकात्परिभ्रष्टा जायन्ते मानुषे पुनः।
पूर्वपुण्यावशेषेण विशिष्टाः संभवन्ति ते।
एषा स्वर्गगतिः प्रोक्ता पृच्छन्त्यास्तव भामिनि।
अत ऊर्ध्वं पदान्यष्टौ कर्मण्यानि शृणु प्रिये।
भोगयुक्तानि पुण्यानि उच्छ्रितानि परस्परम्।
विद्याधराः किंपुरुषा यक्षगन्धर्वकिंनराः।
अप्सरो दानवा देवा यथाक्रममुदाहृताः।
तेषु स्थानेषु जायन्ते प्राणिनः पुण्यकर्मिणः।

half). — $D_{10}$ $G_3$ om. (hapl.) lines 3645–3646. — (L. 3645) M भोगान् (for लोकान्). — (L. 3646) $T_1$ कति ते (for कथिताः). $M_4$ लोके (for लोका). — $T_1$ महेशः (for °श्वरः). — (L. 3648) $D_{10}$ $T_{2.3}$ G शोभने (for भामिनि). — $T_1$ om. line 3649. — (L. 3652) $T_1$ चैव (for स्वर्गा). $T_1$ उच्यंते (for इत्येते). — $T_1$ om. (hapl.) line 3653. — (L. 3653) $D_{10}$ $T_{2.3}$ $G_{2.4}$ भूत्वा; $G_{1.3}$ $M_4$ भूताः (for भोगाः). — (L. 3655) $T_1$ transp. the prior half and the post. half. $D_{10}$ $T_{2.3}$ $G_{1-3}$ नित्यं (for नित्य-). — (L. 3659) $D_{10}$ $T_{2.3}$ G -वन- (for -वनैश्). — (L. 3660) $D_{10}$ $T_{2.3}$ $G_{2.4}$ वात्यनिलो (for वान्त्यनिला). $D_{10}$ T G दिव्यगंधसु( $T_3$ °धः सु )खावहः (for the post. half). — $G_4$ om. (hapl.) lines 3661–3662. — (L. 3662) $G_{1.3}$ $M_4$ दिव्यभोग- (for दिवि भोगाः). $T_1$ देवभोगाः समंततः (for the post. half). — (L. 3664) $T_1$ एवं ते (for रमन्ते). — $D_{10}$ T G om. (hapl.) line 3665. — (L. 3666) $D_{10}$ मनोहरा (for °रमा). — $G_3$ reads line 3667 twice. — (L. 3667) $D_{10}$ $T_{2.3}$ G स्थिता (for -गता). — (L. 3668) $G_{1-3}$ ताः (for तु). — (L. 3669) $D_{10}$ $T_{2.3}$ G युवत्यः कल्पितास्तत्र (for the prior half). $G_{1-3}$ मनोज्ञा; $G_4$ कालज्ञा (for काम°). $T_1$ कामजा ललनास्तथा (for the post. half). — $T_1$ om. (hapl.) lines 3670–3671. — (L. 3672) $M_{1-3}$ तत्र (for चात्र). — (L. 3674) $T_1$ -हर्ष- (for -हर्षौ). $D_{10}$ $T_{2.3}$ G कामहर्ष( $T_2$ °क्रोध )गुणाभ्यस्ता (for the prior half). — (L. 3675) $T_2$ च नास्त्यत्र; $M_{1-3}$ -परिक्लेशा; $M_4$ न संत्यत्र (for न चास्त्यत्र). $T_1$ क्षुत्पिपासे न संत्यत्र (for the prior half). $T_1$ $M_4$ परि- (for गात्र-). $M_{1-3}$ न संत्यत्र शुभानने (for the post. half). — (L. 3676) $D_{10}$ $T_{1.2}$ $G_2$ रमणीयं (for °यश्). $D_{10}$ T $G_2$ $M_4$ सर्वत्र (for सर्वर्तु-). $G_{1.3}$ सर्वत्र कुसुमावृतः (for the post. half). — (L. 3677) $G_{1-3}$ बहु (for तत्र). $D_{10}$ $T_2$ $G_4$ दृश्यं( $G_3$ दीर्घ्यं )ते तेषु संगताः (for the post. half). — (L. 3679) $D_{10}$ $G_2$ भूतान् (for भोगान्). — (L. 3680) $T_2$ शरीरैः सह भोगिनः (for the post. half). — (L. 3683) $G_{1-3}$ एषां तु स्वर्गतिः प्रोक्ता (for the prior half). — (L. 3684) $T_1$ प्रवक्ष्यामि (for पदान्यष्टौ). — (L. 3685) $D_{10}$ $T_2$ G सुकर्माणि (for कर्मण्यानि). — (L. 3687) $T_1$ om. from the post. half up to the prior half of line 3692. $T_2$ $G_{1.3}$ -कामम्; $T_3$ -कतुन् (for -क्रमन्).

तेषामपि च ये लोकाः स्वर्गलोकोपमाः स्मृताः ।
स्वर्गवत्तत्र ते भोगान्भुञ्जते च रमन्ति च ।
रूपसत्त्वबलोपेताः सर्वे दीर्घायुषस्तथा ।
तेषां सर्वक्रियारम्भो मानुषेष्वेव दृश्यते ।
अतिमानुषमाश्चर्यमस्त्रमायाबलात्कृतम् ।
जराप्रसूतिमरणं तेषु स्थानेषु दृश्यते ।
गुणदोषाश्च सन्त्यत्र आकाशगमनं तथा ।
अन्तर्धानं बलं सर्वमायुश्च चिरजीवनम् ।
तपोविशेषाज्जायन्ते तेषां कर्माणि भामिनि ।
देवलोकप्रवृत्तिस्तु तेषामेव विधीयते ।
न तथा देवलोको हि तद्विशिष्टाः सुराः स्मृताः ।
तत्र भोगमनिर्देश्यममृतत्वं च विद्यते ।
विमानगमनं नित्यमप्सरोगणसेवितम् ।
एवमन्यच्च तत्कर्म दैवतेभ्यो विशिष्यते ।
प्रत्यक्षं तव तत्सर्वं देवलोकप्रवर्तनम् ।
तस्मान्न वर्णये देवि विदितं हि त्वया शुभे ।
तत्सर्वं सुकृतेनैव प्राप्यते चोत्तमं पदम् ।

Colophon.

उमा ।

मानुषेष्वेव जीवत्सु गतिर्विज्ञायते न वा ।
अयं शुभगतिर्जीवन्नसौ त्वशुभभागिति ।
एतदिच्छाम्यहं श्रोतुं तन्मे शंसितुमर्हसि ।

महेश्वरः ।

तदहं ते प्रवक्ष्यामि जीवतां विद्यते यथा ।
द्विविधाः प्राणिनो लोके दैवासुरसमाश्रिताः ।
मनसा कर्मणा वाचा प्रतिकूला भवन्ति ये ।
तादृशानासुरान्विद्धि मर्त्यास्ते नरकालयाः ।
रागद्वेषयुता ये तु निर्लज्जा निरपत्रपाः ।
दर्पाहंकारसंयुक्ता नरा नरकगामिनः ।
नास्तिकाश्च शठा घोराः परेषामुपतापिनः ।
यथेष्टवृत्तयश्चैव नरा नरकगामिनः ।
दुष्प्रतीतमना यस्तु चलचित्तो निराकृतिः ।
शिश्नोदररतिर्मूढो निरयं याति सोऽधमः ।
मांसपानप्रिया नित्यं कठोरा नीचवृत्तयः ।
तादृशानासुरान्विद्धि सर्वे ते नरकालयाः ।
हिंसाविहारा ये नित्यं निर्दयाः प्राणिनाशने ।
स्वधर्मविमुखाश्चैव परस्वेष्वभिकाङ्क्षिणः ।
युद्धमात्सर्यसंयुक्ता ग्राम्यभोगपरायणाः ।
तादृशानासुरान्विद्धि नरान्नरकगामिनः ।
दर्पोत्सेकसमायुक्ता मूर्खास्तत्त्वबहिष्कृताः ।
श्रुतिविद्वेषिणो नित्यं ते नरा नरकालयाः ।
नित्यं वदन्ति ये मोहादनृतं कटुकं वचः ।
कृतघ्नाः पिशुना घोरा भवन्ति नरकालयाः ।
हिंस्राश्चोराश्च धूर्ताश्च परदाराभिमर्शिनः ।
नीचकर्मकरा ये च शौचमङ्गलवर्जिताः ।
श्रुतिविद्वेषिणः पापा लोकचारित्रदूषकाः ।
एवंयुक्तसमाचारा जीवन्तो नरकालयाः ।
लोकोद्वेगकराश्चान्ये पशवश्च सरीसृपाः ।
वृक्षाः कण्टकिनो रूक्षास्तादृशान्विद्धि चासुरान् ।
अपरान्देवपक्षांस्तु शृणु देवि समाहिता ।
मनोवाक्कर्मभिर्नित्यमनुकूला भवन्ति ये ।
तादृशानमरान्विद्धि ते नराः स्वर्गगामिनः ।
शौचार्जवपराधीनाः परार्थं न हरन्ति ये ।
ये समाः सर्वभूतेषु ते नराः स्वर्गगामिनः ।
भयाद्वा वृत्तिहेतोर्वा अनृतं न ब्रुवन्ति ये ।

— (L. 3690) $T_2$ लोकान् (for भोगान्). — (L. 3693) $D_{10}$ $T_{2,3}$ G $M_4$ ऐश्वर्यम् (for आश्चर्यम्). $D_{10}$ $T_{2,3}$ G $M_4$ अत्र; $T_1$ मंत्र- (for अस्त्र-). — (L. 3696) M सत्त्वम् (for सर्वम्). $D_{10}$ $T_{2,3}$ G अंतर्धानबलं सत्त्व($T_2$ $G_1$ °त्य)म् (for the prior half). $D_{10}$ $T_{2,3}$ $G_4$ -जीविता; $T_1$ °विनः; $G_{1-3}$ -जीविनं; $M_4$ -जीविनां (for -जीवनम्). — $T_1$ om. line 3697. — (L. 3697) $D_{10}$ $T_{2,3}$ G यथा (for तेषां). — (L. 3698) $D_{10}$ $T_3$ G देवलोके (for °लोक-). — $T_1$ om. line 3699. — (L. 3701) $M_{1-3}$ -सेवनं (for -सेवितम्). — (L. 3703) $T_1$ चैव (for तव). $D_{10}$ -लोके (for -लोक-). — (L. 3705) $D_{10}$ T G सुकृतैरेव (for °तेनैव). $T_1$ मानुषेष्वेव दृश्यते (for the post. half). — Colophon om. in $T_1$. — *Sub-parvan* : $M_{1-3}$ दानधर्मं. — *Adhy. name* : $D_{10}$ $T_{2,3}$ $G_2$ उमामहेश्वरसंवादे पुण्यलोकप्रशंसा ($G_2$ °सनं); $M_{1-3}$ उमामहेश्वरसंवादे सुकृतिकर्मफलं; $M_4$ उमामहेश्वरसंवादः. — *Adhy. no.* : $D_{10}$ $T_{2,3}$ $G_{2,4}$ 223; $G_{1,3}$ $M_1$ 217; $M_{2,3}$ 218; $M_4$ 215. — (L. 3707) $D_{10}$ $T_{2,3}$ G यथा (for अयं). $D_{10}$ $T_2$ $G_{1,3,4}$ नासौ; $T_1$ त्वसौ; $G_2$ न हि (for असौ). — $T_1$ महेशः (for °श्वरः). — (L. 3709) $D_{10}$ $T_{2,3}$ G $M_4$ जीवितं (for जीवतां). — (L. 3710) $D_{10}$ $T_2$ दे($T_2$ दै)वासुरमुपाश्रिताः; $T_1$ $G_{1-3}$ M दैवमासुरमा°; $G_4$ दैवासुरमपा° (for the post. half). — $D_{10}$ $T_{1,3}$ $G_{1,3,4}$ $M_4$ om. (hapl.) lines 3713–3728. $T_2$ $G_2$ om. (hapl.) lines 3729–3732. — (L. 3729) $D_{10}$ $T_{1,3}$ $G_{1,3,4}$ $M_4$ -मर्शकाः (for -मर्शिनः). — (L. 3730) $D_{10}$ $T_{1,3}$ $G_{1,3,4}$ -कर्मरता (for °करा). — (L. 3731) $D_{10}$ $T_3$ $G_{1,3,4}$ $M_4$ शुचि-; $M_{1-3}$ गुरु- (for श्रुति-). — (L. 3737) $T_1$ सत्यं वदंति सततं (for the prior half). — $T_3$ om. (hapl.) lines 3738–3741. — (L. 3738) $D_{10}$ $T_1$ $G_{1-3}$

सत्यं वदन्ति सततं ते नराः स्वर्गगामिनः ।
धार्मिकाः शौचसंपराः शुक्ला मधुरभाषिणः ।
नाकार्यं मनसेच्छन्ति ते नराः स्वर्गगामिनः ।
दरिद्रा अपि ये केचिद्याचिताः प्रीतिपूर्वकम् ।
ददत्येव च यत्किंचित्ते नराः स्वर्गगामिनः ।
आस्तिका मङ्गलपराः सततं वृद्धसेविनः ।
पुण्यकर्मपरा नित्यं ते नराः स्वर्गगामिनः ।
स्वदुःखमिव मन्यन्ते परेषां दुःखवेदनाम् ।
शक्त्या चाभ्यवपद्यन्ते ते नराः स्वर्गगामिनः ।
व्रतिनो दानशीलाश्च सुखशीलाश्च मानवाः ।
ऋजवो मृदवो नित्यं ते नराः स्वर्गगामिनः ।
गुरुशुश्रूषणपरा देवब्राह्मणपूजकाः ।
कृतज्ञाः कृतविद्याश्च ते नराः स्वर्गगामिनः ।
जितेन्द्रिया जितक्रोधा जितमानमदस्पृहाः ।
लोभमात्सर्यहीना ये ते नराः स्वर्गगामिनः ।
निर्ममा निरहंकाराः स्वानुक्रोशाः स्वबन्धुषु ।
दीनानुकम्पिनो नित्यं ते नराः स्वर्गगामिनः ।
ऐहिकेन तु वृत्तेन पारत्रमनुमीयते ।
एवंविधा नरा लोके जीवन्तः स्वर्गगामिनः ।
यदन्यच्च शुभं लोके प्रजानुग्रहकारि च ।
पशवश्चैव वृक्षाश्च प्रजानां हितकारिणः ।
तादृशान्देवपक्षस्थानिति विद्धि शुभानने ।
शुभाशुभमयं लोके सर्वं स्थावरजङ्गमम् ।
दैवं शुभमिति प्राहुरासुरं ह्यशुभं प्रिये ।

Colophon.

उमा ।

भगवन्मानुषाः केचित्कालधर्ममुपस्थिताः ।
प्राणमोक्षं कथं कृत्वा परत्र हितमाप्नुयुः ।

महेश्वरः ।

हन्त ते कथयिष्यामि शृणु देवि समाहिता ।
द्विविधं मरणं लोके स्वभावाद्यत्नतस्तथा ।
तयोः स्वभावं नोपायं यत्नजं कारणोद्भवम् ।
एतयोरुभयोर्देवि विधानं शृणु शोभने ।
कल्याकल्यशरीरस्य यत्नजं द्विविधं स्मृतम् ।
यत्नजं नाम मरणमात्मत्यागो मुमूर्षया ।
तत्राकल्यशरीरस्य जरा व्याधिश्च कारणम् ।
महाप्रस्थानगमनं तथा प्रायोपवेशनम् ।
जलावगाहनं चैव अग्निचित्याप्रवेशनम् ।
एवं चतुर्विधः प्रोक्त आत्मत्यागो मुमूर्षताम् ।
एतेषां क्रमयोगेन विधानं शृणु शोभने ।
स्वधर्मयुक्तं गार्हस्थ्यं चिरमूढ्वा विधानतः ।
तत्रानृण्यं च संप्राप्य वृद्धो वा व्याधितोऽपि वा ।
दर्शयित्वा स्वदौर्बल्यं सर्वानिवानुमान्य च ।
संविधाय स्वबन्धूंश्च कर्मणां भरणं तथा ।
दानानि विधिवत्कृत्वा धर्मकार्यार्थमात्मनः ।
अनुज्ञाप्य जनं सर्वं वाचा मधुरया ब्रुवन् ।
अहतं वस्त्रमाच्छाद्य बद्ध्वा तत्कुशरज्जुना ।
उपस्पृश्य प्रतिज्ञाय व्यवसायपुरःसरम् ।
परित्यज्य ततो ग्रामं पश्चात्कुर्याद्यथेप्सितम् ।

$M_4$ -परा धीराः ( for -पराधीनाः ). $G_4$ परार्थान् ( for °र्थं ). $D_{10}$ $T_3$ G नाहरंति ( for न ह° ). — ( L. 3739 ) $T_1$ $G_{1-3}$ $M_{1,2,4}$ समाः सर्वेषु भूतेषु ( for the prior half ). — $G_4$ om. ( hapl. ) lines 3740-3743. — ( L. 3740 ) $D_{10}$ $T_2$ $G_{1-3}$ वदंति ( for ब्रुवन्ति ). — $T_1$ om. ( hapl. ) lines 3742-3747. — ( L. 3742 ) $D_{10}$ $T_{2,3}$ G -वादिनः ( for -भाषिणः ). — ( L. 3744 ) $T_2$ केचित्तु ; $G_2$ ते केचिद् ( for ये के° ). — $G_2$ om. ( hapl. ) lines 3746-3755. — ( L. 3746 ) $M_3$ नास्तिका ( for आ° ). $M_1$ नास्तिका मंगलाचाराः ( for the prior half ). After line 3747, $T_2$ reads line 3757. — $G_{1,3}$ om. ( hapl. ) lines 3748-3749. — ( L. 3748 ) $D_{10}$ $T_1$ $G_4$ -वेदनं ( for °नाम् ). — $D_{10}$ $G_4$ $M_3$ om. line 3749. $T_1$ om. ( hapl. ) lines 3750-3757. — ( L. 3750 ) $T_{2,3}$ $G_{1,3,4}$ धर्म- ( for सुख- ). — ( L. 3752 ) $T_3$ -पूजिताः ( for -पूजकाः ). — $T_2$ $G_4$ om. ( hapl. ) lines 3754-3755. — ( L. 3754 ) $D_{10}$ $T_3$ $G_{1,3}$ -मदाः स्मृताः ( for -मदस्पृहाः ). — ( L. 3755 ) $T_3$ -रहितास् ( for -हीना ये ). — ( L. 3758 ) $T_1$ विहितेन ( for ऐहिकेन ). $T_1$ साधुत्वम् ; $T_{2,3}$ परत्रम् ( for पा° ). — ( L. 3760 ) $G_2$ यदन्यच् ( for अन्यच्च ). — ( L. 3761 ) $T_3$ -कारणं ( for -कारिणः ). — ( L. 3762 ) $G_2$ $M_{2,3}$ तादृशा ( for °शान् ). M -पक्षस्था ( for °स्थान् ). — ( L. 3763 ) $T_{1,3}$ $G_3$ शुभाशुभमये ( $T_3$ °मया ; $G_2$ °तमं ) लोके ( for the prior half ). — Colophon om. in $T_3$. — *Sub-parvan* : $M_{1-3}$ दानधर्म. — *Adhy. name* : $D_{10}$ $T_2$ $G_{1-3}$ उमामहेश्वरसंवादे स्वर्गगमनं ; $M_{1-3}$ शुभाशुभमयत्वप्रतिपादनं ; $M_4$ उमामहेश्वरसंवादः. — *Adhy. no.* : $D_{10}$ $T_2$ $G_{2,4}$ 224 ; $T_1$ $M_4$ 216 ; $G_{1,3}$ $M_1$ 218 ; $M_{2,3}$ 219. — ( L. 3765 ) $G_2$ वभूवुर् ( for भगवन् ). — $T_1$ महेशः ( for °श्वरः ). — ( L. 3769 ) $T_2$ स्वभावान् ( for °वं ). $T_{1,3}$ $G_2$ यत्नतः ( for °जं ). $D_{10}$ $T_3$ $G_{1,3,4}$ यत्नतः कारणोद्भवः ( for the post. half ). $T_1$ om. from the post. half of line 3770 up to the prior half of line 3771. — $T_1$ om. line 3773. $T_3$ om. ( hapl. ) lines 3773-3776. — ( L. 3775 ) $G_4$ जलावगाहगमनम् ( for the prior half ). $D_{10}$ $T_2$ $G_{1,3,4}$ -चित्यां ( for -चित्या- ). — ( L. 3776 ) $D_{10}$ $G_3$ प्रोक्तम् ( for प्रोक्त ). $T_{1,2}$ $G_{1,3,4}$ $M_3$ एवं चतुर्विधं प्रोक्तम् ( for the prior half ). $T_3$ प्राणत्यागो मुमूर्षया ( for the post.

महाप्रस्थानमिच्छेच्चेत्प्रतिष्ठेतोत्तरां दिशम् ।
भूत्वा तावन्निराहारो यावत्प्राणविमोक्षणम् ।
चेष्टाहानौ शयित्वापि तन्मनाः प्राणमुत्सृजेत् ।
एवं पुण्यकृतां लोकानमलान्प्रतिपद्यते ।
प्रायोपवेशनं चेच्छेत्तेनैव विधिना नरः ।
देशे पुण्यतमे श्रेष्ठे निराहारस्तु संविशेत् ।
आप्राणान्तं शुचिर्भूत्वा कुर्वन्दानं स्वशक्तितः ।
हरिं स्मरंस्त्यजेत्प्राणानेष धर्मः सनातनः ।
एवं कलेवरं त्यक्त्वा स्वर्गलोके महीयते ।
अग्निप्रवेशनं चेच्छेत्तेनैव विधिना शुभे ।
कृत्वा काष्ठमयं चित्यं पुण्यक्षेत्रे नदीषु वा ।
दैवतेभ्यो नमस्कृत्य कृत्वा चाग्निं प्रदक्षिणम् ।
भूत्वा शुचिर्व्यवसितः प्रविशेदग्निसंस्तरम् ।
सोऽपि लोकान्यथान्यायं प्राप्नुयात्पुण्यकर्मणाम् ।
जलावगाहनं चेच्छेत्तेनैव विधिना शुभे ।
ख्याते पुण्यतमे तीर्थे निमज्जेत्स्वकृतं स्मरन् ।
सोऽपि पुण्यकृतां लोकान्निसर्गात्प्रतिपद्यते ।
ततः कल्यशरीरस्य संत्यागं शृणु तत्त्वतः ।
रक्षार्थं क्षत्रियस्येष्टः प्रजापालनकारणात् ।
योधानां भर्तृपिण्डार्थं गुर्वर्थं ब्रह्मचारिणाम् ।
गोब्राह्मणार्थं ग्रामार्थं सर्वेषां च विधीयते ।
स्वराष्ट्ररक्षणार्थं वा कुनृपैः पीडिताः प्रजाः ।
मोक्तुकामस्त्यजेत्प्राणान्युद्धमार्गे यथाविधि ।
सुसंनद्धो व्यवसितः संप्रविश्यापराङ्मुखः ।
एवं राजा मृतः सद्यः स्वर्गलोके महीयते ।
तादृशी सुगतिर्नास्ति क्षत्रियस्य विशेषतः ।
भृत्यो वा भर्तृपिण्डार्थं भर्तृकर्मण्युपस्थिते ।
कुर्वंस्तत्र तु साहाय्यमात्मप्राणानपेक्षया ।
स्वाम्यर्थं संत्यजेत्प्राणान्पुण्याल्लोकान्स गच्छति ।
स्पृहणीयः सुरगणैस्तत्र नास्ति विचारणा ।
एवं गोब्राह्मणार्थं वा दीनार्थं वा त्यजेत्तनुम् ।
सोऽपि पुण्यमवाप्नोति आनृशंस्यव्यपेक्षया ।
इत्येते जीवितत्यागे मार्गास्ते समुदाहृताः ।
कामात्क्रोधाद्भयान्मोहाद्यदि चेत्संत्यजेत्तनुम् ।
सोऽनन्तं नरकं याति आत्महन्तृत्वकारणात् ।
स्वभावमरणं नाम न तु चात्मेच्छया भवेत् ।
तथा मृतानां यत्कार्यं तन्मे शृणु यथाविधि ।
तत्रापि बोधसंत्यागान्मूढत्यागो विशिष्यते ।
भूमौ संवेशयेद्देहं नरस्य विनशिष्यतः ।
निर्जीवं वृणुयात्सद्यो वाससा तु कलेवरम् ।
माल्यगन्धैरलंकृत्य सुवर्णेन च भामिनि ।
श्मशाने दक्षिणे देशे चिताग्नौ प्रदहेन्मृतम् ।
अथ वा निक्षिपेद्भूमौ शरीरं जीववर्जितम् ।
दिवा च शुक्लपक्षश्च उत्तरायणमेव च ।
मुमूर्षूणां प्रशस्तानि विपरीतं तु गर्हितम् ।
औदकं चाष्टकाश्राद्धं बहुभिर्बहुशः कृतम् ।
आप्यायनं मृतानां तत्परलोके भवेच्छुभम् ।
एतत्सर्वं मया प्रोक्तं मानुषाणां हिताय च ।

Colophon.

half ). — ( L. 3778 ) $T_1$ आत्म॰ ( for ऊढ्वा ). — ( L. 3781 ) $D_{10}$ $T_{2,3}$ G सर्वान्विहाय बंधूंश्च ( for the prior half ). — ( L. 3784 ) $T_1$ आवार्य ( for आच्छाद्य ). — ( L. 3785 ) $M_{1-3}$ -पुरःसरः ( for °रम् ). — $T_1$ om. line 3786. — ( L. 3786 ) $D_{10}$ $T_{2,3}$ $G_{3,4}$ धर्मं ( for पश्चात् ). $G_{1,2}$ सुखं पश्चाद्यथेप्सितं ( for the post. half ). — ( L. 3790 ) $T_{1,2}$ $G_{1,3}$ $M_{1,2,4}$ -कृतान् ( for -कृतां ). G अनंतान् ( for अमलान् ). — ( L. 3791 ) $T_1$ ततः ( for नरः ). — ( L. 3794 ) $D_{10}$ $T_{1,2}$ G $M_4$ पुण्यं प( $T_1$ °ण्यान्प )रि-; $T_3$ पुण्यं स्मरंस् ( for हरिं स्मरंस् ). — ( L. 3798 ) $D_{10}$ T $G_{1,3,4}$ नमस्कृत्वा ( for °त्य ). $G_2$ [अ]पि ( for [अ]ग्निं ). — ( L. 3799 ) After the prior half, $T_3$ ins. :

स्मरन्नारायणं हरिम् ।
ब्राह्मणेभ्यो नमस्कृत्वा-

— ( L. 3802 ) $G_{1-3}$ $M_4$ लोके ( for ख्याते ). $T_3$ केशवं ( for स्वकृतं ). — ( L. 3803 ) $D_{10}$ $T_3$ G पुण्यतमाल्लँ ( for °कृतां ). $T_1$ अमलान् ( for निसर्गात् ). — ( L. 3804 ) $G_{1-3}$ परं ( for ततः ). — ( L. 3806 ) $T_1$ त्यजेच्च ( for योधानां ). — ( L. 3807 ) $D_{10}$ $T_{2,3}$ G सर्वेषां ( for ग्रामार्थं ). $D_{10}$ $T_3$ प्राणत्यागो ; $T_2$ G आत्मत्यागो ( for सर्वेषां च ). $T_1$ स्त्रीणामर्थे महात्मना ( for the post. half ). — ( L. 3808 ) $T_2$ -राज्य- ( for -राष्ट्र- ). $D_{10}$ G कुजनैः ; $T_2$ कौलीनैः ( for कुनृपैः ). — ( L. 3809 ) $G_{1,3}$ $M_4$ मोक्षकामस् ( for मोक्तु° ). — ( L. 3813 ) $T_1$ युद्ध- ( for the second भर्तृ- ). — ( L. 3815 ) $T_1$ समर्थः ( for स्वाम्यर्थं ). — $T_1$ om. lines 3816-3824. — ( L. 3820 ) $D_{10}$ काम- ( for कामात् ). $D_{10}$ $T_{2,3}$ G वापि ( for मोहाद् ). — ( L. 3822 ) $T_3$ जन्मेच्छया ( for चात्मे° ). — ( L. 3823 ) $D_{10}$ $T_{2,3}$ G $M_1$ यथा ( for तथा ). $G_4$ तत् ( for यत् ). — ( L. 3824 ) $D_{10}$ $T_{2,3}$ G $M_4$ तत्रापि मरणं त्यागो ( for the prior half ). $D_{10}$ $T_{2,3}$ G $M_4$ -त्यागाद् ( for -त्यागो ). — ( L. 3825 ) $T_1$ यथा वत्स्यशरीरस्य ( for the prior half ). — ( L. 3826 ) $M_4$ निर्जिनं ( for निर्जीवं ). $T_1$ om. from the post. half of line 3827 up to the prior half of line 3828. — ( L. 3828 ) $T_1$ चिताग्नौ विधितो

उमा ।
देवदेव नमस्तेऽस्तु कालसूदन शंकर ।
लोकेषु विविधा धर्मास्त्वत्प्रसादान्मया श्रुताः ।
विशिष्टं सर्वधर्मेभ्यः शाश्वतं ध्रुवमव्ययम् ।
श्रोतुमिच्छाम्यहं धर्मं तत्र मुह्यति मे मनः ।
केचिन्मोक्षं प्रशंसन्ति केचिद्यज्ञफलं द्विजाः ।
वानप्रस्थं पुनः केचिद्गार्हस्थ्यं केचिदाश्रमम् ।
राजधर्माश्रयं केचित्केचित्स्वाध्यायमेव च ।
ब्रह्मचर्याश्रमं केचित्केचिद्वाक्संयमाश्रयम् ।
मातरं पितरं केचित्सेवमाना दिवं गताः ।
अहिंसयापरः स्वर्गं सत्येन च महीयते ।
आहवेऽभिमुखाः केचिन्निहतास्त्रिदिवं गताः ।
केचिदुञ्छव्रते सिद्धाः स्वर्गमार्गं समाश्रिताः ।
आर्जवेनापरे युक्ता हताश्चानार्जवैर्जनैः ।
ऋजवो नाकपृष्ठे तु शुद्धात्मानः प्रतिष्ठिताः ।
एवं बहुविधैर्लोके धर्मद्वारैः सुसंवृतैः ।
ममापि मतिराविद्धा मेघलेखेव वायुना ।
एतस्मिन्संशयस्थाने संशयच्छेदकारि यत् ।
वचनं ब्रूहि देवेश निश्चयज्ञानसंज्ञितम् ।
नारदः ।
एवं पृष्टः स्वयं देव्या महादेवः पिनाकधृक् ।
प्रोवाच मधुरं वाक्यं सूक्ष्ममध्यात्मसंज्ञितम् ।
महेश्वरः ।
न्यायतस्त्वं महाभागे श्रोतुकामासि निश्चयम् ।
एतदेव विशिष्टं ते यत्त्वं पृच्छसि मां प्रिये ।
सर्वत्र विहितो धर्मः स्वर्गलोकफलाश्रितः ।
बहुद्वारस्य धर्मस्य नेहास्ति विफला क्रिया ।
यस्मिन्यस्मिंश्च विषये यो यो याति विनिश्चयम् ।
तं तमेवाभिजानाति नान्यं धर्मं शुचिस्मिते ।
शृणु देवि समासेन मोक्षज्ञानमनुत्तमम् ।
एतद्धि सर्वधर्माणां विशिष्टं गुह्यमव्ययम् ।
नास्ति मोक्षात्परं देवि मोक्ष एव परा गतिः ।
सुखमात्यन्तिकं श्रेष्ठमनिवर्ति च तद्विदुः ।
नात्र देवि जरामृत्यू शोको वा दुःखमेव वा ।
अनुत्तममचिन्त्यं च तद्देवि परमं सुखम् ।
ज्ञानानामुत्तमं ज्ञानं मोक्षज्ञानं विदुर्बुधाः ।
ऋषिभिर्देवसंघैश्च प्रोच्यते परमं पदम् ।
नित्यमक्षरमक्षोभ्यमजरं शाश्वतं शिवम् ।
उशन्ति तत्पदं प्राज्ञाः स्पृहणीयं सुरासुरैः ।
दुःखादि च दुरन्तं च संक्षयं च विरोधि च ।
मिथः सततकार्यं च त्रिवर्गं सुखमुच्यते ।
तस्मान्मोक्षः प्रधानस्तु त्रिवर्गाच्च विशेषतः ।

---

दहेत् ( for the post. half ). — ( L. 3831 ) $T_1$ प्रशस्तं हि ( for °स्तानि ). — ( L. 3832 ) $D_{10}$ $T_{2,3}$ $M_4$ बहुभिः ; $T_1$ °धा ( for °ज्ञः ). — ( L. 3834 ) $D_{10}$ $T_{2,3}$ G हितं वचः ; $T_1$ हिताय वै ( for °य च ). — Colophon. — *Sub-parvan* : $M_1$ दानधर्म. — *Adhy. name* : $D_{10}$ $T_{2,3}$ उमामहेश्वरसंवादे मरणलोकप्रदर्शनं ( $T_3$ °लोककथनं ) ; $G_2$ उमामहेश्वरसंवादे मरणलोकं ; $M_1$ प्राणत्यागक्रमः ; $M_{2,3}$ उमामहेश्वरसंवादे प्राणत्यागक्रमः ; $M_4$ उमामहेश्वरसंवादः. — *Adhy. no.* : $D_{10}$ $T_{3,4}$ $G_{2,4}$ 225 ; $T_1$ $M_4$ 217 ; $G_{1,3}$ $M_1$ 219 ; $M_{2,3}$ 220. — ( L. 3838 ) $D_{10}$ $T_2$ G $M_3$ सर्वमत्र ( for धर्मं तत्र ). $M_1$ om. from the post. half of line 3840 up to the post. half. of line 3842. $M_3$ om. ( hapl. ) from the post. half of line 3840 up to the prior half of line 3843 — $T_1$ om. ( hapl. ) lines 3841-3842. — ( L. 3841 ) $D_{10}$ $G_4$ -धर्माश्रयाः ( for °श्रयं ). — ( L. 3842 ) $T_3$ केपि ( for केचिद् ). $T_2$ केचिद्विद्वत्समाश्रयं ( for the post. half ). — ( L. 3844 ) $T_1$ गताः स्वर्गं ( for [अ]-परः स्वर्गं ). $T_3$ अहिंसायाः परं स्वर्गं ( for the prior half ). $T_1$ सत्येनैव तु केचन ( for the post. half ). — ( L. 3846 ) $D_{10}$ $T_{1,2}$ $G_{1-3}$ $M_4$ -व्रतैः ( for -व्रते ). $T_1$ द्विजाश्रिताः ( for समा° ). — ( L. 3847 ) $D_{10}$ T G $M_4$ महतां पूजने रताः ( for the post. half ). — ( L. 3849 ) $T_2$ धर्माचारैः ( for धर्मद्वारैः ). $T_1$ $M_{1,3}$ असंवृतैः ( for सु° ). — For line 3851, $T_1$ subst. :

एतं मे संशयं देव संप्रति च्छेतुमर्हसि ।

— $T_1$ om. line 3852. — ( L 3852 ) $T_2$ निर्भय- ( for निश्चय- ). $D_{10}$ $T_3$ $G_{1-3}$ $M_{1-3}$ -संश्रितं ; $G_4$ -संमितं ( for -संज्ञितम् ). — $G_1$ om. the ref. — ( L. 3853 ) $D_{10}$ तया ( for स्वयं ). $D_{10}$ पिनाकधृत् ( for °धृक् ). — ( L 3854 ) $D_{10}$ $T_{1,3}$ G -संश्रितं ( for -संज्ञितम् ). — $T_1$ महेशः ( for °श्वरः ). — ( L. 3855 ) $G_1$ वि- ( for [अ]सि ). $T_1$ भामिनि ( for निश्चयम् ). — $T_1$ om. line 3856. — Lines 3857–3860 = ( var. ) 12. 340. 2–3. — ( L. 3857 ) $T_1$ -समाश्रितः ; $G_3$ -फलं श्रितः ( for -फलाश्रितः ). — ( L. 3859 ) $T_1$ यस्मिंस्तु विषये लोके ( for the prior half ). — ( L. 3861 ) $D_{10}$ $T_{2,3}$ G $M_3$ -ज्ञानम् ; $T_1$ -धर्मम् ( for -ज्ञानम् ). — ( L. 3862 ) $D_{10}$ $T_3$ G शुभम् ( for गुह्यम् ). — ( L. 3863 ) $D_{10}$ $T_{2,3}$ $G_4$ नास्ति मोक्षात्परा गतिः ;. $G_3$ मोक्षणं परमा गतिः ( for the post. half ). — ( L. 3864 ) $D_{10}$ अनिमित्तं ; $T_2$ °वृत्तिं ; $T_3$ इति वृत्तं ; G अनिवृत्तं ; $M_4$ °वृत्ति ( for °वर्ति ). — ( L. 3865 ) $T_2$ नास्ति ( for नात्र ). $D_{10}$ T G $M_{1,4}$ मृत्युः ( for -मृत्यू ). — ( L. 3867 ) $T_1$ क्षेत्र- ( for मोक्ष- ). — ( L. 3869 ) $T_1$ $G_{1,3}$ अक्षयम् ( for °रम् ). $D_{10}$ $T_{2,3}$ G $M_4$ अजेयं ( for अजरं ). — ( L. 3870 ) $D_{10}$ $G_{1-3}$ विशंति ( for उ° ). $T_1$ तद्विदः ( for तत्पदं ). $G_4$ स्पृहणीयाः ( for °णीयं ). — $T_1$

मोक्षस्य तस्य मार्गोऽयं श्रूयतां शुभलक्षणे ।
ब्रह्मादिस्थावरान्तश्च संसारोऽयं प्रवर्तते ।
शोकव्याधिजरादोषैर्मरणेन च संयुतः ।
यथा ज्योतिर्गणा व्योम्नि निवर्तन्ते पुनः पुनः ।
संसारे प्राणिनः सर्वे निवर्तन्ते तथा पुनः ।
तत्र संसारचक्रस्य मोक्षो ज्ञानेन दृश्यते ।
अध्यात्मतत्त्वविज्ञानं ज्ञानमित्यभिधीयते ।
ज्ञानस्य ग्रहणोपायमाचारं ज्ञानिनस्तथा ।
यथावत्संप्रवक्ष्यामि तत्त्वमेकमनाः शृणु ।
ब्राह्मणः क्षत्रियो वापि भूत्वा पूर्वं गृहे स्थितः ।
आनृण्यं सर्वतः प्राप्य ततस्तान्संत्यजेद्गृहान् ।
ततः संत्यज्य गार्हस्थ्यं निश्चितो वनमाश्रयेत् ।
वने गुरुसमाज्ञातो दीक्षेत विधिपूर्वकम् ।
दीक्षां प्राप्य यथान्यायं स्ववृत्तं परिपालयेत् ।
गृह्णीयादप्युपाध्यायान्मोक्षज्ञानमतन्द्रितः ।
द्विविधश्च पुनर्मोक्षः सांख्यो योग इति स्मृतः ।
पञ्चविंशतिविज्ञानं सांख्यमित्यभिधीयते ।
ऐश्वर्यं देवसायुज्यं योगशास्त्रस्य निर्णये ।
तयोरन्यतरं ज्ञानं शृणुयाच्छिष्यतां गतः ।
नामुण्डो नाप्यकाषायी नाप्यसंवत्सरोषितः ।
सांख्ययोगौ न च श्राव्यौ गुरुणा स्नेहपूर्वकम् ।
समः शीतोष्णहर्षादीन्विषहेत सदा मुनिः ।
अधृष्यः क्षुत्पिपासाभ्यां भवेज्ज्ञानसमाधिना ।
न कुर्वीतान्यमारम्भमनिवेद्य स्वकं गुरुम् ।
छायाभूतोऽपरित्यागी नित्यमेव भवेद्गुरौ ।
इन्द्रियाणीन्द्रियार्थेभ्य उचितेभ्यो निवर्तयेत् ।
त्यजेत्संकल्पजान्ग्रन्थीन्सदा ध्यानपरो भवेत् ।
कुण्डिकां चर्म संशिक्यं छत्रं यष्टिमुपानहौ ।
चैलमित्येव नैतेषु स्थापयेत्स्वाम्यमात्मनः ।
गुरोः पूर्वं समुत्तिष्ठेज्जघन्यं तस्य संविशेत् ।
नाननुज्ञाप्य भर्तारमावश्यकमपि व्रजेत् ।
द्विरह्नः स्नानशाटेन संध्ययोरभिषेचनम् ।
एककालाशनं चास्य विहितं यतिभिः पुरा ।
भैक्षं सर्वत्र गृह्णीयाच्चिन्तयेत्सततं निशि ।
कारणे चापि संप्राप्ते न कुप्येत कदाचन ।
ब्रह्मचर्यं वने वासः शौचमिन्द्रियसंयमः ।
दया च सर्वभूतेषु तस्य धर्मः सनातनः ।
विमुक्तः सर्वपापेभ्यो लघ्वाहारो जितेन्द्रियः ।
आत्मयुक्तः परां बुद्धिं लभते पापनाशिनीम् ।
यदा भावं न कुरुते सर्वभूतेषु पापकम् ।
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ।
अनीर्ष्युरनहंकारो विमुक्तः सर्वबन्धनैः ।
ब्राह्मं पदमवाप्नोति यत्प्राप्य न निवर्तते ।
उभे सत्यानृते त्यक्त्वा शोकानन्दौ भयाभये ।
प्रियाप्रिये परित्यज्य ब्रह्मभूयाय कल्पते ।
निर्ममो निरहंकारो निर्द्वंद्वो वीतमत्सरः ।
वीतशोकभयाबाधः पदं प्राप्नोत्यनुत्तमम् ।
तुल्यनिन्दास्तुतिर्मौनी समलोष्टाश्मकाञ्चनः ।

om. lines 3871-3874. — (L. 3871) $M_1$ दुरंतश् (for दुरन्तं). $D_{10}$ G दुःखादिश्च दुरंतश्च (for the prior half). $D_{10}$ $T_{2,3}$ G संसारो यः प्रकीर्तितः (for the post. half). — After line 3871, $D_{10}$ $T_{2,3}$ $G_{2,4}$ read lines 3876-3877. $D_{10}$ $T_{2,3}$ $G_4$ om. lines 3872 3873. $G_{1-3}$ om. lines 3872-3875. — (L. 3874) $D_{10}$ $T_{2,3}$ $G_4$ तस्य मोक्षस्य मार्गोयं (for the prior half). — (L. 3875) $T_{1,2}$ $G_4$ -स्थावरांतं (for °रान्तश्). $D_{10}$ $T_{2,3}$ $G_4$ संसारो यः प्रकीर्तितः (for the post. half). — After line 3875, $T_1$ ins.:

ज्ञानान्मोक्षमवाप्नोति तच्च सद्गुरुसेवया ।

— After line 3877, $D_{10}$ $T_2$ $G_2$ ins.:

एवं जीवा अमी लोके विवर्तन्ते पुनः पुनः ।

— $T_1$ om. lines 3878-3880. $G_2$ om. (hapl.) 3878. — (L. 3883) $T_1$ पूर्वं भूत्वा (by transp.); $M_4$ भूत्वा सर्वं. — (L. 3886) $D_{10}$ $T_{2,3}$ G वने गुरुं समाज्ञाय (for the prior half). $D_{10}$ T G दीक्षितो (for दीक्षेत). — (L. 3889) $D_{10}$ $T_{2,3}$ G $M_4$ द्विविधं च पुनर्मोक्षं सांख्य-यो($T_3$ °ख्यं यो)गमिति स्मृतिः. — (L. 3891) $D_{10}$ $T_{2,3}$ G $M_4$ -सरूप्यं (for -सायुज्यं). $D_{10}$ T G निर्णयः (for °ये). — (L. 3892) $T_1$ प्रेष्यतां (for शि°). — (L. 3893) $D_{10}$ $T_{2,3}$ G $M_4$ नाकालो (for नामुण्डो). $T_1$ नाकार्यो नाप्यकाषायो (for the prior half). — (L. 3894) $M_{1-3}$ नरः (for न च). $D_{10}$ $T_3$ G नामा। $D_{10}$ न सांख्ययोगो नाश्राद्धं; $T_2$ नामांख्ययोगौ नाश्राद्धौ (for the prior half). $T_2$ गुरुभ्यः; $T_3$ $G_{1,3,4}$ गुरूणां (for गुरुणा). — $T_1$ om. lines 3895-3896. — (L 3895) $D_{10}$ $T_{2,3}$ G स वै (for सदा). $D_{10}$ $T_{2,3}$ G M om. from the post. half of line 3896 up to the prior half of line 3899. — (L. 3901) $G_2$ भव्यं (for छत्रं). — (L. 3904) $D_{10}$ T G $M_4$ नैवाविज्ञाप्य भर्तारम् ($T_1$ चं गुरुम्) (for the prior half). — (L. 3905) $D_{10}$ T G द्विरांह्न (for °ह्नः). $T_1$ -कालेन (for -शाटेन). — $T_1$ om. line 3906. — (L. 3908) $G_{1-3}$ कालेन (for कारणे). — (L. 3909) $G_{1,3}$ -निग्रहः (for -संयमः). — (L. 3915) $D_{10}$ T G $M_4$ अनिष्ठुरो (for अनीर्ष्युर्). $D_{10}$ T G $M_4$ om. (hapl.) from the post. half up to the prior half of line 3919. — (L. 3919) $M_{1-3}$ निर्द्वंद्वो निष्परिग्रहः (for the post. half). — (L. 3920) $G_{1-3}$ -भयाबाधं (for °बाधः). $T_3$ परं (for पदं). — (L. 3921) $M_{1-3}$ तुल्य- (for सम-).

समः शत्रौ च मित्रे च निर्वाणमधिगच्छति ।
एवंयुक्तसमाचारस्तत्परोऽध्यात्मचिन्तकः ।
ज्ञानाभ्यासेन तेनैव प्राप्नोति परमां गतिम् ।

Colophon.

महेश्वरः ।

अनुद्विग्नमतेर्जन्तोरस्मिन्संसारमण्डले ।
शोकव्याधिजरादुःखे निर्वाणं नोपपद्यते ।
तस्मादुद्वेगजननं मनोवस्थापनं तथा ।
ज्ञानं ते संप्रवक्ष्यामि तन्मूलममृतं हि वै ।
शोकस्थानसहस्राणि भयस्थानशतानि च ।
दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ।
नष्टे धने वा दारे वा पुत्रे पितरि वा मृते ।
अहो दुःखमिति ध्यायञ्शोकस्य पदमाव्रजेत् ।
द्रव्येषु समतीतेषु ये गुणास्तान्न चिन्तयेत् ।
ताननाद्रियमाणस्य शोकबन्धः प्रणश्यति ।
संप्रयोगादनिष्टस्य विप्रयोगात्प्रियस्य च ।
मानुषा मानसैर्दुःखैः संयुज्यन्तेऽल्पबुद्धयः ।
मृतं वा यदि वा नष्टं योऽतीतमनुशोचति ।
संतापेन च युज्येत तच्चास्य न निवर्तते ।
उत्पन्ने त्विह मानुष्ये गर्भप्रभृति मानवम् ।
विविधान्युपवर्तन्ते दुःखानि च सुखानि च ।
तयोरेकतरो मार्गो यद्येनमभिसंनमेत् ।
सुखं प्राप्य न संहृष्येद्दुःखं प्राप्य न संज्वरेत् ।
दोषदर्शी भवेत्तत्र यत्र स्नेहः प्रवर्तते ।
अनिष्टेनान्वितं पश्येद्यथा क्षिप्रं विरज्यते ।
यथा काष्ठं च काष्ठं च समेयातां महोदधौ ।
समेत्य च व्यपेयातां तद्वज्ज्ञातिसमागमः ।
अदर्शनादापतिताः पुनश्चादर्शनं गताः ।
स्नेहस्तत्र न कर्तव्यो विप्रयोगो हि तैर्ध्रुवम् ।
कुटुम्बं पुत्रदारं च शरीरं धनसंचयः ।
पारक्यमध्रुवं सर्वं किं स्वं सुकृतदुष्कृते ।
पुत्रदारकुटुम्बेषु सक्ताः सीदन्ति जन्तवः ।
सरःपङ्कार्णवे मग्ना जीर्णा इव महागजाः ।
मातापितृसहस्राणि पुत्रदारशतानि च ।
असंख्येयान्यतीतानि तथैवानागतानि च ।
न तेषां च मया कार्यं न कार्यं मम तैरपि ।
अतीतमनतीतं तदिति पश्यन्न मुह्यति ।
दुःखोपघाते शारीरे मानसे वा समुत्थिते ।
यस्मिन्न शक्यते कर्तुं यत्नात्तन्नानुचिन्तयेत् ।
यन्निमित्तं भवेच्छोकस्त्रासो वा दुःखमेव वा ।
आयासो वा यतोमूलस्तदेकाङ्गमपि त्यजेत् ।
अनित्यं यौवनं रूपं जीवितं रत्नसंचयः ।
ऐश्वर्यं स्वस्थता चेति न मुह्येत्तत्र पण्डितः ।
सुखमेकान्ततो नास्ति शक्रस्यापि त्रिविष्टपे ।
तत्रापि सुमहद्दुःखं सुखमल्पतरं भवेत् ।
न नित्यं लभते दुःखं न नित्यं लभते सुखम् ।
सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
क्षयान्ता निचयाः सर्वे पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं च जीवितम् ।
उच्छ्रयान्विनिपातांश्च दृष्ट्वा प्रत्यक्षतः स्वयम् ।
अनित्यमसुखं चेति व्यवस्येत्सर्वमेव च ।
अर्थानामार्जने दुःखमार्जितानां च रक्षणे ।
नाशे दुःखं व्यये दुःखं धिगर्थं दुःखभाजनम् ।
अर्थवन्तं नरं नित्यं पञ्च निघ्नन्ति शत्रवः ।

---

— Colophon. — *Sub-parvan* : $D_{10}$ $M_{1-3}$ दानधर्म. — *Adhy. name* : $D_{10}$ $T_{3}$ $G_{2}$ उमामहेश्वरसंवादे आश्रमलक्षणं ; $T_{2}$ आश्रमलक्षणं ; $M_{4}$ उमामहेश्वरसंवादः. — *Adhy. no.* : $D_{10}$ $T_{2,3}$ $G_{2,4}$ 226 ; $T_{1}$ $M_{4}$ 218 ; $G_{1,3}$ $M_{1}$ 220 ; $M_{2,3}$ 221. — (L. 3929) $T_{1}$ -गतानि (for -शतानि). — $T_{1}$ om. lines 3933–3936. — (L. 3933) $G_{2}$ शोकेषु (for द्रव्येषु). $D_{10}$ $T_{2,3}$ G शुभास् (for गुणास्). — After line 3937, $M_{4}$ ins. :

दुःखाच्च दुःखं भवति पापानर्थौ प्रपद्यते ।
नार्थो न धर्मो न यशो योऽतीतमनुशोचति ।

— (L. 3939) $D_{10}$ $T_{1}$ $G_{4}$ उत्पन्नमिह ; $T_{3}$ उत्पन्नमिव ; $G_{1,3}$ °न्नानिह ; $G_{2}$ °न्नानीह (for उत्पन्ने त्विह). $G_{1,3}$ मानवान् (for °वम्). — $T_{1}$ repeats line 3940 after line 3948. — (L. 3941) $T_{1}$ -संनयेत् (for °मेत्). — (L. 3942) $T_{2}$ $G_{2}$ सुखं (for न सं-). $T_{1}$ $G_{1,3}$ M न सुखं प्राप्य संहृष्येद् (for the prior half). $D_{10}$ $T_{1,2}$ $G_{1,2}$ M न दुःखं प्राप्य संज्वरेत् (for the post. half). — (L. 3948) $G_{1,3}$ $M_{1-3}$ ध्रुवः (for ध्रुवम्). — (L. 3949) $D_{10}$ $T_{3}$ $G_{3,4}$ -दाराश् (for -दारं). $T_{1}$ कुटुम्बभरणं चापि (for the prior half). $D_{10}$ $T_{2,3}$ G $M_{1,4}$ -संचयं (for °यः). — $D_{10}$ T G $M_{4}$ om. (hapl.) lines 3950–3961. — (L. 3952) Kumbh ed. and Madras ed. जीवा (for जीर्णा). — (L. 3964) $M_{1-3}$ स्वल्पतरं (for अल्प°). — Line 3966 = 3. 48. $45^{ab}$ ; 12. 26. $23^{ab}$ ; 149. $84^{ab}$ ; 186. $18^{ef}$ ; 14 44. $14^{cd}$. — $T_{3}$ om. lines 3966–3967. — Lines 3967–3968 = (var.) 11. 2. 3 ; 12. 27. 29 ; 317. 20 ; 14. 44. 18 ; Rām. 2. 105. 16 ; 7. 52. 11 ; Gobhilasmṛti 3 43 ; Kathāsaritsāgara 51. $26^{cd}$–$27^{ab}$. — $G_{2}$ om. (hapl.) lines 3971–3974. — (L. 3972) $T_{1}$ नित्यशो ; $M_{3}$ धिगित्थं (for धिगर्थं). — (L. 3973) $D_{10}$ $T_{3}$ $G_{1,3,4}$ $M_{4}$ [अ]भि- (for नि-). — (L. 3974) $T_{2}$ दाराश्चोराश्च दायादा ; $T_{3}$ $G_{1,3,4}$ राजा चोरश्च दा° (for

राजतस्करदायादा भूतानि क्षय एव च ।
अर्थ एव ह्यनर्थस्य मूलमित्यवधारय ।
न ह्यनर्थाः प्रबाधन्ते नरमर्थविवर्जितम् ।
अर्थप्राप्तिमिहदुःखमाकिंचन्यं परं सुखम् ।
उपद्रवेषु चार्थानां दुःखं हि नियतं भवेत् ।
धनलाभेन तृष्णाया न तृप्तिरुपलभ्यते ।
लब्ध्वा भूयो विवर्धेत समिद्धिरिव पावकः ।
जित्वापि पृथिवीं कृत्स्नां चतुःसागरमेखलाम् ।
सागराणां पुनः पारं जेतुमिच्छत्यसंशयम् ।
अलं परिग्रहेणेह दोषवान्हि परिग्रहः ।
कोशकारः कृमिर्देवि बध्यते हि परिग्रहात् ।
य एकां पृथिवीं कृत्स्नामेकच्छत्रां प्रशास्ति च ।
एकस्मिन्नेव राष्ट्रे तु स चापि निवसेन्नृपः ।
तस्मिन्राष्ट्रेऽपि नगरमेकमेवाधितिष्ठति ।
नगरेऽपि गृहं चैकं भवेत्तस्य निवेशनम् ।
एक एव प्रतिष्ठा स्यादावासं तद्गृहेऽपि च ।
आवासे शयनं चैकं निशि यत्र प्रलीयते ।
शयनस्यार्धमेवास्य स्त्रियास्त्वर्धं विधीयते ।
तदनेन प्रसङ्गेन स्वल्पेनैव हि युज्यते ।
सर्वं ममेति संमूढो जनः पश्यति बालिशः ।
एवं सर्वोपभोगेषु स्वल्पमस्य प्रयोजनम् ।
तण्डुलप्रस्थमात्रेण यात्रा स्यात्सर्वदेहिनाम् ।
ततो भूयस्तरो भागो दुःखाय पतनाय च ।
नास्ति तृष्णासमं दुःखं नास्ति त्यागसमं सुखम् ।
सर्वान्कामान्परित्यज्य ब्रह्मभूयाय कल्पते ।
या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ।
योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम् ।
न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ।
अलाभेनेह कामानां कामांस्त्यजति पण्डितः ।
आयासविकटस्तीव्रः कामाग्निस्तर्पणारणिः ।
इन्द्रियार्थेषु संमोहात्पचत्यकुशलं जनम् ।
यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
नालमेकस्य पर्याप्तमिति पश्यन्न मुह्यति ।
यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ।
इन्द्रियाणीन्द्रियार्थेषु नैव धीरो नियोजयेत् ।
मनःषष्ठानि संयम्य नित्यमात्मनि योजयेत् ।
इन्द्रियाणां विसर्गेण दोषमृच्छत्यसंशयम् ।
संनियम्य तु तान्येव ततः सिद्धिमवाप्नुयात् ।
षण्णामात्मनि युक्तानामैश्वर्यं योऽधिगच्छति ।
न स पापैर्न चानर्थैः संयुज्येत विचक्षणः ।
अप्रमत्तः सदा रक्षेदिन्द्रियाणि विचक्षणः ।
अरक्षितेषु तेष्वाशु नरो नरकमेति हि ।
हृदि काममयश्चित्रो मोहसंचयसंभवः ।
अज्ञानरूढमूलस्तु विधित्सापरिषेचनः ।

the prior half). —(L. 3976) $M_{1.3}$ [अ]र्थाः प्रति- (for [अ]नर्थाः प्र-). — $G_2$ om. lines 3977–3984. —(L. 3977) $G_{1.2}$ $M_4$ महादुःखम्. —(L. 3979) $G_{1.3.4}$ -लोभेन (for -लाभेन). $D_{10}$ येन लोभेन तृष्णाया (for the prior half). —(L. 3980) $D_{10}$ $T_{2.3}$ $G_{1.3.4}$ लब्धाश्रयो (for लब्ध्वा भूयो). $D_{10}$ $T_{2.3}$ $G_{1.3.4}$ समिद्ध (for °द्धिर्). —(L. 3982) $T_1$ परं (for पुनः). $G_{1.3}$ om. from the post. half up to the prior half of line 3985. — $T_1$ om. (hapl.) line 3984. —(L. 3985) $D_{10}$ $T_2$ एकोपि; $T_3$ $G_4$ एको हि; $G_2$ जित्वापि; M य एतां (for य एकां). —(L. 3987) $T_1$ तस्मिन्राष्ट्रे तु नगरे (for the prior half). G एक (for एकम्). $M_4$ [अ]पि (for [अ]धि-). —(L. 3989) $D_{10}$ $G_2$ प्रविष्टः; $T_1$ गृहस्थः; $T_2$ $G_{1.3.4}$ प्रदिष्टः (for प्रतिष्ठा). $D_{10}$ T G $M_4$ आवासस् (for °सं). —(L. 3991) $T_1$ शयनं च (for °नस्य). $T_2$ [अ]त्र (for [अ]स्य). $T_1$ $G_4$ स्त्रियाश्चार्धं; $G_{1.3}$ स्त्रिया सार्धं; $M_4$ स्त्रिया स्वर्वं (for स्त्रियास्त्वर्धं). —(L. 3992) $G_4$ स्वल्पेनेह (for तदनेन). $G_4$ तदनेन (for स्वल्पेनैव). $D_{10}$ T G [इ]ह (for हि). — $G_2$ om. lines 3993–3995. —(L. 3993) $M_4$ एव (for मम). $D_{10}$ $T_{2.3}$ $G_{1.3.4}$ $M_4$ बलं (for जनः). $T_1$ जनं पश्यसि बालिशः (for the post. half). —(L. 3994) $D_{10}$ $T_{2.3}$ $G_{1.3.4}$ एवं सर्वोपयोगेषु (for the prior half). $T_1$ अस्ति (for अस्य). —(L. 3996) $D_{10}$ $T_{2.3}$ $G_{1.3}$ तयोर् (for ततो) —(L. 3997) $T_3$ तृष्णापरं (for °समं). — Lines 3999–4000 = 1, 840*, lines 5–6; 3. 2. 354; 12. 268. 12; 13. 7. 21; Harivaṃśa B. 1. 30. 42. = (var.) Bhāg. P. 9. 19. 16; Vāyu P. II. 31. 91. — Lines 4001–4002 = 1, 840* lines 1–2. —(L. 4003) $M_4$ अलब्धेन (for अलाभेन). $D_{10}$ T G [ए]व (for [इ]ह). $D_{10}$ T G $M_4$ शोकं (for कामांस्). —(L. 4004) $D_{10}$ $T_{2.3}$ G $M_4$ -विटपस्; $T_1$ -प्रभवस् (for -विकटस्). $D_{10}$ $T_2$ G $M_3$ कामाग्निः कर्षणारणिः (for the post. half). —(L. 4005) $T_1$ संमोहः (for °हात्). $T_2$ इंद्रियार्थेन संमोह्य; $G_{1-3}$ °र्थैश्च संमोह्य; $G_4$ $M_4$ °र्थैरसंमोह्यौ (for the prior half). $D_{10}$ T G $M_4$ दहति (for पचति). —(L. 4009) $T_{2.3}$ कलां नार्हति षोडशीं) for the post. half). —(L. 4012) $T_2$ वियोगेन (for विसर्गेण). $T_1$ $G_{1.3.4}$ $M_4$ [अ]संशयः (for °यम्). —(L. 4015) $D_{10}$ T G च (for स). $T_2$ न (for सं-). — $D_{10}$ $T_2$ om. (hapl.) line 4016. —(L. 4016) $M_{1-3}$ विशेषतः (for विचक्षणः). — $T_1$ om. lines 4019–4027. —(L. 4019) $T_3$ $G_1$

रोषलोभमहास्कन्धः पुरादुष्कृतसारवान् ।
आयासविटपस्तीव्रः शोकपुष्पो भयाङ्कुरः ।
नानासंकल्पपत्राढ्यः प्रमादपरिवर्धितः ।
महतीभिः पिपासाभिः समन्तात्परिवर्धितः ।
संरोहत्यकृतप्रज्ञः पादपः कामसंभवः ।
नैव रोहति तत्त्वज्ञे रूढो वा छिद्यते पुनः ।
कृच्छ्रोपायेष्वनित्येषु निःसारेषु चलेषु च ।
दुःखादिषु दुरन्तेषु कामभोगेषु का रतिः ।
येन संवत्सरो दृष्टः सकृत्कामश्च सेवितः ।
तेन सर्वमिदं दृष्टं पुनरावर्तकं जगत् ।
भोगा भुक्ता मनुष्येण स्वप्ना इव भवन्ति ते ।
स्वप्नोपभोगतुल्येषु कामभोगेषु का रतिः ।
इन्द्रियेषु च जीर्यत्सु छिद्यमाने तथायुषि ।
पुरस्ताच्च स्थिते मृत्यौ किं सुखं पश्यतः शुभे ।
व्याधिभिः पीड्यमानस्य नित्यं शारीरमानसैः ।
नरस्याकृतकृत्यस्य किं सुखं भवति प्रिये ।
संचिन्वानकमेवार्थं कामानामवितृप्तकम् ।
व्याघ्रः पशुमिवारण्ये मृत्युरादाय गच्छति ।
जन्ममृत्युजरादुःखैः सततं समभिद्रुतः ।
संसारे पच्यमानस्तु पापान्नोद्विजते जनः ।

उमा ।

केनोपायेन मर्त्यानां निवर्तेते जरान्तकौ ।
यद्यस्ति भगवन्मह्यमेतदाचक्ष्व माचिरम् ।
तपसा वा सुमहता कर्मणा वा श्रुतेन वा ।
रसायनप्रयोगैर्वा केनात्येति जरान्तकौ ।

महेश्वरः ।

नैतदस्ति महाभागे जरामृत्युनिवर्तनम् ।
सर्वलोकेषु जानीहि मोक्षादन्यत्र भामिनि ।
न धनेन न राज्येन नोग्रेण तपसापि वा ।
मरणं नातिवर्तन्ते विना मुक्त्या शरीरिणः ।
अश्वमेधसहस्रेण वाजपेयशतेन च ।
न तरन्ति जरामृत्यू निर्वाणाधिगमाद्विना ।
ऐश्वर्यं धनधान्यं च विद्या लाभस्तपस्तथा ।
रसायनप्रयोगश्च न तरन्ति जरान्तकौ ।
दानयज्ञतपःशीला रसायनविदोऽपि वा ।
स्वाध्यायनिरता वापि न तरन्ति जरान्तकौ ।
देवदानवगन्धर्वकिंनरोरगराक्षसान् ।
स्ववशे कुरुते कालो न कालस्यास्त्यगोचरः ।
न ह्यहानि निवर्तन्ते न मासा न पुनः क्षपाः ।
सोऽयं प्रपद्यतेऽध्वानमजस्रं ध्रुवमव्ययम् ।
स्रवन्ति न निवर्तन्ते स्रोतांसि सरितामिव ।
आयुरादाय मर्त्यानामहोरात्राणि संततम् ।
जीवितं सर्वभूतानामक्षयः क्षपयन्नसौ ।
आदित्यो ह्यस्तमभ्येति पुनः पुनरुदेति च ।
यस्यां रात्र्यां व्यतीतायामायुरल्पतरं भवेत् ।
गाधोदके मत्स्य इव किं नु तस्य कुमारता ।
मरणं हि शरीरस्य नियतं ध्रुवमेव च ।
तिष्ठन्नेव क्षणं सर्वः कालस्यैति वशं पुनः ।
न म्रियेरन्न जीर्येरन्यदि स्युः सर्वदेहिनः ।
न चानिष्टं प्रवर्तेत शोको वा प्राणिनां क्वचित् ।

M विवित्सा- ( for विधित्सा- ). $G_{2.4}$ विविरसा परिषेचनं ( for the post. half ). — ( L. 4020 ) $D_{10}$ लोभरोष- ( for रोष-लोभ- ). — ( L. 4021 ) $D_{10}$ $T_2$ $G_2$ भवांकुरः ( for भयाङ्कुरः ). — ( L. 4022 ) $D_{10}$ $T_{2.3}$ G $M_4$ प्रमादाद ( for °द- ). — ( L. 4023 ) $D_{10}$ $T_{2.3}$ $G_{1-3}$ M -वेष्टितः ( for -वर्धितः ). — ( L. 4024 ) $D_{10}$ कृतप्रज्ञे ; $T_{2.3}$ G M [अ]कृतप्रज्ञे ( for °प्रज्ञः ). — ( L. 4026 ) $D_{10}$ $T_{2.3}$ नित्येषु ( for [अ]नित्येषु ). $D_{10}$ $T_{2.3}$ G फलेषु ( for चलेषु ). — ( L. 4027 ) $D_{10}$ $T_{2.3}$ G $M_4$ -योगेषु ( for -भोगेषु ). — $D_{10}$ T G $M_4$ om. ( hapl. ) lines 4028–4031. — ( L. 4032 ) $T_1$ भिद्यमाने ( for छिद्य° ). — ( L. 4033 ) $T_1$ कः क्षेमः ( for किं सुखं ). — ( L. 4035 ) $D_{10}$ T G $M_4$ किं सुखं ( $T_1$ कृतं ) मरणे सति ( for the post. half ). — ( L. 4036 ) $D_{10}$ T $G_{1.3.4}$ संचिन्वानं तमेवार्थं ( for the prior half ). — ( L. 4039 ) $G_{1.3}$ संसारे पच्यमानस्य ( for the prior half ). $G_{1.3}$ मनः ; $M_4$ पुनः ( for जनः ). — ( L. 4041 ) $T_1$ तत्त्वतः ( for माचिरम् ). — ( L. 4043 ) $T_1$ तथौषध- ( for रसायन- ). — ( L. 4047 ) $T_{2.3}$ $G_{1.3.4}$ -तरते ( for -वर्तन्ते ). — ( L. 4048 ) $T_{2.3}$ $G_4$ -सहस्राणि ( for -सहस्रेण ). $D_{10}$ $T_2$ $G_{2.4}$ -शतानि ( for -शतेन ). — ( L. 4049 ) $T_3$ जरामृत्युं. $T_1$ द्विजाः ( for विना ). $T_2$ निर्वाणाधिगमार्थिना ( for the post. half ). — ( L. 4050 ) $T_1$ तथैव च ( for तपस्तथा ). — ( L. 4051 ) $D_{10}$ T G -प्रयोगाद्वै ; $M_4$ °गाद्यैर् ( for °गश्च ). — ( L. 4056 ) $T_2$ सुखानि ( for ह्यहानि ). $D_{10}$ $T_3$ मनसा ; $T_1$ तथैव ( for न मासा ). — ( L. 4057 ) $T_3$ $G_4$ ध्यानम् ( for ऽध्वानम् ). — ( L. 4059 ) $G_{1.3}$ आयुरारोग्यमैश्वर्यम् ( for the prior half ). $T_{2.3}$ $G_4$ -रात्रेषु ; $G_{1.3}$ -रात्रिषु ( for -रात्राणि ). — ( L. 4060 ) $T_3$ सततं ( for जीवितं ). — Lines 4062–4063 = ( var. ) 13. 169. $11^{abcd}$. — ( L. 4063 ) $M_{1-3}$ कुमारिका ( for °रता ). — ( L. 4064 ) $T_1$ उच्यते ( for एव च ). — ( L. 4065 ) $T_1$ [ए]व ( for [ए]ति ). — $T_1$ om. lines 4066–4067. — ( L. 4066 ) $G_2$ न म्रियेयुर्न जीर्येयुर् ( for the prior half ). $G_2$ न दस्युः (sic) ( for यदि स्युः ). — ( L. 4067 ) $G_{1.3}$ [अ]-स्थिरं ( for [अ]निष्टं ). — Line 4070 = 12. 169. $14^{ab}$;

अप्रमत्तः प्रमत्तेषु कालो भूतेषु तिष्ठति ।
अप्रमत्तस्य कालस्य क्षयं प्राप्तो न मुच्यते ।
श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ।
को हि तद्वेद यत्रासौ मृत्युना नाभिवीक्षितः ।
वर्षास्विदं करिष्यामि इदं ग्रीष्मवसन्तयोः ।
इति बालश्चिन्तयति अन्तरायं न बुध्यते ।
इदं मे स्यादिदं मे स्यादित्येवंमनसो नराः ।
अनवाप्तेषु कामेषु ह्रियन्ते मरणं प्रति ।
कालपाशेन बद्धानामहन्यहनि जीर्यताम् ।
का श्रद्धा प्राणिनां मार्गे विषमे भ्रमतां सदा ।
युवैव धर्मशीलः स्यादनिमित्तं हि जीवितम् ।
फलानामिव पक्वानां सदा हि पतनाद्भयम् ।
मर्त्यस्य किमु तैर्दारैः पुत्रैर्भोगैः प्रियैरपि ।
एकाह्ना सर्वमुत्सृज्य मृत्योर्हि वशमेयिवान् ।
जायमानांश्च संप्रेक्ष्य म्रियमाणांस्तथैव च ।
न संवेगोऽस्ति चेत्पुंसः काष्ठलोष्टसमो हि सः ।
विनाशिनो ह्यध्रुवजीवितस्य
किं बन्धुभिर्मित्रपरिग्रहैश्च ।
विहाय यद्गच्छति सर्वमेव
क्षणेन गत्वा न निवर्तते च ।
एवं चिन्तयतो नित्यं सर्वार्थानामनित्यताम् ।
उद्वेगो जायते नित्यं निर्वाणस्य पुरःसरः ।
तेनोद्वेगेन चाप्यस्य विमर्शो जायते पुनः ।
विमर्शेनाथ वैराग्यं सर्वत्रास्योपजायते ।
वैराग्येण परां शान्तिं लभन्ते मानवाः शुभे ।
मोक्षस्योपनिषद्देवि वैराग्यमिति कीर्तितम् ।
एतत्ते कथितं देवि वैराग्योत्पादनं वचः ।
एतत्सर्वं हि संचिन्त्य मुच्यन्ते हि मुमुक्षवः ।

Colophon.

महेश्वरः ।

सांख्यज्ञानं प्रवक्ष्यामि यथावत्ते शुचिस्मिते ।
यज्ज्ञात्वा न पुनर्मर्त्यैः संसारेषु प्रवर्तते ।
ज्ञानेनैव विमुक्तास्ते सांख्याः संन्यासकोविदाः ।
शारीरं तु तपो घोरं सांख्याः प्राहुर्निरर्थकम् ।
पञ्चविंशतिकं ज्ञानं तेषां ज्ञानमिति स्मृतम् ।
मूलप्रकृतिरव्यक्तमव्यक्ताज्जायते महान् ।
महतोऽभूदहंकारस्तस्मात्तन्मात्रपञ्चकम् ।
इन्द्रियाणि दशैकं च तन्मात्रेभ्यो भवन्त्युत ।
तेभ्यो भूतानि पञ्च स्युरिति क्षेत्रसमुच्चयः ।
अस्य क्षेत्रस्य संक्षेपश्चतुर्विंशतिरिष्यते ।
पञ्चविंशतिरित्याहुः पुरुषेणेह संख्यया ।
सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ।
तैः सृजत्यखिलं लोकं प्रकृतिः स्वात्मजैर्गुणैः ।
इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ।

309. $72^{ab}$; Vṛddhaśātātapa Smṛti 65. —Line 4071 = (var.) 12. 169. $14^{ef}$; 309. $72^{cd}$. —(L. 4071) $D_{10}$ $T_{2,3}$ $G_{1-3}$ कोपि; $G_4$ सोपि (for को हि). $T_3$ $G_{1,3}$ मृत्युर्येन (for मृत्युना न). $G_2$ सोभि- (for नाभि-). M मृत्युसेनाभिवीक्षते ($M_4$ °क्षितः) (for the post. half). —(L. 4072) $T_1$ इदं ग्रीष्मे च संगतं (for the post. half). —(L. 4073) T $G_2$ इति बालाश्चिनयंति (for the prior half). $G_{1,3}$ बुध्यति (for °ते). —(L. 4074) $D_{10}$ T -मनसा (for °सो). —(L. 4076) $G_{1,3}$ -पाशात्र- (for -पाशेन). —(L. 4079) $G_{2,4}$ अभि- (for इव). $G_1$ [अ]भि- (for हि). —(L. 4080) $G_{1-3}$ किं धनैर् (for किमु तैर्). —(L. 4081) $D_{10}$ T G मृत्योस्तु वशमन्वि($T_2$ °माप्नु)यात् (for the post. half). —(L. 4083) $G_2$ संयोगो (for संवेगो). $T_1$ न संत्यागो भवेत्पुंसः; $T_2$ न संयोगो न चेत्पुंसः (for the prior half). —(L. 4086) $D_{10}$ T $G_{1-3}$ एवं (for एव). —(L. 4087) $D_{10}$ स (for न). —(L. 4089) $D_{10}$ T G $M_4$ शीघ्रं (for नित्यं). $D_{10}$ $T_3$ $G_4$ परस्परं (for पुरःसरः). —(L. 4090) $M_3$ विवशो (for विमर्शो). (L. 4091) $T_{2,3}$ G विमर्शो नाम वै($G_2$ दानवै)राग्यं (for the prior half). $T_1$ [अ]पि (for [अ]स्य). $D_{10}$ $T_{2,3}$ G सर्वद्रव्येषु जायते (for the post. half). —(L. 4092) $G_2$ वैराग्येषु परां शांतिं (for the prior half). $D_{10}$ T $G_{2,4}$ लभने (for लभन्ते). $T_1$ भुवि; $G_3$ शुभैः (for शुभे). $G_{1,3}$ लभते मानवः शुभां (for the post. half) —(L. 4093) $D_{10}$ $T_{2,3}$ G दिव्यं (for देवि). $D_{10}$ $T_{2,3}$ G निश्चितं (for कीर्तितम्). —(L. 4095) $D_{10}$ $T_{2,3}$ G संचित्य (for सर्वं हि). $T_1$ एतत्संचित्य वचनं (for the prior half). $T_3$ transp. संचिन्त्य and मुच्यन्ते. —Colophon. —*Sub-parvan*: $D_{10}$ $M_{1-3}$ दानधर्म. —*Adhy. name*: $D_{10}$ $T_{2,3}$ $G_{1,2}$ उमामहेश्वरसंवादे वैराग्यलक्षणं; M उमामहेश्वरसंवादः. —*Adhy. no.*: $D_{10}$ $T_{2,3}$ $G_{2,4}$ 227; $T_1$ $M_4$ 219; $G_{1,3}$ $M_1$ 221; $M_{2,3}$ 222. —$G_3$ om. from the post. half of line 4099 up to the prior half of line 4102. —(L. 4100) $M_{2,3}$ -विंशतिवि- (for °तिकं). —(L. 4102) $T_2$ त्वपि (foc ऽभूद्). —$T_2$ om. lines 4104–4105. —(L. 4104) $D_{10}$ $T_{1,3}$ G $M_4$ पंचस्य (for पञ्च स्युर्). $D_{10}$ $T_{1,3}$ G $M_4$ शारीरं यैः ($T_3$ यः) प्रवर्तते (for the post. half). —(L. 4105) $D_{10}$ $T_{1,3}$ G $M_4$ इति (for अस्य). —(L. 4107) $D_{10}$ T G $M_4$ चेति (for इति). —(L. 4108) $G_2$ स्वात्मकैर् (for °जैर्). —(L. 4109) $G_4$ संसारश्च् (for संघातश्च्). —(L. 4110) $T_{1,2}$ $G_{1-3}$ चैव (for चैते). $T_1$

रोषलोभमहास्कन्धः पुरादुष्कृतसारवान् ।
आयासविटपस्तीव्रः शोकपुष्पो भयाङ्कुरः ।
नानासंकल्पपत्राढ्यः प्रमादपरिवर्धितः ।
महतीभिः पिपासाभिः समन्तात्परिवर्धितः ।
संरोहत्यकृतप्रज्ञः पादपः कामसंभवः ।
नैव रोहति तत्त्वज्ञे रूढो वा छिद्यते पुनः ।
कृच्छ्रोपायेष्वनित्येषु निःसारेषु चलेषु च ।
दुःखादिषु दुरन्तेषु कामभोगेषु का रतिः ।
येन संवत्सरो दृष्टः सकृत्कामश्च सेवितः ।
तेन सर्वमिदं दृष्टं पुनरावर्तकं जगत् ।
भोगा भुक्ता मनुष्येण स्वप्ना इव भवन्ति ते ।
स्वप्नोपभोगतुल्येषु कामभोगेषु का रतिः ।
इन्द्रियेषु च जीर्यत्सु छिद्यमाने तथायुषि ।
पुरस्ताच्च स्थिते मृत्यौ किं सुखं पश्यतः शुभे ।
व्याधिभिः पीड्यमानस्य नित्यं शारीरमानसैः ।
नरस्याकृतकृत्यस्य किं सुखं भवति प्रिये ।
संचिन्वानकमेवार्थं कामानामवितृप्तकम् ।
व्याघ्रः पशुमिवारण्ये मृत्युरादाय गच्छति ।
जन्ममृत्युजरादुःखैः सततं समभिद्रुतः ।
संसारे पच्यमानस्तु पापान्नोद्विजते जनः ।

उमा ।

केनोपायेन मर्त्यानां निवर्तेते जरान्तकौ ।
यद्यस्ति भगवन्मह्यमेतदाचक्ष्व माचिरम् ।
तपसा वा सुमहता कर्मणा वा श्रुतेन वा ।
रसायनप्रयोगैर्वा केनात्येति जरान्तकौ ।

महेश्वरः ।

नैतदस्ति महाभागे जरामृत्युनिवर्तनम् ।
सर्वलोकेषु जानीहि मोक्षादन्यत्र भामिनि ।
न धनेन न राज्येन नोग्रेण तपसापि वा ।
मरणं नातिवर्तन्ते विना मुक्त्या शरीरिणः ।
अश्वमेधसहस्रेण वाजपेयशतेन च ।
न तरन्ति जरामृत्यू निर्वाणाधिगमाद्विना ।
ऐश्वर्यं धनधान्यं च विद्या लाभस्तपस्तथा ।
रसायनप्रयोगश्च न तरन्ति जरान्तकौ ।
दानयज्ञतपःशीला रसायनविदोऽपि वा ।
स्वाध्यायनिरता वापि न तरन्ति जरान्तकौ ।
देवदानवगन्धर्वकिंनरोरगराक्षसान् ।
स्ववशे कुरुते कालो न कालस्यास्त्यगोचरः ।
न ह्यहानि निवर्तन्ते न मासा न पुनः क्षपाः ।
सोऽयं प्रपद्यतेऽध्वानमजस्रं ध्रुवमव्ययम् ।
स्रवन्ति न निवर्तन्ते स्रोतांसि सरितामिव ।
आयुरादाय मर्त्यानामहोरात्राणि संततम् ।
जीवितं सर्वभूतानामक्षयः क्षपयन्नसौ ।
आदित्यो ह्यस्तमभ्येति पुनः पुनरुदेति च ।
यस्यां रात्र्यां व्यतीतायामायुरल्पतरं भवेत् ।
गाधोदके मत्स्य इव किं नु तस्य कुमारता ।
मरणं हि शरीरस्य नियतं ध्रुवमेव च ।
तिष्ठत्येव क्षणं सर्वः कालस्यैति वशं पुनः ।
न म्रियेरन्न जीर्येरन्यदि स्युः सर्वदेहिनः ।
न चानिष्टं प्रवर्तेत शोको वा प्राणिनां क्वचित् ।

M विवित्सा- ( for विधित्सा- ). G2.4 विधित्सा परिषेचनं ( for the post. half ). — ( L. 4020 ) D10 लोभरोष- ( for रोषलोभ- ). — ( L. 4021 ) D10 T2 G2 भवांकुरः ( for भयाङ्कुरः ). — ( L. 4022 ) D10 T2.3 G M4 प्रमादाद्व ( for °द- ). — ( L. 4023 ) D10 T2.3 G1-3 M -वेष्टितः ( for -वर्धितः ). — ( L. 4024 ) D10 कृतप्रज्ञे ; T2.3 G M [अ]कृतप्रज्ञे ( for °प्रज्ञः ). — ( L. 4026 ) D10 T2.3 नित्येषु ( for [अ]नित्येषु ). D10 T2.3 G फलेषु ( for चलेषु ). — ( L. 4027 ) D10 T2.3 G M4 -योगेषु ( for -भोगेषु ). — D10 T G M4 om. ( hapl. ) lines 4028–4031. — ( L. 4032 ) T1 भिद्यमाने ( for छिद्य° ). — ( L. 4033 ) T1 कः क्षेमः ( for किं सुखं ). — ( L. 4035 ) D10 T G M4 किं सुखं ( T1 कुतं ) मरणे सति ( for the post. half ). — ( L. 4036 ) D10 T G1.3.4 संचिन्वानं तमेवार्थं ( for the prior half ). — ( L. 4039 ) G1.3 संसारे पच्यमानस्य ( for the prior half ). G1.3 मनः ; M4 पुनः ( for जनः ). — ( L. 4041 ) T1 तत्त्वतः ( for माचिरम् ). — ( L. 4043 ) T1 तथौषध- ( for रसायन- ). — ( L. 4047 ) T2.3 G1.3.4 -तरते ( for -वर्तन्ते ). — ( L. 4048 ) T2.3 G4 -सहस्राणि ( for -सहस्रेण ). D10 T2 G2.4 -शतानि ( for -शतेन ). — ( L. 4049 ) T3 जरामृत्युं. T1 द्विजाः ( for विना ). T2 निर्वाणाधिगमार्थिना. ( for the post. half ). — ( L. 4050 ) T1 तथैव च ( for तपस्तथा ). — ( L. 4051 ) D10 T G -प्रयोगाद्वै ; M4 °गाद्यैर् ( for °गश्च ). — ( L. 4056 ) T2 सुखानि ( for ह्यहानि ). D10 T3 मनसा ; T1 तथैव ( for न मासा ). — ( L. 4057 ) T3 G4 ध्यानम् ( for ऽध्वानम् ). — ( L. 4059 ) G1.3 आयुरारोग्यमैश्वर्यम् ( for the prior half ). T2.3 G4 -रात्रेषु ; G1.3 -रात्रिषु ( for -रात्राणि ). — ( L. 4060 ) T3 सततं ( for जीवितं ). — Lines 4062-4063 = ( var. ) 13. 169. 11[abcd]. — ( L. 4063 ) M1-3 कुमारिका ( for °रता ). — ( L. 4064 ) T1 उच्यते ( for एव च ). — ( L. 4065 ) T1 [ए]व ( for [ए]ति ). — T1 om. lines 4066–4067. — ( L. 4066 ) G2 न म्रियेयुर्न जीर्येयुर् ( for the prior half ). G2 न दस्युः (sic) ( for यदि स्युः ). — ( L. 4067 ) G1.3 [अ]स्थिरं ( for [अ]निष्टं ). — Line 4070 = 12. 169. 14[ab] ;

अप्रमत्तः प्रमत्तेषु कालो भूतेषु तिष्ठति ।
अप्रमत्तस्य कालस्य क्षयं प्राप्तो न मुच्यते ।
श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ।
को हि तद्वेद यत्रासौ मृत्युना नाभिवीक्षितः ।
वर्षास्विदं करिष्यामि इदं ग्रीष्मवसन्तयोः ।
इति बालश्चिन्तयति अन्तरायं न बुध्यते ।
इदं मे स्यादिदं मे स्यादित्येवंमनसो नराः ।
अनवाप्तेषु कामेषु ह्रियन्ते मरणं प्रति ।
कालपाशेन बद्धानामहन्यहनि जीर्यताम् ।
का श्रद्धा प्राणिनां मार्गे विषमे भ्रमतां सदा ।
युवैव धर्मशीलः स्यादनिमित्तं हि जीवितम् ।
फलानामिव पक्वानां सदा हि पतनाद्भयम् ।
मर्त्यस्य किमु तैर्दारैः पुत्रैर्भोगैः प्रियैरपि ।
एकाह्ना सर्वमुत्सृज्य मृत्योर्हि वशमेयिवान् ।
जायमानांश्च संप्रेक्ष्य म्रियमाणांस्तथैव च ।
न संवेगोऽस्ति चेत्पुंसः काष्ठलोष्टसमो हि सः ।
विनाशिनो ह्यध्रुवजीवितस्य
किं बन्धुभिर्मित्रपरिग्रहैश्च ।
विहाय यद्गच्छति सर्वमेव
क्षणेन गत्वा न निवर्तते च ।
एवं चिन्तयतो नित्यं सर्वार्थानामनित्यताम् ।
उद्वेगो जायते नित्यं निर्वाणस्य पुरःसरः ।
तेनोद्वेगेन चाप्यस्य विमर्शो जायते पुनः ।
विमर्शेनाथ वैराग्यं सर्वत्रास्योपजायते ।
वैराग्येण परां शान्तिं लभन्ते मानवाः शुभे ।
मोक्षस्योपनिषद्देवि वैराग्यमिति कीर्तितम् ।
एतत्ते कथितं देवि वैराग्योत्पादनं वचः ।
एतत्सर्वं हि संचिन्त्य मुच्यन्ते हि मुमुक्षवः ।

Colophon.

महेश्वरः ।

सांख्यज्ञानं प्रवक्ष्यामि यथावत्ते शुचिस्मिते ।
यज्ज्ञात्वा न पुनर्मर्त्यः संसारेषु प्रवर्तते ।
ज्ञानेनैव विमुक्तास्ते सांख्याः संन्यासकोविदाः ।
शारीरं तु तपो घोरं सांख्याः प्राहुर्निरर्थकम् ।
पञ्चविंशतिकं ज्ञानं तेषां ज्ञानमिति स्मृतम् ।
मूलप्रकृतिरव्यक्तमव्यक्ताज्जायते महान् ।
महतोऽभूदहंकारस्तस्मात्तन्मात्रपञ्चकम् ।
इन्द्रियाणि दशैकं च तन्मात्रेभ्यो भवन्त्युत ।
तेभ्यो भूतानि पञ्च स्युरिति क्षेत्रसमुच्चयः ।
अस्य क्षेत्रस्य संक्षेपश्चतुर्विंशतिरिष्यते ।
पञ्चविंशतिरित्याहुः पुरुषेणेह संख्यया ।
सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ।
तैः सृजत्यखिलं लोकं प्रकृतिः स्वात्मजैर्गुणैः ।
इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ।

---

309. $72^{ab}$; Vṛddhaśātātapa Smṛti 65. —Line 4071 = (var.) 12. 169. $14^{ef}$; 309. $72^{cd}$. — (L. 4071) D10 T2.3 G1-3 कोपि; G4 सोपि (for को हि). T3 G1.3 मृत्युर्येन (for मृत्युना न). G2 सोभि- (for नाभि-). M मृत्युसेनाभिवीक्षते (M4 °क्षितः) (for the post. half). — (L. 4072) T1 इदं ग्रीष्मे च संगतं (for the post. half). — (L. 4073) T G2 इति बालाश्चिन्तयंति (for the prior half). G1.3 बुध्यति (for °ते). — (L. 4074) D10 T -मनसा (for °सो). — (L. 4076) G1.3 -पाशाव- (for -पाशेन). — (L. 4079) G2.4 अभि- (for इव). G1 [अ]भि- (for हि). — (L. 4080) G1-3 किं धनैर् (for किमु तैर्). — (L. 4081) D10 T G मृत्योस्तु वशमन्वि(T2 °मामु)यात् (for the post. half). — (L. 4083) G2 संयोगो (for संवेगो). T1 न संत्यागो भवेत्पुंसः; T2 न संयोगो न चेत्पुंसः (for the prior half). — (L. 4086) D10 T G1-3 एवं (for एव). — (L. 4087) D10 स (for न). — (L. 4089) D10 T G M4 तीव्रं (for नित्यं). D10 T3 G4 परस्परं (for पुरःसरः). — (L. 4090) M3 विवशो (for विमर्शो). (L. 4091) T2.3 G विनशो नाम वै(G2 दानवे)राग्यं (for the prior half). T1 [अ]पि (for [अ]स्य). D10 T2.3 G सर्वद्रव्येषु जायते (for the post. half). — (L. 4092) G2 वैराग्येषु परां शांतिं (for the prior half). D10 T G2.4 लभते (for लभन्ते). T1 भुवि; G3 शुभैः (for शुभे). G1.3 लभते मानवः शुभां (for the post. half) — (L. 4093) D10 T2.3 G दिव्यं (for देवि). D10 T2.3 G निश्चितं (for कीर्तितम्). — (L. 4095) D10 T2.3 G संचित्य (for सर्वं हि). T1 एतत्संचिंत्य वचनं (for the prior half). T2 transp. संचिन्त्य and मुच्यन्ते. — Colophon. — *Sub-parvan :* D10 M1-3 दानधर्म. — *Adhy. name :* D10 T2.3 G1.3 उमामहेश्वरसंवादे वैराग्यलक्षणं; M उमामहेश्वरसंवादः. — *Adhy. no. :* D10 T2.3 G2.4 227; T1 M4 219; G1.3 M1 221; M2.3 222. — G3 om. from the post. half of line 4099 up to the prior half of line 4102. — (L. 4100) M2.3 -विंशतिवि- (for °तिकं). — (L. 4102) T2 त्वपि (for ऽभूद्). — T3 om. lines 4104-4105. — (L. 4104) D10 T1.3 G M4 [illegible] (for पञ्च स्युर्). D10 T1.3 G M4 शारीरं [illegible] प्रवर्तते (for the post. half). — (L. 4105) [illegible] T1.3 G M4 इति (for अस्य). — (L. 4107) [illegible] G M4 चेति (for इति). — (L. 4108) G4 [illegible] (for °जैर्). — (L. 4109) G4 संसारम् (for [illegible] — (L. 4110) T1.3 G1-3 चैष (for [illegible]

विकाराः प्रकृतेश्चैते वेदितव्या मनीषिभिः ।
लक्षणं चापि सर्वेषां विकल्पं चादितः पृथक् ।
विस्तरेण प्रवक्ष्यामि तस्य व्याख्यामिमां शृणु ।
नित्यमेकमणु व्यापि क्रियाहीनमहेतुकम् ।
अग्राह्यमिन्द्रियैः सर्वैरेतदव्यक्तलक्षणम् ।
अव्यक्तं प्रकृतिर्मूलं प्रधानं योनिरव्ययम् ।
अव्यक्तस्यैव नामानि शब्दैः पर्यायवाचकैः ।
तत्सूक्ष्मत्वादनिर्देश्यं तत्सदित्यभिधीयते ।
तन्मूलं च जगत्सर्वं तन्मूला सृष्टिरिष्यते ।
सत्त्वादयः प्रकृतिजा गुणास्तान्प्रब्रवीम्यहम् ।
सुखं तुष्टिः प्रकाशश्च त्रयस्ते सात्त्विका गुणाः ।
रागद्वेषौ सुखं दुःखं स्तम्भश्च रजसो गुणाः ।
अप्रकाशो भयं मोहस्तन्द्री च तमसो गुणाः ।
श्रद्धा प्रहर्षो विज्ञानमसंमोहो दया धृतिः ।
सत्त्वे प्रवृद्धे वर्धन्ते विपरीते विपर्ययः ।
कामः क्रोधो मनस्तापो द्रोहो लोभस्तथा तृषा ।
प्रवृद्धे परिवर्धन्ते रजस्येतानि नित्यशः ।
विषादः संशयो मोहस्तन्द्री निद्रा भयं तथा ।
तमस्येतानि वर्धन्ते प्रवृद्धे हेत्वहेतुभिः ।
एवमन्योन्यमेतानि वर्धन्ते च पुनः पुनः ।
हीयन्ते च तथा नित्यमभिभूतानि भूरिभिः ।
तत्र यत्प्रीतिसंयुक्तं काये मनसि वा भवेत् ।
वर्तते सात्त्विको भाव इत्युपेक्षेत तत्तथा ।
यदा संतापसंयुक्तं चित्तक्षोभकरं भवेत् ।
वर्तते रज इत्येवं तदा तदभिचिन्तयेत् ।
यदा संमोहसंयुक्तं यद्विषादकरं भवेत् ।
अप्रतर्क्यमविज्ञेयं तमस्तदुपधारयेत् ।
समासात्सात्त्विको धर्मः समासाद्राजसं धनम् ।
समासात्तामसः कामस्त्रिवर्गे त्रिगुणक्रमात् ।
ब्रह्मादिदेवसृष्टिर्या सात्त्विकीति प्रकीर्त्यते ।
राजसी मानुषी सृष्टिस्तिर्यग्योनिस्तु तामसी ।
ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ।
देवमानुषतिर्यक्षु यद्भूतं सचराचरम् ।
आदिप्रभृति संयुक्तं व्याप्तमेभिस्त्रिभिर्गुणैः ।
अतः परं प्रवक्ष्यामि महदादीनि लिङ्गतः ।
विज्ञानं च विवेकश्च महतो लक्षणं भवेत् ।
महान्बुद्धिर्मतिः प्रज्ञा नामानि महतो विदुः ।
महदादिक्रियायोगे महत्त्वं चोपजायते ।
अभिमानः पुनस्तत्र महतो वैकृताद्भवेत् ।
अहंकारः स विज्ञेयो लक्षणेन समासतः ।
अहंकारेण भूतानां सर्वेषां प्रभवाप्ययौ ।
अहंकारनिवृत्तिर्हि निर्वाणायोपपद्यते ।
खं वायुरग्निः सलिलं पृथिवी चेति पञ्चमी ।
महाभूतानि भूतानां सर्वेषां प्रभवाप्ययौ ।
शब्दः श्रोत्रं तथा खानि त्रयमाकाशसंभवम् ।
स्पर्शस्त्वक्प्राणिनां चेष्टा पवनस्य गुणाः स्मृताः ।
रूपं पाकोऽक्षिणी ज्योतिश्चत्वारस्तेजसो गुणाः ।
रसः स्नेहस्तथा जिह्वा शैत्यं च जलजा गुणाः ।
गन्धो घ्राणं शरीरं च पृथिव्यास्ते गुणास्त्रयः ।
इति सर्वगुणा देवि व्याख्याताः पाञ्चभौतिकाः ।
गुणान्पूर्वस्य पूर्वस्य प्राप्नुवन्त्युत्तराणि तु ।
तस्मान्नैकगुणाश्चेह दृश्यन्ते भूतसृष्टयः ।
उपलभ्याप्सु ये गन्धं केचिद्ब्रूयुरनैपुणाः ।

मनीषिणः (for °षिभिः). —(L. 4111) T2 विकल्पस्तु (for °ल्पं च). —(L. 4112) D10 T [ए]व (for प्र-). D10 T1. 2 G1. 3. 4 अहं (for इमां). T3 G2 तस्य व्याख्या- (G2 वक्ष्या)म्यहं शृणु (for the post. half). —(L. 4113) D10 T3 शृणु; T2 गुण- (for अणु). —(L. 4118) D10 मूलत्वं (for तन्मूलं). — T2 om. (hapl.) line 4122. —(L. 4123) D10 T1. 2 G1–3 M -प्रहर्षौ (for प्रहर्षो). —(L. 4124) D10 T1. 2 G प्रवृत्ते (for प्रवृद्धे). —(L. 4125) D10 T G M3 कामक्रोधौ (for कामः क्रोधो). T1 मोहस् (for लोभस्). —(L. 4126) T1 विवृद्धे; G1. 3 प्रवृत्ते (for प्रवृद्धे). T3 G2 -वर्तते (for -वर्धन्ते). D10 T2. 3 G सर्वशः (for नित्यशः). —(L. 4128) D10 T2. 3 G प्रवृद्धे हेत्वहेतुकः (for the post. half). —(L. 4129) T1 विवर्धते (for वर्धन्ते च). —(L. 4130) D10 G3 हसंते (for हीयन्ते). T2 [अ]न्योन्यम् (for नित्यम्). D10 T G1. 3. 4 भूरिशः (for °भिः). —(L. 4131) T1 यथा तु प्रिय- संयुक्तं (for the prior half). D10 T G1. 2. 4 M3 कायेन मनसापि वा; G3 यद्विषादकरं भवेत् (for the post. ha — G3 om. line 4132. T1 om. (hapl.) lines 41 4135; T3 om. (hapl.) lines 4134–4136. — 4134) D10 T2 G M3 इत्येव. — T1 om. lines 41 4138. —(L. 4137) T2 सात्त्विकं (for राजसं). — 4138) D10 T2 त्रिगुणाः (for °ण-). —(L. 41 G2 प्रकीर्तिता (for °र्त्यते). —(L. 4140) T2 ताम G1. 3 मानवी (for मानुषी). —(L. 4144) M3 ( as above) संसक्तं (for संयुक्तं). —(L. 4146) G ( (for °कश्च). — D10 om. lines 4148–4150. T G om. lines 4148–4149. —(L. 4156) T2. 3 G1. स्पर्शवत्; G2 शब्दवत् (for स्पर्शस्त्वक्). T1 स्पर्शस्त्वक् संसारः पवनान्निर्गताः स्मृताः. —(L. 4160) D10 T2 विख्याताः (for व्या°). — T1 om. line 4162. —( 4163) T2 उपविश्य (for °लभ्य). —(L. 416 T1 M3 पृथिव्याम्. —(L. 4166) T3 संस्मृतं ( संस्थितम्). — T3 om. (hapl.) lines 4167–4169. —(

अपां गन्धगुणं प्राज्ञा नेच्छन्ति कमलेक्षणे ।
तद्गन्धत्वमपां नास्ति पृथिव्या एव तद्गुणः ।
भूमेर्गन्धो रसे स्नेहो ज्योतिश्चक्षुषि संस्थितम् ।
प्राणापानाश्रयो वायुः खेष्वाकाशः शरीरिणाम् ।
केशास्थिनखदन्तत्वक्पाणिपादशिरांसि च ।
पृष्ठोदरकटिग्रीवाः सर्वं भूम्यात्मकं स्मृतम् ।
यत्किंचिदपि कायेऽस्मिन्धातुदोषमलाश्रितम् ।
तत्सर्वं भौतिकं विद्धि देहे नैवास्त्यभौतिकम् ।
बुद्धीन्द्रियाणि कर्णस्त्वगक्षि जिह्वाथ नासिका ।
कर्मेन्द्रियाणि वाक्पाणिः पादो मेढ्रं गुदं तथा ।
शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः ।
बुद्धीन्द्रियार्थाञ्जानीयाद्भूतेभ्यस्त्वभिनिःसृतान् ।
वाक्यं क्रिया गतिः प्रीतिरुत्सर्गश्चेति पञ्चधा ।
कर्मेन्द्रियार्थाञ्जानीयात्ते च भूतोद्भवा मताः ।
इन्द्रियाणां तु सर्वेषामीश्वरं मन उच्यते ।
प्रार्थनालक्षणं तच्च इन्द्रियं तु मनः स्मृतम् ।
नियुङ्क्ते च सदा तानि भूतात्मा मनसा सह ।
नियमे च विसर्गे च मनसः कारणं प्रभुः ।
इन्द्रियाणीन्द्रियार्थाश्च स्वभावश्चेतना धृतिः ।
भूताभूतविकारश्च शरीरमिति संज्ञितम् ।
शरीराच्च परो देही शरीरं च व्यपाश्रितः ।
शरीरिणः शरीरस्य योऽन्तरं वेत्ति वै मुनिः ।
अरसस्पर्शगन्धं च रूपशब्दविवर्जितम् ।
अशरीरं शरीरेषु दिदृक्षेत निरिन्द्रियम् ।
अव्यक्तं सर्वदेहेषु मर्त्येष्वमरमाश्रितम् ।
यः पश्येत्परमात्मानं बन्धनैः स विमुच्यते ।
नैवायं चक्षुषा ग्राह्यो नापरैरिन्द्रियैरपि ।
मनसैव प्रदीपेन महानात्मा प्रदृश्यते ।
स हि सर्वेषु भूतेषु स्थावरेषु चरेषु च ।
वसत्येको महावीर्यो नानाभावसमन्वितः ।
नैव चोर्ध्वं न तिर्यक्च नाधस्तान्न कुतश्चन ।
इन्द्रियैरिह बुद्ध्या वा न दृश्येत कदाचन ।
नवद्वारं पुरं गत्वा हंसोऽसौ नीयते वशम् ।
ईश्वरः सर्वभूतेषु स्थावरस्य चरस्य च ।
तमेवाहुरणुभ्योऽणुं तं महद्भ्यो महत्तरम् ।
बहुधा सर्वभूतानि व्याप्य तिष्ठति शाश्वतः ।
क्षेत्रज्ञमेकतः कृत्वा सर्वं क्षेत्रमथैकतः ।
एवं संविमृशेज्ज्ञानी संयतः सततं हृदा ।
पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान् ।
अकर्तालेपको नित्यो मध्यस्थः सर्वकर्मणाम् ।
कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ।
अजरोऽयमचिन्त्योऽयमव्यक्तोऽयं सनातनः ।
देहे तेजोमयो देही तिष्ठतीत्यपरे विदुः ।
ज्ञानमूष्मा च वायुश्च शरीरे जीवसंज्ञितः ।
इत्येके निश्चिता बुद्ध्या तत्र ये बुद्धिचिन्तकाः ।
अपरे सर्वलोकांश्च व्याप्य तिष्ठन्तमीश्वरम् ।
ब्रुवते केचिदत्रैव तिले तैलवदास्थितम् ।
अपरे नास्तिका मूढा हीनत्वात्सूक्ष्मलक्षणैः ।
नास्त्यात्मेति विनिश्चित्य प्राहुस्ते निरयालयाः ।

4169) $M_{1-3}$ -ग्रीवं (for -ग्रीवाः). $T_1$ भूतात्मकं (for भूम्यात्मकं). —(L. 4171) $T_1$ तस्मात्त्वं (for तत्सर्वं). $T_1$ देही नैव तु भौतिकः (for the post. half). —(L. 4172) $T_1$ श्रोत्रं (for कर्णस्). $D_{10}$ $T_{2,3}$ G चक्षुर् (for अक्षि). —(L. 4173) $D_{10}$ T G $M_4$ पाणि- (for पाणिः). $T_{2,3}$ $G_4$ गुदस् (for गुदं). $T_1$ पादमेढ्रगुदास्तथा (for the post. half). —(L. 4176) $G_{2,3}$ पंचमः (for पञ्चधा). —(L. 4178) $G_4$ परमं (for ईश्वरं). —$T_1$ om. lines 4180–4181. —(L. 4183) $T_1$ $G_{1,3}$ $M_{1-3}$ -विकाराश् (for °रश्). $D_{10}$ $T_{2,3}$ G संस्थितं (for संज्ञितम्). —(L. 4184) $T_1$ शरीरं समुपस्थितः (for the post. half). —(L. 4185) $T_1$ शरीरिणं शरीरं च (for the prior half). $D_{10}$ $T_2$ G सो (for .यो). $T_3$ वेद (for वेत्ति). —(L. 4186) $T_1$ -रूपं (for -गन्धं). $D_{10}$ $T_{2,3}$ G $M_4$ रसः स्पर्शश्च गंधश्च (for the prior half). —(L. 4187) $T_1$ निरीक्षेत; $G_3$ निरीक्षेत्तन् (for दिदृक्षेत). —(L. 4188) $T_1$ मर्त्येष्वमरतां गतं (for the post. half). —(L. 4190) $T_1$ सर्वैर् (for [अ]परैर्). —(L. 4191) $D_{10}$ T G $M_4$ [ए]व (for [ए]प). $T_2$ $G_2$ प्रदीप्तेन (for °पेन). —(L. 4194) $D_{10}$ T G $M_4$ कदाचन (for कुतश्चन). —(L. 4195) $T_1$ वेह; $G_2$ एव (for इह). —(L. 4196) $M_{1-3}$ बुद्ध्वा (for गत्वा). $T_1$ वशे; $M_4$ वशी (for वशम्). $D_{10}$ $T_{2,3}$ G सततं ($G_{1,3}$ ततोसौ; $G_2$ स्थितोसौ) नियतो वशी (for the post. half). —(L. 4197) $D_{10}$ $T_{2,3}$ G $M_4$ -लोकेषु; $T_1$ -लोकस्य (for -भूतेषु). —(L. 4198) $M_{1,3}$ [अ]णुर् (for [आ]हुर्). —(L. 4199) $T_{2,3}$ $G_4$ शाश्वतं (for °तः). —(L. 4200) $T_1$ सर्वक्षेत्रे तथैकतः (for the post. half). —(L. 4201) $T_1$ संविमृशन्; $G_{1,3,4}$ स विमृशेज् (for संवि°). $D_{10}$ $T_2$ G हृदि (for हृदा). — After line 4201, $T_1$ ins.:

तमेव परमात्मानं मुच्यते सर्वकिल्बिषैः ।

—(L. 4206) $T_1$ अक्षरो; $M_1$ अत्वरो (for अजरो). —(L. 4207) $T_2$ देही (for देहे). $T_2$ देहे (for देही). —(L. 4208) $D_{10}$ G -संज्ञकः; T -संज्ञिकः (for -संज्ञितः). —(L. 4209) $D_{10}$ $T_{2,3}$ G [ए]ते; $T_1$ [ए]वं (for [ए]के). $D_{10}$ $T_{2,3}$ G [ए]ते (for ये). $T_1$ वर्धंतेध्यात्मचिंतकाः

एवं नानाविधानेन विमृशन्ति महेश्वरम् ।
ऊहवान्ब्राह्मणो लोके नित्यमव्ययमक्षरम् ।
अस्त्यात्मा सर्वदेहेषु हेतुस्तत्र सुदुर्गमः ।
ऋषिभिश्चापि देवैश्च व्यक्तमेष तु दृश्यते ।
दृष्ट्वा ततं महात्मानं पुनस्तत्र निवर्तते ।
तस्मात्तद्दर्शनादेव विन्दते परमां गतिम् ।
इति ते कथितो देवि सांख्यधर्मः सनातनः ।
कपिलादिभिराचार्यैः सेवितः परमर्षिभिः ।

Colophon.

महेश्वरः ।

सांख्यज्ञानेन युक्तानां तदेतत्कीर्तितं मया ।
योगधर्मं पुनः कृत्स्नं कीर्तयिष्यामि मे शृणु ।
स च योगो द्विधा भिन्नो ब्रह्मदेवर्षिसेवितः ।
समानमुभयत्रापि वृत्तं शास्त्रप्रचोदितम् ।
स चाष्टगुणमैश्वर्यमधिकृत्य विधीयते ।
सायुज्यं सर्वदेवानां योगधर्मः परः स्मृतः ।
ज्ञानं सर्वस्य योगस्य मूलमित्यवधारय ।
व्रतोपवासनियमैस्तैस्तैस्तत्परिबृंहयेत् ।
ऐकात्म्यं बुद्धिमनसोरिन्द्रियाणां च सर्वशः ।
आत्मन्यव्ययिनि प्राज्ञे ज्ञानमेतत्तु योगिनाम् ।
अर्चयेद्ब्राह्मणानग्नीन्देवतायतनानि च ।
वर्जयेदशिवां वाचं भवेत्सत्त्वमुपाश्रितः ।
दानमध्ययनं श्रद्धा व्रतानि नियमास्तथा ।
सम्यगाहारशुद्धिश्च शौचमिन्द्रियनिग्रहः ।
एतैस्तु वर्धते तेजः पापं चाप्यवधूयते ।
धूतपाप्मा च तेजस्वी लघ्वाहारो जितेन्द्रियः ।
निःशोको निर्मलो दान्तः पश्चाद्योगं समाचरेत् ।
अवदध्यान्मनः पूर्वं मत्स्यघात इवामिषम् ।
एकान्ते विजने देशे सर्वतः संवृते शुचौ ।
कल्पयेदासनं तत्र स्वास्तीर्णं मृदुभिः कुशैः ।
उपविश्यासने तस्मिन्नृजुकायशिरोधरः ।
अव्यग्रः सुखमासीनः स्वाङ्गानि न विकम्पयेत् ।
संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ।
भ्रुवोर्मध्ये मनः कृत्वा चिन्तयित्वा शरीरिणम् ।
यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ।
मनोवस्थापनं देवि योगस्योपनिषद्भवेत् ।
तस्मात्सर्वप्रयत्नेन मनोऽवस्थापयेत्सदा ।
त्वक्श्रोत्रं च ततो जिह्वां घ्राणं चक्षुश्च संहरेत् ।
पञ्चेन्द्रियाणि संधाय मनसि स्थापयेद्बुधः ।
सर्वं चापोह्य संकल्पमात्मनि स्थापयेन्मनः ।
यदैतान्यवतिष्ठन्ते मनःषष्ठानि चात्मनि ।

( for the post. half ). — ( L. 4212 ) $T_{3}$ $G_{4}$ भिन्नत्वात् ( for हीन° ). — ( L. 4213 ) $D_{10}$ $T_{2.3}$ G $M_{4}$ प्रजास्ते; $T_{1}$ स्मास्यंति ( for प्राहुस्ते ). — ( L. 4214 ) $T_{1}$ -विधं देव; $T_{3}$ -विधेनैव ( for -विधानेन ). $T_{1}$ परात्परं ( for महेश्वरम् ). — ( L. 4215 ) $T_{1}$ ऊचुश्च; $G_{1}$ ( also as above ).$_{3}$ भगवन् ( for ऊहवान् ). $T_{2}$ नित्यमक्षरमव्ययं ( for the post. half ). — ( L. 4216 ) G -भूतेषु; $M_{1-3}$ -लोकेषु ( for -देहेषु ). — ( L. 4217 ) $T_{1}$ ऋषिभिर्दैवतैश्चापि ( for the prior half ). $T_{1}$ $M_{1}$ एव ( for एष ). $D_{10}$ T G $M_{4}$ न ( for तु ). — ( L. 4218 ) $D_{10}$ T G $M_{4}$ दृष्ट्वा तु तं ( $G_{2}$ कृतं ) ( for दृष्ट्वा ततं ). $T_{1}$ $G_{1-3}$ M तु ( for तत् ). — ( L. 4219 ) $T_{1}$ देवि ( for एव ). — ( L. 4220 ) $M_{4}$ सांख्यैर् ( for सांख्य- ). — Colophon. — *Sub-parvan* : $D_{10}$ दानधर्मं. — *Adhy. name* : $D_{10}$ उमामहेश्वरसंवादे सांख्ययोगः; $T_{3}$ उमामहेश्वरसंवादे सांख्यंज्ञानं; $T_{3}$ $M_{4}$ उमामहेश्वरसंवादः; $G_{3}$ सांख्ययोगविधिः; $M_{1-3}$ उमामहेश्वरसंवादे मोक्षाधिकारे सांख्यज्ञानकथनं. — *Adhy. no.* : $D_{10}$ $T_{2.3}$ $G_{2.4}$ 228; $T_{1}$ $M_{4}$ 220; $G_{1.3}$ $M_{1}$ 222; $M_{2.3}$ 223. — ( L. 4222 ) $D_{10}$ $T_{1.3}$ G $M_{2}$ -ज्ञाने नि-; $T_{2}$ -योगे नि- ( for -ज्ञानेन ). $D_{10}$ $T_{2.3}$ G यथावत् ( for तदेतत् ). — ( L. 4223 ) $D_{10}$ $T_{3}$ G ते; $T_{1}$ [अ]हं ( for मे ). — ( L. 4324 ) $D_{10}$ $T_{2}$ $G_{1.2.4}$ -संमतः; $G_{3}$ -संमितः ( for -सेवितः ). — ( L. 4227 ) $D_{10}$ G योगधर्मं परं श्रिताः; $T_{3}$ योगधर्माः पराश्रिताः ( for the post. half ). — ( L. 4228 ) $T_{2}$ लोकस्य ( for योगस्य ). — ( L. 4229 ) $D_{10}$ $T_{2.3}$ G तत्सर्वं; $T_{1}$ तं पुनः ( for तैस्तैस्तत् ). $T_{2.3}$ चापि ( for परि- ). — ( L. 4230 ) $T_{1}$ ऐकाग्र्यं ( for °त्म्यं ). — ( L. 4231 ) $D_{10}$ $T_{1.3}$ $G_{1.3}$ $M_{4}$ आत्मनो व्यथितः प्राज्ञे ( for the prior half ). — ( L. 4233 ) $D_{10}$ T G [अ]शिवं भावं ( $T_{1}$ पापं ) ( for °वां वाचं ). $D_{10}$ $T_{3}$ G सर्व- ( for भवेत् ). $D_{10}$ $T_{3}$ -तत्त्वम्; $T_{2}$ तत्त्वम् ( for सत्त्वम् ). — ( L. 4235 ) $D_{10}$ $T_{2.3}$ G $M_{4}$ सत्यम् ( for सम्यग् ). $T_{1}$ सत्यमाचारशुद्धिश्च ( for the prior half ). — ( L. 4236 ) $T_{3}$ चास्य ( for चापि ). — ( L. 4237 ) $D_{10}$ $T_{2.3}$ G निर्धूतपापस्तेजस्वी ( for the prior half ). — ( L. 4238 ) $D_{10}$ $T_{2}$ $G_{2}$ अमोघो; $T_{1}$ विशोको; $T_{3}$ अशोको ( for निःशोको ). — $T_{1}$ om. line 4239. — ( L. 4239 ) $M_{4}$ मत्स्यघातम्. $T_{3}$ [अ]निशं ( for [आ]मिषम् ). — ( L. 4240 ) $T_{1}$ शुभे ( for शुचौ ). — ( L. 4241 ) $T_{1}$ शुभैः ( for कुशैः ). — ( L. 4243 ) $T_{3}$ स्वयम् ( for सुखम् ). — $D_{10}$ T G $M_{4}$ om. lines 4245–4247. — ( L. 4246 ) $M_{1-3}$ निःसरति ( for निश्चरति ). — $T_{1}$ om. ( hapl. ? ) lines 4249–4250. — ( L. 4250 ) $T_{3}$ तथा ( for ततो ). — ( L. 4252 ) $T_{1}$ मनश्चापि ससंकल्पम् ( for the prior half ). $T_{1}$ बुधः ( for मनः ). — After line 4252, $T_{1}$ reads line 4258, repeating it in its proper place. — $T_{1}$

प्राणापानौ तदा तस्य युगपत्तिष्ठतो वशे ।
प्राणे हि वशमापन्ने योगसिद्धिर्ध्रुवा भवेत् ।
शरीरं चिन्तयेत्सर्वं विपाट्य च समीपतः ।
अन्तर्देहगतिं चापि प्राणानां परिचिन्तयेत् ।
ततो मूर्धानमग्निं च शारीरं परिपालयन् ।
प्राणो मूर्धनि चाग्नौ च वर्तमानो विचेष्टते ।
स जन्तुः सर्वभूतात्मा पुरुषः स सनातनः ।
मनो बुद्धिरहंकारो भूतानि विषयांश्च सः ।
बस्तिमूलं गुदं चैव पावकं च समाश्रितः ।
वहन्मूत्रं पुरीषं चाप्यपानः परिवर्तते ।
अधःप्रवृत्तिर्देहेषु कर्मापानस्य तन्मतम् ।
उदीरयन्सर्वधातूनत ऊर्ध्वं प्रवर्तते ।
उदान इति तं विदुरध्यात्मकुशला जनाः ।
संधौ संधौ संनिविष्टः सर्वचेष्टाप्रवर्तकः ।
शरीरेषु मनुष्याणां व्यान इत्युपदिश्यते ।
धातुष्वग्नौ च विततः समानोऽग्निः समीरणः ।
स एव सर्वचेष्टानामन्तकाले निवर्तकः ।
प्राणानां संनिपातेषु संसर्गाद्यः प्रजायते ।
ऊष्मा सोऽग्निरिति ज्ञेयः सोऽन्नं पचति देहिनाम् ।
अपानप्राणयोर्मध्ये प्राणापानसमाहितः ।
समन्वितः समानेन सम्यक्पचति पावकः ।
अधस्त्वग्निरपानेन प्राणेन परिपाल्यते ।
पृष्ठतस्तु समानेन स्वां स्वां गतिमुपाश्रितः ।
शरीरमध्ये नाभिः स्यान्नाभ्यामग्निः प्रतिष्ठितः ।
अग्नौ प्राणाश्च संसक्ताः प्राणेष्वात्मा व्यवस्थितः ।
पक्वाशयस्त्वधो नाभेरूर्ध्वमामाशयः स्मृतः ।
नाभिर्मध्ये शरीरस्य सर्वप्राणास्तमाश्रिताः ।
स्थिताः प्राणादयः सर्वे तिर्यगूर्ध्वमधश्चराः ।
वहन्त्यन्नरसान्नाड्यो दश प्राणप्रचोदिताः ।
योगिनामेष मार्गस्तु पञ्चस्वेतेषु तिष्ठति ।
जितश्रमः समासीनो मूर्धन्यात्मानमादधेत् ।
मूर्धन्यात्मानमाधाय भ्रुवोर्मध्ये मनस्तथा ।
संनिरुध्य ततः प्राणानात्मानं चिन्तयेत्परम् ।
प्राणे त्वपानं युञ्जीत प्राणांश्चापानकर्मणि ।
प्राणापानगती रुद्ध्वा प्राणायामपरो भवेत् ।
एवमन्तः प्रयुञ्जीत पञ्च प्राणान्परस्परम् ।
विजने संमिताहारो मुनिस्तूष्णीं निरुच्छ्वसन् ।
अश्रान्तश्चिन्तयेद्योगमुत्थाय च पुनः पुनः ।
तिष्ठन्गच्छन्स्वपन्वापि युञ्जीतैवमतन्द्रितः ।
एवं नियुञ्जतस्तस्य योगिनो युक्तचेतसः ।
प्रसीदति मनः क्षिप्रं प्रसन्ने दृश्यते परः ।
विधूम इव दीप्तोऽग्निरादित्य इव रश्मिमान् ।
वैद्युतोऽग्निरिवाकाशे दृश्यते पुरुषोऽव्ययः ।
दृष्ट्वा तदात्मनो ज्योतिरैश्वर्याष्टगुणैर्युतम् ।
प्राप्नोति परमं स्थानं स्पृहणीयं सुरैरपि ।
इमान्योगस्य दोषांश्च दशैव परिचक्षते ।
दोषैर्विघ्नो वरारोहे योगिनां कविभिः स्मृतः ।
कामं क्रोधं भयं स्वप्नं स्नेहमत्यशनं तथा ।
वैचित्त्यं व्याधिमालस्यं लोभं च दशमं स्मृतम् ।
एतैस्तेषां भवेद्विघ्नो दशभिर्दैवकारितैः ।
तस्मादेतानपास्यादौ युञ्जीत चपलं मनः ।
इमानपि गुणानष्टौ योगस्य परिचक्षते ।

om. (hapl. ?) lines 4256-4257. — (L. 4257) $G_3$ $M_4$ अंतर्देहे गतं (for °देहगतिं). — (L. 4258) $D_{10}$ $T_1$ (both times). $_{2.3}$ G $M_4$ -पालयेत् (for °यन्). — $T_1$ om. lines 4259-4279. — (L. 4259) $M_4$ मूर्ध्नि च (for मूर्धनि). $D_{10}$ $T_2$ $G_{2.4}$ च श्वासो; $T_3$ चापाने; $G_{1.3}$ $M_4$ चाश्वासो (for चाग्नौ च). $D_{10}$ $G_{2.4}$ [ऽ]पि (for वि-). — (L. 4260) $T_2$ स च (for सर्व-). — (L. 4263) $D_{10}$ $T_{2.3}$ G $M_4$ सदापानः प्रवर्तते (for the post. half). — (L. 4264) $D_{10}$ $T_2$ G संमितं; $T_3$ $M_1$ संमतं (for तन्मतम्). — (L. 4266) $G_{1.3}$ उदानम् (for उदान). $D_{10}$ $G_{2.4}$ उदितं (for इति तं). — (L. 4267) $D_{10}$ $T_2$ G स निविष्टः; $T_3$ च निविष्टः (for संनिविष्टः). — $G_2$ om. (hapl) lines 4268-4270. — (L. 4269) $T_2$ विदितः (for विततः). — (L. 4273) $D_{10}$ $G_{1.3.4}$ $M_4$ व्यानोदा( $M_4$ प्राणापा )नावुपाश्रितौ; $T_2$ व्यानोदानौ व्यपाश्रितौ; $T_3$ व्यानोदाना उपाश्रितौ; $G_2$ प्राणव्यानादुपाश्रिताः (for the post. half). — $M_4$ om. (hapl.) lines 4274-4276. $D_{10}$ $T_{2.3}$ $G_1$ om. lines 4275-4276 — (L. 4278) $D_{10}$ $T_{2.3}$ G संयुक्ताः (for संसक्ताः). $T_2$ प्रतिष्ठितः (for व्यवस्थितः). — (L. 4279) $D_{10}$ $T_{2.3}$ G $M_1$ तथा (for स्मृतः). — (L. 4280) $T_1$ $M_4$ च संस्थिताः; $T_{2.3}$ $G_{1.3.4}$ च संश्रिताः (for तमाश्रिताः). — (L. 4282) $D_{10}$ T $M_4$ प्राणाग्नि- (for प्राणप्र-). — $T_1$ om. lines 4284 and 4286-4318. — (L. 4286) $T_2$ ताभ्यां तत् (for आत्मानं). — (L. 4287) $M_4$ प्राणेषु (for प्राणे तु). $M_{1.3}$ प्राणं (for प्राणांश्). — (L. 4291) $D_{10}$ $T_{2.3}$ G योगी (for योगम्). $M_1$ परस्परं (for पुनः पुनः). — (L. 4293) $M_4$ एवं नियुंजमानस्य (for the prior half). — (L. 4294) $D_{10}$ $T_{2.3}$ G $M_4$ परं (for परः). $G_2$ om. from the post. half of line 4295 up to the prior half of line 4298. — (L. 4298) $G_2$ स्पृहणीयः (for °णीयं). — (L. 4300) $G_{1.3.4}$ स्मृताः (for स्मृतः). — (L. 4301) $G_{1.3}$ $M_4$ कामः क्रोधो. — (L. 4304) $T_3$ अपोह्य (for अपास्य). $D_{10}$ $T_2$ G $M_4$ च परं; $T_3$ परमं (for चपलं). — $G_2$ om. lines 4305-4308.

गुणैस्तैरष्टभिर्द्रव्यमैश्वर्यमधिगम्यते ।
अणिमा महिमा चैव प्राप्तिः प्राकाश्यलाघवे ।
ईशित्वं च वशित्वं च यत्रकामावसायिता ।
एतानष्टौ गुणान्प्राप्य कथंचिद्योगिनां वराः ।
ईशाः सर्वस्य लोकस्य देवानप्यतिशेरते ।
योगोऽस्ति नैवात्यशिनो न चैकान्तमनश्नतः ।
न चातिस्वप्नशीलस्य नातिजागरतस्तथा ।
युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ।
अनेनैव विधानेन सायुज्येऽपि प्रकल्पते ।
सायुज्यं देवसात्कृत्य प्रयुञ्जीतात्मभक्तितः ।
अनन्यमनसा देवि नित्यं तद्गतचेतसा ।
सायुज्यं प्राप्यते देवैर्यत्नेन महता चिरात् ।
हविर्भिरर्चनैर्होमैः प्रणामैर्नित्यचिन्तया ।
अर्चयित्वा यथाशक्ति स्वकं देवं विशन्ति ते ।
सायुज्यानां विशिष्टे द्वे मामकं वैष्णवं तथा ।
मां प्राप्य न निवर्तन्ते विष्णुं वा शुभलोचने ।
इति ते कथितो देवि योगधर्मः सनातनः ।
न शक्यं प्रष्टुमप्यन्यैर्योगधर्मस्त्वया विना ।

Colophon.

उमा ।

त्रियक्ष त्रिदशश्रेष्ठ त्र्यम्बक त्रिदशाधिप ।
त्रिपुरान्तक कामाङ्गहर त्रिपथगाधर ।
दक्षयज्ञप्रमथन शूलपाणेऽरिसूदन ।
नमस्ते लोकपालेश लोकपाल वरप्रद ।
नैकशाखमपर्यन्तमध्यात्मज्ञानमुत्तमम् ।
अप्रतर्क्यमनिर्देश्यं सांख्ययोगसमन्वितम् ।
भवता परितुष्टेन शृण्वन्त्या मम भाषितम् ।
इदानीं श्रोतुमिच्छामि सायुज्यं त्वद्गतं विभो ।
कथं परिचरन्त्येते भक्तास्त्वां परमेष्ठिनम् ।
आचारः कीदृशस्तेषां केन तुष्टो भवेद्भवान् ।
वर्ण्यमानं त्वया साक्षात्प्रीणयत्यधिकं हि माम् ।

महेश्वरः ।

हन्त ते कथयिष्यामि मम सायुज्यमद्भुतम् ।
येन तेन निवर्तन्ते युक्ताः परमयोगिनः ।
अव्यक्तोऽहमचिन्त्योऽहं पूर्वैरपि महर्षिभिः ।
सांख्ययोगौ मया सृष्टौ सर्वं चापि चराचरम् ।
अर्चनीयोऽहमीशोऽहमव्ययोऽहं सनातनः ।
अहं प्रसन्नो भक्तानां ददाम्यमरतामपि ।
न मां विदुः सुरगणा मुनयश्च तपोधनाः ।
त्वत्प्रियार्थमहं देवि मद्विभूतिं ब्रवीमि ते ।
आश्रमेभ्यश्चतुर्भ्योऽहं चतुरो ब्राह्मणाञ्शुभे ।
मद्भक्तान्निर्मलान्पुण्यान्समानीय तपस्विनः ।
व्याचख्येऽहं तदा देवि योगं पाशुपतं महत् ।
गृहीतं तच्च तैः सर्वं मुखाच्च मम दक्षिणात् ।
श्रुत्वा च त्रिषु लोकेषु स्थापितं चापि तैः पुनः ।

— ( L. 4306 ) $M_{1-3}$ द्विव्यम् ( for द्रव्यम् ). — ( L. 4307 ) $D_{10}$ $T_{2.3}$ G प्राप्तिः प्राकाम्यमेव हि ( for the post. half ). — ( L. 4310 ) $D_{10}$ $T_2$ $G_4$ ईशः ( for ईशाः ). $D_{10}$ -शोभते ( for -शेरते ). — $T_2$ repeats line 4311 after line 4315. — ( L. 4312 ) $T_3$ नास्य ( for नाति- ). — ( L. 4314 ) $T_3$ युक्तस्वप्नप्रबोधस्य ( for the prior half ). — ( L. 4315 ) $D_{10}$ $T_{2.3}$ G $M_4$ सायुज्यं तत्प्रक( $D_{10}$ $G_2$ तत्र क )ल्पते ( for the post. half ). — ( L. 4316 ) $D_{10}$ $T_{2.3}$ G $M_4$ कृत्वा ( for -कृत्य ). $M_4$ -शक्तितः ( for -भक्तितः ). — ( L. 4318 ) $G_{1.3}$ आप्यते ( for प्रा° ). — ( L. 4319 ) $T_3$ $G_2$ प्रणमैर् ( for प्रणामैर् ). — ( L. 4320 ) $T_2$ देवा ; $T_3$ $G_{1.3.4}$ $M_{2.4}$ देशं ( for देवं ). $T_1$ विष्णुं वा मां तथैव च ( for the post. half ). —( L. 4321 ) $D_{10}$ $T_2$ $G_{2.4}$ विशिष्टं च ; $G_{1.3}$ विशिष्टेथें ( for °ष्टे द्वे ). $G_{1.3}$ मामका वैष्णवांस्तथा ( for the post. half ). $T_1$ सायुज्यमामुवंत्येव योगधर्मव्यपाश्रयाः. — $T_1$ om. line 4322. — ( L. 4322 ) $T_2$ ( also as above ) -लक्षणे ( for -लोचने ). — ( L. 4323 ) $D_{10}$ T G $M_4$ कथितं ( for °तो ). — ( L. 4324 ) $D_{10}$ $T_3$ $G_4$ अन्यैर्यो ; $G_{1-3}$ अन्येन ( for अप्यन्यैर् ). — Colophon. — *Sub-parvan :* M दानधर्म. — *Adhy. name :* $D_{10}$ उमामहेश्वरसंवादे योगविधिः ; $T_2$ उमामहेश्वरसंवादे योगधर्मलक्षणं ; $T_3$ $G_{1.3}$ $M_4$ उमामहेश्वरसंवादः ; $M_{1-3}$ उमामहेसंवादे मोक्षाधिकारे योगाधिकारः. — *Adhy. no. :* $D_{10}$ $T_{2.3}$ 229 ; $T_1$ $G_4$ $M_4$ 221 ; $G_{1.3}$ $M_1$ 223 ; $G_2$ 231 ; $M_{2.3}$ 224. — ( L. 4325 ) $T_2$ $G_2$ $M_{2-4}$ त्र्यक्ष ( submetric ) ; $M_1$ त्र्यम्यक्ष ( for त्रियक्ष ). $D_{10}$ -ज्येष्ठ ( for -श्रेष्ठ ). $T_1$ om. from the post half up to the prior half of line 4328. —( L. 4330 ) $D_{10}$ $T_{2.3}$ G अविज्ञेयं ( for अनिर्देश्यं ). — $T_1$ om. ( hapl. ) line 4331. —( L. 4331 ) $D_{10}$ $T_{2.3}$ G -पृष्टेन ( for -तु° ). — $T_2$ reads line 4335 twice. — ( L. 4335 ) $T_2$ ( first time ) पश्यमानं ( for वर्ण्य° ). —( L. 4336 ) $T_1$ उत्तमं ( for अद्भुतम् ). $T_1$ om. ( hapl. ) from the post. half of line 4338 up to the prior half of line 4340. — ( L. 4338 ) $D_{10}$ $T_3$ $G_4$ मुमुक्षुभिः ( for महर्षिभिः ). $G_{1-3}$ अविकार्योयमुच्यते ( for the post. half ). — ( L. 4341 ) $G_{3.4}$ देवानां ( for भक्तानां ). — $T_1$ om. lines 4342 and 4344. — ( L. 4344 ) $T_2$ चतुर्थो ( for चतुर्भ्यो ). — ( L. 4345 ) $T_1$ मद्भक्ता निर्मलाः पुण्या ( for the prior half ). $T_1$ गुणवंतश्च ( for समानीय ). — ( L. 4347 ) $T_3$ सर्वंर् ( for सर्वं ). — ( L. 4348 ) $D_{10}$ T G $M_4$ तद् ( for the first च ). — $T_1$ om. lines 4349–4356. $M_3$ om. lines 4349–4351. *$D_{10}$* $T_{2.3}$ G om. the post.

इदानीं च त्वया पृष्टस्त्वत्प्रियार्थमनिन्दिते ।
तत्सर्वं कथयिष्यामि तत्त्वमेकमनाः शृणु ।
अहं पशुपतिर्नाम मद्भक्ता ये च मानवाः ।
सर्वे पाशुपता ज्ञेया भस्मदिग्धतनूरुहाः ।
रक्षार्थं मङ्गलार्थं च पवित्रार्थं च भामिनि ।
लिङ्गार्थं चैव भक्तानां भस्म दत्तं मया पुरा ।
तेन संदिग्धसर्वाङ्गा भस्मना ब्रह्मचारिणः ।
जटिला मुण्डिता वापि नानाकृतशिखण्डिनः ।
विकृताः पिङ्गलाभाश्च नग्ना नानाप्रहारिणः ।
भैक्षं चरन्तः सर्वत्र निःस्पृहा निष्परिग्रहाः ।
कपालहस्ता मद्भक्ता मन्निवेशितबुद्धयः ।
चरन्तो निखिलं लोकं मम हर्षविवर्धनाः ।
मम पाशुपतं दिव्यं योगशास्त्रमनुत्तमम् ।
सूक्ष्मं सर्वेषु लोकेषु विमृशन्तश्चरन्ति ते ।
एवं नित्याभियुक्तानां मद्भक्तानां तपस्विनाम् ।
उपायं चिन्तयाम्याशु येन मामुपयान्ति ते ।
स्थापितं त्रिषु लोकेषु शिवलिङ्गं मया प्रिये ।
नमस्कारेण वा तस्य मुच्यते सर्वकिल्बिषैः ।
इष्टं दत्तमधीतं च यज्ञाश्च सहदक्षिणाः ।
शिवलिङ्गप्रणामस्य कलां नार्हन्ति षोडशीम् ।
अर्चया शिवलिङ्गस्य परितुष्याम्यहं प्रिये ।
शिवलिङ्गार्चनायां तु विधानमपि मे शृणु ।
गोक्षीरनवनीताभ्यामर्चयेद्यः शिवं मम ।
इष्टस्य हयमेधस्य यत्फलं तस्य तद्भवेत् ।
घृतमण्डेन यो नित्यमर्चयेद्धि शिवं मम ।
स फलं प्राप्नुयान्मर्त्यो ब्राह्मणस्याग्निहोत्रिणः ।
केवलेनापि तोयेन स्नापयेद्यः शिवं मम ।
स चापि लभते पुण्यं मत्प्रियश्च भवेन्नरः ।
सघृतं गुग्गुलुं सम्यग्धूपयेद्यः शिवान्तिके ।
गोसवस्य तु यज्ञस्य यत्फलं तस्य तद्भवेत् ।
यस्तु गुग्गुलुपिण्डेन केवलेनापि धूपयेत् ।
तस्य रुक्मप्रदानस्य यत्फलं तस्य तद्भवेत् ।
यस्तु नानाविधैः पुष्पैर्मम लिङ्गं समर्चयेत् ।
स हि धेनुसहस्रस्य दत्तस्य फलमाप्नुयात् ।
यस्तु देशान्तरं गत्वा शिवलिङ्गं समर्चयेत् ।
तस्मात्सर्वमनुष्येषु नास्ति मे प्रियकृत्तमः ।
एवं नानाविधैर्द्रव्यैः शिवलिङ्गं समर्चयेत् ।
मत्प्रसादान्मनुष्येषु न पुनर्जायते नरः ।
अर्चनाभिर्नमस्कारैरुपहारैः स्तवैरपि ।
भक्तो मामर्चयेन्नित्यं शिवलिङ्गेष्वतन्द्रितः ।
पलाशबिल्वपत्राणि राजवृक्षस्रजस्तथा ।
अर्कपुष्पाणि मेध्यानि मत्प्रियाणि विशेषतः ।
फलं वा यदि वा शाकं पुष्पं वा यदि वा जलम् ।
दत्तं संप्रीणयेद्देवि भक्तैर्मद्गतमानसैः ।
ममाभिपरितुष्टस्य नास्ति लोके सुदुर्लभम् ।
तस्मात्ते सततं भक्ता मामेवाभ्यर्चयन्त्युत ।
मद्भक्ता न विनश्यन्ति मद्भक्ता वीतकल्मषाः ।
मद्भक्ताः सर्वलोकेषु पूजनीया विशेषतः ।
मद्द्वेषिणश्च ये मर्त्या मद्भक्तद्वेषिणस्तथा ।
यान्ति ते नरकं क्षिप्रमिष्ट्वा क्रतुशतैरपि ।
एतत्ते सर्वमाख्यातं योगं पाशुपतं मम ।
मद्भक्तैर्मनुजैर्देवि श्राव्यमेतद्दिने दिने ।

---

half of line 4349 and the prior half of line 4350. — (L. 4350) $D_{10}$ $T_{2.3}$ G वदामि (for तत्त्वम्). — $G_2$ om. lines 4352–4357. — (L. 4356) $D_{10}$ $T_2$ $G_3$ नानाकार-; $G_{1.2}$ °काराः (for °कृत-). — (L. 4357) $D_{10}$ $T_{2.3}$ $G_{1.3.4}$ -प्रकारिणः (for -प्रहा°). (L. 4358) $T_2$ चरंति (for चरन्तः). $T_1$ निःस्पृहा निष्प्रतिग्रहाः (for the post. half). —(L. 4359) $D_{10}$ $T_3$ मृत्पात्र- (for कपाल-). —(L. 4360) $T_1$ विविधं; $M_3$ अखिलं (for नि°). —$M_{1.3}$ om. (hapl.) from the post. half of line 4362 up to the prior half of line 4365. —(L. 4365) $D_{10}$ T G $M_4$ मम (for प्रिये). —(L. 4367) $D_{10}$ $T_{1.2}$ G $M_4$ इदं (for इष्टं). $D_{10}$ T G $M_4$ बहु- (for सह-). —(L. 4369) $T_1$ -तुष्टोऽसि (for -तुष्यामि). —(L. 4372) $T_{2.3}$ $G_{1-3}$ तत्फलं (for तस्य तद्). $D_{10}$ $G_4$ यत्फलं तत्फलं लभेत् (for the post. half). —(L. 4373) $T_1$ -पिंडेन (for -मण्डेन). T G $M_4$ यः (for हि). $D_{10}$ शिवलिंगं समर्चयेत् (for the post. half). —$T_1$ om. lines 4374–4378. —(L. 4376) $D_{10}$ $T_{2.3}$ G प्रियं च लभते नरः (for the post. half). —$G_4$ om. (hapl.) lines 4379–4380; $T_1$ reads the same after line 4382. —(L. 4380) $G_{1.3}$ $M_2$ तत्र (for तस्य). $T_1$ तच्च वै (for तस्य तद्). —$D_{10}$ om. line 4382. $G_2$ om. lines 4382–4384. $T_1$ om. lines 4383–4386. —(L. 4386) $D_{10}$ $T_{2.3}$ G मत्समानो (for मत्प्रसादान्). —(L. 4387) $G_{1.3.4}$ उपचारैः (for °हारैः). —(L. 4390) $G_2$ तत्पुष्पाणि च मेध्यानि (for the prior half). —(L. 4392) $T_1$ मद्भक्तैर्युक्तमानसैः (for the post. half). —$T_1$ om. lines 4393–4394. —(L. 4393) $T_{2.3}$ ममापि; $G_{1.3}$ मया हि; $G_2$ मयाभि- (for ममाभि-). $D_{10}$ $T_2$ $G_{1-3}$ M लोकेषु (for लोके सु-). —(L. 4397) $D_{10}$ $T_1$ $G_{1.3.4}$ M च वा; $T_2$ [ऽ]पि वा; $T_3$ च ये (for तथा). $G_2$ विष्णुविद्वेषिणश्च वा (for the post. half). —(L. 4398) $D_{10}$ T G $M_4$ घोरम् (for क्षिप्रम्). —(L. 4399) $D_{10}$ $T_{2.3}$ G महत् (for मम). —$T_1$ om. line 4401. —(L. 4401) $D_{10}$ $T_{2.3}$

शृणुयाद्यः पठेद्वापि ममैतं धर्मनिश्चयम् ।
स्वर्गं कीर्तिं धनं धान्यं लभेत स नरोत्तमः ।

Colophon.

नारदः ।

एवमुक्त्वा महादेवः श्रोतुकामः स्वयं प्रभुः ।
अनुकूलां प्रियां भार्यां पार्श्वस्थां समभाषत ।

महेश्वरः ।

परावरज्ञे धर्माणां तपोवननिवासिनाम् ।
दीक्षादमशमोपेते सततं व्रतचारिणि ।
पृच्छामि त्वा वरारोहे पृष्टा वद ममेप्सितम् ।
सावित्री ब्रह्मणः पत्नी कौशिकस्य शची शुभा ।
लक्ष्मीर्विष्णोः प्रियतमा धृतिर्भार्या यमस्य तु ।
मार्कण्डेयस्य धूमोर्णा ऋद्धिर्वैश्रवणस्य तु ।
वरुणस्य तथा गौरी सवितुश्च सुवर्चला ।
रोहिणी शशिनो भार्या स्वाहा वह्नेरनिन्दिता ।
कश्यपस्यादितिश्चैव वसिष्ठस्याप्यरुन्धती ।
एताश्चान्याश्च देव्यस्तु सर्वास्ताः पतिदेवताः ।
श्रूयन्ते लोकविख्यातास्त्वया चैव सहोषिताः ।
ताभिश्च पूजिता सा त्वमनुवृत्त्यानुभाषणैः ।
तस्मात्त्वां परिपृच्छामि धर्मज्ञे लोकसंमते ।
स्त्रीधर्मं श्रोतुमिच्छामि त्वयैव समुदाहृतम् ।
सधर्मचारिणी मे त्वं समानव्रतचारिणी ।
समानसारा वीर्येण मयैव त्वं शुभानने ।
ममैवार्धाच्छरीरस्य निर्मितासि पुरा शुभे ।
सुरकार्यं करोषि त्वं लोकसंधारणी तथा ।
अयं हि स्त्रीगणस्त्वां तु अनुयाति न मुञ्चति ।
त्वत्प्रसादाद्धितं श्रोतुं स्त्रीवृत्तं शुभलक्षणे ।
त्वया चोक्तं विशेषेण गुरुभूतं हि तिष्ठति ।
स्त्रिय एव सदा लोके स्त्रीगणस्य गतिः प्रिये ।
शश्वद्गौरीषु गच्छेत नान्यत्र रमते मनः ।
एवं लोकगतिर्देवि आदिप्रभृति वर्तते ।
प्रमदोक्तं तु यत्किंचित्तत्स्त्रीषु बहु मन्यते ।
न तथा मन्यते स्त्रीषु पुरुषोक्तमनिन्दिते ।
त्वयैव विदितो ह्यर्थः स्त्रीणां धर्मः सनातनः ।
तस्मात्त्वा परिपृच्छामि पृष्टा वद ममेप्सितम् ।

नारदः ।

एवमुक्ता तदा देवी महादेवेन शोभना ।
सोद्वेगा च सलज्जा च नावदत्तत्र किंचन ।
पुनः पुनस्तदा देवो देवीं किमिति चाब्रवीत् ।
बहुशश्चोदिता देवी सव्रीडा चेदमब्रवीत् ।

उमा ।

भगवन्देवदेवेश सुरासुरनमस्कृत ।
त्वदन्तिके मया वक्तुं स्त्रीणां धर्मं कथं भवेत् ।

महेश्वरः ।

मन्नियोगादवश्यं तु वक्तव्यं हि मम प्रिये ।

उमा ।

इमा नद्यो महादेव सर्वतीर्थोदकान्विताः ।
उपस्पर्शनहेतोस्त्वां न त्यजन्ति समीपतः ।
एताभिः सह संमन्त्र्य प्रवक्ष्यामि तवेप्सितम् ।
अयुक्तं सत्सु तज्ज्ञेषु तानतिक्रम्य भाषितुम् ।
मया संमानिताश्चैव भविष्यन्ति सरिद्वराः ।

नारदः ।

इति मत्वा महादेवी नदीर्देवीः समाह्वयत् ।

M4 [इ]मं ; G [इ]दं ( for [ए]तं ). — ( L. 4402 ) T2 स्वर्ग्यं कीर्तिकरं धन्यं सर्वसंपत्करं नृणां. — Colophon. — *Sub-parvan* : M1-3 दानधर्मं. — *Adhy. name* : D10 T2.3 G2 उमामहेश्वरसंवादे शिवभक्तिलक्षणं ; G1 शिवभक्तिलक्षणं ; M1-3 उमामहेश्वरसंवादे पाशुपतयोगकथनं मोक्षाधिकारः ; M4 उमामहेश्वरसंवादः. — *Adhy. no.* : D10 T2.3 G2.4 230 ; T1 M4 222 ; G1.3 M1 224 ; M2.3 225. — ( L. 4403 ) M1-3 एतद् ( for एवम् ). — ( L. 4404 ) D10 G4 पार्श्वस्थामभ्यभाषत ( for the post. half ). — ( L. 4405 ) T1 भूतानां ( for धर्माणां ). — T1 om. 4406. — ( L. 4406 ) D10 T2.3 G2.4 दीक्षाविधि- ( for °दम- ). G1.3 शिक्षाविधिदमोपेते ( for the prior half ). — T1 om. line 4408. — ( L. 4409 ) D10 T G प्रिया भार्या ( for प्रियतमा ). T3 om. (hapl.) from the post. half up to the prior half of line 4412. T1 मनस्विनः ( for यमस्य तु ). — ( L. 4410 ) T1 वैवस्वतस्य धूमोर्णा ( for the prior half ). — ( L. 4411 ) G2 प्रिया ( for तथा ). — ( L. 4412 ) [...] T2.3 G चाग्नेर् ( for वह्नेर् ). — ( L. 4415 ) T1 [...] ( for त्वया ). — ( L. 4416 ) T1 G1.3 M [अ...] ( for सा ). G1.3 अनुसृत्य तु भाषणैः ; M4 °सृत्यानुभा[...] ( for the post. half ). — ( L. 4417 ) D10 T2.3 G [...] ( for त्वां ). T1 om. ( hapl. ) the post. half [...] the prior half of line 4418. D10 T G M4 [...] ( hapl. ) from the post. half of line 4419 up [...] the prior half of line 4422. — ( L. 4423 ) T1 समं[...] ( for न मुञ्चति ). — T1 om. ( hapl. ? ) lines 4424-44[...] — ( L. 4424 ) T2.3 G -लक्षणं ( for °णे ). — ( L. 442[...] D10 T2.3 G1-3 M4 गुणभूतं ( for गुरु° ). — T1 [...] line 4427. — ( L. 4427 ) D10 T2 G4 नरः ( for मन[...] — T1 om. line 4430. — ( L. 4431 ) D10 T2.3 G [...] [ए]व ( for [ए]त्र ). — ( L. 4433 ) T1 यथा ; G1 [...] ( for तदा ). — D10 T G M4 om. ( hapl. ) line 44[...]

विपाशां च वितस्तां च चन्द्रभागां सरस्वतीम् ।
शतद्रुं देविकां सिन्धुं गोमतीं कौशिकीं तथा ।
यमुनां नर्मदां चैव कावेरीमथ निम्नगाम् ।
तथा देवनदीं गङ्गां प्राप्तो त्रिपथगां शुभाम् ।
सर्वतीर्थोदकवहां सर्वपापविनाशनीम् ।
एता नदीः समाहूय समुद्वीक्ष्येदमब्रवीत् ।

उमा ।

हे हे पुण्याः सरिच्छ्रेष्ठाः सर्वपापविनोदकाः ।
ज्ञानविज्ञानसंपन्नाः शृणुध्वं वचनं मम ।
अयं भगवता प्रश्न उक्तः स्त्रीधर्ममाश्रितः ।
न चैकया मया साध्यस्तस्माद्वस्त्वानयाम्यहम् ।
युष्माभिस्तद्विचार्यैव वक्तुमिच्छामि शोभनाः ।
तत्कथं देवदेवाय वाच्यः स्त्रीधर्म उत्तमः ।

नारदः ।

इति पृष्टास्तया देव्या देवनद्यश्चकम्पिरे ।
तासां श्रेष्ठतमा गङ्गा वचनं चेदमब्रवीत् ।
धन्याश्चानुगृहीताः स्म अनेन वचनेन ते ।
या त्वं सुरासुरैर्मान्या नदीर्मानयसेऽनघे ।
तवैवार्हन्ति कल्याणि एवं सान्त्वप्रसादनम् ।
अशक्यमपि ये मूर्खाः स्वात्मसंभावनायुताः ।
वाक्यं वदन्ति संसत्सु स्वयमेव यथेष्टतः ।
यः शक्तश्चानहंवादी सुदुर्लभतमो मतः ।
त्वं हि शक्ता सती देवी वक्तुं प्रश्नमशेषतः ।
व्याहर्तुं नेच्छसि स्त्रीत्वात्संपूजयसि नस्तथा ।
त्वं हि देवसमा देवि ऊहापोहविशारदा ।
दिव्यज्ञानयुता देवि दिव्यज्ञानेन्धनेधिता ।
त्वमेवार्हसि तद्वक्तुं स्त्रीणां धर्मं शुभाशुभम् ।
याचामहे वयं श्रोतुममृतं त्वन्मुखोद्गतम् ।
कुरु देवि प्रियं देवि वद स्त्रीधर्ममुत्तमम् ।

नारदः ।

एवं प्रसादिता देवी गङ्गया लोकपूजिता ।
प्राह सर्वमशेषेण स्त्रीधर्मं सुरसुन्दरी ।

उमा ।

भगवन्देवदेवेश सुरेश्वर महेश्वर ।
त्वत्प्रसादात्सुरश्रेष्ठ तवैव प्रियकाम्यया ।
तमहं कीर्तयिष्यामि यथावच्छ्रोतुमर्हसि ।

Colophon.

नारदः ।

एवं ब्रुवन्त्यां स्त्रीधर्मं देव्यां देवस्य शासनात् ।
ऋषिगन्धर्वयक्षाणां योषितश्चाप्सरोगणाः ।
नागभूतस्त्रियश्चैव नद्यश्चैव समागताः ।
श्रोतुकामाः परं वाक्यं सर्वाः पर्यवतस्थिरे ।
उमा देवी मुदा युक्ता पूज्यमानाङ्गनागणैः ।
आनृशंस्यपरा देवी सततं स्त्रीगणं प्रति ।
स्त्रीगणस्य हितार्थाय भवप्रियचिकीर्षया ।
वक्तुं वचनमारेभे स्त्रीणां धर्माश्रितं हितम् ।

— (L. 4438) T $G_{1.3.4}$ धर्मः (for धर्मं). — $T_1$ om. lines 4439–4469. — (L. 4440) $G_{1-3}$ सर्वास् (for सर्व-). — (L. 4447) $D_{10}$ $T_{2.3}$ G शतद्रूं. $T_3$ $G_{3.4}$ $M_4$ कौशिकां. — (L. 4449) $D_{10}$ $T_{2.3}$ G $M_4$ श्रेष्ठां (for प्राप्तां). $G_4$ शिवां (for शुभाम्). — (L. 4450) $T_{2.3}$ $G_{1-3}$ $M_{3.4}$ -विनाशिनीं; $G_4$ -प्रणाशिनीं (for -विनाशनीम्). — $T_3$ om. the ref. — (L. 4452) $D_{10}$ $T_{2.3}$ G $M_4$ हे पुण्याः सरितः श्रेष्ठाः (for the prior half). $D_{10}$ $T_{2.3}$ G $M_4$ -विनाश( $M_4$ °शि )काः (for -विनोदकाः). — (L. 4455) $D_{10}$ $T_{2.3}$ $G_{1.3.4}$ $M_4$ साध्यं (for साध्यस्). — $T_3$ om. the ref. — (L. 4458) $D_{10}$ $T_{2.3}$ $G_2$ महा- (for देव-). — After the prior half of line 4459, $T_3$ ins.:

विष्णुपादोद्भवा सती ।
सम्यग्विचार्य मनसा-

— (L. 4460) $T_2$ स (for च). $M_4$ च (for स). — (L. 4461) $G_{1.3.4}$ आद्रियसे (for मानयसे). — (L. 4462) $D_{10}$ $T_{2.3}$ G $M_4$ [अ]र्हति (for [अ]र्हन्ति). — (L. 4465) $D_{10}$ $T_{2.3}$ G transp. यः and शक्तः. — (L. 4466) $T_3$ शक्ता च (for हि शक्ता). $T_3$ $G_2$ om. (hapl.) from the post. half up to the prior half of line 4268. — (L. 4467) $T_2$ यथा (for स्त्रीत्वात्). — (L. 4468) $D_{10}$ $T_2$ $G_{1.3}$ त्वं हि देवि महादेवी (for the prior half). — (L. 4469) $D_{10}$ $T_{2.3}$ $G_{1.3}$ $M_{2.4}$ दिव्यज्ञानेंधने स्थिता (for the post. half). — (L. 4470) $D_{10}$ $T_{2.3}$ G $M_4$ वृत्तं; $T_1$ चैव (for धर्मं). — (L. 4473) $G_{1-3}$ देव्या (for देवी). $D_{10}$ $T_2$ G -पूज्यया; $T_1$ -कांतया (for -पूजिता). $T_3$ गंगया देवपूज्यया (for the post. half). — (L. 4474) $D_{10}$ $T_3$ G $M_4$ धर्मम् (for सर्वम्). $T_1$ अशेपज्ञा (for °षेण). — (L. 4477) $T_1$ $G_4$ तद् (for तम्). — Colophon. — *Sub-parvan*: $M_{1-3}$ दानधर्म. — *Adhy. name*: $D_{10}$ $T_2$ उमामहेश्वरसंवादे स्त्रीधर्मप्रश्नः; $T_3$ $M_4$ उमामहेश्वरसंवादः; $G_2$ धर्मप्रशंसनं; $M_{1-3}$ उमामहेश्वरसंवादे स्त्रीधर्मकथनप्रेरणं. — *Adhy. no.*: $D_{10}$ $T_{2.3}$ $G_4$ 231; $T_1$ $M_4$ 223; $G_{1.3}$ $M_1$ 225; $M_{2.3}$ 226. — (L. 4480) $T_3$ नागवत्यः (for °भूत-). — $T_1$ om. lines 4482–4483. — (L. 4484) $T_1$ देव- (for भव-). — (L. 4485) $D_{10}$ $T_3$ G $M_4$ स्त्रीणां धर्माश्रितान्वि( $G_{1-3}$ $M_4$ °श्रि)तं; $T_1$ स्त्रीणां धर्मं हितं शुभं; $T_2$ स्त्रीणां धर्माश्रमान्वितं (for

शृणुयाद्यः पठेद्वापि ममैतं धर्मनिश्चयम् ।
स्वर्गं कीर्तिं धनं धान्यं लभेत स नरोत्तमः ।

Colophon.

नारदः ।

एवमुक्त्वा महादेवः श्रोतुकामः स्वयं प्रभुः ।
अनुकूलां प्रियां भार्यां पार्श्वस्थां समभाषत ।

महेश्वरः ।

परावरज्ञे धर्माणां तपोवननिवासिनाम् ।
दीक्षादमशमोपेते सततं व्रतचारिणि ।
पृच्छामि त्वा वरारोहे पृष्टा वद ममेप्सितम् ।
सावित्री ब्रह्मणः पत्नी कौशिकस्य शची शुभा ।
लक्ष्मीर्विष्णोः प्रियतमा धृतिर्भार्या यमस्य तु ।
मार्कण्डेयस्य धूमोर्णा ऋद्धिर्वैश्रवणस्य तु ।
वरुणस्य तथा गौरी सवितुश्च सुवर्चला ।
रोहिणी शशिनो भार्या स्वाहा वह्नेरनिन्दिता ।
कश्यपस्यादितिश्चैव वसिष्ठस्याप्यरुन्धती ।
एताश्चान्याश्च देव्यस्तु सर्वास्ताः पतिदेवताः ।
श्रूयन्ते लोकविख्यातास्त्वया चैव सहोषिताः ।
ताभिश्च पूजिता सा त्वमनुवृत्त्यानुभाषणैः ।
तस्मात्त्वां परिपृच्छामि धर्मज्ञे लोकसंमते ।
स्त्रीधर्मं श्रोतुमिच्छामि त्वयैव समुदाहृतम् ।
सधर्मचारिणी मे त्वं समानव्रतचारिणी ।
समानसारा वीर्येण मयैव त्वं शुभानने ।
ममैवार्धाच्छरीरस्य निर्मितासि पुरा शुभे ।
सुरकार्यं करोषि त्वं लोकसंधारणी तथा ।
अयं हि स्त्रीगणस्त्वां तु अनुयाति न मुह्यति ।
त्वत्प्रसादादिदं श्रोतुं स्त्रीवृत्तं शुभलक्षणे ।
त्वया चोक्तं विशेषेण गुरुभूतं हि तिष्ठति ।
स्त्रिय एव सदा लोके स्त्रीगणस्य गतिः प्रिये ।
शश्वद्गौरीषु गच्छेत नान्यत्र रमते मनः ।
एवं लोकगतिर्देवि आदिप्रभृति वर्तते ।
प्रमदोक्तं तु यत्किंचित्तत्स्त्रीषु बहु मन्यते ।
न तथा मन्यते स्त्रीषु पुरुषोक्तमनिन्दिते ।
त्वयैव विदितो ह्यर्थः स्त्रीणां धर्मः सनातनः ।
तस्मात्त्वा परिपृच्छामि पृष्टा वद ममेप्सितम् ।

नारदः ।

एवमुक्ता तदा देवी महादेवेन शोभना ।
सोद्वेगा च सलज्जा च नावदत्तत्र किंचन ।
पुनः पुनस्तदा देवो देवीं किमिति चाब्रवीत् ।
बहुशश्चोदिता देवी सव्रीडा चेदमब्रवीत् ।

उमा ।

भगवन्देवदेवेश सुरासुरनमस्कृत ।
त्वदन्तिके मया वक्तुं स्त्रीणां धर्मं कथं भवेत् ।

महेश्वरः ।

मन्नियोगादवश्यं तु वक्तव्यं हि मम प्रिये ।

उमा ।

इमा नद्यो महादेव सर्वतीर्थोदकान्विताः ।
उपस्पर्शनहेतोस्त्वां न त्यजन्ति समीपतः ।
एताभिः सह संमन्त्र्य प्रवक्ष्यामि तवेप्सितम् ।
अयुक्तं सत्सु तज्ज्ञेषु तानतिक्रम्य भाषितुम् ।
मया संमानिताश्चैव भविष्यन्ति सरिद्वराः ।

नारदः ।

इति मत्वा महादेवी नदीर्देवीः समाह्वयत् ।

---

$M_4$ [इ]मं ; G [इ]दं ( for [ए]तं ). — ( L. 4402 ) $T_3$ स्वर्ग्यं कीर्तिकरं धन्यं सर्वसंपत्करं नृणां. — Colophon. — *Sub-parvan* : $M_{1-3}$ दानधर्म. — *Adhy. name* : $D_{10}$ $T_{2,3}$ $G_2$ उमामहेश्वरसंवादे शिवभक्तिलक्षणं ; $G_4$ शिवभक्तिलक्षणं ; $M_{1-3}$ उमामहेश्वरसंवादे पाशुपतयोगकथनं मोक्षाधिकारः ; $M_4$ उमामहेश्वरसंवादः. — *Adhy. no.* : $D_{10}$ $T_{2,3}$ $G_{2,4}$ 230 ; $T_1$ $M_4$ 222 ; $G_{1,3}$ $M_1$ 224 ; $M_{2,3}$ 225. — ( L. 4403 ) $M_{1-3}$ एतद् ( for एवम् ). — ( L. 4404 ) $D_{10}$ $G_4$ पार्श्वस्थामभ्यभाषत ( for the post. half ). — ( L. 4405 ) $T_1$ भूतानां ( for धर्माणां ). — $T_1$ om. 4406. — ( L. 4406 ) $D_{10}$ $T_{2,3}$ $G_{2,4}$ दीक्षाविधि- ( for °दम- ). $G_{1,3}$ शिक्षाविधिदमोपेते ( for the prior half ). — $T_1$ om. line 4408. — ( L. 4409 ) $D_{10}$ T G प्रिया भार्या ( for प्रियतमा ). $T_3$ om. (hapl.) from the post. half up to the prior half of line 4412. $T_1$ मनास्विनः ( for यमस्य तु ). — ( L. 4410 ) $T_1$ वैवस्वतस्य धूमोर्णा ( for the prior half ). — ( L. 4411 ) $G_2$ प्रिया ( for तथा ). — ( L. 4412 ) $D_{10}$ $T_{2,3}$ G चाग्नेर् ( for वह्नेर् ). — ( L. 4415 ) $T_1$ स्वयं ( for त्वया ). — ( L. 4416 ) $T_1$ $G_{1,3}$ M [अ]सि ( for सा ). $G_{1,3}$ अनुसत्य तु भाषणैः ; $M_4$ °सत्यानुभाषणैः ( for the post. half ). — ( L. 4417 ) $D_{10}$ $T_{2,3}$ G तु ( for त्वां ). $T_1$ om. ( hapl. ) the post. half and the prior half of line 4418. $D_{10}$ T G $M_4$ om. ( hapl. ) from the post. half of line 4419 up to the prior half of line 4422. — ( L. 4423 ) $T_1$ समंततः ( for न मुह्यति ). — $T_1$ om. ( hapl.? ) lines 4424–4425. — ( L. 4424 ) $T_{2,3}$ G -लक्षणं ( for °णे ). — ( L. 4425 ) $D_{10}$ $T_{2,3}$ $G_{1-3}$ $M_4$ गुणभूतं ( for गुरु° ). — $T_1$ om. line 4427. — ( L. 4427 ) $D_{10}$ $T_3$ $G_4$ नरः ( for मनः ). — $T_1$ om. line 4430. — ( L. 4431 ) $D_{10}$ $T_{2,3}$ G $M_4$ [ए]ष ( for [ए]त्र ). — ( L. 4433 ) $T_1$ तथा ; $G_4$ महा- ( for तदा ). — $D_{10}$ T G $M_4$ om. ( hapl. ) line 4436.

विपाशां च वितस्तां च चन्द्रभागां सरस्वतीम् ।
शतद्रुं देविकां सिन्धुं गोमतीं कौशिकीं तथा ।
यमुनां नर्मदां चैव कावेरीमथ निम्नगाम् ।
तथा देवनदीं गङ्गां प्राप्तो त्रिपथगां शुभाम् ।
सर्वतीर्थोदकवहां सर्वपापविनाशनीम् ।
एता नदीः समाहूय समुद्वीक्ष्येदमब्रवीत् ।

उमा ।

हे हे पुण्याः सरिच्छ्रेष्ठाः सर्वपापविनोदकाः ।
ज्ञानविज्ञानसंपन्नाः शृणुध्वं वचनं मम ।
अयं भगवता प्रश्न उक्तः स्त्रीधर्ममाश्रितः ।
न चैकया मया साध्यस्तस्माद्वस्त्वानयाम्यहम् ।
युष्माभिस्तद्विचार्यैव वक्तुमिच्छामि शोभनाः ।
तत्कथं देवदेवाय वाच्यः स्त्रीधर्म उत्तमः ।

नारदः ।

इति पृष्टास्तया देव्या देवनद्यश्चकम्पिरे ।
तासां श्रेष्ठतमा गङ्गा वचनं चेदमब्रवीत् ।
धन्याश्चानुगृहीताः स्म अनेन वचनेन ते ।
या त्वं सुरासुरैर्मान्या नदीर्मानयसेऽनघे ।
तवैवार्हन्ति कल्याणि एवं सान्त्वप्रसादनम् ।
अशक्यमपि ये मूर्खाः स्वात्मसंभावनायुताः ।
वाक्यं वदन्ति संसत्सु स्वयमेव यथेष्टतः ।
यः शक्तश्चानहंवादी सुदुर्लभतमो मतः ।
त्वं हि शक्ता सती देवी वक्तुं प्रश्नमशेषतः ।
व्याहर्तुं नेच्छसि स्त्रीत्वात्संपूजयसि नस्तथा ।
त्वं हि देवसमा देवि ऊहापोहविशारदा ।
दिव्यज्ञानयुता देवि दिव्यज्ञानेन्धनेधिता ।
त्वमेवार्हसि तद्वक्तुं स्त्रीणां धर्मं शुभाशुभम् ।
याचामहे वयं श्रोतुममृतं त्वन्मुखोद्गतम् ।
कुरु देवि प्रियं देवि वद स्त्रीधर्ममुत्तमम् ।

नारदः ।

एवं प्रसादिता देवी गङ्गया लोकपूजिता ।
प्राह सर्वमशेषेण स्त्रीधर्मं सुरसुन्दरी ।

उमा ।

भगवन्देवदेवेश सुरेश्वर महेश्वर ।
त्वत्प्रसादात्सुरश्रेष्ठ तवैव प्रियकाम्यया ।
तमहं कीर्तयिष्यामि यथावच्छ्रोतुमर्हसि ।

Colophon.

नारदः ।

एवं ब्रुवन्त्यां स्त्रीधर्मं देव्यां देवस्य शासनात् ।
ऋषिगन्धर्वयक्षाणां योषितश्चाप्सरोगणाः ।
नागभूतस्त्रियश्चैव नद्यश्चैव समागताः ।
श्रोतुकामाः परं वाक्यं सर्वाः पर्यवतस्थिरे ।
उमा देवी मुदा युक्ता पूज्यमानाङ्गनागणैः ।
आनृशंस्यपरा देवी सततं स्त्रीगणं प्रति ।
स्त्रीगणस्य हितार्थाय भवप्रियचिकीर्षया ।
वक्तुं वचनमारेभे स्त्रीणां धर्माश्रितं हितम् ।

— (L. 4438) T G1.3.4 धर्मः (for धर्मं). — T1 om. lines 4439–4469. — (L. 4440) G1–3 सर्वांस् (for सर्व-). — (L. 4447) D10 T2.3 G शतद्रूं. T3 G3.4 M4 कौशिकां. — (L. 4449) D10 T2.3 G M4 श्रेष्ठां (for प्राप्तां). G4 शिवां (for शुभाम्). — (L. 4450) T2.3 G1–3 M3.4 -विनाशिनीं; G4 -प्रणाशिनीं (for -विनाशनीम्). — T3 om. the ref. — (L. 4452) D10 T2.3 G M4 हे पुण्याः सरितः श्रेष्ठाः (for the prior half). D10 T2.3 G M4 -विनाश( M4 °शि )काः (for -विनोदकाः). — (L. 4455) D10 T2.3 G1.3.4 M4 साध्यं (for साध्यस्). — T3 om. the ref. — (L. 4458) D10 T2.3 G2 महा- (for देव-). — After the prior half of line 4459, T3 ins. :

विष्णुपादोद्भवा सती ।
सम्यग्विचार्य मनसा.

— (L. 4460) T2 स (for च). M4 च (for स). — (L. 4461) G1.3.4 आद्रियसे (for मानयसे). — (L. 4462) D10 T2.3 G M4 [अ]र्हति (for [अ]र्हन्ति). — (L. 4465) D10 T2.3 G transp. यः and शक्तः. — (L. 4466) T3 शक्ता च (for हि शक्ता). T3 G2 om. (hapl.) from the post. half up to the prior half of line 4268. — (L. 4467) T2 यथा (for स्त्रीत्वात्). — (L. 4468) D10 T2 G1.3 त्वं हि देवि महादेवी (for the prior half). — (L. 4469) D10 T2.3 G1.3 M2.4 दिव्यज्ञानेंधने स्थिता (for the post. half). — (L. 4470) D10 T2.3 G M4 वृत्तं; T1 चैव (for धर्मं). — (L. 4473) G1–3 देव्या (for देवी). D10 T2 G -पूज्यया; T1 -कांतया (for -पूजिता). T3 गंगया देवपूज्यया (for the post. half). — (L. 4474) D10 T3 G M4 धर्मम् (for सर्वम्). T1 अशेषज्ञा (for °षेण). — (L. 4477) T1 G4 तद् (for तम्). — Colophon. — *Sub-parvan* : M1–3 दानधर्म. — *Adhy. name* : D10 T2 उमामहेश्वरसंवादे स्त्रीधर्मप्रश्नः; T3 M4 उमामहेश्वरसंवादः; G2 धर्मप्रशंसनं; M1–3 उमामहेश्वरसंवादे स्त्रीधर्मकथनप्रेरणं. — *Adhy. no.* : D10 T2.3 G4 231; T1 M4 223; G1.3 M1 225; M2.3 226. — (L. 4480) T3 नागवत्यः (for °भूत-). — T1 om. lines 4482–4483. — (L. 4484) T1 देव- (for भव-). — (L. 4485) D10 T3 G M4 स्त्रीणां धर्माश्रितान्वि( G1–3 M4 °श्रि)तं; T1 स्त्रीणां धर्मे हितं शुभं; T2 स्त्रीणां धर्माश्रमान्वितं (for

उमा ।
भगवन्सर्वधर्मज्ञ श्रूयतां वचनं मम ।
ऋतुप्राप्ता सुशुद्धा या कन्या सेत्यभिधीयते ।
तां तु कन्यां पिता माता भ्राता मातुल एव वा ।
पितृव्यश्चेति पञ्चैते दातुं प्रभवतां गताः ।
विवाहाश्च तथा पञ्च तासां धर्मार्थकारणात् ।
कामतश्च मिथो दानं भयाच्च प्रसभात्तथा ।
दत्ता यस्य भवेद्भार्या एतेषां येन केनचित् ।
दातारः संविमृश्यैव दातुमर्हन्ति नान्यथा ।
उत्तमानां तु वर्णानां मन्त्रवत्पाणिसंग्रहः ।
विवाहकरणं चाहुः शूद्राणां संप्रयोगतः ।
यदा दत्ता भवेत्कन्या तस्मै भार्यार्थिने स्वकैः ।
तदाप्रभृति सा नारी दशरात्रं विवर्ज्य च ।
मनसा कर्मणा वाचा ह्यनुकूला च सा भवेत् ।
इति भर्तृव्रतं कुर्यात्पतिमुद्दिश्य शोभना ।
तदाप्रभृति सा नारी तत्तत्कुर्यात्पतिप्रियम् ।
यद्यदिच्छति वै भर्ता धर्मकामार्थकारणात् ।
तदैवानुप्रिया भूत्वा तथैवोपचरेत्पतिम् ।
पतिव्रतात्वं नारीणामेतदेव समासतः ।
तादृशा सा भवेन्नित्यं यादृशस्तु भवेत्पतिः ।
शुभाशुभसमाचारे एतद्वृत्तं समासतः ।
दैवतं सततं साध्वी भर्तारं यानुपश्यति ।
दैवमेव भवेत्तस्याः पतिरित्यवगम्यते ।
एतस्मिन्कारणे देव पौराणी श्रूयते श्रुतिः ।
कथयामि प्रसादात्ते शृणु देव समाहितः ।
कस्यचित्त्वथ विप्रस्य भार्ये हि द्वे बभूवतुः ।
तयोरेका धर्मकामा देवानुद्दिश्य भक्तितः ।
भर्तारमवमत्यैव देवतासु समाहिता ।
चकार विपुलं धर्मं पूजनार्चनयान्वितम् ।
अपरा धर्मकामा च पतिमुद्दिश्य शोभना ।
भर्तारं दैवतं कृत्वा चकार किल तत्प्रियम् ।
एवं संवर्तमाने तु युगपन्मरणेऽध्वनि ।
गते किल महादेव तत्रैका या पतिव्रता ।
देवप्रियायां तिष्ठन्त्यां पुण्यलोकं जगाम सा ।
देवप्रिया च तिष्ठन्ती विललाप सुदुःखिता ।
तां यमो लोकपालस्तु बभाषे पुष्कलं वचः ।
मा शोचीस्त्वं निवर्तस्व न लोकाः सन्ति ते शुभे ।
स्वधर्मविमुखासि त्वं तस्माल्लोका न सन्ति ते ।
दैवतं हि पतिर्नार्याः स्थापितं सर्वदैवतैः ।
अवमत्य शुभे तं त्वं कथं लोकान्गमिष्यसि ।
मोहेन त्वं वरारोहे न जानीषे स्वदैवतम् ।
पतिमत्या स्त्रिया कार्यो धर्मः पत्यर्पितस्त्विति ।
तस्मात्त्वं हि निवर्तस्व कुरु पत्याश्रितं हितम् ।
तदा गन्तासि लोकांस्तान्यान्गच्छन्ति पतिव्रताः ।

the post. half ). — $T_1$ om. line 4486. — ( L. 4487 ) $T_3$ सुगंधा ( for सुशुद्धा ). $T_1$ transp. कन्या and सा. — ( L. 4488 ) $M_4$ कन्याः ( for कन्यां ). $T_1$ transp. माता and भ्राता. — ( L. 4489 ) $D_{10}$ T G चैव ( for चेति ). $G_2$ प्रदातुं ( for दातुं प्र- ). — ( L. 4490 ) $G_{1,3,4}$ विवाहश्. $T_2$ विहारार्थं विवाहार्थं ( for the prior half ). — ( L. 4491 ) $D_{10}$ T G $M_4$ इतरेतरकाम्यया ( for the post. half ). — ( L. 4493 ) $D_{10}$ $T_{2,3}$ G $M_4$ सु- ( for सं- ). $T_1$ दातारस्तु विमृश्यैव ( for the prior half ). — ( L. 4495 ) $D_{10}$ $T_1$ G $M_{2,4}$ -कारणं ( for -क° ). $T_1$ प्राहुः ( for चाहुः ). — ( L. 4496 ) $T_1$ यथा ( for यदा ). $D_{10}$ T G तस्माद् ( for तस्मै ). — $T_1$ om. lines 4497–4499. — ( L. 4497 ) $D_{10}$ $T_2$ G विलज्जया ; $T_3$ विलोक्य या ( for विवर्ज्य च ). — ( L. 4498 ) $G_{1,2}$ [अ]प्यनुकूला ; $G_{3,4}$ अनु° ( for ह्यनु° ). — ( L. 4500 ) $T_1$ प्रतिश्रयं ( for पतिप्रियम् ). $D_{10}$ $T_2$ G न कुर्यात्पत्यु( $T_2$ °र्भर्तु )रप्रियं ( for the post. half ). — ( L. 4501 ) $T_1$ भर्ता च ( for वै भर्ता ). — ( L. 4502 ) $D_{10}$ $T_{2,3}$ $G_{2,4}$ तथैव ; $T_1$ $G_1$ $M_{3,4}$ तदेव ( for तदैव ). $T_1$ सदैव ( for तथैव ). — ( L. 4503 ) $T_3$ -व्रतार्थं ( for -व्रतात्वं ). $D_{10}$ $T_3$ G सनातनं ( for समासतः ). — ( L. 4504 ) $G_{1,3}$ पतिर्भवेत् ( by transp. ). — $T_1$ om. line 4505. — ( L. 4505 ) $D_{10}$ -समाचार ; $T_3$ G -समाचारा ( for -समाचारे ). — ( L. 4506 ) $T_1$ $G_4$ या तु ; $G_{1,3}$ सानु- ( for यानु- ). — ( L. 4507 ) $T_1$ पतिस् ( for भवेत् ). $G_4$ [ए]व ( for [अ]व- ). — ( L. 4508 ) $D_{10}$ $T_2$ $G_4$ $M_3$ कारणं ; $T_3$ कारणाद् ( for कारणे ). $T_1$ $G_{1-3}$ एतस्मात्कारणाद्देव ( for the prior half ). $T_1$ पत्नीति ; $G_1$ पुराणी ( for पौ° ). $T_1$ श्रुतौ ( for श्रुतिः ). — ( L. 4509 ) $D_{10}$ T G $M_1$ समासतः ( for °हितः ). — ( L. 4510 ) $D_{10}$ $T_{1,3}$ $G_{2,4}$ द्वे हि ( by transp. ); $T_2$ द्वे तु. — ( L. 4513 ) $D_{10}$ पूजयानार्चयान्वितं ; $T_1$ देवतार्चनतत्परा ; $T_{2,3}$ G $M_{1-3}$ पूजयार्चनयान्वितं ( for the post. half ). — ( L. 4515 ) $T_1$ सुमहत् ( for किल तत् ). — ( L. 4516 ) T $G_{1,3}$ वि- ; $G_{2,4}$ हि ( for सं- ). — ( L. 4517 ) $T_2$ [अ]थ ( for या ). — ( L. 4518 ) $D_{10}$ $T_3$ -प्रियां च ( for -प्रियायां ). $D_{10}$ पुण्यलोकान्. $G_2$ ह ( for सा ). — $M_4$ om. lines 4519–4522. — ( L. 4521 ) T $G_4$ शुचस्त्वं ; $G_{1,3}$ शुचः सन् ( sic ) ( for शोचीस्त्वं ). — ( L. 4522 ) $D_{10}$ $T_{2,3}$ G सा ( for [अ]सि ). — ( L. 4523 ) $D_{10}$ $T_3$ $G_3$ देवता ( for दैवतं ). $D_{10}$ $T_3$ $G_2$ स्थापिता ( for °तं ). $T_3$ $G_1$ -देवतैः ; $G_{3,4}$ -दैवतं ( for -दैवतैः ). — ( L. 4524 ) $T_1$ अवाप्स्यसि ( for गमिष्यसि ). — ( L. 4525 ) $M_{1,2}$ पुरारोहे ( for वरा° ). $G_3$ जानीषे स च दैवतं ( for the post.

नान्यथा शक्यते प्राप्तुं पत्नीनां लोक उत्तमः ।
यमेनैवंविधं चोक्त्वा निवृत्य पुनरेव सा ।
बभूव पतिमालम्ब्य पतिप्रियपरायणा ।
एवमेतन्महादेव दैवतं हि पतिः स्त्रियः ।
तस्मात्पतिपरा भूत्वा पतिं परिचरेदिति ।

Colophon.

उमा ।

पतिमत्या दिवारात्रं वृत्तान्तः श्रूयतां शुभः ।
पत्युः पूर्वं समुत्थाय प्रातःकर्म समादिशेत् ।
पत्युर्भावं विदित्वा तु पश्चात्संबोधयेत्पतिम् ।
ततः पौर्वाह्णिकं कार्यं स्वयं कुर्याद्यथाविधि ।
निवेद्य च तथाहारं यथा संपद्यतामिति ।
तथैव कुर्यात्तत्सर्वं यथा पत्युः प्रियं भवेत् ।
यथा पत्युस्तथा भर्तुर्गुरूणां प्रतिपद्यते ।
शुश्रूषापोषणविधौ पतिप्रियचिकीर्षया ।
भर्तुर्निष्क्रमणे कार्यं संस्मरेदप्रमादतः ।
आगतं तु पतिं दृष्ट्वा सहसा परिचारकैः ।
स्वयं कुर्वीत संप्रीत्या कायश्रमहरं परम् ।
पाद्यासनाभ्यां शयनैर्वाक्यैश्च हृदयप्रियैः ।
अतिथीनामागमने प्रीतियुक्ता सदा भवेत् ।
कर्मणा वचनेनापि तोषयेदतिथीन्सदा ।
मङ्गल्यं गृहशौचं च सर्वोपकरणानि च ।
सर्वकालमवेक्षेत कारयन्ती च कुर्वती ।
धर्मकार्ये तु संप्राप्ते तद्धर्मपरा भवेत् ।
अर्थकार्ये पुनर्भर्तुः प्रमादालस्यवर्जिता ।
सा यत्नं परमं कुर्यात्तस्य साहाय्यकारणात् ।
युगंधरा भवेत्साध्वी पत्युर्धर्मार्थयोः सदा ।
विहारकाले वै भर्तुर्ज्ञात्वा भावं हृदि स्थितम् ।
अलंकृत्य यथायोगं हावभावसमन्विता ।
वाक्यैर्मधुरसंयुक्तैः स्मयन्ती तोषयेत्पतिम् ।
येन येन यथा तुष्येत्तथा सा तोषयेत्पतिम् ।
कठोराणि न वाच्यानि अन्यदा प्रमदान्तरे ।
यस्यां कामी भवेद्भर्ता तस्याः प्रीतिकरा भवेत् ।
अप्रमादं पुरस्कृत्य मनसा जोषयेत्पतिम् ।
अनन्तरं तथान्येषां भोजनावेक्षणं चरेत् ।
दासीदासबलीवर्दांश्चण्डालांश्च शुनस्तथा ।
अनाथान्कृपणांश्चैव भिक्षुकांश्च तथैव च ।
पूजयेद्बलिभैक्षेण पत्युर्धर्मविवृद्धये ।
कुपितं वार्थहीनं वा श्रान्तं वोपचरेत्पतिम् ।
यथा स तुष्टः स्वस्थश्च भवेत्संतोषयेत्पतिम् ।
तथा कुटुम्बचिन्तायां विवादे चार्थसंक्षये ।
आहूता च सहायार्थं तदा प्रियहितं वदेत् ।

---

half ). — ( L. 4526 ) $D_{10}$ $T_3$ $G_{1,2}$ प्रत्यर्पणस्; $T_1$ आत्मार्पणस्; $G_{3,4}$ पत्यर्पणस्; $M_4$ प्रत्यर्पणं ( for पत्यर्पितस् ). — ( L. 4527 ) $M_1$ तदा ( for हितम् ). — ( L. 4528 ) $T_3$ $G_2$ पतिव्रता ( for °ताः ). $G_{1,3,4}$ यानुगच्छेत्पतिव्रता ( for the post. half ). — ( L. 4529 ) $T_1$ अन्यथा ( for ना° ). $D_{10}$ T G $M_4$ पतीनां लोकमुत्तमं ( for the post. half ). — ( L. 4530 ) $D_{10}$ $T_{2,3}$ G $M_4$ चोक्ता ( for चोक्त्वा ). $T_1$ एवंविधं यमेनोक्ता ( for the prior half ). $D_{10}$ $T_3$ G निवृत्ता ( for °त्य ). — ( L. 4531 ) $T_1$ -व्रत- ( for -प्रिय- ). — ( L. 4532 ) $D_{10}$ T G $M_4$ स्त्रियाः पतिः ( for पतिः स्त्रियः ). — ( L. 4533 ) $G_4$ पतिप्रिया ( for °परा ). $D_{10}$ T G $M_4$ पतीनुपचरेदिति ( for the post. half ). — Colophon. — *Sub-parvan :* $M_{1-3}$ दानधर्म. — *Adhy. name :* $D_{10}$ $T_{2,3}$ उमामहेश्वरसंवादे पतिव्रतामाहात्म्यं; $G_2$ पातिव्रत्यमाहात्म्यं; $M_{1-3}$ उमामहेश्वरसंवादे पातिव्रत्यप्रशंसनं; $M_4$ उमामहेश्वरसंवादः. — *Adhy. no. :* $D_{10}$ $T_{2,3}$ $G_{2,4}$ 232; $T_1$ $M_4$ 224; $G_{1,3}$ $M_1$ 226; $M_{2,3}$ 227. — $T_1$ om. lines 4534–4706. — ( L. 4534 ) $D_{10}$ $T_{2,3}$ G $M_4$ वृत्तांतं श्रूयतां शुभं ( $D_{10}$ कथां ) ( for the post. half ). — ( L. 4536 ) $D_{10}$ $T_{2,3}$ G $M_4$ तु तं ( for पतिम् ). — ( L. 4537 ) $D_{10}$ $T_{2,3}$ G नित्यं ( for ततः ). — ( L. 4538 ) $D_{10}$ $T_{2,3}$ G $M_4$ संपाद्यतान् ( for संप° ). — ( L. 4539 ) $D_{10}$ $G_2$ पत्युः प्रियतमं भवेत् ( for the post. half ). — ( L. 4540 ) $D_{10}$ $T_{2,3}$ G $M_4$ यथा भर्ता तथा नारी ( for the prior half ). $G_2$ गुरूणां प्रतिपद्यतां ( for the post. half ). — ( L. 4543 ) $D_{10}$ $T_{2,3}$ G $M_4$ सहसा परिचारणं ( for the post. half ). — ( L. 4544 ) $G_2$ संप्रेत्य ( for संप्रीत्या ). — ( L. 4546 ) $D_{10}$ $T_{2,3}$ G $M_4$ आगमेन ( for °मने ). — ( L. 4548 ) $D_{10}$ $G_2$ मंगळं; $T_{2,3}$ $G_{1,3,4}$ $M_4$ मंगलं ( for मङ्गल्यं ). — ( L. 4550 ) $D_{10}$ -कार्यं ( for -कार्ये ). — ( L. 4552 ) $D_{10}$ $G_3$ अपरं ( for परमं ). — ( L. 4553 ) $D_{10}$ $T_{2,3}$ G $M_4$ भर्तुः ( for साध्वी ). Kumbh. ed. धुरंधरा भवेद्भर्तुः ( for the prior half ). $D_{10}$ $T_{2,3}$ G $M_4$ साध्वी ( for पत्युर् ). — ( L. 4555 ) $D_{10}$ Madras ed. उपहार( $D_{10}$ अपहास )समन्वितं; $T_{2,3}$ G $M_4$ मंदहाससमन्वितं ( for the post. half ). — $D_{10}$ $T_{2,3}$ $G_{1,3,4}$ $M_4$ om. ( hapl. ) line 4557. $G_2$ om. ( hapl. ) lines 4557–4565. — ( L. 4558 ) $T_{2,3}$ $G_{1,3,4}$ $M_4$ अन्यथा ( for °दा ). — ( L. 4559 ) $D_{10}$ $T_{2,3}$ $G_{1,3,4}$ $M_4$ प्रीतिकरी ( for °करा ). — ( L. 4560 ) $D_{10}$ $T_{2,3}$ $G_{1,3,4}$ $M_4$ तोषयेत् ( for जो° ). — ( L. 4561 ) $D_{10}$ $T_{2,3}$ $G_{1,3,4}$ अथ ( for तथा ). — ( L. 4562 ) $D_{10}$ $T_{2,3}$ $G_{1,3,4}$ $M_4$ चंडालं ( for चण्डालांश् ). — ( L. 4564 ) $D_{10}$ $T_{2,3}$ $G_{1,3,4}$ $M_4$ पत्युर्धर्मं विवर्धयेत् ( for the post.

अप्रियं वा हितं ब्रूयात्तस्य कामार्थकाङ्क्षया ।
एकान्तचर्याकथनं कलहं वर्जयेत्परैः ।
बहिरालोकनं चैव मोहं व्रीडां च पैशुनम् ।
बह्वाशित्वं दिवास्वप्नमेवमादीनि वर्जयेत् ।
रहस्येकासनं साध्वी न कुर्यादात्मजैरपि ।
यद्यद्द्यान्निधत्स्वेति न्यासवत्परिपालयेत् ।
विस्मृतं वा पतिद्रव्यं प्रतिदद्यात्स्वशौचतः ।
यत्किंचित्पतिना दत्तं तल्लब्ध्वा सुमुखी भवेत् ।
अतियाच्ञामतीर्ष्यां च दूरतः परिवर्जयेत् ।
बालवद्वृद्धवन्नार्याः सदैवातुरवत्पतिः ।
भार्यया व्रतमित्येव भर्तव्यः सततं विभो ।
एतत्पतिव्रतावृत्तमुक्तं देव समासतः ।
न च भोगे न चैश्वर्ये न धने न सुखे तथा ।
स्पृहा यस्या यथा पत्यौ सा नारीणां पतिव्रता ।
पतिर्हि दैवतं स्त्रीणां पतिर्बन्धुः पतिर्गतिः ।
नान्यां गतिमहं पश्ये प्रमदानां यथा पतिः ।
जातिष्वपि च वै स्त्रीत्वं विशिष्टमिति मे मतिः ।
कायक्लेशेन महता पुरुषः प्राप्नुयात्फलम् ।
तत्सर्वं लभते नारी सेवन्तीन्द्रियगोचरान् ।
यथासुखं पतिमती सर्वं पत्यनुकूलतः ।
ईदृशं धर्मसौकर्यं पश्यध्वं प्रमदाः प्रति ।
एतद्विस्मृत्य वर्तन्ते कुस्त्रियः पापमोहिताः ।
तपश्चर्या च दानं च पत्यौ तस्याः समर्पितौ ।
रूपं कुलं यशः स्वर्गः सर्वं तस्मिन्प्रतिष्ठितम् ।
एवंवृत्तसमाचारा स्ववृत्तेनैव शोभना ।
पतिना च समं गच्छेत्पुण्यलोकान्स्वकर्मणा ।
वृद्धो विरूपो बीभत्सुर्धनवान्निर्धनोऽपि वा ।
एवंभूतोऽपि भर्ता वै स्त्रीणां भूषणमुत्तमम् ।
आढ्यं वा रूपयुक्तं वा विरूपं धनवर्जितम् ।
या पतिं तोषयेत्साध्वी सा नारीणां पतिव्रता ।
दरिद्रांश्च विरूपांश्च प्रमूढान्कुष्ठसंयुतान् ।
एवंविधान्पतीन्देव तोषयित्वा पतिव्रता ।
उपर्युपरि तांल्लोकान्पत्यैव सह गच्छति ।
एवं प्रवर्तमानायाः पतिः पूर्वं म्रियेत चेत् ।
तदानुमरणं गच्छेत्पुनर्धर्मं चरेत वा ।
एतदेवं मया प्रोक्तं स्त्रीणां धर्माश्रितं हितम् ।

Colophon.

उमा ।

एवमेतन्मया प्रोक्तं स्त्रियस्तु बहुधा स्मृताः ।
देवतानागगन्धर्वमनुष्या इति नैकधा ।

half). — (L. 4566) $D_{10}$ $T_{2,3}$ $G_{1,3,4}$ $M_4$ तथा (for भवेत्). — (L. 4567) $D_{10}$ $T_{2,3}$ G $M_4$ यथा (for तथा). $D_{10}$ $T_{2,3}$ G $M_4$ -संचये (for -संशये). Kumbh. ed. विवादे वार्थसंचये (for the post. half). — (L. 4568) $T_{2,3}$ $G_{1,3,4}$ $M_4$ तत्सहायार्थं (for च स°). $T_{2,3}$ $G_{1,3,4}$ तथा (for तदा). — (L. 4569) $D_{10}$ $T_{2,3}$ G $M_4$ च (for वा). $D_{10}$ $T_{2,3}$ G धर्मार्थ- (for कामार्थ-). — (L. 4571) $G_2$ व्रीळां (for व्रीडां). — (L. 4572) $D_{10}$ $T_{2,3}$ G $M_4$ एवमादि वि- (for °दीनि). — (L. 4574) $D_{10}$ न (for यद्). — (L. 4575) $D_{10}$ $T_{2,3}$ G $M_4$ [अ]पि यद् (for पति-). — (L. 4576) $D_{10}$ $T_{2,3}$ G $M_4$ लब्ध्वा तेन ($D_{10}$ तत्सा) सुखी भवेत् (for the post. half). — (L. 4577) $D_{10}$ $T_{2,3}$ G $M_4$ अतीवाशाम् (for अतियाच्ञाम्). — (L. 4578) $D_{10}$ $T_{2,3}$ G $M_4$ भार्या (for नार्याः). $T_{2,3}$ [अ]नुचरेत् (for [आ]तुरवत्). — (L. 4579) $D_{10}$ $T_{2,3}$ G $M_4$ भार्यायाः (for भार्यया). $D_{10}$ $T_{2,3}$ G $M_4$ कर्तव्यः (for भर्तव्यः). — (L. 4581) $D_{10}$ $T_{2,3}$ G $M_4$ न सुखे न धने तथा (for the post. half). — (L. 4582) $D_{10}$ $T_{2,3}$ G $M_4$ तथा भर्तुः (for यथा पत्यौ). — (L. 4584) $T_{2,3}$ $G_{1,3,4}$ $M_4$ नान्यं (for नान्यां). $D_{10}$ $T_{2,3}$ G $M_4$ प्रमदाया (for °नां). — (L. 4585) $D_{10}$ $T_{2,3}$ $G_{1,3,4}$ $M_4$ मे (for वै). $D_{10}$ $G_2$ विशिष्टं मे मतिः प्रभो (for the post. half). — (L. 4587) $D_{10}$ $T_{2,3}$ G $M_4$ सुखेन पतिपूजया (for the post. half). — (L. 4589) $D_{10}$ $T_{2,3}$ G $M_4$ -साकल्यं (for -सौकर्यं). $D_{10}$ $T_{2,3}$ G $M_4$ पश्य त्वं प्रमदां प्रति ($G_2$ सती) (for the post. half). — (L. 4590) $D_{10}$ $T_{2,3}$ G $M_4$ एताद्विस( $G_2$ °भ )ज्य पच्यंते (for the prior half). $G_2$ स्त्रियः पापविमोहिताः (for the post. half). — (L. 4591) $G_2$ तपश्चर्यां (for °श्चर्या). $T_{2,3}$ G $M_4$ समर्पितं (for °र्पितौ). $D_{10}$ पत्यौ तस्याः समर्पितं (for the post. half). — (L. 4592) $D_{10}$ $T_{2,3}$ G तेजः (for स्वर्गः). $G_{1,3,4}$ अस्मिन् (for त°). — (L. 4593) $D_{10}$ Kumbh. ed. शोभनाः (for °ना). — (L. 4594) $D_{10}$ $T_{2,3}$ G $M_4$ स्वभर्त्रा (for पतिना). $D_{10}$ $T_{2,3}$ G $M_4$ सु- (for स्व-). — (L. 4595) $D_{10}$ $T_{2,3}$ $G_{1,3,4}$ $M_4$ बीभत्सो (for °त्सुर्). $G_2$ वृद्धान्विरूपान्बीभत्सान् (for the prior half). $G_2$ om. from the post. half up to the prior half of line 4599. — (L. 4596) $D_{10}$ $T_{2,3}$ $G_{1,3,4}$ $M_4$ transp. भर्ता and वै. — (L. 4598) $D_{10}$ $T_{2,3}$ $G_{1,3,4}$ $M_4$ सा पत्नीनां विशिष्यते (for the post. half). — (L. 4599) $G_2$ अधनान् (for प्रमूढान्). — For lines 4600–4601, $D_{10}$ $T_{2,3}$ G $M_4$ subst.:

पतीनुपचरेल्लोकानक्षयान्प्रतिपद्यते ।

— $D_{10}$ $T_{2,3}$ G $M_4$ om. (hapl.) from the post. half of line 4604 up to the prior half of line 4605. — Colophon. — *Sub-parvan* : $M_{1-3}$ दानधर्म. — *Adhy. name* : $M_{1-3}$ उमामहेश्वरसंवादे स्त्रीलक्षणं. — *Adhy. no.* : $M_1$ 227 ; $M_{2,3}$ 228. — (L. 4606) $D_{10}$ $T_{2,3}$ G $M_4$ Madras

सौम्यशीलाः शुभाचाराः सर्वास्ताः संभवन्ति हि ।
अथाशुभं प्रवक्ष्यामि स्त्रीणां वृत्तं महेश्वर ।
आसुर्यश्चैव पैशाच्यो राक्षस्यश्च भवन्ति याः ।
तासां वृत्तमशेषेण श्रूयतां लोककारणात् ।
न्यायतो वान्यथा प्रोक्ता भावदोषसमन्विताः ।
भर्तॄनपचरन्त्येव रागद्वेषबलात्कृताः ।
स्वधर्मविमुखा भूत्वा प्रदुष्यन्ति यतस्ततः ।
प्रवृद्धविषया नित्यं प्रतिकूलं वदन्ति च ।
अर्थान्विनाशयन्त्येव न गृह्णन्ति हितं क्वचित् ।
स्वबुद्धिनिरता भूत्वा जीवन्ति च यथा तथा ।
गुणवत्यः क्वचिद्भूत्वा पतिधर्मपरा इव ।
पुनर्भवन्ति पापिष्ठा विषमं वृत्तमाश्रिताः ।
अनवस्थितमर्यादा बहुचेष्टा व्ययप्रियाः ।
असंतुष्टाश्च लुब्धाश्च ईर्ष्याक्रोधयुता भृशम् ।
भोगप्रिया हितद्वेष्याः कामभोगपरायणाः ।
पतीन्परिभवन्त्येव प्रतिकूलपरायणाः ।
प्रायशोऽनृतभूयिष्ठा गुरूणां प्रतिलोमकाः ।
एवंयुक्तसमाचारा आसुरं भावमाश्रिताः ।
अपराः पापकारिण्यः सततं कलहप्रियाः ।
परुषा रूक्षवचना निर्घृणा निरपत्रपाः ।
निःस्नेहाः कोपनाश्चैव भर्तृपुत्रस्वबन्धुषु ।
घोरा मांसप्रिया नित्यं हसन्ति च रुदन्ति च ।
पतीन्व्यभिचरन्त्येवमुन्मार्गेण यथा तथा ।
बन्धुभिर्भर्त्सिता भूत्वा गृहकार्याणि कुर्वते ।
अथ वा भर्त्सिता देव नीचवृत्ताः स्वबन्धुषु ।
तथैवात्मवधं घोरं व्यवस्येयुर्न संशयः ।
निर्दया निरनुक्रोशाः कुटुम्बार्थविलोपनाः ।
धर्मार्थरहिता घोराः सततं कुर्वते क्रियाः ।
अनर्थनिपुणाः पापाः परप्राणेषु निर्दयाः ।
एवंयुक्तसमाचाराः स्त्रियः पैशाच्यमाश्रिताः ।
अपरा मोहसंयुक्ता निर्लज्जा रोदनप्रियाः ।
अशुद्धा मलदिग्धाङ्गाः पानमांसरता भृशम् ।
वदन्त्यनृतवाक्यानि हसन्ति विलपन्ति च ।
दुष्प्रसादा महाक्रोधाः स्वप्नशीला निरन्तरम् ।
तामस्यो नष्टतत्त्वार्था मन्दशीला महोदराः ।
भुञ्जन्ति विविधं सिद्धं भोजनं तीव्रसंभ्रमाः ।
गुणरूपवयोयुक्तं पतिं कामुकमुत्तमम् ।
हित्वान्यानेव गच्छन्ति सर्वथा भृशपापिकाः ।
निर्लज्जा धर्मसंदिग्धाः प्रतिकूलाः समन्ततः ।
एवंयुक्तसमाचाराः स्त्रियो राक्षस्यमाश्रिताः ।
एवंविधानां सर्वासां न परत्रेह वा सुखम् ।
एतासामेव कुस्त्रीणां मृतानां च महेश्वर ।
असंशयं चिरं कालं नरके वास इष्यते ।
नरकाद्धि विमुक्तानां कथंचित्कालपर्ययात् ।
इष्यते जन्म मानुष्यं कष्टं तत्रापि भुञ्जते ।
तासां दुष्कृतसंयोगाद्दुःखं जन्मान्तरेष्वपि ।
दरिद्राः क्लेशभूयिष्ठा विरूपाः कुत्सिताः परैः ।
विधवा दुर्भगा वापि लभन्ते दुःखमीदृशम् ।
शतवर्षसहस्रान्तमात्मानं व्यभिचारिणी ।
नयेज्जारं च निरयं पतिं पापेन योजयेत् ।

ed. देवदानवगंधर्वा (Madras ed. °र्वं-) (for the prior half). — $G_2$ om. lines 4608–4611. —(L. 4608) $D_{10}$ $T_{2, 3}$ $G_{1, 3, 4}$ $M_4$ यथाशुभं ($D_{10}$ °द्धं) (for अथाशुभं). $D_{10}$ $T_{2, 3}$ $G_{1, 3, 4}$ $M_4$ धर्मं (for वृत्तं). —(L. 4609) $D_{10}$ $T_{2, 3}$ $G_{1, 3, 4}$ $M_4$ हि (for याः). —(L. 4612) $D_{10}$ $T_{2, 3}$ G उपचरंति (for अप°). —(L. 4615) Kumbh. ed. [ए]वं (for [ए]व). —$D_{10}$ om. (hapl.?) line 4619. —(L. 4619) $T_{2, 3}$ G $M_4$ व्यवस्थिताः (for व्ययप्रियाः). —(L. 4620) $G_2$ -दोषयुता (for -क्रोध°). — $D_{10}$ $T_{2, 3}$ G $M_4$ om. (hapl.) line 4622. —(L. 4624) $T_{2, 3}$ $G_{1, 3, 4}$ $M_4$ एवंवृत्तसमाचारा ((for the prior half). $D_{10}$ $T_{2, 3}$ G $M_4$ त्वासुरं (for आ°). —(L. 4625) $D_{10}$ $T_{2, 3}$ G $M_4$ अपकारपरा नित्यं (for the prior half). —(L. 4627) $D_{10}$ $T_{2, 3}$ G $M_4$ क्रोधनाश्च (for कोप°). —(L. 4629) $D_{10}$ व्यातिचरन्ति; $G_2$ अभि° (for व्याभि°). $T_{2, 3}$ $G_{1, 3, 4}$ $M_4$ [ए]व (for [ए]वम्). $D_{10}$ $T_{2, 3}$ G $M_4$ दुर्मार्गेण (for उन्मा°). —(L. 4631) $D_{10}$ $T_{2, 3}$ G $M_4$ निवृत्ताः स्वेषु कर्मसु (for the post. half). —(L. 4632) $D_{10}$ $G_2$ -भवं (for -वधं). —(L. 4633) $D_{10}$ $T_{2, 3}$ G $M_4$ -विलोपकाः (for °पनाः). —(L. 4635) $D_{10}$ $T_{2, 3}$ G अनर्थे (for °र्थ-). —(L. 4638) $D_{10}$ $G_2$ -दिग्धांग्यः (for -दिग्धाङ्गाः). —(L. 4642) $D_{10}$ $T_{2, 3}$ G $M_4$ भुंजते (for भुञ्जन्ति). $G_2$ सिद्धिं (for सिद्धं). —(L. 4643) $T_{2, 3}$ $G_{1, 3, 4}$ $M_4$ कामिनम् (for कामुकम्). —(L. 4644) $D_{10}$ $T_{2, 3}$ G $M_4$ [अ]न्येनेव (for [अ]न्यानेव). $D_{10}$ $T_{2, 3}$ G $M_4$ -तापिताः (for -पापिकाः). —(L. 4645) $G_2$ सर्व- (for धर्म-). —(L. 4646) $D_{10}$ $T_{2, 3}$ $G_{1, 3, 4}$ $M_4$ एवंरूप- (for °युक्त-). $D_{10}$ $T_{2, 3}$ G $M_4$ राक्षसम् (for °स्यम्). —(L. 4647) $G_{1, 3, 4}$ महा- (for [इ]ह वा). — $D_{10}$ $T_{2, 3}$ G $M_4$ om. lines 4648–4649. —(L. 4650) $D_{10}$ $T_{2, 3}$ G $M_4$ विप्र- (for हि वि-). $D_{10}$ $T_{2, 3}$ G $M_4$ मानुष्यं दुर्लभं भवेत् (for the post. half). — For line 4651, $D_{10}$ $T_{2, 3}$ G $M_4$ subst.:

कष्टं तत्रापि भुञ्जन्ते स्वकृतं दुःखजं बहु ।

[ $D_{10}$ $G_2$ इष्टं (for कष्टं). ].

एतद्यदि तु विज्ञाय पुनश्चेद्धितमात्मनः ।
कुर्युर्भर्तारमाश्रित्य तथा धर्ममवाप्नुयुः ।
अभिसंयान्ति ता लोकान्पुण्यान्परमशोभनान् ।
अवमत्य तु याः पूर्वं पतिं दुष्टेन चेतसा ।
वर्तमानाश्च सततं भर्तृणां प्रतिकूलताम् ।
भर्त्रानुमरणं काले याः कुर्वन्ति तथाविधाः ।
कामात्क्रोधाद्भयान्मोहादपहास्या भवन्ति ताः ।
आदिप्रभृति कुस्त्रीणां तथानुमरणं वृथा ।
आदिप्रभृति या साध्वी भर्तुः प्रियपरायणा ।
ऊर्ध्वं गच्छति सा तत्र भर्त्रानुमरणं गता ।
एवं मृताया वै लोकानहं पश्यामि चक्षुषा ।
स्पृहणीयान्सुरगणैर्यान्गच्छन्ति पतिव्रताः ।
अथ वा भर्तरि मृते वैधव्यं धर्ममाश्रिता ।
मृतं च पतिमुद्दिश्य कुर्याच्चैवंविधं तपः ।
एवं गच्छति सा नारी पतीनां लोकमुत्तमम् ।
रमणीयमनिर्देश्यं दुष्प्रापं देवमानुषैः ।
प्राप्नुयात्तादृशं लोकं केवलं या पतिव्रता ।
इति ते कथितं देव स्त्रीणां धर्ममनुत्तमम् ।
तवैव प्रियकामिन्या यन्मयोक्तं तवाग्रतः ।
चापल्यान्मम देवेश तद्भवान्क्षन्तुमर्हति ।

नारदः ।

एवं वदन्तीं रुद्राणीं लज्जाभावसमन्विताम् ।
तोपयामास देवेशो वाचा संपूजयन्प्रियाम् ।
ऋषयो देवगन्धर्वाः सासुराः साप्सरोगणाः ।
दैवतप्रमदाश्चापि देवनद्यश्च संगताः ।
प्रणम्य शिरसा देवीं स्तुतिभिश्चापि तुष्टुवुः ।
पूजयामासुरपरे देवदेवं मुदा युताः ।
अपरे विस्मयान्नोचुस्तमर्थमभिचिन्त्य वै ।
संप्रहृष्टमनाः शर्वः संवादं चिन्तयन्मुहुः ।
तत्र तस्मिन्क्षणे देवीं देवो वचनमब्रवीत् ।
शृणु कल्याणि मद्वाक्यं यदिदं तु त्वया मया ।
कृतं संवादमभवत्तत्त्रिलोकं गमिष्यति ।
पुण्यं पवित्रमाख्यानं भविता तत्र संशयः ।
य इदं श्रावयेद्विद्वान्संवादं त्वावयोः प्रिये ।
शुचिर्भूत्वा नरान्युक्तान्स यज्ञफलमाप्नुयात् ।
ये त्वेनं शृणुयुर्नित्यं धर्म्यं तद्गतमानसाः ।
श्रवणादेव तेषां तु महद्धर्मफलं भवेत् ।
कथयेच्छृणुयाद्वापि यः कश्चिन्नित्यमाह्निकम् ।
स भवेन्मत्प्रियो देवि तं स्मरामि दिने दिने ।
य इमं पठते नित्यं संवादं चावयोः शुभम् ।

— D10 T2.3 G M4 om. line 4652. — (L. 4655) D10 T2.3 G M4 -सहस्राणि निरयं (for °न्तमात्मानं). — For line 4656, D10 T2.3 G M4 subst.:

व्रजेत्पतिं च पापेन संयोज्य स्वकुलं तथा ।

— (L. 4657) D10 T2.3 G M4 एतद्विज्ञाय पतितं (D10 G2 यदि तु) (for the prior half). — (L. 4658) D10 T2.3 G M4 कुर्याद् (for कुर्युर्). D10 T2.3 G अवाप्नुयात् (for °प्नुयुः). — (L. 4659) D10 T2.3 G M4 अतिसंयाति ताँल्लोकान् (for the prior half). — (L. 4661) D10 T2.3 G1.3.4 -कूलनः (for °ताम्). — (L. 4662) G2 तथाविधिं (for °विधाः). — (L. 4663) D10 T2.3 G1.3.4 M4 लोभाद् (for मोहाद्). — (L. 4665) D10 G2 सा (for या). T2.3 G M4 पत्युः (for भर्तुः). — (L. 4666) D10 प्रीता; T2.3 G1.3.4 M4 पूता (for तत्र). G2 ऊर्ध्वंगतिश्च सा पूता (for the prior half). — (L. 4668) D10 T2.3 G M4 यान्या (D10 स्याद्ग )च्छति पतिव्रता (for the post. half). — After line 4669, D10 T2.3 G M4 Kumbh. ed. ins.:

तूष्णीं भौमजले नित्यमञ्जलिस्नानमुत्तमम् ।
[ Kumbh. ed. भौमं (for भौम-). ]

— (L. 4670) D10 T2.3 G M4 व्रतं (for मृतं). D10 T2.3 G M4 कुर्युश्चैव विधिं ततः (for the post. half). — (L. 4671) D10 T2.3 G M4 पतिलोकमनुत्तमं (for the post. half). — D10 om. (hapl.) lines 4672–4674. — (L. 4675) D10 T2.3 G M4 भवतः (for तवैव). — (L. 4678) D10 T2.3 G प्रशशंस च देवेशो वाचा संजनयन्प्रियं. — (L. 4679) D10 T2.3 G M4 प्रमदाश्च सहस्रशः (for the post. half). — D10 T2.3 G M4 om. line 4680. — (L. 4681) D10 T2.3 G [अ]भि- (for [अ]पि). — D10 G2 om. lines 4682–4683. T2.3 G1.3.4 M4 om. line 4683. — For lines 4684–4685, D10 T2.3 G M4 subst.:

संवादं चिन्तयन्त्यन्ये श्रद्दधानाः सुचेतसः ।
ततस्तु देवदेवेशो देवीं वचनमब्रवीत् ।

— Before line 4686, G1.3.4 ins. महेश्वरः. — (L. 4686) D10 T2.3 G M4 संवादोयं मया तव (for the post. half). — D10 T2.3 G M4 om. line 4687. — (L. 4688) D10 T2.3 G M4 ख्यातं (G2 °तिं) च (for आख्यानं). T2.3 नात्र (for तत्र). — (L. 4689) D10 T2.3 G इमं (for इदं). — (L. 4690) G2 विप्रान् (for युक्तान्). D10 T2.3 G1.3.4 M4 स तैः स्वर्गं व्रजेत्सुखं; G2 युक्तान्स्वैः स्वर्गतिं व्रजेत् (for the post. half). — (L. 4691) D10 T2.3 G M4 यस्त्वेनं शृणुयान्नित्यं (for the prior half). D10 T2.3 G M4 om. (hapl.) from the post. half up to the prior half of line 4695. — (L. 4695) D10 प्रियं (for शुभम्). — (L. 4696) D10 T2.3 G M4 लभते

कीर्तिमायुष्यमारोग्यं परत्रेह स विन्दति ।
नारदः ।
श्रुत्वा चेमं प्रयोक्ता तु कथं स न भवेन्महान् ।
इत्युक्त्वा स महादेवस्तत्रैवान्तरधीयत ।
देवीं देवं वयं तत्र नापश्याम प्रभावतः ।
एवं पुरा मयाश्चर्यं दृष्टं हैमवते वने ।
चरता तीर्थयात्रार्थं पुरा केशिनिषूदन ।
तदद्य कथितं सर्वं तव केशव शृण्वतः ।
भीष्मः ।
एतावदुक्त्वा देवर्षिर्नारदो विरराम ह ।
तदद्य निखिलेनैव कथितं ते युधिष्ठिर ।
वैशंपायनः ।
धर्मराजस्तु तच्छ्रुत्वा भ्रातृभिर्मुदितोऽभवत् ।
तत्सर्वं निखिलं प्रोक्तं तवेह जनमेजय ।

Colophon.

16

After 13. 134, V1 B Dn D1. 2, 4–9 ins. :

ऋषयः ।
पिनाकिन्भगनेत्रघ्न सर्वलोकनमस्कृत ।
माहात्म्यं वासुदेवस्य श्रोतुमिच्छाम शंकर ।
महेश्वरः ।
पितामहादपि वरः शाश्वतः पुरुषो हरिः ।
कृष्णो जाम्बूनदाभासो व्यभ्रे सूर्य इवोदितः ।
दशबाहुर्महातेजा देवतारिनिषूदनः ।
श्रीवत्साङ्को हृषीकेशः सर्वदैवतपूजितः ।
ब्रह्मा तस्योदरशयस्तथाहं च शिरोभवः ।
शिरोरुहेभ्यो ज्योतींषि रोमभ्यश्च सुरासुराः ।
ऋषयो देहसंभूतास्तस्य लोकाश्च शाश्वताः ।
पितामहगृहं साक्षात्सर्वदेवगृहं च सः ।
सोऽस्याः पृथिव्याः कृत्स्नायाः स्रष्टा त्रिभुवनेश्वरः ।
संहर्ता चैव भूतानां स्थावरस्य चरस्य च ।
स देवरिपुजित्साक्षाद्देवनाथः परंतपः ।
सर्वज्ञः सर्वसंश्लिष्टः सर्वगः सर्वतोमुखः ।
परमात्मा हृषीकेशः सर्वव्यापी महेश्वरः ।
न तस्मात्परमं भूतं त्रिषु लोकेषु किंचन ।
सुरकार्यार्थमुत्पन्नो मानुषं वपुरास्थितः ।
न हि देवगणाः शक्तास्त्रिविक्रमविनाकृताः ।
भुवने देवकार्याणि कर्तुं नायकवर्जिताः ।
नायकः सर्वदेवानां सर्वभूतनमस्कृतः ।
एतस्य देवनाथस्य देवकार्यपरस्य च ।
ब्रह्मभूतस्य सततं ब्रह्मर्षिशरणस्य च ।
ब्रह्मा वसति गर्भस्थः शरीरे सुखसंस्थितः ।
सर्वाः सुखस्थिताश्चैव शरीरे तस्य देवताः ।
स देवः पुण्डरीकाक्षः श्रीगर्भः श्रीसहोषितः ।
शार्ङ्गचक्रायुधः खड्गी सर्वनागरिपुध्वजः ।

स गतिं परां (for the post. half). — D10 T2. 3 G M4 om. line 4697 (with the ref.). — (L. 4704) D10 T2. 3 G M4 तदद्य निखिलं सर्वं (for the prior half). — Colophon om. in T1. — *Sub-parvan* : M1–3 दानधर्म. — *Adhy. name* : D10 T2. 3 G M4 उमामहेश्वरसंवादे स्त्रीलक्षणं; M1–3 उमामहेश्वरसंवादः. — *Adhy. no.* : D10 T2. 3 G2. 4 233; G1. 3 227; M1 228; M2. 3 229; M4 225.

16

Before the ref., V1 B1. 4 ins. :

भीष्म उवाच ।
महेश्वरवचः श्रुत्वा ऋषयो विस्मयान्विताः ।
वासुदेवस्य माहात्म्यं द्रष्टुं समुपचक्रमुः ।
[ (L. 2) V1 प्रष्टुं (for द्रष्टुं). ]

— (L. 1) D4 -लोके; D5 -देव- (for -लोक-). — (L. 2) V1 B2. 3 Dn1. n3 D1. 2. 4–7. 9. 10 इच्छामि (for °म). — After line 2, D4–9 ins. :

त्वमेव तस्य जानीषे पदान्यहिरहेरिव ।
गुणान्गुणवतां मुख्य स वा तव विशेषतः ।
[ (L. 2) D5 गुणानगुणतां मुख्य (for the prior half). D8 च ते च (for वा तव). ]

— B3 महेशः; D2. 4–9 ईश्वरः (for महेश्वरः). — (L. 3) B2 D4–9 परः (for वरः). B2 पुरुषः शाश्वतो हरिः (for the post. half). — D1. 2 om. line 5. — (L. 6) V1 B -यूथपः (for -पूजितः). — (L. 7) V1 B Dn -भवस्तस्य (for -शयस्तथा). D4. 5 transp. अहं and च. D6. 7. 9 शिरोद्भवः (for °भवः). — (L. 9) B1 Dn1 D4 देव- (for देह-). D1. 8. 9 तथा (for तस्य). — (L. 10) D4. 8. 9 -गृहश्च यः; D5–7 -गृहं च यः (for -गृहं च सः). — (L. 11) D4–9 अस्याः (for सोऽस्याः). — (L. 12) Dn2 च जंगमः (for चरस्य च). — (L. 13) V1 B Dn स हि देववरः साक्षाद् (for the prior half). — (L. 14) D4–9 -संसृष्टः (for -संश्लिष्टः). D9 om. (hapl.) सर्वगः. — V1 B Dn3 ins. after line 14 : Dn1. n2 D5 after line 15 :

सनातनो वै मधुहा गोविन्द इति विश्रुतः ।
स सर्वान्पार्थिवान्संख्ये घातयिष्यति मानदः ।

— V1 B Dn3 om. line 15. Dn2 reads lines 19–20 on marg. — (L. 19) D1 -वर्जितं (for °ताः). — (L. 20) V1 B D2 -भूतानां (for -देवानां). Dn1. n2 D2, 4–9

उत्तमेन च शौचेन शीलेन च दमेन च ।
पराक्रमेण वीर्येण वपुषा दर्शनेन च ।
आरोहेण प्रमाणेन धैर्येणार्जवसंपदा ।
आनृशंस्येन रूपेण बलेन च समन्वितः ।
अस्त्रैः समुदितः सर्वैर्दिव्यैश्चाद्भुतदर्शनैः ।
योगमायः सहस्राक्षो निरवद्यो महामनाः ।
धीरो मित्रजनश्लाघी ज्ञातिबन्धुजनप्रियः ।
क्षमावाननहंवादी ब्रह्मण्यो ब्रह्मनायकः ।
भयहर्ता भयार्तानां मित्राणां नन्दिवर्धनः ।
शरण्यः सर्वभूतानां दीनानां पालने रतः ।
श्रुतवानर्थसंपन्नः सर्वभूतनमस्कृतः ।
समाश्रितानामुपकृच्छत्रूणामपि धर्मवित् ।
मतिमान्नीतिसंपन्नो ब्रह्मचारी जितेन्द्रियः ।
भवार्थमिह देवानां बुद्ध्या परमया युतः ।
प्राजापत्ये शुभे मार्गे मानवे धर्मसंहिते ।
समुत्पत्स्यति गोविन्दो मनोर्वंशे महात्मनः ।
अङ्गनामा मनोः पुत्रस्त्वन्तर्धामा ततः परः ।
अन्तर्धाम्नो हविर्धामा प्रजापतिरनिन्दितः ।
प्राचीनबर्हिर्भविता हविर्धामसुतो महान् ।
तस्य प्रचेतःप्रमुखा भविष्यन्ति दशात्मजाः ।
प्राचेतसस्तथा दक्षो भवितेह प्रजापतिः ।
दाक्षायिण्यास्तथादित्यो मनुरादित्यतस्तथा ।
मनोश्च वंशज इडा सुद्युम्नश्च भविष्यति ।
बुधात्पुरूरवाश्चापि तस्मादायुर्भविष्यति ।
नहुषो भविता तस्माद्ययातिस्तस्य चात्मजः ।
यदुस्तस्मान्महासत्त्वः क्रोष्टा तस्माद्भविष्यति ।
क्रोष्टुश्चैव महान्पुत्रो वृजिनीवान्भविष्यति ।
वृजिनीवतो हि भविता उषङ्गुरपराजितः ।
उषङ्गोर्भविता पुत्रः शूरश्चित्ररथस्तथा ।
तस्य त्ववरजः पुत्रः शूरो नाम भविष्यति ।
तेषां विख्यातवीर्याणां चारित्रगुणशालिनाम् ।
यज्विनां सुविशुद्धानां वंशे ब्राह्मणसंमते ।
स शूरः क्षत्रियश्रेष्ठो महावीर्यो महायशाः ।
स्ववंशविस्तरकरं जनयिष्यति मानदः ।

---

-देव- ( for -भूत- ). — ( L. 21 ) D1. 2 स तस्य ; D5 य एतद् ( for एतस्य ). D9 वा ( for च ).- — D2. 4. 6. 7. 9 om. ( hapl. ) line 22. — ( L. 23 ) D4 om. the post. half. — After line 23, Dn1. n2 D5 ins. :

शर्वः सुखं संश्रितश्च शरीरे सुखसंस्थितः ।

— ( L. 24 ) V1 B1. 2. 4. 5 Dn D6-9 सर्वाः सुखं संश्रि- ( D8-9 °स्थि )ताश्च ; B3 सर्वाश्च सुखसंयुक्ताः ; D4 om. ( for the prior half ). — ( L. 26 ) D6. 7. 9 सर्पनागारिकध्वजः ( for the post. half ). — ( L. 27 ) V1 B Dn D2 स शीलेन ; D4-8 स शौचेन. V1 B Dn D2 शौचेन ( for शीलेन ). Bom. ed. दमेन च शमेन च ( for the post. half ). — Dn2 om. ( hapl. ) line 28. — ( L. 28 ) D5-7. 9 [आ]र्जवेन ( for वीर्येण ). — ( L. 29 ) D4. 6. 7. 9 आरोहणे ; D8 °हण- ( for °हेण ). — ( L. 31 ) V1 B Dn D2 अद्भुत- ( for चा° ). — ( L. 32 ) D1. 2. 4. 6-9 योगमाया- ( for °मायः ). V1 B Dn निरपायो ( for °वद्यो ). — ( L. 33 ) V1 B Dn1. n2 D2. 4 वीरो ( for धीरो ). B3 -श्लाघ्यो ( for -श्लाघी ). — ( L. 34 ) V1 B Dn क्षमावांश्च ( for °वान् ). D8. 9 ब्रह्मज्ञो ( for °ण्यो ). — ( L. 36 ) D4. 5 भूतानां ; D6. 8. 9 भीतानां ; D7 om. ( for दीनानां ). — ( L. 37 ) D1 om. ( hapl. ) from the post. half up to the prior half of line 39. D2-9 -देव- ( for -भूत- ). — ( L. 38 ) V1 B Dn3 उदकृच् ; Dn1. n2 वरदः ; D5-9 उदधिः ( for उपकृच् ). — ( L. 39 ) V1 B Dn D6-9 नीतिज्ञो ; D2 विजयो ( for मतिमान् ). V1 B Dn ब्रह्मवादी ( for °चारी ). D1 यतेंद्रियः. — ( L. 41 ) V1 B Dn D4 -संस्कृते ( for -संहिते ). — ( L. 42 ) D4. 5. 7 स चेत्पश्यति गोविंदो ; D8. 9 स चोत्पत्स्यति गो° ( for the prior half ). — ( L. 43 ) V1 B Dn2. n3 D2. 4-9 अंगो नाम ( for अङ्गनामा ). — After the prior half, V1 Dn3 ins. :

तस्य वेनोऽभवत्सुतः ।
पृथुस्तस्याभवत्पुत्रो·

B1 Dn1 अंतर्धामा ( for त्वन्तर्धामा ). D6-9 परं ( for परः ). V1 B2-5 Dn2. n3 अंतर्धामा ततः परं ( for the post. half ). — ( L. 44 ) D4. 6-9 बाहिर्धामा ( for हवि° ). — ( L. 45 ) V1 B Dn1. n2 D2 हविर्धाम्नः ; Dn3 D7. 8 °धान- ( for °धाम- ). — ( L. 46 ) D2 तदात्मजाः ( for दशा° ). — ( L. 47 ) B4 D7. 8 प्रचेतसस्. — D4 reads lines 48-49 after 51. — ( L. 48 ) V1 B1-3 Dn3 दाक्षायण्यास्. B4. 5 दाक्षायण्यास्तदादित्यो ( B5 °दा दक्षो ) ( for the prior half ). — ( L. 49 ) D2 इंद्रः ; some Mss. इला ( for इडा ). D2 प्रद्युम्नश् ( for सु° ). — After line 49, D6 reads line 53. — B5 D4. 7-9 om. ( hapl. ) line 50 ; D6 reads it after line 52. D4 om. lines 52-53. D7. 9 om. ( hapl. ) lines 53. — ( L. 54 ) The prior half hypermetric. V1 B Dn च ( for हि ). D4-9 वृजिनीतश्च ( D7-9 °स्य ) भविता ( for the prior half ). B3. 5 Dn1. n3 D2 उपंगुर् ; D4-9 रुपंगुर् ( for उषङ्गुर् ). — ( L. 55 ) B3 उपंगोर् ; D1. 2 वृषद्गोर् ; D4-9 रुपंगोर् ( for उषङ्गोर् ). — ( L. 56 ) D4. 6-9 सिंहो ( for शूरो ). — V1 om. line 57. — ( L. 57 ) Dn3 चारित्र्य- ; D4 चरित्र- ( for चा° ). D6-9 गुरुचारित्रशालिनां ( for the post. half ). — ( L. 58 ) V1 B Dn यज्वनां ( for यज्विनां ).

वसुदेव इति ख्यातं पुत्रमानकदुंदुभिम् ।
तस्य पुत्रश्चतुर्बाहुर्वासुदेवो भविष्यति ।
दाता ब्राह्मणसत्कर्ता ब्रह्मभूतो द्विजप्रियः ।
राज्ञः सर्वांश्च रुद्धान्स मोक्षयिष्यति मानदः ।
जरासंधं च राजानं निर्जित्य गिरिगह्वरे ।
सर्वपार्थिवरत्नाढ्यो भविष्यति स वीर्यवान् ।
पृथिव्यामप्रतिहतो वीर्येण च भविष्यति ।
विक्रमेण च संपन्नः सर्वपार्थिवपार्थिवः ।
शूरसेनेषु संभूतो द्वारकायां वसन्प्रभुः ।
पालयिष्यति गां देवीं विजित्य नयवत्सदा ।
तं भवन्तः समासाद्य वाङ्माल्यैरर्हणैर्वरैः ।
अर्चयन्तु यथान्यायं ब्रह्माणमिव शाश्वतम् ।
यो हि मां द्रष्टुमिच्छेत ब्रह्माणं वा पितामहम् ।
द्रष्टव्यस्तेन भगवान्वासुदेवः प्रतापवान् ।
दृष्टे तस्मिन्नहं दृष्टो न मेऽत्रास्ति विचारणा ।
पितामहो वा देवेश इति वित्त तपोधनाः ।
स यस्य पुण्डरीकाक्षः प्रीतियुक्तो भविष्यति ।
तस्य देवगणः प्रीतो ब्रह्मपूर्वो भविष्यति ।
यश्च तं मानवो लोके संश्रयिष्यति केशवम् ।
तस्य कीर्तिर्जयश्चैव स्वर्गश्चैव भविष्यति ।
धर्माणां देशिकः साक्षात्स भविष्यति धर्मभाक् ।
धर्मविद्भिः स देवेशो नमस्कार्यः सदोद्यतैः ।
धर्म एव परो हि स्यात्तस्मिन्नभ्यर्चिते विभौ ।
स हि देवो महातेजाः प्रजाहितचिकीर्षया ।
धर्मार्थं पुरुषव्याघ्र ऋषिकोटीः ससर्ज ह ।
ताः सृष्टास्तेन विभुना पर्वते गन्धमादने ।
सनत्कुमारप्रमुखास्तिष्ठन्ति तपसान्विताः ।
तस्मात्स वाग्मी धर्मज्ञो नमस्यो द्विजपुंगवाः ।
वन्दितो हि स वन्देत मानितो मानयेत च ।
अर्चितश्चार्चयेन्नित्यं पूजितः प्रतिपूजयेत् ।
दृष्टः पश्येदहरहः संश्रितः प्रतिसंश्रयेत् ।
अर्चितश्चार्चयेन्नित्यं स देवो द्विजसत्तमाः ।
एतत्तस्यानवद्यस्य विष्णोर्वै परमं व्रतम् ।
आदिदेवस्य महतः सज्जनाचरितं सदा ।
भुवनेऽभ्यर्चितो नित्यं देवैरपि सनातनः ।
उभयेनानुरूपेण यजन्ते तमनुव्रताः ।
कर्मणा मनसा वाचा नमस्यः स द्विजैः सदा ।
यत्नवद्भिरुपस्थाय द्रष्टव्यो देवकीसुतः ।
एष वोऽभिहितो मार्गो मया वै मुनिसत्तमाः ।
तं दृष्ट्वा सर्वशो देवा दृष्टाः स्युर्मुनिसत्तमाः ।
महावराहं तं देवं सर्वलोकपितामहम् ।
अहं चैव नमस्यामि नित्यमेव जगत्पतिम् ।

---

$D_4$ यज्वनां मुनिशुद्धानां ; $D_{5-9}$ यज्विनां पुण्यकर्तृणां ( for the prior half ). $D_1$ -संमतः ; $D_{4.5.7-9}$ -सत्तमः ( $D_9$ °माः ) ( for -संमते ). — ( L. 59 ) $D_{4.5}$ महाबलः ( for °यशाः ). — ( L. 60 ) $D_{5.6.8.9}$ मानद. — $D_{4.7.9}$ om. ( hapl. ) lines 61-64. — ( L. 61 ) B Dn $D_{1.2.6}$ वसुदेवम् ( for °देव ). $V_1$ [ऽ]तिवि- ( for इति ). $D_8$ ख्यातः ( for ख्यातं ). $V_1$ $Dn_{1.\,n2}$ $D_{5.6}$ -दुंदुभिः ( for °भिम् ). — ( L. 63 ) $D_{1\ 2}$ -भूयान् ( for -भूतो ). — $D_5$ om. line 64. — ( L. 64 ) $V_1$ $B_{2.4.5}$ Dn $D_6$ सुवद्धान् ; $B_1$ सुवृद्धान् ; $B_8$ om. ( for च रुद्धान् ). $V_1$ B Dn $D_{6.8}$ यादवः ( for मानदः ). — ( L. 65 ) $V_1$ B Dn तु ( for च ). — ( L. 66 ) $D_{4.6-9}$ -रत्नाढ्यौ ; $D_5$ -साहाय्ये ( for -रत्नाढ्यो ). — ( L. 68 ) $D_4$ -सत्तम ( for -पार्थिवः ). — ( L. 69 ) $Dn_{1.\,n2}$ संभूत्वा ; Bom. ed. भूत्वा स ( for संभूतो ). $V_1$ B $Dn_3$ शूरसंहननो भूत्वा ( for the prior half ). — ( L. 70 ) $V_1$ B $Dn_{1.\,n3}$ $D_{4-9}$ नयवित् ; $Dn_2$ तपोवत् ( for नयवत् ). $D_5$ तदा ( for सदा ). — ( L. 71 ) $Dn_1$ भवद्भिः ( for °न्तः ). $B_{2-5}$ $D_{4.5}$ शुभैः ; $D_1$ धनैः ( for वरैः ). $Dn_3$ वाङ्मनोवर्धनैर्वरैः ( for the post. half ). — ( L. 72 ) $D_{4.5.7.9}$ अर्चयंति ( for °यन्तु ). — ( L. 73 ) $D_{5.8.9}$ प्रष्टुम् ( for द्रष्टुम् ). $V_1$ B Dn $D_2$ च ( for वा ). — $B_5$ om. lines 74-77. $D_5$ om. line 79. — ( L. 79 ) $D_{6-9}$ तु ( for च ). Bom. ed. मानवे ( for °वो ). — ( L. 80 ) $B_8$ भविष्यति न संशयः ( for the post. half ). — ( L. 81 ) $Dn_2$ धर्मविद् ( for °भाक् ). — ( L. 82 ) $D_1$ सदा देवो ( for स देवेशो ). $B_1$ $D_2$ सदोच्यते ; $B_3$ $Dn_3$ स उच्यते ; $D_{4.5}$ सदोदितः ; $D_{7-9}$ °दितैः ( for °द्यतैः ). — ( L. 83 ) $Dn_2$ $D_{6.7.8}$ विभो ; $D_2$ सदा ( for विभौ ). — ( L. 85 ) $D_{4.5.7.8}$ -कोटिं ( for -कोटीः ). — ( L. 87 ) $D_4$ स्थिताः ( for [अ]न्विताः ). — After line 88, Bom. ed. ins. :

दिवि श्रेष्ठो हि भगवान्हरिर्नारायणः प्रभुः ।

— ( L. 89 ) $V_1$ B Dn $D_3$ मानयीत ( for °येत ). $D_{4-9}$ सः ( for च ). — $B_2$ om. ( hapl. ) lines 90-91. — ( L. 90 ) $V_1$ $B_{1.4.5}$ Dn अर्हि( $B_{4.5}$ °र्ह )तश्चार्हयेन्नित्यं ( for the prior half ). $D_5$ चाति- ; $D_7$ चापि ( for प्रति- ). — ( L. 92 ) $D_{4-9}$ अर्हि( $D_7$ °र्ह )तश्चार्हयेन्नित्यं ( for the prior half ). — ( L. 93 ) $D_{6-9}$ हि ( for वै ). $D_{4.5.7.9}$ स्मृतं ( for व्रतम् ). — $D_6$ om. ( hapl. ) lines 95-97. — ( L. 96 ) $V_1$ B Dn $D_{1.2}$ अभयेन ( for उभ° ). $V_1$ B Dn $D_{2.4.6-9}$ युज्यंते ( for यजन्ते ). — ( L. 97 ) $V_1$ B Dn transp. नमस्यः and स. — ( L. 99 ) $D_{4-9}$ द्विज- ( for मुनि- ). — ( L. 100 ) $V_1$ $B_{2-5}$ Dn $D_9$ देवं ( for देवा ). $V_1$ B Dn $D_8$ सुर- ; $D_{4-7.9}$ द्विज-

उत्तमेन च शौचेन शीलेन च दमेन च ।
पराक्रमेण वीर्येण वपुषा दर्शनेन च ।
आरोहेण प्रमाणेन धैर्येणार्जवसंपदा ।
आनृशंस्येन रूपेण बलेन च समन्वितः ।
अस्त्रैः समुदितः सर्वैर्दिव्यैश्चाद्भुतदर्शनैः ।
योगमायः सहस्राक्षो निरवद्यो महामनाः ।
धीरो मित्रजनश्लाघी ज्ञातिबन्धुजनप्रियः ।
क्षमावाननहंवादी ब्रह्मण्यो ब्रह्मनायकः ।
भयहर्ता भयार्तानां मित्राणां नन्दिवर्धनः ।
शरण्यः सर्वभूतानां दीनानां पालने रतः ।
श्रुतवानर्थसंपन्नः सर्वभूतनमस्कृतः ।
समाश्रितानामुपकृच्छत्रूणामपि धर्मवित् ।
मतिमान्नीतिसंपन्नो ब्रह्मचारी जितेन्द्रियः ।
भवार्थमिह देवानां बुद्ध्या परमया युतः ।
प्राजापत्ये शुभे मार्गे मानवे धर्मसंहिते ।
समुत्पत्स्यति गोविन्दो मनोर्वंशे महात्मनः ।
अङ्गनामा मनोः पुत्रस्त्वन्तर्धामा ततः परः ।
अन्तर्धाम्नो हविर्धामा प्रजापतिरनिन्दितः ।
प्राचीनबर्हिर्भविता हविर्धामसुतो महान् ।
तस्य प्रचेतःप्रमुखा भविष्यन्ति दशात्मजाः ।
प्राचेतसस्तथा दक्षो भवितेह प्रजापतिः ।
दाक्षायिण्यास्तथादित्यो मनुरादित्यतस्तथा ।
मनोश्च वंशज इडा सुद्युम्नश्च भविष्यति ।
बुधात्पुरूरवाश्चापि तस्मादायुर्भविष्यति ।
नहुषो भविता तस्माद्ययातिस्तस्य चात्मजः ।
यदुस्तस्मान्महासत्त्वः क्रोष्टा तस्माद्भविष्यति ।
क्रोष्टुश्चैव महान्पुत्रो वृजिनीवान्भविष्यति ।
वृजिनीवतो हि भविता उषद्गुरपराजितः ।
उषद्गोर्भविता पुत्रः शूरश्चित्ररथस्तथा ।
तस्य त्ववरजः पुत्रः शूरो नाम भविष्यति ।
तेषां विख्यातवीर्याणां चारित्रगुणशालिनाम् ।
यज्विनां सुविशुद्धानां वंशे ब्राह्मणसंमते ।
स शूरः क्षत्रियश्रेष्ठो महावीर्यो महायशाः ।
स्ववंशविस्तरकरं जनयिष्यति मानदः ।

---

-देव- ( for -भूत- ). — ( L. 21 ) $D_{1.2}$ स तस्य ; $D_5$ य एतद् ( for एतस्य ). $D_9$ वा ( for च ). — $D_{2.4.6.7.9}$ om. ( hapl. ) line 22. — ( L. 23 ) $D_4$ om. the post. half. — After line 23, $Dn_{1.n2}$ $D_5$ ins. :

शर्वः सुखं संश्रितश्च शरीरे सुखसंस्थितः ।

— ( L. 24 ) $V_1$ $B_{1.2.4.5}$ Dn $D_{5-9}$ सर्वाः सुखं संश्रि- ( $D_{6-9}$ °स्थि )ताश्च ; $B_3$ सर्वांश्च सुखसंयुक्ताः ; $D_4$ om. ( for the prior half ). — ( L. 26 ) $D_{6.7.9}$ सर्पनागारिकध्वजः ( for the post. half ). — ( L. 27 ) $V_1$ B Dn $D_2$ स शीलेन ; $D_{4-9}$ स शौचेन. $V_1$ B Dn $D_2$ शौचेन ( for शीलेन ). Bom. ed. दमेन च शमेन च ( for the post. half ). — $Dn_2$ om. ( hapl. ) line 28. — ( L. 28 ) $D_{5-7.9}$ [आ]र्जवेन ( for वीर्येण ). — ( L. 29 ) $D_{4.6.7.9}$ आरोहणे ; $D_8$ °हण- ( for °हेण ). — ( L. 31 ) $V_1$ B Dn $D_2$ अद्भुत- ( for चा° ). — ( L. 32 ) $D_{1.2.4.6-9}$ योगमाया- ( for °मायः ). $V_1$ B Dn निरपायो ( for °वद्यो ). — ( L. 33 ) $V_1$ B $Dn_{1.n2}$ $D_{2.4}$ वीरो ( for धीरो ). $B_3$ -श्लाघ्यो ( for -श्लाघी ). — ( L. 34 ) $V_1$ B Dn क्षमावांश्च ( for °वान् ). $D_{8.9}$ ब्रह्मज्ञो ( for °ण्यो ). — ( L. 36 ) $D_{4.5}$ भूतानां ; $D_{6.8.9}$ भीतानां ; $D_7$ om. ( for दीनानां ). — ( L. 37 ) $D_4$ om. ( hapl. ) from the post. half up to the prior half of line 39. $D_{5-8}$ -देव- ( for -भूत- ). — ( L. 38 ) $V_1$ B $Dn_3$ उदकृच् ; $Dn_{1.n2}$ वरदः ; $D_{5-9}$ उदधिः ( for उपकृच् ). — ( L. 39 ) $V_1$ B Dn $D_{6-9}$ नीतिज्ञो ; $D_2$ विजयो ( for मतिमान् ). $V_1$ B Dn ब्रह्मवादी ( for °चारी ). $D_7$ यतेंद्रियः. — ( L. 41 ) $V_1$ B Dn $D_4$ -संस्कृते ( for -संहिते ). — ( L. 42 ) $D_{4.5.7}$ स चेत्पश्यति गोविंदो ; $D_{8.9}$ स चोत्पत्स्यति गो° ( for the prior half ). — ( L. 43 ) $V_1$ B $Dn_{2.n3}$ $D_{2.4-9}$ अंगो नाम ( for अङ्गनामा ). — After the prior half, $V_1$ $Dn_3$ ins. :

तस्य वेनोऽभवत्सुतः ।
पृथुस्तस्याभवत्पुत्रो-

$B_1$ $Dn_1$ अंतर्धामा ( for त्वन्तर्धामा ). $D_{6-9}$ परं ( for परः ). $V_1$ $B_{2-5}$ $Dn_{2.n3}$ अंतर्धामा ततः परं ( for the post. half ). — ( L. 44 ) $D_{4.6-9}$ बार्हिर्धामा ( for हवि° ). — ( L. 45 ) $V_1$ B $Dn_{1.n2}$ $D_2$ हविर्धाम्नः ; $Dn_3$ $D_{7.8}$ °धान- ( for °धाम- ). — ( L. 46 ) $D_2$ तवात्मजाः ( for दशा° ). — ( L. 47 ) $B_4$ $D_{7.8}$ प्रचेतसस्. — $D_4$ reads lines 48–49 after 51. — ( L. 48 ) $V_1$ $B_{1-3}$ $Dn_3$ दाक्षायण्यास्. $B_{4.5}$ दाक्षायण्यास्तदादित्यो ( $B_5$ °दा दक्षो ) ( for the prior half ). — ( L. 49 ) $D_2$ इंद्रः ; some Mss. इला ( for इडा ). $D_2$ प्रद्युम्नश् ( for सु° ). — After line 49, $D_6$ reads line 53. — $B_5$ $D_{4.7-9}$ om. ( hapl. ) line 50 ; $D_5$ reads it after line 52. $D_4$ om. lines 52–53. $D_{7.9}$ om. ( hapl. ) lines 53. — ( L. 54 ) The prior half hypermetric. $V_1$ B Dn च ( for हि ). $D_{4-9}$ वृजिनीतश्च ( $D_{7-9}$ °स्य ) भविता ( for the prior half ). $B_{3.5}$ $Dn_{1.n3}$ $D_2$ उपंगुर् ; $D_{4-8}$ रुपंगुर् ( for उपद्गुर् ). — ( L. 55 ) $B_3$ उपंगोर् ; $D_{1.2}$ वृषद्गोर् ; $D_{4-9}$ रुपंगोर् ( for उषद्गोर् ). — ( L. 56 ) $D_{4.6-9}$ सिंहो ( for शूरो ). — $V_1$ om. line 57. — ( L. 57 ) $Dn_3$ चारित्र्य- ; $D_4$ चरित्र- ( for चा° ). $D_{6-9}$ गुरुचारित्रशालिनां ( for the post. half ). — ( L. 58 ) $V_1$ B Dn यज्वनां ( for यज्विनां ).

वसुदेव इति ख्यातं पुत्रमानकदुंदुभिम् ।
तस्य पुत्रश्चतुर्बाहुर्वासुदेवो भविष्यति ।
दाता ब्राह्मणसत्कर्ता ब्रह्मभूतो द्विजप्रियः ।
राज्ञः सर्वांश्च रुद्धान्स मोक्षयिष्यति मानदः ।
जरासंधं च राजानं निर्जित्य गिरिगह्वरे ।
सर्वपार्थिवरत्नाढ्यो भविष्यति स वीर्यवान् ।
पृथिव्यामप्रतिहतो वीर्येण च भविष्यति ।
विक्रमेण च संपन्नः सर्वपार्थिवपार्थिवः ।
शूरसेनेषु संभूतो द्वारकायां वसन्प्रभुः ।
पालयिष्यति गां देवीं विजित्य नयवत्सदा ।
तं भवन्तः समासाद्य वाङ्माल्यैरर्हणैर्वरैः ।
अर्चयन्तु यथान्यायं ब्रह्माणमिव शाश्वतम् ।
यो हि मां द्रष्टुमिच्छेत ब्रह्माणं वा पितामहम् ।
द्रष्टव्यस्तेन भगवान्वासुदेवः प्रतापवान् ।
दृष्टे तस्मिन्नहं दृष्टो न मेऽत्रास्ति विचारणा ।
पितामहो वा देवेश इति वित्त तपोधनाः ।
स यस्य पुण्डरीकाक्षः प्रीतियुक्तो भविष्यति ।
तस्य देवगणः प्रीतो ब्रह्मपूर्वो भविष्यति ।
यश्च तं मानवो लोके संश्रयिष्यति केशवम् ।
तस्य कीर्तिर्जयश्चैव स्वर्गश्चैव भविष्यति ।
धर्माणां देशिकः साक्षात्स भविष्यति धर्मभाक् ।
धर्मविद्भिः स देवेशो नमस्कार्यः सदोद्यतैः ।
धर्म एव परो हि स्यात्तस्मिन्नभ्यर्चिते विभौ ।
स हि देवो महातेजाः प्रजाहितचिकीर्षया ।
धर्मार्थं पुरुषव्याघ्र ऋषिकोटीः ससर्ज ह ।
ताः सृष्टास्तेन विभुना पर्वते गन्धमादने ।
सनत्कुमारप्रमुखास्तिष्ठन्ति तपसान्विताः ।
तस्मात्स वाग्मी धर्मज्ञो नमस्यो द्विजपुंगवाः ।
वन्दितो हि स वन्देत मानितो मानयेत च ।
अर्चितश्चार्चयेन्नित्यं पूजितः प्रतिपूजयेत् ।
दृष्टः पश्येदहरहः संश्रितः प्रतिसंश्रयेत् ।
अर्चितश्चार्चयेन्नित्यं स देवो द्विजसत्तमाः ।
एतत्तस्यानवद्यस्य विष्णोर्वै परमं व्रतम् ।
आदिदेवस्य महतः सज्जनाचरितं सदा ।
भुवनेऽभ्यर्चितो नित्यं देवैरपि सनातनः ।
उभयेनानुरूपेण यजन्ते तमनुव्रताः ।
कर्मणा मनसा वाचा नमस्यः स द्विजैः सदा ।
यत्नवद्भिरुपस्थाय द्रष्टव्यो देवकीसुतः ।
एष वोऽभिहितो मार्गो मया वै मुनिसत्तमाः ।
तं दृष्ट्वा सर्वशो देवा दृष्टाः स्युर्मुनिसत्तमाः ।
महावराहं तं देवं सर्वलोकपितामहम् ।
अहं चैव नमस्यामि नित्यमेव जगत्पतिम् ।

$D_4$ यज्वनां मुनिशुद्धानां; $D_{6-9}$ यज्विनां पुण्यकर्तॄणां ( for the prior half ). $D_1$ -संमतः; $D_{4,5,7-9}$ -सत्तमः ( $D_9$ °माः ) ( for -संमते ). — ( L. 59 ) $D_{4,5}$ महाबलः ( for °यशाः ). — ( L. 60 ) $D_{5,6,8,9}$ मानद. — $D_{4,7,9}$ *om.* ( hapl. ) lines 61-64. — ( L. 61 ) B Dn $D_{1,2,6}$ वसुदेवम् ( for °देव ). $V_1$ [ऽ]तिवि- ( for इति ). $D_8$ ख्यातः ( for ख्यातं ). $V_1$ $Dn_{1,n2}$ $D_{5,6}$ -दुंदुभिः ( for °भिम् ). — ( L. 63 ) $D_{1,2}$ -भूयान् ( for -भूतो ). — $D_5$ om. line 64. — ( L. 64 ) $V_1$ $B_{2,4,5}$ Dn $D_6$ सुबद्धान्; $B_1$ सुबृद्धान्; $B_3$ om. ( for च रुद्धान् ). $V_1$ B Dn $D_{6,8}$ यादवः ( for मानदः ). — ( L. 65 ) $V_1$ B Dn तु ( for च ). — ( L. 66 ) $D_{4,6-8}$ -रत्नाढ्यौ; $D_5$ -साहाय्ये ( for -रत्नाढ्यो ). — ( L. 68 ) $D_4$ -सत्तम ( for -पार्थिवः ). — ( L. 69 ) $Dn_{1,n2}$ संभूत्वा; Bom. ed. भूत्वा स ( for संभूतो ). $V_1$ B $Dn_3$ शूरसंहननो भूत्वा ( for the prior half ). — ( L. 70 ) $V_1$ B $Dn_{1,n3}$ $D_{4-9}$ नयवित्; $Dn_2$ तपोवत् ( for नयवत् ). $D_5$ तदा ( for सदा ). — ( L. 71 ) $Dn_1$ भवद्भिः ( for °न्तः ). $B_{2-5}$ $D_{4,6}$ शुभैः; $D_1$ घनैः ( for वरैः ). $Dn_3$ वाङ्मनोत्रर्पणैर्वरैः ( for the post. half ). — ( L. 72 ) $D_{4,5,7,9}$ अर्चयंति ( for °यन्तु ). — ( L. 73 ) $D_{5,8,9}$ प्रष्टुम् ( for द्रष्टुम् ). $V_1$ B Dn $D_2$ च ( for वा ). — $B_5$ om. lines 74-77. $D_5$ om. line 79. — ( L. 79 ) $D_{6-9}$ तु ( for च ). Bom. ed. मानवे ( for °वो ). — ( L. 80 ) $B_3$ भविष्यति न संशयः ( for the post. half ). — ( L. 81 ) $Dn_2$ धर्मवित् ( for °भाक् ). — ( L. 82 ) $D_4$ सदा देवो ( for स देवेशो ). $B_1$ $D_2$ सदोच्यते; $B_3$ $Dn_3$ स उच्यते; $D_{4,5}$ सदोदितः; $D_{7-9}$ °दितैः ( for °द्यतैः ). — ( L. 83 ) $Dn_2$ $D_{5,7,8}$ विभो; $D_2$ सदा ( for विभौ ). — ( L. 85 ) $D_{4,5,7,9}$ -कोटिं ( for -कोटीः ). — ( L. 87 ) $D_4$ स्थिताः ( for [अ]न्विताः ). — After line 88, Bom. ed. ins.:

दिवि श्रेष्ठो हि भगवान्हरिर्नारायणः प्रभुः ।

— ( L. 89 ) $V_1$ B Dn $D_8$ मानयीत ( for °येत ). $D_{4-9}$ सः ( for च ). — $B_2$ om. ( hapl. ) lines 90-91. — ( L. 90 ) $V_1$ $B_{1,4,5}$ Dn अर्हि( $B_{4,5}$ °र्हं )तश्चार्हयेन्नित्यं ( for the prior half ). $D_5$ चाति-; $D_7$ चापि ( for प्रति- ). — ( L. 92 ) $D_{4-9}$ अर्हि( $D_7$ °र्हं )तश्चार्हयेन्नित्यं ( for the prior half ). — ( L. 93 ) $D_{6-9}$ हि ( for वै ). $D_{4,6,7,9}$ स्मृतं ( for व्रतम् ). — $D_5$ om. ( hapl. ) lines 95-97. — ( L. 96 ) $V_1$ B Dn $D_{1,2}$ अभयेन ( for उभ° ). $V_1$ B Dn $D_{2,4,6-9}$ युज्यंते ( for यजन्ते ). — ( L. 97 ) $V_1$ B Dn transp. नमस्यः and स. — ( L. 99 ) $D_{4-9}$ द्विज- ( for मुनि- ). — ( L. 100 ) $V_1$ $B_{2-5}$ Dn $D_9$ देवं ( for देवा ). $V_1$ B Dn $D_8$ सुर-; $D_{4-7,9}$ द्विज-

तत्र वस्त्रितयं दृष्टं भविष्यति न संशयः ।
समस्ता हि वयं देवास्तस्य देहे वसामहे ।
तस्य चैवाग्रजो भ्राता सिताभ्रनिचयप्रभः ।
हली बल इति ख्यातो भविष्यति धराधरः ।
त्रिशिरास्तस्य देवस्य शातकौम्भमयो द्रुमः ।
ध्वजस्तृणेन्द्रो देवस्य भविष्यति रथाश्रितः ।
शिरो नागैर्महाभोगैः परिकीर्णं महात्मनः ।
भविष्यति महाबाहोः सर्वलोकेश्वरस्य हि ।
चिन्तितानि समेष्यन्ति शस्त्राण्यस्त्राणि चैव ह ।
अनन्तश्च स एवोक्तो भगवान्हरिरव्ययः ।
समादिष्टः स विबुधैर्दर्शयन्तमिति प्रभो ।
सुपर्णो यस्य वीर्येण कश्यपस्यात्मजो बली ।
अन्तं नैवाशकद्द्रष्टुं देवस्य परमात्मनः ।
स च शेषे विचरते परया वै मुदा युतः ।
अन्तर्वसति भोगेन परिरभ्य वसुंधराम् ।
स एष विष्णुः सोऽनन्तो भगवान्वसुधाधरः ।
यो रामः स हृषीकेशो योऽच्युतः स धराधरः ।
तावुभौ पुरुषव्याघ्रौ दिव्यौ दिव्यवपुर्धरौ ।
द्रष्टव्यौ माननीयौ च चक्रलाङ्गलधारिणौ ।
एष योऽनुग्रहः प्रोक्तो मया पुण्यस्तपोधनाः ।
यं भवन्तो द्विजश्रेष्ठाः पूजयेयुः प्रयत्नतः ।

Colophon.

नारदः ।

अथ व्योम्नि महाञ्शब्दः सविद्युत्स्तनयित्नुमान् ।
मेघैश्च गगनं नीलैः संरुद्धमभवद्घनैः ।
प्रावृषीव च पर्जन्यो ववृषे निर्मलं पयः ।
नभश्चैवाभवद्घोरं दिशश्च न चकाशिरे ।
ततो देवगिरौ तस्मिन्रम्ये पुण्ये सनातने ।
न शर्वं भूतसंघं वा ददृशुर्मुनयस्तदा ।
व्यभ्रं च गगनं सद्यः क्षणेन समपद्यत ।
तीर्थयात्रां ततो विप्रा जग्मुश्चान्ये यथागतम् ।
तदद्भुतमचिन्त्यं च दृष्ट्वा ते विस्मिताभवन् ।
शंकरस्योमया सार्धं संवादं तत्कथाश्रयम् ।
भगवान्पुरुषव्याघ्रो ब्रह्मभूतः सनातनः ।
यदर्थमनुशिष्टाः स्मो गिरिपृष्ठे महात्मना ।
द्वितीयमद्भुतमिदं त्वत्तेजःकृतमद्य वै ।

(for मुनि-). — (L. 101) D5 महानुभावं तं देवं (for the prior half). — (L. 102) D1. 6–8 [ए]नं (for [ए]व). — (L. 103) D1. 5. 7. 9 तस्य (for तत्र). V1 B Dn1. n3 D1–9 च (for दृष्). Dn2 न भविष्यति संशयः (for the post. half). — (L. 104) D1. 7. 9 वसाम्यहं (for °महे). — (L. 105) D8 त्राता (for भ्राता). V1 B2–5 Dn D2 सिताद्रि-; B1 हिमाद्रि-; D4–9 सितांशु- (for सिताभ्र-). — (L. 106) B2 (marg. as above) बली (for हली). — (L. 107) V1 B2–5 Dn दिव्यश्च (for देवस्य). V1 B Dn D6 -कुंभमयो; D4. 7–9 -कुंभमय- (for -कौम्भमयो). D6 [ऽ]द्भुतः (for द्रुमः). — (L. 108) D4–7. 9 त्रिनेत्रो (for तृणेन्द्रो). D4 रथाश्रयः (for °श्रितः). — (L. 109) V1 B1 D4. 5. 7. 9 महाभागैः (for °भोगैः). V1 B Dn महात्मभिः; D4–9 समंततः (for महात्मनः). — (L. 110) V1 D1. 4. 5. 8. 9 महाबाहो (for °बाहोः). V1 B1. 6 Dn1. n2 D3 च; Dn3 D4–7. 9 ह (for हि). — (L. 111) V1 B5 Dn1 D2 नैव हि; D4. 5. 7–9 तस्य वै (for चैव ह). — Dn1 om. lines 112–114. — (L. 112) V1 B1. 2. 4. 5 Dn2. n3 वेदोक्तो; D1 चैवोक्तो; D2 देवोक्तो (for ए°). B3 अनंतभूतो वेदोक्तो (for the prior half). — (L. 113) B1. 2. 4. 5 D1 दर्शयांतम्; B3 Dn2 °य त्वम् (for °यन्तम्). — (L. 115) D1. 2 दै न (for नैव). D4. 5. 7–9 अलं वै नाशकं द्रष्टुं (for the prior half). — D1. 2. 4. 5. 7–9 transp. lines 116 and 117. — (L. 116) V1 B1–4 Dn D2. 6 शेषो (for शेषे). B5 D4. 5. 7–9 स च शेषो विचरति (B5 °जयते) (for the prior half). D5 च (for वै). D1. 4. 7. 9 परया मुदया युतः (for the post. half). — (L. 117) B1 परिवर्त्य (for °रभ्य). — (L. 118) V1 B1–4 Dn D4–8 य एव; B5 य एष; D2 स च प्र-; D9 स एव (for स एष). — (L. 119) D6 गदाधरः (for धरा°). — (L. 120) V1 B Dn -पराक्रमौ (for -वपुर्धरौ). — (L. 123) D4. 7–9 यद् (for यं). V1 B Dn यद्भवंतो यदुश्रेष्ठ (for the prior half). D2 तपोधनाः (for प्रयत्नतः). — Colophon. — *Parvan name :* B1–3 Dn2. n3 D1 शांति. — *Sub-parvan* : V1 B Dn1. n2 D1. 2 दानधर्म. — *Adhy. name :* V1 Dn1 उमामहेश्वरसंवादे पुरुषमाहात्म्यं; B1. 4. 5 उमामहेश्वरसंवादे महापुरुषमाहात्म्यं; B2 महापुरुषमाहात्म्यं; B3 वासुदेवमाहात्म्यं; D1 उमामहेश्वरसंवादे वासुदेवमाहात्म्यं; D4–9 महापुरुषोपाख्यानं. — *Adhy. no. :* V1 145; Dn1 144. — (L. 125) V1 B Dn नीलं (for नीलैः). D3 अगमद् (for अभवद्). — (L. 126) B5 ह (for च). V1 B2–5 Dn D6 ववर्ष (for ववृषे). B1 ववर्ष विमलं पयः (for the post. half). — (L. 127) V1 B Dn D1. 2. 5. 6 तमश् (for नभश्). D6–9 न दिशः प्र- (for दिशश्च न). — (L. 129) D7–9 -संघाता (for -संघं वा). B1. 4 Dn2 तथा (for तदा). — (L. 130) D4. 6. 7–9 सर्वं (for सद्यः). — (L. 131) D4–9 जग्मुस्ते वै मुदान्विताः (D4 °दा युताः) (for the post. half). — (L. 132) D1 वो (for च). D4 मुदिता (for विस्मिता). D1. 2 दृष्ट्वा ते विस्मयं ययुः; D5–9 ते दृ(D8. 9 तद्)ष्ट्वा मुदिताभवन् (for the post. half). — (L. 133) V1 B1 Dn1. n2 D6–9 संवादं त्वत्कथाश्रयं (D6–9 °श्रितं) (for the post. half).

दृष्ट्वातिविस्मिताः कृष्ण सा च नः स्मृतिरागता ।
एतत्ते देवदेवस्य माहात्म्यं कथितं विभो ।
कपर्दिनो गिरीशस्य महाबाहो जनार्दन ।
इत्युक्तः स तदा कृष्णस्तपोवननिवासिभिः ।
मानयामास तान्सर्वानृषीन्देवकिनन्दनः ।
अथर्षयः संप्रहृष्टाः पुनस्ते कृष्णमब्रुवन् ।
पुनः संदर्शयस्वास्मान्सदैव मधुसूदन ।
न हि नः सा रतिः स्वर्गे या च त्वद्दर्शने विभो ।
तादृशं च महाबाहो यथाह भगवान्भवः ।
एतत्ते सर्वमाख्यातं रहस्यमरिकर्शन ।
त्वमेव ह्यर्थतत्त्वज्ञः पृष्टोऽस्मान्पृच्छसे सदा ।
तदस्माभिरिदं गुह्यं त्वत्प्रियार्थमुदाहृतम् ।
न च तेऽविदितं किंचित्त्रिषु लोकेषु विद्यते ।
जन्म चैव प्रसूतिश्च यच्चान्यत्कारणं भुवि ।
वयं तु बटुचापल्यादशक्ता गुह्यधारणे ।
ततः स्थिते त्वयि विभो लघुत्वात्प्रलपामहे ।
न हि किंचित्तदाश्चर्यं यन्न वेत्ति भवानिह ।
दिवि वा भुवि वा देव सर्वं हि विदितं तव ।
साधयाम वयं देव वृद्धिं पुष्टिमवाप्नुहि ।
पुत्रस्ते सदृशस्तात विशिष्टो वा भविष्यति ।
महाप्रभावसंयुक्तो दीप्तिकीर्तिकरः प्रभो ।

भीष्मः ।

ततः प्रणम्य देवेशं यादवं पुरुषोत्तमम् ।
प्रदक्षिणमुपावृत्य प्रजग्मुस्ते महर्षयः ।
सोऽयं नारायणः श्रीमान्दीप्त्या परमया युतः ।
व्रतं यथावत्तच्चीर्त्वा द्वारकां पुनरागमत् ।
पूर्णे च दशमे मासि पुत्रोऽस्य परमाद्भुतः ।
रुक्मिण्यां संमतो जज्ञे शूरो वंशधरः प्रभो ।
स कामः सर्वजन्तूनां सर्वभागवतो नृप ।
सुराणामसुराणां च चरत्यन्तर्गतः सदा ।
सोऽयं पुरुषशार्दूलो मेघवर्णश्चतुर्भुजः ।
संश्रितः पाण्डवान्प्रेम्णा भवन्तश्चैनमाश्रिताः ।
कीर्तिर्लक्ष्मीर्धृतिश्चैव स्वर्गमार्गस्तथैव च ।
यत्रैष संस्थितस्तत्र देवो विष्णुस्त्रिविक्रमः ।
सेन्द्रा देवास्त्रयस्त्रिंशत्स्थिता नात्र विचारणा ।
आदिदेवो महादेवो भूतानां च प्रतिश्रयः ।
अनादिनिधनोऽव्यक्तो महात्मा मधुसूदनः ।
स्वयंजातो महातेजाः सुराणामर्थसिद्धये ।
सुदुस्तरार्थतत्त्वस्य वक्ता कर्ता च माधवः ।
तत्र पार्थ जयः कृत्स्नस्तव कीर्तिस्तथातुला ।

— D1 om. lines 134-180. — (L. 134) D4, 5, 7-9 सोभवत् (for भगवान्). V1 B Dn D6 स भवान्पुरुषव्याघ्र (for the prior half). — (L. 135) D2 -शिष्टः स (for -शिष्टाः स्मो). D7, 9 महात्मनः (for °त्मना). — (L. 136) V1 B Dn D2 त्वद्भुतम् (for अ°). D8 तत्तेजः- (for त्व°). — (L. 137) V1 B Dn D2, 4-6, च (for [अ]ति-). D7-9 कृष्णं (for कृष्ण). D5 om. (hapl.) from the post. half up to the prior half of line 140. — (L. 138) V1 B1, 4, 5 Dn D2 प्रभो (for विभो). — (L. 139) D4, 7-9 जनार्दनः (for °र्दन). — (L. 143) D4, 8 त्वं (for सं-). V1 B Dn पुनः पुनर्दर्शयास्मान् (for the prior half). D2 स च (for सदा). D4, 7-9 सदैव मधुसूदन (for the post. half). — (L. 144) D8 कृष्णे (for स्वर्गे). Dn2 यावत्; D5, 7, 8 या नसु (for या च). — (L. 145) V1 B Dn D4, 5 यदाह (for यथाह). — (L. 146) D5 हरस्य ह्यरिकर्शन (for the post. half). — (L. 147) V1 B1-4 Dn2, n3 तदा (for सदा). — (L. 150) D4, 6, 8, 9 तच्च् (for यच्च्). V1 B Dn विभो; D4-9 महत् (for भुवि). — (L. 151) B3-5 Dn2, n3 D4-9 वहु- (for बटु-). — (L. 153) D4-9 transp. किंचित् and तद्. D4 om. from the post. half of line 154 up to the prior of line 156. — (L. 155) Dn3 साधयामो; D5 °मि (for °म). V1 B Dn कृष्ण बुद्धिं (for देव वृद्धिं). — (L. 157) D4-9 -संकीर्णो (for -संयुक्तो). D2 -कांतिकरः (for -कीर्ति°). V1 B Dn प्रभुः (for प्रभो). — (L. 160) D4-8 यो (for सो). Dn3 पुनः (for युतः). — (L. 161) D4, 5, 8, 9 यथार्थवच्च् (for °वत्तच्). D6 व्रतं यथार्थवत्तीर्त्वा (for the prior half). — (L. 163) D2, 7-9 वंशकरः (for °धरः). B3 D4 प्रभुः (for प्रभो). — (L. 164) V1 B Dn2, n3 -भूतानां (for -जन्तूनां). Dn1 कामिनः सर्वभूतानां (for the prior half). B Dn3 -भावगतो (for -भागवतो). — (L. 165) D9 वा (for च). V1 B Dn D2 असुराणां सुराणां च (for the prior half). D2 भवति (for चरति). — (L. 167) Dn3 प्रीत्या (for प्रेम्णा). D7-9 सर्वतश्च (for भवन्तश्). V1 B4, 5 [ए]तम् (for [ए]नम्). D4, 5 सर्वतश्चैवमाश्रिताः (for the post. half). — (L. 168) D4, 5, 7-9 स्वर्गमायुस् (for °मार्गस्). — (L. 169) D5 संश्रितस् (for संस्थितस्). — (L. 170) D2 सर्वे- (for सेन्द्रा). V1 B Dn एव (for स्थिता). — (L. 171) V1 B Dn सर्वभूत- (for भूतानां च). D2 सर्वभूतमतिप्रियः (for the post. half). — (L. 173) V1 B Dn D2 अयं (for स्वयं-). — (L. 174) B3 अयं तत्रार्थतत्त्वस्य; B5 सुरस्तवार्थ°; D2 दुस्तरस्यार्थ°; D6-9 पुष्कलस्यार्थ° (for the prior half). — (L. 175) D4, 7, 9 पार्थिव यः (for पार्थ जयः). B1, 5 D8, 9 कृष्णस् (for कृत्स्नस्). D2 [अ]चला (for [अ]तुला). — (L. 176) V1 B Dn D2 देवी (for कृत्स्ना). D8 तवेयं पृथिवी

तवेयं पृथिवी कृत्स्ना नारायणसमाश्रयात् ।
अयं नाथस्तवाचिन्त्यो यस्य नारायणो हृदि ।
स भवान्भूमिपाध्वर्यू रणाग्नौ हुतवान्नृपान् ।
कृष्णः स्रुवेण महता युगान्ताग्निसमेन वै ।
दुर्योधनस्तु शोच्योऽसौ सपुत्रभ्रातृबान्धवः ।
कृतवान्योऽबुधः कोपाद्धरिगाण्डीवविग्रहम् ।
दैतेया दानवेन्द्राश्च महाकाया महाबलाः ।
चक्राग्नौ क्षयमापन्ना दावाग्नौ शलभा इव ।
प्रतियोद्धुं न शक्यो हि मानुषैरेष संयुगे ।
निहीनैः पुरुषव्याघ्र सत्त्वशक्तिबलादिभिः ।
जयो योऽयं युगान्ताभः सव्यसाची रणाग्रगः ।
तेजसा हतवान्सर्वं सुयोधनबलं नृप ।
यत्तु वै वृषभाङ्केन मुनिभ्यः समुदाहृतम् ।
पुराणं हिमवत्पृष्ठे तन्मे निगदतः शृणु ।
यावदस्योद्भवस्तुष्टिस्तेजो वीर्यं पराक्रमः ।
प्रभावः सन्नतिर्जन्म कृष्णे तन्त्रितयं विभो ।
न शक्यमन्यथा कर्तुं तद्यदि स्यात्तथाप्यणु ।
यत्र कृष्णो हि भगवांस्तत्र तुष्टिरनुत्तमा ।
वयं हि बालमतयः परनेत्राः सुविक्लवाः ।
ज्ञानपूर्वं प्रपन्नाः स्मो मृत्योः पन्थानमुत्तमम् ।
भवांश्चाप्यार्जवपरः सर्वं कृत्वा प्रतिश्रयम् ।
राजवृत्तान्न चलते प्रतिज्ञापालने रतः ।
अप्येवात्मवधं लोके राजंस्त्वं बहु मन्यसे ।
न हि प्रतिज्ञया दत्तं तं प्रहातुमरिंदम ।
कालेनायं जनः सर्वो निहतो रणमूर्धनि ।
वयं च कालेन हताः कालो हि परमेश्वरः ।
न हि कालेन कालज्ञ स्पृष्टः शोचितुमर्हति ।
कालो लोहितरक्ताक्षः कृष्णो दण्डी सनातनः ।
तस्मात्कुन्तीसुत ज्ञातीन्नेह शोचितुमर्हसि ।
व्यपेतमन्युर्नित्यं त्वं भव कौरवनन्दन ।
माधवस्य च माहात्म्यं श्रुतं यत्कथितं मया ।
तदेव तव पर्याप्तं सज्जनस्य निदर्शनम् ।
व्यासस्य वचनं श्रुत्वा नारदस्य च धीमतः ।
स्वयं चैव महाराज कृष्णस्यार्हत्तमस्य वै ।
प्रभावश्चर्षिपूगस्य कथितः सुमहान्मया ।
महेश्वरस्य संवादः शैलपुत्र्याश्च भारत ।
धारयिष्यति यश्चेमं महापुरुषसंभवम् ।
शृणुयात्कथयेद्वा यः स वै श्रेयो लभेत्परम् ।

देवी ( for the prior half ). V1 B Dn D2 कृत्स्ना नारायणाश्रयात् ( for the post. half ). — ( L. 177 ) V1 B2-6 Dn गतिः ; B1 D2.4 हरिः ( for हृदि ). — ( L. 178 ) V1 B Dn D8 स भवांस्त्वमुपाध्वर्यू ( for the prior half ). — ( L. 180 ) V1 B Dn1 च ( for तु ). D4-9 वै ( for ऽसौ ). — ( L. 181 ) V1 B Dn D5 क्रोधाद् ( for कोपाद् ). B2 Dn हरिगांडीविनिग्रहं ; D1-9 वैरं गांडिवधन्वनः ( D4.9 °न्विनः ; D5 °न्वना ) ( for the post. half ). — ( L. 182 ) D4 दैत्येयो ( for दैतेया ). D4 महाकाला ( for °काया ). — Dn2 om. lines 183-185. — ( L. 184 ) D4.7-9 शक्तो ( for शक्यो ). V1 Dn1 D4.5.7-9 एव ( for एष ). — ( L. 185 ) B3 Dn1.n3 D1.2.4.5.8 विहीनैः ( for नि° ). — ( L. 186 ) V1 B Dn D1.2.4.5.8 योगी ; D9 यश्च ( for योऽयं ). V1 D4.5.8.9 रणाग्रतः ; D2 °ग्रशः ( for °ग्रगः ). — ( L. 187 ) D8.9 सहसा ( for तेजसा ). — ( L. 188 ) V1 B Dn गो- ( for वै ). — ( L. 190 ) D4-9 भवेत् ( for [उ]द्भवस् ). V1 B Dn यावत्तस्योद्भवा पुष्टिस् ( for the prior half ). V1 B Dn दीप्तिः ; D4.5.8.9 वीर्य- ( for वीर्यं ). — ( L. 191 ) B4 Dn2.n3 संततिर् ( for सन्न° ). V1 B Dn D4.6.8.9 त्रिगुणं ( for त्रितयं ). D7 कृष्णे तात्रिगुणं भवेत् ( for the post. half ). — ( L. 192 ) V1 B2.4.6 Dn कः शक्नोति ; B1.3 कः शक्तो हि ; D4.5 अशक्यम् ( for न श° ). B3 यथा ( for यदि ). B2.5 [अ]प्यनु ; B1.6 D4-7.9 शृणु ( for [अ]प्यणु ). Dn1 तमुद्दिश्यान्यथाप्यणु ( for the post. half ). — ( L. 193 ) V1 B Dn D1.2.4.5 पुष्टिर् ( for तुष्टिर् ). — ( L. 194 ) V1 D1 हि त्वल्प- ; B Dn D5 त्विहाल्प- ; D2.4 हि बाल्य- ( for हि बाल- ). V1 B Dn D2.6 परतंत्राः ( for °नेत्राः ). — ( L. 195 ) V1 B1-4 Dn D1-9 अव्ययं ; B5 अद्वयं ( for उत्तमम् ). — ( L. 196 ) D4 भगवांश्च ; D5-7.9 भवान्वै च ( for भवांश्चापि ). V1 B Dn पूर्वं ( for सर्वं ). — ( L. 197 ) D4.5 लभते ; D6.9 चलसे ( for °ते ). V1 B Dn D3 राज- ( B3 बाह्य )वृत्तं न ( B1 च ) लभते ; D7 राजपुत्रान्न चलसे ( for the prior half ). — ( L. 198 ) B3 Dn1.n2 अथ ; D2.6 D4.6.7 अद्य ( for अपि ). — ( L. 199 ) V1 B Dn D2.6 न हि प्रतिज्ञा या दत्ता ( for the prior half ). V1 B Dn D2.6 तां ( for तं ). — ( L. 201 ) V1 हि ( for च ). — ( L. 202 ) V1 B Dn D2.4 कालज्ञः ( for °ज्ञ ). D6-9 पुनः ( for स्पृष्टः ). Dn1.n2 D2.4-9 अर्हसि ( for °ति ). — D2 om. ( hapl. ) lines 203-204. D4 om. lines 205-206. — ( L. 206 ) V1 B Dn D2.6 [अ]स्य ; D5.7-9 तु ( for च ). — ( L. 207 ) D4-9 [ए]तत् ( for [ए]व ). B3.5 Dn तावत् ( for तव ). — ( L. 209 ) D4-9 महाभाग ( for °राज ). D9 च ( for वै ). — ( L. 210 ) D4.6-9 तु ( for च ). D5 -संघस्य ( for -पूगस्य ). — ( L. 211 ) V1 B Dn D4-9 संवादं ( for °दः ). — ( L. 212 ) B2 D4. B3 Dn1.n2 D4.6-9 यश्चैनं ; D5 संवादं ( for यश्चेमं ). B2 D4.5.7-9 -संस्तवं ( for -संभवम् ). — ( L. 213 ) D4-9 [अ]पि ( for यः ). V1 B Dn D4.5 स श्रेयो लभते परं ( for the post. half ). — ( L. 214 ) D4 तस्यार्थे ( for तस्याथ ). — ( L.

भवितारश्च तस्याथ सर्वे कामा यथेप्सिताः ।
प्रेत्य माहेश्वरं लोकं लभते नात्र संशयः ।
नायं श्रेयोभिकामेन प्रतिपत्तुं जनार्दने ।
एष वै चाक्षयो विप्रैः स्मृतो राजञ्जनार्दनः ।
महेश्वरमुखोत्सृष्टा ये च धर्मगुणाः स्मृताः ।
ते त्वया मनसा धार्याः कुरुराज दिवानिशम् ।
एवं ते वर्तमानस्य सम्यग्दण्डधरस्य च ।
प्रजापालनदक्षस्य स्वर्गलोको भविष्यति ।
धर्मेण हि सदा राजा प्रजा रक्षितुमर्हति ।
यस्तस्य विपुलो दण्डः सम्यग्धर्मः स कीर्त्यते ।
स एष कथितो राजन्मया सज्जनसंनिधौ ।
शंकरस्योमया सार्धं संवादो धर्मसंहितः ।
श्रुत्वा वा श्रोतुकामो वाप्यर्चयेद्वृषभध्वजम् ।
विशुद्धेन हि भावेन य इच्छेद्भूतिमात्मनः ।
एष तस्यानवद्यस्य नारदस्य महात्मनः ।
संदेशो देवपूजार्थं तं तथा कुरु पाण्डव ।
एतदत्यद्भुतं वृत्तं पुण्यं हैमवते गिरौ ।
वासुदेवस्य कौन्तेय स्थाणोश्चैव स्वभावजम् ।
दश वर्षसहस्राणि बदर्यामेष सात्वतः ।
तपश्चचार विपुलं सह गाण्डीवधन्वना ।
त्रियुगौ पुण्डरीकाक्षौ वासुदेवधनंजयौ ।
विदितौ नारदादेतौ मम व्यासाच्च पार्थिव ।
बाल एव महाबाहुश्चकार कदनं महत् ।
कंसस्य पुण्डरीकाक्षो ज्ञातित्राणार्थकारणात् ।
कर्मणामस्य कौन्तेय नान्तं संख्यातुमुत्सहे ।
शाश्वतस्य पुराणस्य पुरुषस्य युधिष्ठिर ।
ध्रुवं श्रेयः परं तात भविष्यति तवोत्तमम् ।
यस्य ते पुरुषव्याघ्रः सहायोऽयं जनार्दनः ।
दुर्योधनं तु शोचामि प्रेत्यलोकेऽतिदुर्मतिम् ।
यत्कृते पृथिवी सर्वा विनष्टा सहयद्विपा ।
दुर्योधनापराधेन कर्णस्य शकुनेस्तथा ।
दुःशासनचतुर्थानां कुरवो निधनं गताः ।

वैशंपायनः ।

एवं प्रभाषमाणे तु गाङ्गेये पुरुषर्षभे ।
तूष्णीं बभूव कौरव्यो मध्ये तेषां महात्मनाम् ।
तच्छ्रुत्वा विस्मयं जग्मुर्धृतराष्ट्रादयो नृपाः ।
संपूज्य मनसा कृष्णं सर्वे प्राञ्जलयोऽभवन् ।
ऋषयश्चापि ते सर्वे नारदप्रमुखास्तथा ।
प्रतिगृह्याभ्यनन्दन्त तद्वाक्यं प्रतिपूज्य च ।
इत्येतदखिलं सर्वं पाण्डवो भ्रातृभिः सह ।
श्रुतवान्सुमहच्चित्रं पुण्यं भीष्मानुशासनम् ।
युधिष्ठिरस्तु गाङ्गेयं विश्रान्तं भूरिदक्षिणम् ।
पुनरेव महाबुद्धिः पर्यपृच्छन्महीपतिः ।

Colophon.

215) $D_1$ भवते (for लभते). — For line 215, $V_1$ B Dn subst. :

प्रेत्य स्वर्गं च लभते नरो नास्त्यत्र संशयः ।

— (L. 216) $V_1$ B Dn $D_{6-8}$ न्याय्यः; $D_{2.4.5.9}$ न्यायं (for नायं). $D_2$ प्रतिपन्नं (for °पत्तुं). $V_1$ B Dn $D_4$ जनार्दनः; $D_{5-9}$ °र्दनं (for °र्दने). — $B_2$ $D_4$ om. (hapl.) line 217. — (L. 217) $V_1$ $B_{1.3-5}$ Dn $D_{1.2}$ एव; $D_{8.9}$ चैव (for वै च). $V_1$ $B_{3-5}$ Dn स्तुतो (for स्मृतो). — (L. 219) $D_4$ कार्याः (for धार्याः). $D_{4.7-9}$ निशानिशं (for दिवा°). $Dn_{1.n3}$ om. (hapl.) from the post. half of line 220 up to the prior half of line 223. — (L. 221) $B_1$ स्वर्गलोके (for °लोको). — (L. 222) Bom. ed. [अ]पि (for हि). $B_{2.5}$ Dn राजन् (for राजा). $B_3$ $Dn_2$ $D_9$ अर्हसि (for °ति). — (L. 223) $D_4$ सम्यग्दंडः; $D_6$ तस्य धर्मः (for सम्यग्धर्मः). $V_1$ च (for स). — (L. 224) $V_1$ B Dn $D_{1.2.6}$ य (for स). — (L. 225) $D_{4.8.9}$ संवादं धर्मसंहितं (for the post. half). — (L. 226) $D_{4.5}$ पूजयेद् (for [अ]प्यर्च°). — (L. 227) $V_1$ B Dn $D_{4.5.8}$ [इ]ह (for हि). $B_1$ गतिम् (for भूतिम्). — (L. 229) $D_{6.7-9}$ तद् (for तं). — (L. 230) $V_1$ B Dn $D_{4-9}$ पुण्ये हिमवति प्रभो ($D_{8.9}$ °भौ) (for the post. half). — (L. 231) $D_{4.7.9}$ स्थानं (for स्थाणोश्). — (L. 232) $D_{4.5.7-9}$ शाश्वतः (for सात्वतः). — (L. 233) $D_{4.9}$ -धान्विना (for -धन्वना). — (L. 235) $Dn_{1.n2}$ नारदेन (for °दाद्). $B_6$ देवौ (for एतौ). — (L. 236) $D_{4.6}$ एष (for एव). $D_6$ -भाग (for -बाहुश्). $D_{7-9}$ बाल एष महाभाग (for the prior half). — (L. 241) $V_1$ $Dn_{1.n3}$ $D_{6.8.9}$ -व्याघ्र (for -व्याघ्रः). $V_1$ B Dn $D_4$ सखा च (for सहायो). — (L. 242) $V_1$ B Dn $D_{4.6}$ [ऽ]पि; $D_{5.7-9}$ सु- (for ऽति-). — (L. 243) $D_{5-8}$ यदर्थे (for यत्कृते). — $Dn_1$ om. line 245. — (L. 246) $V_1$ B Dn $D_6$ सं- (for प्र-). $V_1$ $B_{4.5}$ $Dn_3$ $D_6$ गांगेये पुरुष- ($Dn_3$ भरत)र्षभ (for the post. half). — (L. 247) $Dn_1$ $D_4$ कौरव्य (for °व्यो). $D_{5-9}$ बभूव तूष्णीं कौरव्यो (for the prior half). — (L. 250) $B_{2.3}$ तदा (for तथा). — (L. 252) $V_1$ $B_{2-5}$ Dn $D_{2.4.6}$ सर्वैः (for सर्वं). — (L. 253) $D_{4.5}$ तु (for सु-). $V_1$ B Dn $D_{2.4}$ -महाचर्यं (for -महच्चित्रं). — (L. 254) $V_1$ $Dn_1$ (also as above) च (for तु). $D_8$ -वर्चसं (for -दक्षिणम्). — (L. 255) $B_{1-3}$ $D_{1.5.7-9}$ महामतिः (for महीपतिः). — Colophon. — *Parvan-name*: B $Dn_3$ $D_1$ शांति.

## 17

After 13. 134, $D_{10}$ S Kumbh. ed. Madras ed. ins.:

युधिष्ठिरः ।

क उपायो वरप्राप्तौ सर्वेषां पापकर्मणाम् ।
ज्ञानस्य च परस्येह तन्मे ब्रूहि पितामह ।

भीष्मः ।

उपायोऽयं वरप्राप्तौ परमः परिकीर्तितः ।
नारायणस्य तु ध्यानमर्चनं यजनं स्तुतिः ।
श्रवणं तत्कथानां च विद्वत्संरक्षणं तथा ।
विद्वच्छुश्रूषणप्रीतिरुपदेशानुपालनम् ।
संध्यानेन जपेनाशु मुच्यते प्राकृतोऽपि च ।
जपश्चतुर्विधः प्रोक्तो वैदिकस्तान्त्रिकोऽपि च ।
पौराणिकोऽथ विद्वद्भिः कथितः स्मार्त एव च ।
द्विजशुश्रूषया ज्ञानं विद्वत्संरक्षणेन वा ।
नासाध्यं ज्ञानिनां किंचित्तस्माद्रक्ष्या द्विजास्त्वया ।
सुव्रता बन्धुहीनैका वने पूर्वं यमेन तु ।
आसीदाश्वासिता विद्वत्संरक्षणफलात्किल ।
विप्रस्य मरणे हेतुस्तत्पत्नी पितृशोकदा ।
वैश्या त्वमभिलापेयं विप्रकन्येति सांप्रतम् ।
इत्युक्ताश्वासितापृच्छत्केनैवं पापसंयुता ।
जाता विप्रकुले सम्यक्श्रेयश्चापि ब्रवीहि मे ।

यमः ।

अन्यजन्मनि विद्वांसं प्रहारैरभिपीडितम् ।
चोरशङ्काविमोक्षेण मोक्षयित्वा सुजन्मिका ।
इत्युक्ताष्टाक्षरध्यानजपादिश्रेयसा तु सा ।
यमेनानुगृहीताभूत्पुण्यलोकनिवासिनी ।
तन्नित्यं विदुषां रक्षातत्परो भव भूपते ।
तेषां संरक्षणात्तुष्टः सर्वपापैः प्रमुच्यते ।

Colophon.

## 18

After 13. 135, $V_1$ B Dn $D_{4,5,8}$ ins.:

युधिष्ठिरः ।

पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
किं जप्यं जपतो नित्यं भवेद्धर्मफलं महत् ।
प्रस्थाने वा प्रवेशे वा प्रवृत्ते वापि कर्मणि ।
दैवे वा श्राद्धकाले वा किं जप्यं कर्मसाधनम् ।
शान्तिकं पौष्टिकं रक्षा शत्रुघ्नं भयनाशनम् ।
जप्यं यद्ब्रह्मसमितं तद्भवान्वक्तुमर्हति ।

भीष्मः ।

व्यासप्रोक्तमिमं मन्त्रं शृणुष्वैकमना नृप ।
सावित्र्या विहितं दिव्यं सद्यः पापविमोचनम् ।
शृणु मन्त्रविधिं कृत्स्नं प्रोच्यमानं मयानघ ।
यं श्रुत्वा पाण्डवश्रेष्ठ सर्वपापैः प्रमुच्यते ।
रात्रावहनि धर्मज्ञ येन पापैर्न लिप्यते ।
तत्तेऽहं संप्रवक्ष्यामि शृणुष्वैकमना नृप ।
आयुष्मान्भवते चैव यं श्रुत्वा पार्थिवात्मज ।

---

— *Sub-parvan :* $V_1$ $B_{1-4}$ Dn $D_{1,2,5-9}$ दानधर्म. — *Adhy. name :* $V_1$ B Dn $D_{1,2,4-9}$ उमामहेश्वरसंवादः. — *Adhy. no.:* $V_1$ 146; $Dn_1$ 145.

17

— (L. 1) $T_1$ $G_1$ $M_4$ परप्राप्तौ (for व°). $D_{10}$ $T_{2,3}$ $G_{2-4}$ कृपया परया प्रोक्तः (for the prior half). — (L. 2) $T_1$ परमस्य; $M_{2,3}$ च वरस्य (for च परस्य). — (L. 3) T $G_{1,3,4}$ $M_4$ पर- (for वर-). — (L. 4) $D_{10}$ T G [अ]नु- (for तु). $T_2$ स्मृतिः (for स्तुतिः). $G_{1,3}$ यजनं परमं स्तुतिः (for the post. half). — (L. 5) $T_1$ द्विजानां (for विद्वत्सं-). — (L. 6) $D_{10}$ T विद्वच्छुश्रूषणं प्रीतिर्; $G_{1,3}$ विप्रशुश्रूषणप्रीतिर्; $M_{1-3}$ विद्वत्संरक्षण° (for the prior half). — (L. 7) $D_{10}$ $T_2$ $G_2$ $M_{1,3}$ स ध्यानेन; $T_1$ ध्यानेन च; $T_3$ समानेन (for संध्यानेन). — (L. 8) $T_1$ $M_4$ च द्विविधः (for चतुर्विधः). — (L. 10) $D_{10}$ T G $M_4$ विद्वच्छुश्रूषया ज्ञानं (for the prior half). — (L. 11) $D_{10}$ T G $M_4$ त्वया द्विजाः (by transp.). — (L. 15) $D_{10}$ $T_2$ G वै($D_{10}$ $G_2$ वे)श्या त्वमतिलोभोयं; $T_3$ वैश्या त्वमसि लाभोयं; $M_2$ (*inf. lin.*).4 वैश्या त्वमतिलाभोयं (for the prior half). $T_1$ वेश्या त्वमसि लोकोयं प्रविशन्नेति सांप्रतं. — (L. 16) $D_{10}$ T G $M_4$ [उ]क्त्वा (for [उ]क्ता). $D_{10}$ $T_3$ G [इ]यं (for [ए]वं). — (L. 17) $T_1$ ब्रवीतु (for °हि). — $T_1$ om. line 20. — (L. 20) $T_{2,3}$ $G_{2-4}$ $M_4$ [उ]क्त्वाष्टाक्षर-; $G_1$ [उ]क्त्वा शंकर- (for [उ]क्ताष्टाक्षर-). $G_{1,3,4}$ युता (for तु सा). — (L. 21) $T_3$ -लोके (for -लोक-). — (L. 22) $D_{10}$ $T_1$ $G_2$ -तत्परो भूर्महीपते; $T_2$ °रोहं महीपते; $T_3$ $G_{1,3,4}$ $M_4$ °रोभून्महीपते (for the post. half). — (L. 23) $D_{10}$ T G $M_4$ सद्यः (for तुष्टः). — Colophon. — *Sub-parvan :* $M_{1-3}$ दानधर्म. — *Adhy. name :* $D_{10}$ $T_{2,3}$ $G_1$ सुव्रताख्यानं. — *Adhy. no. :* $D_{10}$ $T_{2,3}$ $G_{2,4}$ 234; $T_1$ $M_4$ 226; $G_{1,3}$ 228; $M_{1,2}$ 229; $M_3$ 230.

18

(L. 3) $B_3$ $Dn_3$ प्रवासे (for प्रवेशे). — (L. 4) $V_1$ $B_5$ धर्म- (for कर्म-). — (L. 8) $B_2$ -प्रमोचनं; $Dn_3$ -विमोक्षणं; Bom. ed. -विनाशनं (for -विमोचनम्). — (L. 11) $B_3$ जपन् (for येन). — (L. 12) $V_1$ ते तु (for तत्ते). — (L. 13) $D_3$ यः (for यं). $D_4$ पार्थिवात्मजः.

पुरुषस्तु सुसिद्धार्थः प्रेत्य चेह च मोदते ।
सेवितं सततं राजन्पुरा राजर्षिसत्तमैः ।
क्षत्रधर्मपरैर्नित्यं सत्यव्रतपरायणैः ।
इदमाह्निकमव्यग्रं कुर्वद्भिर्नियतैः सदा ।
नृपैर्भरतशार्दूल प्राप्यते श्रीरनुत्तमा ।
नमो वसिष्ठाय महाव्रताय
पराशरं वेदनिधिं प्रणम्य ।
नमोऽस्त्वनन्ताय महोरगाय
नमोऽस्तु सिद्धेभ्य इहाक्षयेभ्यः ।
नमोऽस्त्वृषिभ्यः परमं परेषां
देवेषु देवं वरदं वराणाम् ।
सहस्रशीर्षाय नमः शिवाय
सहस्रनामाय जनार्दनाय ।
अजैकपादहिर्बुध्न्यः पिनाकी चापराजितः ।
ऋतश्च पितृरूपश्च त्र्यम्बकश्च महेश्वरः ।
वृषाकपिश्च शंभुश्च हवनोऽथेश्वरस्तथा ।
एकादशैते प्रथिता रुद्रास्त्रिभुवनेश्वराः ।
शतमेतत्समाख्यातं शतरुद्रे महात्मनाम् ।
अंशो भगश्च मित्रश्च वरुणश्च जलेश्वरः ।
तथा धातार्यमा चैव जयन्तो भास्करस्तथा ।
त्वष्टा पूषा तथैवेन्द्रो द्वादशो विष्णुरुच्यते ।
इत्येते द्वादशादित्याः काश्यपेया इति श्रुतिः ।
धरो ध्रुवश्च सोमश्च सावित्रोऽथानिलोऽनलः ।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ।
नासत्यश्चापि दस्रश्च स्मृतौ द्वावश्विनावपि ।
मार्तण्डस्यात्मजावेतौ संज्ञानासाविनिर्गतौ ।
अतः परं प्रवक्ष्यामि लोकानां कर्मसाक्षिणः ।
अपि यज्ञस्य वेत्तारो दत्तस्य सुकृतस्य च ।
अदृश्याः सर्वभूतेषु पश्यन्ति त्रिदशेश्वराः ।
शुभाशुभानि कर्माणि मृत्युः कालश्च सर्वशः ।
विश्वेदेवाः पितृगणा मूर्तिमन्तस्तपोधनाः ।
मुनयश्चैव सिद्धाश्च तपोमोक्षपरायणाः ।
शुचिस्मिताः कीर्तयतां प्रयच्छन्ति शुभं नृणाम् ।
प्रजापतिकृतानेताँल्लोकान्दिव्येन तेजसा ।
वसन्ति सर्वलोकेषु प्रयताः सर्वकर्मसु ।
प्राणानामीश्वरानेतान्कीर्तयन्प्रयतो नरः ।
धर्मार्थकामैर्विपुलैर्युज्यते स हि नित्यशः ।
लोकांश्च लभते पुण्यान्विश्वेश्वरकृताञ्शुभान् ।
एते देवास्त्रयस्त्रिंशत्सर्वभूतगणेश्वराः ।
नन्दीश्वरो महाकायो ग्रामणीर्वृषभध्वजः ।
ईश्वराः सर्वलोकानां गणेश्वरविनायकाः ।
सौम्या रौद्रगणाश्चैव योगभूतगणास्तथा ।
ज्योतींषि सरितो व्योम सुपर्णः पतगेश्वरः ।
पृथिव्यां तपसा सिद्धाः स्थावराश्च चराश्च ह ।
हिमवान्गिरयश्चैव चत्वारश्च महार्णवाः ।
भवस्यानुचराः सर्वे हरतुल्यपराक्रमाः ।
विष्णुर्देवोऽथ जिष्णुश्च स्कन्दश्चाम्बिकया सह ।
कीर्तयन्प्रयतः सर्वान्सर्वपापैः प्रमुच्यते ।
अत ऊर्ध्वं प्रवक्ष्यामि मानवानृषिसत्तमान् ।
यवक्रीतश्च रैभ्यश्च अर्वावसुपरावसू ।
औशिजश्चैव कक्षीवान्बलश्चाङ्गिरसः सुतः ।
ऋषिर्मेधातिथेः पुत्रः कण्वो बर्हिषदस्तथा ।
ब्रह्मतेजोमयाः सर्वे कीर्तिता लोकभावनाः ।
लभन्ते हि शुभं सर्वे रुद्रानलवसुप्रभाः ।
भुवि कृत्वा शुभं कर्म मोदन्ते दिवि दैवतैः ।
महेन्द्रगुरवः सप्त प्राचीं वै दिशमाश्रिताः ।
प्रयतः कीर्तयन्नेताञ्शक्रलोके महीयते ।
उन्मुचुः प्रमुचुश्चैव स्वस्त्यात्रेयश्च वीर्यवान् ।
दृढव्यश्चोर्ध्वबाहुश्च तृणसोमाङ्गिरास्तथा ।
मित्रावरुणयोः पुत्रस्तथागस्त्यः प्रतापवान् ।
धर्मराजर्त्विजः सप्त दक्षिणां दिशमाश्रिताः ।
दृढेयुश्च ऋतेयुश्च परिव्याधश्च कीर्तिमान् ।
एकतश्च द्वितश्चैव त्रितश्चादित्यसंनिभाः ।
अत्रेः पुत्रश्च धर्मात्मा ऋषिः सारस्वतस्तथा ।
वरुणस्यर्त्विजः सप्त पश्चिमां दिशमाश्रिताः ।
अत्रिर्वसिष्ठो भगवान्कश्यपश्च महानृषिः ।
गौतमश्च भरद्वाजो विश्वामित्रोऽथ कौशिकः ।
ऋचीकतनयश्चोग्रो जमदग्निः प्रतापवान् ।

—(L. 14) D5 स (for सु-). —(L. 15) D4 देवर्षि- (for राजर्षि-). D5 सेवितं तं पुरा सर्वैर्देवैर्देवर्षिसत्तमैः. —(L. 20) V1 Dn3 नमस्ये (for प्रणम्य). —(L. 23) B6 (marg. as above) पवित्रं (for परेषां). —(L. 31) Dn2 समानीतं (for °ख्यातं). —(L. 36) D6 ध्रुवो धारश् (for धरो ध्रुवश्). D4.5 transp. अनिलः and अनलः. —(L. 38) B3 चेति (for चापि). —(L. 42) Dn2 पश्यंति त्रिदिवेश्वराः (for the post. half). —(L. 47) B1 चक्षुषा (for तेजसा). —D8 om. lines 49-54. —(L. 51) D5 विश्वेदेव- (for °श्वर-). —(L. 53) V1 B (except B3) Dn1 महाकालो (for °कायो). —(L. 55) D8 प्राणाश्चैव योगगणा (for the prior half). —(L. 56) Dn पन्नगेश्वरः (for पत°). —(L. 61) V1 B1, 2 (marg. as above). 4, 6 Dn3 सम्यक् (for सर्वान्). —(L. 64) B1, 2, 4, 5 नलश्; D4 नळश् (for बलश्). —(L. 65) D4, 5, मेधातिथिः. —D5 om. (hapl.) lines 70-74. —(L. 74

धनेश्वरस्य गुरवः सप्तैते उत्तरां श्रिताः ।
अपरे मुनयः सप्त दिक्षु सर्वासु धिष्ठिताः ।
कीर्तिस्वस्तिकरा नृणां कीर्तिता लोकभावनाः ।
धर्मः कामश्च कालश्च वसुर्वासुकिरेव च ।
अनन्तः कपिलश्चैव सप्तैते धरणीधराः ।
रामो व्यासस्तथा द्रौणिरश्वत्थामा च लोमशः ।
इत्येते मुनयो दिव्या एकैकः सप्तसप्तधा ।
शान्तिस्वस्तिकरा लोके दिशां पालाः प्रकीर्तिताः ।
यस्यां यस्यां दिशि ह्येते तन्मुखः शरणं व्रजेत् ।
स्रष्टारः सर्वभूतानां कीर्तिता लोकपावनाः ।
संवर्तो मेरुसावर्णो मार्कण्डेयश्च धार्मिकः ।
सांख्ययोगौ नारदश्च दुर्वासाश्च महानृषिः ।
अत्यन्ततपसो दान्तास्त्रिषु लोकेषु विश्रुताः ।
अपरे रुद्रसंकाशाः कीर्तिता ब्रह्मलौकिकाः ।
अपुत्रो लभते पुत्रं दरिद्रो लभते धनम् ।
तथा धर्मार्थकामेषु सिद्धिं च लभते नरः ।
पृथुं वैन्यं नृपवरं पृथ्वी यस्याभवत्सुता ।
प्रजापतिं सार्वभौमं कीर्तयेद्वसुधाधिपम् ।
आदित्यवंशप्रभवं महेन्द्रसमविक्रमम् ।
पुरूरवसमैलं च त्रिषु लोकेषु विश्रुतम् ।
बुधस्य दयितं पुत्रं कीर्तयेद्वसुधाधिपम् ।
त्रिलोकविश्रुतं वीरं भरतं च प्रकीर्तयेत् ।
गवामयेन यज्ञेन येनेष्टं वै कृते युगे ।
रन्तिदेवं महादेवं कीर्तयेत्परमद्युतिम् ।
विश्वजित्तपसोपेतं लक्षण्यं कामलक्षणम् ।
तथा श्वेतं च राजर्षिं कीर्तयेत्परमद्युतिम् ।
स्थाणुः प्रसादितो येन यस्यार्थे ह्यन्धको हतः ।
महादेवप्रसादेन येन गङ्गावतारिता ।
भगीरथं दुराधर्षं कीर्तयेत्परमद्युतिम् ।
सगरस्यात्मजा येन प्लावितास्तारितास्तथा ।
हुताशनसमानेतान्महारूपान्महौजसः ।
उग्रकोपान्महासत्त्वान्कीर्तयेत्कीर्तिवर्धनान् ।
देवानृषिगणांश्चैव नृपांश्च जगतीश्वरान् ।
सांख्यं योगं च परमं हव्यं कव्यं तथैव च ।
कीर्तितं परमं ब्रह्म सर्वश्रुतिपरायणम् ।
मङ्गल्यं सर्वभूतानां पवित्रं बहुकीर्तितम् ।
व्याधिप्रशमनं श्रेष्ठं पौष्टिकं सर्वकर्मणाम् ।
प्रयतः कीर्तयेच्चैतान्कल्यं सायं च भारत ।
एते वै यान्ति वर्षन्ति भान्ति वान्ति सृजन्ति च ।
एते विनायकाः श्रेष्ठा दक्षाः क्षान्ता जितेन्द्रियाः ।
नराणामशुभं सर्वे व्यपोहन्ति प्रकीर्तिताः ।
साक्षिभूता महात्मानः पापस्य सुकृतस्य च ।
एतान्वै कल्यमुत्थाय कीर्तयञ्शुभमश्नुते ।
नाग्निचोरभयं तत्र न मार्गप्रतिरोधनम् ।
एतान्कीर्तयतां नित्यं दुःस्वप्नो नश्यते नृणाम् ।
मुच्यते सर्वपापेभ्यः स्वस्तिमांश्च गृहान्व्रजेत् ।
दीक्षाकालेषु सर्वेषु यः पठेन्नियतो द्विजः ।
न्यायवानात्मनिरतः क्षान्तो दान्तोऽनसूयकः ।
रोगार्तो व्याभियुक्तो वा पठन्पापात्प्रमुच्यते ।
वास्तुमध्ये तु पठतः कुलस्वस्त्ययनं भवेत् ।
क्षेत्रमध्ये तु पठतः सर्वं सस्यं प्ररोहति ।
गच्छतः क्षेममध्वानं ग्रामान्तरगतः पठन् ।
आत्मनश्च सुतानां च दाराणां च धनस्य च ।
बीजानामोषधीनां च रक्षामेतां प्रयोजयेत् ।
एतान्संग्रामकाले तु पठतः क्षत्रियस्य तु ।
व्रजन्ति रिपवो नाशं क्षेमं च विनिवर्तते ।
एतान्दैवे च पित्र्ये च पठतः पुरुषस्य हि ।
भुञ्जते पितरो हव्यं कव्यं च त्रिदिवौकसः ।

$B_5$ श्रीमान् ( for सप्त ). — ( L. 75 ) $D_6$ वीर्यवान् ( for कीर्तिमान् ). — $B_3$ om. ( hapl. ) lines 79–82. — ( L. 83 ) $V_1$ $B_2$ विष्ठिताः ; $B_3$ [अ]धिष्ठिताः ( for धि° ). — ( L. 85 ) $B_6$ धर्मः कालश्च कामश्च ( for the prior half ). — ( L. 86 ) $Dn_3$ अंतकः ( for अनन्तः ). — ( L. 90 ) $Dn_2$ तन्मुखं; $Dn_3$ उन्मुखः ( for तन्मुखः ). — ( L. 92 ) $B_1$ -सावर्णिर् ( for °र्णो ). — $Dn_3$ $D_{3.5}$ om. ( hapl. ) lines 100–102. — ( L. 102 ) $B_{4.5}$ ध्रुवस्य ( for बुधस्य ). — ( L. 103 ) $B_1$ त्रिलोके; $D_5$ त्रैलोक्य- ( for त्रिलोक- ). — ( L. 105 ) $D_5$ महाभागं ( for °देवं ). — ( L. 106 ) $Dn_1$ $D_{4.5}$ लक्षण्यं लोकपूजितं ; $Dn_2$ $D_8$ °ण्यं लोकमंगलं ( for the post. half ). — After line 107, $Dn_1$ reads line 111. $B_1$ $D_8$ om. ( hapl. ) lines 108–110. $Dn_1$ om. line 108. — ( L. 108 ) $D_4$ विदितो येन यस्यार्थो ह्यंधको दानवो हतः. — ( L. 109 ) $D_4$ transp. येन and गङ्गा. — ( L. 110 ) $V_1$ $B_{2-5}$ $Dn_{1.n3}$ $D_{4.5}$ च राजर्षिं ( for दुराधर्षं ). $D_5$ om. ( hapl. ) from the post. half up to the prior half of line 113. — ( L. 116 ) $D_5$ कीर्तयेच्च परं ब्रह्म ( for the prior half ). — ( L. 117 ) $Dn_3$ पवित्रं कीर्तिवर्धनं ( for the post. half ). — ( L. 120 ) $B_{1.2.4.5}$ पांति ; $Dn_1$ $D_3$ भांति ( for यान्ति ). — ( L. 122 ) $V_1$ B Dn $D_{4.5}$ सर्वं ( for सर्वे ). — ( L. 125 ) $B_3$ $Dn_{1.n2}$ $D_8$ तस्य ( for तत्र ). — ( L. 127 ) $B_2$ ( marg. as above ) वसेत् ( for व्रजेत् ). — ( L. 129 ) $D_5$ जितेंद्रियः ( for ऽनसूयकः ). — ( L. 131 ) $D_5$ कुले ( for कुल- ). — ( L. 137 ) $V_1$ $B_{1-4}$ Dn $D_{4.6.8}$ क्षेमी ( for क्षेमं ). $Dn_{1.n2}$ $D_{6.8}$ परि- ( for विनि- ). — ( L. 139 ) $B_5$ transp. हव्यं and कव्यं. $D_5$ हव्यं चापि ( for

न व्याधिश्चापदभयं न द्विपान्न हि तस्करात् ।
कश्मलं लघुतां याति पाप्मना च प्रमुच्यते ।
यानपात्रे च याने च प्रवासे राजवेश्मनि ।
परां सिद्धिमवाप्नोति सावित्रीं ह्युत्तमां पठन् ।
न च राजभयं तेषां न पिशाचान्न राक्षसात् ।
नाग्न्यम्बुपवनव्यालाद्भयं तस्योपजायते ।
चतुर्णामपि वर्णानामाश्रमस्य विशेषतः ।
करोति सततं शान्तिं सावित्रीमुत्तमां पठन् ।
नाग्निर्दहति काष्ठानि सावित्री यत्र पठ्यते ।
न तत्र बालो म्रियते न च तिष्ठन्ति पन्नगाः ।
न तेषां विद्यते दुःखं गच्छन्ति परमां गतिम् ।
ये शृण्वन्ति महद्ब्रह्म सावित्रीगुणकीर्तनम् ।
गवां मध्ये तु पठतो गावोऽस्य बहुवत्सलाः ।
प्रस्थाने वा प्रवेशे वा सर्वावस्थागतः पठेत् ।
जपतां जुह्वतां चैव नित्यं च प्रयतात्मनाम् ।
ऋषीणां परमं जप्यं गुह्यमेतन्नराधिप ।
याथातथ्येन संगम्य इतिहासं पुरातनम् ।
पराशरमतं दिव्यं शक्राय कथितं पुरा ।
तदेतत्ते समाख्यातं तथ्यं ब्रह्म सनातनम् ।
हृदयं सर्वभूतानां श्रुतिरेषा पुरातनी ।
सोमादित्यान्वयाः सर्वे राघवाः कुरवस्तथा ।
पठन्ति शुचयो नित्यं सावित्रीं प्राणिनां गतिम् ।
अभ्यासे नित्यं देवानां सप्तर्षीणां ध्रुवस्य च ।
मोक्षणं सर्वकृच्छ्राणां मोचयत्यशुभात्सदा ।
वृद्धैः काश्यपगौतमप्रभृतिभिर्भृग्वङ्गिरोत्र्यादिभिः
शुक्रागस्त्यबृहस्पतिप्रभृतिभिर्ब्रह्मर्षिभिः सेवितम् ।
भारद्वाजमतं ऋचीकतनयैः प्राप्तं वसिष्ठात्पुनः
सावित्रीमधिगम्य शक्रवसुभिः कृत्स्ना जिता दानवाः ।
यो गोशतं कनकशृङ्गमयं ददाति
विप्राय वेदविदुषे च बहुश्रुताय ।
दिव्यां च भारतकथां कथयेच्च नित्यं
तुल्यं फलं भवति तस्य च तस्य चैव ।
धर्मो विवर्धति भृगोः परिकीर्तनेन
वीर्यं विवर्धति वसिष्ठनमोनतेन ।
संग्रामजिद्भवति चैव रघुं नमस्य-
न्स्यादश्विनौ च परिकीर्तयतो न रोगः ।
एषा ते कथिता राजन्सावित्री ब्रह्म शाश्वती ।
विवक्षुरसि यच्चान्यत्तत्ते वक्ष्यामि भारत ।

Colophon.

## 19

After 13. 148, $D_{1-9}$ ins.:

युधिष्ठिरः ।

मानसानीह तीर्थानि प्रशंसन्ति महर्षयः ।
तानि मे कुरुशार्दूल यथावद्वक्तुमर्हसि ।

भीष्मः ।

शृणु तीर्थानि गदतो मानसानीह मानद ।
येषु सम्यङ् नरः स्नात्वा प्रयाति परमां गतिम् ।
सत्यं तीर्थं क्षमा तीर्थं सत्यमिन्द्रियनिग्रहः ।
सर्वभूतदया तीर्थं तीर्थमार्जवमेव च ।
दानं तीर्थं दमस्तीर्थं संतोषस्तीर्थमुत्तमम् ।
ब्रह्मचर्यं परं तीर्थं तीर्थं च प्रियवादिता ।
ज्ञानं तीर्थं तपस्तीर्थं धृतिस्तीर्थमुदाहृतम् ।
तीर्थानामपि यत्तीर्थं विशुद्धिर्मनसः परा ।
नोदकक्लिन्नगात्रो हि स्नात इत्यभिधीयते ।
स स्नातो यो दमस्नातः सुविशुद्धमनोमलः ।
यो लुब्धः पिशुनः क्रूरो दाम्भिको विषयात्मकः ।
सर्वतीर्थेष्वपि स्नातः पापो मलिन एव सः ।
न च गच्छन्ति ते स्वर्गमविशुद्धमनोमलाः ।

कव्यं च त्रि· ). — ( L. 140 ) $B_1$ द्विपो नापि ( for द्विपान्न हि ). — ( L. 142 ) $D_5$ यानपात्रे प्रवासे च जन्मवेश्मनि भारत. — ( L. 144 ) $Dn_{1.n2}$ $D_5$ रोग- ( for राज- ). $B_3$ न पिशाचोरगरक्षसां ( for the post. half ). — ( L. 145 ) $D_4$ प्र- ( for [उ]प- ). — ( L. 146 ) $D_5$ आश्रमाणां ( for °मस्य ). — ( L. 153 ) $B_{1.4.5}$ $Dn_3$ $D_{4.5}$ प्रवासे ( for प्रवेशे ). — ( L. 155 ) $D_5$ transp. जप्यं and गुह्यम्. — ( L. 159 ) $Dn_1$ सनातनी ( for पुरा° ). — ( L. 160 ) $Dn_1$ $D_5$ सोमादित्यनृपाः सर्वे ( for the prior half ). — ( L. 162 ) $Dn_3$ अभीष्टे ( for अभ्यासे ). — ( L. 166 ) $V_1$ वासिष्ठादिभिः; $B_{1.2-5}$ $Dn_1$ $D_8$ वशिष्ठात्पुनः. — $Dn_3$ reads line 169 twice. — ( L. 169 ) $V_1$ $B_{1.2.4}$ सु- ( for च ). — ( L. 170 ) B पुण्यां ( for दिव्यां ). B शृणुयाच्च ( for कथयेच्च ). — ( L. 173 ) $B_1$ वशिष्ठमुनेः स्मृतेन ( for वसिष्ठनमोनतेन ). — Colophon. — *Parvan name:* $B_{1-4}$ शांति. — *Sub-parvan:* $V_1$ B Dn $D_{5.8}$ दानधर्म. — *Adhy. name:* $V_1$ $B_{4.5}$ सावित्री; $B_1$ सावित्रीमाहिमाकथनं; $B_2$ Dn सावित्रीव्रतं; $B_3$ सावित्र्याख्यानं; $D_{5.8}$ सावित्रीकथनं. — *Adhy. no.:* $V_1$ 148; $Dn_1$ 147.

19

$D_5$ om. lines 1–7. — ( L. 5 ) $D_{4.6.8.9}$ -निग्रहं ( for -निग्रहः ). — $D_7$ om. ( hapl. ) lines 7–8. — ( L. 9 ) $D_{6.7}$ दानं ( for ज्ञानं ). $D_7$ दमस् ( for तपस् ). — ( L. 10 ) $D_4$ वृत्तं ( for तीर्थं ). — ( L. 12 ) $D_4$ विशुद्धिश्च; $D_5$ शुचिः शुद्ध- ( for सुविशुद्ध- ).

विषयेष्वपि संरागो मानसो मल उच्यते ।
तेष्वेव च विरागोऽस्य निर्मलत्वमुदाहृतम् ।
चित्तमन्तर्गतं दुष्टं तीर्थस्नानैर्न शुध्यति ।
शतशोऽपि जले धौतं सुराभाण्डमिवाशुचि ।
निगृहीतेन्द्रियग्रामो यत्रैव निवसेन्नरः ।
तत्र तस्य कुरुक्षेत्रं नैमिषं पुष्करं गया ।
ज्ञानहृदे सत्यजले रागद्वेषमलापहे ।
यः स्नातो मानसे तीर्थे स याति परमां गतिम् ।

Colophon.

युधिष्ठिरः ।

पापस्य किमधिष्ठानं का प्रसूतिश्च भारत ।
किं चास्य कारणं प्रोक्तं तन्मे ब्रूहि पितामह ।

भीष्मः ।

लोभः प्रतिष्ठा पापस्य प्रसूतिर्लोभ एव च ।
अत्र ते संशयो मा भूल्लोभः पापस्य कारणम् ।
लोभात्क्रोधः प्रभवति लोभाद्द्रोहः प्रवर्तते ।
लोभान्मोहश्च माया च मानात्सात्सर्यमेव च ।
नार्थैः पूरयितुं शक्यो लोभो बहुविधैरपि ।
नित्यं गम्भीरतोयाभिरापगाभिरिवार्णवः ।
सर्वभूतेष्वविश्वासः सर्वभूतेष्वनिर्दयः ।
सर्वभूतेष्वजिह्मश्च लोभाद्भवति भारत ।
सुमहान्त्यपि शास्त्राणि धारयन्तो बहुश्रुताः ।
छेत्तारः संशयानां च लोभग्रस्ताः प्रयान्त्यधः ।
लोभक्षये क्षयं यान्ति सर्वपापानि देहिनाम् ।
लोभवृद्धौ च वर्धन्ते नृपते नात्र संशयः ।
तस्मात्सर्वप्रयत्नेन त्यज लोभं युधिष्ठिर ।
यदीच्छसि महाराज शाश्वतीं गतिमात्मनः ।

Colophon.

## 20

After 13. 150, $D_{4-8}$ ins.:

युधिष्ठिरः ।

पितामह महाबाहो सर्वधर्मभृतां वर ।
सत्यार्जवगुणोपेतं सौम्यं धर्मं वदस्व मे ।
भवतः श्रोतुमिच्छामि सत्यवाक्यमनुत्तमम् ।
यत्प्राग्बहुलया प्रोक्तं तन्मे त्वं वक्तुमर्हसि ।

भीष्मः ।

सौम्य धर्मं प्रवक्ष्यामि सत्यार्जवसमन्वितम् ।
कामरूपस्य व्याघ्रस्य धेन्वा संवादमुत्तमम् ।
माथुरे विषये रम्ये धनधान्यसमन्विते ।
नानाजनपदाकीर्णे यज्ञवाटविभूषिते ।
तत्र सा नगरी रम्या यमुनातीरमाश्रिता ।
अर्धचन्द्रप्रतीकाशा विद्वज्जनविभूषिता ।
इन्द्रयष्टिध्वजाकीर्णा गोपीभिरुपशोभिता ।
बहुद्विजसमाकीर्णा नानापण्योपशोभिता ।
सुप्रमाणा सुरम्या च स्वातिनक्षत्रनिर्मिता ।
प्राकाराट्टप्रतोलीभिर्दुर्जया परिखादिभिः ।
आम्रातककपित्थैश्च राजवृक्षैश्च शोभिता ।
देवतायतनैर्दिव्यैः कदलीखण्डमण्डिता ।
हंसमालाप्रतीकाशैर्दीप्यते धवलैर्गृहैः ।
पनसैर्बकुलैस्तालैः प्रियालैर्नागकेसरैः ।
करवीरैः कर्णिकारैः पाटलाशोकचम्पकैः ।
मल्लिकाकुन्दजातीभिः कुब्जाह्लादकुरण्टकैः ।
सुवर्णश्वेतयूथीभिः किंकिरातोत्पलादिभिः ।
पुंनागवृक्षबकुलैरुद्यानैरुपशोभिता ।
संपूर्णा धनधान्यैश्च गोधनैरुपशोभिता ।
वेदाध्ययनघोषैश्च पवित्रीकृतमङ्गला ।
वेदीशृङ्गाटकै रम्यैस्त्रिकचत्वरशोभिता ।

—(L. 17) $D_4$ तदेव च विरामोस्य (for the prior half). —(L. 21) $D_8$ तस्य तत्र (by transp.). —Colophon. —*Sub-parvan* : $D_{4.5}$ दानधर्मं. —*Adhy. name* : $D_{4-9}$ मानसतीर्थं. —$D_6$ om. the post. half of line 25 and the prior half of line 26. —(L. 27) $D_6$ क्रोधः (for लोभः). —(L. 30) $D_4$ लोके बहुविधैस्तथा (for the post. half). —$D_4$ om. (hapl.) line 32. —(L. 35) $D_{5.7}$ पतंति (for प्रयान्ति). —Colophon. —*Sub-parvan* : $D_4$ दानधर्म. —*Adhy. name* : $D_{5.6.8.9}$ मानसतीर्थं; $D_7$ लोभतीर्थं.

20

This passage is substantially identical with Padma Purāṇa, I. 18. —(L. 2) $D_6$ सौम्य (for सौम्यं). —(L. 3) $D_{6.8}$ भगवन् (for भवतः). —(L. 5) $D_{5.6.8}$ -गुणान्वितं (for -सम°). —(L. 6) $D_4$ व्याघ्रेण (for व्याघ्रस्य). —(L. 11) $D_5$ परि-; $D_7$ प्रति- (for उप-). —$D_{4.6.8}$ om. (hapl.) line 12. —(L. 15) $D_4$ आम्रातकैः (for °तक-). $D_4$ शोभितैः (for °ता). —(L. 16) $D_4$ -मंडितं (for -मण्डिता). —(L. 18) $D_8$ पियालैर् (for प्रि°). —(L. 20) $D_4$ -करंटकैः (for -कु°). —(L. 21) $D_4$ किंकरातोत्पलैस्तथा; $D_5$ नीलश्वेतोत्पलादिभिः (*for the post. half*). —(L. 22) $D_7$ अपि (for उप-). $D_4$ -शोभितैः (for °ता). —(L. 25) $D_{4.5}$ वेदैः (for वेदी-). —(L. 26) $D_4$

रावणस्येव रत्नाढ्या लङ्का चैव महापुरी ।
इन्द्रसेनो नृपस्तत्र राजधर्मसमन्वितः ।
धर्मे चाभिरतो नित्यं देवतातिथिपूजकः ।
क्षत्रधर्मे रतः श्रीमान्प्रजापतिसमः क्षितौ ।
तेन सा नगरी रम्या राजसिंहेन पालिता ।
नित्योत्सवप्रमुदिता शङ्खवादित्रनादिता ।
सुसंगीतविदग्धैश्च प्रेक्षणीयैः समाकुला ।
अन्तरापणवीथीभिः सुविभक्तैश्चतुष्पथैः ।
दीर्घिकाकूपवापीभिस्तडागैरुपशोभिता ।
सभाप्रपासमाकीर्णा विवाहमखसंकुला ।
पुरी चन्द्रवती नाम दृष्टा ते यदि वा श्रुता ।
तस्यां पुर्यां पुरा वृत्तं तत्त्वं शृणु युधिष्ठिर ।
कस्यचिद्द्विजमुख्यस्य कल्याणी धेनुरुत्तमा ।
हृष्टपुष्टा सुसंतुष्टा बहुला नाम विश्रुता ।
गोधनस्य च सा मुख्या हंसवर्णा घटस्रवा ।
दीर्घघोणा विभक्ताङ्गी श्रेष्ठलोमतनुत्वचा ।
विस्तीर्णजघना दिव्या पीनश्रोणिपयोधरा ।
सर्वलक्षणसंपन्ना सर्वावयवसुन्दरी ।
नीलकण्ठा शुभग्रीवा घण्टाली मधुरस्वरा ।
सा च यूथस्य सर्वस्य चचाराग्रे सुनिर्भया ।
ग्रामधान्यं चरेच्छन्नं गत्वैकैव यथासुखम् ।
सान्द्रं सुपुष्पितं सुरभि अच्छिन्नं चरते तृणम् ।
रोहितो नाम तत्रान्यः पर्वतो यमुनातटे ।
अनेककन्दरदरीनिर्झरैरुपशोभितः ।
तस्य पूर्वोत्तरे भागे घोरे तृणसमाकुले ।
संकटे विषमे दुर्गे भैरवे लोमहर्षणे ।
मृगसिंहसमाकीर्णे बहुश्वापदसेविते ।
वल्लीवृक्षादिगहने शिवाशतनिनादिते ।
दुर्गेऽस्मिन्वसते रौद्रः कामरूपी भयंकरः ।
द्वीपी शोणितमांसाशी महादंष्ट्रो महाबलः ।
महापर्वतसंकाशो मेघगर्जितनिस्वनः ।
महागुहादरीवक्त्रस्तीक्ष्णदंष्ट्रो नखायुधः ।
नन्दी नाम स धर्मात्मा स च गोपहिते रतः ।
अच्छिन्नाग्रैस्तृणैर्दीर्घैर्गोधनं परिरक्षति ।
तस्य यूथपरिभ्रष्टा बहुला तृणतृष्णया ।
चरन्ती व्याघ्रपुरतः सा धेनुः समुपस्थिता ।
अभिद्रवंश्च तां व्याघ्रस्तिष्ठ तिष्ठेति चाब्रवीत् ।
त्वमद्य विहितो भक्षः स्वयं प्राप्तासि मे वनम् ।
व्याघ्रस्य वचनं श्रुत्वा निष्ठुरं लोमहर्षणम् ।
सुतं रूपान्वितं बालं चन्द्ररूपसमप्रभम् ।
वत्सं स्मरति सा धेनुः स्नेहार्ता गद्गदस्वरा ।
दह्यन्ती पुत्रशोकेन बहुला पुत्रवत्सला ।
रुदन्ती करुणं सा तु निराशा पुत्रदर्शने ।
दृष्ट्वा तु बहुलां व्याघ्रः क्रन्दमानां सुदुःखिताम् ।
उवाच वचनं घोरं बहुले किं प्ररुद्यते ।
दैवाद्यथोपपन्नासि भक्षस्त्वं मे यदृच्छया ।
न रुदन्त्या वा हसन्त्या वा तथा ते जीवितं भवेत् ।
विहितं भुज्यते लोके स्वयं प्राप्तासि धेनुके ।
मृत्युस्ते विहितोऽद्यैव वृथा किमनुशोचसि ।
पप्रच्छ च पुनर्व्याघ्रः किमर्थं रुदितं त्वया ।
कौतुकं मेऽद्य संजातमशेषं कथयस्व नः ।
व्याघ्रस्य वचनं श्रुत्वा बहुला वाक्यमब्रवीत् ।
क्षन्तुमर्हसि मे नाथ कामरूप नमोऽस्तु ते ।
त्वां समालोक्य लोकस्य परित्राणं न विद्यते ।
जीवितार्थं न शोचामि प्राप्तव्यं मरणं मया ।
जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ।
देवैरपि सदा सर्वैर्मर्तव्यमवशैर्ध्रुवम् ।

---

रत्नानां ( for °ढ्या ). $D_5$ [ए]व हि ( for चैव ). — ( L. 29 ) $D_5$ क्षात्रधर्म- ( for क्षत्रधर्मे ). — ( L. 30 ) $D_4$ -हंसेन ( for -सिंहेन ). — ( L. 31 ) $D_{6-7}$ -वादिता ( for -ना° ). — ( L. 32 ) $D_8$ -विदैश्चैव ( for -विदग्धैश्च ). $D_{4, 6}$ प्रेक्षणीय- ( for °णीयैः ). — ( L. 35 ) $D_{4, 6}$ -सुख- ( for -मख- ). — ( L. 37 ) $D_5$ नराधिप ( for युधिष्ठिर ). — ( L. 38 ) $D_8$ कल्या धेनुषु चोत्तमा ( for the post. half ). — After line 40, $D_5$ ins.:

सुमुखा हंसवर्णाभा पटन्यस्तामिव श्रियम् ।

— ( L. 41 ) $D_5$ दृढपुष्टा ( for दीर्घघोणा ). $D_7$ श्रेष्ठा रोम- ( for श्रेष्ठलोम- ). $D_6$ पुष्टरोमतनुच्छदा ; $D_8$ श्रेष्ठा रोमतनूत्तमा ( for the post. half ). — ( L. 45 ) $D_5$ सुदुर्भरा ( for सुनिर्भया ). — ( L. 47 ) Prior half hypermetric. $D_6$ सुरभिम् ( for सुरभि ). $D_5$ सांद्रपुष्पितसौरभ्यम् ; $D_8$ सांद्रं सुपुष्पं सुरभिम् ( for the prior half ). — ( L. 49 ) $D_4$ अनेककंदरकदली- ; $D_8$ °दरीयुक्तो ( for the prior half ). $D_{4, 5}$ -शोभितैः ( for °तः ). — ( L. 51 ) Some Mss. रोम- ( for लोम- ). — ( L. 54 ) $D_{4, 5}$ रौद्रे ( for रौद्रः ). — $D_{4, 5}$ om. lines 55–58. — ( L. 59 ) $D_5$ अच्छिन्नास्तरणैर्दीर्घैर् ( for the prior half ). — ( L. 63 ) $D_{4, 6}$ वने ( for वनम् ). — ( L. 64 ) Some Mss. रोम- ( for लोम- ). — ( L. 65 ) $D_{4, 6, 8}$ -बिंब- ( for -रूप- ). — ( L. 68 ) $D_{4, 5, 8}$ रुदती ( for रुदन्ती ). — ( L. 71 ) $D_{6, 8}$ भक्ष्यस् ( for भक्षस् ). — ( L. 72 ) $D_5$ कथं ( for तथा ). — ( L. 74 ) $D_5$ ह्येवं ( for ऽद्यैव ). — $D_4$ om. (hapl.) line 79. — ( L. 80 ) $D_4$ जीवनार्थं ( for जीवितार्थं ). — Lines 81–82 = 6. 24. 27. — ( L. 83 ) $D_7$ अवशं ( for °शैर् ). $D_5$ मर्तव्यमनिशंकया ( for the post.

तस्मात्तत्राहमेवैकं व्याघ्र शोचामि जीवितम् ।
किं तु स्नेहवशाद्व्याघ्र दुःखेन रुदितं मया ।
अस्ति मे हृदि संतापस्तं च त्वं श्रोतुमर्हसि ।
अग्रे वयसि वर्तन्ती प्रसूताहं मृगाधिप ।
दृष्टः प्रथमजातस्तु सुतश्च मम बालकः ।
क्षीरं पिबति मे वत्सस्तृणं नाद्यापि जिघ्रति ।
स च गोपकुले बद्धः क्षुधितो मामुदीक्षते ।
सुतं तमनुशोचामि कथं जीविष्यते सुतः ।
तस्येच्छामि स्तनं दातुं पुत्रस्नेहवशानुगा ।
पाययित्वा च तं वत्समवलिह्य च मूर्धनि ।
सखीनामर्पयित्वा च संदिश्य च हिताहितम् ।
पुनः प्रत्यागमिष्यामि यथेष्टं भक्षयिष्यसि ।
शीघ्राहमागमिष्यामि महाव्याघ्र तवान्तिकम् ।
बहुलाया वचः श्रुत्वा मृगेन्द्रः पुनरब्रवीत् ।
किं ते पुत्रेण कर्तव्यं मरणं किं न पश्यसि ।
त्रसन्ति सर्वभूतानि मां निरीक्ष्य म्रियन्ति च ।
त्वं पुनः कृपयाविष्टा पुत्र पुत्रेति भाषसे ।
न मन्त्रा न तपो दानं न माता न पिता सुतः ।
शक्नुवन्ति परित्रातुमागतां मत्समीपतः ।
कथं तद्गोकुलं गत्वा गोपीजनसमाकुलम् ।
वृषभैर्नादितं रम्यं बालवत्सविभूषितम् ।
भूषणं देवलोकस्य स्वर्गतुल्यं न संशयः ।
नित्यं प्रमुदितं रम्यं सर्वदैवतपूजितम् ।
पवित्रं तत्पवित्राणां मङ्गलानां च मङ्गलम् ।
यत्तीर्थं सर्वतीर्थानां रम्याणां रम्यमुत्तमम् ।
समस्तगुणसंकीर्णमीश्वरायतनं महत् ।
यत्स्थानं सर्वसिद्धानां भूमिस्वर्गमनुत्तमम् ।
गर्गरीरवशब्देन यत्र लक्ष्मीर्न हन्यते ।
यत्र वत्साश्च हुंकारं करुणं मातृकाङ्क्षया ।
यद्गोपैः पालितं शूरैर्बाहुयुद्धविशारदैः ।
प्रगीतनृत्यसंलापं वल्गुतास्फोटनादितम् ।
इतस्ततः स्थितैर्वत्सैरघ्र्यमानैः समन्ततः ।
सरोवद्भ्राजते गोष्ठं श्रीमद्भिरिव पङ्कजैः ।
तच्छ्रीनिकेतनं रम्यं मातरं भ्रातरं सुतम् ।
दृष्ट्वा सखीजनं भूयः कथं प्रत्यागमिष्यसि ।
पञ्च भूतानि मे भद्रे पिबन्तु रुधिरं तव ।
न निराशानि भूतानि वाङ्मात्रेण करोम्यहम् ।

बहुला ।

प्रथमं दृष्टवत्साहं मृगेन्द्र शृणु मे वचः ।
दृष्ट्वा सखीजनं बालं गोपांश्च परिचारकान् ।
गोपीजनं समागम्य जननीं च विशेषतः ।
शपथैरागमिष्यामि मन्यसे यदि मुञ्च माम् ।

व्याघ्रः ।

शपथाः कीदृशा भद्रे ये त्वया परिनोदिताः ।
प्रत्ययं चैवमाख्याहि बहुले मम यत्नतः ।

बहुला ।

यदि ते नास्ति विश्वासो ममोपरि मृगाधिप ।
शपथैरागमिष्यामि सत्यं ब्रूयां न संशयः ।
मा ददस्वेति यो ब्रूयाद्गुर्वग्निब्राह्मणेषु च ।
तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः ।
मधुमांसे च यत्पापं लाक्षाविक्रयणे तथा ।
तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः ।
यो वेदविक्रयी विप्रश्चस्वरे पठते तु यः ।
असंतोषी च यो विप्रो नित्यं भवति याचकः ।
तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः ।
मत्सरी गोत्रभावेन भूतानां गुणनाशकः ।
कौमारं चापि भर्तारं या नारी नानुमन्यते ।
परद्रव्योपयोगेन यज्ञं कुर्वन्ति ये द्विजाः ।

---

half ). —( L. 84 ) $D_8$ तत्र ( for तत्र ). —( L. 85 ) $D_5$ विदितं ( for रु° ). —( 86 ) $D_4$ तच्च त्वं; $D_6$ क्षमस्व ( for तं न त्वं ). — $D_5$ om. lines 88–89. —( L. 91 ) $D_{6.8}$ स्तन्यं ( for सुतं ). $D_4$ शून्यं तु मम शोचामि ( for the prior half ). —( L 92 ) $D_4$ तथा दानं ( for स्तनं दातुं ). —( L. 94 ) $D_{6.7}$ सखीनां समर्पयित्वा; $D_8$ अर्पयित्वा सखीनां च ( for the prior half ). —( L. 99 ) $D_{1.6-8}$ त्रस्यंति ( for त्रसन्ति ). —( L. 101 ) $D_4$ मंत्रो ( for मन्त्रा ). —( L. 102 ) $D_5$ गतां वत्ससमीपतः ( for the post. half ). —( L. 103 ) $D_5$ दृष्ट्वा ( for गत्वा ). —( L. 105 ) $D_{1.5.7.8}$ -लोकं ( for -तुल्यं ). —( L. 106 ) $D_{1.8}$ नित्य- ( for नित्यं ). —( L. 107 ) $D_{5.7}$ पवित्रं नित्यं विप्राणां ( for the prior half ). —( L. 112 ) $D_4$ स्वहुंकारैर् ( for न हुंकारं ). $D_5$ मातृहुंकारकांक्षया ( for the post. half ). —( L. 113 ) $D_5$ तद् ( for यद् ). —( L. 114 ) $D_8$ प्रगीतं ( for °त- ). $D_5$ -नृत्त- ( for -नृत्य- ). —( L. 115 ) $D_1$ शतैर् ( for स्थितैर् ). —( L. 116 ) $D_7$ राजते ( for भ्रा° ). —( L. 121 ) $D_5$ मदनः ( for मे वचः ). —( L. 123 ) $D_4$ जनन्या ( for °नीं ). —( L. 124 ) $D_{4.6.8}$ यदि मन्यसि मुंच मां ( for the post. half ). —( L. 126 ) $D_5$ प्रतीपं ( for प्रत्ययं ). —( L. 129 ) $D_5$ गुर्वग्निब्राह्मणादिषु ( for the post. half ). —( L. 130 ) $D_5$ यत्ते ( for यदि ). —( L. 131 ) $D_4$ -विक्रयिणम् ( for °यणे ). —( L. 132 ) $D_{5-7}$ लिप्यामि ( for लिप्येऽहं ). $D_5$ यत्ते ( for यदि ). —( L. 134 ) $D_5$ पावकः ( for याचकः ). — $D_4$ repeats line 135 after line 137. —( L. 135 ) $D_4$ ( first time ).$_8$ लिप्यामि ( for लिप्येऽहं ). $D_5$ यत्ते ( for यदि ). — $D_3$ om. lines 136–140. —( L. 136 )

तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः ।
स्वपाकं च परित्यज्य परपाकरताश्च ये ।
ये सक्ता गुरुदारेषु स्वामिदारेषु ये नराः ।
ब्राह्मणो वृषलीं गत्वा न तु तीर्थानि सेवते ।
तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः ।
ब्राह्मणः कृतसंस्कारः शूद्रप्रेक्षणकारकः ।
तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः ।
अनृतं धनसंबद्धे कूटसाक्ष्यं वदन्ति ये ।
यत्पापं ब्रह्महत्यायां मातापितृवधेन च ।
तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः ।
यत्पापं लुब्धकानां च म्लेच्छानां गरदायिनाम् ।
तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः ।
पादेन स्पृशते गाश्च शिरोभिर्न नमन्ति ये ।
तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः ।
गोष्ववज्ञां प्रकुर्वन्ति शपन्ते ताडयन्ति च ।
तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः ।
सकृद्दत्त्वा तु यः कन्यां द्वितीयाय प्रयच्छति ।
तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः ।
कथायां क्रियमाणायामन्तरायं करोति यः ।
तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः ।
गृहे यस्यागतो विप्रो निराशः प्रतिगच्छति ।
तेन पापेन लिप्यामि यत्तेऽहं नागमे पुनः ।
द्विभार्यः पुरुषो यस्तु एकां स्नेहेन पश्यति ।
तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः ।
एकाकी मृष्टमश्नाति यः कश्चित्पुरुषाधमः ।
तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः ।
यस्त्वीन्हले बलीवर्दान्विषमं वाहयेत यः ।
तेन पापेन लिप्येऽहं यदि नायां तवान्तिकम् ।
इत्येतैः पातकैर्घोरैरागमिष्याम्यहं पुनः ।
लब्ध्वा स प्रत्ययं व्याघ्रः पुनर्वचनमब्रवीत् ।
संजातः प्रत्ययोऽस्माकं शपथैर्बहुले तव ।
कदाचिन्मन्यसे गत्वा मूर्खोऽसौ वञ्चितो मया ।
लोकेऽस्मिन्नास्तिकाः केचिन्मूर्खाः पण्डितमानिनः ।
भ्रामयन्ति च ते बुद्धिं चक्रारूढ इवेक्षणम् ।
अतथ्यान्यपि तथ्यानि दर्शयन्त्यपि पेशलाः ।
समे निम्नोन्नतानीव चित्रे कर्मविदो जनाः ।
प्रायः कृतार्थो लोकोऽयं मन्यते नोपकारिणम् ।
वत्सः क्षीरक्षयं दृष्ट्वा परित्यजति मातरम् ।
न तं पश्यामि लोकेऽस्मिन्कृते प्रतिकरोति यः ।
सर्वस्य हि कृतार्थस्य मतिरन्या प्रवर्तते ।
ऋषिदेवासुरगणैः शपथाः कार्यसिद्धये ।
कृताः परस्परं पूर्वं तन्न मन्यामहे कथम् ।
सत्येनाभिशपेद्यस्तु देवाग्निगुरुसंनिधौ ।
तस्य वैवस्वतो राजा धर्मस्यार्धं निकृन्तति ।
मा ते बुद्धिर्भवेदेवं शपथैरेव वञ्चिता ।
तेनैवं दर्शितं पूर्वं यथेष्टं कुरु सांप्रतम् ।
बहुले गच्छ पश्य त्वं पुत्रकं पुत्रवत्सले ।
पाययित्वा च तं वत्समवलिह्य च मूर्धनि ।
मातरं भ्रातरं दृष्ट्वा सखीः स्वजनबान्धवान् ।
सत्यमेवाग्रतः कृत्वा शीघ्रमागमनं कुरु ।

भीष्मः ।

एवं सा प्रत्ययं कृत्वा बहुला सत्यवादिनी ।
अनुज्ञाता मृगेन्द्रेण प्रयाता पुत्रवत्सला ।
अश्रुपूर्णमुखी दीना वेपमाना सुदुःखिता ।
कुररी निःश्वसन्तीव पतिता शोकसागरे ।
करिणीव हि नागेन गृहीता सलिलाशये ।

---

$D_8$ -भावे च ( for -भावेन ). — ( L. 137 ) $D_5$ -मोद्दते ( for -मन्यते ). — ( L. 139 ) $D_{5-7}$ लिप्यामि ( for लिप्येऽहं ). $D_5$ यत्ते ( for यदि ). — ( L. 141 ) $D_8$ न स्व- ( for गुरु- ). $D_8$ पर- ( for स्वामि- ). — ( L. 143 ) $D_5$ लिप्यामि यत्ते ( for लिप्येऽहं यदि ). — ( L. 146 ) $D_4$ -संबाध-; $D_{6-8}$ -संबंधे ( for -संबद्धे ). — ( L. 147 ) $D_{4,6-8}$ मातृपित्रोर् ( for मातापितृ- ). — ( L. 148 ) $D_6$ लिप्यामि ( for लिप्येऽहं ). $D_6$ यत्ते ( for यदि ). — ( L. 150 ) $D_5$ लिप्यामि यत्ते ( for लिप्येऽहं यदि ). — $D_8$ om. ( hapl. ) lines 151–152. — ( L. 151 ) $D_4$ गा वै; $D_{6,7}$ गावः ( for गाश्च ). — ( L. 152 ) $D_5$ लिप्यामि यत्ते ( for लिप्येऽहं यदि ). — ( L. 154 ) $D_5$ लिप्यामि यत्ते ( for लिप्येऽहं यदि ). — ( L. 155 ) $D_8$ कन्यां यो ( by transp. ). $D_7$ द्वितीयं यः ( for °याय ). — ( L. 156 ) $D_8$ लिप्यामि यत्ते ( for लिप्येऽहं यदि ). — $D_4$ om. ( hapl. ) lines 157–162. — ( L. 158 ) $D_5$ लिप्यामि यत्ते ( for लिप्येऽहं यदि ). — $D_{6,8}$ om. ( hapl. ) lines 159–160. — ( L. 162 ) $D_5$ लिप्यामि यत्ते ( for लिप्येऽहं यदि ). — $D_5$ om. lines 163–166. $D_4$ repeats line 164 after line 167. — ( L. 166 ) $D_{4,6,8}$ यद्यहं नागमे पुनः ( for the post. half ). — ( L. 167 ) $D_4$ आगम्य ह पुनः पुनः ( for the post. half ). — ( L. 168 ) $D_{6,8}$ वद्ध्वा ( for लब्ध्वा ). — ( L. 170 ) $D_6$ [ऽ]यं ( for ऽसौ ). — $D_8$ om. lines 173–176. — ( L. 174 ) $D_4$ [इ]ह ( for [इ]व ). — ( L. 175 ) $D_6$ प्रायः कृतार्थो लोकेस्मिन् ( for the prior half ). $D_{4,5}$ सत्यं ते ( for मन्यते ). — ( L. 178 ) $D_5$ सर्वेषु ( for सर्वस्य हि ). $D_6$ प्रजायते ( for प्रवर्तते ). — ( L. 184 ) $D_4$ ममैव ( for तेनैवं ). $D_4$ संप्रति ( for सांप्रतम् ). — ( L. 185 ) $D_6$ स्वपुत्रं ( for पुत्रकं ). — ( L. 187 ) $D_{6-8}$ सखी- ( for सखीः ). — ( L. 191 ) $D_1$ -मुखा ( for -मुखी ). $D_4$ निरानंदा ( for वेप-

अशक्तात्मपरित्राणे विलपन्ती मुहुर्मुहुः ।
सा तु गोपकुलं गत्वा बहुला हृतविक्रमा ।
श्रुत्वात्मवत्सं क्रोशन्तं पर्यधावत तन्मुखी ।
उपासर्पत तं वत्सं बाष्पपर्याकुलेक्षणा ।
स प्राप्तां मातरं वत्सः शङ्कितः परिपृच्छति ।
न ते पश्यामि सौम्यत्वं दुर्मना इव लक्ष्यसे ।
उद्विग्ना चापि ते दृष्टिर्भीतभीता च दृश्यते ।

बहुला ।

पिब पुत्र स्तनं मह्यं कारणं यदि पृच्छसि ।
आगता च तव स्नेहात्कुरु तृप्तिं यथेप्सिताम् ।
अपश्चिममिदं वत्स दुर्लभं मातृदर्शनम् ।
एकाहमथ मां पीत्वा प्रत्यूषे कस्य पास्यसि ।
मया तु पुत्र गन्तव्यं शपथैरागता ह्यहम् ।
कामरूपस्य व्याघ्रस्य दातव्यं जीवितं मया ।
बहुलाया वचः श्रुत्वा वत्सो वचनमब्रवीत् ।
अहं तत्र गमिष्यामि यत्र त्वं गन्तुमिच्छसि ।
श्लाघ्यं ममापि मरणं त्वया सह न संशयः ।
एकाकिनापि मर्तव्यं मयावश्यं त्वया विना ।
यदि मां सहितं मातर्वने व्याघ्रो हनिष्यति ।
या गतिर्मातृभक्तानां ध्रुवं सा मे भविष्यति ।
तस्मादवश्यं यास्यामि त्वया सह न संशयः ।
अथ मातश्च तिष्ठ त्वं शपथाः सन्तु ते मम ।
जनन्या विप्रयुक्तस्य जीविते किं प्रयोजनम् ।
अनाथस्य वने नित्यं को मे नाथो भविष्यति ।
नास्ति मातृसमो बन्धुर्बालानां क्षीरपायिनाम् ।
नास्ति मातृसमो नाथो नास्ति मातृसमा गतिः ।
नास्ति मातृसमः स्नेहो नास्ति मातृसमं सुखम् ।
नास्ति मातृसमो देव इहलोके परत्र च ।
एष नः परमो धर्मः प्रजापतिविनिर्मितः ।
ये तु तिष्ठन्ति सत्पुत्रास्ते यान्ति परमां गतिम् ।
ममैव विहितो मृत्युर्न त्वं पुत्र गमिष्यसि ।
न चायमन्यजीवानां मृत्युः स्यादन्यमृत्युना ।
अपश्चिममिमं पुत्र मातुः संदेशमुत्तमम् ।
अनुतिष्ठस्व मद्वाक्यं तत्र शुश्रूषणं परम् ।
वने जले च विचरन्मा प्रमादं करिष्यसि ।
प्रमादात्सर्वभूतानि विनश्यन्ति न संशयः ।
न च लोभेन वर्तव्यं विषमस्थं तृणं क्वचित् ।
लोभाद्विनाशः सर्वेषामिह लोके परत्र च ।
समुद्रमटवीं युद्धं विशन्तो लोभमोहिताः ।
लोभादकार्यमत्युग्रं विद्वानपि समाचरेत् ।
लोभात्प्रमादाद्विश्रम्भात्त्रिभिर्वै बध्यते पुमान् ।
तस्माल्लोभं न कुर्वीत न प्रमादं न विश्वसेत् ।
आत्मा च सततं पुत्र रक्षितव्यः प्रयत्नतः ।
सर्वेभ्यः श्वापदेभ्यश्च म्लेच्छचोरादिसंकटे ।
तिरश्चां पापजातीनामेकत्र वसतामपि ।
विपरीतानि चित्तानि न ज्ञायन्ते ह पुत्रक ।
नदीनां नखिनां चैव शृङ्गिणां शस्त्रपाणिनाम् ।
विश्वासो नैव कर्तव्यः स्त्रीणां वेश्याजनस्य च ।
न विश्वसेदविश्वस्ते विश्वस्तेऽपि न विश्वसेत् ।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ।
न विश्वसेत्स्वदेहेऽपि चलतो जीवचेतसः ।
तद्व्यक्तिमूढमत्यर्थं सदा सुप्तं विचारयेत् ।
गन्धः सर्वत्र सततमाघ्रातव्यः प्रयत्नतः ।
गावः पश्यन्ति गन्धेन वेदैः पश्यन्ति ब्राह्मणाः ।
चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः ।
नैकस्तिष्ठेद्वने घोरे धर्ममेकश्च चिन्तयेत् ।
न चोद्वेगस्त्वया कार्यः सर्वस्य मरणं ध्रुवम् ।
यथा हि पथिकः कश्चिच्छायामाश्रित्य विश्रमेत् ।
विश्रम्य च पुनर्गच्छेत्तद्वद्भूतसमागमः ।
यत्रानित्यं जगत्सर्वं तत्रैकः शोच्यते कथम् ।

माना). — (L. 196) D4 स्व- (for [आ]त्म-). — (L. 198) D4. 5. 7. 8 सं- (for स). D5 पर्यपृच्छत (for परिपृच्छति). — (L. 202) D6. 8 तव च (by transp.). D4. 5 यथेप्सितं (for °ताम्). — (L. 205) D5 पुत्राद्य (for तु पुत्र). D5 [अ]स्मि (for हि). D6 [अ]हो (for अहम्). — D5 om. line 207. — (L. 210) D4. 6. 8 च (for [अ]पि). D5 सत्यं (for [अ]वश्यं). — (L. 214) D5 संति (for सन्तु). — (L. 215) D6. 8 -मुक्तस्य (for -यु°). — D5 om. (hapl.) lines 217–218. D4 om. from the post. half of line 217 up to the prior half of line 219. — (L. 221) D5 मे (for नः). — (L. 222) D4. 5 तेपि यांति परां गतिं (for the post. half). — (L. 223) D5 न मेच (for ममैव). — (L. 225) D5 मातृ- (for मातुः). — (L. 226) D5 तद्वाक्यं (for मद्वाक्यं). — D5 om. lines 233–235. — (L. 233) D4. 6. 7 वध्यते (for ब°). — (L. 238) — (L. 234) D8 कुर्वंति (for कुर्वीत). — (L. D5 न ज्ञायंति कदाचन (for the post. half). — (L. 239) D5 दंष्ट्रिणां; D8 नखीनां (for नखिनां). D4 नदीनां च नखीनां च (for the prior half). — Lines 241–242 = (var.) 1. App. I. 81 lines 125–126. — (L. 243) D4. 5. 7 [S]तीव (for जीव-). — (L. 244) D7 शक्ति- (for व्यक्ति-). — (L. 245) D5 सर्वस्य (for °त्र). — (L. 246) D7 वाडवाः (for ब्राह्मणाः). — (L. 248) D5 नैको धर्मान्विचिंतयेत् (for the post. half). — D4 om. lines 251–252. — (L. 252) D5 शोच्यसे (for °ते). — (L. 253) D4–6 [अ]तः (for [अ]न्तः-).

वत्सान्तःशोकमुत्सृज्य मद्वाक्यमनुपालय ।
शिरस्याघ्राय तं वत्समवलिह्य च मूर्धनि ।
शोकेन महताविष्टा बाष्पव्याकुललोचना ।
विनिःश्वसन्ती मार्गीव व्याघ्राणां वशमागता ।
पुत्रहीना जगत्सर्वं पश्यन्त्यन्धेव साभवत् ।
महापङ्कविनिर्मग्ना तिष्ठन्त्येवात्र सीदति ।
विलप्य बहुला पुत्रमुवाचेदं पुनर्वचः ।
नास्ति पुत्रसमः स्नेहो नास्ति पुत्रसमं सुखम् ।
नास्ति पुत्रसमा प्रीतिर्नास्ति पुत्रसमा गतिः ।
अपुत्रस्य जगच्छून्यमपुत्रस्य गृहं कुतः ।
पुत्रेण जयते लोकान्पुत्रेण नरकं जयेत् ।
अनृतं वदते लोकश्चन्दनं किल शीतलम् ।
पुत्रगात्रपरिष्वङ्गश्चन्दनादपि शीतलः ।
दिगम्बरं गतव्रीडं जटिलं धूलिधूसरम् ।
पुण्यैर्विना न पश्यन्ति गङ्गाधरमिवात्मजम् ।
किं चन्दनेन पीयूषबिन्दुना किं किमिन्दुना ।
पुत्रगात्रपरिष्वङ्गपात्रं गात्रं भवेद्यदि ।
इति पुत्रगुणानुक्त्वा निरीक्ष्य च मुहुर्मुहुः ।
स्वमातरं सखीर्गोपान्क्रमात्ताननुपृच्छति ।
यूथस्याग्रे चरन्तीं मामाससाद मृगाधिपः ।
मुक्ताहं तेन शपथैः कुलं दृष्ट्वागमिष्यसि ।
साहं भवन्तं संद्रष्टुं मातरं स्वकुलं सुतम् ।
आगता सत्यवाक्येन पुनर्यास्यामि तत्र च ।
मातः क्षमस्व तत्सर्वं बालत्वे यत्कृतं मया ।
न्यासस्तवायं दौहित्रः किमन्यत्प्रब्रवीमि ते ।
विपुले चम्पके दामे भद्रे सुरभि मालिनि ।
वसुधारे श्रिये नन्दे महानन्दे घटस्तवे ।
अज्ञानाज्ज्ञानतो वापि यदुक्तं क्वचिदप्रियम् ।
तत्क्षमध्वं महाभागाः पश्चाद्यच्च कृतं मया ।
सर्वाः सर्वगुणोपेताः सर्वलोकस्य मातरः ।
सर्वाः सर्वप्रदा नित्यं रक्षध्वं मम बालकम् ।
अनाथमबलं दीनं सीदन्तं मम पुत्रकम् ।
मातृशोकाग्निसंतप्तं भगिन्यः पालयिष्यथ ।
भगिनीनामयं पुत्रः सांप्रतं च विशेषतः ।
बालोऽबलाभिः सर्वाभिः पोष्यः पाल्यश्च पुत्रवत् ।
चरन्तं विषमे स्थाने गच्छन्तं परगोकुले ।
अकार्येषु प्रवर्तन्तं हे सख्यो वारयिष्यथ ।
परपुत्रात्मपुत्रेषु यासां चित्तं समं भवेत् ।
ता धन्यास्ताः कृतार्थाश्च ताः स्त्रियस्ताश्च मातरः ।
मोदन्ते देवलोकेषु ता गावस्ताश्च योषितः ।
याः पालयन्त्यनाथांश्च परपुत्रानात्मपुत्रवत् ।
तस्मादनाथं मत्पुत्रं पुत्रवत्पालयिष्यथ ।
रक्षध्वं च महाभागा यास्यामि सत्यसंश्रयात् ।
यतः सर्वस्य जातस्य स्थितं मरणमग्रतः ।
न चास्मद्गमने मन्युः सख्यः कार्यः कथंचन ।
श्रुत्वैतद्बहुलावाक्यं माता सख्यश्च विह्वलाः ।
विषादं परमं जग्मुरिदमूचुः सुविस्मिताः ।
अहो सुमहदाश्चर्यं यद्व्याघ्रवदनं महत् ।
प्रवेष्टुमुद्यता भीमं बहुला सत्यवाक्यतः ।
शपथैः सत्यवाक्येन वञ्चयित्वा यतो भयम् ।
नाशितव्यं प्रयत्नेन तत्कथं गम्यते पुनः ।
बहुले नैव गन्तव्यं धर्मोऽयं कतमस्तव ।
यद्बालं स्वकुलं त्यक्त्वा सत्यलोभेन गम्यते ।
अत्र गाथाः पुरा गीता ऋषिभिस्तत्त्वदर्शिभिः ।
प्राणत्यागे समुत्पन्ने शपथैर्नास्ति पातकम् ।
उक्त्वानृतं भवेद्यत्र प्राणिनां प्राणरक्षणम् ।
अनृतं तत्र वै सत्यं सत्यं चैवानृतं भवेत् ।
कामिनीषु विवाहेषु गवां कार्ये तथैव च ।
ब्राह्मणाभ्युपपत्तौ च शपथैर्नास्ति पातकम् ।

---

— (L. 254) $D_4$ शिरसा (for °सि). $D_4$ om. from the post. half up to the prior half of line 260. — (L. 255) $D_5$ जल-; $D_7$ नष्टा (for बाष्प-). — (L. 256) $D_5$ निःश्वसंती वेपमाना (for the prior half). $D_5$ व्याघ्रस्य (for व्याघ्राणां). — (L. 259) $D_5$ बहुधा (for बहुला). — (L. 263) $D_{4, 6-8}$ त्यजेत् (for जयेत्). — (L. 264) $D_5$ कदलीकांडशीतलः (for the post. half). — $D_{4, 6, 8}$ om. lines 266–269. — (L. 267) $D_7$ पुण्यहीना (for पुण्यैर्विना). — (L. 270) $D_4$ पुत्रैर् (for पुत्र-). $D_7$ निरीक्षंती (for °क्ष्य च). — (L. 271) $D_5$ [ए]व (for तान्). — (L. 274) $D_8$ भवंती (for भवन्तं). — (L. 276) $D_{5, 7}$ बालत्वेन (for °त्वे यत्). — (L. 281) $D_{4, 5}$ तत्क्षमस्व महाभागे (for the prior half). $D_{4, 6-8}$ तु (for च). — (L. 282) $D_5$ सर्वाः सर्वस्य मातरः (for the post. half). — (L. 283) $D_6$ सर्वथा सुप्रजा नित्यं (for the prior half). — (L. 286) $D_5$ एष (for अयं).. — (L. 287) $D_{4-6, 8}$ बालाभिः (for ऽब°). $D_4$ पुत्रकः (for °वत्). — (L. 288) $D_4$ विषम- (for विषमे). — (L. 293) Post. half hypermetric. — (L. 295) $D_5$ यास्येहं (for यास्यामि). — (L. 296) $D_8$ सतः (for यतः). — (L. 297) $D_7$ दुःखं (for मन्युः). — (L. 300) $D_5$ [ऽ]त्र (for सु-). — (L. 306) $D_5$ -वादिभिः (for -दर्शिभिः). — (L. 308) $D_5$ भवेत्सत्यं; $D_8$ °ष्वत्र (for °द्यत्र). — (L. 309) $D_{5, 7}$ तच्च (for तत्र). — (L. 314) $D_8$ गर्भे (for गर्भे). $D_5$

वहुला ।
परेषां प्राणरक्षार्थं वदाम्येवानृतं वचः ।
नात्मार्थमुत्सहे वक्तुं स्वल्पमप्यनृतं क्वचित् ।
एकः संक्लिश्यते गर्भे जायेतैको म्रियेत च ।
भुङ्क्ते चैकः सुखं दुःखं मातः सत्यं वदाम्यहम् ।
सत्ये प्रतिष्ठितो लोको धर्मः सत्ये प्रतिष्ठितः ।
उदधिः सत्यवाक्येन मर्यादां न विलङ्घति ।
विष्णवे पृथिवीं दत्त्वा बलिः पातालमाश्रितः ।
छद्मना च बलिर्बद्धः सत्यवाक्येन तिष्ठति ।
प्रवर्धमानः शैलेन्द्रः शतयोजनमुच्छ्रितः ।
सत्येन संस्थितो विन्ध्यो न प्रवृद्धः स सांप्रतम् ।
स्वर्गापवर्गनरकाः सर्वे वाचि प्रतिष्ठिताः ।
यस्तां लोपयते वाचमशेषं तेन लोपितम् ।
योऽन्यथा सन्तमात्मानमन्यथा सत्सु भाषते ।
किं तेन न कृतं पापं चोरेणात्मापहारिणा ।
तस्मान्नैवाहमात्मानमसत्येन च लोपये ।
यास्यामि नरकं घोरं विलोप्यात्मानमात्मना ।
अगाधे विपुले शुद्धे सत्यतीर्थे क्षमाह्रदे ।
स्नात्वा पापविनिर्मुक्तः प्रयाति परमां गतिम् ।
अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ।
सत्यं साधु तपः श्रुतं च परमं क्लेशादिभिर्वर्जितं
स्वाधीनं च सुदुर्लभं च जगतः साधारणं भूषणम् ।
साधूनां निकषं सतां कुलधनं सर्वाश्रमाणां बलं
यन्म्लेच्छोऽपि विधाय गच्छति दिवं तत्त्यज्य तिष्ठेत्कथम् ।
सख्यः ।
बहुले त्वं नमस्कार्या सर्वैरपि सुरासुरैः ।
मा त्वं परमसत्येन प्राणांस्त्यजसि दुस्त्यजान् ।
ब्रूमः किमत्र कल्याणि या त्वं धर्मधुरंधरा ।
त्यागेनानेन यत्प्राप्यं त्रैलोक्ये कः समोऽस्ति ते ।
अभियोगं च पश्यामस्त्यागादस्मात्सुतेन ते ।
न हि कल्याणचित्तानामापदः सन्ति कुत्रचित् ।
दृष्ट्वा गोपाङ्गनं सर्वं परिक्रम्य च गोकुलम् ।
बहुला प्रस्थिता देवान्वृक्षांश्चापृच्छ्य तान्पुनः ।
क्षितिं च जलमग्निं च वायुं खार्कनिशाकरम् ।
दशदिग्देवतामद्रीनृक्षाणि ग्रहांस्तथा ।
सर्वान्विज्ञापयाम्यद्य प्रणिपत्य मुहुर्मुहुः ।
स्वैः स्वैः प्रभावै रक्षध्वमनाथं मम वत्सकम् ।
करुणाहितचित्तानां न स्यात्परजनो यतः ।
तस्मात्करुणया बालमनाथं पालयिष्यथ ।
ये संश्रिता वने सिद्धाः सर्वाश्च वनदेवताः ।
वने चरन्तं मे बालं ते रक्षन्तु सुतं मम ।
चम्पकाशोकपुंनागसरलार्जुनकिंशुकाः ।
शृण्वन्तु पादपाः सर्वे संदेशं मम विक्लवम् ।
बालमेकाकिनं दीनं चरन्तं विषमे वने ।
रक्षध्वं वत्सकं बालं स्नेहात्पुत्रमिवौरसम् ।
मातापितृविनिर्मुक्तमनाथं दीनमातुरम् ।
विचरन्तमिमां भूमिं क्रन्दमानं सुदुःखितम् ।
तस्येहाक्रन्दमानस्य मत्पुत्रस्य महावने ।
मातृशोकाभिभूतस्य क्षुत्पिपासातुरस्य च ।
न्यस्तस्यैकाकिनः शून्यं जगत्सर्वं प्रपश्यतः ।
चरमाणस्य कर्तव्यं सानुक्रोशस्य रक्षणम् ।
एवं संदिश्य बहुला पुत्रस्नेहवशं गता ।
शोकाग्निनातिसंतप्ता छिन्नाशा पुत्रदर्शने ।
वियुक्ता चक्रवाकीव लतेव पतिता तरोः ।
अन्धेव यष्टिरहिता प्रस्खलन्ती पदे पदे ।
गत्वा तु सा पुनस्तत्र यत्रासौ पिशिताशनः ।
आस्ते विस्फूर्जितमुखस्तीक्ष्णदंष्ट्रो भयानकः ।
व्याघ्रं दृष्ट्वा तु सा धेनुरिदं वचनमब्रवीत् ।
आगताहं महाभाग सत्यधर्मव्यवस्थया ।

---

म्रियेत वा; $D_8$ प्रयाति च (for म्रियेत च). —(L. 316) $D_6$ सत्ये धर्मः (by transp.). —(L. 317) $D_{5.6.8}$ च (for वि-). —(L. 318) $D_5$ आस्थितः (for आश्रितः). —(L. 319) $D_5$ -वाक्ये प्र- (for -वाक्येन). —(L. 323) $D_5$ तु (for तां). —(L. 326) $D_4$ असतो न च लोपयेत (for the post. half). —(L. 328) $D_{4.6.8}$ अगाध- (for °धे). — Lines 330–331 = (var.) 1. 69. 22; 12. 156. 19; 13. 75. 29; Mārkaṇḍeya P. 8. 42; Rām. 2. 61. 10; Hitopadeśa IV. 129. — $D_5$ om. (hapl.) line 330. —(L. 331) $D_8$ एतद् (for एव). —(L. 334) $D_4$ मिषतां; $D_5$ अनिशं (for निकषं). —(L. 335) $D_{4.6.8}$ [ऽ]प्यवधाय (for ऽपि वि°). —(L. 339) $D_6$ वै (for यत्). —(L. 341) $D_6$ कल्याणि (for °ण-). —(L. 342) $D_6$ गोपः (for गोपाङ्). —(L. 343) $D_6$ [आ]पृच्छती (for °च्छ्य तान्). —(L. 344) $D_4$ परम्; $D_{6-8}$ वरम् (for जलम्). $D_{4-8}$ -निशाचरं (for °करम्). —(L. 345) $D_{6.8}$ दिग्देवता (for °ताम्). —(L. 346) $D_6$ पुनः पुनः (for मुहुर्मुहुः). —(L. 348) $D_5$ करुणायतचित्तानां (for the prior half). $D_4$ om. (hapl.) from the post. half of line 351 up to the prior half of line 355. —(L. 352) $D_5$ -पुंनागाः (for °ग-). —(L. 356) $D_{4.5}$ मातृपितृ-; $D_{6.8}$ पितृमातृ- (for मातापितृ-). —$D_4$ om. line 358. —(L. 358) $D_6$ [ए]व (for [इ]ह). $D_7$ तत्स्नेहात्क्रंदमानस्य (for the prior half). —(L. 364) $D_4$ तरौ (for तरोः). —(L. 365) $D_5$ अथ दा (for अन्धेव). —(L. 370)

कुरु तृप्तिं यथाकामं मम मांसेन सांप्रतम् ।
तर्पयस्व स्वभूतानि पश्चास्य शोणितेन मे ।

व्याघ्रः ।

स्वागतं तव कल्याणि बहुले सत्यवादिनि ।
न हि सत्यवतां किंचिदशुभं विद्यते क्वचित् ।
त्वयोक्तं बहुले पूर्वं सत्यात्प्रत्यागता पुनः ।
तेन नः कौतुकं जातं प्राप्तागच्छेत्कथं पुनः ।
अन्यथा मां समासाद्य जीवन्ती यास्यसे कथम् ।
तच्च नः कौतुकं पूर्णं दृष्टं सत्यं गवां मया ।
तस्मादनेन सत्येन विमुक्तासि मयाधुना ।
सत्ये प्रतिष्ठिता लोका धर्मः सत्ये प्रतिष्ठितः ।
सत्ये प्रतिष्ठितं ज्ञानं सर्वं सत्ये प्रतिष्ठितम् ।
सत्येन देवास्तुष्यन्ति सत्येन पितरस्तथा ।
सत्येन ऋषयः सिद्धाः सर्वं सत्ये प्रतिष्ठितम् ।
धन्या गावः क्षितिर्धन्या धन्या त्वमपि धेनुके ।
धन्यः स राजा यत्र त्वं वससे सत्यवादिनि ।
धन्यः सराष्ट्रः सतृणः प्राणिवृक्षसमन्वितः ।
चचार बहुला यत्र दिष्ट्या पापविनाशिनी ।
ते धन्यास्ते कृतार्थाश्च तैरेव सुकृतं कृतम् ।
तैः प्राप्तं जन्मनः सारं ये पिबन्ति गवां पयः ।
मृगेन्द्रः प्रत्ययं गत्वा विस्मयं परमं गतः ।
प्रत्यादेशोऽयमस्माकं सर्वैर्देवैः प्रदर्शितः ।
तत्करिष्याम्यहं कर्म येन मोक्ष्यामि किल्बिषात् ।
मया जीवसहस्राणि भक्षितानि हतानि च ।
गतिं कां नु गमिष्यामि दृष्ट्वा गोसत्यमीदृशम् ।
अहं पापी दुराचारो नृशंसो जीवघातकः ।
कांल्लोकान्हि गमिष्यामि कृत्वा कर्म सुदारुणम् ।
गमिष्ये पुण्यतीर्थानि करिष्ये कायशोधनम् ।
पतिष्ये गिरिमासाद्य विशे वापि हुताशनम् ।
बहुले यन्मया कार्यं तपः पापविशुद्धये ।
तदादेशय संक्षेपान्न कालो विस्तरस्य मे ।

बहुला ।

तपः कृते प्रशंसन्ति त्रेतायां यज्ञकर्म च ।
द्वापरे ध्यानयोगं च दानमेकं कलौ युगे ।
सर्वेषामेव दानानामिदमेवैकमुत्तमम् ।
अभयं सर्वभूतानां नास्ति दानमतः परम् ।
चराचराणां भूतानामभयं यः प्रयच्छति ।
स सर्वभयनिर्मुक्तः परं ब्रह्माधिगच्छति ।
नास्त्यहिंसापरं दानं नास्त्यहिंसापरो दमः ।
यथा हस्तिपदेनान्यत्पदं सर्वं प्रलीयते ।
सर्वे धर्मास्तथा व्याघ्र विधीयन्ते ह्यहिंसया ।
योगवृक्षस्य या छाया तापत्रयविनाशिनी ।
धर्मज्ञानसुपुष्पस्य स्वर्गमोक्षफलस्य च ।
दुःखत्रयार्कसंतप्तश्छायां योगतरोः श्रितः ।
न वध्यते पुनर्दुःखैः प्राप्य निर्वाणमुत्तमम् ।
इत्येवं परमं श्रेयः कीर्तितं ते समासतः ।
ज्ञातं चैतत्त्वया सर्वं केवलं मां हि पृच्छसि ।

व्याघ्रः ।

अहं देवैः पुरा सर्वैर्व्याघ्ररूपेण पातितः ।
तत्र प्राणिवधे घोरे अशेषं मम विस्मृतम् ।
त्वत्संपर्कोपदेशेन संजातं स्मरणं पुनः ।
मुक्तशापश्च संजातः प्रसादात्तव धेनुके ।
बहुले गच्छ तुष्टोऽस्मि पुत्रेण सहिता भव ।
त्वं चाप्यनेन सत्येन गमिष्यसि परां गतिम् ।
ततो योगं समाश्रित्य व्याघ्रस्तद्गतमानसः ।
प्राणायामैः स्वकं देहं परित्यज्य दिवं गतः ।
सर्वपापविशुद्धात्मा योगैश्वर्यसमन्वितः ।
विमाने हंससंयुक्ते महता अप्सरोगणैः ।
विमानसंस्थितं दृष्ट्वा विस्मयं परमं गतः ।
बहुला हृष्टतुष्टाङ्गी गोकुलं पुनरागता ।
आगत्य च यथावृत्तं व्याघ्रसंवादमुत्तमम् ।
सखीभ्यः कथयामास पुत्रस्य च विशेषतः ।

$D_6$ मया कामं ; $D_8$ यथान्यायं ( for °कामं ). —( L. 375 ) $D_5$ मे ( for नः ). $D_8$ प्रीता ( for प्राप्ता ). $D_4$ कथंचन ( for कथं पुनः ). —( L. 377 ) $D_6$ जातं ( for पूर्णं ). $D_5$ पूर्णं इष्टं ( for दृष्टं सत्यं ). —( L. 384 ) $D_5$ देशो ( for राजा ). —( L. 390 ) $D_5$ प्रत्यादिशाघथास्माकं ( for the prior half ). —( L. 393 ) $D_{4,6,8}$ ते ( for गो- ). —( L. 402 ) $D_5$ इदमेकमनुत्तमं ( for the post. half ). —( L. 404 ) $D_5$ परावराणां भूतानाम् ( for the prior half ). —( L. 407 ) $D_5$ -पदेषु ; $D_8$ -पदे च ( for -पदेन ). $D_{1,6}$ वि- ( for प्र- ). —( L. 408 ) $D_5$ सर्व- ( for सर्वे ). —( L. 409 ) $D_7$ -विनाशनी ( for °शिनी ). —( L. 410 ) $D_4$ -सुपर्णस्य ; $D_{5,6,8}$ -सुपुण्यस्य ( for °ष्पस्य ). —( L. 411 ) $D_7$ -तप्तस्य ( for -संतप्तश् ). $D_5$ दुःखत्रयकषायस्य ( for the prior half ). —( L. 412 ) $D_{6-8}$ बाध्यते ( for व° ). $D_8$ प्राप्तो ( for प्राप्य ). —( L. 414 ) $D_5$ [ए]व ( for [ए]तत्व ). —( L. 416 ) $D_{6-8}$ -वधैर्घोरैर् ( for -वधे घोरे ). —( L. 421 ) $D_8$ मार्गं ( for योगं ). $D_5$ तद्धृत- ( for तद्गत- ). —( L. 424 ) $D_5$ -युक्ते हि ( for -संयुक्ते ). $D_7$ हंसयुक्तविमानेन ( for the prior half ). $D_{5-8}$ [अ]प्सरसो ( for अप्सरो- ). —( L. 425 ) $D_8$ विमाने ( for विमान- ). —( L. 426 ) $D_{7,8}$ -पुष्टांगी ( for -तुष्टाङ्गी ). —( L. 431 ) $D_4$ दृष्ट्वा ( for सर्वाम् ). —( L. 432 ) $D_4$ यथेष्टं मे महा-

बहुला पुत्रसंयुक्ता सुप्रीता सुनिराकुला ।
गोधनैर्वृषभैर्वत्सैर्गोपगोपीजनैर्वृता ।
विचचाराटवीं सर्वामशेषभयवर्जिता ।
यथेष्टचेष्टमभवद्गोकुलं तत्प्रभावतः ।
सराष्ट्रभृत्यराजानं सान्तःपुरपरिच्छदम् ।
सर्वान्गोपांश्च तान्दृष्ट्वा गोपीगोमण्डलानि च ।
इति संगृह्य तान्सर्वान्बहुला प्रस्थिता दिवम् ।
महाविमानैः श्रीमद्भिरसंख्यैः सर्वतोवृतम् ।
प्राप्य स्वर्गं क्रमादूर्ध्वमशेषैः सहिता पुनः ।
उपर्युपरि लोकानां गत्वा गोलोकमास्थिता ।
तत्र संभोगसंकीर्णे असंख्यातैः पुरोत्तमैः ।
क्रीडते सहिता सर्वैर्यावदाभूतसंप्लवम् ।

भीष्मः ।

इत्येतत्सत्यवाक्यस्य माहाभाग्यमुदाहृतम् ।
यः पठेच्छृणुयाद्वापि स्वर्गलोकं स गच्छति ।
बहुलाव्याघ्रसंवादं यः पठेत्सततं द्विजः ।
शृणुयादेकचित्तश्च स व्याघ्रैर्नाभिभूयते ।
वियुक्ता या सुतैर्नारी नरो वापि पठेत्सदा ।
सोऽपि पापैर्विनिर्मुक्तः पुत्रैर्भवति संगतः ।
यः पठेत्प्रातरुत्थाय चतुर्दश्यष्टमीषु च ।
सतां पुण्यकृतां लोकान्गच्छते नात्र संशयः ।
गवां गोष्ठे च पठतां गोवृद्धिर्नात्र संशयः ।
क्षेत्रमध्ये च पठतां सस्यवृद्धिः प्रजायते ।
गृहमध्ये च पठतां बालानां शान्तिवर्धनम् ।
भवेद्ग्रहाभिभूतानां रक्षामेतां च यः पठेत् ।
दुर्गेषु पठतां नित्यमटव्यायतनेषु च ।
दिवा वा यदि वा रात्रौ न भयं विद्यते क्वचित् ।
दुःस्वप्नारिष्टदुर्मित्रं श्रुत्वेदं संप्रणश्यति ।
वन्ध्यायाश्च भवेत्पुत्रः संमतश्च पतिर्भवेत् ।
कुमारी च सदा शृण्वन्वीरं पतिमवाप्नुयात् ।
नारी वा पुरुषो वापि दुर्भगः सुभगो भवेत् ।
गवां पर्वसु भक्त्या च माहात्म्यं पुरतः पठेत् ।
स गोवृद्धिमवाप्नोति गोलोकं चैव गच्छति ।

Colophon.

भागे (for the prior half). — (L. 434) D6 दृष्टान्; D7 दृष्टान् (for दृष्ट्वा). D5 सर्वगोपांश्च तां दृष्ट्वा (for the prior half). D5 गोपीगोपकुलानि च (for the post. half). — (L. 435) D5 हृदि (for इति). — (L. 438) D5 गोकुलम् (for गोलोकम्). — (L. 439) D5 तत्र भोगसमाकीर्णे (for the prior half). — D5 om. line 441. — (L. 442) D5 इत्येतद्यः पठेद्वापि (for the prior half). — (L. 443) D5 नरः (for द्विजः). — (L. 449) D4 मध्ये (for गोष्ठे). — (L. 450) D8 सम्यग (for सस्य-). — (L. 451) D7 -मध्येषु (for -मध्ये च). D4 गोवृद्धिर्नात्र संशयः; D8 बालवृद्धिः प्रजायते (for the post. half). — (L. 453) D4 पठते (for °तां). — (L. 456) D5 भवेत्पतिः (by transp.). — Colophon. — *Sub-parvan* : D5. 8 दानधर्म. — *Adhy. name* : D4-8 बहुलोपाख्यानं.

# CRITICAL NOTES

☞ *Besides a few comments from the point of view of textual criticism, exegesis, grammar, epic style, etc, the Critical Notes also include corrections in the Constituted Text and the Critical Apparatus.*

*A manuscript containing a commentary by an unidentified author ( Cu ) became available after the text of the Anuśāsanaparvan had been printed off. This manuscript was mostly identical with the manuscript ( B O R I, Govt. Collection No. 61 of 1871-73 ) which had been already used for the constitution of the text, namely, Dn3. On closer scrutiny, however, it was discovered that the commentary given in this manuscript as also in the manuscript which became newly available was definitely not by Nilakaṇṭha. From the many extracts which have been reproduced in the Critical Notes, it will be seen that it differs substantially from* Cn. *The siglum Dn3 assigned to the manuscript is thus not correct, though the manuscript certainly belongs to the D version of the N recension. The commentary by the unidentified author (* Cu *) is highly interesting from the point of view both of the v. l. which it mentions and the interpretations which it gives. It has, therefore, been quoted copiously in the Critical Notes.*

## 1

2 [b]) शान्तिरुक्ता : This presupposes the Śāntiparvan. The present parvan, which follows and, in a sense, continues Bhīṣma's instruction to Yudhiṣṭhira embodied in the Śāntiparvan, is appropriately called *anuśāsana*. Yudhiṣṭhira had lost his peace of mind on account of the tragic consequences of the great war of which he believed himself to be the root-cause, and had not apparently regained it completely even after Bhīṣma's teachings in the Śāntiparvan. From this point of view, Yudhiṣṭhira's first question, namely, how he could hope to win peace of mind knowing that he had been mainly responsible for the great catastrophe [ Cu: ईदृशं (in 1[d]) बहुविधं ज्ञातिबान्धवादिवधम् ], is fairly relevant. But the subsequent questions which Yudhiṣṭhira is represented in this parvan to have put to Bhīṣma are certainly not so. There also does not seem to be any logical connection between one question and another. The attempts made by Nīlakaṇṭha and other commentators to establish some kind of logical order among the various adhyāyas cannot be said to have been quite successful. Whatever topics came to the mind of the various redactors of the Epic seem to have been introduced in this parvan in the form of Yudhiṣṭhira's questions and Bhīṣma's replies which latter are often illustrated by some ancient legends. Some of the questions put into Yudhiṣṭhira's mouth are so elementary that they show that venerable king to be a naïve person; they make one wonder if Yudhiṣṭhira had not learnt even commonplace things in the course of his long and eventful life.

5 [a]) Cu : नु, प्रश्ने.

6* Cu : नु, भोः.

8* (Line 10) Cu : राजन् इति संबोधनं क्षत्रियाभिप्रायेण, जनमेजयस्येति वा.

8 [a]) परतन्त्रं = subject to the inexorable law of *karman*. Cu : परतन्त्र इति संबोधनपाठो वा ( cf. D7 ). — [d]) पदं = the working of the law of *karman*. It is subtle and beyond the ken of the senses.

9 [b]) In this and similar other contexts, the word *itihāsa* is used in the general sense of *itihāsa-purāṇa*. It often denotes a legend rather than history as such. — [cd]) The dialogue actually occurs among the five parties, and not between Mṛtyu and Gautamī on the one hand and Kāla, Lubdhaka, and Pannaga on the other, as seems to be implied here. Cu : धर्मराजस्य व्यापारभेदेन कालमृत्युयम इति पृथक्पृथग् व्यपदेशः.

11 [a]) Cu : स्नायुः गर्भवेष्टनं चर्म ; Cv : स्नायुपाशेन धमन्याख्यपाशेन.

13 [c]) Cu : न ह्यहम् इति कश्चित्पाठः ( cf. Dn3 D4, 6 ).

15 [b]) Cu : अप्लुताः अभिलषिताः.

16 [ab]) In view of the divergence of reading between the majority of N Mss. on the one hand and S Mss. on the other, the critical text of $16^a$ is derived from the Mss. of the middle group, that is, of D Version. This is so done also because D1 and D2 are presumably Devanāgarī transcripts of a (lost) Śāradā MS. The constituted text of $16^b$, on the other hand, should have better read as : जीवत्यस्मिन्कोऽत्ययः स्यादयं ते. Cu mentions both substitutions, namely, 10* and 11*. — [b]) Ca : जीवतानेन पन्नगेन बहवो जन्तवो दष्टव्याः, तस्माद्बहूनामुपकारार्थं हन्यतामयम्. — [c]) Cv (seems to read अस्योत्सङ्गे) : उत्सङ्गे प्राणमुक्तस्य अस्य जन्तोः अर्थे आनयनार्थमिति यावत्.

17 [c]) Cu : सुस्थस्य अक्षिप्तमनः; Cb : स्वस्थस्य अनलितमतेः; Cu : स्वस्थस्य इति । स्वे आत्मनि तिष्ठति इति स्वस्थः, स्थिरचित्तः.

18 [a]) Cb : द्विविधाः किल पुरुषा भवन्ति, मुमुक्षवः मुमुक्षवः [न]। तत्र ये शमार्थिनो मुमुक्षवस्ते कालगतिं वदन्ति. Cu : कालगतिं वदन्ति, कालस्वभावादुत्पद्यन्ते निरुध्यन्ते च भावा इति. — [b]) Ca : अर्थविदः नीतिशास्त्रज्ञाः. — [c]) Cu : श्रेयः क्षयं शोचति इति पाठः। श्रियः क्षये शोचति इति पाठः। दुःखविदः श्रेयःक्षये [यं] गच्छति इति च पाठः. — [Crit. App., line 4 : read °र्थिनः for °र्थितः. Cu also reads शमार्थिनः. ]

19 [a]) अस्मद्विधानां : This obviously refers to Gautamī's characterisation (in st. 10) as *sthavira* and *śamasaṁyuta*. Cab : अस्मद्विधानां धर्मात्मनाम्. — [c]) Cu reads : नित्यायस्तो बालकोऽस्येष तस्माद्.

20 [b]) कुतः = since.

21 [a]) Cu : शत्रून्हत्वा कीर्त्यादिलाभः, अव्ययम् अक्षयं, श्रेयः कल्याणं स्यात्, 'न हताज्जायते भयम्' इति वचनात्; Cv : लाभं हित्वा स्थितस्य अबलस्य. — [b]) Ca : सद्योलाभ एव नित्यः शत्रुभ्यः सकाशात्प्रशस्तः। तदुक्तं सभापर्वणि कृष्णेन 'क्लान्तः शत्रुर्न कौन्तेय लभ्यः पीडयितुं रणे' (2. 21. $20^{ab}$) इति. — [d]) Cu : कुत्सितोऽस्मिन् इति च पुस्तके पाठः. Cabu : कुत्सितः न शोभनः.
[ Crit. App., line 18 : read कुत्सितो- for कुत्सिते-. ]

22 [ab]) *gṛhya* and *namuktvā* are not strictly Pāṇinian forms. Cu : गृह्यशत्रून् गृहणीयशत्रून्.

25 [a]) The war between Indra and Vṛtra is an oft-repeated theme in the *Ṛgveda*. — [bc]) In *Taittirīya-Saṁhitā* 3. 2. 4 and *Taittirīya-Brāhmaṇa* 3. 2. 8. 3, Agni is called Rudra and is given the epithet *makhaghna*. This is reminiscent of the destruction of Dakṣa's sacrifice by Śiva.

31 [d]) तथा = as an instrumental or efficient cause (*nimittakāraṇa*), not as a material cause (*upādāna-kāraṇa*). This seems to have been made clear in st. 36, where the word *kāraṇa* in the first pāda means *upādāna*, and that in the third pāda *nimitta*.

34 [c]) Cu (reads -संदोहो for -संदेहो) : कार्यार्थे कारणसंदोहः कारणराशिः.

36 Cv : भवान्कारणं स्वतन्त्रकारणं यदि न स्यात्, तर्हि 'स्वतन्त्रः कर्ता' इति स्मृतेः त्वं कर्ता न स्याः। त्वं च विनाशे कारणं, दण्डचक्रादिवत् सामान्यकारणम्.

37 [a]) Cv (reads असत्यविकृते कार्ये) : विविधैः कृतं न भवति इति अविकृतं, एकेनैव कृतमित्यर्थः.

38 Obscure. — [ab]) Cn seems to understand *kriyā* as effect, and *kārya* as action culminating in the bringing into existence of that effect.
[ — [c]) Read तस्मात्त्वमस्मिन्हेतौ. ]

43-49 Doctrine of *kāla* as the ultimate cosmic principle; cf. *AV* XIX. 53-54; *Śvetāśvatara-Up.* I. 2; Avestan Zurvan.

44 [c]) Cv (reads तद्वज्जलदवच्चाहम्) : तद्वत् वायुवत् कालः, अहं जलदवच्च.

53 [cd]) Cu : मृत्योरपि न दोषः स्यादिति मेऽत्र प्रयोजनम्। मृत्यो मयि न दोषः स्याद् इति च पाठः.

56 [d]) "I am not characterizing as a cause what is not a cause."

58 [b]) Cu : आवां निर्दिष्टकारिणौ कालस्य आज्ञाकारिणौ.

59 The question does not seem to be directly related to the matter under consideration. Cn : मे मम तटस्थस्य परोपकर्तरि हर्षः, अपकर्त्रोश्च युवयोरुपरि द्वेषः [क्रोधः?] वा यथा स्यात् तथा ब्रूतम्.

63 ff. Doctrine of the inexorability of the law of *karman* to which everything else, even *kāla*, is subservient.

68 [a]) The analogy of *chāyātapau* is not happy.

75 [c]) Following the general trend of the foregoing discussion, the law of *karman*, rather than *kāla*, must be said to have been operative in the whole affair.

## 2

6 [c]) Māhiṣmatī on the river Narmadā (cf. st. 18) is identified by some scholars with Oṁkāra Māndhātā and by others with Maheśvara in Madhya Pradesh

( the latter view is more likely ). It was the capital of southern Avanti. According to *HV* ( 23 ), Māhiṣmatī was founded by Māhiṣmat. Other Purāṇic texts mention a Yadu prince as the founder. The *Purāṇas* also mention that Māndhātṛ of the solar dynasty, who ruled at Ayodhyā, subjugated the Kānyakubja and Paurava kingdoms, defeated the Ānavas and the Druhyus in the north-west, and led his army up to the Narmadā through the Vindhyas. His son, Purukutsa, continued the victorious expeditions. But after him, the political power of this royal family of Ayodhyā declined, and the Haihaya branch of the Yādavas reoccupied Malwa. The Haihaya king Mahiṣyant is said to have fortified Māhiṣmatī. Recent excavations at Māhiṣmatī have proved to be quite fruitful ( cf. H. D. SANKALIA and others, *The Excavations at Maheshwar and Navdatoli*, Poona 1953 ).

25 [c]) Cu : मह्यं मम.

27 [a]) Cu : दर्शयामास, आत्मानमिति शेषः.

32 This is a paranthetical reference. Cf. 2. 28. 16ff.

33 [b]) Cu : आहतवाससं, वेदे अहतवाससम् इति पाठः अर्थश्च समण्ववाससं, नूतनवाससम् इत्यर्थश्च लोके.

34 [d]) Cn : वसोः धारां संततां घृतधाराम्.

37 [b]) According to the *Bhāgavata P.* and the *Viṣṇu P.*, Nṛga was a son of Ikṣvāku. He is elsewhere said to have been the son of king Uśīnara. Nṛga was also the name of the second among the ten sons of Vaivasvata Manu. A legend relating to Nṛga is narrated in 13. 69. Also cf. 2. 8. 8[b] ; 4. 917*, L. 29 ; 9. 52. 19[b]. Cu : नृगस्यासीत्पितामहः इत्यनेन ओघवतो महत्त्वं सूचितं, नृगस्य महत्त्वात्.

39 [c]) For Kurukṣetra, see crit. note on 9. 52. 20.

40 [a]) Read °वजेष्यामि.

47 Cn explains the first तदा with गार्हस्थ्यकाले, and the second तदा with इध्माहरणकाले. — [c]) Cn : पृष्ठतः तस्य अप्रत्यक्षम् ; Cu : पृष्ठतः पश्चात्.

53 [c]) Cn : राज्ञि राजकन्ये.

54 [ab]) Cu : स मृत्युः । तया नृपकन्यया ओघवत्या । अन्यैः इंगितैः ( for इंगितैः ) द्रव्यैः छन्द्यमानः लोभ्यमानः.

56 [a]) Cn reads विहृत्य ( for रहः स ) : विहृत्येत्यत्र रहः स इति पाठः स्पष्टार्थः.

58 [b]) Cu : पावकिः, सुदर्शनः.

65 [a]) Cu : एषा ( for इयम् ).

71 [d]) C1 : स्वयमात्मानमालभे, आत्मशिरःस्पर्शं करोमि अतिथिविषयं समुदाहृतवाक्यं दिव्यमिदं ज्ञेयमिति भावः.

72 [d]) Cn : गुणाः इन्द्रियाणि, तदभिमानिन्यो देवताः पृथिव्याद्याः इत्यर्थः । Cu : गुणाः दशसंख्याका एते पृथिव्यादयः. D2. 3 read गुणाश्चैव दिशो दश, where गुणाः presumably means the three *guṇas*.

77 [a]) शैक्षेण स्वरेण = with proper Vedic accents ; in accordance with the rules laid down in the *Śikṣā* texts. Cf. 9. 35. 35[b].

81 [b]) Cu : पतिव्रतगुणैः, पतिभक्तिगुणैः । पतिव्रतागुणैर्वा । पुंवद्भाव आर्षः.

82–83 Oghavatī is generally believed to have been a river in Panjab ; sometimes identified with Sarasvatī. Cf. 9. 37. 4.

86 [ab]) to be understood as पञ्च भूतानि ( अतिक्रान्तानि ), अतिक्रान्तः स्ववीर्याच्च मनोभवः.

87 [c]) Cn : राजन्निति ऋषिराजत्वात् राजजामातृत्वाद्वा संबोधनम्.

88 [d]) व्यवसाय = Śiva or Viṣṇu. Cu reads वासवोऽप्याजगाम तम् and adds : अत्र व्यवसायो जगाम तम् इति पाठं प्रकल्प्य अर्थं करोति[मि] । विं पक्षिणं अवति रक्षति [इति] व्यवो गरुडः, तं स्यति नाशयति [इति] व्यवसायः इन्द्रः । देशान्तरपुस्तके पाठोऽयमलेखि । वस्तुतोऽयं पाठो देशपुस्तके नास्ति ।

## 3

3–4 *Cf. ṚV* III. 53 ; VII. 104 ; *MBh.* 3. 70. 79–83. The loss of his sons suffered by Vasiṣṭha is often referred to, directly or indirectly, in *ṚV* VII. Also cf. *Taittirīya-Saṃhitā* 7. 4. 7. 1; *Tāṇḍya- Br.* 4. 7. 3.

5 The family of Viśvāmitra is referred to in *ṚV* as *Kuśikāḥ* ( III. 53. 9–11 ), but he can by no means be regarded as the founder of the Kuśika-vaṃśa.

6–8 Actually, the name of Śunaḥśepa's father was Ajīgarta ; but Śunaḥśepa is referred to as Ārcīka also in *HV* ( App. 6 A ) and *Brahma P.* 10. For the Śunaḥśepa legend, cf. *Aitareya Br.* VII. 3. Ṛcīka was a son of Cyavana and belonged to the Bhṛgu family. For his connection with Viśvāmitra, see 13.4.

16 [ab]) In view of the divergence of reading between the majority of N Mss. on the one hand and S Mss. on the other, the critical text of 16[a] is derived from the Mss. of the middle group, that is, of D Version. This is so done also because D1 and D2 are presumably Devanāgarī transcripts of a (lost) Śāradā MS. The constituted text of 16[b], on the other hand, should have better read as : जीवत्यासिन्कोऽत्ययः स्यादयं ते. Cu mentions both substitutions, namely, 10* and 11*. — [b]) Ca : जीवतानेन पन्नगेन बहवो जन्तवो दष्टव्याः, तस्माद्बहूनामुपकारार्थं हन्यतामयम्. — [c]) Cv (seems to read अस्योत्सङ्गे ) : उत्सङ्गे प्राणमुक्तस्य अस्य जन्तोः अर्थे आनयनार्थमिति यावत्.

17 [c]) Ca : सुस्थस्य अक्षिप्तमतेः ; Cb : स्वस्थस्य अचलितमतेः ; Cu : स्वस्थस्य इति । स्वे आत्मनि तिष्ठति इति स्वस्थः, स्थिरचित्तः.

18 [a]) Cb : द्विविधाः किल पुरुषा भवन्ति, बुभुक्षवः मुमुक्षवः [च]। तत्र ये शमार्थिनो मुमुक्षवस्ते कालगतिं वदन्ति. Cu : कालगतिं वदन्ति, कालस्वभावादुत्पद्यन्ते निरुध्यन्ते च भावा इति. — [b]) Ca : अर्थविदः नीतिशास्त्रज्ञाः. — [c]) Cu : श्रेयः क्षयं शोचति इति पाठः। श्रियः क्षये शोचति इति पाठः। दुःखविदः श्रेयःक्षये [यं] गच्छति इति च पाठः. — [ Crit. App., line 4 : read °र्थिनः for °र्थितः. Cu also reads शमार्थिनः. ]

19 [a]) अस्मद्विधानां : This obviously refers to Gautamī's characterisation (in st. 10) as *sthavira* and *śamasaṁyuta*. Cab : अस्मद्विधानां धर्मात्मनाम्. — [c]) Cu reads : नित्यायस्तो बालकोऽस्येष तस्माद्.

20 [b]) कुतः = since.

21 [a]) Cu : शत्रून्हत्वा कीर्त्यादिलाभः, अव्ययम् अक्षयं, श्रेयः कल्याणं स्यात्, 'न हताज्जायते भयम्' इति वचनात्; Cv : लाभं हित्वा स्थितस्य अवलस्य. — [b]) Ca : सद्योलाभ एव नित्यः शत्रुभ्यः सकाशात्प्रशस्तः। तदुक्तं सभापर्वणि कृष्णेन 'क्लान्तः शत्रुर्न कौन्तेय लभ्यः पीडयितुं रणे' (2. 21. 20[ab]) इति. — [d]) Cu : कुत्सितोऽस्मिन् इति च पुस्तके पाठः. Cabu : कुत्सितः न शोभनः.
[ Crit. App., line 18 : read कुत्सितो- for कुत्सिते-. ]

22 [ab]) *gṛhya* and *namuktvā* are not strictly Pāṇinian forms. Cu : गृह्यशत्रून् गृहणीयशत्रून्.

25 [a]) The war between Indra and Vṛtra is an oft-repeated theme in the *Ṛgveda*. — [bc]) In *Taittirīya-Saṁhitā* 3. 2. 4 and *Taittirīya-Brāhmaṇa* 3. 2. 8. 3, Agni is called Rudra and is given the epithet *makhaghna*. This is reminiscent of the destruction of Dakṣa's sacrifice by Śiva.

31 [d]) तथा = as an instrumental or efficient cause (*nimittakāraṇa*), not as a material cause (*upādāna-kāraṇa*). This seems to have been made clear in st. 36, where the word *kāraṇa* in the first pāda means *upādāna*, and that in the third pāda *nimitta*.

34 [c]) Cu (reads -संदोहो for -संदेहो ): कार्यार्थे कारणसंदोहः कारणराशिः.

36 Cv : भवान्कारणं स्वतन्त्रकारणं यदि न स्यात्, तर्हि 'स्वतन्त्रः कर्ता' इति स्मृतेः त्वं कर्ता न स्याः । त्वं च विनाशे कारणं, दण्डचक्रादिवत् सामान्यकारणम्.

37 [a]) Cv (reads *असत्यविकृते कार्ये* ): विविधैः कृतं न भवति इति अविकृतं, एकेनैव कृतमित्यर्थः.

38 Obscure. — [ab]) Cu seems to understand *kriyā* as effect, and *kārya* as action culminating in the bringing into existence of that effect.
[ — [c]) Read तस्मात्त्वमस्मिन्हेतौ. ]

43–49 Doctrine of *kāla* as the ultimate cosmic principle; cf. *AV XIX. 53–54*; *Śvetāśvatara-Up.* I. 2; Avestan Zurvan.

44 [c]) Cv (reads तद्वज्जलद्वच्चाहम् ) : तद्वत् वायुवत् कालः, अहं जलद्वच्च.

53 [cd]) Cu : मृत्योरपि न दोषः स्यादिति मेऽत्र प्रयोजनम् । मृत्यो मयि न दोषः स्याद् इति च पाठः.

56 [d]) "I am not characterizing as a cause what is not a cause."

58 [b]) Cu : आवां निर्दिष्टकारिणौ कालस्य आज्ञाकारिणौ.

59 The question does not seem to be directly related to the matter under consideration. Cu : मे मम तटस्थस्य परोपकर्तरि हर्षः, अपकर्त्रोश्च युवयोरुपरि द्वेषः [क्रोधः?] वा यथा स्यातां तथा ब्रूहम्.

63 ff. Doctrine of the inexorability of the law of *karman* to which everything else, even *kāla*, is subservient.

68 [a]) The analogy of *chāyātapau* is not happy.

75 [c]) Following the general trend of the foregoing discussion, the law of *karman*, rather than *kāla*, must be said to have been operative in the whole affair.

## 2

6 [c]) Māhiṣmatī on the river Narmadā (cf. st. 18) is identified by some scholars with Oṁkāra Māndhātā and by others with Maheśvara in Madhya Pradesh

( the latter view is more likely ). It was the capital of southern Avanti. According to *HV* ( 23 ), Māhiṣmatī was founded by Māhiṣmat. Other Purāṇic texts mention a Yadu prince as the founder. The *Purāṇas* also mention that Māndhātṛ of the solar dynasty, who ruled at Ayodhyā, subjugated the Kānyakubja and Paurava kingdoms, defeated the Ānavas and the Druhyus in the north-west, and led his army up to the Narmadā through the Vindhyas. His son, Purukutsa, continued the victorious expeditions. But after him, the political power of this royal family of Ayodhyā declined, and the Haihaya branch of the Yādavas reoccupied Malwa. The Haihaya king Mahiṣyant is said to have fortified Māhiṣmatī. Recent excavations at Māhiṣmatī have proved to be quite fruitful ( cf. H. D. SANKALIA and others, *The Excavations at Maheshwar and Navdatoli*, Poona 1953 ).

25 [c]) **Cu** : मह्यं मम.

27 [a]) **Cu** : दर्शयामास, आत्मानमिति शेषः.

32 This is a paranthetical reference. Cf. 2. 28. 16ff.

33 [b]) **Cu** : आहतवाससं, वेदे अहतवाससम् इति पाठः अर्थश्च समण्डवाससं, नूतनवाससम् इत्यर्थश्च लोके.

34 [d]) **Cu** : वसोः धारां संततां घृतधाराम्.

37 [b]) According to the *Bhāgavata P.* and the *Viṣṇu P.*, Nṛga was a son of Ikṣvāku. He is elsewhere said to have been the son of king Uśīnara. Nṛga was also the name of the second among the ten sons of Vaivasvata Manu. A legend relating to Nṛga is narrated in 13. 69. Also cf. 2. 8. $8^b$ ; 4. 917*, L. 29 ; 9. 52. $19^b$. **Cu** : नृगस्यासीत्पितामहः इत्यनेन ओघवतो महत्त्वं सूचितं, नृगस्य महत्त्वात्.

39 [c]) For Kurukṣetra, see crit. note on 9. 52. 20.

40 [d]) Read °वर्जेष्यामि.

47 **Cn** explains the first तदा with गार्हस्थ्यकाले, and the second तदा with इध्माहरणकाले. — [c]) **Cn** : पृष्ठतः तस्य अप्रत्यक्षम्; **Cu** : पृष्ठतः पश्चात्.

53 [c]) **Cn** : राज्ञि राजकन्ये.

54 [ab]) **Cu** : स मृत्युः । तया नृपकन्यया ओघवत्या । अन्यैः इंशितैः ( for इंङ्गितैः ) द्रव्यैः छन्द्यमानः लोभ्यमानः.

56 [a]) **Cn** reads विहरय ( for रहः स ) : विहरस्येत्यत्र रहः स इति पाठः स्पष्टार्थः.

58 [b]) **Cu** : पावकिः, सुदर्शनः.

65 [a]) **Cu** : एषा ( for इयम् ).

71 [d]) **C**₁ : स्वयमात्मानमालभे, आत्मशिरःस्पर्शं करोमि अतिथिविषयं समुदाहृतवाक्यं दिव्यमिदं ज्ञेयमिति भावः.

72 [d]) **Cn** : गुणाः इन्द्रियाणि, तदभिमानिन्यो देवताः पृथिव्याद्याः इत्यर्थः । **Cu** : गुणाः दशसंख्याका एते पृथिव्यादयः. D2. 3 read गुणाश्चैव दिशो दश, where गुणाः presumably means the three *gunas*.

77 [a]) शैक्षेण स्वरेण = with proper Vedic accents; in accordance with the rules laid down in the *Śikṣā* texts. Cf. 9. 35. $35^b$.

81 [b]) **Cu** : पतिव्रतगुणैः, पतिभक्तिगुणैः । पतिव्रतागुणैर्वा । पुंवद्भाव आर्षः.

82–83 Oghavatī is generally believed to have been a river in Panjab; sometimes identified with Sarasvatī. Cf. 9. 37. 4.

86 [ab]) to be understood as पञ्च भूतानि ( अतिक्रान्तानि ), अतिक्रान्तः स्ववीर्याच्च मनोभवः.

87 [c]) **Cn** : राजन्निति ऋषिराजत्वात् राजजामातृत्वाद्वा संबोधनम्.

88 [d]) व्यवसाय = Śiva or Viṣṇu. **Cu** reads वासवोऽप्याजगाम तम् and adds : अत्र व्यवसायो जगाम तम् इति पाठं प्रकल्प्य अर्थं करोति[मि] । विं पक्षिणं अवति रक्षति [इति] व्यवो गरुडः, तं स्यति नाशयति [इति] व्यवसायः इन्द्रः । देशान्तरपुस्तके पाठोऽयमलेखि । वस्तुतोऽयं पाठो देशपुस्तके नास्ति ।

## 3

3–4 Cf. *ṚV* III. 53 ; VII. 104 ; *MBh.* 3. 70. 79-83. The loss of his sons suffered by Vasiṣṭha is often referred to, directly or indirectly, in *ṚV* VII. Also cf. *Taittirīya-Saṁhitā* 7. 4. 7. 1; *Tāṇḍya- Br.* 4. 7. 3

5 The family of Viśvāmitra is referred to in *ṚV* as *Kuśikāḥ* ( III. 53. 9–11 ), but he can by no means be regarded as the founder of the Kuśika vaṁśa.

6–8 Actually, the name of Śunaḥśepa's father was Ajīgarta; but Śunaḥśepa is referred to as Ārcīka also in *HV* ( App. 6 A ) and *Brahma P* 10. For the Śunaḥśepa legend, cf. *Aitareya Br* VII. 3. Ṛcīka was a son of Cyavana and belonged to the Bhṛgu family. For his connection with Viśvāmitra, see 13.4.

9 [a]) Cu : त्रिशङ्कुर्वन्धुभिर्मुक्तः । त्रिशङ्कुर्वन्धुभिस्त्यक्तः इति च पाठः । शङ्कुः अपराधः । गुरुदोग्ध्रीवधः, अप्रोक्षितमांसोपयोगः, पितुरपरितोषश्च इति त्रिः [ त्रयः शङ्कवः ] यस्य. cf. *HV* 1. 10. 17–18.

10 *Satyavatī, daughter of Gādhi, is said to have* become the river Kauśikī. This river was called Pārā by Viśvāmitra ( 1. 65. 32 ). It is variously identified with a branch of Dṛṣadvatī, or with the modern river Kuśī which flows into the Gaṅgā through Purnea, or with Kusiara in Sylhet.

12–13 Vipāś or Vipāśā ( Hyphasis of Greek writers ) is modern Beas.

14 [d]) Cn : त्रिशङ्कुं याजयन्विश्वामित्रो वसिष्ठपुत्रैः शप्तः श्वपचस्य याजकस्त्वं श्वपचो भविष्यसीति. देवसेनाग्रगः = इन्द्रः.

15 Viśvāmitra appears in the sky as a star between the polar star and Ursa Major.

18–19 For the story about Mataṅga, *see* 13. 28–30. S reads these adhys. ( and Dn3 reads adhys. 28–31 ) before adhy. 3. This arrangement of adhys. seems to be supported by the reference in these two stanzas, as also by that in the first stanza ( ब्राह्मण्यं यदि दुष्प्रापम् )– this latter reference being directly connected with 13. 28. 4 ( ब्राह्मण्यं तात दुष्प्रापम् ). However, in view of the evidence of N, this arrangement is not accepted in Crit. Ed.

## 4

2 *Viśvāmitra belonged to the family of the* Kuśikas, but Viśvāmitras are also referred to as *bharatasya putrāḥ* ( *ṚV* III. 53. 24 ). Commenting on this latter passage, Sāyaṇa says : *bharatavaṁśyāḥ ime viśvāmitrāḥ*.

3 How the Gaṅgā came to be known as Jāhnavī is described in *Rāmāyaṇa* I. 43; *Vāyu P.* 2. 30.

7 [a]) Cu : सुताया विशेषणं कन्या, कनीय[सी] अनूढा वा। कन्या जज्ञे शुभा तस्य इति क्वचित्पाठः। उत्तरोत्तरानुवादात्सुता इति पाठः साधुः.

10 *Śulka* is often demanded for the bride; also cf. 13. 2. 31.

12 [c]) Cu : श्यावकर्णानाम् इति च पाठः.

15 Ṛcika is said to have obtained the horses from Varuṇa on the strength of the sixty-four *ṛks* beginning with *aśvo voḷhā* ( *ṚV* IX. 112. 4 ). Cf. *Skanda P.* 6. 165. 34. The place on the banks of the Gaṅgā in Kānyakubja where this happened came to be known as *Aśvatīrtha* ( cf. 3. 115. 16; 13. 4. 17 ).

16 [a]) Cu : ध्यातमात्रे त्वृचीकेन, ध्यातमात्रे ऋचीकेन इति च पाठः.

25 [a]) Cu ( seems to read [ like G4 ] च पुत्रं [ for अपत्यं ] ) : पुत्रं, गुणवन्तमिति विशेषणम्.

27 Cf. ऊर्जो वा एषोऽन्नाद्याद्वनस्पतिरजायत यदुदुम्बरो भौज्यं वा एतद्वनस्पतीनाम् ...... तेजसो वा एष वनस्पतिरजायत यदश्वत्थः साम्राज्यं वा एतद्वनस्पतीनाम् ( *Aitareya Br.* VII. 5 ); also cf. क्षत्रं वा एतद्वनस्पतीनां यन्न्यग्रोधः ( *ibid* ).

30 [c]) Cu ( seems to read हे पुत्रि पूर्वोत्पन्नायाः ) : हे पुत्रि मम वचनं कुरुष्व। वचनप्रतिपालने हेतुमाह पूर्वोत्पन्नाया इति। ज्येष्ठापत्यहेतोः सकलाप[ त्येषु ] तव प्रथमोत्पन्नत्वात्। ज्येष्ठत्वं भावप्रधानो निर्देशः। यद्वा लौकिकं वाक्यमेवमस्ति। त्वामपेक्ष्य अहं वयसा ज्येष्ठा, मम वृद्धाया वचनं कुरु इत्यभिप्रायेण ममेत्यस्य विशेषणं पूर्वोत्पन्नाया इति। पूर्वं प्रथमं उत्पन्ना जाता त्वं यस्या मम सकाशादिति पूर्वोत्पन्नायाः इति वा विशेषणस्यार्थः.

33 Cu : भावः इच्छा.

48–58 According to *Ait-Br.* VII. 3, Viśvāmitra had 101 sons. Only the names of Madhucchandas, Ṛṣabha, Reṇu, and Aṣṭaka are mentioned there. Viśvāmitra also adopted Śunaḥśepa as his son, named him Devarāta, and made him the eldest among his sons. For the *pravaras* of the Viśvāmitras, see *Śrautakośa*, Vol. I, English Section, Part II, 1006–1014.

## 5

2 [c]) Cv : सविषं विषमुखं काण्डं शरम्.

10 [ab]) Cu : अथ वा नात्र चिन्त्यं हि अभवद्वासवस्य तु। अथ वा नात्र चित्रं हि विविधा दृश्यते गतिः इति च पाठः। तिर्यग्योनेः पक्षिणः स्थिरत्वं दृष्ट्वा इन्द्रस्य किमपि चिन्त्यं नाभवत्। पाठान्तरे प्राणिनो विविधा गतिर्दृश्यते इति नात्र तिर्यग्योनौ चित्रं दृश्यते इत्यभिप्रायेण आह अथ वा इति.

12 [b]) Cn : दाक्षेयी दक्षदौहित्री शुकी नाम; Cu : दाक्षेयी सुप्रजा त्वया। सुप्रजास्त्वया इति च पाठः। भोः शुक त्वया पुत्रेण दाक्षेयी दक्षकन्या तव माता सुप्रजा शोभनजातपुत्रा। पाठान्तरे असिच् प्रत्ययः.

20 [ab]) Cu : दैवतानि, देवताप्रतिपादितानि कार्यजातानि.

22 [a]) Cu : अनुक्रोशवैफल्यं शिष्टधर्मवैफल्यम्। अनुक्रोशः पालनधर्मः, तस्य वैफल्यं वा.

25 [b]) Cu : च्यावयित्वा इति च पाठः. —[c]) Cu : समस्तं [स्थं], सर्वत्र सद्रूशरूपेण तिष्ठन्तं, सर्वं संपूर्णं वा.

## 6

7-8 According to st. 7, *puruṣakāra* would seem to have been represented as *bīja*, while in st. 8 it is identified with *kṣetra*.

9 [d]) Cu : कृतस्य कर्तव्यकर्मणः। अपकृतस्य अपकाररूपकार्यस्य.

11 [d]) Cv : क्षेत्रं क्षारावसेचनमित्यत्र यथातथेति योग्यपदाध्याहारेण योजना.

12 [d]) Cu : अकृतात्मना अकृतकर्मस्वभावेन.

18 [d]) तप्यते : *Ātmanepada* rare.

21 ) Obscure. There is greater danger in the other world if one exerts himself but little, than in this world if destiny is unfavourable.

26 [ab]) Cv : कथं चास्य समुत्पत्तिर्यथा दैवं प्रवर्तते इत्यत्र। दैवमनुसृत्य यथा वर्तते जीवलोकः तथा अस्य जीवलोकस्य समुत्पत्तिः कथं स्यादिति विग्रहो भवतीति पूर्वेणान्वयः.

28 Cv : कृतकर्मणः कृतार्थस्य किंचिद्दिकृतमपि कृतपुण्यं सिध्यते। सुकृतं सुष्ठु कृतमपि कर्म अकृतार्थे विपच्यते नष्टं भवति.

30 The sons of Yayāti's daughter, Mādhavī, were named Pratardana, Vasumanas, Śibi, and Aṣṭaka. Through their sacrifice, they helped Yayāti to regain *svarga*. For the story, see 1. 81-88; *Matsya P.* 25-42.

32 This Saudāsa is better known as Kalmāṣapāda. He is also referred to as Mitrasaha.

33 Cu : मुनिपुत्रौ भूत्वा रामाश्वत्थामानौ धनुर्धरौ स्यातां, ब्राह्मणस्य निन्दितमिदं कर्म, 'काण्डपृष्ठ' इत्यादिना अग्रे निन्दितस्य कर्मणो निषेधात्। यद्वा सति पुरुषकारे दैवं फलवदिति बोद्धव्यम्। स्वकृतेन स्वकृतधनुर्व्यापारेण.

34 [a]) Vasu = son of Uttānapāda. See *Matsya P.* 143. 18-25.

36 A reference to Janamejaya's *brahmahatyā* occurs in *Śatapatha-Br*. 13. 5. 3. 5.

37 [c]) Cv : वैशंपायनाख्योऽप्यन्यः कश्चिदृषिः.

39 Dhundhumāra = Kuvalāśva? Girivraja was the capital of the Magadha kings; identified with Rājagṛha.

46 [c]) Cu : वनशब्दः समूहवाची.

## 7

3-4 This is, indeed, a peculiar doctrine. Cab: ननु विरुद्धमेतत्कथं संगच्छते। यदि येन शरीरेण यत्कर्म क्रियते तेनैव तत्फलमुपभुज्यते तदा स्वर्गाद्युपभोग आत्मनो न स्यात्पूर्वशरीरविनाशात्। अथ वा येनात्मशरीरेण कर्म कृतं तेनैव तत्फलमुपभुज्यते इत्याशयः, तदा शरीरेणेति व्यर्थम्। तथा 'यस्यां यस्यामवस्थायां यद्यत्कर्म करोति यः, तस्यां तस्यामवस्थायां स तत्फलमुपाश्नुते' इत्याद्यसंगतं, गर्भगतस्य बालस्य भोगोच्छेदप्रसङ्गात्। सोऽपि सुखदुःखे अनुभवत्येव। न च गर्भशय्यागतः किंचित्कर्म करोति। तस्मात्कोऽनयोः श्लोकयोरर्थः। उच्यते। येन येन सत्त्वावस्थेन रजोवस्थेन तमोवस्थेन वा [ शरीरेण ] यद्यत्कर्म करोत्यात्मा तत्फलं तदवस्थेन शरीरेणैवात्मा उपभुङ्क्ते इत्यर्थः। एवं यस्यां यस्यामवस्थायामित्यस्यापि अयमेवार्थो बोद्धव्यः। न च गर्भशय्यागतस्य नास्त्युपभोग इति वाच्यम्। 'गर्भशय्यामुपादाय भुज्यते पौर्वदेहिकम्' इत्यादि; Cn : मनसा कृतस्य कर्मणः फलं मनसैव स्वप्नादौ भुङ्क्ते। कायेन कृतस्य फलं कायेनैव भुङ्क्ते जाग्रदादौ इत्यर्थः। अवस्थायां बाल्ययौवनादिरूपायां, आपद्यनापदि वा; Cu : येन येन शरीरेण मनुष्यतिर्यगादिशरीरेण। अवस्थापदेन सत्त्वादयो गुणा लक्ष्यन्ते। कौमारावस्थादिरिति केचित्.

5 Cu : कर्मपदं च सदसत्परम्।

मन्यन्ते वै पापकृतो न कश्चित्पश्यतीह नः।
तांश्च देवाः प्रपश्यन्ति स्वश्चैवान्तरपूरुषः॥

इति कर्मदर्शने मनुः ( *Manu*. 8. 85 ).

6 Cu : आसने चक्षुर्दानम्। क्रियाचरणे मनोदानम्। संतोषप्रियवाक्यं वाग्दानम्। आ उदकान्तं अनुव्रजेत्। उपासना सेवनम्। एवं सोऽतिथियज्ञः पञ्चदक्षिणः.

9 [d]) Cv : राज्ञः पौरुषमुच्यते इत्यत्र, पौरुषं शौर्यं फलमुच्यते.

10 [a]) Cv : प्रतिसंहारे दाने.

11 [c]) Cn : एकशायी ब्रह्मचर्यवान्; Cu : एकशायी अधःशायी.

12 [b]) Cu : प्रतिश्रयं प्रवासिनो वासम्.

16 [d]) Cu : फलमुत्तमम्। कुलमुत्तमम् इति च पाठः.

17 [b]) Cu : तृणाशनः। तृणासन इति च पाठः. —[c]) Cn : स्त्रियः स्त्रियं त्यक्त्वा इत्यर्थः; Cu : स्त्रिय इति वचनव्यत्ययः, स्त्रीनिबोध्यं (?) त्रिषवणं त्रिसंध्यस्नानम्.

21 [c]) Cu : यासौ तृष्णा। योऽसौ इति पाठे यो रोगः.

24 Rather out of context.

28 Cv : पूर्वोक्तानां त्रयाणां मध्ये एकैकस्मिन्वृथा कृते एकैकमेव व्यर्थं भवति। 'धर्मः क्षरति कीर्तनात्' इति वचनात्सम्यक्कृतत्वापि सदसि एकस्मिन्नपि धर्मे अभिधीयमाने सति सत्कर्म वृथा भवति इत्यर्थः; Cu : वृथामन्त्राद्युपयुज्यमाने यत्फलं स्यात्तत्सर्वमसत्याभिधाने स्यादित्याह, यन्मन्त्रे भवति वृथोपयुज्यमाने इति. [ Cn : वृथापयुज्यमाने इति पाठः. ]

29 [a]) Cu : ऋषिणा वेदव्यासेन.

## 8

5 [c]) Cu : श्रुतवृद्धोपपन्नानाम् इति च पाठः.

6 [b]) Cu : सत्त्वशुद्धत्वोपदर्शनाय हंसानामिव इति दृष्टान्तः.

10ff. The two themes mentioned here, namely, that a Brāhmaṇa of any sort is superior to persons belonging to other social orders and that gifts to a Brāhmaṇa constitute the greatest virtue, are repeated in many other contexts in this parvan.

17 [a]) Cn : ब्रह्मण्यः ब्रह्मजातौ आसक्तः; Cu : ब्रह्मण्यं ब्राह्मणचरित्रवन्तं मामाहुरित्यन्वयः.

26 Obscure. Cu : ब्राह्मणादिति ल्यब्लोपे पञ्चमी । अकोपनं परमशान्तं ब्राह्मणं प्राप्य भूयः प्रचुरं यद्दत्तं दानं तद्दानं [ तेन उभयं तपश्च तेजश्च स्यात्, ] क्षत्रियाणामिति शेषः। ब्राह्मणानां चैते स्वाभाविके। क्षत्रियाणां तु उभयमिदं दाननिबन्धनम्। ततस्तेजोर्थिना क्षत्रियेण प्रचुरतरं दानं कर्तव्यम् । तदा कथं देवमेधपितृमेधादीनां निर्वाह इत्यत आह। कुर्यादुभयत इति । गृहे यत्किंचिद्वस्तु उभयतो देवमेधार्थं पितृमेधार्थं विभज्य दानार्थं धनं संरक्षेत्। दानार्थं च यद्रक्षितं तस्य शेषं वृत्त्यर्थं न रक्षेत्। अपि तु सर्वमेव दद्यात्। वृत्त्यर्थं पृथगेव भागं कल्पयेदिति भावः। वृद्धाश्च (?) भूयो बहुफलं स्यात् भवेत्। किं तत् [ यदुक्तं ] विशिष्टदेशकालोपपादितम्। उभयं हव्यं कव्यं च। ब्राह्मणादिति चतुर्थ्यर्थे पञ्चमी। अकोपनात् कोपलोभादिरहितात्। तत्किं सर्वस्वमेव ब्राह्मणाय देयम्। नेत्याह, कुर्यादिति। आत्मपुत्रकलत्रादिपोष्यवर्गसंवर्धनाय उभयतो हव्यात् कव्याच्च शेषं कुर्यात्, न तु सर्वस्वमेव दद्यात्। उक्तं च।

अन्वाहितं याचितकमाधिः साधारणं च यत् ।
निक्षेपः पुत्रदाराश्च सर्वस्वं चान्वये सति ॥
[ नारदीयमनुसंहिता, दत्तप्रदानिकम् ]

अन्वाहितमुपनिधिः । उक्तं चोपनिधिनिक्षेपयोर्लक्षणम् ।

असंख्यातमविज्ञातं समुद्रं यन्निधीयते ।
तं जानीयादुपनिधिं निक्षेपं गणितं विदुः ॥ इति ।

याचितकं मृगयित्वा यदानीतम् । आधिर्बन्धकितद्रव्यम् । असंख्याताविज्ञातसमुद्रस्य [उप]निधित्वं, गणितस्य निक्षेपत्वमिति । एतत्सर्वमदेयम् । ततश्चोभयतः शेषं कुर्यात् । सर्वस्वदाने राजसूये कथं सर्वदक्षिणः स्यात्, तत्राह दत्तशेषमिति । जीवनभागाद्द्विर्येद्धर्मार्थं भागद्वयं परिकल्पितं तद्देयम् । अन्यद्दत्वा तु ददद्दोषमवाप्नुयादिति । तत्र दत्तशेषं न शेषयेत् न स्थापयेत् । उक्तं च ।

तस्मात्त्रिभागं वित्तस्य जीवनार्थं प्रकल्पयेत् ।
भागद्वयं च धर्मार्थं न नित्यं जीवितं यतः ॥

[ नारदश्चाह ] कुटुम्बभरणाद्द्रव्यं यत्किंचिदतिरिच्यते ।
[ तद्देयमुपहत्यान्यद्ददद्दोषमवाप्नुयात् ॥ ] [ नारदीयमनुसंहिता, दत्ताप्रदानिकम् ]

एवं क्षत्रियेण धनस्य चतुर्धा विभागः [ कार्यः ] इति सिध्यति इति मध्ये क्षत्रियधर्मः कथितः. Beginning from वृद्धाश्च, Cu mostly reproduces relevant portions from Ca and Cb. Does वृद्धाः denote old commentators like Arjunamiśra and Vimalabodha? Cab: ब्राह्मणमाहात्म्ये भीष्म आह, भूयः स्यादित्यादि। भूयो बहुफलं...

28 [cd]) Cu : एषां ब्राह्मणानां, जीवनं जीवनोपायः.

## 9

4 [c]) Cu : एतस्मिन्नन्तरे अङ्गीकारापालने.

8 [c]) Cu : अन्त्यां योनिम् इति च पाठः.

9 [a]) Cu : परासून् परप्राणान् मांसानीति यावत्.

11 [d]) Cu : तदुपाहृतम् । तदु पादितम् इति च पाठः.

14 [b]) Cu : श्रुतश्चायमितिहासः कृष्णस्य व्यासस्य नृगकथां कथयतो वासुदेवस्य वा मुखात् श्रुतोऽयमर्थः.

15 [d]) The Brāhmaṇas should not be made to entertain a hope which is not likely to be fulfilled.

17 [d]) अक्षय्य [ उदक ] = libation of water, honey, and sesamum offered in *śrāddha* after the offering of *piṇḍa*.

18 [cd]) Cu : विषपीतस्य पीतविषस्य जनस्य। अगदेन अरोगेण सम्यक् काशो दीप्तिर्यथा तथा ब्राह्मणप्रतिनन्दने जनो भवतीत्यर्थः.

24 [cd]) Cu : ब्राह्मणपूजने समयानियमो नास्तीत्याह वेलायामिति.

## 10

4 [d]) Cu : उपाध्यायस्य उपदेष्टुः, भाष्यते कथ्यते.

5 [a]) Cu : इदं निदर्शनं दृष्टान्तरूपम्. — [c]) Cu : ब्रह्माश्रमपदस्य विशेषणं, दुरुक्तवचने अशक्यानिर्वचन इत्यर्थः.

15 [b]) Cn : लिङ्गं संन्यासिचिह्नम्; Cu : लिङ्गं शूद्रजातिम् (?).

21 [b]) संगत्या = in order to make his acquaintance.

26 [d]) Cu : ऋषेरासनं बृसी. [ Read : पूरमशीर्षिकाम्. ]

27 [ab]) Cu : दक्षिणं दक्षिणदेशं, आवृत्य व्याप्य, बृसीं ब्राह्मणासनं, चरमशैर्षिकीं पश्चिमाभिमुखीं दृष्ट्वा ऋषिरब्रवीत् । बृस्या... ब्राह्मणो बोध्यः । मुञ्जकुश उत्तरापतिरिति मैथिलाः । 'बृस्यां दर्भेषु हव्येषु कव्येषु मुनिसत्तम । उपदेशः कृतः, (13. 10. 50) इत्युत्तरग्रन्थकथनात् । यद्वा श्राद्धमिदं वृद्धि( बृसी )श्राद्धम् । तत्र दक्षिणदिशमारभ्य पश्चिमदिगुत्तरदिक्पर्यन्तं पात्रासादनम्; Cv : अथ दक्षिणमाश्रित्य बृसीं पश्चिमशीर्षिकाम् इत्यत्र, बृसीं पिण्डस्थापनाय सूक्ष्मकटवत्कृतां दर्भपङ्क्तिम्.

28 [ab]) Cu : 'प्राङ्मुखेभ्यः उदङ्मुखो दद्यात्' इति श्रुतेः. — [d]) Cu : शूद्रं प्रति एतावन्मात्रोपदेशेन ऋषेः परिणामाशुद्धिरभूत्.

34 The *Atharvaveda* is separately mentioned by the side of the *Veda* (*trayī*), presumably because that Veda is specifically the Veda of the Purohitas. *Kalpaprayoge* may also be referring to the five *kalpas* of the *Atharvaveda*. Cu : वेदे सामवेदादौ । कल्पः स्वरादिः.

35 [e]) Cu : अभिषिक्तेन राजाभिषेचनजलेन.

45 [c]) Cu : कामया स्वेच्छया.

47 [b]) Cu : यदवाच्यं यदवक्तव्यमपि, व्यवहितेन अपिना सह अन्वयः.

51 Presumably, the profession of a Purohita had come to be regarded as degrading because he had to occupy himself with the practices of the *Atharvaveda*. It seems to be suggested that the imparting of religious instruction by a Brāhmaṇa to a person of a lower social order is a *karmadoṣa*, but not the receiving of such instruction by a person of a lower order.

53 [c]) Cu : तुभ्यं तव.

60-61 Cu : शूद्रोपदेश उपसंहारमुखेन निषिध्यते, ब्राह्मणेन न वक्तव्यं तस्माद्वर्णावरे जने इति । अतिनिषिद्धत्वात्पुनर्निर्देशः, वर्जयेदुपदेशं च सदैव ब्राह्मणो नृप इति । असच्छूद्रविषयमिदं बोध्यम् । अन्यथा 'सर्वेषु वर्णेषु तथाश्रमेषु' इत्यागमो विरुध्येत.

64 [ab]) Cu : सद्भिः शिष्टैः किंचिन्न वक्तव्यं, असते शूद्राय इति शेषः.

68 [cd]) Cu : सत्यानृतेन वाणिज्येन धनलोभेन इत्यर्थः। 'सत्यानृतं तु वाणिज्यम्' इति स्मृतिः (*Manu*. 4. 6); Cu : सत्यानृतेन हि कृत उपदेशो हि नास्ति मे। सत्येन अनृतेन मिथ्यारूपेण वा कृत उपदेशः कृतो नास्ति मम इत्यन्वयः.

## 11

2-3 Rukmiṇī and Śrī (Lakṣmī) are here distinguished from each other. Cu : मकरध्वजस्य प्रद्युम्नस्य.

4 [d]) महर्षिकन्ये : Lakṣmī is said to have been the daughter of Bhṛgu and his wife Khyāti.

8 [a]) Cu : आत्मप्रार्थनं नाम श्रवणमनननिदिध्यासनं, तदभावो यत्र तत्र न वसामीत्यर्थः.

12 [a]) Cu : अवलेहिनीं सक्विणीं लेलिहानां, सदा मुद्धामित्यर्थः; [better, greedy]. Cu : अत्रोक्षाम् अमुद्धाम्। अवलेलिहानां देवादिकमन्तरेण मिष्टद्रव्य[मा]स्वादयमानाम्.

18 [c]) [Read वैश्ये for वैरये.]

19 [c]) Cu : सुमहान्विशिष्टः (cf. $B_1$), सुमहान्निविष्ट इति च पाठः.

## 12

1 The question asked by Yudhiṣṭhira is, indeed strange and appears to be rather abrupt and out of context. स्पर्शः = pleasure derived from sexual contact.

4 *Agniṣṭut* = an *ekāha* sacrifice of the *Agniṣṭoma*-type; cf. *ĀpŚS* 12. 6. 15. As the result of an *Agniṣṭut* sacrifice, B., who had been sonless, obtained one hundred sons.

5 [c]) Cu : अन्तरं छिद्रम्.

6 [b]) Cu : मृगव्यं मृगयाम्.

13 [b]) Cu : वल्लवत्वं, विक्लवत्वम् इति च पाठः.

21 [c]) Cu : अस्य प्राप्तस्त्रीत्वस्य भङ्गास्वनस्य.

22 [a]) Cu : अथ सा इति । भङ्गास्वनस्य प्राप्तस्त्रीत्वात्तद्दशायां सा इति निर्देशः.

41 [b]) Cu : स्नेहस्तेभ्योऽधिकः कथम् इति च पाठः। स्नेहस्तेष्वधिकः कथम् इति च पाठः.

47 A curious point is made out here by Bhaṅgāśvana, namely, that a woman derives greater pleasure from sexual contact with a man than a man does from that with a woman. B. had both kinds of experience and could therefore speak with authority. Incidentally the relevant portion from the discussion on this subject occurring in Vātsyāyana's *Kāmasūtra* (with commentary) may be quoted here :

तत्र औद्दालकेः मतम्—

न स्त्री पुरुषवदेव भावमधिगच्छति। [२. १. १९]

[आक्षेपः]

पुरुषप्रतीतेश्च अनभिज्ञत्वात्। [२. १. २३]

कथं ते सुखमिति प्रष्टुमशक्यत्वात्। [२. १. २४]

बाभ्रव्यमतमाह—

सातत्याद्युवतिरारम्भात्प्रभृति भावमधिगच्छति पुरुषः पुनरन्त एव। [२. १. ३२]

सुरतान्ते सुखं पुंसां स्त्रीणां तु सततं सुखम्।

धातुक्षयनिमित्ता च विरामेच्छोपजायते॥ [२. १. ४१]

एवं पक्षद्वयमुपन्यस्य सिद्धान्तमाह—

तस्मात्पुरुषवदेव योषितोऽपि रसव्यक्तिर्द्रष्टव्या। [२.१.४२]

कथं हि समानायामेवाकृतावेकार्थमभिप्रपन्नयोः कार्यवैलक्षण्यम्। [२. १. ४३]

(आक्षेपः—स्यादुपायवैलक्षण्यादभिमानवैलक्षण्याच्च। [२. १. ४४])

तेनोभयोरपि सदृशी सुखप्रतिपत्तिरिति। [२. १. ३६]

जातेरभेदाद्दंपत्योः सदृशं सुखमिष्यते। [२. १. ६२]

सदृशत्वस्य सिद्धत्वात्...। [२. १. ६४]

Vātsyāyana thus states that the pleasure derived from the sexual act by both man and woman is similar and equal. This subject has interested modern sexologists also, as will be seen from the following extracts quoted from Havelock Ellis, *Studies in the Psychology of Sex*, Vol. I, Part 2: " A long succession of distinguished physicians throughout the 17th century discussed at more or less length the relative amount of sexual desire in men and women, and the relative degree of their pleasure in coitus. It is remarkable that, although they usually attach great weight to the supposed opinion of Hippocrates in the opposite sense, most of them decide that both desire and pleasure are greater in women " ( pp. 198–99 ); " ... ... sexual order in women increased after the establishment of sexual relationships " ( p. 247 ); " ... sexual sphere is larger and more diffused in women " ( p. 249 ); " ...the distribution of the sexual impulse between the two sexes is fairly balanced " ( p. 256 ). ( The last quotation seems to embody Ellis's own view. )

## 13

5 [c] ) कर्मणाम् = ( perhaps specifically ) of Vedic ritualistic acts.

6 [d] ) **Cn** : तस्य तस्याश्नुते फलम् [ इति ] भङ्गास्वनोपाख्याने अस्य अध्यायस्य प्रवेशः.

## 14

**Ca** : अयं मेघवाहनपर्वणि महादेवमहिमतात्पर्यार्थः [ अध्यायः ] मेघवाहनाख्यशक्ररूपधारिणा शंभुना उपमन्युपरीक्षणात्.

**Cu** : मेघवाहनपर्वणि, मेघवाहन इन्द्रः, महादेवः शक्ररूपो भूत्वा उपमन्युस्थानमागत्य वरादिकं दत्तवानिति तात्पर्येणायमध्यायो मेघवाहन इति.

1 In this stanza, as also in the sequel, the dative is used in the sense of the genitive. In the Vedic language this phenomenon occurs mostly in the case of *feminine nouns*. ईशाय नामानि is also explained as ' names applied *to* Īśa'. — [d] ) **Cn** : बभ्रवे विशालाय; **Cu** : बभ्रवे पिङ्गलमूर्तये.

2 This stanza presupposes Bhīṣma's realisation of his own incapacity to accede to Yudhiṣṭhira's request and his approaching Vāsudeva for the purpose. 73* makes this clear. Vādirāja's comments on this stanza deserve to be reproduced *in extenso*. **Cv**: सविस्तरं निरूपितसकलमोक्षदायकविष्णुधर्मो भीष्मः । संप्रति व्यासस्यानभिमतां 'त्रिभाषां यो न जानाति नीतीनां शतमेव च' [ महाभारततात्पर्यनिर्णय ९.१३८ ] इत्यादिना उक्तभारतत्रिभाषाभरितत्वस्फोरणाय केवलं शैवदर्शनभाषामाश्रित्य उक्तां शिवसंबन्धिनीं कथां स्वमरणकाले स्वमुखेनैव उच्चारयितुं लज्जावान्भीष्मः असुरजनमोहनार्थमप्यवतीर्णं कृष्णमेव शंस इत्याह, " सुरासुरगुरो देव विष्णो त्वं वक्तुमर्हसि " इत्यादिना । वक्ष्यमाणं शिवसर्वोत्तमत्वादिकमप्रामाणिकमिति सूचयितुं सुराणां गुरो इति संबुद्धिः । असुरजनमोहनार्थं बुद्धयादिरूपेण विरुद्धकथाप्रस्तावाच्च त्वमेव चतुर इति सूचनाय असुराणां गुरो इति च संबुद्धिः । ननु अस्तु भारतस्य त्रिभाषाभरितत्वम् वक्ष्यमाणा शैवी कथा शैवदर्शनमालम्ब्य प्रवृत्तेति कथं ज्ञेयमिति चेत्, इत्थम् । 'आद्यन्तयोर्विरुद्धं यद्दर्शनं तदुदाहृतम्' [ महाभारततात्पर्यनिर्णय २. २४ ] इति वचनात् । 'नास्ति नारायणसमं न भूतं न भविष्यति' इत्याद्यवचनस्य;

न हि मे केनचिद्देयो वरः पाण्डवनन्दन ।
इति संचिन्त्य मनसा पुराणं विश्वमीश्वरम् ।
पुत्रार्थमाराधितवानहमात्मानमात्मना ।
न हि विष्णुः प्रणमति कस्मैचिद्विबुधाय तु ।
ऋत आत्मानमेवेति ततो रुद्रं नमाम्यहम् ।

रुद्रं प्रति ब्रह्मणो वाक्यम्—

न स शक्यस्त्वया द्रष्टुं मयान्यैरपि सत्तम ।
सगुणो निर्गुणो विश्वो ज्ञानदृश्यो ह्यसौ स्मृतः ॥
अहं ब्रह्मा आद्य ईशः प्रजानां
तस्माज्जातस्त्वं च मत्तः प्रसूतः ।
मत्तो जगत्स्थावरजङ्गमं च
सर्वे वेदाः सरहस्याश्च पुत्र ॥ इति ।
यत्तत्पदमभूत्सर्वं यतो ब्रह्मा व्यजायत ।
ब्रह्मणश्चापि संभूतः शिव इत्यवधार्यताम् ॥
शिवात्स्कन्दः संबभूव एतत्सृष्टिचतुष्टयम् ।
अनाश्रित्योच्छ्रयो नास्ति मुख्यमाश्रयमाश्रयेत् ॥
रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः ।
ब्रह्मा मामाश्रितो नित्यं नाहं कश्चिदुपाश्रितः ॥

इति च मध्यभागवचनानाम्;

सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते ।
वेदशास्त्रात्परं नास्ति न दैवं केशवात्परम् ॥

इति अन्तिमवचनस्य च विरुद्धमिदं प्रमेयं दर्शनान्तरमाश्रित्यैवोक्तमिति प्रेक्षावद्भिरुत्प्रेक्षितुं शक्यत्वात् । अपि च

न हि मे केनचिद्देयो वरः पाण्डवनन्दन ।
इति संचिन्त्य मनसा पुराणं विश्वमीश्वरम् ॥
पुत्रार्थमाराधितवानहमात्मानमात्मना ।
न हि विष्णुः प्रणमति कस्मैचिद्विबुधाय तु ॥

इति अव्यवहितपूर्वकालीनमोक्षधर्मवचने स्पष्टम् । कैलासयात्रोक्तापातकथाया दूषितत्वाच्च, वक्ष्यमाणकृष्णकैलासयात्राविस्तारः सर्वोऽप्यप्रामाणिक एवेति सिद्धम् । अतोऽपि शैवदर्शनभाषयैवेदमनुवर्णितमिति कथं न विमर्शवान् विमृशीत । किं च 'कुमारश्चित् पितरं वन्दमानं प्रतिनानाम रुद्रोपयन्तम्', 'स्तुहि श्रुतं गर्तसदं युवानं ।

मृगं न भीममुपहन्तुमुग्रम्', 'तव श्रिये मरुतो मर्जयन्त। रुद्र यत्ते जनिम चारु चित्रम्', 'पदं यद्विष्णोरुपमं निधायि। तेन पासि गुह्यं नाम गोनाम्', 'अस्य देवस्य मीढुषो वया। विष्णोरेषस्य प्रभृथे हविर्भिः', 'वि देहि रुद्रो रुद्रियं महित्वं। यासिष्टं वर्तिरश्विना विरावत्', 'सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम्', 'रुद्रस्य त्वेवं धनुरार्तिः शिर उत्पिपेष', 'यं कामये तं तमुग्रं कृणोमि। तं ब्रह्माणं तमृषिं सुमेधाम्' 'अहं रुद्राय धनुरातनोमि। ब्रह्मद्विषे शरवे हन्तवा उ', 'उच्छेषणभागो वै रुद्रः', 'ताभिरेनं रुद्रोऽन्वायत्तः', 'ईशानासः शवसा क्रन्त सूरयः' इत्यादिवेदवचनेषु नीचीकृतस्य रुद्रस्य उच्चता न वेदव्यासस्य अभिमता। अतोऽपीदं प्रमेयं दर्शनभाषयोक्तम्। किं च 'अग्निर्वै देवानामवमो विष्णुः परमः, तदन्तरेण सर्वा अन्या देवताः' इति श्रुतौ अग्निमवमीकृत्य इतरान्सर्वान्देवान्मध्यमीकृत्य विष्णोरेव उत्तमत्वप्रतिपादनात्, निरवकाशैतच्छ्रुतिविरुद्धस्मृतिशतस्यापि 'विरोधे त्वनपेक्षं स्यात्' इति सूत्रमर्यादया वेदानां अप्रामाण्यावश्यंभावात्। सर्वथाप्रामाण्यस्य च 'इतिहासपुराणः पञ्चमो वेदानां वेदः' इति छान्दोग्योपनिषदि पञ्चमवेदत्वेनोक्तभारते असंभवाच्च दर्शनान्तरानुवाद एव विज्ञायते। यद्यपि अन्तर्यामिविषयतया योजयितुं शक्यते, तथापि भारते इयमेव मर्यादा इति सकलमवदातम्. [In this connection, cf. *Mahābhāratatātparyanirṇaya* 2. 123–128 :

वासुदेवस्य महिमा भारते निर्णयोदितः।
तदर्थास्तु कथाः सर्वा नान्यार्थं वैष्णवं यशः॥
तत्प्रतीपं तु यद्दृश्येत्र तन्मम मनीषितम्।
भाषास्तु त्रिविधास्तत्र मया वै संप्रदर्शिताः॥
उक्तो यो महिमा विष्णोः स तूक्तो हि समाधिना।
शैवदर्शनमालम्ब्य कचिच्छैवी कथोदिता॥
समाधिभाषयोक्तं यत्तत्सर्वं ग्राह्यमेव हि।
अविरुद्धं समाधेस्तु दर्शनोक्तं च गृह्यते॥
आद्यन्तयोर्विरुद्धं यद्दर्शने तदुदाहृतम्।
दर्शनान्तरसिद्धं च गुह्यभाषान्यथा भवेत्॥
तस्माद्विष्णोर्हि महिमा भारतोक्तो यथार्थतः॥

Also cf. Vādirāja's commentary on *MTN* 9. 138 quoted above : त्रिभाषां, समाधिभाषां गुह्यभाषां दर्शनभाषां च इति त्रिभाषाम्। स्पष्टं सर्वैर्यथा ज्ञायते तथा कथनं समाधिभाषा, यथा 'नास्ति नारायणसमं न भूतं न भविष्यति' इत्यादिकम्। अर्थं निगूह्य कथनं गुह्यभाषा…। पाशुपतादिदर्शनमाश्रित्य कथनं दर्शनभाषा, यथा शान्तिपर्वणि रुद्रं प्रति कृष्णस्य तपश्चरणादिकथा.]
**Cu** : पृच्छत् अपृच्छत्.

3 [a]) **Cu** : यद्यपि मोक्षधर्मेषु (12. App. I, No. 28) शिवसहस्रनामस्तोत्रमुक्तमत एतत्कथनमनर्थकप्रायं तथापि तत्र चतुराधिकानि पञ्चद्वतानि सन्ति तेषामुक्तसंख्यापूरणमपि तत्रैव त्रिसुपर्णं तथा ब्रह्मयजुषां शतरुद्रियमिति वाक्यात्तत्रैव श्रुतात् त्रिसुपर्णशतरुद्रियाभ्यामुक्तम्। अतस्तत्स्तोत्रं मोक्षाधिकारपाठात् वेदमन्त्रगर्भितत्वाच्च नात्रैवर्णिकस्य ब्रह्मलोकार्थफलार्थिनो ध्येयं युक्तमिति एतद्दानधर्मप्रसङ्गात् काम्यं 'वेदान्कृत्स्नान्ब्राह्मणः प्राप्नुयात्तु जपेन्नृपः पार्थ महीं च कृत्स्नाम्। वैश्यो लाभं प्राप्नुयान्नैपुणं च शूद्रो गतिं प्रेत्य तथा सुखं च' इत्युपसंहारात्सर्ववर्णाधिकारिकं च ततः पृथक् पठितम्। एवं 'विश्वं विष्णुर्वषट्कारः' इत्यादि विष्णुसहस्रनामापि ज्ञेयम्। तत्रापि 'शूद्रः सुखमवाप्नुयात्' इत्यन्ते स्मरणात् न तेनैतद्व्रतार्थमिति पुनरत्रापि शिवाराधनमुक्तमित्याशयः. Also see the introductory note to crit. app. on 13. 17. 30. — [b]) Taṇḍin belonged to the Āṅgirasa gotra and lived in the Kṛtayuga. King Sudhanvan of the solar race was his pupil (cf. *Liṅga P.* 1.65). — [d]) **Cu** : [यत्] तण्डिना ब्रह्मणोऽन्तिके निवेदितमभवत् इति परेणान्वयः.

5 [a]) **Cu** : ध्रुवाय इत्यादि, षष्ठ्यर्थे चतुर्थी बोध्या.

8 [a]) **Cu** : असुरेन्द्रस्य, असुरघ्नस्य इति [च] पाठः.

11 [b]) Sāmba was the son of Kṛṣṇa and Jāmbavati. He was so named after Śiva through whose favour he was born. He was responsible for the extermination of the Yādava family.

12 [ab]) Śambara was an asura. After Madana's death, his wife Rati became Māyāvatī and lived at Śambara's house. Madana was reborn as Pradyumna, son of Kṛṣṇa and Rukmiṇī. Śambara snatched him away on the sixth day and threw him into the ocean. Pradyumna, however, survived in the form of a fish which came to Māyāvatī's hands. Pradyumna manifested himself, and Nārada told Māyāvatī that he was Madana. Eventually Pradyumna killed Śambara and married Māyāvatī (Cf. *Viṣṇu P.* 5. 26; *Harivaṁśa* 2. 104–07).

13 [d]) **Cu** : भीष्मस्योक्तिः, युधिष्ठिर (इति) संबोधनम्। यद्वा प्रथमं संगत्या युधिष्ठिरस्तत्रासीदिति वासुदेवेन युधिष्ठिरं प्रति संबोधनं कृतम्.

17 Elsewhere, Rukmiṇī is said to have had ten sons and one daughter (cf. *Bh.* 10.61; *Hari.* 2. 60).

20 [c]) **Cu** : यज्ञवाहा इति च्छन्दसामेव विशेषणम्। 'छन्दांसि वै देवेभ्यो हव्यमूढ्वा' इति ब्राह्मणात् तेषां यज्ञवाहत्वसिद्धिः.

24 [b]) Why कपीन्द्रपुत्रीम्? Jāmbavatī's father was actually the king of *ṛkṣas* (bears). However, Jāmbavat does bear the epithet *Kapīndra*. **Cu** : ततोऽभ्यनुज्ञाय नरेन्द्र पत्नीम्। नरेन्द्रपुत्रीम् इति च पाठः। पत्नीतिपाठे नरेन्द्र इति जनमेजयसंबोधनम्। पुत्रीतिपाठे नरेन्द्रपुत्री जाम्बवती। नरेन्द्रपदेन राजत्वमुपलक्ष्यते. — [d]) Āhuka was the son of Punarvasu. He defended Dvārakā at the time of Kṛṣṇa's battle with Śālva.

25 [cd]) **Cu** : तानभ्यनुज्ञाय तदातिदुःखाद्गतस्तथैवातिबलं च रामम्। तानभ्यनुज्ञाय तदातिदुःखाद्गदं तथैवातिबलं च रामम् इति च पाठः। अर्थश्च, तान् पित्रादीन्, गदं रामं च अभ्यनुज्ञाय अभ्यनुज्ञातवान्। भूतार्थे क्त्वा। यद्वा अभ्यनुज्ञाय स्थित इति शेषः. गद was

a half-brother of Kṛṣṇa.

34 [d]) Cu : मारुतोऽभिमुखो ववौ। मारुतोऽभि(नि ? )मुखो ववौ इति च पाठः.

35 [d]) Cu : धाराप्रणादैः इत्याद्युपलक्षणे तृतीया.

37 [b]) Cu : सदा च जुष्टं नृप जह्नुकन्यया। नृप जह्नुकन्या इति पाठे कन्यावाची कनीशब्दः तस्य तृतीयारूपं कन्या इति.

39-40 Cu : गोचारिणः इत्यादि प्रथमान्ते पदार्थनिर्देशं कृत्वा पश्चात्तान् गोचारिणः इत्यादीन् मुदुःखान्नियमान्वहतः पश्यन् इत्यन्वयः.

52 According to some texts, Hiraṇyakaśipu obtained the boon from Śiva, according to others from Brahmā.

54 [d]) Cu : ग्रहस्य मन्दारनाम्नः.

56 Vidyutprabha etc.: many of these episodes are not mentioned anywhere else. Cu : विद्युत्प्रभस्य शतमुखनाम्नः.

67 [c]) Cu : वशे [वंशे?] तवैव नाम्ना तु। वत्से तवैव नाम्ना इति च पाठे वत्से इति संबोधनम्.

68 [d]) Cu : मत्तोयशेन मनःसंयमेन.

71 [d]) Cu : [अ]जरामयः, [अ]जरामरः इति पाठः.

86 [d]) Cu : वामाङ्गुष्ठाग्रनिष्ठितः। पादाङ्गुष्ठाग्र[विष्ठितः] इति च पाठः.

110* (L. 3) Cu : ना नाकलोकं न स्वर्गलोकम्। ना निषेधे। न नाकलोकम् इति च पाठः.

99 [ab]) Cu : कः पुनर्भवने इति। कारणानां ब्रह्मादीनां कारणे। ईशे महादेवे। भवने भवननिमित्तं तव को हेतुः पुनर्भवने वा.

100 [ab]) Cu : अन्यैर्हेतुभिः किं यतः ते प्रसिद्धा हेतवः तेषां कारणानां कारणम्। ईशो महादेवः। यद्वा ते तव मते अन्यैर्हेतुभिर्वा किमित्यन्वयः.

102 [c]) अर्चयध्वम् : why imperative? in the sense of the present tense?

103 [b]) Cu : कौशिक इन्द्र. Kauśika is also the epithet of Śiva.

105 [d]) Cu (किमेतादीति चिन्तयन्) : किमेतादीति चिन्तयम् इति पाठे किमेतदित्यचिन्तयम्। अडभावः आर्षः। चिन्तनानन्तरं आशुतोषस्य उमापतेः परमकारुणिकस्य मयि प्रसादो भविष्यतीति तत्पूर्वं ऐरावतमहमपश्यमित्याह, अथापश्यं क्षणेनैवम् इत्यादि.

108 [d]) Cu : स्वरूपं, स्वः आत्मा महादेवः तस्य रूपं तस्यानुरूपमित्यर्थः। अतः चारुदर्शनं रमणीयदर्शनम्। सुरूपपाठे क्रियमाणे सुरूपचारुदर्शनयोः पुनरुक्तिः स्यादिति चिन्त्यम्.

113 [d]) Cu : किमेतादिति चिन्तयन्। चिन्तयम् इति पाठे अचिन्तयमित्यर्थः.

116 [b]) Cu : असक्तं कुत्राप्यसंलग्नम्। तालव्यशकारपाठः क्वचित्.

120 [b]) Cu : माला कण्ठे (for गात्रे).

122 [bc]) Cu : न्यस्तं तस्य महात्मनः। धनुस्तस्य महात्मनः इति च पाठः। ...पिनाकनाम (for पिनाकमिति)... नाम इति प्रसिद्धिः। स्वलिङ्गे तात्पर्यम्। नस्तम् (?) इति पाठः क्वचित्.

131-134 Cu : यत्तच्छूलम्। यौवनाश्वो हतो येन मान्धाता सबलः पुरा। शूलस्य विशेषणं द्वितीयश्लोकस्य उत्तरार्धे (134[c]) स्थितं करस्थेन इति। करस्थेन महादेवकरस्थेन येन शूलेन यौवनाश्वो युवनाश्वस्य पुत्रो मान्धाता हतः तच्छूलम्। लवणस्य रक्षसः संबन्धे स्थितमिति पौर्वापर्येणान्वयः. Yuvanāśva did not have a son. So he consumed the pṛṣadājya from Bhṛgu's sacrificial altar. As the result of this, he gave birth to Māndhātṛ. Māndhātṛ was later killed at the hands of Lavaṇāsura.

139 [d]) Cu : दीप्तवर्तिशतोपमः। दीप्तवह्निशिखोपमः इति च पाठः.

144 [b]) Cu : नन्दि नन्दिनमित्यर्थः। इकारान्तो वा नन्दिशब्दः. — [c]) Cu : तिष्ठन्तं तिष्ठदिति शूलविशेषणम्.

147 [b]) *Rathantara* is one of the two well-known categories of Sāman; it is *apurastātstobha, padanidhana, laghugīti*. (The other category is *bārhata*, which is *purastātstobha, bahirnidhana, gurugīti*.) Cu: रथन्तरं वेदभागविशेषणम्. — [c]) *Jyeṣṭhasāman* = *bārhata-sāman*?

155 [f]) Cu : विष्णुरुच्यते, उच्यसे इति [च] पाठः.

157 [c]) Cu : गोवृषः गोश्रेष्ठः स्त्रीपुंगवो वा.

168 Cu : एवं स्तवानन्तरं भाविफलसंपादकं शुभलक्षणमभूदित्याह, ततः शीताम्बुसंयुक्ता दिव्या इत्यादि.

177 [d]) जायते : past tense is expected; therefore, presumably, *v. l.* in most of N MSS.

179 Cu : उपमन्युर्महादेवस्य परमसंतोषमुपलभ्य स्वस्य श्लाघां करोति, अद्य जातो ह्यहम् इत्यादि. अद्य जातः = Only today am I born "in the true sense".

180 [d]) मया : instrumental for ablative.

181 [cd]) Cu : तद्विशेषमिति ख्यातं यदजं ज्ञानमुत्तमम्। षड्विंशकमिति ख्यातम् इति पाठे प्रकृत्यादिः चतुर्विंशतिः, पुरुषः, निर्गुणः परमेश्वरः एवं षड्विंशकम्. षड्विंशकं तत्त्वम् = the twenty-sixth principle, namely, God.

183 Mahādeva is represented to have created Brahmā, Viṣṇu, and Rudra.

184 $^{d}$ ) संवर्तकः अनलः = fire of final destruction; *saṁvartaka* is sometimes represented also as a cloud.

185 [Crit. App., line 6 : read आक्षिप्य ( for °प्य ).]

191 $^{c}$ ) Cu : विनयावनतं साधुचेष्टितं शीलमुच्यते, तद्वान्.

193 $^{b}$ ) Cu : सांनिध्यं कुरुतेऽऽश्रमे इति च पाठः क्वचित् । यत्र यत्र त्वं प्रियं दुग्धमिच्छसि ( $192^{d}$ ), तत्र तत्र ते तव क्षीरोदः क्षीरमिश्रितं जलं सागरः भविता भविष्यति । कथं वा क्षीरमिश्रितं जलं सागरो भविष्यतीति = कृत्वा शुद्धदुग्धदानमाह। कामं यथेष्टं पयसो निधिः ( $193^{ab}$ ) शुद्धक्षीरसमुद्रस्य तव सांनिध्यं भविष्यति । पाठान्तरे, =[आ]श्रमे क्षीरोदसागरस्य सांनिध्यं भवान् ददातु (?).

137* Cu : ईश्वरस्य महात्मनः एतदन्ते[न] अध्यायसमाप्तिः क्वचित्पुस्तके.

## 15

140* Cu : मध्ये भीष्मवाक्यं निर्दिशति.

8–9 Cu : तत्र स्थित इति, तत्र वने, देव्या सह महादेवः स्थितः इत्येकं वाक्यम्। वाक्यान्तरं तेजसा इति। देव्या सह महेश्वरो रराज । सा तपसा इत्यादिना उपलक्षिता.

14 Cu : एकादश शतानि इति । एवं महादेवं रुद्राणां रुद्रप्रभृति-देवानां एकादश शतानि अस्तुवन्नित्यन्वयः.

16 $^{b}$ ) अदितिनन्दनौ = Mitra and Varuṇa ?

20 ff. Sanatkumāra, the Gandharvas, the Vidyādharas, etc. are mentioned separately, because as Cu says: महत्त्वसूचनार्थं पृथक्पृथक् नामनिर्देशेन स्तुतिनमस्कारादयो निर्दिष्टाः.

29 [ $^{d}$ ) Read ब्रह्मादिभिः ( for ब्रह्म° ).]

30 [ $^{c}$ ) Read सत्त्वं ( for सत्त्व ).]

32 $^{b}$ ) Cn : स्थावराणि चिरकालस्थायीनि महदादीनि, चराणि स्थूलभूतादीनि.

33 $^{b}$ ) सप्त to be taken with वायवः; Cn : सप्त वायवः आवहाद्याः अन्तरिक्षे ये भुवआदीन् [ भूरादीन् ? ] सत्यान्तान् लोकान्धारयन्ति. Or, सप्त [ अग्नयः ] = पञ्च श्रौताः, स्मार्तः षष्ठः, लौकिकः सप्तमः. ( In that case, वायवः = पञ्च प्राणाः ).

34 $^{c}$ ) Cn : स्रुक्स्रुवसमित्कुशदेशकालादिकं यज्ञोपगं यज्ञोपयोगि.

37 $^{c}$ ) पावन विभो : vocatives in a series of nominatives, presumably on account of भवान् ( $38^{b}$ ). For the change in the arrangement of the stanzas, see the next crit. note.

38–39 Cn : महदाद्यैः चतुर्दशभिः पर्यायशब्दैः वेदे महानात्मा भवानेव विभाव्यते. The arrangement of the stanzas should be changed as follows : $37^{abcd} = 37$ ; $37^{ef} + 38^{ab} = 38$ ; $38^{cd} + 39 = 39$.

48 Cu : मध्ये वासुदेवः स्वस्याह्लादनमाह मम मूर्ध्नि इति.

49 [ Crit. App., line 3 : read om. ( hapl. ).]

51 Cf. 139*., lines 5–6 :

षोडशाष्टौ वरांश्चापि प्राप्स्यसि त्वं महेश्वरात् ।
सपत्नीकाद्यदुश्रेष्ठ सत्यमेतद्ब्रवीमि ते ॥

[ On this, Cu : अष्टौ च अष्टौ च एकशेषेण अष्टौ षोडश, न तु षोडशाष्टौ मिलित्वा चतुर्विंशतिः वराः। 'वृणीष्वाष्टौ वरान्कृष्ण दातास्मि तव सत्तम' इति महादेववाक्यं ( $15. 51^{ab}$ ), 'मत्तोऽप्यष्टौ वरानिष्टान्गृहाण त्वं ददामि ते' इति पार्वतीवाक्यं ( $16. 5^{cd}$ ), इत्युत्तरग्रन्थस्य प्रत्येकमष्टाष्टसंख्याविशेषनिर्देशेन विरोधप्रसङ्गात् । वराणां निर्देशसहिता गणना तथा कर्तव्या यथा षोडश वरा भवन्ति. The view of Nīlakaṇṭha is, however, different. See crit. note on 16. 7.]

## 16

2 Actually, only seven boons seem to be mentioned in this st. — $^{c}$ ) Cn : योगेन सहितं प्रियत्वम् — इति द्वौ वरौ. Cu : योगं प्रियत्वम् इति पाठः, योगं प्रियत्वम् इति पाठे योग एकः प्रियत्वमपरम्, एवं सत्यष्टौ वरा महादेवस्य.

7 $^{c}$ ) Cn : एवं भविष्यतीति प्रार्थितान्वरानभ्यनुज्ञाय स्वयं भवानी वराष्टकं ददाति । तत्र अमरप्रभाव इति संबोधनेन एको वर सूचितः । नाहं मृषा जातु वदे इति त्वमपि मृषा मा वद इति द्वितीयः ... एवं च उपक्रमस्थानां षोडशाष्टानां वचनमुपपद्यते. [ Nīlakaṇṭha's effort to derive eight additional boons of Pārvatī out of stanzas 7 and 8, and thereby make up the total of twenty-four—eight boons of Śiva ( 16. 2 ) and sixteen boons of Pārvatī ( 16. 6–8 )—is by no means convincing ]; Cu : उपमन्यूक्तवरान्दत्त्वा ईश्वरी पार्वती वासुदेवायातिशयप्रीत्या वरपञ्चकमन्यत्स्वयमुख्य ददाति, भार्यासहस्राणि च इति.

10–11 The arrangement of the stanzas should be changed as follows : $10 + 11^{ab} = 10$ ; $11^{cdef} = 11$. Cu : परस्परं [ परंपरां ] कथयति एतदेव इति। एतद्वृत्तं मया भीष्मेण उपमन्यवे व्याख्यातम्। स उपमन्युः देवदेवाय प्राह। हे सुव्रत, हे सुप्रभ इति क्वचित्पाठः.

151* (L. 3) Cu : सांख्या[ चार्याः ] कपिलासुरिकालिदासाः । योगिनः योगशास्त्रप्रणेतारः पतञ्जलिप्रभृतयः.

17–18 The arrangement of the stanzas should be

changed as follows : $17+18^{ab}=17$ ; $18^{cdef}=18$. Cu : तनवस्ते स्मृतास्तिस्रः इति । ब्रह्मविष्णुमहेश्वररूपाः । यद्वा सत्त्वरजस्तमोमयाः. Or, are they Kāla, Puruṣa, and Brahman?

20 $^{d}$) आक्षेप्ता = projector of all beings into existence and their withdrawer within himself (PCR).

23 $^{d}$) Cn : अस्ति च नास्ति चेति, रज्जुभुजंगाभं प्रतीतितोऽस्ति स्वतो नास्ति तादृशं जगत्कारणमज्ञानमुच्यते. Cu : अस्ति नास्ति इति व्यपदेशस्त्वामाश्रित्य वर्तते इत्याह त्वमेवास्ति च नास्ति च इति.

29 $^{c}$) Cu : गुहायां शिवोऽवस्थितः, पद्ममध्ये हृदि वा.

32 $^{c}$) Cu : मारकामानां मरणशीलानाम् । अपुनः संसाराभावरूपा या गतिः सोऽयमीश्वर इत्यन्वयः.

35 $^{cd}$) Cu : क्षितिमूर्तिः शर्वः, जलमूर्तिः भगः, अग्निमूर्ती रुद्रः, वायुमूर्तिः उग्रः, आकाशमूर्तिः भगः, यजमानमूर्तिः पशुपतिः, सोममूर्तिः महादेवः, सूर्यमूर्तिः ईशानः, इत्यष्टाभिस्तनुभिः. Also cf. *Śākuntala*, Nāndī 1.

37 $^{d}$) Cn : कैवल्यं मुख्या मुक्तिः; Cu : कैवल्यं तत्त्वज्ञानम्.

48 $^{c}$) Cn : त्रिधा पाकयज्ञत्रये श्रौतस्मार्तध्यानयज्ञैरित्यर्थः; Cu : त्रिधा वेद्यं कश्चिच्छन्ददैवतभेदेन.

54 $^{a}$) Cn : अष्टौ भूमिरापोऽनलो वायुः खं मनो बुद्धिरहंकारश्च; Cu : अष्टौ प्रकृतयः प्रकृतिर्महदहंकारपञ्चतन्मात्ररूपाः.

60-65 पञ्च गतयः as mentioned in stanzas 60–64. Cu : प्रकृतिलयज्ञानविज्ञानचतुष्टयप्रतिपादिता गतिः, वेदशास्त्रपुराणोक्ता गतिः एका, एवं पञ्चैता गतयः.

## 17

4 $^{ab}$) Cu : मुनिभिश्च यथोक्तैः साधुविख्यातैः । वेदविख्यातैः इति च पाठः. —$^{cd}$) to be connected with वक्ष्ये ($5^{c}$).

11 $^{c}$) Cu : नाम्नां कंचित्समुद्देशम् । किंचित्समुद्देशम् इति च पाठः.

12 [Crit. App., line 5 : read नाम्नां चयं (for नाम्नां च यं)]. Cu : चयं राशिम्.

13 $^{cd}$) Cu : तानि निर्मथ्य इति । मनसा मनोदण्डेन निर्मथ्य, अथर्वोदेसमुद्रम्.

16 Cu : वेदबोधितफलावश्यंभावनिश्चयः श्रद्धा । वेदाः प्रमाणमिति ज्ञानवानास्तिकः । उक्तविपरीतो नास्तिकः.

30 Cu : अष्टोत्तरसहस्रनाम्नां गणनां कृत्वा विशेषणविशेष्यभावेन निश्चितव्यमिति प्रथमशते विशेषणत्रयं प्रथमविंशतेः लिखित्वा नाम्नां विंशतिः निरणायि । पश्चादत्र प्राचीनप्रामाणिकमहाजनलेखनं न दृश्यते । कथमप्यधियैव गणना क्रियते इति लघुभावेन स्थूलदृशा विंशतिं विंशतिं कृत्वा, प्रथमं शतं द्वितीयं शतमिति क्रमेण, विशेषणविशेष्यभावमन्तरेण अष्टोत्तरदशशतं महादेवस्य नामानि लिखितवान् । तत्र अष्टोत्तरदशशतोपरि द्व्यधिकपञ्चाशतं नामानि प्राप्तवान् । एवमधिकनाम्नां प्रतिशतं विशेषणविशेष्यभावनिरूपणेन अष्टोत्तरदशशतनाम्नां निर्वाहः परमसूरिभिः कर्तव्यः इति मया विंशतिविभागेन नामानि लिख्यन्ते, ॐ शिवः स्थाणुः इत्यादिना । शिरः स्थाणुः इति च पाठः क्वचित् । ॐ इति परममङ्गलसूचकम्. At the end of this section, Cu adds : एवमष्टोत्तरसहस्रं समपूरि । अत्र लेखनदोषः परमकारुणिकेन श्रीमच्छिवेन क्षन्तव्य इति. For the significance of such epithets as योगी and महारेताः (st. 39), उष्णीषी (43), कपर्दी (45), मेढ्रजः (58), अयज्ञः (62), अमुख्यः (64), मुनिः (67), विपाणी (69), etc., see R. N. Dandekar, "Rudra in the Veda", *JUPHS* 1. 94–148.

60 Read कर्मसर्वबन्धविमोचनः.

62 $^{c}$) हेमकरोऽयशः is perhaps better.

96 $^{ab}$) The *saṁdhi* देव अर्थकारी may be noted.

98 $^{c}$) Cn seems to read सयज्ञारिः सकामारिः, though the text given in the vulgate reads स यज्ञारिः स कामारिः.

104 $^{b}$) Cn : पुण्यचुञ्चुः पुण्येन ज्ञातः, 'तेन वित्तश्चुञ्चुप्चणपौ' इति चुञ्चुप् । ई लक्ष्मीरित्येकाक्षरं नाम.

108 $^{ab}$) Cn : सिद्धार्थः, पूर्वपक्षं निरस्य यो निष्पन्नोऽर्थः स सिद्धार्थ उच्यते । स एव सिद्धान्त इति प्रसिद्धः । तस्यैव विशेषणं छन्दोव्याकरणोत्तर इति, वेदव्याख्यानोपबृंहित इत्यर्थः.

150 $^{c}$) Cu : यथाप्रधानं प्रधानमनतिक्रम्य.

151 $^{ab}$) Cu : यं न ब्रह्मादयो देवा विदुस्तत्त्वेन चर्षयः । विदुस्तत्त्वेन नर्षयः इति च पाठः.

160 $^{f}$) Cu : तद्भागवतचेतसः (for तद्भावगतचेतसः) भगवानेव भागवतः, स महादेवः, तस्मिन् चेतो येषां ते तद्भागवतचेतसः.

## 18

9-11 This evidently refers to Paraśurāma. But Paraśurāma is no where mentioned to have killed his father. Actually he beheaded his mother at his father's behest. The incident alluded to in $10^{a}$ is not generally known. Cn: पितृतुल्या विप्राः, 'ज्येष्ठो भ्राता पितुः समः इति स्मृतेः ज्येष्ठा भ्रातरः, तेषां वधेन.

14 $^{a}$) For Asita Devala, see crit. note on 9.48. $23^{a}$. —$^{c}$) Cn : शक्रस्य धर्मशास्त्रे कश्चिदन्यथाकरणात्कुपितस्य.

15 $^{a}$) Gṛtsamada is traditionally believed to be the ṛṣi of the second maṇḍala of *ṚV*. His friendship

